**।। श्रीगणाधिपतये नमः ।।**

**।।सरस्वत्यैनमः ।।**

**अथ श्रीगरुडमहापुराणं प्रारभ्यते ।।**

**तत्रादौ कर्मकाण्डाख्यः पूर्वखण्डः प्रारभ्यते ।।**

ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ।। 1 ।।

ॐ अजमजरमनन्तं ज्ञानरूपं महान्तं शिवममलमनादिं भूतदेहादिहीनम् ।।
सकलकरणहीनं सर्वभूतस्थितं तं हरिममलममायं सर्वगं वन्द एकम् ।। 1.1।।

नमस्यामि हरिं रुद्रं ब्रह्माणं च गणाधिपम् ।।
देवीं सरस्वतीं चैव मनोवाक्कर्मभिः सदा ।। 1.2 ।।

सूतं पौराणिकं शान्तं सर्वशास्त्रविशारदम् ।।
विष्णुभक्तं महात्मानं नैमिषारण्यमागतम् ।। 1.3 ।।

तीर्थयात्राप्रसङ्गेन उपविष्टं शुभासने ।।
ध्यायन्तं विष्णुमनघं तमभ्यर्च्यास्तुवन्कविम् ।। 1.4 ।।

शौनकाद्या महाभागा नैमिषीयास्तपोधनाः ।।
मुनयो रविसङ्काशाः शान्ता यज्ञपरायणाः ।। 1.5 ।।

**ऋषयः ऊचुः ।।**
सूत ! जानासि सर्वं त्वं पृच्छामस्त्वामतो वयम् ।।
देवतानां हि को देव ईश्वरः पूज्य एव कः ।। 1.6 ।।

को ध्येयः को जगत्स्रष्टा जगत्पाति च हन्ति कः ।।
कस्मात्प्रवर्त्तते धर्मो दुष्टहन्ता च कः स्मृतः ।। 1.7 ।।

तस्य देवस्य किं रूपं जगत्सर्गः कथं मतः ।।
कैर्व्रतैः स तु तुष्टः स्यात्केन योगेन वाप्यते ।। 1.8 ।।

अवताराश्च के तस्य कथं वंशादिसम्भवः ।।
वर्णाश्रमादिधर्माणां कः पाता कः प्रवर्त्तकः ।। 1.9 ।।

एतत्सर्वं तथान्यच्च ब्रूहि सूत ! महामते ! ।।
नारायणकथाः सर्वाः कथयास्माकमुत्तमाः ।। 1.10 ।।

**सूत उवाच ।।**
पुराणं गारुडं वक्ष्ये सारं विष्णुकथाश्रयम् ।।
गरुडोक्तं कश्यपाय पुरा व्यासाच्छ्रुतं मया ।। 1.11 ।।

एको नारायणो देवो देवानामीश्वरेश्वरः ।।
परमात्मा परं ब्रह्म जन्माद्यस्य यतो भवेत् ।। 1.12 ।।

जगतो रक्षणार्थाय वासुदेवोऽजरोऽमरः ।।
स कुमारादिरूपेण अवतारान्करोत्यजः ।। 1.13 ।।

हरिः स प्रथमं देवः कौमारं सर्गमास्थितः ।।
चचार दुश्चरं ब्रह्मन् ब्रह्मचर्य्यमखण्डितम् ।। 1.14 ।।

द्वितीयं तु भवायास्य रसातलगतां महीम् ।।

उद्धरिष्यन्नुपादत्ते यज्ञेशः शौकरं वपुः ।। 1.15 ।।

तृतीयमृषिसर्गं तु देवर्षित्वमुपेत्य सः ।।
तन्त्रं सात्वतमाचष्टे नैष्कर्म्यं कर्मणां यतः ।। 1.16 ।।

नरनारायणो भूत्वा तुर्य्ये तेपे तपो हरिः ।।
धर्मसंरक्षणार्थाय पूजितः स सुरासुरैः ।। 1.17 ।।

पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् ।।
प्रोवाच सूरये साङ्ख्यं तत्त्वग्रामवि निर्णयम् ।। 1.18 ।।

षष्ठमत्रेरपत्यत्वं दत्तः प्राप्तोऽनसूयया ।।
आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ।। 1.19 ।।

ततः सप्त आकूत्यां रुचेर्यज्ञोऽभ्यजायत ।।
सुत्रामाद्यैः सुरगणैर्यष्ट्वा स्वायम्भुवान्तरे ।। 1.20 ।।

अष्टमे मेरुदेव्यां तु नाभेर्जात उरुक्रमः ।।
दर्शयन्वर्त्म नारीणां सर्वाश्रमनमस्कृतम् ।। 1.21 ।।

ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः ।।
दुग्धैर्महौषधैर्विप्रास्तेन संजीविताः प्रजाः ।। 1.22 ।।

रूपं स जगृहे मात्स्यं चाक्षुषान्तरसंप्लवे ।।
नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ।। 1.23 ।।

सुरासुराणामुदधिं मथ्नतां मन्दराचलम् ।।
दध्रे कमठरूपेण पृष्ठ एकादशे विभुः ।। 1.24 ।।

धान्वन्तरं द्वादशमं त्रयोदशममेव च ।।
आप्यायत्सुरानन्यान्मोहिन्या मोहयस्त्रिया ।। 1.25 ।।

चतुर्दशं नारसिंहं चैत्य (वैर) दैत्येन्द्रमूर्जितम् ।।
ददार करजैरुग्रैरेरकां कटकुद्यथा ।। 1.26 ।।

पञ्चदशं वामनको भूत्वागादध्वरं बलेः ।।
पाद त्रयं याचमानः प्रत्यादित्सुस्त्रिविष्टपम् ।। 1.27 ।।

अवतारे षोडशमे पश्यन्ब्रह्मद्रुहो नृपान् ।।
त्रिः सप्तकृत्वः कुपितो निः क्षत्त्रामकरोन्महीम् ।। 1.28 ।।

ततः सप्तदशे जातः सत्यवत्यां पराशरात् ।।
चक्रे वेदतरोः शाखां दृष्ट्वा पुंसोऽल्पमेधसः ।। 1.29 ।।

नरदेवत्वमापन्नः सुरकार्य्यचिकीर्षया ।।
समुद्रनिग्रहादीनि चक्रे कार्य्याण्यतः परम् ।। 1.30 ।।

एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।।
रामकृष्णाविति भुवो भगवानहरद्भरम् ।। 1.31 ।।

ततः कलेस्तु सन्ध्यान्ते सम्मोहाय सुरद्विषाम् ।।
बुद्धो नाम्रा जिनसुतः कीकटेषु भविष्यति ।। 1.32 ।।

अथ सोऽष्टमसन्ध्यायां नष्टप्रायेषु राजसु ।।
भविता विष्णुयशसो नाम्ना कल्की जगत्पतिः ।। 1.33 ।।

अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ।।
मनुवेदविदो ह्याद्याः सर्वे विष्णुकलाः स्मृताः ।। 1.34 ।।

तस्मात्सर्गादयो जाताः संपूज्याश्च व्रतादिना ।।
पुराणं गारुडं व्यासः पुराऽसौ मेऽब्रवीदिदम् ।। 1.35 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये कर्मकाण्डे एतत्पुराणप्रवृत्तिहेतुनिरूपणं नाम प्रथमोऽध्यायः ।। 1 ।।

**।। ऋषय ऊचुः ।।**
कथं व्यासेन कथितं पुराणं गारुडं तव ।।
एतत्सर्वं समाख्याहि परं विष्णुकथाश्रयम् ।। 2.1 ।।

**सूत उवाच ।।**
अहं हि मुनिभिः सार्द्धं गतो बदरिकाश्रमम् ।।
तत्र दृष्टो मया व्यासो ध्यायमानः परेश्वरम् ।। 2.2 ।।

तं प्रणम्योपविष्टोऽहं पृष्टवान्हि मुनीश्वरम् ।।

**।।सूत उवाच ।।**
व्यास ब्रूहि हरे रूपं जगत्सर्गादिकं ततः ।। 2.3 ।।

मन्ये ध्यायसि तं यस्मात्तस्माज्जानासि तं विभुम् ।।
एवं पृष्टो यथा प्राह तथा विप्रा ? निबोधत ।। 2.4 ।।

**।।व्यास उवाच ।।**
श्रृणु सूत ! प्रवक्ष्यामि पुराणं गारुडं तव ।।
सह नारददक्षाद्यैर्ब्रह्मा मामुक्तवान्यथा ।। 2.5 ।।

**।।सूत उवाच ।।**
दक्षनारदमुख्यैस्तु युक्तं त्वां कथमुक्तवान् ।।
ब्रह्मा श्रीगारुडं पुण्यं पुराणं सारवाचकम् ।। 2.6 ।।

**।।व्यास उवाच ।।**
अहं हि नारदो दक्षो भृग्वाद्याः प्रणिपत्य तम् ।।
सारं ब्रूहीति पप्रच्छुर्ब्रह्माणं ब्रह्मलोकगम् ।। 2.7 ।।

**।।ब्रह्मोवाच ।।**
पुराणं गारुडं सारं रुद्रं च मां यथा ।।
सुरैः सहाब्रवीद्विष्णुस्तथाहं व्यास वच्मिते ।। 2.8 ।।

**।।व्यास उवाच ।।**
कथं रुद्रं सुरैः सार्द्धमब्रवीद्वै हरिः पुरा ।।
पुराणं गारुडं सारं ब्रूहि ब्रह्मन्महार्थकम् ।। 2.9 ।।

**।।ब्रह्मोवाच ।।**
अहं गतोऽद्रिं कैलासमिन्द्राद्यैर्दैवतैः सह ।।
तत्र दृष्टो मया रुद्रो ध्यायमानः परं पदम् ।। 2.10 ।।

पृष्टो नमस्कृतः किं त्वं देवं ध्यायसि शङ्कर ? ।।

त्वत्तो नान्यं परं देवं जानामि ब्रूहि मां ततः ।। 2.11 ।।

सारात्सारतरं तत्त्वं श्रोतुकामः सुरैः सह ।।

**।।रुद्र उवाच ।।**
अहं ध्यायामि तं विष्णुं परमात्मानमीश्वरम् ।। 2.12

सर्वदं सर्वगं सर्वं सर्वप्राणिहृदिस्थितम् ।।
भस्मोद्धूलितदेहस्तु जटामण्डलमण्डितः ।। 2.13 ।।

विष्णोराराधनार्थं मे व्रतचर्य्या पितामह ।।
तमेव गत्वा पृच्छामः सारं यं चिन्तयाम्यहम् ।। 2.14 ।।

विष्णुं जिष्णुं पद्मनाभं हरिं देहविवर्जितम् ।।
शुचिं शुचिपदं हँसं तत्पदं परमेश्वरम् ।। 2.15 ।।

युक्ता सर्वात्मनात्मानं तं देवं चिन्तयाम्यहम् ।।
यस्मिन्विश्वानि भूतानि तिष्ठन्ति च विशन्ति च ।। 2.16 ।।

गुणभूतानि भूतेशे सूत्रे मणिगणा इव ।।
सहस्त्राक्षं सहस्त्राङ्घ्रिं सहस्त्रोरुं वराननम् ।। 2.17

अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम् ।।
गरीयसां गरिष्ठं च श्रेष्ठं च श्रेयसामपि ।। 2.18 ।।

यं वाक्येष्वनुवाक्येषु निषत्सूपनिषत्सु च ।।
गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ।। 2.19 ।।

पुराणपुरुषः प्रोक्तो ब्रह्मा प्रोक्तो द्विजातिषु ।।
क्षये सङ्कर्षणः प्रोक्तस्तमुपास्यमुपास्महे ।। 2.20 ।।

यस्मिंल्लोकाः स्फुरन्तीमे जलेषु शकुन्यो यथा ।।
ऋतमेकाक्षरं ब्रह्म यत्तत्सदसतः परम् ।। 2.21 ।।

अर्चयन्ति च यं देवा यक्षराक्षसपन्नगाः ।।
यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः ।। 2.22 ।।

चन्द्रादित्यौ च नयने तं देवं चिन्तयाम्यहम् ।।
यस्य त्रिलोकी जठरे मस्य काष्ठाश्च बाहवः ।। 2.23 ।।

यस्योच्छ्वासश्च पवनः तं देवं चिन्तयाम्यहम् ।।
यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ।। 2.24 ।।

कुक्षौ समुद्राश्चत्वारस्तं देवं चिन्तयाम्यहम् ।।
परः कालात्परो यज्ञात्परः सदसतश्च यः ।। 2.25 ।।

अनादिरादिर्विश्वस्य तं देवं चिन्तयाम्यहम् ।।
मनसश्चन्द्रमा यस्य चक्षुषोश्च दिवाकरः ।। 2.26 ।।

मुखादग्निश्च संजज्ञे तं देवं चिन्तयाम्यहम् ।।
पद्भ्यां यस्य क्षितिर्जाता श्रोत्राभ्यां च तथा दिशः ।। 2.27 ।।

मूर्द्धभागाद्दिवं यस्य तं देवं चिन्तयाम्यहम् ।।
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।। 2.28 ।।

वंशानुचरितं यस्मात्तं देवं चिन्तयाम्यहम् ।।
यं ध्यायाम्यहमेतस्माद्व्रजामः सारमीक्षितुम् ।। 2.29 ।।

**।।ब्रह्मोवाच ।।**
इत्युक्तोऽहं पुरा रुद्रः श्वेतद्वीपनिवासिनम् ।।
स्तुत्वा प्रणम्य तं विष्णुं श्रोतुकाम स्थितः सुरैः ।। 2.30 ।।

अस्माकं मध्यतो रुद्र उवाच परमेश्वरम् ।।
सारात्सारतरं विष्णुं पृष्टवांस्तं प्रणम्य वै ।। 2.31 ।।

**।।ब्रह्मोवाच ।।**
यथा पप्रच्छ मां व्यास स्तथासौ भगवान् भवः ।।
पप्रच्छ विष्णुं देवाद्यैः श्रृण्वताममरैः सह ।। 2.32 ।।

**।।रुद्र उवाच ।।**
हरे कथय देवेश ! देवदेवः क ईश्वरः ।।
को ध्येयः कश्च वै पूज्यः कैर्व्रतैस्तुष्यते परः ।। 2.33 ।।

कैर्धर्मैः कैश्च नियमैः कया वा धर्मपूजया ।।
केनाचारेण तुष्टः स्यात्किं तद्रूपं च तस्य वै ।। 2.34 ।।

कस्माद्देवाज्जगज्जातं जगत्पालयते च कः ।।
कीदृशैरवतारैश्च कस्मिन्याति लयं जगत् ।। 2.35 ।।

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।।
कस्माद्देवात्प्रवर्त्तन्ते कस्मिमन्नेतत्प्रतिष्ठितम् ।। 2.36 ।।

एतत्सर्वं हरे ! ब्रूहि यच्चान्यदपि किञ्चन ।।
परमेश्वरमाहात्म्यं युक्तयोगादिकं तथा ।। 2.37 ।।

तथाष्टादश विद्याश्च हरी रुद्रं ततोऽब्रवीत् ।।

**।।हरिरुवाच ।।**

श्रृणु रुद्र ! प्रवक्ष्यामि ब्रह्मणा च सुरैः सह ।। 2.38 ।।

अहं हि देवो देवानां सर्वलोकेश्वरेश्वरः ।।
अहं ध्येयश्च पूज्यश्च स्तुत्योहं स्ततिभिः सुरैः ।। 2.39 ।।

अहं हि पूजितो रुद्र ! ददामि परमां गतिम् ।।
नियमैश्च व्रतैस्तुष्ट आचारेण च मानवैः ।। 2.40 ।।

जगत्स्थितेरहं बीजं जगत्कर्त्ता त्वहं शिव ! ।।
दुष्टनिग्रहकर्त्ता हि धर्मगोप्ता त्वहं हर ! ।। 2.41 ।।

अवतारैश्च मत्स्याद्यैः पालयाम्यखिलं जगत् ।।
अहं मंत्राश्च मन्त्रार्थः पूजाध्यानपरो ह्यहम् ।। 2.42 ।।

स्वर्गादीनां च कर्त्ताहं स्वर्गादीन्यहमेव च ।।
योगी योगोहमेवाद्यः पुराणान्यहमेवच ।। 2.43 ।।

ज्ञाता श्रोता तथा मन्ता वक्ता वक्तव्यमेव च ।।
सर्वः सर्वात्मको देवो भुक्तिमुक्तिकरः परः ।। 2.44 ।।

ध्यानं पूजोपहारोऽहं मण्डलान्यहमेव च ।।
इतिहासान्यहं रुद्र ! सर्ववेदा ह्यहं शिव ! ।। 2.45 ।।

सर्वज्ञानान्यहं शम्भो ! ब्रह्मात्माहमहं शिव ! ।।
अहं ब्रह्मा सर्वलोकः सर्वदेवात्मको ह्यहम् ।। 2.46 ।।

अहं साक्षात्सदाचारो धर्मोऽहं वैष्णवो ह्यहम् ।।
वर्णाश्रमास्तथा चाहं तद्धर्मोऽहं पुरातनः ।। 2.47 ।।

यमोऽहं नियमो रुद्र ! व्रतानि विविधानि च ।।
अहं सूर्य्यस्तथा चन्द्रो मङ्गलादीन्यहं तथा ।। 2.48 ।।

पुरा मां गरुडः पक्षी तपसाराधयद्भुवि ।।
तुष्ट ऊचे वरं ब्रूहि मत्तो वव्रे वरं स तु ।। 2.49 ।।

**।।गरुड उवाच ।।**

मम माता च विनता नागैर्दासीकृता हरे ।।
यथाहं देवताञ्जित्वा चामृतं ह्यानयामि तत् ।। 2.50 ।।

दास्याद्विमोक्षयिष्यामि यथाहं वाहनस्तव ।।
महाबलो महावीर्य्यः सर्वज्ञो नागदारणः ।। 2.51 ।।

पुराणसंहिताकर्त्ता यथाऽहं स्यां तथा कुरुं ।।

**।।विष्णुरुवाच ।।**
यथा त्वयोक्तं गरुड तथा सर्वं भविष्यति ।। 2.52 ।।

नागदास्यान्मातरं त्वं विनतां मोक्षयिष्यसि ।।
देवादीन्सकलाञ्जित्वा चामृतं ह्यानयिष्यसि ।। 2.53 ।।

महाबलो वाहनस्त्वं भविष्यसि विषार्दनः ।।
पुराणं मत्प्रसादाच्च मम माहात्म्यवाचकम् ।। 2.54 ।।

यदुक्तं मत्स्वरूपं च तव चाविर्भविष्यति ।।
गारुडं तव नाम्ना तल्लोके ख्यातिं गमिष्यति ।। 2.55 ।।

यथाहं देवदेवानां श्रीः ख्यातो विनतासुत ।।
तथा ख्यातिं पुराणेषु गारुडं गारुडैष्यति ।। 2.56 ।।

यथाहं कीर्त्तनीयोऽथ तथा त्वं गरुडात्मना ।।
मां ध्यात्वा पक्षिमुख्येदं पुराणं गद गारुडम् ।। 2.57 ।।

इत्युक्तो गरुडो रुद्र ! कश्यपायाह पृच्छते ।।
कश्यपो गारुडं श्रुत्वा वृक्षं दग्धमजीवयत् ।। 2.58 ।।

स्वयं चान्यमना भूत्वा विद्ययान्यान्य जीवयत् ।।

यक्षि ॐउंस्वाहाजापी विद्ययं गारुडी परा ।।
गरुडोक्तं गारुडं हि श्रृणु रुद्र ! मदात्मकम् ।। 2.59 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्रीगरुडमहापुराणोत्पत्तिनिरूपणं नाम द्वितीयोऽध्यायः ।। 2 ।।

**।।सूत उवाच ।।**

इति रुद्राब्जजौ विष्णोः शुश्राव ब्रह्मणो मुनिः ।।
व्यासो व्यासादहं वक्ष्येहं ते शौनक नैमिषे ।। 3.1 ।।

मुनीनां श्रृण्वतां मध्ये सर्गाद्यं देवपूजनम् ।।
तीर्थं भुवनकोशं च मन्वन्तरमिहोच्यते ।। 3.2 ।।

वर्णाश्रमादिधर्माश्च दानराज्यादिधर्मकाः ।।
व्यवहारो व्रतं वंशा वैद्यकं सनिदानकम् ।। 3.3 ।।

अंगानि प्रलयो धर्मकामार्थज्ञानमुत्तमम् ।।
सप्रपञ्चं निष्प्रपञ्चं कृतं विष्णोर्निगद्यते ।। 3.4 ।।

पुराणे गारुडे सर्वं गरुडो भगवानथ ।।
वासुदेवप्रसादेन सामर्थ्यातिशयैर्युतः ।। 3.5 ।।

भुत्वा हरेर्वाहनं च सर्गादीनां च कारणम् ।।
देवान्विजित्य गरुडो ह्यमृताहरणं तथा ।। 3.6 ।।

चक्रे क्षुधा हृतं यस्य ब्रह्माण्डमुदरे हरेः ।।
यं दृष्ट्वा स्मृतमात्रेण नागादीनां च संक्षयम् ।। 3.7 ।।

कश्यपो गारुडाद्वृक्षं दग्धं चाजीवयद्यतः ।।
गरुडः स हरिस्तेन प्रोक्तं श्रीकश्यपाय च ।। 3.8 ।।

तच्छ्रीमद्गारुडं पुण्यं सर्वदं पठतस्तव ।।
वक्ष्ये व्यासं नमस्कृत्य श्रृणु शौनक तद्यथा ।। 3.9 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विषयनिरूपणं नाम तृतीयोऽध्यायः ।। 3 ।।

**||रुद्र उवाच ||**

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ||
वंशानुचरितं चैव एतद् ब्रूहि जनार्दन || 4.1 ||

**|| हरिरुवाच ||**

श्रृणु रुद्र प्रवक्ष्यामि सर्गादीन्पापनाशनान् ||
सर्गस्थितिप्रलयान्तां तां विष्णोः क्रीडां पुरातनीम् || 4.2 ||

नरनारायणो देवो वासुदेवो निरंजनः ||
परमात्मा परं ब्रह्म जगज्जनिलयादिकृत् || 4.3 ||

तदेतत्सर्वमेवैतव्द्यक्ताव्यक्तस्वरूपवत् |
तथा पुरुषरूपेण कालरूपेण च स्थितम् || 4.4 ||

व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च ||
क्रीडतो बालकस्येव चेष्टास्तस्य निशामय || 4.5 ||

अनादिनिधनो धाता त्वनन्तः पुरुषोत्तमः ||
तस्माद्भवति चाव्यक्तं तस्मादात्मापि जायते || 4.6 ||

तस्माद्बुद्धिर्मनस्तस्मात्ततः खं पवनस्ततः ||
तस्मात्तेजस्ततस्त्वापस्ततो भूमिस्ततोऽभवत् || 4.7 ||

अण्डो हिरण्मयो रुद्र | तस्यान्तः स्वयमेव हि ||
शरीरग्रहणं पूर्वं सृष्ट्यर्थं कुरुते प्रभुः || 4.8 ||

ब्रह्मा चतुर्मुखो भूत्वा रजोमात्राधिकः सदा ||
शरीरग्रहणं कृत्वाऽसृजदेतच्चराचरम् || 4.9 ||

अण्डस्यान्तर्जगत्सर्वं सदेवासुरमानुषम् ||
स्रष्टा सृजति चात्मानं विष्णुः पाल्यं च पाति च || 4.10 ||

अपसंह्रियते चान्ते संहर्त्ता च स्वयं हरि ||
ब्रह्मा भूत्वासृजद्विष्णुर्जगत्पाति हरिः स्वयम् || 4.11 ||

रुद्ररूपी च कल्पान्ते जगत्संहरतेऽखिलम् ||
ब्रह्मा तु सृष्टिकालेऽस्मिञ्जमध्यगतां महीम् || 4.12 ||

दंष्ट्रयोद्धरति ज्ञात्वा वारहीमास्थितस्तनूम् ||
देवादिसर्गाद्वक्ष्येऽहं संक्षेपाच्छृणु शङ्कर ! || 4.13 ||

प्रथमो महतः सर्गो विरूपो ब्रह्मणस्तु सः ||

तन्मात्राणां द्वितीयस्तु भूतसर्गो हि स स्मृतः ।। 4.14 ।।

वैकारिकस्तृतीयस्तु सर्गस्त्वैन्द्रियकः स्मृतः ।।
इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्वकः ।। 4.15 ।।

मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ।।
तिर्य्यक्स्त्रोतास्तु यः प्रोक्तस्तिर्य्यग्योन्यः स उच्यते ।। 4.16 ।।

तदूर्द्ध्वस्त्रोतसां षष्ठो देवसर्गस्तु स स्मृतः ।।
ततोऽर्वाक्स्त्रोतसां सर्गः सप्तमः स तु मानुषः ।। 4.17 ।।

अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसस्तु सः ।।
पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ।। 4.18 ।।

प्राकृतो वैकृतश्चापि कौमारो नवमः स्मृतः ।।
स्थावरान्ताः सुराद्यास्तु प्रजा रुद्र ! चतुर्विधाः ।। 4.19 ।।

ब्रह्मणः कुर्वतः सृष्टिं जज्ञिरे मानसाः सुताः ।।
ततो देवासुरपितॄन्मानुषांश्च चतुष्टयम् ।। 4.20 ।।

सिसृक्षुरम्भांस्येतानि स्वमात्मानमपूजयत् ।।
मुक्तात्मनस्तमोमात्रादुद्रिक्तास्तत्प्रजापतेः ।। 4.21 ।।

सिसृक्षोर्जघनात्पूर्वमसुरा जज्ञिरे ततः ।।
उत्ससर्ज ततस्तां तु तमोमात्रात्मिकां तनूम् ।। 4.22 ।।

तमोमात्रा तनुस्त्यक्ता शङ्कराभूद्विभावरी ।।
यक्षोपक्षांसि तद्देहे प्रीतिमापुस्ततः सुराः ।। 4.23 ।।

सत्त्वोद्रिक्तास्तु मुखतः संभूता ब्रह्मणो हर ! ।।
सत्त्वप्राया तनुस्तेन सन्त्यक्ता साप्यभूद्दिनम् ।। 4.24 ।।

ततो हि बलिनो रात्रावसुरा देवता दिवा ।।
सत्त्वमात्रां तनुं गृह्य पितरश्च ततोऽभवन् ।। 4.25 ।।

सा चोत्सृष्टाभवत्सन्ध्या दिननक्तान्तरस्थितिः ।।
रजोमात्रां तनुं गृह्य मनुष्यास्त्वभवंस्ततः ।। 4.26 ।।

सा त्यक्ता चाभवज्ज्योत्स्त्रा प्राक्सन्ध्या याभिधीयते ।।
ज्योत्स्ना रात्र्यहनी सन्ध्या शरीराणि तु तस्य वै ।। 4.27 ।।

रजोमात्रां तनु गृह्य क्षुदभूत्कोप एव च ।।

क्षुत्तृट्क्षामा अमृग्भक्षा राक्षसा रक्षणाच्च ये ।। 4.28 ।।

यक्षाख्या यक्षणाज्ज्ञेयाः सर्पा वै केशसर्पणात् ।।
जाताः कोपेन भूतास्ते गन्धर्वा जज्ञिरे ततः ।। 4.29 ।।

गायन्तो जज्ञिरे वाचं गन्धर्वाप्सरसश्च ये ।।
स्वर्गं द्यौर्वक्षसश्चक्रे सुखतोऽजाः स सृष्टवान् ।। 4.30 ।।

सृष्टवानुदराद्गाश्च पार्श्वाभ्यां च प्रजापतिः ।।
पद्भ्यां चैवांत्यमातङ्गान्महिषोष्ट्राविकांस्तथा ।। 4.31 ।।

ओषध्यः फलमूलिन्यो रोमभ्यस्तस्य जज्ञिरे ।।
गौरजः पुरुषो मेध्यो ह्यश्वाश्वतरगर्दभाः ।। 4.32 ।।

एतान् ग्राम्यान्पशून्प्राहुरारण्यांश्च निबोध मे ।।
श्वापदं द्विखुरं हस्तिवानराः पक्षिपञ्चमाः ।। 4.33 ।।

औदकाः पशवः षष्ठाः सप्तमाश्च सरीसृपाः ।।
पूर्वादिभ्यो मुखेभ्यस्तु ऋग्वेदाद्याः प्रजज्ञिरे ।। 4.34 ।।

आस्याद्वै ब्राह्मणा जाता बाहुभ्यां क्षत्त्रियाः स्मृताः ।।
ऊरुभ्यां तु विशः सृष्टाः शूद्रः पद्भ्यां जायत ।। 4.35 ।।

ब्रह्मलोको ब्राह्मणानां शाक्रः क्षत्त्रियजन्मनाम् ।।
मारुतं च विशां स्थानं गान्धर्वं शूद्रजन्मनाम् ।। 4.36 ।।

ब्रह्मचारिव्रतस्थानां ब्रह्मलोकः प्रजायते ।।
प्राजापत्यं गृहस्थानां यथाविहितकारिणाम् ।। 4.37 ।।

स्थानं सप्तऋषीणां च तथैव वनवासिनाम् ।।
यतीनामक्षयं स्थानं यदृच्छागामिनां सदा ।। 4.38 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सृष्टिवर्णनं नाम चतुर्थोऽध्यायः ।। 4 ।।

**।। हरिरुवाच ।।**

कृत्वेहामुत्रसंस्थानं प्रजासर्गं तु मानसम् ।।
अथासृजत्प्रजाकर्तॄन्भानसांस्तनयान्प्रभुः ।। 5.1 ।।

धर्मं रुद्रं मनुं चैव सनकं च सनातनम् ।।
भृगुं सनत्कुमारं च रुचिं श्रद्धां तथैव च ।। 5.2 ।।

मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।।
वसिष्ठं नारदं चैव पितॄन्बर्हिषदस्तथा ।। 5.3 ।।

अग्निष्वात्तांश्च कव्यादानाज्यपांश्च सुकालिनः ।।
उपहूतांस्तथा दीप्यां (प्रा) स्त्रींश्च मूर्तिविवर्जितान् ।। 5.4 ।।

चतुरो मूर्त्तियुक्तांश्च अंगुष्ठाद्दक्षमीश्वरम् ।।
वामां गुष्ठात्तस्य भार्य्यामसृजत्पद्मसम्भवः ।। 5.5 ।।

तस्यां तु जनयामास दक्षो दुहितरः शुभाः ।।
ददौ ता ब्रह्मपुत्रेभ्यः सतीं रुद्राय दत्तवान् ।। 5.6 ।।

रुद्र पुत्रा बभूवुर्हि असंख्याता महाबलाः ।।
भृगवे च ददौ ख्यातिं रूपेणाप्रतिमां शुभाम् ।। 5.7 ।।

भृगोर्धाताविधातारौ जनयामास सा शुभा ।।
श्रियं च जनयामास पत्नी नारायणस्य या ।। 5.8 ।।

तस्यां वै जनयामास बलोन्मादौ हरिः स्वयम् ।।
आयतिर्नियतिश्चैव मनोः कन्ये महात्मनः ।। 5.9 ।।

धाताविधात्रोस्ते भार्य्ये तयोर्जातौ सुतावुभौ ।।
प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः ।। 5.10 ।।

पत्नी मरीचेः सम्भूतिः पौर्णमासमसूयत ।।
विरजः सर्वगश्चैव तस्य पुत्रौ महात्मनः ।। 5.11 ।।

स्मृतेश्चाङ्गिरसः पुत्राः प्रसूताः कन्यकास्तथा ।।
सिनीबाली कुहूश्चैव राका चानुमतिस्तथा ।। 5.12 ।।

अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ।।
सोमं दुर्वाससं चैव दत्तात्रेयं च योगिनम् ।। 5.13 ।।

प्रीत्यां पुलस्त्यभार्य्यायां दत्तोलिस्तत्सुतोऽभवत् ।।
कर्म्मशश्चार्थवीरश्च सहिष्णुश्च सुतत्रयम् ।। 5.14 ।।

क्षमा तु सुषुवे भार्य्या पुलहस्य प्रजापतेः ।।
क्रतोश्च सुमतिर्भार्य्या बालखिल्यानसूयत ।। 5.15 ।।

षष्टिर्यानि सहस्त्राणि ऋषीणामूर्द्धरेतसाम् ।।
अंगुष्ठपर्वमात्राणां ज्वलद्भास्करवर्चसाम् ।। 5.16 ।।

ऊर्ज्जायां तु वसिष्टस्य सप्ताजायन्त वै सुताः ।।
रजोगात्रोर्द्धबाहुश्च शरणश्चानघस्तथा ।। 5.17 ।।

सुतपाः शुक्र इत्येते सर्वे सप्तर्षयोऽमताः ।।
स्वाहां प्रादात्स दक्षोऽपि स शरीराय वहनये ।। 5.18 ।।

तस्मात्स्वाहा सुताँल्लेभे त्रीनुदारौजसो हर ! ।।
पावकं पवमानं च शुचिं चापि जलाशिनः ।। 5.19 ।।

पितृभ्यश्च स्वधा जज्ञे मेनां वैतरणीं तथा ।।
ते उभे ब्रह्मवादिन्यौ मेनायां तु हिमाचलः ।। 5.20 ।।

मैनाकं जनयामास गौरीं पूर्वं तु या सती ।।
ततो ब्रह्मात्मसम्भूतं पूर्वं स्वायंभुवं प्रभुः ।। 5.21 ।।

आत्मानमेव कृतवान्प्रजापाल्यं मनुं हर ! ।।
शतरूपां च तां नारीं तपोनिहतकल्मषाम् ।। 5.22 ।।

स्वायम्भुवो मनुर्देवः पत्नीत्वे जगृहे विभुः ।।
तस्माच्च पुरुषाद्देवी शतरूपा व्यजायत ।। 5.23 ।।

प्रियव्रतोत्तानपादौ प्रसूत्याकूतिसंज्ञिते ।।
देवहूतिं मनुस्तासु आकूतिं रुचये ददौ ।। 5.24 ।।

प्रसूतिं चैव दक्षाय दवहूतिं च कर्दमे ।।
रुचेर्यज्ञो दक्षिणाभूद्दक्षिणायां च यज्ञतः ।। 5.25 ।।

अभवन्द्वादश सुता यामो नाम महाबलाः ।।
चतुर्विंशतिकन्याश्च सृष्टवान्दक्ष उत्तमाः ।। 5.26 ।।

श्रद्धा चला धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ।।
बुद्धिर्लज्जा वपुः शान्तिर्ऋद्धिः कीर्त्तिस्त्रयोदशी ।। 5.27 ।।

पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीप्रभुः ।।
ख्यतिः सत्यथ सम्भूतिः स्मृतिः प्रीतिः क्षमा तथा ।। 5.28 ।।

सन्नतिश्चानसूया च ऊर्ज्जा स्वाहा स्वधा तथा ।।
भृगुर्भवो मरीचिश्च तथा चैवांगिरा मुनिः ।। 5.29 ।।

पुलस्त्यः पुलहश्चैव क्रतुश्चर्षिवरस्तथा ।।
आत्रिर्वसिष्ठो वह्निश्च पितरश्च यथाक्रमम् ।। 5.30 ।।

ख्यात्याद्या जगृहुः कन्या मुनयो मुनिसत्तमाः ।।
श्रद्धा कामं चला दर्पं नियमं धृतिरात्मजम् ।। 5.31 ।।

सन्तोषं च तथा तुष्टिर्लोभं पुष्टिरसूयत ।।
मेधा श्रुतं क्रिया दण्डं लयं विनयमेव च ।। 5.32 ।।

बोधं बुद्धिस्तथा लज्जा विनयं वपुरात्मजम् ।।
व्यवसायं प्रजज्ञे वै क्षेमं शान्तिरसूयत ।। 5.33 ।।

सुखमृद्धिर्यशः कीर्त्तिरित्येते धर्मसूनवः ।।
कामस्य च रतिर्भार्य्या तत्पुत्रो हर्ष उच्यते ।। 5.34 ।।

ईजे कदाचिद्यज्ञेन हयमेधेन दक्षकः ।।
तस्य जामातरः सर्वे यज्ञं जग्मुर्निमन्त्रिताः ।। 5.35 ।।

भार्य्यभिः सहिताः सर्वे रुद्रं देवीं सतीं विना ।।
अनाहूता सती प्राप्ता दक्षेणैवावमानिता ।। 5.36 ।।

त्यक्ता देहं पुनर्जाता मेनायां तु हिमालयात् ।।
शम्भोर्भार्य्याभवद्गौरी तस्यां जज्ञे विनायकः ।। 5.37 ।।

कुमारश्चैव भृंगीशः क्रुद्धो रुद्रः प्रतापवान् ।।

विध्वंस्य यज्ञं दक्षं तु तं शशाप पिनाकधृक् ।।
ध्रुवस्यान्वयसम्भूतो मनुष्यस्त्वं भविष्यसि ।। 5.38 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे प्रजाकर्त्रादिसृष्टिर्नाम पञ्चमोऽध्यायः ।। 5 ।।

**।।हरिरुवाच ।।**

उत्तानपादादभवत्सुरुच्यामुत्तमः सुतः ।।
सुनीत्यां तु ध्रुवः पुत्रः स लेभे स्थानमुत्तमम् ।। 6.1 ।।

मुनिप्रसादादाराध्य देवदेवं जनार्दनम् ।।
ध्रुवस्य तनयः श्लिष्टिर्महाबलपराक्रमः ।। 6.2 ।।

तस्य प्राचीनवर्हिस्तु पुत्रस्तस्याप्युदारधीः ।।
दिवञ्जयस्तस्य सुतस्तस्य पुत्रो रिपुः स्मृतः ।। 6.3 ।।

रिपोः पुत्रस्तथा श्रीमाँश्चाक्षुषः कीर्त्तितो मनुः ।।
रुरुस्तस्य सुतः श्रीमानंगस्तस्यापि चात्मजः ।। 6.4 ।।

अंगस्य वेणः पुत्रस्तु नास्तिको धर्मवर्जितः ।।
अधर्म्मकारी वेण(न) श्च मुनिभिश्च कुशैर्हतः ।। 6.5 ।।

ऊरुं ममन्थुः पुत्रार्थे ततोऽस्य तनयोऽभवत् ।।
ह्रस्वोऽतिमात्रः कृष्णांगो निषीदेति ततोऽब्रुवन् ।। 6.6 ।।

निषादस्तेन वै जातो बिन्ध्यशैलनिवासकः ।।
ततोऽस्य दक्षिणं पाणिं ममन्थुः सहसा द्विजाः ।। 6.7 ।।

तस्मात्तस्य सुतो जातो विष्णोर्मानसरूपधृक् ।।
पुथुरित्येवनामा स वेणपुत्रो दिवं ययौ ।। 6.8 ।।

दुदोह पृथिवीं राजा प्रजानां जीवनाय हि ।।
अन्तर्द्धानः पृथोः पुत्रो तहविर्द्धानस्तदात्मजः ।। 6.9 ।।

प्राचीनबर्हिस्त्पुत्रः पृथिव्यामेकराड् बभौ ।।
उपयेमे समुद्रस्य लवणस्य स वै सुताम् ।। 6.10 ।।

तस्मात्सुषाव सामुद्री दश प्राचीनबर्हिषः ।।
सर्वे प्राचेतसा नाम धनुर्वेदस्य पारगाः ।। 6.11 ।।

अपृथगधर्म्मचरणास्तेऽतप्यन्त महत्तपः ।।
दशवर्षसहस्त्राणि समुद्रसलिलेशयाः ।। 6.12 ।।

प्रजापतित्वं संप्राप्य भार्य्या तेषां च मारिष ।।
अभवद्भवशापेन तस्यां दक्षोऽभवत्ततः ।। 6.13 ।।

असृजन्मनसा दक्षः प्रजाः पूर्वं चतुर्विधाः ।।
नावर्द्धन्त च तास्तस्य अपध्याता हरेण तु ।। 6.14 ।।

मैथुनेन ततः सृष्टिं कर्त्तुमैच्छत्प्रजापतिः ।।
असिक्रीमावहद्भार्य्यां वीरणस्य प्रजापतेः ।। 6.15 ।।

तस्य पुत्रसहस्त्रं तु वैरण्यां समपद्यत ।।
नारदोक्ता भुवश्चान्तं गता ज्ञातुं च नागताः ।। 6.16 ।।

दक्षपुत्रसहस्त्रं च तेषु नष्टेषु सृष्टवान् ।।
शवलाश्वास्तेऽपि गता भ्रातृणां पदवीं हर ! ।। 6.17 ।।

दक्षः क्रुद्धः शशापाथ नारदं जन्म चाप्स्यसि ।।
नारदो ह्यभवत्पुत्रः कश्यपस्य मुनेः पुनः ।। 6.18 ।।

यज्ञे ध्वस्तेऽथ दक्षोऽपि शशापोग्रं महेश्वरम् ।।
स्तुत्वात्वामुपचारैश्च पूजयिष्यंति शंकर ।। 6.19 ।।

जन्मान्तरेऽपि वैरेण ते विनश्यन्ति शङ्कर ! ।।

तस्माद्वैरं न कर्तव्यं कदाचिदपि केनचित् ।।
असिक्न्यां (महिष्यां) जनयामास दक्षो दुहितरो ह्यथ ।। 6.20 ।।

षष्टिं कन्या रूपयुता द्वे चैवांगिरसे ददौ ।।
द्वे प्रादात्स कृशाश्वाय दश धर्म्माय चाप्यथ ।। 6.21 ।।

चतुर्दश कश्यपाय अष्टाविंशातिमिन्दवे ।।
प्रददौ बहुपुत्राय सुप्रभां भामिनीं तथा ।। 6.22 ।।

मनोरमां भानुमतीं विशालां बहुदामथ ।।
दक्षः प्रादान्महादेव ! चतस्त्रोऽरिष्टनेमये (ने) ।। 6.23 ।।

स कृशाश्वाय च प्रादात्सुप्रजां च तथा जयाम् ।।
अरुन्धती वसुर्या(र्जा) मी लम्बा भानुर्मरुद्वती ।। 6.24 ।।

सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च ता दश ।।
धर्म्मपत्न्यः समाख्याताः कश्यपस्य वदाम्यहम् ।। 6.25 ।।

अदितिर्दितिर्दनुः काला ह्यनायुः सिंहिका मुनिः ।।
कद्रुः साध्या हरा क्रोधा विनता सुरभिः खगा ।। 6.26 ।।

विश्वेदेवास्तु विश्वायाः साध्या साध्यान्व्यजायत ।।
मरुत्वत्यां मरुत्वन्तो वसोस्तु वसवस्तथा ।। 6.27 ।।

भानोस्तु भानवो रुद्र ! मुहूर्त्ताच्च मुहूर्त्तजाः ।।

लम्बायाश्चैव घोषोऽथ नागवीथिस्तु या (जा) मितः ।। 6.28 ।।

पृथिवीविषयं सर्वमरुत्वत्यां व्यजायत ।।
सङ्कल्पायास्तु सर्वात्मा जज्ञे संकल्प एव हि ।। 6.29 ।।

आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः ।।
प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः ।। 6.30 ।।

आपस्य पुत्रो वेतुण्डिः (ण्डः) श्रमः श्रान्तो ध्वनिस्तथा ।।
ध्रुवस्य पुत्रो भगवान्कालो लोकप्रकालनः ।। 6.31 ।।

सोमस्य भगवान्वर्च्चा वर्च्चस्वी येन जायते ।।
धवस्य पुत्रो द्रुहिणो हुतहव्यवहस्तथा ।। 6.32 ।।

मनोहरायां शिशिरः प्राणोऽथ रमणस्तथा ।।
अनिलस्य शिवा भार्य्या तस्याः पुत्रः पुलोमजः ।। 6.33 ।।

अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु ।।
अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत् ।। 6.34 ।।

तस्य शाखो विशाखश्च नैगमेयश्च पृष्टतः ।।
अपत्यं कृत्तिकानां तु कार्त्तिकेय इति स्मृतः ।। 6.35 ।।

प्रत्यूषस्य विदुः पुत्रमृषिं नाम्ना तु देवलम् ।।
विश्वकर्म्मा प्रभासस्य विख्यातो देववर्द्धकिः ।। 6.36 ।।

अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च वीर्य्यवान् ।।
त्वष्टुश्चाप्यात्मजः पुत्रो विश्वरूपो महातपाः ।। 6.37 ।।

हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ।।
वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा ।। 6.38 ।।

मृगव्याधश्च शर्वश्च कपाली च महामुने ! ।।
एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः ।। 6.39 ।।

अदित्यां कश्यपाच्चैव सूर्य्या द्वादश जज्ञिरे ।।
विष्णुः शक्रोऽर्य्यमा धाता त्वष्टा पूषा तथैव च ।। 6.40 ।।

विवस्वान्सविता चैव मित्रो वरुण एव च ।।
अशुमांश्च भगश्चैव आदित्या द्वादश स्मृताः ।। 6.41 ।।

सप्तविंशतिः सोमस्य पत्न्यो नक्षत्रसंज्ञिताः ।।

हिरण्यकशिपुर्दित्यां हिरण्याक्षोऽभवत्तदा ।। 6.42 ।।

सिंहिका चाभवत्कन्या विप्रचित्तिपरिग्रहा ।।
हिरण्यकशिपोः पुत्राश्चत्वारः पृथुलौजसः ।। 6.43 ।।

अनुह्लादश्च ह्लादश्च प्रह्लादश्चैव वीर्य्यवान् ।।
संह्लादश्चावमस्तेषां प्रह्लादो विष्णुतत्परः ।। 6.44 ।।

संह्लादपुत्र आयुष्मान्शिविर्बाष्कल एव च ।।
विरोचनश्च प्राह्लादिर्बलिर्जज्ञे विरोचनात् ।। 6.45 ।।

बलेः पुत्रशतं त्वासीद्वाणज्येष्ठं वृषध्वज ! ।।
हिरण्याक्षसुताश्चासन्सर्व एव महाबलाः ।। 6.46 ।।

उत्कुरः शकुनिश्चैव भूतसन्तापनस्तथा ।।
महानाभो महाबाहुः कालनाभस्तथापरः ।। 6.47 ।।

अभवन्दनुपुत्राश्च द्विमूर्द्धा शंकरस्तथा ।।
अयोमुखः शंकुशिराः कपिलः शम्बरस्तथा ।। 6.48 ।।

एकचक्रो महाबाहुस्तारकश्च महाबलः ।।
स्वर्भानुर्वृषपर्वा च पुलोमा च महासुरः ।। 6.49 ।।

एते दनोः सुताः ख्याता विप्रचित्तिश्च वीर्य्यवान् ।।
स्वर्भानोः सुप्रभा कन्या शर्मिष्ठा वार्षपर्वणी ।। 6.50 ।।

उपदानवी हयशिराः प्रख्याता वरकन्यकाः ।।
वैश्वानरसुते चोभे पुलोमा कालका तथा ।। 6.51 ।।

उभे ते तु महाभागे मारीचेस्तु परिग्रहः ।।
ताभ्यां पुत्रसहस्त्राणि षष्टिर्दानवसत्तमाः ।। 6.52 ।।

पौलोमाः कालकञ्जाश्च मारीचतनयाः स्मृताः ।।
सिंहिकायां समुत्पन्ना विप्रचित्तिसुतास्तथा ।। 6.53 ।।

व्यंशः शल्यश्च बलवान्नभश्चैव महाबलः ।।
वातापिर्नमुचिश्चैव इल्वलः खसृमांस्तथा ।। 6.54 ।।

अञ्ज (न्त) को नरकश्चैव काल नाभस्तथैव च ।।
निवातकवचा दैत्याः प्रह्लादस्य कुलेऽभवन् ।। 6.55 ।।

षट् सुताश्च महासत्त्वास्ताम्रायाः परिकीर्त्तिताः ।।

शुकी श्येनी च भासी च सुग्रीवी शुचिगृध्रिका ।। 6.56 ।।

शुकी शुकानजनयदुलूकी प्रत्यलूककान् ।।
श्येनी श्येनांस्तथा भासी भासान् गृध्रांश्च गृध्र्यपि ।। 6.57 ।।

शुच्यौदकान्पक्षिगणान्सुग्रीवी तु व्यजायत ।।
(अश्वानुष्टान् गर्दभांश्च ताम्रावंशः प्रकीर्त्तितः) ।। 6. 58 ।।

विनतायास्तु पुत्रौ द्वौ विख्यातौ गरुडारुणौ ।।
सुरसायाः सहस्त्रं तु सर्पाणाममितौजसाम् ।। 6.59 ।।

काद्रवेयाश्च फणिनः सहस्त्रममितौजसः ।।
तेषां प्रधाना भूतेश ! शेषवासुकितक्षकाः ।। 6.60 ।।

शङ्खः श्वेतो महापद्मः (शंखः) कम्बलाश्वतरौ तथा ।।
एलापत्रस्तथा नागः कर्कोटकधनञ्जयौ ।। 6.61 ।।

गणं क्रोधवशं विद्धि ते च सर्वे च दंष्ट्रिणः ।।
क्रोधा तु जनयामास पिशाचांश्च महाबलान् ।। 6.62 ।।

गास्तु वै जनयामास सुरभिर्महिषांस्तथा ।।
इरा वृक्षलताबल्लीस्तृणजातीश्च सर्वशः ।। 6.63 ।।

खगा च यक्षरक्षांसि मुनिरप्सरसस्तथा ।।
अरिष्टा तु महासत्त्वान् गन्धर्वान्समजीजनत् ।। 6.64 ।।

देवा एकोनपञ्चाशन्मरुतो ह्यभवन्निति ।।
एकज्यो तिश्च द्विर्ज्योतिचतुर्ज्योतिस्तथैव च ।। 6.65 ।।

एकशुक्रो द्विशुक्रश्च त्रिशुक्रश्च महाबलः ।।
ईदृक् सदृक् तथान्यादृक् ततः प्रतिसदृक् तथा ।। 6.66 ।।

मितश्च समितश्चैव सुमितश्च महाबलः ।।
ऋतजित्सत्यजिच्चैव सुषेणः सेनजित्तथा ।। 6.67 ।।

अतिमित्रोऽप्यमित्रश्च दूरमित्रोऽजितस्तथा ।।
ऋतश्च ऋतधर्म्मा च विहर्त्ता वरुणो (चमसो) ध्रुवः ।। 6.68 ।।

विधारणश्च दुर्मेधा अयमेकगणः स्मृतः ।।
ईदृशश्च सदृक्षश्च एतादृक्षो मिताशनः ।। 6.69 ।।

एतेनः प्रसदृक्षश्च सुरतश्च महातपाः ।।

हेतुमान्प्रसवस्तद्वत्सुरभश्च महायशाः ।। 6.70 ।।

नादिरुग्रो ध्वनिर्भासो विमुक्तो विक्षिपः सहः ।।
द्युतिर्वसुरलाधृष्यो लाभ कामो जयी विराट् ।। 6.71 ।।

उद्वेषणो गणो नाम वायुस्कन्धे तु सप्तमे ।।
एतत्सर्वं हरे रूपं राजानो दानवाः सुराः ।। 6.72 ।।

सूर्य्यादि परिवारेण मन्वाद्या ईजिरे हरिम् ।। 6.73 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे उत्तानपादवंशादिवर्णनं नाम षष्ठोऽध्यायः ।। 6 ।।

**।।रुद्र उवाच ।।**

सूर्य्यादिपूजनं ब्रूहि कृतं स्वायम्भुवादिभिः ।।
भुक्तिमुक्तिप्रदं सारं व्यास ! संक्षेपतः परम् ।। 7.1 ।।

हरिरुवाच ।।
सूर्य्यादिपूजां वक्ष्यामि धर्म्मकामादिकारिकाम् ।। 7.2 ।।

ॐ सूर्य्यासनाय नमः ।।
ॐ नमः सूर्य्यमूर्त्तये ।।
ॐ ह्रां ह्रीं सः सूर्य्याय नमः ।।
ॐ सोमाय नमः ।।
ॐ मङ्गलाय नमः ।।
ॐ बुधाय नमः
ॐ बृहस्पतये नमः ।।
ॐ शुक्राय नमः ।।
ॐ शनैश्चराय नमः ।।
ॐ राहवे नमः ।।

ॐ केतवे नमः ।।
ॐ तेजश्चण्डाय नमः ।। 7.3 ।।

आसनावाहनं पाद्यमर्घ्यमाचमनं तथा ।।
स्नानं वस्त्रोपवीतञ्च गन्धपुष्पं च धूपकम् ।। 7.4 ।।

दीपकं च नस्कारं प्रदक्षिणविसर्ज्जने ।।
सूर्य्यादीनां सदा कुर्य्यादिति मन्त्रैर्वृषध्वज ! ।। 7.5 ।।

ॐ ह्रांशिवाय नमः ।।
ॐ ह्रांशिवमूर्त्तये शिवाय नमः ।।
ॐ ह्रां हृदयाय नमः ।।
ॐ ह्रीं शिरसे स्वाहा ।।
ॐ ह्रूं शिखायै वषट् ।।
ॐ ह्रै कवचाय हुं ।।
ॐ ह्रौं नेत्रत्रयाय वौषट् ।।
ॐ ह्रः अस्त्राय नमः ।।
ॐ ह्रां सद्योजातय नमः ।।
ॐ ह्रीं वामदेवाय नमः ।।
ॐ ह्रूं अघोराय नमः ।।
ॐ ह्रैं तत्पुरुषाय नमः ।।
ॐ ह्रौं ईशानाय नमः ।।

ॐ ह्रीं गौर्य्यै नमः ।।
ॐ ह्रौं गुरुभ्यो नमः ।।
ॐ ह्रौं इन्द्राय नमः ।।
ॐ ह्रौं चण्डाय नमः ।।
ॐ ह्रां अघोराय नमः ।।
ॐ वासुदेवासनाय नमः ।।
ॐ वासुदवमूर्त्तये नमः ।।

ॐ अं ॐ नमो भगवते वासुदेवाय नमः ।।
ॐ आं ॐ नमो भगवते सङ्कर्षणाय नमः ।।
ॐ अं ॐ नमो भगवते प्रद्युम्नाय नमः ।।
ॐ अः ॐ नमो भगवते अनिरुद्धाय नमः ।।

ॐ नारायणाय नमः ।।
ॐ तत्सद्ब्रह्मणे नमः ।।

ॐ ह्रां विष्णवे नमः ।।
ॐ क्ष्रौं नमो भगवते नरसिंहाय नमः ।।

ॐ भूः ॐ नमो भगवते वराहाय नमः ।।
ॐ कं टं पं शं वैनतेयाय नमः ।।
ॐ जं खं रं सुदर्श नाय नमः ।।
ॐ खं ठं फं षं गदायै नमः ।।
ॐ वं लं मं क्षं पाञ्चजन्याय नमः ।।
ॐ घं ढं भं हं श्रियै नमः ।।
ॐ गं डं वं सं पुष्ट्यै नमः ।।
ॐ धं षं वं सं वनमालायै नमः ।।
ॐ सं दं लं श्रीवत्साय नमः ।।
ॐ ठं चं भं यं कौस्तुभाय नमः ।।

ॐ गुरुभ्यो नमः ।।
ॐ इन्द्रादिदिक्पालेभ्यो नमः ।।
ॐ विष्वक्सेनाय नमः ।। 7.6 ।।

आसनादीन्हरेरतैर्मन्त्रैर्मन्त्रैर्ददद्याद्वृषध्वज ! ।।
विष्णुशक्त्याः सरस्वत्याः पूजां श्रृणु शुभप्रदाम् ।। 7.7 ।।

ॐ ह्रीं सरस्वत्यै नमः ।।
ॐ ह्रां हृदयाय नमः ।।
ॐ ह्रीं शिरसे नमः ।।

ॐ ह्रूं शिखायै नमः ।।
ॐ ह्रैं कवचाय नमः ।।
ॐ ह्रौं नेत्रत्रयाय नमः ।।
ॐ ह्रः अस्त्राय नमः ।। 7.8 ।।

श्रद्धा ऋद्धिः कला मेधा तुष्टिः पुष्टिः प्रभा मतिः ।।
ॐ ह्रींकाराद्या नमोऽन्ताश्च सरस्वत्याश्च शक्तयः ।। 7.9 ।।

क्षेत्रपालाय नमः ।।
ॐ गुरुभ्यो नमः ।।
ॐ परमगुरुभ्यो नमः ।। 7.10 ।।

पद्मस्थायाः सरस्वत्या आसनाद्यं प्रकल्पयेत् ।।
सूर्यादीनां स्वकैर्प्रन्त्रैः पवित्रारोहणं तथा ।। 7.11 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सूर्य्यादीनां सरस्वत्याश्च पूजनं नाम सप्तमोऽध्यायः ।। 7 ।।

**।।हरिरुवाच ।।**

भूमिष्ठे मण्डपे स्नात्वा मण्डले विष्णुमर्चयेत् ।।
पञ्चरंगिकचूर्णेन वज्रनाभं तु मण्डलम् ।। 8.1 ।।

षोडशैः कोष्ठकैस्तत्र सम्मितं रुद्र ? कारयेत् ।।
चतुर्थपंचकोणेषु सूत्रपातं तु कारयेत् ।। 8.2 ।।

कोणसूत्रादुभयतः कोणा ये तत्र संस्थिताः ।।
तेषु चैव प्रकुर्वीत सूत्रपातं विचक्षणः ।। 8.3 ।।

तदनन्तरकोणेषु एवमेव हि कारयेत् ।।
प्रथमा नाभिरुद्दिष्टा मध्ये रेखाप्रसंगमे ।। 8.4 ।।

अन्तरेषु च सर्वेषु अष्टौ चैव तुनाभयः ।।
पूर्वमध्यमनाभिभ्यामथं सूत्रं तु भ्रामयेत् ।। 8.5 ।।

अन्तरा स द्विजश्रेष्ठः पादोनं भ्रामयेद्धर !।।
अनेन नाभिसूत्रस्य कर्णिकां भ्रामयेच्छिव ! ।। 8.6 ।।

कर्णिकाया द्विभागेन केसराणि विचक्षणः ।।
तदग्रेण सदा विद्वान्दलान्येव समालिखेत् ।। 8.7 ।।

सर्वेषु नाभिक्षेत्रषु मानेनानेन सुव्रत ! ।।
पद्मानि तानि कुर्वीत देशिकः पर मार्थवित् ।। 8.8 ।।

आदिसूत्रविभागेन द्वाराणि परिकल्पयेत् ।।
द्वारशोभां तथा तत्र तदर्द्धेन तु कल्पयेत् ।। 8.9 ।।

कर्णिकां पीतवर्णेन सितरक्तादिकेसरैः ।।
अन्तरं नीलवर्णेन दलानि असितेन च ।। 8.10 ।।

कृष्णवर्णेन रजसा चतुरश्रं प्रपूरयेत् ।।
द्वाराणि शुक्लवर्णेन रेखाः पंच च मण्डले ।। 8.11 ।।

सिता रक्ता तथा पीता कृष्णा चैव यथाक्रमम् ।।
कृत्वैव मण्डलञ्चादौ न्यासं कृत्वार्चयेद्धरिम् ।। 8.12 ।।

हृन्मध्ये तु न्यसेद्विष्णुं कण्ठे सङ्कर्षणं तथा ।।
प्रद्युम्नं शिरसिन्यस्य शिखायामनिरुद्धकम् ।। 8.13 ।।

ब्रह्माणं सर्वगात्रेषु करयोः श्रीधरं तथा ।।
अहं विष्णुरिति ध्यात्वा कर्णिकायां न्यसेद्धरिम् ।। 8.14 ।।

न्यसेत्सङ्कर्षणं पूर्वे प्रद्युम्नं चैव दक्षिणे ।।
अनिरुद्धं पश्चिमे च ब्रह्माणं चोत्तरे न्यसेत् ।। 8.15 ।।

श्रीधरं रुद्रकोणेषु इन्द्रादीन्दिक्षु विन्यसेत् ।।
ततोऽभ्यर्च्य च गन्धाद्यैः प्राप्नुयात्परमं पदम् ।। 8.16 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुपूजोपयोगिवज्रनाभमण्डलनिरूपणं नामाष्टमोऽध्यायः ।। 8 ।।

**।।हरिरुवाच ।।**

समये (या) दीक्षितः शिष्यो बद्धनेत्रस्तु वाससा ।।
अष्टाहुतिशतं तस्य मूलमन्त्रेण होमयेत् ।। 9.1 ।।

द्विगुणं पुत्रके होमं त्रिगुणं साधके मतम् ।।
निर्वाणदेशिके रुद्र ! चतुर्गुणमुदाहृतम् ।। 9.2 ।।

गुरुविष्णुद्विजस्त्रीणां हन्ता बध्यस्त्व(श्च)दीक्षितैः ।।
अथ दीक्षां प्रवक्ष्यामि धर्माधर्मक्षयङ्करीम् ।। 9.3 ।।

उपवेश्य बहिः शिष्यान्धारणं तेषु कारयेत् ।।
वायव्या कलया रुद्र शोष्यमाणान्विचिंतयेत् ।। 9.4 ।।

आग्नेय्या दह्यमानांश्च प्लावितानम्भसा पुनः ।।
तेजस्तेजसि तं जीवमेकीकृत्य समाक्षिपेत् ।। 9.5 ।।

प्रणवं चिन्तयेव्द्योम्नि शरीरेऽन्यत्तु कारणम् ।।
एकैकं यो जयेत्तत्र क्षेत्रज्ञं देहकारणात् ।। 9.6 ।।

उत्पाद्य योजयेत्पश्चादेकैकं वृषभध्वज ।।
मण्डलादिष्वशक्तस्तु कल्पयित्वाऽर्चयेद्धरिम् ।। 9.7 ।।

चतुर्द्वारं भवेत्तच्च ब्रह्मतीर्थादनुक्रमात् ।।
हस्तं पद्मं समाख्यातं पत्राण्यङ्गुलयः स्मृताः ।। 9.8 ।।

कर्णिकातलहस्तन्तु नखान्यस्य तु केशराः ।।
तत्रार्चयेद्धरिं ध्यात्वा सूर्य्येन्द्वग्नयन्तरेव च ।। 9.9 ।।

तं हस्तं पातयेन्मूर्ध्नि शिष्यस्य तु समाहितः ।।
हस्ते विष्णुः स्थितो यस्माद्विष्णुहस्तस्ततस्त्वयम् ।।
नश्यन्ति स्पर्शनात्तस्य पातकान्यखिलानि च ।। 9.10 ।।

गुरुः शिष्यं समभ्यर्च्य नेत्रे बद्धे तु वाससा ।।
देवस्य प्रमुखं कृत्वा पुष्पमेवार्पयेत्ततः ।।
पुष्पं निपतितं यत्र मूर्ध्नो देवस्य शार्ङ्गिणः ।। 9.11 ।।

तन्नाम कारयेत्तस्य स्त्रीणां नामांकितं स्वयम् ।।
शूद्राणां दाससंयुक्तं कारयेत्तु विचक्षणः ।। 9.12 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुदीक्षानि० नाम नवमोऽध्यायः ।। 9 ।।

**।।हरिरुवाच ।।**
श्र्यादिपूजां प्रवश्र्यामि स्थण्डिलादिषु सिद्धये ।।
श्रीं ह्रीं महालक्ष्म्यै नमः ।।

श्रां श्रीं श्रूं श्रैं श्रौं श्रः क्रमाद्धृदयं च शिरः शिखाम् ।।
कवचं नेत्रमस्त्रं च आसनं मूर्त्तिमर्चयेत् ।। 10.1 ।।

मण्डले पद्मगर्भे च चतुर्द्वारि रजोऽन्विते ।।
चतुः षष्ट्यन्तमष्टादि खाक्षेखाक्षेखान्यादि मण्डलम् ।। 10.2 ।।

खाक्षीन्दुसूर्य्यगं सर्वं खादिवेदेन्दुवर्त्तनात् ।।
लक्ष्मीमंगानि चैकस्मिन्कोणे दुर्गां गणं गुरुम् ।। 10.3 ।।

क्षेत्रपालमथाग्न्यादौ होमाज्जुहाव कामभाक् ।।
ॐ घं टं डं हं श्रीमहालक्ष्म्यै नमः ।। 10.4 ।।

अनेन पूजयेल्लक्ष्मीं पूर्वोक्तपरिवारकैः ।।
ॐ सौं सरस्वत्यै नमः ।।
ॐ ह्रीं सौं सरस्वत्यै नमः ।। 10.5 ।।

ॐ ह्रीं वदवदवाग्वादिनिस्वाहा ॐ ह्रीं सरस्वत्यै नमः ।। 10.6 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे लक्ष्म्यर्चननिरूपणं नाम दशमोऽध्यायः ।। 10 ।।

**।।हरिरुवाच ।।**

नवव्यूहार्चनं वक्ष्ये यदुक्तं कश्यपाय हि ।।
जीवमुत्क्षिप्य मूर्द्धन्यां नाभ्यां व्योम्निनिवेशयेत् ।। 11.1 ।।

ततोरमिति बीजेन दहेद्भूतात्मकं वपुः ।।
यमित्यनेन बीजेन तच्च सर्वं विनाशयेत् ।। 11.2 ।।

लमित्यनेन बीजेन प्लावयेत्सचराचरम् ।।
वमित्यनेन बीजेन चिन्तयेदमृतं ततः ।। 11.3 ।।

ततो बुद्वुदमध्ये तु पीतवासाश्चतुर्भुजः ।।
अहं मतस्तथात्मानं ध्यानेन परिचिन्तयेत् ।। 11.4 ।।

मन्त्रन्यासं ततः कुर्यात्त्रिविधं करदेहयोः ।।
द्वादशाक्षरबीजेन उक्तबीजैरनन्तरम् ।। 11.5 ।।

षडङ्गेन ततः कुर्य्यात्साक्षाद्येन हरिर्भवेत् ।।
दक्षिणाङ्गुष्ठमारभ्य मध्याङ्गुष्ठंदले न्यसेत् ।। 11.6 ।।

मध्ये बीजद्वयं न्यस्य न्यसेदङ्गे ततः पुनः ।।
हृच्छिरसि शिखावर्म्मवक्क्राक्ष्युदहपृष्ठतः ।। 11.7 ।।

बाह्वोश्च करयोर्जान्वोः पादयोश्चापि विन्यसेत् ।।
पद्माकारौ करौ कृत्वा मध्येऽङ्गुष्ठं निवेशयेत् ।। 11.8 ।।

चिन्तयेत्तत्र सर्वेशं परं तत्त्वमनामयम् ।।
क्रमाच्चैतानि बीजानि तर्जन्यादिषु विन्य सेत् ।। 11.9 ।।

ततो मूर्द्धाक्षिवक्क्रेषु कण्ठे च हृदये तथा ।।
नाभौ गुह्ये तथा जान्वोः पादयोर्विन्यसेत्क्रमात् ।। 11.10 ।।

पाण्योः षडङ्गबीजानि न्यस्य काये ततो न्यसेत् ।।
अङ्गुष्ठादिकनिष्ठान्तं विन्यसेद्वीजपञ्चकम् ।। 11.11 ।।

करमध्ये नेत्रबीजमङ्गन्यासऽप्ययं क्रमः ।।
हृदये हृदयं न्यस्य शिरः शिरसि विन्यसेत् ।। 11.12 ।।

शिखायां तु शिखां न्यस्य कवचं सर्वतस्तनौ ।।
नेत्रं नेत्रे विधातव्यमस्त्रञ्च करयोर्द्वयोः ।। 11.13 ।।

तेनैव च दिशो बद्धा पूजा विधिमथाचरेत् ।।
हृदये चिन्तयेत्पूर्वं योगपीठं समाहितः ।। 11.14 ।।

धर्म ज्ञनं च वैराग्यमैश्वर्यं च यथाक्रमम् ।।
आग्नेयादौ च पूर्वादावधर्मादींश्च विन्यसेत् ।। 11.15 ।।

एभिः परिच्छन्नतनुं पीठभूतं तदात्मकम् ।।
अनन्तं विन्यसेत्पश्चात्पूर्वकायोन्नतं स्थितम् ।। 11.16 ।।

ततो विद्यात्सरोजातं दलाष्टसमदिग्दलम् ।।
सिताब्जं शतपत्राढ्यं विप्रकीर्णोर्द्धकर्णिकम् ।। 11.17 ।।

ध्यात्वा वेदादिना पश्चात्सूर्य्यसोमानलात्मनाम् ।।
मण्डलानि क्रमादेवमुपर्य्युपरि चिन्तयेत् ।। 11.18 ।।

ततः पूर्वादिदिक्संस्थाः शक्तीः केशवगोचराः ।।
विमलाद्या न्यसेदष्टौ नवमीं कर्णिकागताम् ।। 11.19 ।।

एवं ध्यात्वा समभ्यर्च्य योगपीठमनन्तरम् ।।
मनसावाहय तत्रेशं हरिं शार्ङ्गं न्यसेत्पुनः ।। 11.20 ।।

हृदयादीनि पूर्वादिचतुर्दिग्दलयोगतः ।।
मध्ये नेत्रं तु कोणेषु अस्त्रमन्त्रं न्यसेत्ततः ।। 11.21 ।।

सङ्कर्षणादिबीजानि पूर्वादिक्रमयोगतः ।।
द्वारि पूर्वे परे चैव वैनतेयं तु विन्यसेत् ।। 11.22 ।।

सुदर्शनं सहस्त्रारं दक्षिणे द्वारि विन्यसेत् ।।
श्रियं दक्षिणतो न्यस्य लक्ष्मीमुत्तरतस्तथा ।। 11.23 ।।

द्वार्य्युत्तरे गदां न्यस्य शङ्खं कोणेषु विन्यसेत् ।।
देवदक्षिणतः शार्ङ्गं वामे चैव सुधीर्न्यसेत् ।। 11.24 ।।

तद्वत्खङ्गं तथा चक्रं न्यसेत्पार्श्वद्वयोर्द्वयम् ।।

ततोऽन्तर्लोकपालांश्च स्वदिग्भेदेन विन्यसेत् ।। 11.25 ।।

वज्रादीन्यायुधान्येव तथैव विनिवेशयेत् ।।
ऊर्ध्वं ब्रह्म तथानन्तमधश्च परिचिन्तयेत् ।। 11.26 ।।

सर्वं ध्यात्वेति संपूज्य मुद्राः सन्दर्शयेत्ततः ।।
अञ्जलिः प्रथमा मुद्रा क्षिप्रं देवप्रसाधनी ।। 11.27 ।।

वन्दनी हृदयासक्तात्सार्द्धं दक्षिणतोन्नता ।।
ऊर्द्धाङ्गुष्ठो वाममुष्टिर्दक्षिणांगुष्ठबन्धनः ।। 11.28 ।।

सव्यस्य तस्य चांगुष्ठो यः स उद्धर्वः प्रकीर्त्तितः ।।
तिस्त्रः साधारणा ह्येता मूर्त्तिभेदेन कल्पिताः ।। 11.29 ।।

कनिष्ठादिप्रयोगेण अष्टौ मुद्रा यथाक्रमम् ।।
अष्टानां पूर्वबीजानां क्रमशस्त्ववधारयेत् ।। 11.30 ।।

अंगुष्ठेन कनिष्ठान्तं नामयित्वांगुलित्रयम् ।।
मुद्रेयं नरसिंहस्य न्युब्जं कृत्वा करद्वयम् ।। 11.31 ।।

सव्यहस्तं तथोत्तानं कृत्वोर्द्धं भ्रामयेच्छनैः ।।
नवमीयं स्मृता मुद्रा वराहाभिमता सदा ।। 11.32 ।।

मुष्टिद्वयमथोत्तानमृज्वेकैकेन मोचयेत् ।।
उत्कुञ्चये त्सर्वमुक्ता अंगमुद्रेयमुच्यते ।। 11.33 ।।

मुष्टिद्वयमथो बद्धा एवमेवानुपूर्वशः ।।
दशानां लोकपालानां मुद्राश्च क्रमयोगतः ।। 11.34 ।।

स्वरमाद्यं द्वितीयं च उपान्त्यञ्चान्त्यमेव च ।।
वासुदेवो बलः कामो ह्यनिरुद्धो यथाक्रमम् ।। 11.35 ।।

प्रणवस्तत्सदित्येतद् हुं क्षौं भूरिति मन्त्रकाः ।।
नारायणस्तथा ब्रह्मा विष्णुः सिंहो वराहराट् ।। 11.36 ।।

सितारुणहरिद्राभा नीलश्यामल्लोहिताः ।।
मेघाग्निमधुपिंगाभा वर्णतो नवनामकाः ।। 11.37 ।।

कं टं पं शं गरुत्मान्स्याज्जं खं वं च सुदर्शनम् ।।
षं चं फं षं गदादेवी वं लं मं क्षं च शंखकम् ।। 11.38 ।।

घँ ढँ भँ ङँ भवेच्छ्रीश्च गं जं वं शं च पुष्टिका ।।
घं वं च वनमाला स्याच्छ्री वत्सं दं सं भवेत् ।। 11.39 ।।

छं डं पं यं कौस्तुभः प्रोक्तश्चानन्तो ह्यहमेव च ।।
इत्यंगानियथायोगं देवदेवस्य वै दशा ।। 11.40 ।।

गरुडोऽम्बुजसंकाशो गदा चैवासिताकृतिः ।।
पुष्टिः शिरीषपुष्पाभा लक्ष्मीः काञ्चनसन्निभा ।। 11.41 ।।

पूर्णचन्द्रनिभः शंखः कौस्तुभस्त्वरुणद्युतिः ।।
चक्रं सूर्य्यसहस्त्राभं श्रीवत्सः कुन्दसन्निभः ।। 11.42 ।।

पञ्चवर्णनिभा माला ह्यनन्तो मेघसन्निभः ।।
विद्युद्रूपाणि चास्त्राणि यानि नोक्तानि वर्णतः ।। 11.43 ।।

अर्घ्यपाद्यादि वै दद्यात्पुण्डरीकाक्षविद्यया ।। 11.44 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नवव्यूहार्चनं नामैकादशोऽध्यायः ।। 11 ।।

**।।हरिरुवाच ।।**

पूजानुक्रमसिद्ध्यर्थं पूजानुक्रम उच्यते ।।
ॐ नम इत्यादौ संस्मृतिः परमात्मनः ।। 12.1 ।।

यं रं वं लमिति कायशुद्धिः ।।
ॐ नम इति चतुर्भुजात्मनिर्माणम् ।। 12.2 ।।

ततस्त्रिविधः करकायन्यासः ।
ततो हृदिस्थयोगपीठपूजा ।

ॐ अनन्ताय नमः ।
ॐ धर्माय नमः ।
ॐ ज्ञानाय नमः ।
ॐ वैराग्याय नमः ।
ॐ ऐश्वर्य्याय नमः ।
ॐ अधर्म्माय नमः ।
ॐ अज्ञानाय नमः ।
ॐ अवैराग्याय नमः ।
ॐ अनैश्वर्याय नमः ।
ॐ पद्माय नमः ।
ॐ आदित्यमण्डलाय नमः ।
ॐ चन्द्रमण्डलाय नमः ।
ॐ वह्निमण्डलाय नमः ।
ॐ विमलायै नमः ।
ॐ उत्कर्षिण्यै नमः ।
ॐ ज्ञानायै नमः ।
ॐ क्रियायै नमः ।
ॐ योगायै नमः ।
ॐ प्रह्व्यै नमः ।
ॐ सत्यायै नमः ।
ॐ ईशानायै नमः ।
ॐ सर्वतोमुख्यै नमः ।
ॐ संगोपांगाय हरेरासनाय नमः ।।

ततः कर्णिकायाम्-अं वासुदेवाय नमः ।
आं हृदयाय नमः ।
ईं शिरसे नमः ।
ऊं शिखायै नमः ।
ऐं कवचाय नमः ।

औं नेत्रत्रयाय नमः ।
अः फट् अस्त्राय नमः ।
आं सङ्कर्षणाय नमः ।
अं प्रद्युम्नाय नमः ।
अः अनिरुद्धाय नमः ।
ॐ अः नारायणाय नमः ।
ॐ तत्सद्ब्रह्मणे नमः ।
ॐ हुं विष्णवे नमः ।
क्षौं नरसिंहाय भूर्वराहय कं वैनतेयाय जं खं वं सुदर्शनाय खं चं फं षं गदायै वं लं मं क्षं पांचजन्याय घं ढं भं हं श्रियै गं डं वं शं पुष्ट्यै धं वं वनमालायै दं शं श्रीवत्साय छं डं यं कौस्तुभाय शं शार्गाय इं इषुधिभ्यां चं चर्मणे खं खड्गाय इन्द्राय सुराय पर्तये अग्नये तेजोधिपतयेयमायधर्माधिपतयेक्षंनैर्ऋतायरक्षोधिपतये वरुणाय जलाधिपतये यों वायवे प्राणाधिपतये धां धनदाय धनाधिपतये हां ईशानाय विद्याधिपतये ॐ वज्राय शक्त्यै ॐ दण्डाय खड्गाय ॐ पाशाय ध्वजाय गदायै त्रिशूलाय लं अनन्ताय पातालाधिपतये खं ब्रह्मणे सर्वलोकाधिपतये ॐ नमो भगवते वासुदेवाय नमः ।।

ॐ ॐ नमः ।
ॐ नं नमः ।
ॐ मों नमः ।
ॐ ॐ भं नमः ।
ॐ गं नमः ।
ॐ वं नमः ।
ॐ तें नमः ।
ॐ वां नमः ।
ॐ सुं नमः ।
ॐ दें नमः ।
ॐ वां नमः ।
ॐ यं नमः ।
ॐ ॐ नमः ।
ॐ नं नमः ।
ॐ मों नमः ।
ॐ नां नमः ।
ॐ रां नमः ।
ॐ णां नमः ।
ॐ यं नमः ।

ॐ नमो भगवते वांसुंदेवायं ॐ नमो नारायणाय नमः ।
ॐ पुरुषोत्तमाय नमः ।। 12.3 ।।

नमस्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।।
सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज ।। 12.4 ।।

होमकर्मणि चैतेषां स्वाहान्तमुपकल्पयेत् ।।
एवं जप्त्वा विधानेन शतमष्टोत्तरं तथा ।। 12.5 ।।

अर्घं दत्त्वा जितं तेन प्रणामं च पुनः पुनः ।।
ततोऽग्नावपि सम्पूज्यं तं यजेत यथाविधि ।। 12.6 ।।

देवदेवं स्वबीजेन अंगादिभिरथाच्युतम् ।।
पूर्वमुल्लिख्य चाभ्युक्ष्य प्रणवेन तु मन्त्रवित् ।। 12.7 ।।

भ्रामयित्वानलं कुंडे पूजयेच्च शुभैः फलैः ।।
पूर्वं तत्सकलं ध्यात्वा मण्डले मनसा न्यसेत् ।। 12.8 ।।

वासुदेवाख्यतत्त्वेन हुत्वा चाष्टोत्तरं शतम् ।।
संकर्षणादिबीजेन यजेत्षट्कं तथैव च ।। 12.9 ।।

त्रयं त्रयं तथांगानामेकैकान्दिक्पतींस्तथा ।।
पूर्णाहुतिं तथैवांते दद्यात्सम्यगुपस्थितः ।। 12.10 ।।

वागतीते परे तत्त्वे आत्मानं च लयं नयेत् ।।
उपविश्य पुनर्मुद्रां दर्शयित्वा नमेत्पुनः ।। 12.11 ।।

नित्यमेवंविधं होमं नैमित्तं द्विगुणं भवेत् ।।
गच्छगच्छ परं स्थानं यत्र देवो निरञ्जनः ।। 12.12 ।।

गच्छन्तु देवताः सर्वाः स्वस्थानस्थितिहेतवे ।।
सुदर्शनः श्रीहरिश्च अच्युतः स त्रिविक्रमः ।। 12.13 ।।

चतुर्भुजो वासुदेवः षष्ठः प्रद्युम्न एव च ।।
संकर्षणः पुरुषोऽथ नवव्यूहो दशात्मकः ।। 12.14 ।।

अनिरुद्धो द्वादशात्मा अथ ऊर्द्ध्वमनन्तकः ।।
एते एकादिभिश्चक्रैर्विज्ञेया लक्षिताः सुराः ।। 12.15 ।।

चक्रांकितैः पूजितः स्यान्द्गृहे रक्षेत्सदानवैः ।।
ॐ चक्राय स्वाहा, ॐ विचक्राय स्वाहा, ॐ सुचक्राय स्वाहा, ॐ महाचक्राय स्वाहा, ॐ महाचक्राय असुरान्तकृत् हुं फट् ॐ हुं सहस्त्रार हुं फट् ।। 12.16 ।।

द्वारकाचक्रपूजेयं गृहे रक्षाकरी शुभा ।। 12.17 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पूजानुक्रमनिरूपणं नाम द्वादशोऽध्यायः ।। 12 ।।

**।।हरिरुवाच ।।**

प्रवक्ष्याम्यधुना ह्येतद्वैष्णवं पंजरं शुभम् ।।
नमो नमस्ते गोविदं चक्रं गृह्य सुदर्शनम् ।। 13.1 ।।

प्राच्यां रक्षस्व मां विष्णो ! त्वामहं शरणं गतः ।।
गदां कौमोदकीं गृहण पद्मनाभ नमोऽस्त ते ।। 13.2 ।।

याम्यां रक्षस्व मां विष्णो ! त्वामहं शरणं गतः ।।
हलमादाय सौनन्दे नमस्ते पुरुषोत्तम ।। 13.3 ।।

प्रतीच्यां रक्ष मां विष्णो ! त्वामहं शरणं गतः ।।
मुसलं शातनं गृह्य पुण्डरीकाक्ष रक्ष माम् ।। 13.4 ।।

उत्तरस्यां जगन्नाथ ! भवन्तं शरणं गतः ।।
खड्गमादाय चर्म्माथ अस्त्रशास्त्रादिकं हरे ! ।। 13.5 ।।

नमस्ते रक्ष रक्षोघ्न ! ऐशान्यां शरणं गतः ।।
पांचजन्यं महाशंखमनुघोष्यं च पंकजम् ।। 13.6 ।।

प्रगृह्य रक्ष मां विष्णो आग्न्येय्यां रक्ष शूकर ।।
चन्द्रसूर्य्यं समागृह्य खड्गं चान्द्रमसं तथा ।। 13.7 ।।

नैर्ऋत्यां मां च रक्षस्व दिव्यमूर्त्ते नृकेशरिन् ।।
वैजयन्तीं स्मप्रगृह्य श्रीवत्सं कण्ठभूषणम् ।। 13.8 ।।

वायव्यां रक्ष मां देव हयग्रीव नमोऽस्तु ते ।।
वैनतेयं समारुह्य त्वंतरिक्षे जनार्दन ! ।। 13.9 ।।

मां रक्षस्वाजित सदा नमस्तेऽस्त्वपराजित ।।
विशालाक्षं समारुह्य रक्ष मां त्वं रसातले ।। 13.10 ।।

अकूपार नमस्तुभ्यं महामीन नमोऽस्तु ते ।।
करशीर्षाद्यंगुलेषु सत्य त्वं बाहुपंजरम् ।। 13.11 ।।

कृत्वा रक्षस्व मां विष्णो नमस्ते पुरुषोत्तम ।।
एतदुक्तं शंकराय वैष्णवं पंजरं महत् ।। 13.12 ।।

पुरा रक्षार्थमीशान्याः कात्यायन्या वृषध्वज ।।
नाशायामास सा येन चामरान्महिषासुरम् ।। 13.13 ।।

दानवं रक्तबीजं च अन्याँश्च सुरकण्टकान् ।।
एतज्जपन्नरो भक्त्या शत्रून्विजयते सदा ।। 13.14 ।।

इति श्रीगारुडे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुपंजरस्तोत्रं नाम त्रयोदशोऽध्यायः ।। 13 ।।

**।।हरिरुवाच ।।**

अथ योगं प्रवक्ष्यामि भुक्तिमुक्तिकरं परम् ।।
ध्यायिभिः प्रोच्यते ध्येयो ध्यानेन हरिरीश्वरः ।। 14.1 ।।

तच्छृणुष्व महेशान सर्वपापविनाशनम् ।।
विष्णुः सर्वेश्वरोऽनन्तः षड्भिर्भूपरिवर्जितः ।। 14.2 ।।

वासुदेवो जगन्नाथो ब्रह्मात्मास्म्यहमेव हि ।।
देहिदेहस्थितो नित्यः सर्वदेहविवर्जितः ।। 14.3 ।।

देहधर्म्मविहीनश्च क्षराक्षरविवर्जितः ।।
षड्विधेषु स्थितो द्रष्टा श्रोता घ्राता ह्यतीन्द्रियः ।। 14.4 ।।

तद्धर्म्मरहितः स्रष्टा नामगोत्रविवर्जितः ।।
मन्ता मनः स्थितो देवो मनसा परिवर्जितः ।। 14.5 ।।

मनोधर्म्मविहीनश्च विज्ञानं ज्ञानमेव च ।।
बोद्धा बुद्धिस्थितः साक्षी सर्वज्ञो बुद्धिवर्जितः ।। 14.6 ।।

बुद्धिधर्म्मविहीनश्च सर्वः सर्वगतो मनः ।।
सर्वप्राणिविनिर्मुक्तः प्राणधर्म्मविवर्जितः ।। 14.7 ।।

प्राणप्राणो महाशान्तो भयेन परिवर्जितः ।।
अहंकारादिहीनश्च तद्धर्म्मपरिवर्जितः ।। 14.8 ।।

तत्साक्षी तन्नियन्ता च परमानन्दरूपकः ।।
जाग्रत्स्वप्नसुषुप्तिस्थस्तत्साक्षी तद्विवर्जितः ।। 14.9 ।।

तुरीयः परमो धाता दृग्रूपो गुणवर्जितः ।।
मुक्तो बुद्धोऽजरो व्यापी सत्य आत्मास्म्यहं शिवः ।। 14.10 ।।

एवं ये मानवा विज्ञा ध्यायन्तीशं परं पदम् ।।
प्राप्नुयुस्ते च तद्रूपं नात्र कार्य्या विचारणा ।। 14.11 ।।

इति ध्यानं समाख्यातं तव शङ्कर सुव्रत ।।
पठेद्य एतत्सततं विष्णुलोकं स गच्छति ।। 14.12 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ध्यानयोगो नाम चतुर्दशोऽध्यायः ।। 14 ।।

**||रुद्र उवाच ||**

संसारसागराद्घोरान्मुच्यते किं जपन्प्रभो ||
नरस्तन्मे परं जप्यं कथय त्वं जनार्द्दन || 15.1 ||

**||हरिरुवाच ||**

परेश्वरं परं ब्रह्म परमात्मानमव्ययम् ||
विष्णुं नामसहस्त्रेण स्तुवन्मुक्तो भवेन्नरः || 15.2 ||

यत्पवित्रं परं जप्यं कथयामि वृषध्वज ! ||
श्रृणुष्वावहितो भूत्वा सर्वपापविनाशनम् || 15.3 ||

ॐ वासुदेवो महाविष्णुर्वामनो वासवो वसुः ||
बालचन्द्र निभो बालो बलभद्रो बलाधिपः || 15.4 ||

बलिबन्धनकृद्वेधा वरेण्यो वेदवित्किविः ||
वेदकर्त्ता वेदरूपो वेद्यो वेदपरिप्लुतः || 15.5 ||

वेदाङ्गवेत्ता वेदेशो बलाधारो बलार्दनः ||
अविकारो वरेशश्च वरुणो वरुणाधिपः || 15.6 ||

वीरहा च बृहद्वीरो वन्दितः परमेश्वरः ||
आत्मा च परमात्मा च प्रत्यगात्मा वियत्परः || 15.7 ||

पद्मनाभः पद्मनिधिः पद्महस्तो गदाधरः ||
परमः परभूतश्च पुरुषोत्तम ईश्वरः || 15.8 ||

पद्मजङ्घः पुण्डरीकः पद्ममालाधरः प्रियः ||
पद्माक्षः पद्मगर्भश्च पर्जन्यः पद्मसंस्थितः || 15.9 ||

अपारः परमार्थश्च पराणां च परः प्रभुः ||
पण्डितः पण्डितेड्यश्च पवित्रः पापमर्दकः || 15.10 ||

शुद्धः प्रकाशरूपश्च पवित्रः परिरक्षकः ||
पिपासावर्जितः पाद्यः पुरुषः प्रकृतिस्तथाः || 15.11 ||

प्रधानं पृथिवीपद्मं पद्मनाभः प्रियप्रदः ||
सर्वेशः सर्वगः सर्वः सर्ववित्सर्वदः सुरः || 15.12 ||

सर्वस्य जगतो धाम सर्वदर्शो च सर्वभृत् ||
सर्वानुग्रहकृद्देवः सर्वभूतहृदि स्थितः || 15.13 ||

सर्वपूज्यश्च सर्वाद्यः सर्वदेवनमस्कृतः ||

सर्वस्य जगतो मूलं सकलो निष्कलोऽनलः ।। 15.14 ।।

सर्वगोप्ता सर्वनिष्ठः सर्वकारणकारणम् ।।
सर्वध्येयः सर्वमित्रः सर्वदेस्ववरूपधृक् ।। 15.15 ।।

सर्वाध्यक्षः सुराऽध्यक्ष सुरासुरनमस्कृतः ।।
दुष्टानां च सुराणां च सर्वदा घातकोऽन्तकः ।। 15.16 ।।

सत्यपालश्च सन्नाभः सिद्धेशः सिद्धवन्दितः ।।
सिद्धसाध्यः सिद्धसिद्धः साध्यसिद्धो (सिद्धिसिद्ध) हृदीश्वरः ।। 15.17 ।।

शरणं जगतश्चैव श्रेयः क्षेमस्तथैव च ।।
शुभकृच्छोभनः सौम्यः सत्यः सत्यपराक्रमः ।। 15.18 ।।

सत्यस्थः सत्यसङ्कल्पः सत्यवित्सत्य (त्प) दस्तथ ।।
धर्मो धर्म्मी च कर्मी च सर्वकर्म्मविवर्जितः ।। 15.19 ।।

कर्म्मकर्त्ता च कर्मैव क्रिया कार्य्यं तथैव च ।।
श्रीपतिर्नृपतिः श्रीमान्सर्वस्य पतिरूर्जितः ।। 15.20 ।।

सदेवानां पतिश्चैव वृष्णीनां पतिरीडितः ।।
पतिर्हिरण्यगर्भस्य त्रिपुरान्तपतिस्तथा ।। 15.21 ।।

पशूनां च पतिः प्रायो वसूनां पतिरेव च ।।
पतिराखण्डलस्यैव वरूणस्य पतिस्तथा ।। 15.22 ।।

वनस्पतीनां च पतिरनिलस्य पतिस्तथा ।।
अनलस्य पतिश्चैव यमस्य पतिरेव च ।। 15.23 ।।

कुबेरस्य पतिश्चैव नक्षत्राणां पतिस्तथा ।।
ओषधीनां पतिश्चैव वृक्षाणां च पतिस्तथा ।। 15.24 ।।

नागानां पतिरर्कस्य दक्षस्य पतिरेव च ।।
सुहृदां च पतिश्चैव नृपाणां च पतिस्तथा ।। 15.25 ।।

गन्धर्वाणां पतिश्चैव असूनां पतिरुत्तमः ।।
पर्वतानां पतिश्चैव निम्नगानां पतिस्तथा ।। 15.26 ।।

सुराणां च पतिः श्रेष्ठः कपिलस्य पतिस्तथा ।।
लतानां च पतिश्चैव वीरुधां च पतिस्तथा ।। 15.27 ।।

मुनीनां च पतिश्चैव सूर्य्यस्य पतिरुत्तमः ।।

पतिश्चन्द्रमसः श्रेष्ठः सुक्रस्य पतिरेव च ।। 15.28 ।।

ग्रहाणां च पतिश्चैव राक्षसानां पतिस्तथा ।।
किन्नराणां पतिश्चैव द्विजानां पतिरुत्तमः ।। 15.29 ।।

सरितां च पतिश्चैव समुद्राणां पतिस्तथा ।।
सरसां च पतिश्चैव भूतानां च पतिस्तथा ।। 15.30 ।।

वेतालानां पतिश्चैव कूष्माण्डानां पतिस्तथा ।।
पक्षिणां च पतिः श्रेष्ठः पशूनां पतिरेव च ।। 15.31 ।।

महात्मा मंगलो मेयो मन्दरो मन्दरेश्वरः ।।
मेरुर्माता प्रमाणं च माधवो मलवर्जितः ।। 15.32 ।।

मालाधरो महादेवो महादेवेन पूजितः ।।
महाशान्तो महाभागो मधुसूदन एव च ।। 15.33 ।।

महावीर्य्यो महाप्राणो मार्कण्डेयर्षिवन्दितः ।।
मायात्मा मायया बद्धो मायया तु विवर्जितः ।। 15.34 ।।

मुनिस्तुतो मुनिर्मैत्रो महाना (रा) सो महाहनुः ।।
महाबाहुर्महादान्तो मरणेन विवर्जितः ।। 15.35 ।।

महावक्त्रो महात्मा च महाकायो महोदरः ।।
महापादो महाग्रीवो महामानी महामनाः ।। 15.36 ।।

महागतिर्महाकीर्त्तिर्महारूपो महासुरः ।।
मधुश्च माधवश्चैव महादेवो महेश्वरः ।। 15.37 ।।

मखेज्यो मखरूपी च माननीयो मखेश्वरः ।।
महावातो महाभागो महेशोऽतीतमानुषः ।। 15.38 ।।

मानवश्च मनुश्चैव मानवानां प्रियंकरः ।।
मृगश्च मृगपूज्यश्च मृगाणां च पतिस्तथा ।। 15.39 ।।

बुधस्य च पतिश्चैव पतिश्चैव बृहस्पतेः ।।
पतिः शनैश्चरस्यैव राहोः केतोः पतिस्तथा ।। 15.40 ।।

लक्ष्मणो लक्षणश्चैव लम्बौष्ठो ललितस्तथा ।।
नानालंकारसंयुक्तो नानाचन्दनचर्च्चितः ।। 15.41 ।।

नानारसोज्जवलद्वक्त्रो नानापुष्पोपशोभितः ।।

रामो रमापतिश्चैव सभार्य्यः परमेश्वरः ।। 15.42 ।।

रत्नदो रत्नहर्त्ता च रूपी रूपविवर्जितः ।।
महारूपोग्ररूपश्च सौम्यरूपस्तथैव च ।। 15.43 ।।

नीलमेघनिभः शुद्धः कालमेघनिभस्तथा ।।
धूमवर्णः पतिवर्णो नानारूपो ह्यवर्णकः ।। 15.44

विरूपो रूपदश्चैव शुक्लवर्णस्तथैव च ।।
सर्ववर्णो महायोगी यज्ञो (याज्यो) यज्ञकृदेव च ।। 15.45 ।।

सुवर्णवर्णवांश्चैव सुवर्णाख्यस्तथैव च सुवर्णावयवश्चैव सुवर्णः स्वर्णमेखलः ।। 15.46 ।।

सुवर्णस्य प्रदाता च सुवर्णांशस्तथैव च ।।
सुवर्णस्य प्रियश्चैव सुवर्णाढ्यस्तथैव च ।। 15.47 ।।

सुपर्णी च महापर्णो सुपर्णस्य च कारण् ।।
वैनतेयस्तथादित्य आदिरादिकरः शिवः ।। 15.48 ।।

कारणं महतश्चैव प्रधानस्य च कारणम् ।।
बुद्धीनां कारणं चैव कारणं मनसस्तथा ।। 15.49 ।।

कारणं चैतसश्चैव अहंकारस्य कारणम् ।।
भूतानां कारणं तद्वत्कारणं च विभावसोः ।। 15.50 ।।

आकाशकारणं तद्वत्पृथिव्याः कारणं परम् ।।
अण्डस्य कारणं चैव प्रकृतेः कारणं तथा ।। 15.51 ।।

देहस्य कारणं चैव चक्षुषश्चैव कारणम् ।।
श्रोत्रस्य कारणं तद्वत्कारणं च त्वचस्तथा ।। 15.52 ।।

जिह्वायाः कारणं चैव प्राणस्यैव च कारणम् ।।
हस्तयोः कारणं तद्वत्पादयोः कारणं तथा ।। 15.53 ।।

वाचश्चकारणं तद्वत्पायोश्चैव तु कारणम् ।।
इन्द्रस्य कारणं चैव कुबेरस्य च कारणम् ।। 15.54 ।।

यमस्य कारणं चैव ईशानस्य च कारणम् ।।
यक्षाणां कारणं चैव रक्षसां कारणं परम् ।। 15.55 ।।

नृपाणां कारणं श्रेष्ठं धर्म्मस्यैव तु कारणम् ।।
जन्तूनां कारणं चैव वसूनां कारणं परम् ।। 15.56 ।।

मनूनां कारणं चैव पक्षिणां कारणं परम् ।।
मुनीनां कारणं श्रेष्ठ योगिनां कारणं परम् ।। 15.57 ।।

सिद्धानां कारणं चैव यक्षाणां कारणं परम् ।।
कारणं किन्नराणां च गन्धर्वाणां च कारणम् ।। 15.58 ।।

नदानां कारणं चैव नदीनां कारणं परम् ।।
कारणं च समुद्राणां वृक्षाणां कारणं तथा ।। 15.59 ।।

कारणं वीरुधां चैव लोकानां कारणं तथा ।।
पाताल कारणं चैव देवानां कारणं तथा ।। 15.60 ।।

सर्पाणां कारणं चैव श्रेयसां कारणं तथा ।।
पशूनां कारणं चैव सर्वेषां कारणं तथा ।। 15.61 ।।

देहात्मा चेन्द्रियात्मा च आत्मा बुद्धिस्तथैव च ।।
मनसश्च तथैवात्मा चात्माहंकारचेतसः ।। 15.62 ।।

जाग्रतः स्वपतश्चात्मा महदात्मा परस्तथा ।।
प्रधानस्य परात्मा च आकाशात्मा ह्यपां तथा ।। 15.63 ।।

पृथिव्याः परमात्मा च रसस्यात्मा तथैव च ।।
गन्धस्य परमात्मा च रूपस्यात्मा परस्तथा ।। 15.64 ।।

शब्दात्मा चैव वागात्मा स्पर्शात्मा पुरुषस्तथा ।।
श्रोत्रात्मा च त्वगात्मा च जिह्वायाः परमस्तथा ।। 15.65 ।।

घ्राणात्मा चैव हस्तात्मा पादात्मा परमस्तथा ।।
उपस्थस्य तथैवात्मा पाय्वात्मा परमस्तथा ।। 15.66 ।।

इन्द्रात्मा चैव ब्रह्मात्मा रुद्रा(शान्ता)त्मा च मनोस्तथा ।।
दक्षप्रजापतेरात्मा सत्या (स्त्रष्टा)त्मा परमस्तथा ।। 15.67 ।।

ईशात्मा परमात्मा च रौद्रात्मा मोक्षविद्यतिः ।।
यत्नवांश्च तथा यत्नश्चर्म्मो खड्गीसुरान्तकः ।। 15.68 ।।

ह्रीप्रवर्त्तनशीलश्च यतीनां च हिते रतः ।।
यतिरूपी च योगी च योगिध्येयो हरिः शितिः ।। 15.69 ।।

संविन्मेधा च कालश्च उष्मा वर्षा म(न) तिस्तथा ।।
संवत्सरो मोक्षकरो मोहप्रध्वंसकस्तथा ।। 15.70 ।।

मोहकर्त्ता च दुष्टानां माण्डव्यो वडवामुखः ।।
संवर्त्तकः कालकर्त्ता च गौतमो भृगुरंगिराः ।। 15.71 ।।

अत्रिर्वसिष्ठः पुलहः पुलस्त्यः कुत्स एव च ।
याज्ञवल्क्यो देवलश्च व्यासश्चैव पराशरः ।। 15.72 ।।

शर्म्मदश्चैव गांगेयो हृषीकेशो बृहच्छ्रवाः ।।
केशवः क्लेशहन्ता च सुकर्णः कर्णवर्जितः ।। 15.73 ।।

नारायणो महाभागः प्राणस्य पतिरेव च ।।
अपानस्य पतिश्चैव व्यानस्य पतिरेव च ।। 15.74 ।।

उदानस्य पतिः श्रेष्ठः समानस्य पतिस्तथा ।।
शब्दस्य च पतिः श्रेष्ठः स्पर्शस्य पतिरेव च ।। 15.75 ।।

रूपाणां च पतिश्चाद्यः खङ्गपाणिर्हलायुधः ।।
चक्रपाणिः कुण्डली च श्रीवत्सांकस्तथैव च ।। 15.76 ।।

प्रकृतिः कौस्तुभग्रीवः पीताम्बरधरस्तथा ।।
सुमुखो दुर्मुखश्चैव नखेन तु विवर्जितः ।। 15.77 ।।

अनन्तोऽनन्तरूपश्च सुनखः सुरसुन्दरः ।।
सुकलापो विभुर्जिष्णुर्भ्राजिष्णुश्चैषुधीस्तथा ।। 15.78 ।।

हिरण्यकशिपोर्हन्ता हिरण्याक्षविमर्दकः ।।
निहन्ता पूतनायाश्च भास्करान्तविनाशनः ।। 15.79 ।।

केशिनो दलनश्चैव मुष्टिकस्य विमर्दकः ।।
कंसदानवभेत्ता च चाणूरस्य प्रमर्दकः ।। 15.80 ।।

अरिष्टस्य निहंता च अक्रूरप्रिय एव च ।।
अक्रूरः क्रूररूपश्च अक्रूरप्रियवन्दितः ।। 15.81 ।।

भगहा भगवान् भानुस्तथा भागवतः स्वयम् ।।
उद्धवश्चोद्धवस्येशो ह्युद्धेवन विचिन्तितः ।। 15.82 ।।

चक्रधृक् चञ्चलश्चैव चलाचलविवर्जितः ।।
अहं कारोपमाश्चित्तं गगनं पृथिवी जलम् ।। 15.83 ।।

वायुश्चक्षुस्तथा श्रोत्रं जिह्वा च घ्राणमेव च ।।
वाक्पाणिपादजवनः पायूपस्थस्तथैव च ।। 15.84 ।।

शंकरश्चैव सर्वश्च क्षान्तिदः क्षान्तिकृन्नरः ।।
भक्तप्रियस्तता भर्त्ता भक्तिमान् भक्तिवर्द्धनः ।। 15.85 ।।

भक्तस्तुतो भक्तपरः कीर्त्तिदः कीर्त्तिवर्द्धनः ।।
कीर्त्तिर्दीप्तिः क्षमाकांतिर्भक्तश्चैव दया परा ।। 15.86 ।।

दानं दाता च कर्त्ता च देवदेवप्रियः शुचिः ।।
शुचिमान्सुखदो मोक्षः कामश्चार्थः सहस्त्रपात् ।। 15.87 ।।

सहस्त्रशीर्षा वैद्यश्च मोक्षद्वारं तथैव च ।।
प्रजाद्वारं सहस्त्राक्षः सहस्त्रकर एव च ।। 15.88 ।।

शुक्रश्च सुकिरीटी च सुग्रीवः कौस्तुभस्तथा ।।
प्रद्युम्नश्चानिरुद्धश्च हयग्रीवश्च शूकरः ।। 15.89 ।।

मत्स्यः परशुरामश्च प्रह्लादो बलिरेवच ।।
शरण्यश्चैव नित्यश्च बुद्धो मुक्तः शरीरभृत् ।। 15.90 ।।

खरदूषणहन्ता च रावणस्य प्रमर्दनः ।।
सीतापतिश्च वर्द्धिष्णुर्भरतश्च तथैव च ।। 15.91 ।।

कुम्भेंद्रजिन्निहन्ता च कुम्भकर्णप्रमर्दनः ।।
नरांतकांतकश्चैव देवांतकविनाशनः ।। 15.92 ।।

दुष्टासुरनिहंता च शम्बरारिस्तथैव च ।।
नरकस्य निहन्ता च त्रिशीर्षस्य विनाशनः ।। 15.93 ।।

यमलार्जनभेत्ता च तपोहितकरस्तथा ।।
वादित्रं चैव वाद्यं च बुद्धश्चैव वरप्रदः ।। 15.94 ।।

सारः सारप्रियः सौरः कालहन्तानिकृन्तनः ।।
अगस्त्यो देवलश्चैव नारदो नारदप्रियः ।। 15.95 ।।

प्राणोऽपानस्तथा व्यानो रजः सत्त्वं तमः शरत् ।।
उदानश्च समानश्च भेषजं च भिषक् तथा ।। 15.96 ।।

कूटस्थः स्वच्छरूपश्च सर्वदेहविवर्जितः ।।
चक्षुरिन्द्रियहीनश्च वागिंद्रियविवर्जितः ।। 15.97 ।।

हस्तेंद्रियविहीनश्च पादाभ्यां च विवर्जितः ।।
पायूपस्थविहीनश्च महातपविवर्जितः ।। 15.98 ।।

प्रबोधेन विहीनश्च बुद्ध्या चैव विवर्जितः ।।
चेतसा विगतश्चैव प्राणेन च विवर्जितः ।। 15.99 ।।

अपानेन विहीनश्च व्यानेन च विवर्जितः ।।
उदानेन विहीनश्च समानेन विवर्जितः ।। 15.100 ।।

आकाशेन विहीनश्च वायुना परिवर्जितः ।।
अग्निना च विहीनश्च उदकेन विवर्जितः ।। 15.101 ।।

पृथिव्या च विहीनश्च शब्देन च विवर्जितः ।।
स्पर्शेन च विहीनश्च सर्वरूपविवर्जितः ।। 15.102 ।।

रागेण विगतश्चैव अघेन परिवर्जितः ।।
शोकेन रहितश्चैव वचसा परिवर्जितः ।। 15.103 ।।

रजो विवर्जितश्चैव विकारैः षड्भिरेव च ।।
कामेन वर्जितश्चैव क्रोधेन परिवर्जितः ।। 15.104 ।।

लोभेन विगतश्चैव दम्भेन च विवर्जितः ।।
सूक्ष्मश्चैव सुसूक्ष्मश्च स्थूलात्स्थूलतरस्तथा ।। 15.105 ।।

विशारदो बलाध्यक्षः सर्वस्य क्षोभकस्तथा ।।
प्रकृतेः क्षोभकश्चैव महतः क्षोभकस्तथा ।। 15.106 ।।

भूतानां क्षोभकश्चैव बुद्धेश्च क्षोमकस्तथा ।।
इन्द्रियाणां क्षोभकश्च विषयक्षोभकस्तथा ।। 15.107 ।।

ब्रह्मणः क्षोभकश्चैव रुद्रस्य क्षोभकस्तथा ।।
अगम्यश्चक्षुरादेश्च श्रोत्रागम्यस्तथैव च ।। 15.108 ।।

त्वचा न गम्यः कूर्म्मश्च जिह्वाऽग्राह्यस्तथैव च ।।
घ्राणोन्द्रियागम्य एव वाचाऽग्राह्यस्तथैव च ।। 15.109 ।।

अगम्यश्चैव पाणिभ्यां पदागम्यस्तथैव च ।।
अग्राह्यो मनसश्चैव बुद्ध्याऽग्राह्यो हरिस्तथा ।। 15.110 ।।

अहं बुद्ध्या तथा ग्राह्यश्चेतसा ग्राह्या एव च ।।
शंखपाणिश्चाव्ययश्च गदापाणिस्तथैव च ।। 15.111 ।।

शार्ङ्गपाणिश्च कृष्णश्च ज्ञानमूर्त्तिः परन्तपः ।।
तपस्वी ज्ञानगम्यो हि ज्ञानी ज्ञानविदेव च ।। 15.112 ।।

ज्ञेयश्च ज्ञेयहीनश्च ज्ञप्तिश्चैतन्यरूपकः ।।
भावो भाव्यो भवकरो भावनो भवनाशनः ।। 15.113 ।।

गोविन्दो गोपतिर्गोपः सर्वगोपीसुखप्रदः ।।
गोपालो गोगतिश्चैव गोमतिर्गोधरस्तथा ।। 15.114 ।।

उपेन्द्रश्च नृसिंहश्च शौरिश्चैव जनार्दनः ।।
आरणेयो बृहद्भानुर्बृहद्दीप्तिस्तथैव च ।। 15.115 ।।

दामोदरस्त्रिकालश्च कालज्ञः कालवर्जितः ।।
त्रिसन्ध्यो द्वापरं त्रेता प्रजाद्वारं त्रिविक्रमः ।। 15.116 ।।

विक्रमो दण्ड(र) हस्तश्च ह्येकदण्डी त्रिदण्डधृक् ।।
सामभेदस्तथोपायः सामरूपी च सामगः ।। 15.117 ।।

सामवेदोः ह्यथर्वश्च सुकृतः सुतरूपणः ।।
अथर्ववेदविच्चैव ह्यथर्वाचार्य्य एव च ।। 15.118 ।।

ऋग्रूपी चैव ऋग्वेद ऋग्वेदेषु प्रतिष्ठितः ।।
यजुर्वेत्ता यजुर्वेदो यजुर्वेदविदेकपात् ।। 15.119 ।।

बहुपाच्च सुपाच्चैव तथैव च सहस्त्रपात् ।।
चतुष्पाच्च द्विपाच्चैव स्मृतिर्न्यायो यमो बली ।। 15.120 ।।

सन्न्यासी चैव सन्नयासश्चतुराश्रम एव च ।।
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।। 15.121 ।।

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वर्णस्तथैव च ।।
शीलदः शीलसम्पन्नो दुः शीलपरिवर्जितः ।। 15.122 ।।

मोक्षोऽध्यात्मसमाविष्टः स्तुतिः स्तोता च पूजकः ।।
पूज्यो वाक् करणं चैव वाच्यं चैव तु वाचकः ।। 15.123 ।।

वेत्ता व्याकरणं चैव वाक्यं चैव च वाक्यवित् ।।
वाक्यगम्यस्तीर्थवासी तीर्थस्तीर्थो च तीर्थवित् ।। 15.124 ।।

तीर्थादिभूतः सांख्यश्च निरुक्तं त्वधिदैवतम् ।।
प्रणवः प्रणवेशश्च प्रणवेन प्रवन्दितः ।। 15.125 ।।

प्रणवेन च लक्ष्यो वै गायत्री च गदाधरः ।।
शालग्रामनिवासी च शालग्रामस्तथैव च ।। 15.126 ।।

जलशायी योगशायी शेषशायी कुशेशयः ।।
महीभर्त्ता च कार्य्यं च कारणं पृथिवीधरः ।। 15.127 ।।

प्रजापतिः शाश्वतश्च काम्यः कामयिता विराट् ।।
सम्राट् पूषा तथा स्वर्गो रथस्थः सारथिर्बलम् ।। 15.128 ।।

धनी धनप्रदो धन्यो यादवानां हिते रतः ।।
अर्जुनस्य प्रियश्चैव ह्यर्जुनो भीम एव च ।। 15.129 ।।

पराक्रमो दुर्विषहः सर्वशास्त्रविशारदः ।।
सारस्वतो महाभीष्मः पारिजातहरस्तथा ।। 15.130 ।।

अमृतस्य प्रदाता च क्षीरोदः क्षीरमेव च ।।
इन्द्रात्मजस्तस्य गोप्ता गोवर्द्धनधरस्तथा ।। 15.131 ।।

कंसस्य नाशनस्तद्वद्धस्तिपो हस्तिनाशनः ।।
शिपिविष्टः प्रसन्नश्च सर्वलोकार्त्तिनाशनः ।। 15.132 ।।

मुद्रो मुद्रा करश्चैव सर्वमुद्राविवर्जितः ।।
देही देहस्थितश्चैव देहस्य च नियामकः ।। 15.133 ।।

श्रोत्रा श्रोत्रनियन्ता च श्रोतव्यः श्रवणं तथा ।।
त्वक्स्थितश्च स्पर्शयित्वा स्पृश्यं च स्पर्शनं तथा ।। 15.134 ।।

रूपद्रष्टा च चक्षुः स्थो नियन्ता चक्षुषस्तथा ।।
दृश्यं चैवतु जिह्वास्थो रसज्ञश्च नियामकः ।। 15.135 ।।

घ्राणस्थो घ्राणकृद् घ्राता घ्राणेन्द्रियनियामकः ।।
वाक्स्थो वक्ता च वक्तव्यो वचनं वाङ्नियामकः ।। 15.136 ।।

प्राणिस्थः शिल्प कृच्छिल्पो हस्तयोश्च नियामकः ।।
पदव्यश्चैव गन्ता च गन्तव्यं गमनं तथा ।। 15.137 ।।

नियन्ता पादयोश्चैव पाद्यभाक्च विसर्गकृत् ।।
विसर्गस्य नियन्ता च ह्युपस्थस्थः सुखं तथा ।। 15.138 ।।

उपस्थस्य नियंता च तदानन्दकरश्च ह ।।
शत्रुघ्नः कार्त्तवीर्य्यश्च दत्तात्रेयस्तथैव च ।। 15.139 ।।

अलर्कस्य हितश्चैव कार्त्तवीर्य्यनिकृन्तनः ।।
कालनेमिर्महानेमिर्मेघो मेघपतिस्तथा ।। 15.140 ।।

अन्नप्रदोऽन्नरूपी च ह्यन्नादोऽन्नप्रवर्तकः ।।
धूमकृद्धूमरूपश्च देवकीपुत्र उत्तमः ।। 15.141 ।।

देवक्यानन्दनो नन्दो रोहिण्याः प्रिय एव च ।।
वसुदेवप्रियश्चैव वसुदेवसुतस्तथा ।। 15.142 ।।

दुन्दुभिर्हासरूपश्च पुष्पहासस्तथैव च ।।
अट्टहासप्रियश्चैव सर्वाध्यक्षः क्षरोऽक्षरः ।। 15.143 ।।

अच्युतश्चैव सत्येशः सत्यायाश्च प्रियो वरः ।।
रुक्मिण्याश्च पतिश्चैव रुक्मिण्या वल्लभस्तथा ।। 15.144 ।।

गोपीनां वल्लभश्चैव पुण्यश्लोकश्च विश्रुतः ।।
वृषाकपिर्यमो गुह्यो मङ्गलश्च बुधस्तथा ।। 15.145 ।।

राहुः केतुर्ग्रहो ग्राहो गजेन्द्रमुखमेलकः ।।
ग्राहस्य विनिहन्ता च ग्रामणी रक्षकस्तथा ।। 15.146 ।।

किन्नरश्चैव सिद्धश्च छन्दः स्वच्छन्द एव च ।।
विश्वरूपो विशालाक्षो दैत्यसूदन एव च ।। 15.147 ।।

अनन्तरूपो भूतस्थो देवदानवसंस्थितः ।।
सुषुप्तिस्थः सुषुप्तिश्च स्थानं स्थानान्त एव च ।। 15.148 ।।

जगत्स्थश्चैव जागर्त्ता स्थानं जागरितं तथा ।।
स्वप्रस्थः स्वप्रवित्स्वप्नस्थानं स्वप्नस्तथैव च ।। 15.149 ।।

जाग्रत्स्वप्नसुषुप्तैश्च विहीनो वै चतुर्थकः ।।
विज्ञानं वेद्यरूपं च जीवो जीवयिता तथा ।। 15.150 ।।

भुवनाधिपतिश्चैव भुवनानां नियामकः ।।
पातालवासी पातालं सर्वज्वरविनाशनः ।। 15.151 ।।

परमानन्दरूपी च धर्म्माणां च प्रवर्त्तकः ।।
सुलभो दुर्लभश्चैव प्राणायामपरस्तथा ।। 15.152 ।।

प्रत्याहारो धारकश्च प्रत्याहारकरस्तथा ।।
प्रभा कान्तिस्तथा ह्यर्च्चिः शुद्धस्फटिकसन्निभः ।। 15.153 ।।

अग्राहश्चैव गौरश्च सर्वः शुचिरभिष्टुतः ।।
वषट्कारो वषड् वौषट् स्वधा स्वाहा रतिस्तथा ।। 15.154 ।।

पक्ता नन्दयिता भोक्ता बोद्धा भावयिता तथा ।।
ज्ञानात्मा चैव देहात्मा भू(उ) मा सर्वेश्वरेश्वरः ।। 15.155 ।।

नदी नन्दी च नन्दीशो भारतस्तरुनाशनः ।।
चक्रपः श्रीपतिश्चैव नृपाणां चक्रवर्त्तिनाम् ।। 15.156 ।।

ईशश्च सर्वदेवानां द्वारकासंस्थितस्तथा ।।
पुष्करः पुष्कराध्यक्षः पुष्करद्वीप एव च ।। 15.157 ।।

भरतो जनको जन्यः सर्वाकारवि वर्जितः ।।
निराकारो निर्निमित्तो निरातंको निराश्रयः ।। 15.158 ।।

इति नामसहस्त्रं ते वृषभध्वज कीर्त्तितम् ।।
देवस्य विष्णोरीशस्य सर्वपापविनाशनम् ।। 15.159 ।।

पठन्द्विजश्च विष्णुत्वं क्षत्रियो जयमाप्नुयात् ।।
वैश्यो धनं सुखं शूद्रो विष्णुभक्तिसमन्वितः ।। 15.160 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्रीविष्णुसहस्त्रनामस्तोत्रनिरूपणं नाम पंचदशोऽध्यायः ।। 15 ।।

**।।रुद्र उवाच ।।**

पुनर्ध्यानं समाचक्ष्व शंखचक्रगदाधर ।।
विष्णोरीशस्य देवस्य शुद्धस्य परमात्मनः ।। 16.1 ।।

**हरिरुवाच ।।**

श्रृणु रुद्र ! हरेर्ध्यानं संसारतरुनाशनम् ।।
दृशिरूपमनन्तं च सर्वव्याप्यजमव्ययम् ।। 16.2 ।।

अक्षरं सर्वगं नित्यं महद्ब्रह्मास्ति केवलम् ।।
सर्वस्य जगतो मूलं सर्वगं परमेशवरम् ।। 16.3 ।।

सर्वभूतहृदिस्थं वै सर्वभूतमहेश्वरम् ।।
सर्वाधारं निराधारं सर्वकारणकारणम् ।। 16.4 ।।

अलेपकं तथा मुक्तं मुक्तयोगिविचिन्तितम् ।।
स्थूलदेहविहीनं च चक्षुषा परिवर्जितम् ।। 16.5 ।।

वागिन्द्रियविहीनं च प्राणिधर्म्मविवर्जितम् ।।
प्राणेद्रियविहीनं च वाग्धर्मपरिवर्जितम् ।।
पायूपस्थविहीनं च सर्वैन्द्रिय विवर्जितम् ।। 16.6 ।।

मनोविरहितं तद्वन्मनोधर्म्मविवर्जितम् ।।
बुद्ध्या विहीनं देवेशं चेतसा परिवर्जितम् ।। 16.7 ।।

अहंकारविहीनं वै बुद्धिधर्म्मविवर्जितम् ।।
प्राणेन रहितं चैव हयपानेन विवर्जितम् ।। 16.8 ।।

व्यानाख्यवायुहीनं वै प्राणधर्म्मविवर्जितम् ।।

**हरिरुवाच ।।**

पुनः सूर्य्यर्च्चनं वक्ष्ये यदुक्तं भृगवे पुरा ।। 16.9 ।।

ॐ खखोल्काय नमः ।।
सूर्य्यस्य मूलमन्त्रोऽयं भुक्तिमुक्तिप्रदायकः ।। 16.10 ।।

ॐ खखोल्काय त्रिदशाय नमः ।।
ॐ विचि ठठ शिरसे नमः ।।

ॐ ज्ञानिने ठठ शिखायै नमः ।।
ॐ सहस्रश्मये ठठ कवचाय नमः ।। 16.11 ।।

ॐ सर्वतेजोऽधिपतये ठठ अस्त्राय नमः ।।

ॐ ज्वलज्वल प्रज्वलप्रज्वल ठठ नमः ।। 16.12 ।।

अग्निप्राकारमन्त्रोऽयं सूर्य्यस्याघविनाशनः ।।
ॐ आदित्याय विद्महे, विश्वभा वाय धीमहि, तन्नः सूर्य्य प्रचोदयात् ।। 16.13 ।।

सकलीकरणं कुर्य्याद्गायत्र्या भास्करस्य च ।।
धर्म्मात्मने च पूर्वस्मिन्यमा येति च दक्षिणे ।। 16.14 ।।

दण्डनायकाय ततो दैवतायेति चोत्तरे ।।
श्यामपिंगलमैशान्यामाग्नेय्यां दीक्षितं यजेत् ।। 16.15 ।।

वज्रपाणिं च नैर्ऋत्यां भूर्भुवःस्वश्च वायवे ।।
ॐ चन्द्राय नक्षत्राधिपतये नमः ।।
ॐ अंगारकाय क्षितिसुताय नमः ।।
ॐ बुधाय सोमसुताय नमः ।।
ॐ वागीश्वराय सर्वविद्याधिपतये नमः ।।
ॐ शुक्राय महर्षये भृगुसुताय नमः ।।
ॐ शनैश्चराय सूर्य्यात्मजाय नमः ।।

ॐ राहवे नमः ।।
ॐ केतवे नमः ।। 16.16 ।।

पूर्वादीशानपर्य्यन्ता एते पूज्या वृषध्वज ।।
ॐ अनूकाय नमः ।।
ॐ प्रथमनाथाय नमः ।।
ॐ बुद्धाय नमः ।। 16.17 ।।

ॐ भगवन्नपरिमितमयूखमालिन् ! सकलजगत्पते ! सप्ताश्ववाहन ! चतुर्भुज ! परमसिद्धिप्रद ! विस्फुलिंगपिंगल ! तत एह्येहि इदमर्घ्यं मम शिरसि गतं गृहणगृहण तेजोग्ररूपम् अनग्न ! ज्वलज्वल ठठ नमः ।। 16.18 ।।

अनेनावाहय मन्त्रेण ततः सूर्य्यं विसर्जयेत् ।।
ॐ नमो भगवते आदित्याय सहस्त्र किरणाय गच्छ सुखं पुनरागमनायेति ।। 16.19 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे हरिध्यानसूर्यार्चनयोर्निरूपणं नाम षोडशोऽध्यायः ।। 16 ।।

**।।हरिरुवाच ।।**

पुनः सूर्य्यार्चनं वक्ष्ये यदुक्तं धनदाय हि ।।
अष्टपत्रं लिखेत्पद्मं शुचौ देशे सकर्णिकम् ।। 17.1 ।।

आवाहनीं ततो बद्धा मुद्रामावाहयेद्धरिम् ।।
खखोल्कं स्थाप्य मुद्रां तु स्थापयेन्मन्त्ररूपिणीम् ।। 17.2 ।।

आग्नेय्यां दिशि देवस्य हृदयं स्थापयेच्छिव ! ।।
ऐशान्यां तु शिरः स्थाप्यं नैर्ऋत्यां विन्यसेच्छिखाम् ।। 17.3 ।।

पौरन्दर्य्यां न्यसेद्धर्म्ममेकाग्रस्थितमानसः ।।
वायव्यां चैव नेत्रं तु वारुण्यामस्त्रमेव च ।। 17.4 ।।

ऐशान्यां स्थापयेत्सोमं पौरन्दर्य्यां तु लोहितम् ।।
आग्नेय्यां सोमतनयं याम्यां चैव बृहस्पतिम् ।। 17.5 ।।

नैर्ऋत्यां दानवगुरुं वारुण्यां तु शनैश्चरम् ।।
वायव्यां च तथा केतुं कौबेर्य्यां राहुमेव च ।। 17.6 ।।

द्वितीयायां तु कक्षायां सूर्य्यान्द्वादश पूजयेत् ।।
भगः सूर्य्योऽर्य्यमा चैव मित्रो वै वरुणस्तथा ।। 17.7 ।।

सविता चैव धाता च विवस्वांश्च महाबलः ।।
त्वष्टा पूषा तथा चेन्द्रो द्वादशो विष्णुरुच्यते ।। 17.8 ।।

पूर्वादावर्चयेद्देवानिन्द्रादीञ्छ्रद्धया नरः ।
जया च विजया चैव जयन्ति चापराजिता ।।
शेषश्च वासुकिश्चैव नागानित्यादि पूजयेत् ।। 17.9 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सूर्यार्चन विधिर्नाम सप्तदशोऽध्यायः ।। 17 ।।

**।।सूत उवाच ।।**

गरुडोक्तं कश्यपाय वक्ष्ये मृत्युञ्जयार्चनम् ।।
उद्धारपूर्वकं पुण्यं सर्वदेवमयं मतम् ।। 18.1 ।।

ओङ्कारं पूर्वमुद्धृत्य जु(हु)ङ्काँरं तदनन्तरम् ।।
सविसर्गं तृतीयं स्यान्मृत्युदारिद्र्यमर्दनम् ।। 18.2 ।।

ईशविष्णवर्कदेव्यादिकवचं सर्वसाधकम् ।।
अमृतेशं महामन्त्रंत्र्यक्षरं पूजनं समम् ।।
जपनान्मृत्युहीनाः स्युः सर्वपापविवर्जिताः ।। 18.3 ।।

शतजप्याद्वेदफलं यज्ञतीर्थफलं लभेत् ।।
अष्टोत्तरशताज्जाप्यात्रिसन्ध्यं मृत्यु शत्रुजित ।। 18.4 ।।

ध्यायेच्च सितपद्मस्थं वरदं चाभयं करे ।।
द्वाभ्यां चामृतकुम्भं तु चिन्तयेदमृतेश्वरम् ।। 18.5 ।।

तस्यैवांगगतां देवीममृतामृतभाषिणी(विनि) म् ।।
कलशं दक्षिणे हस्ते वामहस्ते सरोरुहम् ।। 18.6 ।।

जपेदष्टसहस्त्रं वै त्रिसन्ध्यं मासमेकतः ।।
जरामृत्युमहाव्याधिशत्रुच्छिवशान्तिदम् ।। 18.7 ।।

आह्वानं स्थापनं रोधं सन्निधानं निवेशनम् ।।
पाद्यमा चमनं स्नानमर्घ्यं स्त्रगनुलेपनम् ।। 18.8 ।।

दीपांबरं भूषणं च नैवद्यं पानवीजनम् ।।
मात्रामुद्राजपध्यानं दक्षिणा चाहुतिः स्तुतिः ।। 18.9 ।।

वाद्यं गतिं च नृत्यं च न्यासयोगं प्रदक्षिणम् ।।
प्रणतिर्मन्त्रशय्या च वन्दनं च विसर्जनम् ।। 18.10 ।।

षडंगादिप्रकारेण पूजनं तु क्रमोदितम् ।।
परमेशमुखोद्गीतं यो जानाति स पूजकः ।। 18.11 ।।

अर्घ्यपात्रार्चनं चादौवस्त्रेणैव तु ताडनम् ।।
शोधनं कवचेनैव अमृतीकरणं ततः ।। 18.12 ।।

पूजा चाधारशक्त्यादेः प्राणायामं तथासने ।।
पीठशुद्धिं ततः कुर्य्याच्छोषणाद्यैस्ततः स्मरेत् ।। 18.13 ।।

आत्मानं देवरूपं च करांगन्यासकं चरेत् ।।

आत्मानं पूजयेत्पश्चाज्यो तीरूपं हृदब्जतः ।। 18.14 ।।

मूर्त्तौ वा स्थण्डिले वापि क्षिपेत्पुष्पं तु भास्वरम् ।।
आह्वानद्वारपूजार्थं पूजा चाधारशक्तितः ।। 18.15 ।।

सान्निध्यकरणं देवे परिवारस्य पूजनम् ।।
अंगषट्कस्य पूजा वै कर्त्तव्या च विपश्चितैः ।। 18.16 ।।

धर्मादयश्च शक्राद्याः सायुधाः परिवारकाः ।।
युगवेदमुहूर्त्ताश्च पूजेयं भुक्तिमुक्तिकृत् ।। 18.17 ।।

मातृकाश्च गणांश्चादौ नन्दिगङ्गे च पूजयेत् ।।
महाकालं च यमनां देहल्यां पूजयेत्पुरा ।। 18.18 ।।

ॐ अमृतेश्वर ॐ भैरवाय नमः ।।
एवं ॐ जुं हंसः सूर्य्याय नमः ।। 18.19 ।।

एवं शिवाय कृष्णाय ब्रह्मणे च गणाय च ।।
चण्डिकायै सरस्वत्यै महालक्ष्मादि पूजयेत् ।। 18.20 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाव्ये आचारकाण्डेऽमृतेशमृत्युञ्जयपूजनं नामाष्टादशोऽध्यायः ।। 18 ।।

**।।सूत उवाच ।।**
प्राणेश्वरं गारुडं च शिवोक्तं प्रवदाम्यहम् ।।
स्थानान्यादौ प्रवक्ष्यामि नागदष्टो न जीवति ।। 19.1 ।।

चितावल्मीकशैलादौ कपे च विवरे तरोः ।।
दंशे रेखात्रयं यस्य प्रच्छन्नं स न जीवति ।। 19.2 ।।

षष्ठ्यां च कर्कटे मेषे मूलाश्लेषामघादिषु ।।
कक्षाश्रोणिगले सन्धौ शंखकर्णोदरादिषु ।। 19.3 ।।

दण्डी शस्त्रधरो भिक्षुर्नग्नादिः कालदूतकः ।।
बाहौ च वक्क्रे ग्रीवायां दष्टायां न हि जीवति ।। 19.4 ।।

पूर्वं दिनपतिर्भुङ्क्ते अर्द्धयामं ततोऽपरे ।।
शेषा ग्रहाः प्रतिदिनं षट्संख्या परिवर्त्तनैः ।। 19.5 ।।

नागभोगः क्रमाज्ज्ञेयो रात्रौ बाणविवर्त्तनैः ।।
शेषोऽर्कः फणिपश्चन्द्रस्तक्षको भौम ईरितः ।। 19.6 ।।

कर्कोटो ज्ञो गुरुः पद्मो महापद्मश्च भार्गवः ।।
शङ्खः शनैश्चरो राहुः कुलिकश्चाहयो ग्रहाः ।। 19.7 ।।

रात्रौ दिवा सुरगुरोर्भागे स्यादमरान्तकः ।।
पंगोः काले दिवा राहुः कुलिकेन सह स्थितः ।। 19.8 ।।

यामार्द्धसन्धिसंस्थां च वेलां कालवतीं चरेत् ।।
बाणद्विषड्वह्निवाजियुगभूरेकभागतः ? ।। 19.9 ।।

दिवा षड्वेदनेत्राद्रिपञ्चत्रिमानुषांशकैः ।।
पादांगुष्ठे पादपृष्ठे पादपृष्ठे गुल्फे जानुनि लिंगके ।। 19.10 ।।

नाभौ हृदि स्तनतटे कण्ठे नासापुटेऽक्षिणि ।।
कर्णयोश्च भ्रुवोः शंखे मस्तके प्रतिपत्क्रमात् ।। 19.11 ।।

तिष्ठच्चन्द्रश्च जीवेच्च पुंसो दक्षिणभागके ।।
कायस्य वामभागे तु स्त्रिया वायुवहात्करात् ।। 19.12 ।।

अमृतस्तत्कृतो मोहो निवर्त्तेत च मर्दनात् ।।

आत्मनः परमं बीजं हंसाख्यं स्फटिकामलम् ।। 19.13 ।।

ज्ञातव्यं विषपापघ्नं बीजं तस्य चतुर्विधम् ।।
विन्दुपंचस्वरयुतमाद्यमुक्तं द्वितीयकम् ।।
षष्ठारूढं तृतीयं स्यात्सविसर्गं चतुर्थकम् ।।
ॐ कुरु कुन्दे स्वाहा ।। 19.14 ।।

विद्या त्रैलोक्यरक्षार्थं गरुडेन धृता पुरा ।।
वधेप्सुर्नागनागानां मुखेऽथ प्रणवं न्यसेत् ।। 19.15 ।।

गले कुरु न्यसेद्धीमान्कुले च गुल्फयोः स्मृतः ।।
स्वाहा पादयुगे चैव युगहा न्यास ईरितः ।। 19.16 ।।

गृहे विलिखिता यत्र तन्नागाः संत्यजन्ति च ।।
सहस्त्रमन्त्रं जप्त्वा तु कर्णे सूत्रं धृतं तथा ।। 19.17 ।।

यद्गृहे शर्करा जप्ता क्षिप्ता नागास्त्यजन्ति तत् ।।
सप्तलक्षस्य जप्याद्धि सिद्धिः प्राप्ता सुरासुरैः ।। 19.18 ।।

ॐ सुवर्णरेखे कुक्कुटविग्रहरूपिणि स्वाहा ।।
एवञ्चाष्टदले पद्म दले वर्णयुगं लिखेत् ।। 19.19 ।।

नामैतद्वारिधाराभिः स्न्नातो दष्टो विषं त्यजेत् ।।
ॐ पक्षि स्वाहा ।। 19.20 ।।

अंगुष्ठादि कनिष्ठान्तं करे न्यस्याथ देहके ।।
के (कै) वक्त्रे हृदि लिंगे च पादयोर्गरुडस्य हि ।। 19.21 ।।

नाक्रामन्ति च तच्छायां स्वप्नेऽपि विषपन्नगाः ।।
यस्तु लक्षं जपेच्चास्याः स दृष्ट्वा(ष्ट्या) नाशयेद्विषम् ।। 19.22 ।।

ॐ ह्री ह्रौ ह्रीं भि(भी) रुण्डायै स्वाहा ।।
कर्णे जप्ता त्वियं विद्या दष्टकस्य विषं हरेत् ।। 19.23 ।।

अ आ न्यसेत्तु पादाग्रे इ ई गुलफेऽथ जानुनि ।।
उ ऊ ए ऐ कटितटे ओ नाभौ हृदि औ न्यसेत् ।। 19.24 ।।

वक्त्रे अमुत्तमांगे अः न्यसेद्वै हंससंयुताः ।।

हंसो विषादि च हरेज्जप्तो ध्यातोऽथ पूजितः ।। 19.25 ।।

गरुडोऽहमिति ध्यात्वा कुर्य्याद्विषहरां (रीं) क्रियाम् ।।
हंमन्त्रं गात्रविन्यस्तं विषादिहरमीरितम् ।। 19.26 ।।

न्यस्य हंसं वामकरे नासामुखनिरोधकृत् ।।
मंत्रो हरेद्दष्टकस्य त्वङ्मांसादिगतं विषम् ।। 19.27 ।।

स वायुना समाकृष्य दष्टानां गरलं हरेत् ।।
तनौ न्यसेद्दष्टकस्य नीलकण्ठादि संस्मरेत् ।। 19.28 ।।

पीतं प्रत्यंगिरामूलं तण्डुलद्भिर्विषापहम् ।।
पुनर्नवाफलिनीनां मूलं वक्क्रजमीदृशम् ।। 19.29 ।।

मूलं शुक्लबृहत्यास्तु कर्कोट्यागैरिकर्णिकम् ।।
अद्भिर्घृष्टघृतोपेतलेपोऽयं विषमर्दनः ।। 19.30 ।।

विषमृद्धिं न व्रजेच्च उष्णं पिबति यो घृतम् ।।
पंचांगं तु शिरीषस्य मूलं गृंजनजं तथा ।। 19.31 ।।

सर्वांगलेपतशचापि पानाद्वा विषहृद्भवेत् ।।
ह्रीं गोनसादिविषहृत् ।। 19.32 ।।

हृल्ललाटविसर्गान्तं ध्यातं वश्या दिकृद्भवेत् ।।
न्यस्तं योनौ वशेत्कन्यां कुर्य्यान्मदजलाविलम् ।। 19.33 ।।

जप्त्वा सप्ताष्टसाहस्त्रं गरुत्मानिव सर्वगः ।।
कविः स्याच्छ्रुतिधरी च वश्याः स्त्रीश्चायुराप्नुयात् ।।
विषहृत्स्यात्कथा तद्वन्मणिर्व्यासः स्मृतो ध्रुवम् ।। 19.34 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सर्पविषहरोपाय(प्राणेश्वरविद्या) निरूपणं नामैकोनविंशोऽध्यायः ।। 19 ।।

**।।सूत उवाच ।।**

वक्ष्ये तत्परमं गुह्यं शिवोक्तं मन्त्रवृन्दकम् ।।
पाशं धनुश्च चक्रं च मुद्गरं शूलपट्टिशम् ।। 20.1 ।।

एतैरेवायुधैर्युद्धे मन्त्रैः शत्रूञ्जयेन्नृपः ।।
मन्त्रोद्धारः पद्मपात्रे आदि पूर्वादिके लिखेत् ।। 20.2 ।।

अष्टवर्गं चाष्टमं च ख्यातमीशानपत्रके ।।
ॐ कारो ब्रह्म बीजं स्याद्ध्रीङ्कारो विष्णुरेव च ।। 20.3 ।।

ह्रींका रश्च शिवः शूले त्रिशाखे तु क्रमान्न्यसेत् ।।
ॐ ह्रीं ह्रीं ।। 20.4 ।।

शूलं गृहीत्वा हस्तेना भ्राम्य चाकाशसम्मुखम् ।।
तद्दर्शनान्द्रहा नागा दृष्ट्वा वा नाशमाप्नुयुः ।। 20.5 ।।

धूमारक्ते करं मध्ये ध्यात्वा खे चिन्तयेन्नरः ।।
दुष्टा नागा ग्रहा मेघा विनश्यन्ति च राक्षसाः ।। 20.6 ।।

त्रिलोकान्रक्षयेन्मन्त्रो मर्त्यलोकस्य का कथा ।।
ॐ जूं सूं हूं फट् ।। 20.7 ।।

खादिरान्कीलकानष्टौ क्षेत्रे संमन्त्र्य विन्यसेत् ।।
न तत्र वज्रपातस्य स्फूर्जथ्वादेरुपद्रवः ।। 20.8 ।।

गरुडोक्तैर्महामन्त्रैः कीलकानष्ट मन्त्रयेत् ।।
एकविंशतिवाराणि क्षेत्रे तु निखनेन्निशि ।। 20.9 ।।

विद्युन्मूषकवज्रादिसमुपद्रव एव च ।।
हरक्षमलवरयड बिंदुयुक्तः सदाशिवः ।। 20.10 ।।

ॐ ह्रां सदाशिवाय नमः ।।
तर्जन्या विन्यसेत्पिण्डं (ण्डे) दाडिमीकुसुमप्रभम् ।। 20.11 ।।

तस्यैव दर्शनाद्दुष्टा मेघविद्युद्विपादयः ।।
राक्षसा भूतडाकिन्यः प्रद्रवंति दिशो दश ।। 20.12 ।।

ॐ ह्रीं गणेशाय नमः ।।
(ॐ ह्रीं) स्तम्भनादिचक्राय नमः ।।
ॐ ऐं ब्रहयैत्रै लोक्यडामराय नमः ।। 20.13 ।।

भैरवं पिंडमाख्यातं विषपापग्रहापहम् ।।

क्षेत्रस्य रक्षणं भूतराक्षसादेः प्रमर्दनम् ।। 20.14 ।।

ॐ नमः ।।
इंद्रवज्रं करे ध्यात्वा दुष्टमेघादिवारणम् ।।
विषशत्रुगणाभूता नश्यन्ते वज्रमुद्रया ।। 20.15 ।।

ॐ क्षुं(क्ष) नमः ।।
स्मरेत्पाशं वामहस्ते विषभूतादि नश्यति ।।
ॐ ह्रां (ह्रो) नमः ।।
हरेदुच्चारणान्मंत्रो विषमेघग्रहादिकान् ।। 20.16 ।।

ध्यात्वा कृतांतं च दहेच्छेदकास्त्रेण वै जगत् ।।
ॐ क्ष्णँ (क्ष्म) नमः ।।
ध्यात्वा तु भैरवं कुर्य्यान्द्ग्रहभूतविषापहम् ।। 20.17 ।।

ॐ लसद्दिजिह्वाक्ष स्वाहा ।।
क्षेत्रादौ ग्रहभूतादिविषपक्षिनिवारणम् ।। 20.18 ।।

ॐ क्ष्व (क्ष्णं) नमः ।।
रक्तेन पटहे लिख्य शब्दास्तेषुसुर्ग्रहादयः ।।
ॐ मर मर मारयमारय स्वाहा ।।
ॐ हुं फट् स्वाहा ।। 20.19 ।।

शूलं चाष्टशतैर्मन्त्र्य भ्रामणाच्छत्रुवृंदहृत् ।।
ऊर्द्धशक्तिनिपातेन अधः शक्तिं निकुञ्चेयेत् ।। 20.20 ।।

पूरके पूरिता मंत्राः कुम्भकेन सुमन्त्रिताः ।।
प्रणवेनाप्यायितास्ते मनवस्तदुदीरिताः ।।
एवमाप्यायिता मंत्रा भृत्यवत्फलदायकाः ।। 20.21 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकांडे विषादिहरमन्त्रबृंदनिरूपणं नाम विंशोऽध्यायः ।। 20 ।।

**।।सूत उवाच ।।**

पंचवक्त्रार्च्चनं वक्ष्ये पृथग्यद्भुक्तिमुक्तिदम् ।।

ॐ भूर्विष्णवे आदिभूताय सर्वाधाराय मूर्त्तये स्वाहा ।। 1 ।।

सद्योजातस्य चाह्वानमनेन प्रथमं चरेत् ।।

ॐ हां सद्योजातायैव कला ह्यष्टौ प्रकीर्त्तिताः ।।2 ।।

सिद्धिर्ऋद्धिर्धृतिर्लक्ष्मीर्मेधा कान्तिः स्वधा स्थितिः ।।

ॐ हीं वामदेवायैव कलास्तस्य त्रयोदश ।। 3 ।।

रजा रक्षा रतिः पाल्या कान्ति स्तृष्णा मतिः क्रिया ।।

कामा बुद्धिश्च रात्रिश्च त्रासनी मोहिनी तथ ।।4 ।।

मनोन्मनी अघोरा च तथा मोहा क्षुधा कलाः ।।

निद्रा मृत्युश्च माया च अष्टसंख्या भयंकरा ।। 5 ।।

ॐ हैं तत्पुरुषायैव (षाय) निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिर्न केवला ।। 6 ।।

ॐ हौं ईशानाय नमो निश्चला च निरञ्जना ।।

शशिनी चांगना चैव मरीचिर्ज्वालिनी तथा ।।.7 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डं पञ्चवक्क्रपूजनं नामैकविंशोऽध्यायः ।। 21 ।।

**।।सूत उवाच ।।**

शिवार्चनं प्रवक्ष्यामि भक्तिमुक्तिकरं परम् ।।
शान्तं सर्वगतं शून्यं मात्राद्वादशके स्थितम् ।। 22.1 ।।

पञ्च वक्त्राणि ह्रस्वानि दीर्घाण्यंगानि बिन्दुना ।।
सविसर्गं वदेदस्त्रं शिव ऊर्ध्वं तथा पुनः ।। 22.2 ।।

षष्ठेनाधो महामन्त्रो हौमित्येवाखिलार्थदः ।।
हस्ताभ्यां संस्पृशेत्पादावूर्ध्वं पादान्मस्तकम् ।। 22.3 ।।

महामुद्रा हि सर्वेषां करांगन्यासमाचरेत् ।।
तालहस्तेन पृष्ठं च अस्त्रमन्त्रेण शोधयेत् ।। 22.4 ।।

कनिष्ठामादितः कृत्वा तर्जन्यंगानि विन्यसेत् ।।
पूजनं संप्रवक्ष्यामि कर्णिकायां हृदम्बुजे ।। 22.5 ।।

धर्मं ज्ञानं च वैराग्यमैश्वर्य्यादि हृदार्चयेत् ।।
आवाहनं स्थापनं च पाद्यमर्घ्यं हृदार्पयेत् ।। 22.6 ।।

आचामं स्नपनं पूजामेकाधारणतुल्यकाम् ? ।।
अग्निकार्य्यविधिं वक्ष्ये अस्त्रेणोल्लेखनं चरेत् ।। 22.7 ।।

वर्म्मणाभ्युक्षणं कार्य्यं शक्तिन्यासं हृदा चरेत् ।।
हृदि वा शक्तिगर्त्ते च प्रक्षिपेज्जातवेदसम् ।। 22.8 ।।

गर्भाधानादिकं कृत्वा निष्कृतिं चारस्य पश्चिमाम् ।।
हृदा कृत्वा सर्वकर्म्म शिवं सांगं तु होमयेत् ।। 22.9 ।।

पूजयेन्मण्डले शम्भुं पद्मगर्भे गरांकितम् ।।
चतुः षष्ट्यन्तमष्टादि स्वाक्षि खाद्यादिमण्डलम् ।। 22.10 ।।

खाक्षीन्द्रसूर्य्यगं सर्वखादिवेदेन्दु (देवेन्दु) वर्त्तनम् ।।
आग्नेय्यां कारयेत्कुण्डमर्द्धचन्द्रनिभं शुभम् ।। 22.11 ।।

अग्निशास्त्र परायुस्थो त्द्दयादिगणोच्यते ।।
अस्त्रं दिशा सुपद्मस्य कर्णिकायां सदाशिवः ।। 22.12 ।।

दीक्षां वक्ष्ये पञ्चतत्त्वे स्थितां भूम्यादिकां परे ।।
निवृत्तिर्भूप्रतिष्ठाद्यैर्विद्याग्निः शान्तिवन्निजः ।। 22.13

शान्त्यतीतं भवेद्धोम तत्परं शान्तमव्ययम् ।।
एकैकस्य शतं होमित्येवं पंच होमयेत् ।। 22.14 ।।

पश्चात्पूर्णाहुतिं दत्त्वा प्रा(प्र)सादेन शिवं स्मरेत् ।।
प्रायश्चित्तविशुद्ध्यर्थमेकैकाष्टाहुतिं क्रमात् ।। 22.15 ।।

होमयेदस्त्रबीजेन एवं दीक्षां समाप्येत् ।।
यजनव्यतिरेकेण गोप्यं संस्कारमुत्तमम् ।। 22.16 ।।

एवं संस्कारशुद्धस्य शिवत्वं जायते ध्रुवम् ।। 22.17 ।।

।।इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे शिवार्चनप्रकारो नाम द्वाविंशोऽध्यायः ।। 22 ।।

**।।सूत उवाच ।।**
शिवार्चनं प्रवक्ष्यामि धर्म्मकामादिसाधनम् ।।
त्रिभिर्मन्त्रैराचामेत्तु स्वाहान्तैः प्रणवादिकैः ।। 23.1 ।।

ॐ हां आत्मतत्त्वाय विद्यातत्त्वाय हीं तथा ।।
ॐ हूं शिवतत्त्वाय स्वाहा हृदा स्याश्रोत्रवंदनम् ।। 23.2 ।।

भस्मस्न्नानं तर्पणं च ॐ हां स्वाहा सर्वमन्त्रकाः ।।
सर्वे देवाः सर्वमुनिर्नमोऽन्तो वौषडन्तकः ।। 23.3 ।।

स्वधान्ताः सर्वपितरः स्वधान्ताश्च पितामहाः ।।
ॐ हां प्रपितामहेभ्यस्तथा मातामहादयः ।। 23.4 ।।

हां नमः सर्वमातृभ्यस्ततः स्यात्प्राणसंयमः ।।
आचामं मार्जनं चाथो गायत्रीं च जपेत्ततः ।। 23.5 ।।

ॐ हां तन्महेशाय विद्महे, वाग्विशुद्धाय धीमहि, तन्नो रुद्रः प्रचोदयात् ।। 23.6 ।।

सूर्य्योपस्थानकं कृत्वा सूर्य्यमन्त्रैः प्रपूजयेत् ।।
ॐ हां हीं हूं हैं हौं हः शिवसूर्य्याय नमः ।।
ॐ हं खखोल्काय सूर्य्यमूर्त्तये नमः ।।
ॐ ह्रां ह्रीं सः सूर्य्याय नमः ।। 23.7 ।।

दण्डिने पिङ्गले त्वातिभूतानि च ततः स्मरेत् ।।
अग्नयादौ विमलेशानमाराध्य परमं सुखम् ।। 23.8 ।।

यजेत्पद्मां च रां दीप्तां रीं सूक्ष्मां रूं जयां च रैं ।।
भद्रां च रैं विभूतिं रों विमलां रौममोधि (रोधि) काम् ।। 23.9 ।।

रं विद्युतां च पूर्वादौ रा (रं) मध्ये सर्वतोमुखीम् ।।
अर्कासनं सूर्य्यमूर्त्तिं ह्रां हूं (ह्रीं) सः सूर्य्यमर्च्चयेत् ।। 23.10 ।।

ॐ आं हृदयार्काय च शिरः शिखा च भूर्भुवः स्वरोम् ।।
ज्वालिनीं ह्रं कवचस्य चास्त्रं राज्ञां च दीक्षिताम् ।। 23.11 ।।

यजेत्सूर्य्यहृदा सर्वान्सों सोमं मं च मंगलम् ।।
बं बुधं बृं बृहस्पतिं भं भार्गवं शं शनैश्चरम् ।। 23.12 ।।

रं राहुं कं यजेत्केतुं ॐ तेजश्चण्डमर्च्चयेत् ।।
सूर्य्यमभ्यर्च्य चाचम्य कनिष्ठातोऽङ्गकान्यसेत् ।। 23.13 ।।

हां हृच्छिरो हूं शिखा हैं वर्म्म हौं चैव नेत्रकम् ।।
होऽस्त्रं शक्तिस्थितिं कृत्वा भूतशुद्धिं पुनर्न्यसेत् ।। 23.14 ।।

अर्घ्यपात्रं ततः कृत्वा तदद्भिः प्रोक्षयेद्यजेत् ।। 23.15 ।।

आत्मानं पद्मसंस्थं च हौं शिवाय ततो बहिः ।।
द्वारे नन्दिमहाकालौ गंगा च यमुनाथ गौः ।। 23.16 ।।

श्रीवत्सं वास्त्वधिपतिं ब्रह्माणं च गणं गुरुम् ।।
शक्त्यनन्तौ यजेन्मध्ये पूर्वादौ धर्म्मकादिकम् ।। 23.17 ।।

अधर्म्माद्यं च वह्न्यादौ मध्ये पद्मस्य कर्णिके ।।
वामाज्येष्ठा च पूर्वादौ रौद्री काली च पूर्षदः ।। 23.18 ।।

ॐ हौं कलविकरिण्यै बलविकरिणी ततः ।।
बलप्रमथिनी सर्वभूतानां दमनी ततः ।। 23.19 ।।

मनोन्मनी यजेदेताः पठिमध्ये शिवाग्रतः ।।
शिवासनं महामूर्त्ति मूर्त्तिमध्ये शिवाय च ।। 23.20 ।।

आवाहनं स्थापनं च सन्निधानं निरोधनम् ।।
सकलीकरणं मुद्रादर्शनं चार्घ्यपाद्यकम् ।। 23.21 ।।

आचामाभ्यङ्गमुद्वर्त्तं स्नानं निर्म्मथनं चरेत् ।।
वस्त्रं विलेपनं पुष्पं धूपं दीपं चरुं ददेत् ।। 23.22 ।।

आचामं मुखवासं च ताम्बूलं हस्तशोधनम् ।।
छत्रचामरपावित्रं परमीकरणं चरेत् ।। 23.23 ।।

रूपकल्पके चैकाहजपो जाप्यसमर्पणम् ।।
स्तुतिर्नतिर्हृदाद्यैश्च ज्ञेयं नामाङ्ग पूजनम् ।। 23.24 ।।

अग्नीशरक्षो वायव्ये मध्ये पूर्वादितन्त्रकम् ।।
इन्द्राद्यांश्च यजेच्चण्डं तस्मै निर्माल्यमर्पयेत् ।। 23.25 ।।

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।।
सिद्धिर्भवतु मे देव तत्प्रसादात्त्वयि स्थितिः ।। 23.26 ।।

यत्किञ्चित्क्रियते कर्म सदा सुकृतदुष्कृतम् ।।
तन्मे शिवपदस्थस्य रुद्र क्षपय शङ्कर ।। 23.27 ।।

शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत् ।।
शिवो जयति सर्वत्र यः शिवः सोऽहमेव च ।। 23.28 ।।

यत्कृतं यत्करिष्यामि तत्सर्वं सुकृतं तव(तस्तवम्) ।।
त्वं त्राता विश्वनेता च नान्योनाथोऽस्तिमेशिव ।। 23.29 ।।

अथान्येन प्रकारेण शिवपूजां वदाम्यहम् ।।
गणः सरस्वती नंदी महाकालोऽथगंगया ।। 23.30 ।।

पवनास्त्रं वास्त्वधिपो द्वारि पूर्वादितस्त्विमे ।।
इंद्राद्याः पूजनीयाश्च तत्त्वानि पृथिवी जलम् ।। 23.31 ।।

तेजो वायुर्व्योम गंधो रसरूपे च शब्दकः ।।
स्पर्शो वाक् पाणि पादं च पायूपस्थं श्रुतित्वचम् ।। 23.32 ।।

चक्षुर्जिह्वा घ्राणमनो बुद्धिश्चाहं प्रकृत्यपि ।।

पुमान्नागो बुद्धिविद्ये कला कालो नियत्यपि ।। 23.33 ।।

माया च शुद्ध विद्या च ईश्वरश्च सदाशिवः ।।
शक्तिः शिवश्च तान्ज्ञात्वा मुक्तो ज्ञानी शिवो भवेत् ।। 23.34 ।।

यः शिवः स हरिर्ब्रह्मा सोऽहं ब्रह्मास्मि शङ्कर ।। 23.35 ।।

भूतशुद्धिं प्रवक्ष्यामि यया शुद्धः शिवो भवेत् ।।
हृत्पद्मे सद्योमंत्रः स्यान्निवृत्तिश्च कला इडा ।। 23.36 ।।

पिंगला द्वे च नाड्यौ तु प्राणोऽपानश्च मारुतौ ।।
इन्द्रो देहो ब्रह्महेतुश्चतुरस्त्रं च मण्डलम् ।। 23.37 ।।

वक्त्रेण लाञ्छितं वायुमेकोद्घातगुणाः शराः ।।
हृत्स्थानसादृश्यरुतं शतकोटिप्रविस्तरम् ।। 23.38 ।।

ॐ ह्रीं प्रतिष्ठायै हूं ह्रः फट् ।।
ॐ ह्रीं हूं विद्यायै ह्रं ह्रः फट् ।।
चतुरशीतिकोटीनामुच्छ्रयं भूमितन्त्रकम् ।। 23.39 ।।

तन्मध्ये भववृक्षं च आत्मानं च विचिन्तयेत् ।।
अधोमुखीं ततः पृथ्वीं तत्तच्छुध्दं भवेद्ध्रुवम् ।। 23.40 ।। द्र. अग्निपुराणम् ७४.१८, विष्णुधर्मोत्तरपुराणम् ३.१५२.४, शिवपुराणम् १.१०

वामादेवी प्रतिष्ठा च सुषुम्ना धारिका तथा ।।
समानोदानवरुणौ देवता विष्णु कारणम् ।। 23.41 ।।

उद्घाताश्च गुणा वेदाः श्वेतं ध्यानं तथैव च ।।
एवं कुर्य्यात्कण्ठपद्मपमर्द्धचन्द्राख्यमण्डलम् ।। 23.42 ।।

पद्मांकितं द्विविंशतिककोटिविस्तीर्णमौ स्मरेत् ।।
चतुर्नवत्युच्छ्रयं च आत्मानं च अधोमुखम् ।। 23.43 ।।

तालुस्थानं च पद्मं च अघोरो विद्ययान्वितः ।।
नाभ्यो(ड्यो) ष्ठयोर्हस्तिजिह्वाध्यानो नागोग्निदेवता ।। 23.44 ।।

रुद्रहेतुस्त्रिरुद्घातास्त्रिगुणा रक्तवर्णकम् ।।
ज्वालाकृते त्रिकोणं च चतुः कोटिशतानि च ।। 23.45 ।।

विस्तीर्णं च समुत्सेधं रुद्रतत्त्वं विचिन्तयेत् ।।
ललाटे वै तत्पुरुषः शान्तिर्यः शाद्वलं बुधाः (वृषा) ।। 23.46 ।।

कूर्मश्च कृकरो वायुर्देव ईश्वरकारणम् ।।
द्विरुद्घातो गुणौ द्वौ च धूम्रषट्कोणमण्डलम् ।। 23.47 ।।

बिंद्वङ्कितं चाष्टकोटिविस्तीर्णं चोच्छ्रयस्तथा ।।
चतुर्दशाधिकं कोटिवायुतत्त्वं विचिन्तयेत् ।। 23.48 ।।

द्वादशति सरसिजे शान्त्यतीतास्तथेश्वराः ।।
कुहूश्च शङखिनी नाड्यो देवदत्तो धनञ्जयः ।। 23.49 ।।

शिखेशानकारणं च सदाशिव इति स्मृतः ।।
गुण एकस्तथोद्घातः शुद्धस्फटिकवत्स्मरेत् ।। 23.50 ।।

षोडशकोटिविस्तीर्णं पञ्चविंशतिकोच्छ्रयम् ।।
वर्त्तुलं चिंतयेव्द्योम भूतशुद्धिरुदाहृता ।। 23.51 ।।

गुणयो गुरुर्बीजगुरुः शक्तयनंतौ च धर्म्मकः ।।
ज्ञानवैराग्यमैश्वर्य्यैस्ततः पूर्वादिपत्रके ।। 23.52 ।।

अधोर्द्ध्ववदने द्वे च पद्मकर्णिककेसरम् ।।
वामाद्या आत्मविद्या च सदा ध्यायेच्छिवाख्यकम् ।। 23.53 ।।

तत्त्वं शिवासने मूर्त्तिर्ह्रीं हौं विद्यादेहाय नमः ।।
बद्धपद्मासनासीनः सितः षोडशवार्षिकः ।। 23.54 ।।

पञ्चवक्त्रः कराग्रैः स्वैर्दशभिश्चैव धारयन् ।।
अभयं प्रसादं शक्तिं शूलं खट्वाङ्गमीश्वरः ।। 23.55 ।।

दक्षैः करैर्वामकैश्च भुजंगं चाक्षसूत्रकम् ।।
डमरुकं नीलोत्पलं बीजपूरकमुत्तमम् ।। 23.56 ।।

इच्छाज्ञानक्रियाशक्तिस्त्रिनेत्रो हि सदाशिवः ।।
एवं शिवार्च्चनध्यानी सर्वदा कालवर्जितः ।। 23.57 ।।

इहाहोरा वचारेण त्रीणि वर्षाणि जीवति ।।
दिनद्वयस्य चारेण जीवेद्वर्षद्वयं नरः ।। 23.58 ।।

दिनत्रयस्य चारेण वर्षमेकं स जीवति ।।
नाकाले शीतले मृत्युरुष्णे चैव तु कारके ।। 23.59 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे शिवार्चननिरूपणं नाम त्रयोविंशोऽध्यायः ।।
23 ।।(इति शिवादि पूजा समाप्ता) ।।

**।।सूत उवाच ।।**
वक्ष्ये गणादिकाः पूजाः सर्वदा स्वर्गदाः पराः ।।
गणासनं गणमूर्त्तिं गणाधिपतिमर्च्चयेत् ।। 24.1 ।।

गामादिहृदयाद्यंगं दुर्गाया गुरुपादुकाः ।।
दुर्गासनं च तन्मूर्त्तिं ह्रीं दुर्गे रक्षणीति च ।। 24.2 ।।

हृदादिकं नव शक्त्यो रुद्रचण्डा प्रचण्डया ।।
चण्डोग्रा चण्डनायिका चण्डा चण्डवती क्रमात् ।। 24.3 ।।

चण्रूपा चण्डिकाख्या दुर्गेदुर्गेऽथ रक्षिणि ।।
वज्रखड्गादिका मुद्राः शिवाद्या वह्निदेशतः ।। 24.4 ।।

सदाशिवमहाप्रेतपद्मासनमथापि वा ।।
ऐं क्लीं (ह्रीं) सौस्त्रिपुरायै नमः ।।
ॐ ह्रां ह्रीं क्षें क्षैं स्त्रीं स्कीं रों स्फें स्फीं शां पद्मासनं च मूर्त्तिं च त्रिपुराहृदयादिकम् ।। 24.5 ।।

पीठाम्बुजे तु ब्राहयादीर्ब्रह्माणी च महेश्वरी ।।
कौमारी वैष्णवी पूज्या वाराही चेन्द्रदेवता ।। 24.6 ।।

चामुण्डा चण्डिका पूज्या भैरवाख्यांस्ततो यजेत् ।।
असितांगोरुरुश्चण्डः क्रोध उन्मत्तभैरवः ।। 24.7 ।।

कपाली भीषणश्चैव संहारश्चाष्ट भैरवाः ।।
रतिः प्रीतिः कामदेवः पञ्च बाणाश्च योगिनी ।। 24.8 ।।

वटुकं दुर्गया विघ्नराजो गुरुश्च क्षेत्रपः ।।
पद्मगर्भे मण्डले च त्रिकोणे चिन्तयेद्धृदि ।। 24.9 ।।

शुक्लां वरदाक्षसूत्रपुस्ताभयसमन्विताम् ।।
लक्षजप्याच्च होमाच्च त्रिपुरा सिद्धिदा भवेत् ।। 24.10 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे त्रिपुरादिपूजानिरूपणं नम् चतुर्विंशोऽध्यायः ।। 24 ।।

**।।सूत उवाच ।।**

ऐं क्रीं श्रीं स्फें क्षौं अनन्तशक्तिपादुकां पूजयामि नमः ।। 25.1 ।।

ऐं श्रीं फ्रौं क्षौं आधारशक्तिपादुकां पूजयामि नमः ।।
ॐ ह्रूं कालाग्निरुद्रपादुकां पूजयामि नमः ।। 25.2 ।।

ॐ ह्रीं हुं हाटकेश्वरदेवपादुकां पूजयामि नमः ।।
ॐ ह्रीं शेषभट्टारकपादुकां पूजयामि नमः ।। 25.3 ।।

ॐ ह्रीं श्रीं पृथिवीतत्सवर्णभुवनद्वीपसमुद्रदिशामनन्ताख्यमासनं पद्मासनं पूजयामि नमः ।। 25.4 ।।

ह्रीं श्रीं निवृत्त्यादि कला पृथिव्यादितत्त्व मनन्तादिभुवनमोङ्कारादिवर्णम् ।।
हकारादिनवात्मकपदः सद्योदातादिमन्त्रः ह्रां हृदयाद्यङ्गः ।।
एवं मन्त्रमहेश्वर सिद्धविद्यात्मकः परामृतार्णवः सर्वभूतो दिक्समस्तषडंगः सदाशिवार्णवपयः
पूर्णोदधिपक्षश्रीमानास्पदात्मकः विद्योमापूर्णज्ञत्वकर्त्तृत्वलक्षणज्येष्ठाचक्ररुद्रशक्त्यात्मककर्णिकः ।।
नवशक्तिशिवादिभिर्मूलमण्डलत्रयकुजात्मकोत्पन्नापद्मासनपादुकां पूजयामि नमः ।। 25.5 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे आसनपूजानिरूपणं नाम पंचविंशोऽध्यायः ।। 25 ।।

**।।सूत उवाच ।।**

अनन्तरं करन्यासः ।।
विद्याकरी शुद्धिः कार्य्या ।।
पद्ममुद्रां बद्ध्वा मन्त्रन्यासं कुर्य्यात् ।।

कौं कनिष्ठायै नमः ।।
नौं अनामिकायै नमः ।।
मौं मध्यमायै नमः ।।
तौं तर्जन्यै नमः ।।
अं अंगुष्ठायै नमः ।।
लां करतलायै नमः ।।
वां करपृष्ठायै नमः ।। 26.1 ।।

अथ देहन्यासः ।।
स्मंस्मं मणिबन्धाय नमः ।।
ऐं ह्रीं श्रीं करास्फालाय नमः ।।
महातेजोरूपं हुंहुंकारेण करास्फालनं कुर्य्यात् ।। 26.2 ।।

ऐं ह्रीं श्रीं ह्रीं स्फैं नमो भगवते स्फैं कुब्जीकायै नमः ।।
ह्रं ह्रीं ह्रौं ङञणनमे अघोरामुखि ह्रां ह्रीं किलिकिलि विच्चे स्थौल्यक्रोशी ह्रीं ह्रीं श्रीं ऐं नमो भगवते उर्द्ध्ववक्त्राय नमः ।।
स्फौं कुब्जिकायै पूर्ववक्त्राय नमः ।।
ह्रीं श्रीं ह्रीं ङ्ञणनमे दक्षिणवक्त्राय नमः ।।
ॐ ह्रीं श्रीं किलिकिलि पश्चिमवक्त्राय नमः ।।
ॐ अखोरमुखि उत्तरवक्त्राय नमः ।।
ॐ नमो भगवते हृदयाय नमः क्षौं (क्षें ऐं) कुब्जिकायै शिरसे स्वाहा ।।
ह्रीं क्रीं ह्रीं आं ङ ञ ण नमे शिखायै वषट् ।।
अघोरामुखि कवचाय हुं ।।
हैं हैं ईं नेत्रत्रयाय वौषट् ।।
किलिकिलि विच्चे अस्त्राय फट् ।। 26.3 ।।

ऐं ह्रीं श्रीं अखण्डमण्डलाकारमहाशूलमण्डलमाय नमः ।। ऐं ह्रीं श्रीं वायुमण्डलाय नमः ।।
ऐं ह्रीं श्रीं सोममण्डलाय नमः ।। ऐं ह्रीं श्रीं महाकुलबोधावलिमण्डलाय नमः ।।
ऐं ह्रीं श्रीं महाकौलमण्डलाय नमः ।। ऐं ह्रीं श्रीं गुरुमण्डलाय नमः ।।
ऐं ह्रीं श्रीं साममण्डलाय नमः ।। ऐं ह्रीं श्रीं समग्र सिद्ध योगीनीपीठापपीठ क्षेत्रेपक्षेत्रमहासन्तानमण्डलाय नमः ।।
एवं मण्डलानां द्वादशकं क्रमेण पूज्यम् ।। 26.4 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे आचारकाण्डे करन्यासादिनिरूपणं नाम षड्विंशोऽध्यायः ।। 26 ।।

**।।सूत उवाच ।।**

ॐ कणिचिकीणिकक्राणी चर्वाणी भूतहारिणि फणिविषिणि विरथनारायणि उमे दहदह हस्ते चण्डे रौद्रे माहेश्वरि महामुखि ज्वालामुखि शङ्कुकर्णि शुकमुण्डे शत्रुं हनहन सर्वनाशिनि स्वेदय सर्वांगशोणितं तन्निरीक्षासि मनसा देवि सम्मोहयसम्मोहय रुद्रस्य हृदये जाता रुद्रस्य हृदये स्थिता ।।

रुद्रो रौद्रेण रूपेण त्वं देवि रक्षरक्ष मां हूं मां हूं फफफ ठठः स्कन्दमेखलाबालग्रहशत्रुविषहारी ॐ शाले माले हरहर विषोंकाररहिविषवेगे हां हां शवरि हुं शवरि आकौलवेगेशे सर्वे विंचमेघमाले सर्वनागादिविषहरणम् ।। 27.1 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नागादिविविधविषहर मन्त्रनिरूपणं नाम सप्तविंशोऽध्यायः ।। 27 ।।

**।।सूत उवाच ।।**

गोपालपूजां वक्ष्यामि भुक्तिमुक्तिप्रदायिनीम् ।।
द्वारे धाता विधाता च गंगायमुनया सह ।।28.1।।

शङ्खपद्मनिधी चैव सारङ्गः शरभः श्रिया ।।
पूर्वे भद्रः सुभद्रो द्वौ दक्षे चण्डप्रचण्डकौ ।। 28.2 ।।

पश्चिमे बलप्रबलौ जयश्च विजयो यजेत् ।।
उत्तरे श्रीश्चतुर्द्वारे गणो दुर्गा सरस्वती ।। 28.3 ।।

क्षेत्रस्याग्न्यादिकोणेषु दिक्षु नारदपूर्वकम् ।।
सिद्धो गुरुर्नलकूवरं कोणे भगवतं यजेत् ।। 28.4 ।।

पूर्वे विष्णुं विष्णुतपो विष्णुशक्तिं समर्चयेत् ।।
ततो विष्णुपरीवारं मध्ये शक्तिं च कूर्म्मकम् ।। 28.5 ।।

अनन्तं पृथिवीं धर्मं ज्ञानं वैराग्यमग्नितः ।।
ऐश्वर्य्यं वायुपूर्वं च प्रकाशात्मानमुत्तरे ।। 28.6 ।।

सत्त्वाय प्रकृतात्मने रजसे मोहरूपिणे ।।
तमसे कन्द पद्माय यजेत्कं काकतत्त्वकम् ।। 28.7 ।।

विद्यातत्त्वं परं तत्त्वं सूर्य्येन्दुवह्निमण्डलम् ।।
विमलाद्या आसनं च प्राच्यां श्रीं ह्रीं प्रपूजयेत् ।। 28.8 ।।

गोपीजनवल्लभाय स्वाहान्तो मनुरुच्यते ।।
अङ्गानि यथा-आच क्रं च सुचक्रं च विचक्रं च तथैव च ।। 28.9 ।।

त्रैलोक्यरक्षकं चक्रमसुरारिसुदर्शनम् ।।
हृदादिपूर्वकोणषु अस्त्रं शक्तिं च पूर्वतः ।। 28.10 ।।

रुक्मिणी सत्यभामा च सुनन्दा नाग्नजित्यपि ।।
लक्ष्मणा मित्रविंदा च जाम्बवत्या शुशीलया ।। 28.11 ।।

शङ्खचक्रगदापद्मं मुसलं शार्ङ्गमर्चयेत् ।।
खड्गं पाशाङ्कुशं प्राच्यां श्रीवत्सं कौस्तुभं यजेत् ।। 28.12 ।।

मुकुटं वलमालां च ऐंद्राद्यान्ध्वजमुख्यकान् ।।
कुमुदाद्यान्विष्वक्सेनं श्रिया कृष्णं सहार्चयेत् ।।
जप्याद्ध्यानात्पूजनाच्च सर्वान्कामानवान्पुयात् ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्रीगोपालपूजानिरूपणं नामाष्टाविंशोऽध्यायः ।। 28 ।।

**।।हरिरुवाच ।।**
त्रैलोक्यमोहिनीं वक्ष्ये पुरुषोत्तममुख्यकाम् ।।
पूजामन्त्राञ्छ्रीधराद्यान्धर्म्मकामादिदायकान् ।। 29.1 ।।

ॐ ह्रीं श्रीं क्लीं ह्रूं ॐ नमः ।।
पुरुषोत्तम अप्रतिरूप लक्ष्मीनिवास जगत्क्षोभण सर्वस्त्रीहृदयदारुणं त्रिभुवनमदोन्मादनकर सुरासुरमनुज सुन्दरीं जनमनांसि तापयतापय शोषयशोषय मारयमारय स्तम्भयस्तम्भय द्रावयद्रावय आकर्षय आकर्षय, परमसुभगसर्वसौभाग्यकरं सर्वकामप्रदं अमुकं हनहन चक्रेण गदया खड्गेन सर्वबाणैर्भिधिभिन्धि पाशेन कुट्टकुट्ट अङ्कुशेन ताडयताडय तुरुतुरु किं तिष्ठसि तारयतारय यावत्समीहितं मे सिद्धं भवति ह्रीं (ह्रूं) फट् नमः ।। 29.2 ।।

ॐ श्रीं (श्रीः) श्रीधराय त्रैलोक्यमोहनाय नमः ।।
क्लीं पुरुषोत्तमाय त्रैलोक्यमोहनाय नमः ।। 29.3 ।।

ॐ विष्णवे त्रैलोक्यमोहनाय नमः ।।
ॐ श्रीं क्लीं त्रैलोक्यमोहनाय विप्णवे नमः ।। 29.4 ।।

त्रैलोक्यमोहना मंत्राः सर्वे सर्वार्थसाधकाः ।।
सर्वे चिंत्या पृथग् वापि व्यासात्संक्षेपतोऽथ वा ।। 29.5 ।।

आसनं मूर्त्तिमंत्रं च होमाद्यंगषडंगकम् ।।
चक्रं गदां च खड्गं च मुसलं शङ्खशर्ङ्गकम् ।। 29.6 ।।

शरं पाशं चांकुशं च लक्ष्मीगरुडसंयुतम् ।।
विष्वक्सेनं विस्तराद्वानरः सर्वमवाप्नुयात् ।। 29.7 ।।

इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकाण्डे त्रैलोक्यमोहिनी(श्रीधर) पूजनविधिर्नामैकोनत्रिंशोऽध्यायः ।। 29 ।।

**।।सूत उवाच ।।**

विस्तरेण प्रवक्ष्यामि श्रीधरस्यार्चनं शुभम् ।।
परिवारश्च सर्वेषां समोज्ञेयो हि पण्डितैः ।। 30.1 ।।

ॐ श्रां हृदयाय नमः ।।
ॐ श्रींशिरसे स्वाहा ।।
ॐ श्रू शिखायै वषटू ।।
ॐ श्रैं कवचाय हुं ।।
ॐ श्रौं नेत्रत्रयाय वौषट् ।।
ॐ श्रः अस्त्राय फट् इति ।। 30.2 ।।

दर्शयेदात्मनो मुद्रां शङ्खचक्रगदादिकाम् ।।
ध्यात्वात्मानं श्रीधराख्यं शङ्खचक्रगदाधरम् ।। 30.3 ।।

ततस्तं पूजयेद्देवं मण्डले स्वस्तिकादिके ।।
आसनं पूजयेदादौ देवदेवस्य शार्ङ्गिणः ।।
एभिर्मन्त्रैर्महादेव तान्मत्राञ्छृणु शङ्कर ।। 30.4 ।।

ॐ श्रीधरासनदेवताः आगच्छता ।।
ॐ समस्तपरिवारायच्युतासनाय नमः ।। 30.5 ।।

ॐ धात्रे नमः ।।
ॐ विधात्रे नमः ।।
ॐ गङ्गायै नमः ।।
ॐ यमुनायै नमः ।।
ॐ आधारशक्तयै नमः ।।
ॐ कूर्म्माय नमः ।।
ॐ अनन्ताय नमः ।।
ॐ पृथिव्यै नमः ।।
ॐ धर्म्माय नमः ।।
ॐ ज्ञानाय नमः ।।
ॐ वैराग्याय नमः ।।
ॐ ऐश्वर्य्याय नमः ।।
ॐ अधर्म्माय नमः ।।
ॐ अज्ञानाय नमः ।।
ॐ अवैराग्याय नमः ।।
ॐ अनैश्वर्य्याय नमः ।।
ॐ कन्दाय नमः ।।
ॐ नालाय नमः ।।

ॐ पद्माय नमः ।।
ॐ विमलायै नमः ।।
ॐ उत्कर्षिण्यै नमः ।।
ॐ ज्ञानायै नमः ।।
ॐ क्रियायै नमः ।।
ॐ योगायै नमः ।।
ॐ प्रह्व्यै नमः ।।
ॐ सत्यायै नमः ।।
ॐ ईशानायै नमः ।।
ॐ अनुग्रहायै नमः ।। 30.6 ।।

अर्चयित्वा समं रुद्र हरिमावाह्य संयजेत् ।।
मन्त्रैरेभिर्महाप्राज्ञः सर्वपापप्रणाशनैः ।। 30.7 ।।

ॐ ह्रीं श्रीधराय त्रैलोक्यमोहनाय विष्णवे नमः आगच्छ ।। 30.8 ।।

ॐ श्रियै नमः ।।
ॐ श्रां हृदयाय नमः ।।
ॐ श्रीं शिरसे नमः ।।
ॐ श्रूं शिखायै नमः ।।
ॐ श्रैं कवचाय नमः ।।
ॐ श्रौं नेत्रत्रयाय नमः ।।
ॐ श्रः अस्त्राय नमः ।।
ॐ शङ्खाय नमः ।।
ॐ पद्माय नमः ।।
ॐ चक्राय नमः ।।
ॐ गदायै नमः ।।
ॐ श्री वत्साय नमः ।।
ॐ कौस्तुभ्यै नमः ।।
ॐ वनमालायै नमः ।।
ॐ पीताम्बराय नमः ।।
ॐ ब्रह्मणे नमः ।।
ॐ नारदाय नमः ।।
ॐ गुरुभ्यो नमः ।।
ॐ इन्द्राय नमः ।।
ॐ अग्नये नमः ।।
ॐ यमाय नमः ।।
ॐ निर्ऋतये नमः ।।
ॐ वरुणाय नमः ।।

ॐ वायवे नमः ।।

ॐ सोमाय नमः ।।

ॐ ईशानाय नमः ।।

ॐ अनन्ताय नमः ।।

ॐ ब्रह्मणे नमः ।।

ॐ सत्वाय नमः ।।

ॐ रजसे नमः ।।

ॐ तमसे नमः ।।

ॐ विष्वक्सेनाय नमः ।। 30.9 ।।

अभिषेकं तथा वस्त्रं ततो यज्ञोपवीतकम् ।।
गन्धं पुष्पं तथा धूपं दीपमन्नं प्रदक्षिणम् ।। 30.10 ।।

दद्यादेभिर्महामन्त्रैः समप्यार्थ जपेन्मनुम् ।।
शतमष्टोत्तरं चापि जप्त्वा ह्यथ समर्पयेत् ।। 30.11 ।।

ततो मुहूर्त्तमेकन्तुध्यायेद्देवं हृदि स्थितम् ।।
शुद्धस्फटिकसंकाशं सूर्य्यकोटिसमप्रभम् ।। 30.12 ।।

प्रसन्नवदनं सौम्यं स्फुरन्मकरकुण्डलम् ।।
किरीटिनमुदाराङ्गं वनमालासमन्वितम् ।। 30.13 ।।

परब्रह्मस्वरूपं च श्रीधरं चिन्तयेत्सुधीः ।।
अनेन चैव स्तोत्रेण स्तुवीत परमेश्वरम् ।। 30.14 ।।

श्रीनिवासाय देवाय नमः श्रीपतये नमः ।।
श्रीधराय सशार्ङ्गाय श्रीप्रदाय नमोनमः ।। 30.15 ।।

श्रीवल्लभाय शान्ताय श्रीमते च नमोनमः ।।
श्रीपर्वतनिवासाय नमः श्रेयस्कराय च ।। 30.16 ।।

श्रेयसां पतये चैव ह्याश्रमाय नमोनमः ।।
नमः श्रेयः स्वरूपाय श्रीकराय नमोनमः ।। 30.17 ।।

शरण्याय वरेण्याय नमो भूयो नमोनमः ।।
स्तोत्रं कृत्वा नमस्कृत्य देवदेवं विसर्जयेत् ।। 30.18 ।।

इति रुद्रं समाख्यातां पूजां विष्णोर्महात्मनः ।।
यः करोति महाभक्त्या स याति परमं पदम् ।। 30.19 ।।

यः पठतेऽध्यायं विष्णुपूजाप्रकाशकम् ।।
स विधूयेत पापानि याति विष्णोः परं पदम् ।। 30.20 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्रीधरा (विष्णव) र्चनविधिर्नाम त्रिंशोऽध्यायः ।। ३० ।।

**।।रुद्र उवाच ।।**
भूय एवं जगन्नाथ पूजां कथय मे प्रभो ।।
यया तरेयं संसारसागरं ह्यतिदुस्तरम् ।। 31.1 ।।

**।।हरिरुवाच ।।**
अर्च्चनं विष्णुदेवस्य वक्ष्यामि वृषभध्वज ।।
तच्छृणुष्व महाभाग भुक्तिमुक्तिप्रदं शुभम् ।। 31.2 ।।

कृत्वा स्नानं ततः सन्ध्यां ततो यागगृहं व्रजेत् ।।
प्रक्षाल्य पाणी पादौ च आचम्य च विशेषतः ।। 31.3 ।।

मूलमन्त्रं समस्तं तु हस्तयोर्व्यापकं न्यसेत् ।।
मूलमन्त्रं च देवस्य श्रृणु रुद्र वदामि ते ।। 31.4 ।।

ॐ श्रीं ह्रीं श्रीधराय विष्णवे नमः ।।
अयं मन्त्रः सुरेशस्य विष्णोरीशस्य वाचकः ।। 31.5 ।।

सर्वव्याधिहरश्चैव सर्वग्रहहरस्तथा ।।
सर्वपापहरश्चैव भक्तिमुक्तिप्रदायकः ।। 31.6 ।।

अङ्गन्यासं ततः कुर्य्यांदेभिर्मन्त्रौर्विचक्षणः ।।
ॐ हां हृदयाय नमः ।।
ॐ हीं शिरसे स्वाहा ।।
ॐ हूं शिखायै वषट् ।।
ॐ हैं कवचाय हुं ।।
ॐ हौं नेत्रत्रयाय वौषट् ।।
ॐ हः अस्त्राय फट् ।। 31.7 ।।

इति मन्त्रः समाख्यातो मया ते प्रभविष्णुना ।।
न्यासं कृत्वात्मनो मुद्रां दर्शयेद्विजितात्मवान् ।। 31.8 ।।

ततो ध्यायेत्परं विष्णु हृत्कोटरसमाश्रितम् ।।
शङ्खचक्रसमायुक्तं कुन्देन्दुधवलं हरिम् ।। 31.9 ।।

श्रीवत्सकौस्तुभयुतं वनमालासमन्वितम् ।।
रत्नहारकिरीटेन संयुक्तं परमेश्वरम् ।। 31.10 ।।

अहं विष्णुरिति ध्यात्वा कृत्वा वै शोधनादिकम् ।।
यं क्षौं रमिति बीजैश्च कठिनीकृत्य नामभिः ।। 31.11 ।।

अण्डमुत्पाद्य च ततः प्रणवेनैव भेदयेत् ।।

तत्र पूर्वोक्तरूपं तु भावयित्वा वृषध्वज || 31.12 ||

आत्मपूजां ततः कुर्य्याद्गन्धपुष्पादिभिः शुभैः ||
आवाह्य पूजयेत्सर्वा देवता आसनस्य याः || 31.13 ||

मन्त्रैरेभिर्महादेव तन्मन्त्रं शृणु शंकर ||
विष्णवासनदेवता आगच्छत || 31.14 ||

ॐ समस्तपरिवारायाच्युताय नमः ||
ॐ धात्रे नमः ||
ॐ विधात्रे नमः ||
ॐ गङ्गायै नमः ||
ॐ यमुनायै नमः ||
ॐ शङ्खनिधये नमः ||
ॐ पद्मनिधये नमः ||
ॐ चण्डाय नमः ||
ॐ प्रचण्डाय नमः ||
ॐ द्वारश्रियै नमः ||
ॐ आधारशक्त्यै नमः ||
ॐ कूर्म्माय नमः ||
ॐ अनन्ताय नमः ||
ॐ श्रियै नमः ||
ॐ धर्म्माय नमः ||
ॐ ज्ञानाय नमः ||
ॐ वैराग्याय नमः ||
ॐ ऐश्वर्याय नमः ||
ॐ अधर्म्माय नमः ||
ॐ अज्ञानाय नमः ||
ॐ अवैराग्याय नमः ||
ॐ अनैश्वर्याय नमः ||
ॐसं सत्त्वाय नमः ||
ॐ रं रजसे नमः ||
ॐ तं तमसे नमः ||
ॐ कं कन्दाय नमः ||
ॐ नं नालाय नमः ||
ॐ लां पद्माय नमः ||
ॐ अं अर्कमण्डलाय नमः ||
ॐ सों सोममण्डलाय नमः ||
ॐ वं वह्निमण्डलाय नमः ||

ॐ विमलायै नमः ।।
ॐ उत्कर्षिण्यै नमः ।।
ॐ ज्ञानायै नमः ।।
ॐ क्रियायै नमः ।।
ॐ योगायै नमः ।।
ॐ प्रह्व्यै नमः ।।
ॐ सत्यायै नमः ।।
ॐ ईशानायै नमः ।।
ॐ अनुग्रहायै नमः ।। 31.15 ।।

गन्धपुष्पादिभिस्त्वेतैर्मन्त्रैरेतास्तु पूजयेत् ।।
पूजयित्वा ततो विष्णुं सृष्टिसंहारकारिणम् ।। 31.16 ।।

आवाह्य मण्डले रुद्र पूजयेत्परमेश्वरम् ।।
अनेन विधिना रुद्र सर्वपापहरं परम् ।। 31.17 ।।

यथात्मनि तथा देवे न्यासं कुर्वीत चादितः ।।
मुद्रां प्रदर्शयेत्पश्चादर्घ्यादीनर्पयेत्ततः ।। 31.18 ।।

स्नानां कुर्य्यात्ततो वस्त्रं दद्यादाचमनं ततः ।।
गन्धपुष्पं तथा धूपं दीपं दद्याच्चरुं ततः ।। 31.19 ।।

प्रदक्षिणं ततो जप्यं ततस्तस्मिन्सर्पयेत् ।।
अङ्गादीनां स्वमन्त्रैश्च पूजां कुर्वीत साधकः ।। 31.20 ।।

देवस्य मूलमन्त्रेणेत्येवं विद्धि वृषध्वज ।।
मन्त्राञ्छृणु त्रिनेत्र त्वं कथ्यमानान्मयाधुना ।। 31.21 ।।

ॐ हां हृदयाय नमः ।।
ॐ हीं शिरसे नमः ।।
ॐ हूं शिखायै नमः ।।
ॐ हैं कवचाय नमः ।।
ॐ हौं नेत्रत्रयाय नमः ।।
ॐ हः अस्त्राय नमः ।।
ॐ श्रियै नमः ।।
ॐ शङ्काय नमः ।।
ॐ पद्माय नमः ।।
ॐ चक्राय नमः ।।
ॐ गदायैनमः ।।
ॐ श्रीवत्साय नमः ।।

ॐ कौस्तुभाय नमः ।।
ॐ वनमालायै नमः ।।
ॐ पीताम्बराय नमः ।।
ॐ खड्गाय नमः ।।
ॐ मुसलाय नमः ।।
ॐ पाशाय नमः ।।
ॐ अङ्कुशाय नमः ।।
शार्ङ्गाय नमः ।।
ॐ शराय नमः ।।
ॐ ब्रह्मणे नमः ।।
ॐ नारादाय नमः ।।
ॐ पूर्वसिद्धेभ्यो नमः ।।
ॐ भागवतेभ्यो नमः ।।
ॐ गुरुभ्यो नमः ।।
ॐ परमगुरुभ्यो नमः ।।
ॐ इन्द्राय सुराधिपतये सवाहनपरिवाराय नमः ।।
ॐ अग्नये तेजोऽधिपतये सवाहनपरिवाराय नमः ।।
ॐ यमाय प्रेताधिपतये सवाहनपरिवाराय नमः ।।
ॐ निर्ऋतये रक्षोऽधिपतये सवाहनपरिवाराय नमः ।।
ॐ वरुणाय जलाधिपतये सवादनपरिवाराय नमः ।।
ॐ वायवे प्राणाधिपतये सवाहनपरिवाराय नमः ।।
ॐ सोमाय नक्षत्राधिपतये सवाहनपरिवाराय नमः ।।
ॐ ईशानाय विद्याधिपतये सवाहनपरिवाराय नमः ।।
ॐ अनन्ताय नागाधिपतये सवाहनपरिवाराय नमः ।।
ॐ ब्रह्मणे लोकाधिपतये सवाहनपरिवाराय नमः ।।
ॐ वज्राय हुं फट् नमः ।।
ॐ शक्त्यै हुं फट् नमः ।।
ॐ दंडाय हुं फट् नमः ।।
ॐ खड्गाय हुं फट् नमः ।।
ॐ पाशाय हुं फट् नमः ।।
ॐ ध्वजाय हुं फट् नमः ।।
ॐ गदायै हुं फट् नमः ।।
ॐ त्रिशूलाय हुं फट् नमः ।।
ॐ चक्राय हुं फट् नमः ।।
ॐ पद्माय हुं फट् नमः ।।
ॐ वौं विष्वक्सेनाय नमः ।। 31.22 ।।

एभिमन्त्रैर्महादेव पूज्या अंगादयो नरैः ।।
पूजयित्वा महात्मानं विष्णुं ब्रह्मस्वरूपिणम् ।। 31.23 ।।

स्तुवीत चानया स्तुत्या परमात्मानमव्ययम् ।।
विष्णवे देवदेवाय नमो वै प्रभविष्णवे ।। 31.24 ।।

विष्णवे वासुदेवाय नमः स्थितिकराय च ।।
ग्रसिष्णवे नमश्चैव नमः प्रलयशायिने ।। 31.25 ।।

देवानां प्रभवे चैव यज्ञानां प्रभवे नमः ।।
मुनीनां प्रभवे नित्यं यक्षाणां प्रभविष्णवे ।। 31.26 ।।

जिष्णवे सर्वदेवानां सर्वगाय महात्मने ।।
ब्रह्मेन्द्ररुद्रवन्द्याय सर्वेशाय नमोनमः ।। 31.27 ।।

सर्वलोकहितार्थाय लोकाध्यक्षाय वै नमः ।।
सर्वगोप्त्रे सर्वकर्त्रे सर्वदुष्टविनाशिने ।। 31.28 ।।

वरप्रदाय शान्ताय वरेण्याय नमोनमः ।।
शरण्याय सुरूपाय धर्मकामार्थदायिने ।। 31.29 ।।

स्तुत्वा ध्यायेत्स्वहृदये ब्रह्मरूपिणमव्ययम् ।।
एवं तु पूजयेद्विष्णुं मूलमन्त्रेण शंकर ।। 31.30 ।।

मूलमन्त्रं जपेद्वापि यः स याति नरो हरिम् ।।
एतत्ते कथितं रुद्र विष्णोरर्चनमुत्तमम् ।। 31.31 ।।

रहस्यं परमं गुह्यं भुक्तिमुक्तिप्रदं परम् ।।
एतद्यश्च पठेद्विद्वान्विष्णुभक्तः पुमान्हर ।।
श्रृणुयाच्छ्रावयेद्वापि विष्णुलोकं स गच्छति ।। 31.32 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुपूजाविधिर्नामैकत्रिंशोध्यायः ।। 31 ।।

**।।महेश्वर उवाच ।।**
पञ्चतत्त्वार्चनं ब्रूहि शंखचक्रगदाधर ! ।।
येन विज्ञानमात्रेण नरो याति परं पदम् ।। 32.1 ।।

**।।हरिरुवाच ।।**
पञ्चतत्त्वार्चनं वक्ष्ये तव शङ्कर सुव्रत ।।
मङ्गल्यं मङ्गलं दिव्यं रहस्यं कामदं परम् ।। 32.2 ।।

तच्छृणुष्व महादेव पवित्रं कलिनाशनम् ।।
एक एवाव्ययः शांतः परमात्मा सनातनः ।। 32.3 ।।

वासुदेवो ध्रुवः शुद्धः सर्वव्यापी निरञ्जनः ।।
स एव मायाया देव पञ्चधा संस्थितो हरिः ।। 32.4 ।।

लोकानुग्रहकृद्विष्णुः सर्वदुष्टविनाशनः ।।
वासुदेवस्वरूपेण तथा सङ्कर्षणेन च ।। 32.5 ।।

तथा प्रद्युम्नरूपेणानिरुद्धाख्येन च स्थितः ।।
नारायणस्वरूपेण पञ्चधा ह्यद्वयः स्थितः ।। 32.6 ।।

एतेषां वाचकान्मंत्रानेताञ्छृणु वृषध्वज ! ।।
ॐ अं वासुदेवाय नमः ।।
ॐ आं संकर्षणाय नमः ।।
ॐ अं प्रद्युम्नाय नमः ।।
ॐ अनिरुद्धाय नमः ।।
ॐ ॐ नारायणाय नमः ।। 32.7 ।।

पञ्च मंत्राः समाख्याता देवानां वाचकास्तव ।।
सर्वपापहराः पुण्याः सर्वरोगविनाशनाः ।। 32.8 ।।

अधुना संप्रवक्ष्यामि पञ्चतत्त्वार्चनं शुभम् ।।
विधिना येन कर्त्तव्यं यैर्वा मंत्रैश्च शङ्कर ! ।। 32.9 ।।

आदौ स्नानं प्रकुर्वीत स्नात्वा सन्ध्यां समाचरेत् ।।
अर्चनागारमासाद्य प्रक्षाल्याङ्घ्र्यादिकं तथा ।। 32.10 ।।

आचम्योपविशेत्प्राज्ञो बद्धासनमभीप्सितम् ।।
शोषणादि ततः कुर्य्याद् अं क्षौं रमिति मंत्रकैः ।। 32.11 ।।

सामान्यं कठिनीकृत्य चाण्डमुत्पादयेत्ततः ।।
विभिद्याण्डं ततो ह्यण्डे भावयेत्परमेश्वरम् ।। 32.12 ।।

वासुदेवं जगन्नाथं पीतकौशेयवाससम् ।।
सहस्त्रादित्यसङ्काशं स्फुरन्मकरकुण्डलम् ।। 32.13 ।।

आत्मनो हृदि पद्मे तु ध्यायेत्तु परमेश्वरम् ।।
ततः सङ्कर्षणं देवमात्मानं चिन्तयेत्प्रभुम् ।। 32.14 ।।

प्रद्युम्नमनिरुद्धं च श्रीमन्नारायणं ततः ।।
इंद्रादींश्च सुरांस्तस्माद्देवदेवात्समुत्थितान् ।। 32.15 ।।

चिन्तयेच्च ततो न्यासं कुर्य्या द्वै कारयोर्द्वयोः ।।
व्यापकं मूलमंत्रेण चाङ्गन्यासं ततः परम् ।। 32.16 ।।

अङ्गमन्त्रैर्महादेव ! तान्मंत्राञ्श्रृणु सुव्रत ! ।।
ॐ आं हृदयाय नमः ।।
ॐ ईं शिरसे नमः ।।
ॐ ऊं शिखायै नमः ।।
ॐ ऐं कवचाय नमः ।।
ॐ औं नेत्रत्रयाय नमः ।।
ॐ अः अस्त्राय फट् ।। 32.17 ।।

ॐ समस्तपरिवारायाच्युताय नमः ।।
ॐ धात्रे नमः ।।
ॐ विधात्रे नमः ।।
ॐ आधारशक्तयै नमः ।।
ॐ कूर्माय नमः ।।
ॐ अनंताय नमः ।।
ॐ पृथिव्यैनमः ।।
ॐ धर्माय नमः ।।
ॐ धर्माय नमः ।।
ॐ ज्ञानाय नमः ।।
ॐ वैराग्याय नमः ।।
ॐ ऐश्वर्य्याय नमः ।।
ॐ अज्ञानाय नमः ।।
ॐ अनैश्वर्य्याय नमः ।।
ॐ अं अर्कमण्डलाय नमः ।।
ॐ सों सोममण्डलाय नमः ।।
ॐ वं वह्निमण्डलाय नमः ।।
ॐ वं वासुदेवाय परब्रह्मणे शिवाय तेजोरूपाय व्यापिने सर्वदेवाधिदेवाय नमः ।।
ॐ पाञ्चजन्याय नमः ।।
ॐ सुदर्शनाय नमः ।।

ॐ गदायै नमः ।।
ॐ पद्माय नमः ।।
ॐ श्रियै नमः ।।
ॐ ह्रियै नमः ।।
ॐ पुष्ट्यै नमः ।।
ॐ गीत्यै नमः ।।
ॐ शक्त्यै नमः ।।
ॐ प्रीत्यै नमः ।।
ॐ इन्द्राय नमः ।।
ॐ अग्नये नमः ।।
ॐ यमाय नमः ।।
ॐ निर्ऋतये नमः ।।
ॐ वरुणाय नमः ।।
ॐ वायवे नमः ।।
ॐ सोमाय नमः ।।
ॐ ईशानाय नमः ।।
ॐ अनन्ताय नमः ।।
ॐ ब्रह्मणे नमः ।।
ॐ विष्वक्सेनाय नमः ।। 32.18 ।।

एते मन्त्राः समाख्यातास्तव रुद्र समासतः ।।
पूजा चैव प्रकर्त्तव्या मण्डले स्वस्तिकादिके ।। 32.19 ।।

ॐ पद्माय नमः ।।
अङ्गन्यासं च कृत्वा तु मुद्राः सर्वाः प्रदर्शयत् ।।
आत्मानं वासुदेवं च ध्यात्वा चैव परेश्वरम् ।। 32.20 ।।

आसनं पूजयेत्पश्चादावाहय विधिवन्नरः ।।
द्वारे धातुर्विधातुश्च पूजा कार्य्या वृषध्वज ।। 32.21 ।।

गरुडं पूजयेदग्रे वासुदेवस्य शङ्कर ।।
शङ्खादिपद्मपर्य्यन्तं मध्यदेशे प्रपूजयेत् ।। 32.22 ।।

धर्मं ज्ञानं च वैराग्यमैश्वर्यं पूर्वदेशतः ।।
आग्नेयादिष्वर्चयेद्वै अधर्मादिचतुष्टयम् ।। 32.23 ।।

मण्डलत्रयमध्ये तु कीर्त्तिता हयसनस्थितिः ।।
पूर्वादिपद्मपत्रेषु पूज्याः संकर्षणादयः ।। 32.24 ।।

कर्णिकायां वासुदेवं पूजयेत्परमेश्वरम् ।।

पाञ्चजन्यादयः पूज्याः ऐशान्यादिषु संस्थिताः ।। 32.25 ।।

शक्तयश्चैव पूर्वादौ देवदेवस्य शङ्कर ।।
इन्द्रादयो लोकपालाः पूज्याः पूर्वादिषु स्थिताः ।। 32.26 ।।

अधो नाग तदूर्द्ध्वन्तु ब्रह्माणं पूजयेत्सुधीः ।।
इति स्थानक्रमो ज्ञेयो मण्डले शङ्कर त्वया ।। 32.27 ।।

आवाह्य मण्डले देवं कृत्वा न्यासं तु तस्य च ।।
मुद्रां प्रदर्श्य पाद्यदीन्ददद्यान्मूलेन शङ्कर ।। 32.28 ।।

स्नानं वस्त्रं तथाचामं गन्धं पुष्पं च धूपकम् ।।
दीपं नैवेद्यमाचामं नमस्कारं प्रदक्षिणम् ।।
कुर्य्याच्छङ्कर मूलेन जपं चापि समर्पयेत् ।। 32.29 ।।

इदं स्तोत्रं जपेत्पश्चाद्वासुदेवमनुस्मरन् ।।
ॐ नमो वासुदेवाय नमः सकर्षणाय च ।। 32.30 ।।

प्रद्युम्नायादिदेवायानिरुद्धाय नमोनमः ।।
नमो नारायणायैव नरायणां पतये नमः ।। 32.31 ।।

नरपूज्याय कीर्त्याय स्तुत्याय वरदाय च ।।
अनादिनिधनायैव पुराणाय नमोनमः ।। 32.32 ।।

सृष्टिसंहारकर्त्रे च ब्रह्मणः पतये नमः ।।
मनो वै वेदवेद्याय शङ्खचक्रधराय च ।। 32.33 ।।

कलिकल्मषहर्त्रे च सुरेशाय नमोनमः ।।
संसारवृक्षच्छेत्रे च मायाभेत्रे नमोनमः ।। 32.34 ।।

बहुरूपाय तीर्थाय त्रिगुणायागुणाय च ।।
ब्रह्मविष्णवीशरूपय मोक्षदाय नमोनमः ।। 32.35 ।।

मोक्षद्वाराय धर्माय निर्माणाय नमोनमः ।।
सर्वकामप्रदायैव परब्रह्मस्वरूपिणे ।। 32.36 ।।

संसारसागरे घोरे निमग्नं मां समुद्धर ।।
त्वदन्यो नास्ति देवेश नास्ति त्राता जगत्प्रभो ।। 32.37 ।।

त्वामेव सर्वगं विष्णुं गतोऽहं शरणं गतः ।।
ज्ञानदीपप्रदानेन तमोमुक्तं प्रकाशय ।। 32.38 ।।

एवं स्तुवीत देवेशं सर्वक्लेशविनाशनम् ।।
अन्यैश्चवैदिकेः स्तोत्रैः स्तुत्वा वै नीललोहित ।। 32.39 ।।

पञ्चतत्त्वसमायुक्तं ध्यायोद्विष्णुं नरो हृदि ।।
विसर्जयत्तता देवमिति पूजा प्रकीर्तिता ।। 32.40 ।।

सर्वकामप्रदा श्रेष्ठा वासुदेवस्य शङ्कर ।।
एतत्पूजनमात्रेण कृतकृत्यो भवेन्नरः ।। 32.41 ।।

इदं च यः पठेद्रुद्र पञ्चतत्त्वार्चनं नरः ।।
श्रृणुयाच्छ्रवायेद्वापि विष्णुलोकं स गच्छति ।। 32.42 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पंचतत्त्वा(विष्णव) र्च नविधिर्नाम द्वात्रिंशोऽध्यायः ।। 32 ।।

**।।रुद्र उवाच ।।**

सुदर्शनस्य पूजां मे वद शङ्खगदाधर ।।
ग्रहरोगादिकं सर्वं यत्कृत्वा नाशमेति वै ।। 33.1 ।।

**हरिरुवाच ।।**

सुदर्शनस्य चक्रस्य श्रृणु पूजां वृषध्वज ।।
स्नानमादौ प्रकुर्वीत पूजयेच्च हरिं तत ।। 33.2 ।।

मूलमन्त्रेण वै न्यासं मूलमन्त्रं श्रृणुष्व च ।।
सहस्रारं हुं फट् नमो मन्त्रः प्रणवपूर्वकः ।। 33.3 ।।

कथितः सर्वदुष्टानां नाशको मन्त्रभेदकः ।।
ध्यायेत्सुदर्शनं देवं हृदि पद्मेऽमले शुभे ।। 33.4 ।।

शङ्कचक्रगदापद्मधरं सौम्यं किरीटिनम् ।।
आवाह्य मण्डले देवं पूर्वोक्तविधिना हर ।। 33.5 ।।

पूजयेद्गन्धपुष्पाद्यैरुपचारैर्महेश्वर ।।
पूजयित्वा जपेन्मन्त्रं शतमष्टोत्तरं नरः ।। 33.6 ।।

एवं यः कुरुते रुद्र ! चक्रस्यार्चनमुत्तमम् ।।
सर्वरोगविनिर्मुक्तो विष्णुलोकं समाप्नुयात् ।। 33.7 ।।

एतत्स्तोत्रं जपेत्पश्चात्सर्वव्याधिविनाशनम् ।।
नमः सुदर्शनायैव सहस्रादित्यवर्चसे ।। 33.8 ।।

ज्वालामालाप्रदीप्ताय सहस्राराय चक्षुषे ।।
सर्वदुष्टविनाशाय सर्वपातकमर्दिने ।। 33.9 ।।

सुचक्राय विचक्राय सर्वमन्त्रविभेदिने ।।
प्रसवित्रे जगद्धात्रे जगद्विध्वंसिने नमः ।। 33.10 ।।

पालनार्थाय लोकानां दुष्टासुरविनाशिने ।।
उग्राय चैव सौम्याय चण्डाय च नमोनमः ।। 33.11 ।।

नमश्चक्षुः स्वरूपाय संसारभयभेदिने ।।
मायापञ्जरभेत्रे च शिवाय च नमोनमः ।। 33.12 ।।

ग्रहातिग्रहरूपाय ग्रहाणां पतेय नमः ।।
कालाय मृत्यवे चैव भीमाय च नमोनमः ।। 33.13 ।।

भक्तानुग्रहदात्रे च भक्तगोप्त्रे नमोनमः ।।

विष्णुरूपाय शान्ताय चायुधानां धराय च ।। 33.14 ।।

विष्णुशस्त्राय चक्राय नमो भूयो नमोनमः ।।
इति स्तोत्रं महापुण्यं चक्रस्य तव कीर्त्तितम् ।। 33.15 ।।

यः पठेत्परया भक्त्या विष्णुलोकं स गच्छति ।।
चक्रपूजाविधिं यश्च पठेद्रुद्र जितेन्द्रियः ।।
स पापं भस्मसात्कृत्वा विष्णुलोकाय कल्पते ।। 33.16 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सुदर्शनपूजाविधिर्नाम त्रयस्त्रिंशोऽध्यायः ।। 33 ।।

**।।रुद्र उवाच ।।**
पुनर्देवार्चनं ब्रूहि हृषीकेश गदाधर ।।
श्रृण्वतो नास्ति तृप्तिर्मे गदतस्तव पूजनम् ।। 34.1 ।।

**हरिरुवाच ।।**
हयग्रीवस्य देवस्य पूजनं कथयामि ते ।।
तच्छृणुष्व जगन्नाथो येन विष्णुः प्रतुष्यति ।। 34.2 ।।

मूलमन्त्रं महादेव हयग्रीवस्य वाचकम् ।।
प्रवक्ष्यामि परं पुण्यं तदादौ श्रृणु शङ्कर ।। 34.3 ।।

ॐ सौं क्षौं शिरसे नमः इति प्रणवसंयुतः ।।
अयं नवाक्षरोमन्त्रः सर्वविद्याप्रदायकः ।। 34.4 ।।

अस्याङ्गानि महादेव ताञ्छृणुष्व वृषध्वज ।।
ॐ क्षां हृदयाय नमः ।।
ॐ क्षीं शिरसे स्वाहाशिरः प्रोक्तं क्षूं वषट् तथा ।। 34.5 ।।

ॐ कारयुक्ता देवस्य शिखा ज्ञेया वृषध्वज ।।
ॐ क्षैं कवचाय हुं वै कवचं परिकीर्त्तितम् ।। 34.6 ।।

ॐ क्षौं नेत्रत्रयाय वौषट् नेत्रं देवस्य कीर्तितम् ।।
ॐ हः अस्त्राय फट् अस्त्रं देवस्य कीर्त्तितम् ।। 34.7 ।।

पूजाविधिं प्रवक्ष्यामि तन्मे निगदतः श्रृणु आदौ स्नात्वा तथाचम्य ततो यागगृहं व्रजेत् ।। 34.8 ।।

ततः प्रविश्य विधिवत्कुर्य्याद्वं शोषणादिकम् ।।
यं क्षौं रमिति बीजैश्च कठिनीकृत्य लमिति ।। 34.9 ।।

अण्डमुत्पाद्य च ततः ॐ कारेणैव भेदयेत् ।।
अण्डमध्ये हयग्रीवमात्मानं परिचिन्तयेत् ।। 34.10 ।।

शङ्खकुन्देन्दुधवलं मृणालरजतप्रभम् ।।
गोक्षीरसदृशं तद्वत्सूर्यकोटिसमग्रभम् ।।
शङ्खं चक्रं गदां पद्मं धारयन्तं चतुर्भुजम् ।। 34.11 ।।

किरीटिनं कुण्डलिनं वनमालासमन्वितम् ।।
सुचक्रं सुकपोलं च पीताम्बरधरं विभुम् ।। 34.12 ।।

भावयित्वा महात्मानं सर्वदेवैः समन्वितम् ।।
अङ्गमन्त्रैस्ततो न्यासं मूलमन्त्रेण वै तथा ।। 34.13 ।।

ततश्च दर्शयेन्मुद्रां शङ्खपद्मादिकां शुभाम् ।।
ध्यायेद्ध्यात्वार्चयेद्विष्णुं मूलमन्त्रेण शङ्कर ।। 34.14 ।।

ततश्चावाहयेद्रुद्र देवता आसनस्य याः ।।
ॐ हयग्रीवासनस्य आगच्छत च देवताः ।। 34.15 ।।

आवाह्य मण्डले तास्तु पूजयेत्स्वस्तिकादिके ।।
द्वारे धातुर्विधातुश्च पूजा कार्य्या वृषध्वज ।। 34.16 ।।

समस्तपरिवाराय अच्युताय नम इति ।।
अस्य मध्येऽर्चनं कार्य्यं द्वारे गङ्गाञ्च पूजयेत् ।। 34.17 ।।

यमुनां च महादेवीं शङ्खपद्मनिधई तथा ।।
गरुडं पूजयेदग्रे मध्ये शक्तिञ्च पूजयेत् ।। 34.18 ।।

आधाराख्यां महादेव ततः कूर्मं समर्चयेत् ।।
अनन्तं पृथिवीं पश्चाद्धर्मज्ञाने(नौ) ततोऽर्चयेत् ।। 34.19 ।।

वैराग्यमथ चैश्वर्य्यमाग्नेयादिषु पूजयेत् ।।
अधर्माज्ञानावैराग्यानैश्वर्ग्यादींस्तु पूर्वतः ।। 34.20 ।।

सत्त्वं रजस्तमश्चैव मध्यदेशेऽथ पूजयेत् ।।
नन्दं नालं च पद्मं च मध्ये चैव प्रपूजयेत् ।। 34.21 ।।

अर्कसोमाग्निसंज्ञानां मण्डलानां हि पूजनम् ।।
मध्यदेशे प्रकर्त्तव्यमिति रुद्र प्रकीर्त्तितम् ।। 34.22 ।।

विमलोत्कर्षिणी ज्ञाना क्रियायोगे वृषध्वज ।।
प्रह्वी सत्या तथेशानानुग्रहौ शक्तयो ह्यमूः ।। 34.23 ।।

पूर्वादिषु च पत्रेषु पूज्याश्च विमलादयः ।।
अनुग्रहा कर्णिकायां पूज्या श्रेयोऽर्थिभिर्नरैः ।। 34.24 ।।

प्रणवाद्यैर्नमोऽन्तैश्च चतुर्थ्यन्तैश्च नामभिः ।।
मन्त्रैरेभिर्महादेव आसनं परिपूजयेत् ।। 34.25 ।।

स्नानगन्धप्रदानेन पुष्पधूपप्रदानतः ।।
दीपनैवेद्यदानेन आसनस्यार्चनं शुभम् ।। 34.26 ।।

कर्तव्यं विधिनानेन इति ते हर कीर्त्तितम् ।।
ततश्चावाहयेद्देवं हयग्रीवं सुरेश्वरम् ।। 34.27 ।।

वामनासापुटेनैव आगच्छन्तं विचिन्तयेत् ।।
आगच्छतः प्रयोगेण मूलमन्त्रेण शङ्कर ।। 34.28 ।।

आवाहनं प्रकर्त्तव्यं देवदेवस्य शङ्खिनः ।।
आवाह्यमण्डले तस्य न्यासं कुर्य्यादतन्द्रितः ।। 34.29 ।।

न्यासं कृत्वा च तत्रस्थं चिन्तयेत्परमेश्वरम् ।।
हयग्रीवं महादेवं सुरासुरनमस्कृतम् ।। 34.30 ।।

इन्द्रादिलोकपालैश्च संयुक्तं विष्णुमव्ययम् ।।
ध्यात्वा प्रदर्शयेन्मुद्राः शङ्खचक्रादिकाः शुभाः ।। 34.31 ।।

पाद्यार्घ्याचमनीयानि ततो दद्याच्च विष्णवे ।।
स्नापयेच्च ततो देवं पद्मनाभमनामयम् ।। 34.32 ।।

देवं संस्थाप्य विधिवद्वस्त्रं दद्याद्वृषध्वज ।।
ततो ह्याचमनं दद्यादुपवीतं ततः शुभम् ।। 34.33 ।।

ततश्च मण्डले रुद्र ध्यायेद्देवं परेश्वरम् ।।
ध्यात्वा पाद्यादिकं भूयो दद्याद्देवाय शङ्कर ।। 34.34 ।।

दद्याद्भैरवदेवाय मूलमन्त्रेण शङ्कर ।।
ॐ क्षां हृदयाय नमः अनेन हृदयं यजेत् ।। 34.35 ।।

ॐ क्षीं शिरसे नमश्च शिरसः पूजनं भवेत् ।।

ॐ क्षूं शिखायै नमश्च शिखामेतेन पूजयेत् ।। 34.36 ।।

ॐ क्षैं कवचाय नमः कवचं परिपूजयेत् ।।
ॐ क्षौं नेत्राय नमश्च नेत्रं चानेन पूजयेत् ।। 34.37 ।।

ॐ क्षः अस्त्राय नम इति अस्त्रं चानेन पूजयेत् ।।
हृदयं च शिरश्चैव शिखां च कवचं तथा ।। 34.38 ।।

पूर्वादिषु प्रदेशेषु ह्येतास्तु परिपूजयेत् ।।
कोणेष्वस्त्रं यजेद्रुद्र नेत्रं मध्यै प्रपूजयेत् ।। 34.39 ।।

पूजयेत्परमां देवीं लक्ष्मीं लक्ष्मीप्रदां शुभाम् ।।
शंखं पद्मं तथा चक्रं गदां पूर्वादितोऽर्चयेत् ।। 34.40 ।।

खड्गं च मुसलं पाशमंकुशं सशरं धनुः ।।
पूजयेत्पूर्वतो रुद्र एभिर्मन्त्रैः स्वनामकैः ।। 34.41 ।।

श्रीवत्सं कौस्तुभं मालां तथा पीताम्बरं शुभम् ।।
पूजयेत्पूर्वतो रुद्र शंखचक्रगदाधरम् ।। 34.42 ।।

ब्रह्माणं नारदं सिद्धं गुरुं परगुरुं तथा ।।
गुरोश्च पादुके तद्वत्परमस्य गुरोस्तथा ।। 34.43 ।।

इन्द्रं सवाहनं चाथ परिवारयुतं तथा ।।
अग्निं यमं निर्ऋतिं च वरुणं वायुमेव च ।। 34.44 ।।

सोममीशानमेवं वै ब्रह्माणं परिपूजयेत् ।।
पूर्वादिकोर्ध्वपर्य्यन्तं पूजयेद्वृषभध्वज ।। 34.45 ।।

वज्रं शक्तिं तथा दण्डं खड्गं पाशं ध्वजं गदाम् ।।
त्रिशूलं चक्रपद्मे च आयुधान्यथ पूजयेत् ।। 34.46 ।।

विष्वक्सेनं ततो देवमैशान्यां दिशि पूजयेत् ।।
एभिर्मन्त्रैर्नमोऽन्तैश्च प्रणवाद्यैर्वृषध्वज ।। 34.47 ।।

पूजा कार्य्या महादेव ह्यनन्तस्य वृषध्वज ।।
देवस्य मूलमन्त्रेण पूजा कार्य्या वृषध्वज ।। 34.48 ।।

गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च ।।
प्रदक्षिणं नमस्कारं जप्यं तस्मै समर्पयेत् ।। 34.49 ।।

स्तुवीत चान्या स्तुत्या प्रणवाद्यैर्वृषध्वज ।।
ॐ नमो हयशिरसे विद्याध्यक्षाय वै नमः ।। 34.50 ।।

नमो विद्यास्वरूपाय विद्यादात्रे नमोनमः ।।
नमः शान्ताय देवाय त्रिगुणायात्मने नमः ।। 34.51 ।।

सुरासुरनिहन्त्रे च सर्वदुष्टविनाशिने ।।
सर्वलोकाधिपतये ब्रह्मरूपाय वै नमः ।। 34.52 ।।

नमश्चेश्वरवन्द्याय शङ्कचक्रधारय च ।।
नम आद्याय दांताय सर्वसत्त्वहिताय च ।। 34.53 ।।

त्रिगुणायागुणायैव ब्रह्मविष्णुस्वरूपिणे ।।
कर्त्रे हर्त्रे सुरेशाय सर्वगाय नमो नमः ।। 34.54 ।।

इत्येवं संस्तवं कृत्वा देवदेवं विचिन्तयेत् ।।
हृत्पद्मे विमले रुद्र शङ्खचक्रगदाधरम् ।। 34.55 ।।

सूर्यकोटिप्रतीकाशं सर्वावयवसुन्दरम् ।।
हयग्रीवोमहीशेशं परमात्मानमव्ययम् ।। 34.56 ।।

इति ते कथिता पूजा हयग्रीवस्य शङ्कर ।।
यः पठेत्परया भक्त्या स गच्छेत्परमं पदम् ।। 34.57 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे हयग्रीवपूजाविधिर्नाम चतुस्त्रिंशोऽध्यायः ।। 34 ।।

---

**।।हरिरुवाच ।।**

न्यासादिकं प्रवक्ष्यामि गायत्र्याः शृणु शङ्कर ।।
विश्वामित्रऋषिश्चैव सविता चाथ देवता ।। 35.1 ।।

ब्रह्मशीर्षा रुद्रशिखा विष्णोर्हृदयसंश्रिता ।।
विनियोगैकनयना कात्यायनसगोत्रजा ।। 35.2 ।।

त्रैलोक्यचरणा ज्ञेया पृथिवीकुक्षिसंस्थिता ।।
एवं ज्ञात्वा तु गायत्रीं जपेद्द्वादशलक्षकम् ।। 35.3 ।।

त्रिपदाष्टाक्षरा ज्ञेया चतुष्पादा षडक्षरा ।।
जेप च त्रिपदा प्रोक्ता अर्चने च चतुष्पदा ।। 35.4 ।।

न्यासे जपे तथा ध्याने अग्निकार्य्ये तथार्चने ।।
गायत्रीं विन्यसेन्नित्यं सर्वपापप्रणाशिनीम् ।। 35.5 ।।

पादाङ्गुष्ठे गुल्फमध्ये जङ्घयोर्विद्धि जानुनोः ।।
ऊर्वोर्गुह्ये च वृषणे नाड्यां नाभौ तनूदरे ।। 35.6 ।।

स्तनयोर्हृदि कण्ठौष्ठमुखे तालुनि चांसयोः ।।
नेत्रे भ्रुवार्ललाटे च पूर्वस्यां दक्षिणोत्तरे ।। 35.7 ।।

पश्चमे मूर्ध्नि चाकारं न्यसेद्वर्णान्वदाम्यहम् ।।
इन्द्रनीलं च वह्निं च पीतं श्यामं च कापिलम् ।। 35.8 ।।

श्वेतं विद्युत्प्रभं तारं कृष्णं रक्तं क्रमेण तत् ।।
श्यामं शुक्लं तथा पीतं श्वेतं वै पद्मरागवत् ।। 35.9 ।।

शङ्खवर्णं पाण्डुरं च रक्तं चासवसन्निभम् ।।
अर्कवर्णसमं सौम्यं शङ्खाभं श्वेतमेव च ।। 35.10 ।।

यद्यत्स्पृशति हस्तेन यच्च पश्यति चक्षुषा ।।
पूतं भवति तत्सर्वं गायत्र्या न परं विदुः ।। 35.11 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गायत्रीन्यासनिरूपणं नाम पञ्चत्रिंशोऽध्यायः ।। 35 ।।

**।।हरिरुवाच ।।**

सन्ध्याविधिं प्रवक्ष्यामि श्रृणु रुद्राघनाशनम् ।।
प्राणायामत्रयं कृत्वा सन्ध्यास्नानमुपक्रमेत् ।। 36.1 ।।

सप्रणवां सव्याहृतिं गायत्रीं शिरसा सह ।।
त्रिः पठेदायतप्रणः प्राणायामः स उच्यते ।। 36.2 ।।

मनोवाक्कायजं दोषं प्राणायामैर्दहेद्द्विजः ।।
तस्मात्सर्वेषु कालेषु प्राणायामपरो भवेत् ।। 36.3 ।।

सायमग्निश्च मेत्युक्ता प्रातः सूर्य्येत्यपः पिबेत् ।।
आपः पुनन्तु मध्याह्ने उपस्पृश्य यथाविधि ।। 36.4 ।।

आपोहिष्ठेत्यृचा कुर्य्यान्मार्जनं तु कुशोदकैः ।।
प्रणवेन तु संयुक्तं क्षिपेद्वारि पदेपदे ।। 36.5 ।।

रजस्तमः स्वमोहोत्थाञ्जाग्रत्स्वप्नसुषुप्तिजान् ।।
वाङ्मनः कर्मजान्दोषान्नवैतान्नवभिर्दहेत् ।। 36.6 ।।

समुद्धृत्योदकं पाणौ जप्त्वा च द्रुपदां क्षिपेत् ।।
त्रिपडष्टौ द्वादशधा वर्त्तयेदघमर्पणम् ।। 36.7 ।।

उदुत्यंचित्रमित्याभ्यामुपतिष्ठेद्दिवाकरम् ।।
दिवा रात्रौ च यत्पापं सर्वं नश्यति तत्क्षणात् ।। 36.8 ।।

पूर्वसंध्यां जपंस्तिष्ठेत्पश्चिमामुपविश्य च ।।
महाव्याहृतिसंयुक्तां गायत्रीं प्रणवान्विताम् ।। 36.9 ।।

दशभिर्जन्मजनितं शतेन तु पुरा कृतम् ।।
त्रियुगं तु सहस्त्रेण गायत्रीं हन्ति दुष्कृतम् ।। 36.10 ।।

रक्ता भवति गायत्री सावित्री शुक्लवर्णिका ।।
कृष्णा सरस्वती ज्ञेया संध्यात्रयमुदाहृतम् ।। 36.11 ।।

ॐ भूर्विन्यस्य हृदये ॐ भुवः शिरसि न्यसेत् ।।
ॐ स्वरिति शिखायां च गायत्र्याः प्रथमं पदम् ।। 36.12 ।।

विन्यसेत्कवचे विद्वान्द्वितीयं नेत्रयोर्न्यसेत् ।।
तृतीयेनाङ्गविन्यासं चतुर्थं सर्वतो न्यसेत् ।। 36.13 ।।

संध्याकाले तु विन्यस्य जपेद्वै वेदमातरम् ।।
शिवस्तस्यास्तु सर्वाहणे प्राणायामपरं न्यसेत् ।। 36.14 ।।

त्रिपदा या तु गायत्री ब्रह्मविष्णुमहेश्वरी ।।
विनियोगमृषिच्छन्दो ज्ञात्वा तु जपमारभेत् ।। 36.15 ।।

सर्वपापविनिर्मुक्तो ब्रह्मलोकमवाप्नुयात् ।।
परोरजसि सारं तं तुरीयपदमीरितम् ।। 36.16 ।।

तं हन्ति सूर्य्यः सन्ध्यायां नोपास्तिं कुरुते तु यः ।।
तुरीयस्य पदस्यापि ऋषिर्निर्मल एव च ।। 36.17 ।।

छन्दस्तु देवी गायत्री परमात्मा च देवता ।। 36.18 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे संध्याविधिर्नाम षट्त्रिंशोऽध्यायः ।। 36 ।।

**।।हरिरुवाच ।।**

गायत्री परमा देवी भुक्तिमुक्तिप्रदा च ताम् ।।
यो जपेत्तस्य पापानिविनश्यंति महांत्यपि ।। 37.1 ।।

गायत्रीकल्पमाख्यास्ये भुक्तिमुक्तिप्रदं च तत् ।।
अष्टोत्तरं सहस्त्रं वा अथवाष्टशतं जपेत् ।। 37.2 ।।

त्रिसन्ध्यं ब्रह्मलोकीस्याच्छतं जप्त्वा जलं पिबेत् ।।
संध्यायां सर्वपापघ्नीं देवीमावाह्य पूजयेत् ।। 37.3 ।।

भूर्भुवः स्वः स्वमन्त्रेण युतां द्वादशनामभिः ।।
गायत्र्यै नमः ।। सावित्र्यै सरस्वत्यै नमोनमः ।। 37.4 ।।

वेदमात्रे च सांकृत्यै ब्रह्माणी कौशिकी क्रमात् ।।
साध्व्यै सर्वार्थसाधिन्यै सहस्त्राक्ष्यै च भूर्भुवः ।। 37.5 ।।

स्वरेवं जुहुया दग्नौ समिदाज्यं हविष्यकम् ।।
अष्टोत्तरसहस्त्रं वाप्यथवाष्टशंत घृतम् ।। 37.6 ।।

धर्मकामादिसिद्ध्यर्थं जुहुयात्सर्वकर्मसु ।।
प्रतिमां चन्दनस्वर्णनिर्मितां प्रतिपूज्य च ।। 37.7 ।।

यथा लक्षं तु जप्तव्यं पयोमूलफलार्शनैः ।।
अयुतद्वयहोमेन सर्वकामानवाप्नुयात् ।। 37.8 ।।

उत्तरे शिखरे जाता भूम्यां पर्वत वासिनी ।।
ब्रह्मणा समनुज्ञाता गच्छ देवि यथासुखम् ।। 37.9 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गायत्रीकल्पनिरूपणं नाम सप्तत्रिंशोऽध्यायः ।। 37 ।।

**।।हरिरुवाच ।।**
नवम्यादौ यजेद्दुर्गां ह्रीं दुर्गे रक्षिणीति च ।।
मातर्मातर्वरे दुर्गे सर्वकामार्थसाधनि ।। 38.1 ।।

अनेन बलिदानेन सर्वकामान्प्रयच्छ मे ।।
गौरी काली उमा दुर्गा भद्रा कान्तिः सरस्वती ।। 38.2 ।।

मङ्गला विजया लक्ष्मीः शिवा नारायणी क्रमात् ।।
मार्गे तृतीयामारभ्य पूजयेन्न वियोगभाक् ।। 38.3 ।।

अष्टादशभुजां खेटकं घण्टां दर्पणं तर्जनीम् ।।
धनुर्ध्वजं डमरुकं परशुं पाशमेव च ।। 38.4 ।।

शक्तिमुशलशूलानि कपालशरकाङ्कुशान् ।।
वज्र चक्रं शलाकां च अष्टादशभुजां स्मरेत् ।। 38.5 ।।

मन्त्रः श्रीभगवत्याश्च प्रवक्ष्यामि जपादिकम् ।। 38.6 ।।

ॐ नमो भगवति चामुण्डे श्मशानवासिनि कपालहस्ते महाप्रेतसमारूढे महाविमानमालाकुले कालरात्रि बहुगणपरिवृते महामुखे बहुभुजे सुघण्टाडमरुकिङ्किणीके अट्टाट्टहासे किलिकिलि हुं सर्वनादशब्दबहुले गजचर्मप्रावृतशरीरे रुधिरमांसदिग्धे लोलग्रजिह्वे महाराक्षसि रौद्रदंष्ट्राकराले भीमाट्टाट्टहासे स्फुरितविद्युत्समप्रभे चलचल करालनेत्रे हिलिहिलि ललज्जिह्वे ह्रौं ह्रीं भृकुटिमुखि ॐ कारभद्रासने कपालमालावेष्टिते जटामुकुटशशांकधारिणि अट्टाट्टहासे किलिकिलि हुंहुं दंष्ट्राघोरांधकारिणि सर्वविघ्नविनाशिनि इदं कर्म साधय साधय शीघ्रं कुरुकुरु कहकह अङ्कुशे समनुप्रवेशय वर्गंवर्गं (वंगवंग) कम्पयकम्पय चलचल चालयचालय रुधिरमांसमद्यप्रिये हनहन कुट्टकुट्ट छिन्दछिन्द मारयमारय अनुब्रूमअनुब्रूम वज्रशरीरं साधयसाधय त्रैलोक्यगतमपि दुष्टमदुष्टं वा गृहीतमगृहीतम् आवेशयआवेशय क्रामयक्रमय नृत्यनृत्य बन्धबन्ध वल्गवल्ग कोटराक्षि उर्द्ध्वकेशि उलूकवदने करकिंकिणि करंकमालाधारिणि दहदह पचपच गृह्णगह्ण मण्डलमध्ये प्रवेशयप्रवेशय किं विलम्बसि ब्रह्मसत्येन विष्णुसत्येन ऋषिसत्येन रुद्रसत्येन आवेशयआवेशय किलिकिलि खिलिखिलि मिलिमिलि चिलिचिलि विकृतरूपधारिणि कृष्णभुजङ्ग वेष्टितशरीर सर्वग्रहावेशिनि प्रलम्भोष्ठि भ्रूमग्ननासिके विकटमुखि कपिलजटे ब्राह्मि भंजभंज ज्वलज्वल कालमुखि खलखल खरखरः पातयपा तय रक्ताक्षि धूर्णापयधूर्णापय भूमिं पातयपातय शिरो गृह्णगृह्ण चक्षुर्मोलयमीलय भंजभंज पादौ गृह्णगृह्ण मुद्रां स्फोटयस्फोटय हुं हूं फट् विदारय विदारय त्रिशूलेन भेदयभेदय वज्रेण हनहन दण्डेन ताडयताडय चेक्रण छेदयछेदय शक्तिना भेदयभेदय दंष्ट्रया दंशयदंशय कीलकेन कीलय कीलय कर्त्तारिकया पाटयपाटय अङ्कुशेन गृह्णगृह्ण ब्रह्माणि एहिएहि माहेश्वरि एहिएहि कौमारि एहिएहि वाराहि एहिएहि ऐन्द्रि एहिएहि चामुण्डे एहिएहि वैष्णावि एहिएहि हिमवन्तचारिणि एहिएहि कैलासवारीणि एहिएहि परमन्त्रं छिन्धिछिन्धि किलिकिलि बिम्बे अघोरे घोररूपिणि चामुण्डे रुरुक्रोधांधविनिः) सृते असुरक्षयंकरि आकाशगामिनि पाशेन बन्धबन्ध समये तिष्ठतिष्ठ मण्डलं प्रवेशयप्रवेशय पातयपातय गृह्णगृह्ण मुखं बन्धबन्ध चक्षुर्बन्धयबन्धय हृदयं बन्धबन्ध हस्तपादौ च बन्धबन्ध दुष्टग्रहान् सर्वान् बन्धबन्ध दिशां बन्धबन्ध विदिशां बन्धबन्ध ऊर्ध्वं बन्धबन्ध अधस्ताद् बन्धबन्ध भस्मना पानीयेन मृतिकया सर्षपैर्वा आवेशयआवेशय पातयपातय चामुण्डे किलिकिलि विच्छेह्रीं(हुं) फट् स्वाह् ।। 38.7 ।।
अष्टोत्तरपदानां हि माला मन्त्रमयी जपः ।।
एकैक्रपदमष्टसहस्त्रधा त्रिमधुराक्ततिलाष्टसहस्रहोमः ।। 38.8 ।।

महामांसेन-त्रिमधुराक्तेन अष्टोत्तरसहस्रं च एकैकं च पदं यजेत् ।।
तिलांस्त्रिमधुराक्तांश्च सहस्रं चाष्ट होमयेत् ।। 38.9 ।।

महामांसं त्रिमधुरादथ वा सर्वकर्मकृत् ।।
वारिसर्षपभस्मादिक्षेपाद्युद्धादिके जयः ।। 38.10 ।।

अष्टाविंशभुजा ध्येया अष्टादशभुजाथवा ।।
द्वादशाष्टभुजा वापि ध्येया वापि चतुर्भुजा ।। 38.11 ।।

असिखेटान्वितौ हस्तौ गदादण्डयुतौ परौ ।।
शरचापयुतौ चान्यौ खड्गमुद्गरसंयुतौ ।। 38.12 ।।

खंखघण्टान्वितौ चान्यौ ध्वजदण्डयुतौ परौ ।।
अन्यौ परशुचक्राढ्यौ डमरुदर्पणान्वितौ ।। 38.13 ।।

शक्तिहस्ताश्रितौ चान्यौ रटोणी मुसलान्वितौ ।।
पाशतोमरसंयुक्तौ ढक्रापणवसंयुतौ ।। 38.14 ।।

तर्जयन्ती परेणैव अन्यं कलकलध्वनिम् ।।
अभयस्वस्तिकाद्यौ च महिषघ्नी च सिंहगा ।। 38.15 ।।

जय त्वं किल भूतेशे सर्वभूतसमावृते ।।
रक्ष मां निजभूतेभ्यो बलिं गृहण नमोऽस्तु ते ।। 38.16 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे दुर्गाजपपूजाबलिमंत्रनिरूपणं नामाष्टत्रिंशोऽध्यायः ।। 38 ।।

**।।रुद्र उवाच ।।**

पुनर्देवार्चनं ब्रूहि संक्षेपेण जनार्दन ।।
सूर्य्यस्य विष्णुरूपस्य भुक्तिमुक्तिप्रदायकम् ।। 39.1 ।।

**।।वासुदेव उवाच ।।**

श्रृणु सूर्य्यस्य रुद्र त्वं पुनर्वक्ष्यामि पूजनम् ।।
ॐ उच्चैः श्रवसे नमः ॐ अरुणाय नमः ।।
ॐ दण्डिने नमः ।।
ॐ पिङ्गलाय नमः ।।
एते द्वारे प्रपूज्या वै एपिर्मन्त्रैर्वृषध्वज ।। 39.2 ।।

ॐ अं प्रभूताय नमः ।।
इमं तु पूजयेन्मध्ये प्रभूतामलसञ्ज्ञकम् ।।
ॐ अं विमलाय नमः ।।
ॐ अं साराय नमः ।।
ॐ अं आधाराय नमः ।।
ॐ अं परममुखाय नमः ।।
इत्याग्नेयादिकोणएषु पूज्या वै विमलादयः ।। 39.3 ।।

ॐ पद्माय नमः ।।
ॐ कर्णिकायै नमः ।।
मध्ये तु पूजयेद्रुद्र पूर्वादिषु तथैव च ।।
दीप्ताद्याः पूजयेन्मध्ये पूजयेत्सर्वतोमुखीः ।।
ॐ वां(रां) दीप्तायै नमः ।।
ॐ वीं (रीं) सूक्ष्मायै नमः ।।
ॐ वूं (रूं भद्रायै नमः ।।
ॐ वैं (रैं) जयायै नमः ।।
ॐ वौं (रौं) विभूत्यै नमः ।।
ॐ वं (रं) अघोरायै नमः ।।
ॐ वं (रं) वैद्युतायै नमः ।।
ॐ वः (रः) विजयायै नमः ।।
ॐ रो सर्वतोमुख्यै नमः ।। 39.4 ।।

ॐ अर्कासनाय नमः ।।
ॐ ह्रां सूर्य्यमूर्तये नमः ।।
एतास्तु पूजयेन्मध्ये ह्रन्मंत्राञ्छृणु शङ्कर ।।
ॐ हं सं खं खखोल्काय क्रां क्रीं सः स्वाहा सूर्य्यमूर्त्तये नमः ।।
अनेनावाहनं कुर्य्यात्स्थापनं सन्निधापनम् ।।
सन्निरोपनमन्त्रेण सकलीकरणं तथा ।। 39.5 ।।

मुद्राया दर्शनं रुद्र मूलमन्त्रेण वा हर ।।
तेजोरूपं रक्तवर्णं सितपद्मोपरि स्थितम् ।।
एकचक्ररथारूढं द्विबाहुं धृतपङ्कजम् ।। 39.6 ।।

एवं ध्यायेत्सदा सूर्य्यं मूलमन्त्रं श्रृणुष्व च ।।
ॐ ह्रां ह्रीं सः सूर्य्याय नमः ।। 39.7 ।।

वारत्रयं पद्ममुद्रां बिम्बमुद्रां च दर्शयेत् ।।
ॐ आं हृदयाय नमः ।।
ॐ अर्काय शिरसे स्वाहा ।।
ॐ अः भूर्भुवः स्वः ज्वालिनि शिखायै वषट् ।।
ॐ हुं कवचाय हुं ।।
ॐ भां नेत्राभ्यां वौषट् ।।
ॐ वः अस्त्राय फडिति ।। 39.8 ।।

आग्नेय्यामथवैशान्यां नैर्ऋत्यामर्चयेद्धर ।।
हृद्यादि हि वायव्यां नेत्रं चान्तः प्रपूजयेत् ।। 39.9 ।।

दिस्वस्त्रं पूजयेद्रुद्र सोमं तु श्वेतवर्णकम् ।।
दले पूर्वेऽर्चयेद्रुद्र बुधं चामीकरप्रभम् ।। 39.10 ।।

दक्षिणे पूजयेद्रुद्र पतिवर्णं गुरुं यजेत् ।।
पश्चिमे चैव भूतेशं उत्तरे भार्गवं सितम् ।। 39.11 ।।

रक्तमङ्गारकं चैव आग्नेये पूजयेद्धर ।।
शनैश्चरं कृष्णवर्णं नैर्ऋत्यां दिशि पूजयेत् ।। 39.12 ।।

राहुं वायव्यदेशे तु नन्द्यावर्त्तनिभिं हर ।।
ऐशान्यां धूम्रवर्णं तु केतुं सं परिपूजयेत् ।। 39.13 ।।

एभिर्मन्त्रैर्महादेव तच्छृणुष्व च शङ्कर ।। 39.14 ।।

ॐ सों सोमाय नमः ।।
ॐ बुं बुधाय नमः ।।
ॐ बृं बृहस्पतये नमः ।।
ॐ भं भार्गवाय नमः ।।
ॐ अं अंगारकाय नमः ।।
ॐ शं शनैश्चराय नमः ।।
ॐ रं राहवे नमः ।।
ॐ कं केतवे नम इति ।। 39.15 ।।

पाद्यादीन्मूलमन्त्रेण दत्त्वा सूर्य्याय शङ्कर ।।
नैवेद्यान्ते धेनुमुद्रां दर्शयेत्साधकोत्तमः ।। 39.16 ।।

जप्त्वा चाष्टसहस्त्रं तु तच्च तस्मै समर्पयेत् ।।
ऐशान्यां दिशि भूतेश तेजश्चण्डं तु पूजयेत् ।। 39.17 ।।

ॐ तेजश्चण्डाय हुं फट् स्वधा स्वाहा पौषट् ।।
निर्माल्यं चार्पयेत्तस्मै ह्यर्घ्यं दद्यात्ततो हर ।। 39.18 ।।

तिलतण्डुलसंयुक्तं रक्तचन्दनचर्चितम् ।।
गन्धोदकेन संमिश्रं पुष्पधूपसमन्वितम् ।। 39.19 ।।

कृत्वा शिरसि तत्पात्रं जानुभ्यामवनिं गतः ।।
दघ्यं तु सूर्य्याय हृन्मन्त्रेण वृषध्वज ।। 39.20 ।।

गणं गुरून्प्रपूज्याथ सर्वान्देवानन्प्रपूजयेत् ।।
ॐ गं गणपतये नमः ।।
ॐ अं गुरुभ्यो नमः ।। 39.21 ।।

सूर्य्यस्य कथिता पूजा कृत्वैतां विष्णुलोकभाक् ।। 39.22 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सूर्यार्चनप्रकारो नामैकोनचत्वारिंशोऽध्यायः ।। 39 ।।

**।। शङ्कर उवाच ।।**

माहेश्वरीं च मे पूजां वद शङ्खगदाधर ।।
यां ज्ञात्वा मानवाः सिद्धिं गच्छन्ति परमेश्वर ।। 40.1 ।।

**।। हरिरुवाच ।।**

श्रृणु माहेश्वरीं पूजां कथ्यमानां वृषध्वज ।।
आदौ स्नात्वा तथाचम्य ह्यासने चोपविश्य च ।। 40.2 ।।

न्यासं कृत्वा मण्डले वै पूजयच्चे महेश्वरम् ।।
मन्त्रैरेतैर्महेशान परिवारयुतं हरम् ।। 40.3 ।।

ॐ हां शिवासनदेवता आगच्छतेति ।।
अनेनावाहयेद्रुद्र देवता आसनस्य याः ।। 40.4 ।।

ॐ हां गणपतये नमः ।।
ॐ हां सरस्वत्यै नमः ।।
ॐ हां नन्दिने नमः ।।
ॐ हां महाकालाय नमः ।।
ॐ हां गङ्गायै नमः ।।
ॐ हां लक्ष्म्यै नमः ।।
ॐ हां महाकलायै नमः ।।
ॐ हां अस्त्राय नम इति ।। 40.5 ।।

एते द्वारे प्रपूज्या वै स्नानगन्धादिभिर्हर ।।
ॐ हां ब्रह्मणे वास्त्वधिपतये नमः ।।
ॐ हां गुरुभ्यो नमः ।।
ॐ हां आधारशक्त्यै नमः ।।
ॐ हां अनन्ताय नमः ।।
ॐ हां धर्माय नमः ।।
ॐ हां ज्ञानाय नमः ।।
ॐ हां वैराग्याय नमः ।।
ॐ हां ऐश्वर्याय नमः ।।
ॐ हां अधर्माय नमः ।।
ॐ हां अज्ञानाय नमः ।।
ॐ हां अवैराग्याय नमः ।।
ॐ हां अनैश्वर्य्याय नमः ।।
ॐ हां उर्द्ध्वच्छन्दाय नमः ।।
ॐ हां अधश्छन्दाय नमः ।।
ॐ हां पद्माय नमः ।।

ॐ हां कर्णिकायै नमः ।।
ॐ हां वामायै नमः ।।
ॐ हां ज्येष्ठायै नमः ।।
ॐ हां रौद्र्यै नमः ।।
ॐ काल्यै नमः ।।
ॐ हां कलविकरण्यै नमः ।।
ॐ बलप्रमथिन्यै नमः ।।
ॐ हां सर्वभूतदमन्यै नमः ।।
ॐ हां मनोन्मन्यै नमः ।।
ॐ हां मण्डलत्रितयाय नमः ।।
ॐ हां हौं हं शिवमूर्त्तये नमः ।।
ॐ हां विद्याधिपतये नमः ।।
ॐ हां ह्रीं हौं शिवाय नमः ।।
ॐ हां हृदयाय नमः ।।
ॐ शिरसे नमः ।।
ॐ हूं शिखायै नमः ।।
ॐ हैं कवचाय नमः ।।
ॐ हौं नेत्रत्रयाय नमः ।।
ॐ हः अस्त्राय नमः ।।
ॐ सद्योजाताय नमः ।। 40.6 ।।

ॐ हां सिद्ध्यै नमः ।।
ॐ हां ऋद्ध्यै नमः ।।
ॐ हां विद्युतायै नमः ।।
ॐ हां लक्ष्म्यै नमः ।।
ॐ हां बोधायै नमः ।।
ॐ हां काल्यै नमः ।।
ॐ हां स्वधायै नमः ।।
ॐ हां प्रभायै नमः ।। 40.7 ।।

सत्यस्याष्टौ कला ज्ञेयाः पूज्याः पूर्वादिषु स्थिताः ।। 40.8 ।।

ॐ हां वामदेवाय नमः ।।
ॐ हां रजसे नमः ।।
ॐ हां रक्षायै नमः ।।
ॐ हां रत्यै नमः ।।
ॐ हां कन्यायै नमः ।।
ॐ हां कामायै नमः ।।
ॐ हां जनन्यै नमः ।।

ॐ हां क्रियायै नमः ।।
ॐ हां वृद्ध्यै नमः ।।
ॐ हां कार्य्यायै नमः ।।
ॐ रा(धा) त्र्यै नमः ।।
ॐ हां भ्रामण्यै नमः ।।
ॐ हां मोहिन्यै नमः ।।
ॐ हां क्ष(त्व)रायै नमः ।।
वामदेवकला ज्ञेयास्त्रयो दश वृषध्वज ।। 40.9 ।।

ॐ हां तत्पुरुषाय नमः ।।
ॐ हां निवृत्त्यै नमः ।।
ॐ हां प्रतिष्ठायै नमः ।।
ॐ हां विद्यायै नमः ।।
ॐ हां शान्त्यै नमः ।।
ज्ञेयास्तत्पुरुषस्यैव चतस्रो वृषभध्वज ।। 40.10 ।।

ॐ हां तृष्णायै नमः ।।
कलाषट्कं ह्यखोरस्य विज्ञेयं भैरवं हर ।। 40.11 ।।

ॐ हां ईशानाय नमः ।।
ॐ हां समित्यै नमः ।।
ॐ हां अङ्गदायै नमः ।।
ॐ हां कृष्णायै नमः ।।
ॐ हां मरीच्यै नमः ।।
ॐ हां ज्वालायै नमः ।।
ईशानस्य कलाः पञ्च जानीहि वृषभध्वज ।। 40.12 ।।

ॐ हां शिवपरिवारेभ्यो नमः ।।
ॐ हां इन्द्राय सुराधिपतये नमः ।।
ॐ हां अग्नये तेजोऽधिपतये नमः ।।
ॐ हां यमाय प्रेताधिपतये नमः ।।
ॐ हां निर्ऋतये रक्षोऽधिपतये नमः ।।
ॐ हां वरुणाय जलाधिपतये नमः ।।
ॐ हां वायवे प्राणाधिपतये नमः ।।
ॐ हां सोमाय नेत्राधिपतये नमः ।।
ॐ हां ईशानाय सर्वविद्याधिपतये नमः ।।
ॐ हां अनन्ताय नागाधिपतये नमः ।।
ॐ हां ब्रह्मणे सर्वलोकाधिपतये नमः ।।
ॐ हां धूलिचण्डेश्वराय नमः ।। 40.13 ।।

आवाहनं स्थापनं सन्निधानं च शङ्कर ।।
सन्निरोधं तथा कुर्य्यात्सकलीकरणं तथा ।। 40.14 ।।

तत्त्वन्यासं च मुद्राया दर्शनं ह्यानमेव च ।।
पाद्यमाचमनं ह्यर्घ्यं पुष्पाण्यभ्यंगदानकम् ।। 40.15 ।।

तत उद्वर्त्तनं स्नानं सुगन्धं चानुलेपनम् ।।
वस्त्रालं कारभोगांश्च ह्यंगन्यासं च धूपकम् ।। 40.16 ।।

दीपं नैवेद्यदानं च हस्तोद्वर्त्तनमेव च ।।
पाद्यार्घ्याचमनं गन्धं ताम्बूलं गीतवादनम् ।। 40.17 ।।

नृत्यं छत्रादिकरणं मुद्राणां दर्शनं तता ।।
रूपं ध्यानं जपञ्चाथ एकवद्भाव एव च ।। 40.18 ।।

मूलमन्त्रेण वै कुर्य्याज्जपपूजासमर्पणम् ।।
माहेशी कथिता पूजा रुद्र पापविनासिनी ।। 40.19 ।।

**।।वासुदेव उवाच ।।**
ॐ विश्वावसुर्नाम गन्धर्वः कन्यानामधिपतिर्लभामि ते कन्यां समुत्पाद्य तस्मै विश्ववासवे स्वाहा ।।
स्त्रीलाभो मन्त्रजाप्याच्च कालरात्रिं वदाम्यहम् ।। 41.1 ।।

ॐ नमो भगवति ऋक्षकर्णि चतुर्भुजे ऊर्द्ध्वकेशि त्रिनयने कालरात्रि मानुषाणां वसारुधिरभोजने अमुकस्य प्राप्तकालस्य मृत्युप्रदे हुं फट् हनहन दहदह मांसरुधिरं पचपच ऋक्षपत्नि स्वाहा । न तिथिर्न च नक्षत्रं नोपवासो विधीयते ।। 41.2 ।।

क्रुद्धो रक्तेन संमार्ज्य करौ ताभ्यां प्रगृह्य च ।।
प्रदोषे संजपेल्लिङ्गमामपात्रं च मारयेत् ।।
ॐ नमः सर्वतोयन्त्राण्येतद्यथा जम्भनि मोहनि सर्वशत्रुविदारिणि रक्षरक्ष माममुकं सर्वभयोपद्रवेभ्यः स्वाहा ।।
शुक्रे नष्टे महादेव वक्ष्येऽहं द्विजपादिह ।। 41.3 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वश्यादिसाधिकमन्त्रनिरूपणं नामैकचत्वारिंशोऽध्यायः ।। 41 ।।

**।। हरिरुवाच ।।**
पवित्रारोपणं वक्ष्ये शिवस्याशिवनाशनम् ।।
आचार्य्यः साधकः कुर्य्यात्पुत्रकः समयो हर ।। 42.1 ।।

संवत्सरकृतां पूजां विघ्नेशो हरतेऽन्यथा ।।
आषाढे श्रावणे माघे कुर्य्याद्भाद्रपदेऽपि वा ।। 42.2 ।।

सौवर्णरौप्यताम्रं च सूत्रं कार्पासिकं क्रमात् ।।
ज्ञेयं कुजादौ संग्राह्यं कन्यया कर्त्तितं च यत् ।। 42.3 ।।

त्रिगुणं त्रिगुणीकृत्य ततः कुर्य्यात्पवित्रकम् ।।
ग्रन्थयो वामदेवेन सत्येन क्षालयेच्छिव ।। 42.4 ।।

अघोरेण तु संशोध्य बद्धस्तत्पुरुषाद्भवेत् ।।
धूपयेदीशमन्त्रेण तन्तुदेवा इति (मे) स्मृताः ।। 42.5 ।।

ॐ कारश्चन्द्रमा वह्निर्ब्रह्मा नागः शिखिध्वजः ।।
रविर्विष्णुः शिवः प्रोक्तः क्रमात्तन्तुषु देवताः ।। 42.6 ।।

अष्टोत्तरशतं कुर्य्यात्पञ्चाशत्पञ्चविंशतिम् ।।
रुद्रोऽत्तमादि विज्ञेयं मानं च ग्रन्थयो दश ।। 42.7 ।।

चतुरङ्गुलान्तराः स्युर्ग्रन्थिनामानि च क्रमात् ।।
प्रकृतिः पौरुषी वीरा चतुर्थी चापराजिता ।। 42.8 ।।

जया च विजया रुद्रा अजिता च सदाशिवा ।।
मनोन्मनी सर्वमुखी द्व्यङ्गुलाङ्गुलतोऽथवा ।। 42.9 ।।

रञ्जयेत्कुंकुमाद्यैस्तु कुर्य्याद्गन्धैः पवित्रकम् ।।
सप्तम्यां वा त्रयोदश्यां शुक्लपक्षे तथेतरे ।। 42.10 ।।

क्षीरादिभिश्च संस्थाप्य लिङ्गं गन्धादिभिर्यजेत् ।।
दद्यागन्धपवित्रं तु आत्मने ब्रह्मणे हर ।। 42.11 ।।

पुष्पं गन्धयुतं दद्यान्मूलेनेशानगोचरे ।।
पूर्वे च दण्डकाष्ठं तु उत्तरे चामलकीफलम् ।। 42.12 ।।

मृत्तिकां पश्चिमे दद्याद्दक्षिणे भस्म भूतयः ।।
नैर्ऋतेह्यगुरुं दद्याच्छिखामन्त्रेण मन्त्रवित् ।। 42.13 ।।

वायव्यां सर्षपं दद्यात्कवचेन वृषध्वज ।।
गृहं संवेष्ट्य सूत्रेण दद्यागन्धपवित्रकम् ।। 42.14 ।।

होमं कृत्वाग्नेय दत्त्वा दद्याद्भूतबलिं तथा ।।
आमन्त्रितोऽसि देवेश गणैः सार्द्धं महेश्वर ।। 42.15 ।।

प्रातस्त्वां पूजयिष्यामि अत्र सन्निहितो भव ।।
निमन्त्र्यानेन तिष्ठेत्तु कुर्वन् गीतादिकं निशि ।। 42.16

मन्त्रितानि पवित्राणि स्थापयेद्देवपार्श्वतः ।।
स्नात्वादित्यं चतुर्दश्यां प्राग्रुद्रं च प्रपूजयेत् ।। 42.17 ।।

ललाटस्थं विश्वरूपं ध्यात्वात्मानं प्रपूजयेत् ।।
अस्त्रेण प्रोक्षितान्येवं हृदयेनार्चितान्यथ ।। 42.18 ।।

संहितामन्त्रितान्येव धूपितानि समर्पयेत् ।।
शिवतत्त्वात्मकं चादौ विद्यातत्त्वात्मकं ततः ।। 42.19 ।।

आत्मतत्त्वात्मकं पश्चाद्देवकाख्यं ततोऽर्चयेत् ।।
ॐ हौं हौं शिवतत्त्वाय नमः ।।
ॐ हीं(हीः) विद्यातत्त्वाय नमः ।। 42.20 ।।

ॐ हां (हौः) आत्मतत्त्वाय नमः ।।
ॐ हां हीं हूं क्षौं सर्वतत्त्वाय नमः ।।
कालात्मनो त्वया देव यदृष्टं मामके विधौ ।। 42.21 ।।

कृतं क्लिष्टं समुत्सृष्टं हुतं गुप्तं च यत्कृतम् ।।
सर्वात्मनात्मना शम्भौ पवित्रेण त्वदिच्छया ।। 42.22 ।।

पूरयपूरय मुखव्रतं तन्नियमेश्वराय सर्वतत्त्वात्मकाय सर्वकारणपालिताय ॐ हां हीं हूं हैं हौं शिवाय नमः ।। 42.23 ।।

पूर्वैरनेन यो दद्यात्पवित्राणां चतुष्टयम् ।।
दत्त्वा वह्नेः (वरे) पवित्रं च गुरवे दक्षिणां दिशेत् ।। 42.24 ।।

बलिं दत्त्वा द्विजान् भोज्य चण्डं प्राच्यै विसर्जयेत् ।। 42.25 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे शिवपवित्रारोपणं नाम द्विचत्वारिंशोऽध्यायः ।। 42 ।।

---

**||हरिरुवाच ||**

पवित्रारोपणं वक्ष्ये भुक्तिमुक्तिप्रदं हरेः ||
पुरा देवासुरे युद्धे ब्रह्माद्याः शरणं ययुः || 43.1 ||

विष्णुश्च तेषां देवानां ध्वजं ग्रैवेयकं ददौ ||
एतौ दृष्ट्वा विनङ्क्ष्यन्ति दानवानब्रवीद्धरिः || 43.2 ||

विष्णूक्ते ह्यब्रवीन्नागो वासुकेरनुजस्तदा ||
वृणीत च वपित्राख्यं वरं चेदं वृषध्वज || 43.3 ||

ग्रैवेयं हरिदत्तं तु मन्नाम्ना ख्यातिमेष्यति ||
इत्युक्ते तेन ते देवास्तन्नाम्ना तद्वरं विदुः || 43.4 ||

प्रावृट्काले तु ये मर्त्या नार्चिष्यन्ति पवित्रकैः ||
तेषां सांवत्सरी पूजा विफला च भविष्यति || 43.5 ||

तस्मात्सर्वेषु देवेषु पवित्रारोपणं क्रमात् ||
प्रतिपत्पौर्णमास्यान्ता यस्य या तिथिरुच्यते || 43.6 ||

द्वादश्यां विष्णवे कार्य्यं शुक्ले कृष्णेऽथ वा हर ||
व्यतीपातेऽयने चैव चन्दरसूर्य्यग्रहे शिव || 43.7 ||

विष्णवे वृद्धिकार्य्ये च गुरोरागमने तथा ||
नित्यं पवित्रमुद्दिष्टं प्रावृट्काले त्ववश्यकम् || 43.8 ||

कौशेयं पट्टसूत्रं वा कार्पासं क्षौममेव वा ||
कुशसूत्र द्विजानां स्याद्राज्ञा कौशेयपट्टकम् || 43.9 ||

वैश्यानां चीरणं क्षौमं शूद्राणां शणवल्कजम् ||
कार्पासं पद्मजं चैव सर्वेषां शस्तमीश्वर || 43.10 ||

ब्राह्मण्या कर्त्तितं सूत्रं त्रिगुणं त्रिगुणीकृतम् ||
ॐ कारोऽथ शिवः सोमो हयग्निर्ब्रह्या फणी रविः || 43.11 ||

विघ्नेशो विष्णुरित्येते स्थितास्तन्तुषु देवताः ||
ब्रह्मा विष्णुश्च रुद्रश्च त्रिसूत्रे देवताः स्मृताः || 43.12 ||

सौवर्णे राजते ताम्रे वैणवे मृन्मये न्यसेत् ||
अङ्गुष्ठेन चतुः षष्टिः श्रेष्ठं मध्यं तदर्द्धतः || 43.13 ||

तदर्द्धा तु कनिष्ठा स्यात्सूत्रमष्टोत्तरं शतम् ||
उत्तमं मध्यमं चैव कन्यसं पूर्ववत्क्रमात् || 43.14 ||

उत्तमोंऽगुष्ठमानेन मध्यमो मध्यमेन तु ।।
कन्यसे च कनिष्ठेन अङ्गुल्या ग्रन्थयः स्मृताः ।। 43.15 ।।

विमाने स्थण्डिले चैव एतत्सामान्यलक्षणम् ।।
शिवोद्धृतं पवित्रं तु प्रतिमायां च कारयेत् ।। 43.16 ।।

हृन्नाभिरू(रु) रुमाने च जानुभ्यामवलम्बिनी ।।
अष्टोत्तरसहस्त्रेण चत्वारो ग्रन्थयः स्मृताः ।। 43.17 ।।

षट्त्रिं(ड्विं) शच्च चतुर्विंशद्द्वादश ग्रन्थयोऽथवा ।।
उत्तमादिषु विज्ञेयाः पर्वभिर्वा पवित्रकम् ।। 43.18 ।।

चर्चितं कुम्कुमेनैव हरिद्राचन्दनेन वा ।।
सोपवासः पवित्रन्तु पात्रस्थमधिवासयेत् ।। 43.19 ।।

अश्वत्थपत्रपुटके अष्टदिक्षु निवेशितम् ।।
दण्डकाष्ठं कुशाग्रं च पूर्वे सङ्कर्षणेन तु ।। 43.20 ।।

रोचनाकुम्कुमेनव प्रद्युम्नेन तु दक्षिणे ।।
युद्धार्थो फलसिद्ध्यर्थमनिरुद्धेन पश्चिमे ।। 43.21 ।।

चन्दनं नीलयुक्तं च तिलभस्माक्षतं तथा ।।
आग्नेयादिषु कोणेषु श्रियादीनां तु क्रमान्न्यसेत् ।। 43.22 ।।

पवित्रं वासुदेवेन अभिमन्त्र्य सकृत्सकृत् ।।
दृष्ट्वा पुनः प्रपूज्याथ वस्त्रेणाच्छाद्य यत्नतः ।। 43.23 ।।

देवस्य पुरतः स्थाप्यं प्रतिमामण्डलस्य वा ।।
पश्चिमे दक्षिणे चैव उत्तरे पूर्ववत्क्रमात् ।। 43.24 ।।

ब्राह्मादींश्चापि संस्थाप्य कलशं चापि पूजयेत् ।।
अस्त्रेण मण्डलं कृत्वा नैवेद्यञ्च समर्पयेत् ।। 43.25 ।।

अधिवास्य पवित्रं तु त्रिसूत्रेण नवेन वा (च) ।।
वेदिकां वेष्टयित्वा तु आत्मानंम कलशं घृतम् ।। 43.26 ।।

अग्निकुण्डं विमानं च मण्डपं गृहमेव च ।।
सूत्रमेकं तु संगृह्य दद्याद्देवस्य मूर्धानि ।। 43.27 ।।

दत्त्वा पठेदिमं मन्त्रं पूजयित्वा महेश्वरम् ।।
आवाहितोऽसि देवेश पूजार्थं परमेश्वर ।। 43.28 ।।

तत्प्रभातेऽर्चयिष्यामि सामग्र्याः सन्निधौ भव ।।
एकरात्रं त्रिरात्रं वा अधिवास्य पवित्रकम् ।। 43.29 ।।

रात्रौ जागरणं कृत्वा प्रातः संपूज्य केशवम् ।।
आरोपयेत्क्रमेणैव ज्येष्ठमध्यकनीयसम् ।। 43.30 ।।

धूपयित्वा पवित्रं तु मन्त्रेणैवाभिमंत्रयेत् ।।
प्रजप्तग्रन्थिकं चैव पूजयेत्कुसुमादिभिः ।। 43.31 ।।

गायत्र्या चार्चितं तेन देवं संपूज्य दापयेत् ।।
समं पुत्रकलत्राद्यैः सूत्रपुच्छं तु धारयेत् ।। 43.32 ।।

विशुद्धग्रन्थिकं रम्यं महापातकनाशनम् ।।
सर्वपापक्षयं देव तवाग्रे धारयाम्यहम् ।। 43.33 ।।

एवं धूपादिनाभ्यर्च्य मध्यमादीन्त्समर्पयेत् ।।
पवित्रं वैष्णवं तेजः सर्वपातकनाशनम् ।। 43.34 ।।

धर्मकामार्थसिद्ध्यर्थं स्वकंठे धारयाम्यहम् ।।
वनमालां समभ्यर्च्य स्वेन मन्त्रेण दापयेत् ।। 43.35 ।।

नैवेद्यं विविधं दत्त्वा कुसुमादेर्बलिं हरेत् ।।
अग्निं संतर्प्य तत्रापि द्वादशांगुलमानतः ।। 43.36 ।।

अष्टोत्तरशतेनैव दद्यादेकपवित्रकम् ।।
आदौ दत्त्वार्घ्यमादित्ये तत्र चैकं पवित्रकम् ।। 43.37 ।।

विष्वक्सेनं ततः प्राच्यं सुरुमर्घ्यादिभिर्हर ।।
देवस्याग्रे पठेन्मन्त्रं कृताञ्जलिपुटः स्थितः ।। 43.38 ।।

ज्ञानतोऽज्ञानतो वापि पूजनादि कृतं मया ।।
तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादात्सुरेश्वर ।। 43.39 ।।

मणिविद्रुममालभिर्मन्दारकुसुमादिभिः ।।
इयं सांवत्सरी पूजा तवास्तु गरुडध्वज ।। 43.40 ।।

वनमाला यथा देव कौस्तुभं सततं हृदि ।।
तद्वत्पवित्रं तन्तूनां मालां त्वं हृदये धर ।। 43.41 ।।

एवं प्रार्थ्य द्विजान् भोज्य दत्त्वा तेभ्यश्च दक्षिणाम् ।।
विसर्जयेत्तु तेनैव सायाह्ने त्वपरेऽहनि ।। 43.42 ।।

सांवत्सरीमिमां पूजां सम्पाद्य विधिवन्मया ।।
व्रजेः पवित्रकेदानीं विष्णुलोकं विसर्जितः ।। 43.43 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुपवित्रारोपणं नाम त्रिचत्वारिंशोऽध्यायः ।। 43 ।।

**।।हरिरुवाच ।।**

पूजयित्वा पवित्राद्यैर्ब्रह्म ध्यात्वा हरिर्भवेत् ।।
ब्रह्मध्यानं प्रवक्ष्यामि मायायन्त्रप्रमर्दकम् ।। 44.1 ।।

यच्छेद्वाङ्मनसं प्राज्ञस्तं यजेज्ज्ञानमात्मनि ।।
ज्ञानं महति संयच्छेद्य इच्छेज्ज्ञानमात्मानि ।। 44.2 ।।

देहेन्द्रियमनोबुद्धिप्राणाहङ्करावर्जितम् ।।
वर्जितं भूततन्मात्रैर्गुणजन्माशनादिभिः ।। 44.3 ।।

स्वप्रकाशं निराकारं सदानं दमनादि यत् ।।
नित्यं शुद्धं बुद्धमृद्धं सत्यमानन्दमद्वयम् ।। 44.4 ।।

तुरीयमक्षरं ब्रह्म अहमस्मि परं पदम् ।।
अहं ब्रह्मेत्यवस्थानं समाधिरपि (रिति) गीयते ।। 44.5 ।।

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।।
बुद्धिं च सारथिं विद्धि मनः प्रग्रहमेव च ।।
इन्द्रियाणि हयानाहुर्विषयास्तेषु गोचराः ।। 44.6 ।।

आत्मैंद्रियमनोयुक्तो भोक्तेत्यार्मनीषिणः ।।
यस्तु विज्ञानबाह्मेन युक्तेन मनसा सदा ।। 44.7 ।।

स तु तत्पदमाप्नोति स हि भूयो न जायते ।।
विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः ।। 44.8 ।।

स्वर्धुन्याः पारमाप्नोति तद्विष्णोः परमं पदम् ।।
अहिंसादिर्यमः प्रोक्तः शौचादिर्नियमः स्मृतः ।। 44.9 ।।

आसनं पद्मकाद्युक्तं प्राणायामो मरुज्जयः ।।
प्रत्याहारो जयः प्रोक्तो ध्यानमीश्वरचिन्तनम् ।। 44.10 ।।

मनोधृतिर्धारणा स्थात्समाधिर्ब्रह्मणि स्थितिः ।।
पूर्वं चेतः स्थिरं न स्यात्ततोमूर्त्तिं विचिन्तयेत् ।। 44.11 ।।

हृत्पद्मकर्णिकामध्ये शङ्खचक्रगदाब्जवान् ।।
श्रीवत्सकौस्तुभयुतो वनमालाश्रिया युतः ।। 44.12 ।।

नित्यः शुद्धो भूतियुक्तः सत्यानन्दाह्वयः परः ।।
आत्माहं परमं ब्रह्म परमं ज्योतिरेव तु ।। 44.13 ।।

चतुर्विंशतिमूर्त्तिः स शालग्रामशिलास्थितः ।।

द्वारकादिशिलासंस्थो ध्येयः पूज्योऽप्यहं च सः ।। 44.14 ।।

मनसोऽभीप्सितं प्राप्य देवो वैमानिको भवेत् ।।
निष्कामो मुक्तिमाप्नोति मूर्त्तिं ध्याययंस्तुवञ्जपन् ।। 44.15 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ब्रह्ममूर्तिध्याननिरूपणं नाम चतुश्चत्वारिंशोऽध्यायः ।। 44 ।।

**।।हरिरुवाच ।।**

प्रसङ्गात्कथयिष्यामि शालग्रामस्य लक्षणम् ।।
शालग्रामशिलास्पर्शात्कोटिजन्माघनाशनम् ।। 45.1 ।।

शङ्खचक्रगदापद्मी (हस्तः) (केशवाख्यो) गदाधरः ।।
सब्जकौमादकीचक्रशङ्खी (नारायणो) विभुः ।। 45.2 ।।

सचक्रशङ्खाब्जगदो (माधवः) श्रीगदाधरः ।।
गदब्जशङ्खचक्री वा (गोविन्दो)ऽर्च्यो गदाधरः ।। 45.3 ।।

पद्मशङ्खारिगादिने (विष्णुरूपाय) ते नमः ।।
सशङ्खाब्जगदाचक्र (मधुसूदनमूर्त्तये) ।। 45.4 ।।

नमो गदारिशङ्खाब्जयुक्त(त्रैविक्रमाय) च ।।
सारिकौमोदकीपद्मशङ्ख(वामनमूर्त्तये) ।। 45.5 ।।

चक्राब्जशङ्खगादिने नमः (श्रीधरमूर्त्तये) ।।
(हृषीकेशाया)ऽब्जगदाशङ्खिने चक्रिणे नमः ।। 45.6 ।।

साब्जचक्रगदाशङ्ख(पद्मनाभस्वरूपिणे) ।।
शङ्खचक्रगदापद्मिन् (दामोदर) मनोनमः ।। 45.7 ।।

सारिशङ्खगदाब्जाय (वासुदेवाय) वै नमः ।।
शङ्खाब्जचक्रगादिने नमः (सङ्कर्षणाय) च ।। 45.8 ।।

सुशङ्खसुगदाब्जारिधृते (प्रद्युम्नमूर्त्तये) ।।
नमो(ऽनिरुद्धाय) गदाशङ्खाब्जारीविधारिणे ।। 45.9 ।।

साब्जशङ्खगदाचक्र(पुरुषोत्तममूर्त्तये) ।।
नमो(ऽधोक्षजरूपाय) गदाशङ्खारिपद्मिने ।। 45.10 ।।

(नृसिंहमूर्त्तये) पद्मगदाशङ्खारिधारिणे ।।
पद्मारिशङ्खगदिने नमोऽ(स्त्वच्युतमूर्त्तये) ।। 45.11 ।।

सशङ्कचक्राब्जगदं (जनार्दन) मिहानये ।।
(उपेंद्रः) सगदः सारिः पद्मशङ्खिन्नमोनमः ।। 45.12 ।।

सुचक्राब्जगदाशङ्खयुक्ताय (हरिमूर्त्तये) ।।
सगदाब्जारिशङ्खाय नमः (श्रीकृष्णमूर्त्तये) ।। 45.13 ।।

शालग्रामशिलाद्वारगतलग्नद्विचक्रधृक् ।।
शुक्लाभो(वासुदेवाख्यः) सोऽव्याद्वः श्रीगदाधरः ।। 45.14 ।।

लग्नद्विचक्रो रक्ताभः पूर्वभागस्तुपुष्कलः ।।
संकर्षणोऽथ(प्रद्युम्नः) सूक्ष्मचक्रस्तु पीतकः ।। 45.15 ।।

स दीर्घः सशिरश्छिद्रो यो(ऽनिरुद्धस्तु) वर्तुलः ।।
नीलो द्वारि त्रिरेखश्च अथ (नारायणो)ऽसितः ।। 45.16 ।।

मध्ये गादकृती रेखा नाभिचक्रो (क्र) महोन्नतः ।।
पृथुवक्षा (नृसिंहो) वः कपिलोऽव्यात्त्रिबिन्दुकः ।। 45.17 ।।

अथवा पञ्चबिन्दुस्तत्पूजनं ब्रह्मचारिणः ।।
(वराहः) शक्तिलिङ्गोऽव्याद्विषमद्वयचक्रकः ।। 45.18 ।।

नीलस्त्रिरेखः स्थूलोऽथ (कूर्ममूर्त्तिः स बिन्दुमान् ।।
(कृष्णः) स वर्त्तुलावर्त्तः पातु वो नतपृष्ठकः ।। 45.19 ।।

(श्रीधरः) पञ्चरेखोऽव्या (द्वनमाली) गादाङ्कितः ।।
(वामनो) वर्त्तुलो ह्रस्वो वा (रा) मचक्रः सुरेश्वरः ।। 45.20 ।।

नानावर्णोऽनेकमूर्त्तिर्नागभोगी (त्वनन्तकः) ।।
स्थूलो (दामोदरो) नीलो मध्येवक्रः सुनीलकः ।। 45.21 ।।

सङ्कीर्णद्वारकः सोऽव्यादथ ब्रह्मा सुलोहितः ।।
सदीर्घरेखः सुषिर एकचक्राम्बुजः पृथुः ।। 45.22 ।।

पृथुच्छिद्रः स्थूलचक्रः(कृष्णो) (विष्णुश्च) बिल्ववत् ।।
(हयग्रीवो) ऽङ्कुशाकारः पञ्चरेखः सकौस्तुभः ।। 45.23 ।।

(वैकुण्ठो मणिरत्नाभ एकचक्राम्बुजोऽसितः ।।
(मत्स्यो) दीर्घोऽम्बुजाकारो द्वाररेखश्च पातु वः ।। 45.24 ।।

रामचक्रो दक्षरेखः श्यामोवोऽव्या (त्त्रिविक्रमः) ।।
शालग्रामे द्वारकायां स्थिताय गदिने नमः ।। 45.25 ।।

एकद्वारश्चतुश्चक्रो वनमालाविभूषितः ।।
स्वर्णरेखासमायुक्तो गोष्पदेन विराजितः ।। 45.26 ।।

कदम्बकुसुमाकारो (लक्ष्मीनारायणो)ऽवतु ।।
एकेन लक्षितो योव्याद्गदाधारी (सुदर्शनः) ।। 45.27 ।।

(लक्ष्मीनारायणो) द्वाभ्यांत्रिभिर्मूर्त्ति(स्त्रिविक्रमः) ।।
चतुर्भिश्च (चतुर्व्यूहो) (वासुदेवश्च) पञ्चभिः ।। 45.28 ।।

(प्रद्युम्नः) षड्भिरेव स्यात् (संकर्षण) इतस्ततः ।।
(पुरुषोत्तमो)ऽष्टभिः स्या(न्नवव्यूहो) नवांकितः ।। 45.29 ।।

(दशावतारो) दशभिरनिरुद्धोऽवतादथ ।।
(द्वादशात्मा) द्वादशबिरत ऊर्द्ध्व(मनन्तकः) ।। 45.30 ।।

विष्णोर्मूर्त्तिमयं स्तोत्रं यः पठेत्स दिवं व्रजेत् ।।
(ब्रह्मा) चतुर्मुखो दण्डी कमण्डलुयुगान्वितः ।। 45.31 ।।

(महेश्वरः) प्रञ्चवक्रो दशबाहुर्वृषध्वजः ।।
यथायुधस्तथा गौरी चण्डिका च सरस्वती ।। 45.32 ।।

महालक्ष्मीर्मातरश्च पद्महस्तो (दिवाकरः) ।।
गजास्यश्च गणः स्कन्दः षण्मुखोनेकधा गुणाः ।। 45.33 ।।

एतेऽर्चिताः स्थापिताश्च प्रासादे वास्तुपूजिते ।।
धर्मार्थकाममोक्षाद्याः प्राप्यन्ते पुरुषेण च ।। 45.34 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे शालग्राममूर्त्तिलक्षणं नाम पञ्चचत्वारिंशोऽध्यायः ।। 45 ।।

**।।हरिरुवाच ।।**

वास्तुं संक्षेपतो वक्ष्ये गृहादौ विघ्ननाशनम् ।।
ईशानकोणादारभ्य ह्येकाशीतिपदे यजेत् ।। 46.1 ।।

ईशाने च शिरः पादौ नैर्ऋतेऽग्न्यनिले करौ ।।
आवासवासवेश्मादौ पुरे ग्रामे वणिक्पथे ।। 46.2 ।।

प्रासादारामदुर्गेषु देवालयमठेषु च ।।
द्वाविंशति सुरान्बाह्ये तदन्तश्च त्रयोदश ।। 46.3 ।।

ईशश्चैवाथ पर्जन्यो जयन्तः कुलिशायुधः ।।
सूर्य्यः सत्यो भृगुश्चैव आकाशो वायुरेव च ।। 46.4 ।।

पूषा च वितथश्चैव ग्रहक्षेत्रयमावुभौ ।।
गन्धर्वो भृगुराजस्तु मृगः पितृगणस्तथा ।। 46.5 ।।

दौवारिकोऽथ सुग्रीवः पुष्पदन्तो गणाधिपः ।।
असुरः शेषपापौ (दौ) च रोगोऽहिमुख (ख्य) एव च ।। 46.6 ।।

भल्लाटः सोमसर्पौ च अदितिश्चदितिस्तथा ।।
बहिर्द्वात्रिंशदेते तु तदन्तश्चतुरः श्रृणु ।। 46.7 ।।

ईशानादिचतुष्कोणसंस्थितान्पूजयेद्बुधः ।।
आपश्चैवाथ सावित्री जयो रुद्रस्तथैव च ।। 46.8 ।।

मध्ये नवपदे ब्रह्मा तस्याष्ठौ च समीपगान् ।।
देवानेकोत्तरानेतान्पूर्वादौ नामतः श्रृणु ।। 46.9 ।।

अर्य्यमा सविता चैव विवस्वान्विबुधाधिपः ।।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् ।। 46.10 ।।

अष्टमश्चापवत्सश्च परितो ब्रह्मणः स्मृताः ।।
ईशानकोणादारभ्य दुर्गे च (ज्ञेयो) वंश उच्यते ।। 46.11 ।।

आग्नेयकोणादारभ्य वंशो भवति दुर्द्धरः ।।
अदितिं हिमवन्तं च जयन्तं च इदं त्रयम् ।। 46.12 ।।

नायिका कालिका नाम शक्राद्गन्धर्वगाः पुनः ।।
वास्तुदेवान्पूजयित्वा गृहप्रासादकृद्भवेत् ।। 46.13 ।।

सुरेज्यः पुरतः कार्यो यस्याग्नेय्यां महानसम् ।।
कपिनिर्गमने (णी) ? येन पूर्वतः सत्रमण्डपम् ।। 46.14 ।।

गन्धपुष्पगृहं कार्य्यमैशान्यां पट्टसंयुतम् ।।
भाण्डागारं च कौबेर्य्यां गोष्ठागारं च वायवे ।। 46.15 ।।

उदगाश्रयं च वारुण्यां वातायनसमन्वितम् ।।
समित्कुशेन्धनस्थानमायुधानां च नैर्ऋते ।। 46.16 ।।

अभ्यागतालयं रम्यसशय्यासनापदुकम् ।।
तोयाग्निदीपसद्भृत्यैर्युक्तं दक्षिणतो भवेत् ।। 46.17 ।।

गृहान्तराणि सर्वाणि सजलैः कदलीगृहैः ।।
पञ्चवर्णैश्च कुसुमैः शोभितानि प्रकल्पयेत् ।। 46.18 ।।

प्राकारं तद्वहिर्दद्यात्पञ्चहस्तप्रमाणतः ।।
एवं विष्णवाश्रमं कुर्य्याद्वनैश्चोपवनैर्युतम् ।। 46.19 ।।

चतुः षष्टिपदो वास्तुः प्रासादादौ प्रपूजितः ।।
मध्ये चतुष्पदो ब्रह्मा द्विप दास्त्वर्य्यमादयः ।। 46.20 ।।

कर्णे चैवाथ शिख्याद्यास्तथा देवाः प्रकीर्त्तिताः ।।
तेभ्यो ह्युभयतः सार्द्धादन्येऽपि द्विपदाः सुराः ।। 46.21 ।।

चतुः षष्टिपदा देवा इत्येवं परिकीर्त्तिताः ।।
चरकी च विदारी च पूतना पापराक्षसी ।। 46.22 ।।

ईशानाद्यास्ततो बाह्ये देवाद्या हेतुकादयः ।।
हैतुकस्त्रिपुरान्तश्च अग्निवेतालकौ यमः ।। 46.23 ।।

अग्निजिह्वः कालकश्च करालो ह्योकपादकः ।।
ऐशान्यां भीमरूपस्तु पाताले प्रेतनायकः ।। 46.24 ।।

आकाशे गन्धमाली स्यात्क्षेत्रपालांस्ततो यजेत् ।।
विस्ताराभिहतं दैर्घ्यं राशिं वास्तोस्तु कारयेत् ।। 46.25 ।।

कृत्वा च वसुभिर्भागं शेषं बद्धा यमादिशेत् ।।
पुनर्गुणितमष्टाभिर्ऋभागं तु भाजयेत् ।। 46.26 ।।

यच्छेषं तद्भवेदृक्षं भागैर्हृत्वाव्ययं भवेत् ।।
ऋक्षं चतुर्गुणं कृत्वा नवभिर्भागहारितम् ।। 46.27 ।।

शेषमंशं विजानीयाद्देवलस्य मतं यथा ।।
अष्टाभिर्गुणितं पिण्डं षष्टिभिर्भागाहरितम् ।। 46.28 ।।

यच्छेषं तद्भवेज्जीवं मरणं भूतहारितम् ।।
वास्तुक्रोडे गृहं कुर्य्यान्न पृष्ठे मानवः सदा ।। 46.29 ।।

वामपार्श्वेन स्वापिति नात्र कार्य्या विचारणा ।।
सिंहकन्यातुलायां च द्वारं शुध्येदथोत्तरम् ।। 46.30 ।।

एवं च वृश्चिकादौ स्यात्पूर्वदक्षिणपश्चिमम् ।।
द्वारं दीर्घार्द्धविस्तारं द्वाराण्यष्टौ स्मृतानि च ।। 46.31 ।।

सन्तानप्रेष्यनीचत्वं स्वयानं स्वर्णभूषणम् ।।
सुतहीनं तु रौद्रेण वीर्य्यघ्नं दक्षिणे तथा ।। 46.32 ।।

वह्नौ बधश्चायुर्वृद्धिंपुत्त्रलाभसुतृप्तिदः ।।
धनदे नृपपीडादमर्थघ्नं रोगदं जले ।। 46.33 ।।

नृपभी तिर्मृतापत्यं ह्यनपत्यं न वैरदम् ।।
अर्थदं चार्थहान्यै च दोषदं पुत्रमृत्युदम् ।। 46.34 ।।

द्वाराण्युत्तरसंज्ञानि पूर्वद्वाराणि वच्म्यहम् ।।
अग्निभीतिर्बहु कन्याधनसम्मानकोपदम् ।। 46.35 ।।

राजघ्नं कोपदं पूर्वे फलतो द्वारमीरितम् ।।
ईशानादौ भवेत्पूर्वमग्नेय्यादौ तु दक्षिणम् ।। 46.36 ।।

नैर्ऋत्यादौ पश्चिमं स्याद्वायव्यादौ तु चोत्तरम् ।।
अष्टभागे कृते भागे द्वाराणां च फलाफलम् ।। 46.37 ।।

अश्वत्थप्लक्षन्यग्रोधाः पूर्वादौ स्यादुदुम्बरः ।।
गृहस्य शोभनः प्रोक्त ईशाने चैव शाल्मलिः ।।
पूजितो विग्नहारी स्यात्प्रासादस्य गृहस्य च ।। 46.38 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वास्तुमानलक्षणं नाम षट्चत्वारिंशोऽध्यायः ।। 46 ।।

**।।सूत उवाच ।।**

प्रासादानां लक्षणं च वक्ष्ये शौनक तच्छृणु ।।
चतुः षष्टिपदं कृत्वा दिग्विदिक्षूपलक्षितम् ।। 47.1 ।।

चतुष्कोणं चतुर्भिश्च द्वाराणि सूर्य्यसंख्यया ।।
चत्वारिंशाष्टभिश्चैव भित्तीनां कल्पना भवेत् ।। 47.2 ।।

ऊर्द्ध्वक्षेत्रसमा जङ्घा जङ्घार्धद्विगुणं भवेत् ।।
गर्भविस्तारविस्तीर्णः शुकाङ्घ्रिश्च विधीयते ।। 47.3 ।।

तत्त्रिभागेन कर्त्तव्यः पञ्चभागेन वा पुनः ।।
निर्गमस्तु शुकाङ्घ्रेश्च उच्छ्रायः शिखरार्द्धगः ।। 47.4 ।।

चतुर्द्धा शिखरं कृत्वा त्रिभागे वेदिबन्धनम् ।।
चतुर्थे पुनरस्यैव कण्ठमामूलसाधनम् ।। 47.5 ।।

अथ वापि समं वास्तुं कृत्वा षोडशभागिकम् ।।
तस्य मध्ये चतुर्भागमादौ गर्भं तु कारयेत् ।। 47.6 ।।

चतुर्भागेन भित्तीनामुच्छ्रायः स्यात्प्रमाणतः ।। 47.7 ।।

द्विगुणः शिखरोच्छ्रायो भित्त्युच्छायाच्च मानतः ।।
शिखरार्द्धस्य चार्द्धेन विधेयास्तु प्रदक्षिणाः ।। 47.8 ।।

चतुर्दिक्षु तथा ज्ञेयो निर्गमस्तुः तथा बुधैः ।।
पञ्चभागेन संभज्य गर्भमानं विचक्षणः ।। 47.9 ।।

भागमेकं गृहीत्वा तु निर्गमं क्लपयेत्पुनः ।।
गर्भसूत्रसमो भागादग्रतो मुखमण्डपः ।। 47.10 ।।

एतत्सामान्यमुद्दिष्टं प्रासादस्य हि लक्षणम् ।।
लिङ्गमानमथो वक्ष्ये पीठो लिङ्गसमो भवेत् ।। 47.11 ।।

द्विगुणेन भवेद्गर्भः समन्ताच्छौनक ध्रुवम् ।।
तद्द्विधा च भवेद्भीतिर्जंघा तद्विस्तरार्द्धगा ।। 47.12 ।।

द्विगुणं शिखरं प्रोक्तं जङ्घायाश्चैव शौनक ।।
पीठगर्भावरं कर्म तन्मानेन शुकाङ्घ्रिकम् ।। 47.13 ।।

निर्गमस्तु समाख्यातः शेषं पूर्ववदेव तु ।।
लिंगमानं स्मृतं हयेतद्द्वारमानमथोच्यते ।। 47.14 ।।

कराग्रं वेदवत्कृत्वा द्वारं भागाष्टमं भवेत् ।।
विस्तरेण समाख्यातं द्विगुणंस्वेच्छया भवेत् ।। 47.15 ।।

द्वारवत्पीठमध्ये तु शेषं शुषिरकं भवेत् ।।
पादिकं शेषिकं भित्तिर्द्वारार्द्धेन परिग्रहात् ।। 47.16 ।।

तद्विस्तारसमा जङ्घा शिखरं द्विगुणं भवेत् ।।
शुकाङ्घ्रिः पूर्ववज्ज्ञेया निर्गमोच्छ्रायकं भवेत् ।। 47.17 ।।

मण्डपे मानमेतत्तु स्वरूपं चापरं वदे ।।
त्रैवेदं कारयेत्क्षेत्रं यत्र तिष्ठन्ति देवताः ।। 47.18 ।।

इत्थं कृतेन मानेन बाह्यभागविनिर्गतम् ।।
नेमिः पादेन विस्तीर्णा प्रासादस्य समन्ततः ।। 47.19 ।।

गर्भं तु द्विगुणं कुर्य्यान्नेम्या मानं भवेदिह ।।
स एव भित्तेरुत्सेधो शिखरो द्विगुणो मतः ।। 47.20 ।।

प्रासादानां च वक्ष्यामि मानं योनिं च मानतः ।।
वैराजः पुष्पकाख्यश्च कैलासो मालिकाह्वयः ।। 47.21 ।।

त्रिविष्टपं च पञ्चैते प्रासादाः सर्वयोनयः ।।
प्रथमश्चतुरश्रो हि द्वितीयस्तु तदायतः ।। 47.22 ।।

वृत्तो वृत्तायतश्चान्योऽष्टाश्रश्चेह च पञ्चमः ।।
एतेभ्य एव सम्भूताः प्रासादाः सुमनोहराः ।। 47.23 ।।

सर्वप्रकृतिभूतेभ्यश्चत्वारिंशत्तथैव च ।।
मेरुश्च मन्दरश्चैव विमानश्च तथापरः ।। 47.24 ।।

भद्रकः सर्वता भद्रो रुचको नन्दनस्तथा ।।
नन्दिवर्द्धनसंज्ञश्च श्रीवत्सश्च नवेत्यमी ।। 47.25 ।।

चतुरश्राः समुद्भूता वैराजादिति गम्यताम् ।।
वलभी गृहराजश्च शालागृहं च मन्दिरम् ।। 47.26 ।।

विमानं च तथा ब्रह्ममन्दिरं भवनं तथा ।।
उत्तम्भं शिबिका वेश्म नवैते पुष्पकोद्भवाः ।। 47.27 ।।

वलयो दुन्दुभिः पद्मो महापद्मस्तथापरः ।।
मुकुली चास्य उष्णीषी शङ्खश्च कलशस्तथा ।। 47.28 ।।

गुवावृक्षस्तथान्यश्च वृत्ताः कैलाशसम्भवाः ।।
गजोऽथ वृषभो हंसो गरुडः सिंहनामकः ।। 47.29 ।।

भूमुखो भूधरश्चैव श्रीजयः पृथिवीधरः ।।
वृत्तायताः समुद्भूता नवैते मणिकाह्वयात् ।। 47.30 ।।

वज्रं चक्रं तथान्यच्च मुष्टिकं वभ्रुसंज्ञितम् ।।
वक्रः स्वस्तिकखड्गौ च गदा श्रीवृक्ष एव च ।। 47.31 ।।

विजयो नामतः श्वेतस्त्रिविष्टिपसमुद्भवाः ।।
त्रिकोणं पद्ममर्द्धेन्दुश्चतुष्कोणं द्विरष्टकम् ।। 47.32 ।।

यत्र तत्र विधातव्यं संस्थानं मण्डपस्य तु ।।
राज्यं च विभवश्चैवः हयायुर्वर्द्वनमेव च ।। 47.33 ।।

पुत्रलाभः स्त्रियः पुष्टिस्त्रिकोणादिक्रमाद्भवेत् ।।
कुर्य्याद्ध्वजादिकं ख्यातद्वारि गर्भगृहं तथा ।। 47.34 ।।

मण्डपः समसंख्याभिर्गुणितः सूत्रकस्तथा ।।
मण्डपस्य चतुर्थांशाद्भद्रः कार्य्यो विजानता ।। 47.35 ।।

स्पर्धागवाक्षकोपेतो निर्गवाक्षोऽथ वा भवेत् ।।
सार्द्धभित्तिप्रमाणेन भितिमानेन वा पुनः ।। 47.36 ।।

भित्तेर्द्वैगुण्यतो वापि कर्त्तव्या मण्डपाः क्वचित् ।।
प्रासादे मञ्चरी कार्य्या चित्रा विषमभूमिका ।। 47.37 ।।

परिमाणविरोधेन रेखावैषम्यभूषिता ।।
आधारस्तु चतुर्द्धारश्चतुर्मण्डपशोभितः ।। 47.38 ।।

शतश्रृङ्गसमायुक्तो मेरुः प्रासाद उत्तमः ।।
मण्डपास्तस्य कर्त्तव्या भद्रैस्त्रिभिरलङ्कृताः ।। 47.39 ।।

गठनाकारमानानां भिन्नाभिन्ना भवन्ति ते ।।
कियन्तो येषु चाधारा निराधाराश्च केचन ।। 47.40 ।।

प्रतिच्छन्दकभेदेन प्रासादाः सम्भवन्ति ते ।।
अन्योन्यासंस्करास्तेषां घटनानामभेदतः ।। 47.41 ।।

देवतानां विशेषाय प्रासादा बहवः स्मृताः ।।
प्रासादे नियमो नास्ति देवतानां स्वयम्भुवाम् ।। 47.42 ।।

तानेव देवतानां च पूर्वमानेन कारयेत् ।।
चतुरश्रायतास्तत्र चतुष्कोणसमन्विताः ।। 47.43 ।।

चन्द्रशालान्विता कार्य्या भेरीशिखरसंयुता ।।
पुरतो वाहनानां च कर्त्तव्या लग्न(घु) मण्डपाः ।। 47.44 ।।

नाट्यशाला च कर्त्तव्या द्वारदेशसमाश्रया ।।
प्रसादे देवतानां च कार्य्या दिक्षु विदिक्ष्वपि ।। 47.45 ।।

द्वारपालाश्च कर्त्तव्या मुख्या गत्वा पृथक् पृथक् ।।
किञ्चिददूरतः कार्य्या मठास्तत्रोपजीविनाम् ।। 47.46 ।।

प्रावृता जगती कार्य्या फलपुष्पजलान्विता ।।
प्रसादेषु सुरांस्थाप्य पूजाभिः पूजयेन्नरः ।।
वासुदेवः सर्वदेवः सर्वभाक् तद्गृहादिकृत् ।। 47.47 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशे आचारकाण्डे प्रासादलिङ्गमण्डपादिलक्षणनिरूपणंनाम सप्तचत्वारिंशोऽध्यायः ।। 47 ।।

**।।सूत उवाच ।।**

प्रतिष्ठां सर्वदेवानां संक्षेपेण वदाम्यहम् ।।
सुतिथ्यादौ सुरम्यां च प्रतिष्ठां कारयेद्गुरुः ।। 48.1 ।।

ऋत्विग्भिः सह चाचार्य्यं वरयेन्मध्यदेशगम् ।।
स्वशाखोक्तविधानेन अथ वा प्रणवेन तु ।। 48.2 ।।

पञ्चभिर्बहुभिर्वाथ कुर्य्यात्पाद्यार्घ्यमेव च ।।
मुद्रिकाभिस्तथा वस्त्रैर्गन्धमाल्यानुलेपनैः ।। 48.3 ।।

मन्त्रन्यासं गुरुः कृत्वा ततः कर्म समारभेत् ।।
प्रासादस्याग्रतः कुर्य्यान्मण्डपं दशहस्तकम् ।। 48.4 ।।

कुर्य्याद्द्वादशहस्तं वा स्तम्भैः षोडशभिर्युतम् ।।
ध्वजाष्टकैश्चतुर्हस्तां मध्ये वेदिं च कारयेत् ।। 48.5 ।।

नदीसङ्गमतीरात्थां वालुकां तत्र दापयेत् ।।
चतुरश्रं कार्मुकाभं वर्त्तुलं कमलाकृति ।। 48.6 ।।

पूर्वादितः समारभ्य कर्त्तव्यं कुण्डपञ्चकम् ।।
अथवा चतुरश्राणि सर्वाण्येतानि कारयेत् ।। 48.7 ।।

शान्तिकर्मिधानेन सर्वकामार्थसिद्धये ।।
शिरः स्थाने तु देवस्य आचार्य्यो होममाचरेत् ।। 48.8 ।।

ऐशान्यां केचिदिच्छन्ति उपलिप्यावनिं शुभाम् ।।
द्वाराणि चैव चत्वारि कृत्वा वै तोरणान्तिके ।। 48.9 ।।

न्यग्रोधोदुम्बराश्वत्थबैल्वपालाशखादिराः ।।
तोरणाः पञ्चहस्ताश्च वस्त्रपुष्पाद्यलङ्कृताः ।। 48.10 ।।

निखनेद्धस्तमेकैकं चत्वारश्चतुरो दिशः ।।
पूर्वद्वारे मृगेन्द्रं तु हयराजं तु दक्षिणे ।। 48.11 ।।

पश्चिमे गोपतिर्नाम सुरशार्दूलमुत्तरे ।।
अग्निमीलेति हि मन्त्रेण प्रथमं पूर्वतो न्यसेत् ।। 48.12 ।।

ईषेत्वेतिहि मन्त्रेण दक्षिणस्यां द्वितीयकम् ।।
अग्नआयाहिमन्त्रेण पश्चिमस्यां तृतीयकम् ।। 48.13 ।।

शन्नोदेवीति मन्त्रेण उत्तरस्यां चतुर्थकम् ।।
पूर्वे अम्बुदवत्कार्य्या आग्नोय्यां धूमरूपिणी ।। 48.14 ।।

याम्यां वै कृष्णरूपा तु नैर्ऋत्या श्यामला (धूसरा) भवेत् ।।
वारुण्यां पाण्डुरा ज्ञेया वायव्यां पीतवर्णिका ।। 48.15 ।।

उत्तरे रक्तवर्णा तु शुक्लैशी च पताकिका ।।
बहुरूपा तथा मध्ये इन्द्रविद्येति पूर्वके ।। 48.16 ।।

आग्निं संसुप्तिमन्त्रेण यमोनागेति दक्षिणे ।।
पूज्या रक्षोहनोवेति पश्चिमे उत्तरेऽपि च ।। 48.17 ।।

वात इत्यभिषिच्याथ आप्यायस्वेति चोत्तरे ।।
तमीशानमतश्चैव विष्णोर्नुकेति मध्यमे ।। 48.18 ।।

कलशौ तु ततो द्वौ द्वौ निवेश्यौ तोरणान्तिके ।।
वस्त्रयुग्मसमायुक्ताश्चन्दनाद्यैः स्वलङ्कृताः ।। 48.19 ।।

पुष्पैर्वितानैर्बहुलैरादिवर्णाभिमन्त्रिताः ।।
दिक्पालाश्च ततः पूज्याः शास्त्रदृष्टेन कर्मणा ।। 48.20 ।।

त्रातारमिन्द्रभन्त्रेण अग्निर्मूर्द्धेति चापरे ।।
अस्मिन्वृक्ष इतं चैव प्रचारीति परा स्मृता ।। 48.21 ।।

किञ्चेदधातु आचत्वाऽभित्वादेति च सप्तमी ।।
इमारुद्रेति दिक्यालान्पूजयित्वा विचक्षणः ।। 48.22 ।।

होमद्रव्याणि वायव्ये कुर्य्यात्सोपस्कराणि च ।।
शङ्खाञ्छास्त्रोदिताञ्छ्वेतान्नेत्राभ्यां विन्यसेद्गुरुः ।। 48.23 ।।

आलोकनेन द्रव्याणि शुद्धिं यान्ति न संशयः ।।
हृदयादीनि चाङ्गानि व्याहृतिप्रणवेन च ।। 48.24 ।।

अस्त्रं चैव समस्तानां न्यासोऽयं सर्वकामिकः ।।
अक्षतान्विष्टरं चैव अस्त्रेणैवाभिमन्त्रितान् ।। 48.25 ।।

विष्टरेण स्पृशेद्द्रव्यान्यागमण्डपसंभृतान् ।।
अक्षतान्विकिरेत्पश्चादस्त्रपूतान्समन्ततः ।। 48.26 ।।

शाक्रीं दिशमथारभ्य यावदीशानगोचरम् ।।
अवकीर्य्याक्षतान्सर्वाँल्लेपयेन्मण्डपं ततः ।। 48.27 ।।

गन्धाद्यैरर्घ्यपात्रे च मन्त्रग्रामं न्यसेद्गुरुः ।।
तेनार्घ्यपात्रतोयेन प्रोक्षयेद्यागमण्डपम् ।। 48.28 ।।

प्रतिष्ठा यस्य देवस्य तदाख्यं कलशं न्यसेत् ।।
ऐशान्यां पूजयेद्याम्ये अस्त्रेणैव च वर्द्धनीम् ।। 48.29 ।।

कलशं वर्द्धनीं चैव ग्रहान्वास्तोष्पतिं तथा ।।
आसने तानि सर्वाणि प्रणवाख्यं जपेद्गुरुः ।। 48.30 ।।

सूत्रग्रीवं रत्नगर्भं वस्त्रयुग्मेन वेष्टितम् ।।
सर्वौषधीगन्धलिप्तं पूजयेत्कलशं गुरुः ।। 48.31 ।।

देवस्तु कलशे पूज्यो वर्द्धन्या वस्त्रमुत्तमम् ।।
वर्द्धन्या तु समायुक्तं कलशं भ्रामयेदनु ।। 48.32 ।।

वर्द्धनीधारया सिञ्चन्नग्रतो धारयेत्ततः ।।
अभ्यर्च्य वर्द्धनीकुम्भं स्थण्डिले देवमर्चयेत् ।। 48.33 ।।

घटं चावाह्य वायव्यां गणानां त्वेति सद्गणम् ।।
देवमीशानकोणे तु जपेद्वास्तोष्पतिं बुधः ।। 48.34 ।।

वास्तोष्पतीति मन्त्रेण वास्तुदोषोपशान्तये ।।
कुम्भस्य पूर्वतो भूतं गणदेवं बलिं हरेत् ।। 48.35 ।।

पठेदिति च विद्याश्च कुर्य्यादालम्भनं बुधः ।।
योगेयोगेति मन्त्रेणास्तरणं शाद्वलैः कुशैः ।। 48.36 ।।

ऋत्विग्भिः सार्द्धमाचार्यः स्नानपीठे गुरुस्तदा ।।
विविधैर्ब्रह्मघोषैश्च पुण्याहजयमङ्गलैः ।। 48.37 ।।

कृत्वा ब्रह्मरथे देवं प्रतिष्ठन्ति ततो द्विजाः ।।
ऐशान्यामानयेत्पीठमण्डपे विन्यसेद्गुरुः ।। 48.38 ।।

भद्रंकर्णेत्यथ स्नात्वा सूत्रवल्कलजेन तु ।।
संस्नाप्य लक्षणोद्धारं कुर्य्यात्तूर्यादि (दूराभि) वादनैः ।। 48.39 ।।

मधुसर्पिः समायुक्तं कांस्ये वा ताम्रभाजने ।।
अक्षिणी चांजयेच्चास्य सुवर्णस्य शलाकया ।। 48.40 ।।

अग्निर्ज्योतीति मन्त्रेण नेत्रोद्वाटं तु कारयेत् ।।
लक्षणे क्रियमाणे तु नामैकं स्थापको व(द) देत् ।। 48.41 ।।

इमम्मेगङ्गेमन्त्रेण नेत्रयोः शीतलक्रिया ।।
अग्निर्मूर्द्धेति मन्त्रेण दद्याद्वल्मी कमृत्तिकाम् ।। 48.42 ।।

बिल्वोदुम्बरमश्वत्थं वटं पालाशमेव च ।।
यज्ञायज्ञेति मन्त्रेण दद्यात्पञ्चकषायकम् ।। 48.43 ।।

पञ्चगव्यं स्नापयेच्च सहदेव्यादि भिस्ततः ।।
सहदेवी बला चैव शतमूली शतावरी ।। 48.44 ।।

कुमारी च गुडूची च सिंही व्याघ्री तथैव च ।।
या ओषधीति मन्त्रेण स्नानमोषधिमज्जलैः ।। 48.45 ।।

याः फलिनीति मन्त्रेण फलस्नानं विधीयते ।।
द्रुपदादिवेति मन्त्रेण कार्य्यमुद्वर्त्तनं बुधैः ।। 48.46 ।।

कलशेषु च विन्यस्य उत्तरादिष्वनुक्रमात् ।।
रत्नानि चैव धान्यानि औषधीं शतपुष्पिकाम् ।। 48.47 ।।

समुद्रांश्चैव विन्यस्य चतुरश्चतुरो दिशः ।।
क्षीरं दधि क्षीरोदस्य घृतोदस्येति वा पुनः ।। 48.48 ।।

आप्यायस्व दधिक्राव्णो याऔषधीरितीति च ।।
तेजोऽसीति च मन्त्रैश्च कुम्भं चैवाभिमन्त्रयेत् ।। 48.49 ।।

समुद्राख्यैश्चतुर्भिश्च स्नापयेत्कलशैः पुनः ।।
स्नातश्चैव सुवेषश्च धूपो देयश्च गुग्गुलुः ।। 48.50 ।।

अभिषेकाय कुम्भेषु तत्तत्तीर्थानि विन्यसेत् ।।
पृथिव्यां यानि तीर्थानि सरितः सागरास्तथा ।। 48.51 ।।

याओषधीति मन्त्रेण कुम्भं चैवाभिमन्त्रयेत् ।।
तेन तोयेन यः स्नायात्स मुच्येत्सर्वपातकैः ।। 48.52 ।।

अभिषिच्य समुद्रैश्च त्वर्घ्यं दद्यात्ततः पुनः ।।
गन्धद्वारेति गन्धं च न्यासं वै वेदमन्त्रकैः ।। 48.53 ।।

स्वशास्त्रविहितैः प्राप्तैर्युवंवस्त्रेति वस्त्रकम् ।।
कविहाविति मन्त्रेण आनयेन्मण्डपं शुभम् ।। 48.54 ।।

शम्भवायेति मन्त्रेण शय्यायां विनिवेशयेत् ।।
विश्वतश्चक्षुर्मन्त्रेण कुर्य्यात्सकलनिष्कलम् ।। 48.55 ।।

स्थित्वा चैव परे तत्त्वे मन्त्रन्यासं तु कारयेत् ।।
स्वशास्त्रविहितो मन्त्रो न्यासस्तस्मिंस्तथोदितः ।। 48.56 ।।

वस्त्रेणाच्छादयित्वा तु पूजनीयः स्वभावतः ।।
यथाशास्त्रं निवेद्यानि पादमूले तु दापयेत् ।। 48.57 ।।

अथ प्रणवसंयुक्तं वस्त्रयुग्मेन वेष्टितम् ।।
कलशं सहिरण्यं च शिरः स्थाने निवेदयेत् ।। 48.58 ।।

स्थित्वा कुण्डसमीपेऽथ अग्नेः स्थापनमाचरेत् ।।
स्वशास्त्रविहितैर्मन्त्रैर्वेदोक्तैर्वाथ वा गुरुः ।। 48.59 ।।

श्रीसूक्तं पावमान्यं च वासदाम्यसवाजिनम् ।।
वृषाकपिं च मित्रं बह्वचः पूर्वतो जपेत् ।। 48.60 ।।

रुद्रं पुरुषसूक्तं च श्लोकाध्यायं च शुक्रियम् ।।
ब्रह्माणं पितृमैत्रं च अध्वर्य्युर्दक्षिणे जपेत् ।। 48.61 ।।

वेदव्रतं वामदेव्यं ज्येष्ठसाम रथन्तरम् ।।
भेरुण्डानि च सामानि छन्दोगः पश्चिमे जपेत् ।। 48.62 ।।

अथर्वशिरसं चैव कुम्भसूक्तमथर्वणः ।।
नीलरुद्रांश्च मैत्रं च अथर्वश्चोत्तरे जपेत् ।। 48.63 ।।

कुण्डं चास्त्रेण संप्रोक्ष्य आचार्य्यस्तु विशेषतः ।।
ताम्रपात्रे शरावे वा यथाविभवतोऽपि वा ।। 48.64 ।।

जातवेदसमानीय अग्रतस्तं निवेशयेत् ।।
अस्त्रेण ज्वालयेद्वह्निं कवचेन तु वेष्टयेत् ।। 48.65 ।।

अमृतीकृत्य तं पश्चान्मन्त्रैः सर्वैश्च देशिकः ।।
पात्रं गृह्य कराभ्यां च कुण्डं भ्राम्य ततः पुनः ।। 48.66 ।।

वैष्णवेन तु योगेन परं तेजस्तु निः क्षिपेत् ।।
दक्षिणे स्थापयेद्ब्रह्म प्रणीताञ्चोत्तरेण तु ।। 48.67 ।।

साधारणेन मन्त्रेण स्वसूत्रविहितेन वा ।।
दिक्षुदिक्षु ततो दद्यात्परिधीं विष्टरैः सह ।। 48.68 ।।

ब्रह्मविष्णुहरेशानाः पूज्याः साधारणेन तु ।।
दर्भेषु स्थापयेद्वह्निं दर्भैश्च परिवेष्टितम् ।। 48.69 ।।

दर्भतोयेन संस्पृष्टो मन्त्रहीनोऽपि शुध्यति ।।
प्रागग्रैरुदगग्रैश्च प्रत्यगग्रैरखण्डितैः ।। 48.70 ।।

विततैर्वेष्टितो वह्निः स्वयं सान्निध्यमाव्रजेत् ।।
अग्नेस्तु रक्षणार्थाय यदुक्तं कर्ममन्त्रवित् ।। 48.71 ।।

आचार्य्याः केचिदिच्छन्ति जातकर्माद्यनन्तरम् ।।
पवित्रं तु ततः कृत्वा कुर्य्यादाज्यस्य संस्कृतिम् ।। 48.72 ।।

आचार्य्योऽथ निरीक्ष्यापि नीराज्यमभिमन्त्रितम् ।।
आज्यभागाभिघारान्तमवेक्षेताज्यसिद्धये ।। 48.73 ।।

पञ्चपञ्चाहुतीर्हुत्वा आज्येन तदनन्तरम् ।।
गर्भाधानादितस्तावद्यावद्गोदानिकं भवेत् ।। 48.74 ।।

स्वशास्त्रविहितैर्मन्त्रैः प्रणवेनाथ होमयेत् ।।
ततः पूर्णाहुतिं दत्त्वा पूर्णात्पूर्णमनारेथः ।। 48.75 ।।

एवमुत्पादितो वह्निः सर्वकर्मसु सिद्धिदः ।।
पूजयित्वा ततो वह्निं कुण्डेषु विहरेत्तथा ।। 48.76 ।।

इन्द्रादीनां स्वमन्त्रैश्च तथाहुतिशतं शतम् ।।
पुर्णाहुतिं शतस्यान्ते सर्वेषां चैव होमयेत् ।। 48.77 ।।

स्वामाहुतिमथाज्येषु होता तत्कलशे न्यसेत् ।।
देवताश्चैव मन्त्रांश्च तथैव जातवेदसम् ।। 48.78 ।।

आत्मानमेकतः कृत्वा ततः पूर्णां प्रदापयेत् ।।
निष्कृष्य बहिराचार्य्यो दिक्पालानां बलिं हरेत् ।। 48.79 ।।

भूतानां चैव देवानां नागानां च प्रयोगतः ।।
तिलाश्च समिधश्चैव होमद्रव्यं द्वयं स्मृतम् ।। 48.80 ।।

आज्यं तयोः सहकारि तत्प्रधानं यदङ्क(क्ष)योः ।।
पुरुषसुक्तं पूर्वेणैव रुद्रचैव तु दक्षिणे ।। 48.81 ।।

ज्येष्ठसाम च भारुण्डं तन्नयामीति पश्चिमे ।।
नीलरुद्रो महामन्त्रः कुम्भसूक्तमथर्वणः ।। 48.82 ।।

हुत्वा सहस्त्रमेकैकं देवं शिरसि कल्पयेत् ।।
एवं मध्ये तथा पादे पूर्णाहुत्या तथा पुनः ।। 48.83 ।।

शिरः स्थानेषु जुहुयादाविशेच्चाप्यनुक्रमात् ।।
वेदानामादिमन्त्रैर्वा मन्त्रैर्वा देवनामभिः ।। 48.84 ।।

स्वशास्त्रविहितैर्वापि गायत्र्या वाथ ते द्विजाः ।।
गायत्र्या वाथवाचार्य्यो व्याहृतिप्रणवेन तु ।। 48.85 ।।

एवं होमविधिं कृत्वा न्यसेन्मन्त्रांस्तु देशिकः ।।
चरणावग्निमीळे तु इषेत्वो गुल्फयोः स्थिताः ।। 48.86 ।।

अग्न आयाहि जङ्घे द्वे शन्नोदेवीति जानुनी ।।
बृहद्रथन्तरे ऊरू उदरेष्वातिलो (स्वातिनो) न्यसेत् ।। 48.87 ।।

दीर्घायुष्ट्वाय हृदये श्रीश्चते गलके न्यसेत् ।।
त्रातारमिन्द्रमुरसि नेत्राभ्यां तु त्रियम्बकम् ।। 48.88 ।।

मूर्द्धाभव तथा मूर्ध्नि आलग्नाद्धोममाचरेत् ।।
उत्था पयेत्ततो देवमुत्तिष्ठब्रह्मणस्पते ! ।। 48.89 ।।

वेदपुण्याहशब्देन प्रासादानां प्रदक्षिणम् ।।
पिण्डिकालंभनं कृत्वा देवस्यत्वेति मन्त्रवित् ।। 48.90 ।।

दिक्पालान्सह रत्नैश्च धातूनौषधयस्तथा ।।
लौहबीजानि सिद्धानि पश्चाद्देवं तु विन्यसेत् ।। 48.91 ।।

न गर्भे स्थापयेद्देवं न गर्भं तु परित्यजेत् ।।
ईषन्मध्यं परित्यज्य ततो दोषापहं तु तत् ।। 48.92 ।।

तिलस्य तुषमात्रं तु उत्तरं किञ्चिदानयेत् ।।
ॐ स्थिरो भव शिवो भव प्रजाभ्यश्च नमोनमः ।। 48.93 ।।

देवस्य त्वा सवितुर्वः षड्भ्यो वै विन्यसेद्गुरुः ।।
तत्त्ववर्णकलामात्रं प्रजानि भुवनात्मजे ।। 48.94 ।।

षड्भ्यो विन्यस्य सिद्धार्थं ध्रुवार्थैरभिमन्त्रयेत् ।।
सम्पातकलशेनैव स्नापयेत्सुप्रतिष्ठितम् ।। 48.95 ।।

दीपधूपसुगन्धैश्च नैवेद्यैश्च प्रपूजयेत् ।।
अर्घ्यं दत्त्वा नमस्कृत्य ततो देवं क्षमापयेत् ।। 48.96 ।।

पात्रं वस्त्रयुगं छत्रं तथा दिव्याङ्गुलीयकम् ।।
ऋत्विग्भ्यश्च प्रदातव्या दक्षिणा चैव शक्तितः ।। 48.97 ।।

चतुर्थी जुहुयात्पश्चाद्यजमानः समाहितः ।।
आहुतीनां शतं हुत्वा ततः पूर्णां प्रदापयेत् ।। 48.98 ।।

निष्क्रम्य बहिराचार्य्यो दिक्पालानां बलिं हरेत् ।।
आचार्य्यः पुष्पहस्तस्तु क्षमस्वेति विसर्जयेत् ।। 48.99 ।।

यागान्ते कपिलां दद्यादाचार्य्याय च चामरम् ।।
मुकुटं कुण्डलं छत्रं केयूरं कटिसूत्रकम् ।। 48.100 ।।

व्यजनं ग्रामवस्त्रादीन्सोपस्कारं सुमण्डपम् ।।
भोजनं च महात्कुर्य्यात्कृतकृत्यश्च जायते ।।
यजमानो विमुक्तः स्यात्स्थापकस्य प्रसादतः ।। 48.101 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे देवप्रतिष्ठादिनिरूपणं नामाष्टचत्वारिंशोऽध्यायः इति प्रतिष्ठाप्रकरणं समाप्तम्।। 48 ।।

**।। ब्रह्मोवाच ।।**

सर्गादिकृद्धरिश्चैव पूज्यः स्वायम्भुवादिभिः ।।
विप्राद्यैः स्वेन धर्मेण तद्धर्मं व्यास ! वै श्रृणु ।। 49.1 ।।

यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः ।।
अध्यापनञ्चाध्ययनं षट् कर्माणिद्विजोत्तमे ।। 49.2 ।।

दानमध्ययनं यज्ञो धर्मः क्षत्त्रियवैश्ययोः ।।
दण्डस्तस्य कृषिर्वैश्यस्य शस्यते ।। 49.3 ।।

शुश्रूषैव द्विजातीनां शूद्राणां धर्मसाधनम् ।।
कारुकर्म तथाऽऽजीवोपाकयज्ञोऽपि धर्मतः ।। 49.4 ।।

भिक्षाचर्य्याथ शुश्रूषा गुरोः स्वाध्याय एव च ।।
सन्ध्याकर्माग्निकार्य्यञ्च धर्मोऽयं ब्रह्मचारिणः ।। 49.5 ।।

सर्वेषामाश्रमाणां च द्वैविध्यं तु चतुर्विधम् ।।
ब्रह्मचार्य्युपकुर्वाणो नैष्ठिको ब्रह्मतत्परः ।। 49.6 ।।

योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत् ।।
उपकुर्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः ।। 49.7 ।।

अग्नयोऽतिथिशुश्रूषा यज्ञो दानं सुरार्चनम् ।।
गृहस्थस्य समासेन धर्मोऽयं द्विजसत्तम ! ।। 49.8 ।।

उदासीनः साधकश्च गृहस्थो द्विविधो भवेत् ।।
कुटुम्बभरणे युक्तः साधकोऽसौ गृही भवेत् ।। 49.9 ।।

ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्य्याधनादिकम् ।।
एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः ।। 49.10 ।।

भूमौ मूलफलाशित्वं स्वाध्यायस्तप एव च ।।
संविभागो यथान्यायं धर्मोऽयं वनवासिनः ।। 49.11 ।।

तपस्तप्यति योऽरण्ये यजेद्देवाञ्जुहोति च ।।
स्वाध्याये चैव निरतो वनस्थस्तापसोत्तमः ।। 49.12 ।।

तपसा कर्शितोऽत्यर्थं यस्तु ध्यानपरो भवेत् ।।
सन्यासी स हि विज्ञेयो वानप्रस्थाश्रमे स्थितः ।। 49.13 ।।

योगाभ्यासरतो नित्यमारुरुक्षुर्जितेन्द्रियः ।।
ज्ञानाय वर्त्तते भिक्षुः प्रोच्यते पारमेष्ठिकः ।। 49.14 ।।

यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः ।।
सम्यक् चन्दनम् सम्पन्नः स योगी भिक्षुरुच्यते ।। 49.15 ।।

भैक्ष्यं श्रुतं च मौनित्वं तपो ध्यानं विशेषतः ।।
सम्यक् च ज्ञानवैराग्यं धर्मोऽयं भिक्षुके मतः ।। 49.16 ।।

ज्ञानसन्यासिनः केचिद्वेदसन्यासिनोऽपरे ।।
कर्मसन्यासिनः केचित्त्रिविधः पारमेष्ठिकः ।। 49.17 ।।

योगी च त्रिविधो ज्ञेयो भौतिकः क्षत्त्र एवं च ।।
तृतीयोऽन्त्याश्रमी प्रोक्तो योगमूर्त्तिसमास्थितः ।। 49.18 ।।

प्रथमा भावना पूर्वे मोक्षे त्वक्ष(दुष्क) रभावना ।।
तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी ।। 49.19 ।।

धर्मात्संजायते मोक्षो ह्यर्थात्कामोऽभिजायते ।।
प्रवृत्तिश्च निवृत्तिश्च द्विविधं कर्म वैदिकम् ।। 49.20 ।।

ज्ञानं पूर्वं निवृत्तं स्यात्प्रवृत्तं चाग्निदेवकृत् ।।
क्षमा दमो दया दानमलोभा (भो) भ्यास एव च ।। 49.21 ।।

आर्जवं चान्सूया च तीर्थानुसरणं तथा ।।
सत्यं संतोष आस्तिक्यं तथा चेन्द्रियनिग्रहः ।। 49.22 ।।

देवताभ्यर्चनं पूजा ब्राह्मणानां विशेषतः ।।
अहिंसा प्रियवादित्वमपैशुन्यमरूक्षता ।। 49.23 ।।

एते आश्रमिका धर्माश्चतुर्वर्ण्यं ब्रवीम्यतः ।।
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ।। 49.24 ।।

स्थानमैन्द्रं क्षत्त्रियाणां संग्रामेष्वपलायिनाम् ।।
वैश्यानां मारुतं स्थानं स्वधरममनुवर्त्तताम् ।। 49.25 ।।

गान्धर्वं शूद्रजातीनां परिचारे च वर्त्तताम् ।।
अष्टाशीतिसहस्त्राणामृषीणामूर्द्ध्वरेतसाम् ।। 49.26 ।।

स्मृतं तेषां तु यत्स्थानं तदेव वन (गुरु) वासिनाम् ।।
सप्तर्षीणां तु यत्स्थानं स्थानं तद्वै वनौकसाम् ।। 49.27 ।।

यतीनां यतचित्तानां न्यासिनामूर्द्ध्वरेतसाम् ।।
आनन्दं ब्रह्म तत्स्थानं यस्मान्नावर्त्तते मुनिः ।। 49.28 ।।

योगिनाममृतस्थानं व्योमाख्यं परमाक्षरम् ।।
आनन्दमैश्वरं यस्मान्मुक्तो नावर्त्तते नरः ।। 49.29 ।।

मुक्तिरष्टाङ्गविज्ञानात्संक्षेपात्तद्वदे श्रृणु ।।
यमाः पञ्च त्वहिंसाद्या अहिंसा प्राण्यहिंसनम् ।। 49.30 ।।

सत्यं भूतहितं वाक्यमस्तेयं स्वाग्रहं परम् ।।
अमैथुनं ब्रह्मचर्य्यं सर्वत्यागोऽपरिग्रहः ।। 49.31 ।।

नियमाः पञ्च सत्याद्या बाह्यमाभ्यन्तरं द्विधा ।।
शौचं तुष्टिश्च सन्तोषस्तपश्चोंद्रियनिग्रहः ।। 49.32 ।।

स्वाध्यायः स्यान्मन्त्रजापः प्रणिधानं हरेर्यजिः ।।
आसनं पद्मकाद्युक्तं प्राणायामो मरुज्जयः ।। 49.33 ।।

मन्त्रध्यान तो गर्भो विपरीतो ह्यगर्भकः ।।
एवं द्विधा त्रिधाप्युक्तं पुरणात्पूरकः स च ।। 49.34 ।।

कुम्भको निश्चलत्वाच्च रेचनाद्रेचकस्त्रिधा ।।
लघुर्द्वादशमात्रः स्याच्चतुर्विंशतिकः परः ।। 49.35 ।।

षट्त्रिंशन्मात्रिकः श्रेष्ठः प्रत्याहारश्च रोधनम् ।।
ब्रह्मात्मचिन्ता ध्यानं स्याद्धारणा मनसो धृतिः ।। 49.36 ।।

अहं ब्रह्मेत्यवस्थानं समाधिर्ब्रह्मणः स्थितिः ।।
अहमात्मा परं ब्रह्म सत्यं ज्ञानमनन्तकम् ।। 49.37 ।।

ब्रह्म विज्ञानमानन्दः स तत्त्वमसि केवलम् ।।
अहं ब्रह्मास्म्यहं ब्रह्म अशरीरमानिन्द्रियम् ।। 49.38 ।।

अहम्मनोबुद्धिमहदहङ्कारादिवर्जितम् ।।
जाग्रत्स्वप्नसुषुप्त्यादियुक्तज्योतिस्तदीयकम् ।। 49.39 ।।

नित्यं शुद्धं बुद्धमुक्तं सत्यमानन्दमद्वयम् ।।
योऽसावादित्यपुरुषः सोऽसावहमखण्डितम् ।।
इति ध्यायन्विमुच्येत् ब्राह्मणो भवबन्धनात् ।। 49.40 ।।

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वर्णआश्रमधर्मनिरूपणं नामैकोनपञ्चाशत्तमोध्यायः ।।
49 ।।

**।।ब्रह्मोवाच ।।**

अहन्यहनि यः कुर्य्यात्क्रियां स ज्ञानमाप्नुयात् ।।
ब्राह्मे मुहूर्त्ते चोत्थाय धर्ममर्थं च चिन्तयेत् ।। 50.1 ।।

चिन्तयेद्धृदि पद्मस्थमानन्दमजरं हरिम् ।।
उषः काले तु संप्राप्ते कृत्वा चावश्यकं बुधः ।। 50.2 ।।

स्त्रायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि ।।
प्रतः स्नानेन पूर्यते येऽपि पापकृतो जनाः ।। 50.3 ।।

तस्मात्सर्वप्रयत्नेन प्रातः स्नानं समाचरेत् ।।
प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत् ।। 50.4 ।।

सुखात्सुप्तस्य सततं लालाद्याः संस्त्रवन्ति हि ।।
अतो नैवाचरेत्कर्माण्यकृत्वा स्नानमादितः ।। 50.5 ।।

अलक्ष्मीः कालकर्णो च दुः स्वप्नं दुर्विचिन्तितम् ।।
प्रतः स्नानेन पापानि धूयन्ते नात्र संशयः ।। 50.6 ।।

न च स्नानं विना पुंसां प्राशस्त्यं कर्म संस्मृतम् ।।
होमे जप्ये विशेषेण तस्मात्स्नानं समाचरेत् ।। 50.7 ।।

अशक्तावशिरस्कं तु स्नानमस्य विधीयते ।।
आर्द्रेण वाससा वापि मार्जनं कायिकं स्मृतम् ।। 50.8 ।।

ब्राह्ममाग्नेयमुद्दिष्टं वायव्यं दिव्यमेव च ।।
वारुणं यौगिकं तद्वत्षडङ्गं स्नानमाचरेत् ।। 50.9 ।।

ब्राह्मं तु मार्जनं मन्त्रैः कुशैः सोदकबिन्दुभिः ।।
आग्रेयं भस्मनाऽऽपादमस्तकाद्देहधूननम् ।। 50.10 ।।

गवां हि रजसा प्रोक्तं वायव्यं स्नानमुत्तमम् ।।
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।। 50.11 ।।

वारुणं चावगाहं च मानसं त्वात्मवेदनम् ।।
यौगिकं स्नानमाख्यातं योगेन हरिचिन्तनम् ।। 50.12 ।।

आत्मतीर्थमिति ख्यातं सेवितं ब्रह्मवादिभिः ।।
क्षीरवृक्षसमुद्भूतं मालतीसम्भवं शुभम् ।। 50.13 ।।

अपामार्गं च विल्वं च करवीरं च धावने ।।
उदङ्मुखः प्राङ्मुखो वा भक्षयेद्दन्तधावनम् ।। 50.14 ।।

प्रक्षाल्य भुक्त्वा तज्जह्याच्छुचौ देशे समाहितः ।।
स्नात्वा सन्तर्पयेद्देवानृषीन्पितृगणांस्तथा ।। 50.15 ।।

आचम्य विधिवन्नित्यं पुनराचम्य वाग्यतः ।।
संमार्ज्य मन्त्रै रात्मानं कुशैः सोदकबिन्दुभिः ।। 50.16

आपोहिष्ठाव्याहृतिभिः सावित्र्या वारुणैः शुभैः ।।
ॐकारव्याहृतियुतां गायत्रीं वेदमातरम् ।। 50.17 ।।

जप्त्वा जलाञ्जलिं दद्याद्भारस्करं प्रति तन्मनाः ।।
प्राक्कूलेषु ततः स्थित्वा दर्भेषु सुसमाहितः ।। 50.18 ।।

प्राणायामं ततः कृत्वा ध्यायेत्सन्ध्यामिति श्रुतिः ।।
या सन्ध्या सा जगत्सूतिर्मायातीता हि निष्कला ।। 50.19 ।।

ऐश्वरी केवला शक्तिस्तत्त्वत्रयसमुद्भवा ।।
ध्यात्वा रक्तां सितां कृष्णां गायत्रीं वै जपेद्वुधः ।। 50.20 ।।

प्राङ्मुखः सततं विप्रः सन्ध्योपासनमाचरेत् ।।
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।। 50.21 ।।

यदन्यत्कुरुते किञ्चिन्न तस्य फलभाग्भवेत् ।।
अनन्यचेतसः सन्तो ब्राह्मणा वेदपारगाः ।। 50.22 ।।

उपास्य विधिवत्सन्ध्यां प्राप्ताः पूर्वपरां गतिम् ।।
योऽन्यत्र कुरुते यत्नं धर्म कार्य्ये द्विजोत्तमः ।। 50.23 ।।

विहाय सन्ध्याप्रणतिं स याति नरकायुतम् ।।
तस्मात्सर्वप्रयत्नेन सन्ध्योपासनमाचरेत् ।। 50.24 ।।

उपासितो भवेत्तेन देवो योगतनुः परः ।।
सहस्त्रपरमां नित्यां शतमध्यां दशावराम् ।। 50.25 ।।

गायत्रीं वै जपेद्विद्वान्प्राङ्मुखः प्रयतः शुचिः ।।
अथोपतिष्ठेदादित्यमुदयस्थं समाहितः ।। 50.26 ।।

मन्त्रैस्तु विविधैः सारैः ऋग्यजुःसामसंज्ञितैः ।।
उपस्थाय महायोगं देवदेवं दिवाकरम् ।। 50.27 ।।

कुर्वीत प्रणतिं भूमौ मूर्धानमभिमन्त्रितः ।।
ॐ खखोल्काय शान्ताय कारणत्रयहेतवे ।। 50.28 ।।

निवेदयामि चात्मानं नमस्ते ज्ञानरूपिणे ।।
त्वमेव ब्रह्म परममापो ज्योती रसोऽमृतम् ।। 50.29 ।।

भूर्भुवः स्वस्त्वमोङ्कारः सर्वो रुद्रः सनातनः ।।
एतद्वै सूर्यहृदयं जप्त्वा स्तवनमुत्तमम् ।। 50.30 ।।

प्रातः काले च मध्याह्ने नमस्कुर्य्याद्दिवाकरम् ।।
अथागम्य गृहं विप्रः (पश्चात्) समाचम्य यथाविधि ।। 50.31 ।।

प्रज्वाल्य वह्निं विधिवज्जुहुयाज्जातवेदसम् ।।
ऋत्विक् पुत्रोऽथ पत्नी वा शिष्यो वापि सहोदरः ।। 50.32 ।।

प्राप्यानुज्ञां विशेषेण जुहुयाद्वा यथाविधि ।।
विना म (त) न्त्रेण यत्कर्म नामुत्रेह फलप्रदम् ।। 50.33 ।।

दैवतानि नमस्कुर्य्यादुपहारान्निवेदयेत् ।।
गुरुं चैवाप्युपासीत हितं चास्य समाचरेत् ।। 50.34 ।।

वेदाभ्यासं ततः कुर्य्यात्प्रयत्नाच्छक्तितो द्विजः ।।
जपेद्वाध्यापयेच्छिष्यान्धारयेद्वै विचारयेत् ।। 50.35 ।।

अवेक्षेत च शास्त्राणि धर्मादीनि द्विजोत्तमः ।।
वैदिकांश्चैव निगमान्वेदाङ्गानि च सर्वशः ।। 50.36 ।।

उपयादीश्वरं चैव योगक्षेमप्रसिद्धये ।।
साधयेद्विविधानर्थान्कुटुम्बार्थं ततो द्विजः ।। 50.37 ।।

ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् ।।
पुष्पाक्षतांस्तिलकुशान् गोमयं शुद्धमेव च ।। 50.38 ।।

नदीषु देवखातेषु तडागेषु सरः सु च ।।
स्नानं समाचरेन्नैव परकीये कदाचन ।। 50.39 ।।

पञ्च पिण्डाननुद्धृत्य स्नानं दुष्यन्ति नित्यशः ।।
मृदैकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि ।। 50.40 ।।

अधश्च तिसृभिः क्षाल्यं पादौ षट्भिस्तथैव च ।।
मृत्तिका च समुद्दिष्टा वृद्धामलकमात्रिका ।। 50.41 ।।

गोमयस्य प्रमाणं तु तेनाङ्गं लेपयेत्ततः ।।
प्रक्षाल्याचम्य विधिवत्ततः स्नायात्समाहितः ।। 50.42 ।।

लेपयित्वा तु तीरस्थस्तल्लिङ्गैरेव मन्त्रतः ।।
अभिमन्त्र्य जलं मन्त्रैरालिङ्गैर्वारुणैः शुभैः ।। 50.43 ।।

स्नानकाले स्मरेद्विष्णमापो नारायणो यतः ।।
प्रेक्ष्य ॐकारमादित्यं त्रिर्निमज्जेज्जलाशये ।। 50.44 ।।

आचान्तः पुनराचामेन्मन्त्रेणानेन मन्त्रवित् ।।
अंतश्चरसि भूतेषु गुहायां विश्वतोमुखः ।। 50.45 ।।

त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ।।
द्रुपदां वा त्रिरभ्यस्येव्द्याहृतिप्रणवान्विताम् ।। 50.46 ।।

सावित्रीं वा जपे द्विद्वांस्तथा चैवाघमर्षणम् ।।
ततः संमार्जनं कुर्य्यादापोहिष्ठामयोभुवः ।। 50.47 ।।

इदमापः प्रवहतव्याहृतिभिस्तथैव च ।।
ततोऽभिमन्त्रितं तोयमापो हिष्ठादिमन्त्रकैः ।। 50.48 ।।

अन्तर्जलमवाङ्मग्नो जपेत्त्रिरघमर्षणम् ।।
द्रुपदां वाथ सावित्री तद्विष्णोः परमं पदम् ।। 50.49 ।।

आवर्त्तयेद्वा प्रणवं देवदेवं रमरेद्धरिम् ।।
आपः पाणौ समादाय जप्त्वा वै मार्जने कृते ।। 50.50 ।।

विन्यस्य मूर्ध्नि तत्तोयं मुच्यते सर्वपातकैः ।।
सन्ध्यामुपास्य चाचम्य संस्मरेन्नित्यमीश्वरम् ।। 50.51 ।।

अथोपतिष्ठेदादित्यमूर्द्ध्वपुष्पान्विताञ्जलिम् ।।
प्रक्षिप्यालोकयेद्देवमुदयंतं न शक्यते ।। 50.52 ।।

उदुत्यं चित्रमित्येवं तच्चक्षुरिति मन्त्रतः ।।
हंसः शुचिषदेतेन सावित्र्या च विशेषतः ।। 50.53 ।।

अन्यैः सौरैर्वैदिकैश्च गायत्रीं च ततो जपेत् ।।
मन्त्रांश्च विविधान्पश्चात्प्राक्कूले च कुशासने ।। 50.54 ।।

तिष्ठंश्च वीक्ष्यमाणोऽर्कं जपं कुर्य्यात्समाहितः ।।
स्फटिकाब्जाक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः ।। 50.55 ।।

कर्त्तव्या त्वक्षाला स्यादन्तरा तत्र सा स्मृता ।।
यदि स्यात्क्लिन्नवासा वै वारिमध्यगतश्चरेत् ।। 50.56 ।।

अन्यथा च शुचौ भूम्यां दर्भेषु च समाहितः ।।
प्रदक्षिणं समावृत्य नमस्कृत्य ततः क्षितौ ।। 50.57 ।।

आचम्य च यथाशास्त्रं शक्त्या स्वाध्यायमाचरेत् ।।
ततः सन्तर्पयेद्देवानृषीन्पितृगणांस्तथा ।। 50.58 ।।

आदावोङ्कारमुच्चार्य्य नमोऽन्ते तर्पयामि च ।।
देवान्ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ।। 50.59 ।।

पितृन्देवान्मुनीन् भक्त्या स्वसूत्रोक्तविधानतः ।। 50.60 ।।

देवर्षीस्तर्पयेद्धीमानुदकाञ्जलिभिः पितृन् ।।
यज्ञोपवीती देवानां निवीती ऋषितर्पणे ।। 50.61 ।।

प्राचीनावीती पित्र्ये तु तेन तीर्थेन भारत ।।
निष्पीड्य स्नानवस्त्रं वै समाचम्य च वाग्यतः ।। 50.62 ।।

स्वैर्मन्त्रैरर्चयेद्देवान्पुष्पैः पत्रैस्तथाम्बुभिः ।।
ब्रह्माणं शंकरं सूर्य्यं तथैव मधुसूदनम् ।। 50.63 ।।

अन्यांश्चाभिमतान्देवान् भक्त्या चाक्रोधनो हरः ! ।।
प्रदद्याद्वाथ पुष्पादि सूक्तेन पुरुषेण तु ।। 50.64 ।।

आपो वा देवताः सर्वास्तेन सम्यक् समर्चिताः ।।
ध्यात्वा प्रणवपूर्वं वै देवं वारिसमाहितः ।। 50.65 ।।

नमस्कारेण पुष्पाणि विन्यसेद्वै पृथक् पृथक् ।।
नर्तेह्याराधनात्पुण्यं विद्यते कर्म वैदिकम् ।। 50.66 ।।

तस्मात्तत्रादिमध्यान्ते चेतसा धारयेद्धरिम् ।।
तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेण तु ।। 50.67 ।।

निवेदयेच्च आत्मानं विष्णवेऽमलतेजसे ।।
तदाध्यात्ममनाः शान्तस्तद्विष्णोरिति मन्त्रतः ।। 50.68 ।।

अप्रेते सशिरा वेतियजेत्वा पुष्पके हरिम् ।।
देवयज्ञं भूतयज्ञं पितृयज्ञं तथैव च ।।
मानुषं ब्रह्मयज्ञं च पञ्च यज्ञान्समाचरेत् ।। 50.69 ।।

यदि स्यात्तर्पणादर्वाग्ब्रह्मयज्ञं कुतो भवेत् ।।
कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमाचरेत् ।। 50.70 ।।

वैश्वदेवस्तु कर्त्तव्यो देवयज्ञः स तु स्मृतः ।।
भूतयज्ञः स वै ज्ञेयो भूतेभ्यो यस्त्वयं बलिः ।। 50.71 ।।

श्वभ्यश्च श्वपचेभ्यश्च पतितादिभ्य एव च ।।
दद्याद्भूमौ बहिस्त्वन्नं पक्षिभ्यश्च द्विजोत्तमः ।। 50.72 ।।

एकं तु भोजयेद्विप्रं पितृनुद्दिश्य सत्तमाः ।।
नित्यश्राद्धं तदुद्दिश्य पितृयज्ञो गतिप्रदः ।। 50.73 ।।

उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः ।।
वेदतत्त्वार्थविदुषे द्विजायैवोपपादयेत् ।। 50.74 ।।

पूजयेदतिथिं नित्यं नमस्येदर्चयोद्द्विजम् ।।
मनोवाक्कर्मभिः शान्तं स्वागतैः स्वगृहं ततः ।। 50.75 ।।

भिक्षामाहुर्ग्रासमात्रमन्नं तत्स्याच्चतुर्गुणम् ।।
पुष्कलं हन्तकारं तु तच्चतुर्गुणमुच्यते ।। 50.76 ।।

गोदोहमात्रकालं वै प्रतीक्ष्यो ह्यतिथिः स्वयम् ।।
अभ्यागतान्यथाशक्ति पूजयेदतिथिं तथा ।। 50.77 ।।

भिक्षां वै भिक्षवे दद्याद्विधिवद्ब्रह्यचारिणे ।।
दद्यादन्नं यथाशक्ति अर्थिभ्यो लोभवर्जितः ।। 50.78 ।।

भुञ्जति बन्धुभिः सार्द्धं वाग्यतोऽन्नमकुत्सयन् ।।
अकृत्वा तु द्विजः पञ्च महायज्ञान् द्विजोत्तमः ।। 50.79 ।।

भुञ्जते चेत्स मूढात्मा तिर्य्यग्योनिं च गच्छति ।।
वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्षमाः ।। 50.80 ।।

नाशयन्त्याशु पापानि देवानामर्चनं तथा ।।
यो मोहादथ वालस्यादकृत्वा देवतार्चनम् ।। 50.81 ।।

भुङ्क्ते स याति नरकान्त्सूंकरेष्वेव जायते ।।
अशौचं संप्रवक्ष्यामि अशुचिः पातकी सदा ।। 50.82 ।।

अशौचं चैव संसर्गाच्छुद्धिः संसर्गवर्जनात् ।।
दशाहं प्राहुराशौचं सर्वेविप्रा विपश्चितः ।। 50.83 ।।

मृतेषु वाथ जातेषु ब्राह्मणानां द्विजोत्तम ।।
आदन्तजननात् सद्य आचूडादेकरात्रकम् ।। 50.84 ।।

त्रिरात्रमौपनयनाद्दशरात्रमतः परम् ।।
क्षत्त्रियो द्वादशहेन दशभिः पञ्चभिर्विशः ।। 50.85 ।।

शुध्येन्मासेन वै शूद्रो यतीनां नास्ति पातकम् ।।
रात्रिभिर्मासतुल्याभिर्गर्भस्त्रावेषु शौचकम् ।। 50.86 ।।

इति गारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नित्यकर्माशौचयोर्निरूपणं नाम पञ्चाशत्तमोऽध्यायः ।। 50 ।।

**॥ ब्रह्मोवाच ॥**

अथातः संप्रवक्ष्यामि दानधर्ममनुत्तमम् ॥
अर्थानामुचिते पात्रे श्रद्धया प्रतिपादनम् ॥ 51.1 ॥

दानं तु कथितं तज्ज्ञैर्भुक्तिमुक्तिफलप्रदम् ॥
न्यायेनोपार्जयेद्वित्तं दानभोगफलं च तत् ॥ 51.2 ॥

अध्यापनं याजनं च वृत्तमाहुः प्रतिग्रहम् ॥
कुसीदं कृषिवाणिज्यं क्षत्त्रवृत्तोऽथ वर्जयेत् ॥ 51.3 ॥

यद्दीयते तु पात्रेभ्यस्तद्दानं परिकीर्त्तितम् ॥
नित्यं नैमित्तिकं काम्यं विमलं दानमीरितम् ॥ 51.4 ॥

अहन्यहनि यत्किञ्चिद्दीयतेऽनुपकारिणे ॥
अनुद्दिश्य फलं तस्माद्ब्राह्मणाय तु नित्यशः ॥ 51.5 ॥

यत्तु पापोपशान्त्यै च दीयते विदुषां करे ॥
नैमित्तिकं तदुद्दिष्टंदानं सद्भिरनुष्ठितम् ॥ 51.6 ॥

अपत्यविजयैश्वर्य्यस्वर्गार्थं यत्प्रदीयते ॥
दानं तत्काम्यमाख्यातमृषिभिर्धर्माचिन्तकैः ॥ 51.7 ॥

ईश्वरप्रीणनार्थाय ब्रह्मावित्सुप्रदीयते ॥
चेतसा सत्त्वयुक्तेन दानं तद्विमलं शिवम् ॥ 51.8 ॥

इक्षुभिः सन्ततां भूमिं यवगोधूमशालिनीम् ॥
ददाति वेदविदुषे स न भूयोऽभिजायते ॥ 51.9 ॥

भूमिदानात्परं दानं न भूतं न भविष्यति ॥
विद्यां दत्त्वा ब्राह्मणाय ब्रह्मलोके महीयते ॥ 51.10 ॥

दद्यादहरहस्तास्तु श्रद्धया ब्रह्मचारिणे ॥
सर्वपापविनिर्मुक्तो ब्रह्मस्थानमवाप्नुयात् ॥ 51.11 ॥

वैशाख्यां पौर्णमास्यां तु ब्राह्मणान्सप्त पञ्च च ॥
उपोष्याभ्यर्चयेद्विद्वान्मधुना तिलसर्पिषा ॥ 51.12 ॥

गन्धादिभिः समभ्यर्च्य वाचयेद्वा स्वयं वदेत् ॥
प्रीयतां धर्मराजेति यथा मनसि वर्त्तते ॥ 51.13 ॥

यावज्जीवं कृतं पापं तत्क्षणादेव नश्यति ॥
कृष्णाजिने तिलान्कृत्वा हिरण्यमधुसर्पिषा ॥ 51.14 ॥

ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥
घृतान्नमुदकं चैव वैशाख्यां च विशेषतः ॥ 51.15 ॥

निर्दिश्य धर्मराजाय विप्रेभ्यो मुच्यते भयात् ॥
द्वादश्यामर्चयेद्विष्णुमुपोष्याघप्रणाशनम् ॥ 51.16 ॥

सर्वपापविनिर्मुक्तो नरो भवति निश्चितम् ॥
यो हि यां देवतामिच्छेत्समाराधयितुं नरः ॥ 51.17 ॥

ब्राह्मणान्पूजयेद्यत्नाद्भोजयेद्योषितः सुरान् ॥
सन्तानकामः सततं पूजयेद्वै पुरन्दरम् ॥ 51.18 ॥

ब्रह्मवर्चसकामस्तु ब्राह्मणान्ब्रह्मनिश्चयात् ॥
आरोग्यकामोऽथ रविं धनकामो हुताशनम् ॥ 51.19 ॥

कर्मणां सिद्धिकामस्तु पूजयेद्वै विनायकम् ॥
भोगकामो हि शशिनं बलकामः समीरणम् ॥ 51.20 ॥

मुमुक्षुः सर्वसंसारात्प्रयत्नेनार्चयेद्धरिम् ॥
अकामः सर्वकामो वा पूजयेत्तु गदाधरम् ॥ 51.21 ॥

वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ॥
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ 51.22 ॥

भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः ॥
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥ 51.23 ॥

वासोदश्चान्द्रसालोक्यमश्विसालोक्यमश्वदः ॥
अनडुद्धः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥ 51.24 ॥

यानशय्याप्रदो भार्य्यामैश्वर्य्यमभयप्रदः ॥
धान्यदः शावतं सौख्यं ब्रह्मदो ब्रह्म शाश्वतम् ॥ 51.25 ॥

वेदवित्सु ददज्ज्ञानं स्वर्गलोके महीयते ॥
गवां घासप्रदानेन सर्वपापैः प्रमुच्यते ॥ 51.26 ॥

इन्धनानां प्रदानेन दीप्ताग्निर्जायते नरः ॥
औषधं स्नेहमाहारं रोगिरोगप्रशान्तये ॥ 51.27 ॥

ददानो रोगरहितः सुखी दीर्घायुरेव च ॥
असिपत्रवनं मार्गं क्षुरधारासमन्वितम् ॥ 51.28 ॥

तीक्ष्णा तपं च तरतिच्छत्रोपानत्प्रदो नरः ॥
यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ॥ 51.29 ॥

तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥
अयेन विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः ॥ 51.30 ॥

संक्रान्त्यादिषु कालेषु दत्तं भवति चाक्षयम् ॥
प्रयागादिषु तीर्थेषु गयायां च विशेषतः ॥ 51.31 ॥

दानधर्मात्परो धर्मो भूतानां नेह विद्यते ॥
स्वर्गायुर्भूतिकामेन दानं पापोपशान्तये ॥ 51.32 ॥

दीयमानं तु यो मोहाद्गोविप्राग्निसुरेषु च ॥
निवारयति पापात्मा तिर्य्यग्योनिं व्रजेन्नरः ॥ 51.33 ॥

यस्तु दुर्भिक्षवेलायामन्नाद्यं न प्रयच्छति ॥
म्रियमाणेषु विप्रेषु ब्रह्महा स तु गर्हितः ॥ 51.34 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे दानधर्मनिरूपणं नामैकपञ्चाशत्तमोऽध्यायः ॥ 51 ॥

**॥ ब्रह्मोवाच ॥**

अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं द्विजाः ॥
ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः ॥ 52.1 ॥

पञ्च पातकिनस्त्वेते तत्संयोगी च पञ्चमः ॥
उपपापानि गोहत्याप्रभृतीनि सुरा जगुः ॥ 52.2 ॥

ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् ॥
कुर्य्यादनशनं वाथ भृगोः पतनमेव च ॥ 52.3 ॥

ज्वलन्तं वा विशेदग्निं जलं वा प्रविशेत्स्वयम् ॥
ब्राह्मणार्थे गवार्थे वा सम्यक् प्राणान्परित्यजेत् ॥ 52.4 ॥

दत्त्वा चान्नं च विदुषे ब्रह्महत्यां व्यपोहति ॥
अश्वमेधावभृथके स्नात्वा वा मुच्यते द्विजः ॥ 52.5 ॥

सर्वस्वं वा वेदविदे ब्राह्मणाय प्रदापयेत् ॥
सरस्वत्यास्तरङ्गिण्याः सङ्गमे लोकविश्रुते ॥ 52.6 ॥

शुद्धे त्रिषवणस्नातस्त्रिरात्रोपोषितो द्विजः ॥
सेतुबन्धे नरः स्नात्वा मुच्यते ब्रह्महत्यया ॥ 52.7 ॥

कपालमोचने स्नात्वा वाराणस्यां तथैव च ॥
सुरापस्तु सुरां पीत्वा अग्निवर्णां द्विजोत्तमः ॥ 52.8 ॥

पयो घृतं वा गोमूत्रं तस्मात्पापात्प्रमुच्यते ॥
सुवर्णस्तेयी मुक्तः स्यान्मुसलेन हतो नृपैः ॥ 52.9 ॥

चीरवासा द्विजोऽरण्ये चरेद्ब्रह्महणव्रतम् ॥
गुरुभार्य्यां समारुह्य ब्राह्मणः काममोहितः ॥ 52.10 ॥

अवगूहेत्स्त्रियं तप्तां दीप्तां कार्ष्णायसीं कृताम् ॥
गुर्वङ्गनागामिनश्च चरेयुर्बह्महाव्रतम् ॥ 52.11 ॥

चान्द्रायणानि वा कुर्य्यात्पञ्च चत्वारि वा पुनः ॥
पतितेन च संसर्गं कुरुते यस्तु वै द्विजः ॥ 52.12 ॥

स तत्पापापनोदार्थं तस्यैव व्रतमाचरेत् ॥
तप्तकृच्छ्रं चरेद्वाथ संवत्सरमतन्द्रितः ॥ 52.13 ॥

सर्वस्वदानं विधिवत्सर्वपापविशोधनम् ॥
चान्द्रायणं च विधिना कृतं चैवातिकृच्छ्रकम् ॥ 52.14 ॥

पुण्यक्षेत्रे गयादौ च गमनं पापनाशनम् ॥
अमावस्यां तिथिं प्राप्य यः समाराधयेद्भवम् ॥ 52.15 ॥

ब्राह्मणान् भोजयित्वा तु सर्वपापैः प्रमुच्यते ॥
उपोषितश्चतुर्दश्यां कृष्णपक्षे समाहितः ॥ 52.16 ॥

यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ 52.17 ॥

प्रत्येकं तिलसंयुक्तान्दद्यात्सप्त जलाञ्जलीन् ॥
स्नात्वा नद्यां तु पूर्वाह्णे मुच्यते सर्वपातकैः ॥ 52.18 ॥

ब्रह्मचर्य्यमधः शय्यामुपवासं द्विजार्चनम् ॥
व्रतेष्वेतेषु कुर्वीत शान्तः संयतमानसः ॥ 52.19 ॥

षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहितः ॥
सप्तम्यामर्चयेद्भानुं मुच्यते सर्वपातकैः ॥ 52.20 ॥

एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् ॥
द्वादश्यां शुक्लपक्षस्य महापापैः प्रमुच्यते ॥ 52.21 ॥

तपो जपस्तीर्थसेवा देवब्राह्मणपूजनम् ॥
ग्रहणादिषु कालेषु महापातकनाशनम् ॥ 52.22 ॥

यः सर्वपापयुक्तोऽपि पुण्यतीर्थेषु मानवः ॥
नियमेन त्यजेत्प्राणान्मुच्यते सर्वपातकैः ॥ 52.23 ॥

ब्रह्मघ्नं वा कृतघ्नं वा महापातकदूषितम् ॥
भर्त्तारमुद्धरेन्नारी प्रविष्टा सह पावकम् ॥ 52.24 ॥

पतिव्रता तु या नारी भर्त्तुः शुश्रूषणोत्सुका ॥
न तस्या विद्यते पापमिह लोके परत्र च ॥ 52.25 ॥

तथा रामस्य सुभगा सीता त्रैलोक्यविश्रुता ॥
पत्नी दाशरथेर्देवी विजिग्ये राक्षसेश्वरम् ॥ 52.26 ॥

फल्गुतीर्थादिषु स्नातः सर्वाचारफलं लभेत् ॥
इत्याह भगवान्विष्णुः पुरा मम यतव्रताः ॥ 52.27 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे प्रायश्चित्तनिरूपणं नाम द्विपञ्चाशत्तमोऽध्यायः ॥ 52 ॥

॥ सूत उवाच ॥

एवं ब्रह्माब्रवीच्छ्रुत्वा हरेरष्टनिधींस्तथा ॥

तत्र पद्ममहापद्मौ तथा मकरकच्छपौ ॥ 53.1 ॥

मुकुन्दकु(न) न्दौ नीलश्च शङ्खश्चैवापरो निधिः ॥

सत्यामृद्धौ भवन्त्येते स्वरूपं कथयाम्यहम् ॥ 53.2 ॥

पद्मेन लक्षितश्चैव सात्त्विको जायते नरः ॥

दाक्षिण्यसारः पुरुषः सुवर्णादिकसंग्रहम् ॥ 53.3 ॥

रुप्यादि कुर्य्याद्दद्यात्तु यतिदैवादियज्वनाम् ॥

महापद्माङ्कितो दद्याद्धनाद्यं धार्मिकाय च ॥ 53.4 ॥

निधी पद्ममहापद्मौ सात्त्विकौ पुरुषौ स्मृतौ ॥

मकरेणाङ्कितः खड्गबाणकुन्तादिसंग्रही ॥ 53.5 ॥

दद्याच्छ्रुताय मैत्रीं च याति नित्यं च राजभिः ॥

द्रव्यार्थं शत्रूणां नाशं संग्रामे चापि संव्रजेत् ॥ 53.6 ॥

मकरः कच्छपश्चैव तामसौ तु निधी स्मृतौ ॥

कच्छपी विश्वसेन्नैव न भुङ्क्ते न (ना) ददाति च ॥ 53.7 ॥

निधानमुर्व्यां कुरुते निधिः सोप्येकपूरुषः ॥

राजसेन मुकुन्देन लक्षिता राज्यसंग्रही ॥ 53.8 ॥

भुक्तभोगो गायनेभ्यो दद्याद्वेश्यादिकासु च ॥

रजस्तमोमयो नन्दी आधारः स्यात्कुलस्य च ॥ 53.9 ॥

स्तुतः प्रीतो भवति वै बहुभार्य्या भवन्ति च ॥

पूर्वमित्रेषु शैथिल्यं प्रीतिमन्यैः करोति च ॥ 53.10 ॥

नीलेन चाङ्कितः सत्त्वतेजसा संयुतो भवेत् ॥

वस्त्रधान्यादिसंग्राही तडागादि करोति च ॥ 53.11 ॥

त्रिपू(पौ) रुषो निधिश्चैव आम्रारामादि कारयेत् ॥

एकस्य स्यान्निधिः शङ्खः स्वयं भुङ्क्ते धनादि(न्त)कम् ॥ 53.12 ॥

कदन्नभुक्परिजनो न च शोभनवस्त्रधृक् ॥

स्वपोषणपरः शंखी दद्यात्परनरे वृथा ॥ 53.13 ॥

मिश्रावलोकनान्मिश्रस्वभावफलदायिनः ॥

निधीनां रूपमुक्तं तु हरिणापि हरादिके ॥

हरिर्भुवनकोशादि यथोवाच तथा वदे ॥ 53.14 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नवनिधिवर्णनं नाम त्रिपंचाशत्तमोऽध्यायः ॥ 53 ॥

॥ हरिरुवाच ॥
अग्नीध्रश्चाग्निबाहुश्च वपुष्मान्ध्युतिमांस्तथा ॥
मेधामेधातिथिर्भव्यः शबलः पुत्र एव च ॥ 54.1 ॥

ज्योतिष्मान्दशमो जातः पुत्रा ह्येते प्रियव्रतात् ॥
मेधाग्निबाहुपुत्रास्तु त्रयो योगपरायणाः ॥ 54.2 ॥

जातिस्मरा महाभागा नैराज्याय मनो दधुः ॥
विभज्य सप्त द्वीपानि सप्तानां प्रददौ नृपः ॥ 54.3 ॥

योजनानां प्रमाणेन पञ्चाशत्कोटिराप्लुता ॥
जलोपरि मही याता नौरिवास्ते सरिज्जले ॥ 54.4 ॥

जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलश्चापरो हर ॥
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ॥ 54.5 ॥

एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ॥
लवणेक्षुसुरासर्पिर्दाधिदुग्धजलैः समम् ॥ 54.6 ॥

द्वीपात्तु द्विगुणो द्वीपः समुद्रश्च वृषध्वज ॥
जम्बूद्वीपे स्थितो मेरुर्लक्षयोजनविस्तृतः ॥ 54.7 ॥

चतुरशीतिसाहस्त्रैर्योजनैरस्य चोच्छ्रयः ॥
प्रविष्टः षोडशाधस्ताद्द्वत्रिंशन्मूर्ध्नि विस्तृतः ॥ 54.8 ॥

अधः षोडशसाहस्त्रः कर्णिकाकारसंस्थितः ॥
हिमवान्हेमकूटश्च निषधश्चास्य दक्षिणे ॥ 54.9 ॥

नीलः श्वेतश्च श्रृंगी च उत्तरे वर्षपर्वताः ॥
प्लक्षादिषु नरा रुद्र ये वसन्ति सनातनाः ॥ 54.10 ॥

शङ्कराथ न तेष्वस्ति युगावस्था कथञ्चन ॥
जम्बूद्वीपेश्वरात्पुत्रा ह्यग्नीध्नादभवन्नव ॥ 54.11 ॥

नाभिः किंपुरुषश्चैव हरिवर्षमिला वृतः ॥
रम्यो हिरण्मयाख्यश्च कुरुर्भद्राश्व एव च ॥ 54.12 ॥

केतुमालो नृपस्तेभ्यस्तत्संज्ञान् खण्डकान्ददौ ॥
नाभेस्तु मेरुदेव्यां तु पुत्रोऽभूदृषभो हर ॥ 54.13 ॥

तत्पुत्रो भरतो नाम शालग्रामे स्थितो व्रती ॥
सुमतिर्भरतस्याभूत्तत्पुत्रस्तैजसोऽभवत् ॥ 54.14 ॥

इन्द्रद्युम्नश्च तत्पुत्रः परमेष्ठी ततः स्मृतः ॥
प्रतीहारश्चतत्पुत्रः प्रतिहर्त्ता तदात्मजः ॥ 54.15 ॥

सुतस्तस्मादथै जातः प्रस्तारस्तत्सुतो विभुः ॥
पृथुश्च तत्सुतो नक्तो नक्तस्यापि गयः स्मृतः ॥ 54.16 ॥

नरो गयस्य तनयस्तत्पुत्रोभुद्विराडगतः ॥
ततो धीमान्महातेजा भौवनस्तस्य चात्मजः ॥ 54.17 ॥

त्वष्टा त्वष्टुश्च विरजा रजस्तस्याप्यभूत्सुतः ॥
शतजिद्रजसस्तस्य विष्वग्ज्योतिः सुतः स्मृतः ॥ 54.18 ॥

इति श्रागारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भुवनकोशवर्णनोपयोगिप्रियव्रतवंशनिरूपणं नाम चतुःपञ्चाशत्तमोऽध्यायः ॥ 54 ॥

॥हरिरुवाच ॥

मध्ये त्विलावृतो वर्षो भद्राश्वः पूर्वतोऽद्भुतः ॥
पूर्वदक्षिणतो वर्षो हिरण्वान्वृषभध्वज ॥ 55.1 ॥

ततः किम्पुरुषो वर्षो मेरोर्दक्षिणतः स्मृतः ॥
भारतो दक्षिणे प्रोक्तो हरिर्दक्षिणपश्चिमे ॥ 55.2 ॥

पश्चिमे केतुमालश्च रम्यकः पश्चिमोत्तरे ॥
उत्तरे च कुरोर्वर्षः कल्पवृक्षसमावृतः ॥ 55.3 ॥

सिद्धिः स्वाभाविकी रुद्र ! वर्जयित्वा तु भारतम् ॥
इन्द्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तितमान् ॥ 55.4 ॥

नागद्वीपः कटाहश्च सिंहलो वारुणस्तथा ॥
अयं तुनवमस्तेषां द्वीपः सागरसंवृतः ॥ 55.5 ॥

पूर्वे किरातास्तस्यास्ते पश्चिमे यवनाः स्थिताः ॥
अन्ध्रा दक्षिणतो रुद्र ! तुरष्कास्त्वपि चोत्तरे ॥ 55.6 ॥

ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्राश्चान्तरवासिनः ॥
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ॥ 55.7 ॥

विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः ॥
वेदस्मृति र्नर्मदा च वरदा सुरसा शिवा ॥ 55.8 ॥

तापी पयोष्णी सरयूः कावेरी गोमती तथा ॥
गोदावरी भीमरथी कृष्णवेणी महानदी ॥ 55.9 ॥

केतुमाला ताम्रपर्णो चन्द्रभागा सरस्वती ॥
ऋषिकुल्या च कावेरी मृत्तगङ्गा पयस्विनी ॥ 55.10 ॥

विदर्भा च शतद्रूश्च नद्यः पापहराः शुभाः ॥
आसां पिबन्ति सलिलं मध्यदेशादयो जनाः ॥ 55.11 ॥

पाञ्चालाः कुरवो मत्स्या यौधेयाः सपटच्चराः ॥
कुन्तयः शूरसेनाश्च मध्यदेशजनाः स्मृताः ॥ 55.12 ॥

वृषध्वज ! जनाः पाद्माः सूतमागधचेदयः ॥
काशय (षाया) श्च विदेहाश्च पूर्वस्यां कोशलास्तथा ॥ 55.13 ॥

कलिंगवंगपुण्ड्रांगा वैदर्भा मूलकास्तथा ॥
विन्ध्यान्तर्निलया देशाः पूर्वदक्षिणतः स्मृताः ॥ 55.14 ॥

पुलन्दाश्मकजीमूतनयराष्ट्रनिवासिनः ॥
कर्णा(र्ना)टकम्बोजघणा दक्षिणापथवासिनः ॥ 55.15 ॥

अम्बष्ठद्रविडा लाटाः काम्बोजाः स्त्रीमुखाः शकाः ॥
आनर्त्तवासिनश्चैव ज्ञेया यक्षिणपश्चिमे ॥ 55.16 ॥

स्त्रीराज्याः सैन्धवा म्लेच्छा नास्ति का यवनास्तथा ॥
पश्चिमेन च विज्ञेया माथुरा नैषधैः सह ॥ 55.17 ॥

माण्डव्याश्च तुषाराश्च मूलिकाश्वमुखाः खशाः ॥
महाकेशा महानादा देशास्तूत्तरपश्चिमे ॥ 55.18 ॥

लम्ब (म्पा) का स्तननागाश्च माद्रगान्धारबाह्लिकाः ॥
हिमाचलालया म्लेच्छा उदीचीं दिशमाश्रिताः ॥ 55.19 ॥

त्रिगर्त्तनीलकोलात (भ) ब्रह्मपुत्राः सटङ्कणाः ॥
अभीषाहाः सकाश्मीरा उदक्पर्वेण कीर्त्तिताः ॥ 55.20 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भुवनकोशवर्णनं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ 55 ॥

॥हरिरुवाच ॥

सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरस्य च ॥
ज्येष्ठः शान्तभवो नाम शिशिरस्तदन्तरः ॥ 56.1 ॥

सुखोदयस्तथा नन्दः शिवः क्षेमक एव च ॥
ध्रुवश्च सप्तमस्तेषां प्लक्षद्वीपेश्वरा हि ते ॥ 56.2 ॥

गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा ॥
सोमकः सुमनाः शैलो वैभ्राजश्चात्र सप्तमः ॥ 56.3 ॥

अनुतप्ता शिखी चैव विपाशा त्रिदिवा क्रमुः ॥
अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः ॥ 56.4 ॥

वपुष्मान्शाल्मलस्येशस्तत्सुता वर्षनामकाः ॥
श्वेतोऽथ हरितश्चैव जीमूतो रोहितस्तथा ॥ 56.5 ॥

वैद्युतो मानसश्चैव सप्रभशाचपि सप्तमः ॥
कुमुदश्चोन्नतो द्रोणो महिषोऽथ बलाहकः ॥ 56.6 ॥

क्रौञ्चः ककुद्मान्ह्येते वै गिरयः सरितस्त्विमाः ॥
योनितोया वितृष्णा च चन्द्रा शुक्ल विमोचनी ॥ 56.7 ॥

विधृतिः सप्तमी तासां स्मृताः पापप्रशान्तिदाः ॥
ज्योतिष्मतः कुशद्वीपे सप्त पुत्राः श्रृणुष्वतान् ॥ 56.8 ॥

उद्भिदो वेणुमांश्चैव द्वैरथो लम्बनो धृतिः ॥
प्रभाकरोऽथ कपिलस्तन्नामा वर्षपद्धतिः ॥ 56.9 ॥

विद्रुमो हेमशैलश्च द्युतिमान्पुष्पवांस्तथा ॥
कुशेशयो हरिश्चैव सप्तमो मन्दराचलः ॥ 56.10 ॥

धूतपापा शिवा चैव पवित्रा सन्मतिस्तथा ॥
विद्युदभ्रा मही चान्या सर्वपापहरास्त्विमाः ॥ 56.11 ॥

क्रौञ्चद्वीपे द्युतिमतः पुत्राः सप्त महात्मनः ॥
कुशलो मन्दगश्चोष्णः पीवरोऽथोन्धकारकः ॥ 56.12 ॥

मुनिश्च दुन्दुभिश्चैव सप्तैते तत्सुता हर ॥
क्रौञ्चश्च वामनश्चैव तृतीयश्चान्ध (थ) कारकः ॥ 56.13 ॥

दिवावृत्पञ्चमश्चान्यो दुन्दुभिः पुण्डरीकवान् ॥
गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ॥ 56.14 ॥

ख्यातिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः ॥
शाकद्वीपेश्वराद्भव्यात्सप्त पुत्राः प्रजज्ञिरे ॥ 56.15 ॥

जलदश्च कुमारश्च सुकुमारोरुणी बकः ॥
कुसुमोदः समोदार्किः सप्तमश्च महाद्रुमः ॥ 56.16 ॥

सुकुमारी कुमारी च नलिनी धेनुका च या ॥
इक्षुश्च वेणुका चैव गभस्ती सप्तमी तथा ॥ 56.17 ॥

शबलात्पुष्करेशाच्च महावीरश्च धातकिः ॥
अभूद्वर्षद्वयं चैव मानसोत्तरपर्वतः ॥ 56.18 ॥

योजनानां सहस्त्राणि ऊर्द्ध्वं पञ्चाशदुच्छ्रितः ॥
तावच्चैव च विस्तीर्णः सर्वतः परिमण्डलः ॥ 56.19 ॥

स्वादूदकेनोदधिना पुष्करः परिवेष्टितः ॥
स्वादूदकस्य पुरतो दृश्यते लोकसंस्थितिः ॥ 56.20 ॥

द्विगुणा काञ्चनी भूमिः सर्वजन्तुविवर्जिता ॥
लोकालोकस्ततः शैलो योजनायुताविस्तृतः ॥

तमसा पर्वतो व्याप्तस्तमोऽप्यण्डकटाहतः ॥ 56.21 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भुवनकोशवर्णनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ 56 ॥

॥ हरिरुवाच ॥
सप्ततिस्तु सहस्त्राणि भूम्युच्छ्रायोऽपि कथ्यते ॥
दशसाहस्त्रमेकैकं पातालं वृषभध्वज ॥ 57.1 ॥

अतलं वितलं चैव नितलं च गभस्तिमत् ॥
महाख्यं सुतलं चाग्रयं पातालं चापि सप्तमम् ॥ 57.2 ।

कृष्णा शुक्लारुणा पीता शर्करा शैलकाञ्चना ॥
भूयस्तत्र दैतेया वसन्ति च भुजङ्गमाः ॥ 57.3 ॥

रौद्रे तु पुष्करद्वीपे नरकाः सन्ति ताञ्छृणु ॥
रौरवः सूकरो रोधस्तालो विनशनस्तथा ॥ 57.4 ॥

महाज्वालस्तप्तकुम्भो लवणोऽथि विमोहितः ॥
रुधिराख्यो वैतरणी कृमिशः कृमिभो जनः ॥ 57.5 ॥

असिपत्रवनः कृष्णो नानाभक्षश्च दारुणः ॥
तथा पूयवहः पापो वह्निज्वालस्त्वधः शिराः ॥ 57.6 ॥

संदंशः कृष्णसूत्रश्च तमश्चावीचिरेव च ॥
श्वभोजनोऽथाप्रतिष्ठोष्णवीचिर्नरकाः स्मृताः ॥ 57.7 ॥

पापिनस्तेषु पच्यन्ते विषशस्त्राग्निदायिनः ॥
उपर्य्युपरि वै लोका रुद्र ! भूतादयः स्थिताः ॥ 57.8 ॥

वारिवह्न्यनिलाकाशैर्वृतं भूतादिना च तत् ॥
तदण्डं महता रुद्र ! प्रधानेन च वेष्टितम् ॥ 57.9 ॥

अण्डं दशगुणं व्याप्तं नारायणः स्थितः ॥ 57.10 ॥

इति गारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भुवनकोशगतापातलनरकादिनिरूपणं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ 57 ॥

॥हरिरुवाच ॥
वक्ष्ये प्रमाणसंस्थाने सूर्य्यादीनां श्रृणुष्व मे ॥
योजानानां सहस्त्राणि भास्करस्य रथो नव ॥ 58.1 ॥

ईशादण्डस्तथैवास्य द्विगुणो वृषभध्वज ॥
सार्द्धकोटिस्तथा सप्त नियुतान्यधिकानि च ॥ 58.2 ॥

योजनानां तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम् ॥
त्रिनाभिमति पञ्चारे षण्नेमिन्यक्षयात्मके ॥ 58.3 ॥

संवत्सरमये कृत्स्नं कालचक्रं प्रतिष्ठितम् ॥
चत्वारिंशत्सहस्त्राणि द्वितीयोऽक्षो विवस्वतः ॥ 58.4 ॥

पञ्चान्यानि तु सार्द्धानि स्यन्दनस्य वृषध्वज ॥
अक्षप्रमाणमुभयोः प्रमाणं तु युगार्द्धयोः ॥ 58.5 ॥

ह्रस्वोऽक्षस्तद्युगार्द्धेन ध्रुवाधारे रथस्य वै ॥
द्वितीयेऽक्षे तु तच्चक्रं संस्थितं मानसाचले ॥ 58.6 ॥

गायत्री सबृहत्युष्णिग्जगतीत्रिष्टुबेव च ॥
अनुष्टुप्पङ्क्तिरित्युक्ताश्छन्दांसि हरयो रवेः ॥ 58.7 ॥

धाता क्रतुस्थला चैव पुलस्त्यो वासुकिस्तथा ॥
रथकृद्ग्रामणीर्हेतिस्तुम्बुरुश्चैत्रमासके ॥ 58.8 ॥

अर्य्यमा पुलहश्चैव रथौजाः पुञ्जिकस्थला ॥
प्रहेतिः कच्छनीरश्च नारदश्चैव माधवे ॥ 58.9 ॥

मित्रोऽत्रिस्तक्षको रक्षः पौरुषेयोऽथ मेनका ॥
हाहा रथस्वनश्चैव ज्येष्ठे भानो रथे स्थिताः ॥ 58.10 ॥

वरुणो वसिष्ठो रम्भा सहजन्या कुहुर्बुधः ॥
रथचित्रस्तथा शुक्रो वसन्त्याषाढसंज्ञिते ॥। 58.11 ॥

इन्द्रो विश्वावसुः स्त्रोत(श्रोत्र) एलापत्रस्तथाङ्गिराः ॥
प्रम्लोचा च नभस्येते सर्पाश्चार्के तु सन्ति वै ॥ 58.12 ॥

विवस्वानुग्रसेनश्च भृगुरापूरणस्तथा ॥
अनुम्लोचाशङ्खपालौ व्याघ्रो भाद्रपदे तथा ॥ 58.13 ॥

पूषा च सुरुचिर्धाता गौतमोऽथ धनञ्जयः ॥
सुषेणोऽन्यो धृताची च वसन्त्याश्वयुजे रवौ ॥ 58.14 ॥

विश्वावसुर्भरद्वाजः पर्जन्यैरावतौ तदा ॥
विश्वाची सेनजिच्चापः (पि) कार्त्तिके चाधिकारिणः ॥ 58.15 ॥

अंशुश्च काश्यपस्ताक्ष्यों महापद्मस्तथोर्वशी ॥
चित्रसेनस्तथा विद्युन्मार्गशीर्षाधिकारिणः ॥ 58.16 ॥

क्रतुर्भर्गस्तथोर्णायुः स्फूर्जः कर्कोटकस्तथा ॥
अरिष्टनेमिश्चैवान्या पूर्वचित्तिवर्रात्सराः ॥
पौषमासे वसन्त्येते सप्त भास्करमण्डले ॥ 58.17 ॥

त्वष्टाथ जमदग्निश्च कम्बलोऽथ तिलोत्तमा ॥
ब्रह्मापेतोऽथ ऋतजिद्धृतराष्ट्रश्च सप्तमः ॥
माघमासे वसन्त्येते सप्त भास्करमण्डले ॥ 58.18 ॥

विष्णुरश्वतरो रम्भा सूर्य्यवर्च्चाश्च सत्यजित् ॥
विश्वामित्रस्तथा रक्षो यज्ञापेतो हि फाल्गुने ॥ 58.19 ॥

सवितुर्मण्डले ब्रह्मन्विष्णुशक्त्युपबृंहिताः ॥
स्तुवन्ति मुनयः सूर्य्यं गन्धर्वैर्गीयते पुरः ॥ 58.20 ॥

नृत्यन्त्योऽप्सरसो यान्ति सूर्य्यस्यानुनिशाचराः ॥
वहन्ति पन्नगा यक्षैः क्रियतेऽभीषुसंग्रहः ॥ 58.21 ॥

बालखिल्यास्तथैवैनं परिवार्य्य समासते ॥
रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः ॥ 58.22 ॥

वामदक्षिणतो युक्ता दश तेन चरत्यसौ ॥
वार्य (र्य्व) ग्रनिद्रव्यसम्भूतो रथश्चन्द्रसुतस्यच ॥ 58.23 ॥

पिशंगेस्तुरगैर्युक्तः सोऽष्टाभिर्वायुवेगिभिः ॥
सवरूथः सानुकर्षो युक्तो भूमिभवैर्हयैः ॥ 58.24 ॥

सोपासङ्गपताकस्तु शुक्रस्यापि रथो महान् ॥
रथो भूमिसुतस्यापि तप्तकाञ्चनसन्निभः ॥ 58.25 ॥

अष्टाश्वः काञ्चनः श्रीमान् भौमस्यापि रथो महान् ॥ 58.26 ॥

पद्मरागारुणैरश्वैः संयुक्तो वह्निसंभवैः ॥
अष्टाभिः पाण्डरैर्युक्तैर्वाजिभिः काञ्चने रथे ॥ 58.27 ॥

तिष्ठंस्तिष्ठति वर्षं वै राशौराशौ बृहस्पतिः ॥

आकाशसम्भवैरश्वैः शवलैः स्यन्दनं युतम् ॥ 58.28 ॥

समारुह्य शनैर्याति मन्दगामी शनैश्चरः ॥
स्वर्भानोस्तुरगा ह्यष्टौ भृङ्गाभा धूसरं रथम् ॥ 58.29 ॥

सकृद्यक्तास्तु भूतेशबहन्त्यविरतं शिव ॥
तथा केतुरथस्याश्वा अष्टौ ते वातरंहसः ॥ 58.30 ॥

पलालधूमवर्णाभा लाक्षारसनिभारुणाः ॥
द्वीपनद्यद्र्युदन्वन्तो भुवनानिहरेस्तनुः ॥ 58.31 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भुवनकोशनिरूपणं नामाष्टपञ्चाशत्तमोऽध्यायः ॥ 58 ॥

(अथ ज्योतिः शास्त्रम्) ॥ सूत उवाच ॥
ज्योतिश्चक्रं भुवो मानमुक्त्वा प्रोवाच केशवः ॥
चतुर्लक्षं ज्योतिषस्य सारं रुद्राय सर्वदः ॥ 59.1 ॥

॥हरिरुवाच ॥
कृत्तिकास्त्वग्निदेवत्या रोहिण्यो ब्रह्मणः स्मृताः ॥
इल्वलाः सोमदेवत्या रौद्रं चार्द्रमुदाहृतम् ॥ 59.2 ॥

पुनर्वसुस्तथादित्यस्तिष्यश्च गुरुदैवतः ॥
अश्लेषाः सर्पदेवत्या मघाश्च पितृदेवताः ॥ 59.3 ॥

भाग्याश्च पूर्वफल्गुन्य अर्य्यमा च तथोत्तरः ॥
सावित्रश्च तथा हस्ता चित्रा त्वष्टा प्रकीर्त्तितः ॥ 59.4 ॥

स्वाती च वायुदेवत्या नक्षत्रं परिकीर्त्तितम् ॥
इन्द्राग्निदेवता प्रोक्ता विशाखा वृषभध्वज ॥ 59.5 ॥

मैत्रमृक्षमनूराधा ज्येष्ठा शाक्रं प्रकीर्त्तितम् ॥
तथा निर्ऋतिदेवत्यो मूलस्तज्ज्ञैरुदाहृतः ॥ 59.6 ॥

आप्यास्त्वाषाढपूर्वास्तु उत्तरा वैश्वदेवताः ॥
ब्राह्मश्चैवाभिजित्प्रोक्तः श्रवणा वैष्णवः स्मृतः ॥ 59.7 ॥

वासवस्तु तथा ऋक्षं धनिष्ठा प्रोच्यते बुधैः ॥
तथा शतभिषा प्रोक्तं नक्षत्रं वारुणं शिव ॥ 59.8 ॥

आजं भाद्रपदा पूर्वा अहिर्बुध्न्यस्तथोत्तरा ॥
पौष्णं च रेवती ऋक्षमश्वयुक्चाश्वदैवतम् ॥ 59.9 ॥

भरण्यृक्षं तथा याम्यं प्रोक्तास्ते ऋक्षदेवताः ॥
ब्रह्माणी संस्थिता पूर्वे प्रितपन्नवमीतिथौ ॥ 59.10 ॥

माहेश्वरी चोत्तरे च द्वितीया दशामीतिथौ ॥
पञ्चम्यां च त्रयोदश्यां वाराही दक्षिणे स्थिता ॥ 59.11 ॥

षष्ठ्यां चैव चतुर्दश्यामिन्द्राणी पश्चिमे स्थिता ॥
सप्तम्यां पौर्णमास्यां च चामुण्डा वायुगोचरे ॥ 59.12 ॥

अष्टम्यमावास्ययोगे महालक्ष्मीशगोचरे ॥
एकादश्यां तृतीयायामग्निकोणे तु वैष्णवी ॥ 59.13 ॥

द्वादश्यां च चतुर्थ्यां तु कौमारी नैर्ऋते तथा ॥

योगिनीसम्मुखेनैव गमनादि न कारयेत् ॥ 59.14 ॥

अश्विनीमैत्ररेवत्यो मृगमूलपुनर्वसु ॥
पुष्या हस्ता तथा ज्येष्ठा प्रस्थाने श्रेष्ठमुच्यते ॥ 59.15 ॥

हस्तादिपञ्चऋक्षाणि उत्तरात्रयमेव च ॥
अश्विनी रोहिणी पुष्या धनिष्ठा च पुनर्वसु ॥ 59.16 ॥

वस्त्रप्रावरणे श्रेष्ठो नक्षत्राणां गणः स्मृतः ॥
कृत्तिका भरण्यश्लेषा मघा मूलविशाखयोः ॥ 59.17 ॥

त्रीणि, पूर्वा तथा चैव अधोवक्राः प्रकीर्त्तिताः ? ॥
एषु वापीतडागादिकूपभूमितृणानि च ॥ 59.18 ॥

देवागारस्य खननं निधानखननं तथा ॥
गणितं ज्योतिषारम्भं खनिबिलप्रवेशनम् ॥ 59.19 ॥

कुर्य्यादधोगतान्येव अन्यानि च वृषध्वज ॥
रेवती चाश्विनी चित्रा स्वाती हस्ता पुनर्वसु ॥ 59.20 ॥

अनुराधा मृगो ज्येष्ठा एते पार्श्वमुखाः स्मृताः ॥
गजोष्ट्राश्वबलीवर्ददमनं महिषस्य च ॥ 59.21 ॥

बीजानां वपनं कुर्य्याद्गमनागमनादिकम् ॥
चक्रयन्त्ररथानां च नावादीनां प्रवाहणम् ॥ 59.22 ॥

पार्श्वेषु यानि कर्माणि कुर्य्यादेतेषु तान्यपि ॥
रोहिण्यार्द्रा तथा पुष्या धनिष्ठा चोत्तरात्रयम् ॥ 59.23 ॥

वारुणं श्रवणं चैव नव चोर्ध्वमुखाः स्मृताः ॥
एषु राज्याभिषेकं च पट्टबन्धं च कारयेत् ॥ 59.24 ॥

ऊर्ध्वमुख्यान्युच्छ्रितानि सर्वाण्येतेषु कारयेत् ॥
चतुर्थी चाशुभा षष्ठी अष्टमी नवमी तथा ॥ 59.25 ॥

अमावास्या पूर्णिमा च तद्वादशी च चतुर्दशी ॥
अशुक्ला प्रतिपच्छ्रेष्ठा द्वितीया चन्द्र सूनुना ॥ 59.26 ॥

तृतीया भूमिपुत्रेण चतुर्थी च शनैश्चरे ॥
गुरौ शुभा पञ्चमी स्यात्षष्टीमङ्गलशुक्रयोः ॥ 59.27 ॥

सप्तमी सोमपुत्रेण अष्टमी कुजभास्करौ ॥

नवमी चन्द्रवा(सौ) रेण दशमी तु गुरौ शुभा ॥ 59.28 ॥

एकादश्या गुरुशुक्रौ द्वादश्यां च पुनर्बुधः ॥
त्रयोदशी शुक्रभौमौ शनौ श्रेष्ठा चतुर्दशी ॥ 59.29 ॥

पौर्णमास्यप्यमावास्या श्रेष्ठा स्याच्च बृहस्पतौ ॥
द्वादशीं दहते भानुः शशी चैकादशीं दहेत् ॥ 59.30 ॥

कुजो दहेच्च दशमीं नवमीं च बुधो दहेत् ॥
अष्टमीं दहते जीवः सप्तमीं भार्गवो दहेत् ॥ 59.31 ॥

सूर्य्यपुत्रो दहेत्षष्ठीं गमनाद्यासु नास्ति वै ॥
प्रतिपन्नवमीष्वेव चतुर्दश्यष्टमीषु च ॥ 59.32 ॥

बुधवारे प्रस्थानं दूरतः परिवर्जयेत् ॥
मेषे कर्कटके षष्ठी कन्यायां मिथुनेऽष्टमी ॥ 59.33 ॥

वृषे कुम्भे चतुर्थो च द्वादशी मकरे तुले ॥
दशमी वृश्चिके सिंहे धनुर्मोने चतुर्दशी ॥ 59.34 ॥

एता दग्धा न गन्तव्यं पीडादिः किल मानवैः ॥
विशाखात्रयमादित्ये पूर्वाषाढात्रये शशी ॥ 59.35 ॥

धनिष्ठात्रितयं भौमे बुधे वै रेवतीत्रयम् ॥
रोहिण्यादित्रयं जीवे शुक्रे पुष्यात्रयं शिव ॥ 59.36 ॥

शनिवारे वर्जयेच्च उत्तराफल्गुनीत्रयम् ॥
एषु योगेषु चोत्पातमृत्युरोगादिकं भवेत् ॥ 59.37 ॥

मूलेऽर्कः श्रवणे चन्द्रः प्रोष्ठपद्युत्तरे कुजः ॥
कृत्तिकासु बुधश्चैव गुरौ रुद्र पुनर्वसुः ॥ 59.38 ॥

पूर्वफल्गुनी शुक्रे च स्वातिश्चैव शनैश्वरे ॥
एतै चामृतयोगाः स्युः सर्वकार्य्यप्रसाधकाः ॥ 59.39 ॥

कालं प्रवध्यन्नि ? शक्तिदा ? नेष्टमंद ? ॥
पर्वादिस्तु ज्ञेयः कालः कालविशारदैः ॥ 59.40 ॥

एकीकृत्याक्षरान्मात्रं नाम्नोः स्त्रीपुंसयोस्त्रिभिः ॥
भागे द्विशेषे स्त्रीनाशः पुसः स्यादेकशून्ययोः ॥ 59.41 ॥

विष्कम्भे घटिकाः पंच शूले सप्त प्रकीर्तिताः ॥

षड्गण्डे चातिगण्डे च नव व्याघातवज्रयोः ॥ 59.42 ॥

व्यतीपाते च परिघे वैधृते च दिनेदिने ॥
एतै मृत्युयुता ह्येषु सर्वकर्माणि वर्जयेत् ॥ 59.43 ॥

हस्तेऽर्कश्च गुरुः पुष्ये अनुराधा बुधे शुभा ॥
रोहिणी च शनौ श्रेष्ठा सौमं सोमेन वै शुभम् ॥ 59.44 ॥

शुक्रे च रेवती श्रेष्ठा अश्विनी मंगले शुभा ॥
एतेषु सिद्धियोगा वै सर्वदोषविनाशनाः ॥ 59.45 ॥

भार्गवे भरणी चैव सोमे चित्रा वृषध्वज ! ॥
भौमे चै वोत्तराषाढा धनिष्ठा च बुधे हर ! ॥ 59.46 ॥

गुरौ शतभिषा रुद्र ! शुक्रे वै रोहिणी तथा ॥
शनौ च रेवती शम्भो ! विषयोगाः प्रकीर्त्तिताः ॥ 59.47 ॥

पुष्यः पुनर्वसुश्चैव रेवती चित्रया सह ॥
श्रवणं च धनिष्ठा च हस्ताश्वनीमृगास्तथा ॥ 59.48 ॥

कुर्य्याच्छतभिषायां च जातकर्मादि मानवः ॥
विशाखा चोत्तरात्रीणि मघार्द्रा भरणी तथा ॥
आश्लेषा कृत्तिका रुद्र ! प्रस्थाने मरणप्रदाः ॥ 59.49 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिः शास्त्रे नक्षत्रतद्देवतादग्धयोगादिनिरूपणं नामैकोनषष्टितमोऽध्यायः ॥ 59 ॥

॥हरिरुवाच ॥

षडादित्ये दशा ज्ञेया सोमे पञ्चदश स्मृताः ॥
अष्टावङ्गारके चैव बुधे सप्तदश स्मृताः ॥ 60.1 ॥

शनैश्चरे दश ज्ञेया गुरोरेकोनविंशतिः ॥
राहोर्द्वादशवर्षाणि एकविंशतिर्भार्गवे ॥ 60.2 ॥

रवेर्दशा दुः खदा स्यादुद्वेगनृपनाशकृत् ॥
विभूतिदा सोमदशा सुखमिष्टान्नदा तथा ॥ 60.3 ॥

दुः खप्रदा कुजदशा राज्यादेः स्याद्विनाशिनी ॥
दिव्यस्त्रीदा बुधदशा राज्यदा कोशवृद्धिदा ॥ 60.4 ॥

शनेर्दशा राज्यनाशबन्धुदुः खकरी भवेत् ॥
गुरोर्दशा राज्यदा स्यात्सुखधर्मादिदायिनी ॥ 60.5 ॥

राहोर्दशा राज्यनाशव्याधिदा दुः खदा भवेत् ॥
हस्त्यश्वदा शुक्रदशा राज्यस्त्रीलाभदा भवेत् ॥ 60.6 ॥

मेष अङ्गारकक्षेत्रं वृषः शुक्रस्य कीर्त्तितः ॥
मिथुनस्य बुधो ज्ञेयः सोमः कर्कटकस्य च ॥ 60.7 ॥

सूर्य्यक्षेत्रं भवेत्सिंहः कन्या क्षेत्रं बुधस्य च ॥
भार्गवस्य तुला क्षेत्रं वृश्चिकोंगारकस्य च ॥ 60.8 ॥

धनुः सुर गुरोश्चैव शनेर्मकरकुम्भकौ ॥
मीनः सुरगुरोश्चैव ग्रहक्षेत्रं प्रकीर्त्तितम् ॥ 60.9 ॥

पौर्णमास्याद्वयं तत्र पूर्वाषाढाद्वयं भवेत् ॥
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ 60.10 ॥

अश्विनी रेवती चित्रा धनिष्ठा स्यादलङ्कृतौ ॥
मृगाहिकपिमार्जारश्वानः सूकरपक्षिणः ॥ 60.11 ॥

नकुलो मूषकश्चैव यात्रायां दक्षिणे शुभः ॥
विप्रकन्या शिवा एषां शङ्खभेरीवसुन्धराः ॥ 60.12 ॥

वेणुस्त्रीपूर्णकुम्भाश्च यात्रायां दर्शनं शुभम् ॥
जम्बूकोष्ट्रखराद्याश्च यात्रायां वामके शुभाः ॥ 60.13 ॥

कार्पासौषधितैलं च पक्वाङ्गारभुजङ्गमाः ॥
मुक्तकेशी रक्तमाल्यनग्नाद्यशुभमीक्षितम् ॥ 60.14 ॥

हिक्काय लक्षणं वक्ष्ये लभत्पूर्वे महाफलम् ॥
आग्नेये शोकसन्तापौ दक्षिणे हानिमाप्नुयात् ॥ 60.15 ॥

नैर्ऋत्य शोकसन्तापौ मिष्टान्नं चैव पश्चिमे ॥
अर्थं प्राप्नोति वायव्ये उत्तरे कलहोभवेत् ॥ 60.16 ॥

ईशाने मरणं प्रोक्तं हिक्कायाश्चफलाफलम् ॥
विलिख्य रविचक्रं तु भास्करो नरसन्निभः ॥ 60.17 ॥

यस्मिन्नृक्षे वसद्भानुस्तदादि त्रीणि मस्तके ॥
त्रयं वक्त्रे प्रदातव्यमेकैकं स्कन्धयोर्न्यसेत् ॥ 60.18 ॥

एकैकं बाहुयुग्मे तु एकैकं हस्तयोर्द्वयोः ॥
हृदये पञ्च ऋक्षाणि एकं नाभौ प्रदापयेत् ॥ 60.19 ॥

ऋक्षमेकं न्यसेद्गुह्ये एकैकं जानुके न्यसेत् ॥
नक्षत्राणि च शेषाणि रविपादे नियोजयेत् ॥ 60.20 ॥

चरणस्थेन ऋक्षेण अल्पायुर्जायते नरः ॥
विदशेगमनं जानौ गुह्यस्थे परदारवान् ॥ 60.21 ॥

नाभिस्थेनाल्पसन्तुष्टो हृत्स्थेन स्यान्महेश्वरः ॥
पाणिस्थेन भवेच्चौरः स्थानभ्रष्टो भवेद्ध्वजे ॥ 60.22 ॥

स्कन्धस्थिते धनपतिर्मुखे मिष्टान्नमाप्नुयात् ॥
मस्तके पट्टवस्त्रं स्यान्नक्षत्रं यदि स्थितम् ॥ 60.23 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डं प्रथमांशाख्ये आचारकाण्डे ज्योतिः शास्त्रे ग्रहदशादिनिरूपणं नाम षष्टितमोऽध्यायः ॥ 60 ॥

॥हरिरुवाच ॥

सप्तमोपचयाद्यस्थश्चन्द्रः सर्वत्र शोभनः ॥
शुक्लपक्षे द्वितीयस्तु पंचमो नवमस्तथा ॥ 61.1 ॥

संपूज्यमानो लोकैस्तु गुरुवद्दृश्यते शशी ॥
चन्द्रस्य द्वादशावस्था भवन्ति श्रृणु ता अपि ॥ 61.2 ॥

त्रिषु त्रिषु च ऋक्षेषु अश्विन्यादि वदाम्यहम् ॥
प्रवासस्थं पुनर्दृष्टं मृतावस्थं जयावहम् ॥ 61.3 ॥

हास्यावस्थं नता(क्रीडा) वस्थं प्रमोदावस्थमेव च ॥
विषादावस्थभोगस्थे ज्वरावस्थं व्यवस्थितम् ॥ 61.4 ॥

कम्पा(न्या) वस्थं सुखावस्थं द्वादशावस्थगं भवेत् ॥
प्रवासो हानिर्मृत्यु च जयो हासेरतिः सुखम् ॥ 61.5 ॥

शोको भोगो ज्वरः कम्पः सुखं चेति क्रमात्फलम् ॥
जन्मस्थः कुरुते तुष्टिं द्वितीये नास्ति निर्वृतिः ॥ 61.6 ॥

तृतीये राजसन्मानं चतुर्थे कलहागमः ॥
पञ्चमेन मृगाङ्केन स्त्रीलाभो वै तथा भवेत् ॥ 61.7 ॥

धनधान्यागमः षष्ठे रतिः पूजा च सप्तमे ॥
अष्टमे प्राणसन्देहो नवमे कोशसञ्चयः ॥ 61.8 ॥

दशमे कार्य्यनिष्पत्तिर्ध्रुवमेकादशे जयः ॥
द्वादशेन शशाङ्केन मृत्युरेव न संशयः ॥ 61.9 ॥

कृत्तिकादौ च पूर्वेण सप्तर्क्षाणि च वै व्रजेत् ॥
मघादौ दक्षिणे गच्छेदनुराधादि पश्चिमे ॥ 61.10 ॥

प्रशस्ता चोत्तर यात्रा धनिष्ठादिषु सप्तसु ॥
अश्विनी रेवती चित्रा धनिष्ठा समलङ्कृतौ ॥ 61.11 ॥

मृगाश्विचित्रापुष्याश्च मूला हस्ता शुभाः सदा ॥
कन्याप्रदाने यात्रायां प्रतिष्ठादिषु कर्मसु ॥ 61.12 ॥

शुक्रचन्द्रौ हि जन्मस्थौ शुभदौ च द्वितीयके ॥
शशिज्ञशुक्रजीवाश्च राशौ चाथ तृतीयके ॥ 61.13 ॥

भौममन्दशशाङ्कार्का बुधः श्रेष्ठस्चतुर्थके ॥
शुक्रजीवौ पञ्चमे च चन्द्रकेतुसमाहितौ ॥ 61.14 ॥

मन्दार्कौ च कुजः षष्ठे गुरुचन्द्रौ च सप्तमे ॥
ज्ञशुक्रावष्टमे श्रेष्ठौ नवमस्थो गुरुः शुभः ॥ 61.15 ॥

अर्कार्किचन्द्रा दशमे ग्रहा एकादशेखिलाः ॥
बुधोऽथ द्वादशे चैव भार्गवः सुखदो भवेत् ॥ 61.16 ॥

सिंहेन मकरः श्रेष्ठः कन्यया मेष उत्तमः ॥
तुलया सह मीनस्तु कुम्भेन सहकर्कटः ॥ 61.17 ॥

धनुषा वृषभः श्रेष्ठो मिथुनेन च वृश्चिकः ॥
एतत्षडष्टकं ? प्रीत्यै भवत्येव न संशयः ॥ 61.18 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिः शास्त्रे ग्रहाणां शुभाशुभस्थानादिनिरूपणं नामैकपष्टितमोऽध्यायः ॥ 61 ॥

॥हरिरुवाच ॥
उदयात्तु समारभ्य राशौ भानुः स्थितो हर ॥
स्वराश्यायैर्व्रजेदह्नि षडभिः षटभिस्तथा निशि ॥ 62.1 ॥

मीने मेषे च पञ्च स्युश्चतस्रो वृष कुम्भयोः ॥
मकरे मिथुने तिस्रः पंच चापे च कर्कटे ॥ 62.2 ॥

सिंहे च वृश्चिके षट् च सप्त कन्यातुले तथा ॥
एता लग्नप्रमाणेन घटिकाः परिकीर्त्तिताः ॥ 62.3 ॥

रसपूर्वावसानेषु रसाब्धिष्वरिसागराः ॥
लङ्कोदया हि तद्वत्त लग्ना मेषादयोऽथ वा ॥ 62.4 ॥

मेषलग्ने भवेद्वन्ध्या वृषे भवति कामिनी ॥
मिथुने सुभगा कन्या वेश्या भवति कर्कटे ॥ 62.5 ॥

सिंहे चैवाल्पपुत्रा च कन्यायां रूपसंयुता ॥
तुलायां रूपमैश्वर्य्यं वश्चिके कर्कशा भवेत् ॥ 62.6 ॥

सौभाग्यधनुषि स्याच्च मकरे नीचगामिनी ॥
कुम्भ चैवाल्पपुत्रा स्यान्मीने वैराग्यसंयुता ॥ 62.7 ॥

तुला कर्कटको मेषो मकरश्चैव राशयः ॥
चरकार्य्याणि कुर्य्याच्च स्थिरकार्य्याणि चैव हि ॥ 62.8 ॥

पञ्चाननो वृषः कुम्भा वृश्चिकः स्युः स्थिराणि हि ॥
कन्या धनुश्च मीनश्च मिथुनं द्विस्वभावतः ॥ 62.9 ॥

द्विस्वभावानि कर्माणि कुर्य्यादेषु विचक्षणः ॥
यात्रा चरेण कर्तव्या प्रवेष्टव्यं स्थिरेण तु ॥ 62.10 ॥

देवस्थापनवैवाह्यं द्विस्वभावेन कारयेत् ॥
प्रतिपच्चाथ षष्ठी च नन्दा चैकादशी स्मृता ॥ 62.11 ॥

द्वितीया सप्तमी भद्रा द्वादशी वृषभध्वज ॥
जयाष्टमी तृतीया च स्मृता रुद्र त्रयोदशी ॥ 62.12 ॥

चतुर्थो नवमी रिक्ता सा वर्ज्याथ चतुर्दशी ॥
पञ्चमी दशमी पूर्णा पूर्णिमा च शुभाः स्मृताः ॥ 62.13 ॥

चरः सौम्यो गुरुः क्षिप्रो मृदुः शुक्रो रविर्ध्रुवः ॥
शनिश्च दारुणो ज्ञेयो भौम उग्रः शशी समः ॥ 62.14 ॥

चरक्षिप्रैः प्रयातव्यं प्रवेष्टव्यं मृद्रुध्रुवैः ॥
दारुणोग्रैश्च योद्धव्यं क्षत्त्रियैर्जयकाङ्क्षिभिः ॥ 62.15 ॥

नृपाभिषेकोऽग्निकार्य्यं सोमवारे प्रशस्यते ॥
सोमे तु लेपमानं च कुर्य्याच्चैव गृहादिकम् ॥ 62.16 ॥

सैनापत्यं शौर्ययुद्धं शस्त्राभ्यासः कुजे स्मृतः ॥
सिद्धिकार्य्यं च मन्त्रश्च यात्रा चैव बुधे स्मृता ॥ 62.17 ॥

पठनं देवपूजा च वस्त्राद्याभरणं गुरौ ॥
कन्यादानं गजारोहः शुक्रे स्यात्समयः स्त्रियाः ॥ 62.18 ॥

स्थाप्यं गृहप्रवेशश्च गजबन्धः शनौ शुभः ॥ 62.19 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिः शास्त्रे लग्नघटिका प्रमाणादिनिरूपणं नाम द्विषष्टितमोऽध्यायः ॥ 62 ॥

---

॥हरिरुवाच ॥

नरस्त्रीलक्षणं वक्ष्ये संक्षपाच्छृणु शङ्कर ॥
अस्वेदिनौ मृदुतलौ कमलोदरसन्निभौ ॥ 63.1 ॥

श्लिष्टाङ्गुली ताम्रनखौ सुगुल्फौ शिरयोज्झितौ ॥
कूर्मोन्नतौ च चरणौ स्यातां नृपवरस्य हि ॥ 63.2 ॥

विरूक्षपाण्डुरनखौ वक्रौ चैव शिरानतौ ॥
सूर्पाकारौ च चरणौ संशुष्कौ विरलाङ्गुली ॥ 63.3 ॥

दुः खदारिद्यदौ स्याता नात्र कार्य्या विचारणा ॥
अल्परोमयुता श्रेष्ठा जङ्घा हस्तिकरोपमा ॥ 63.4 ॥

रोमैकैकं कूपके स्याद्भूपानां तु महात्मनाम् ॥
द्वेद्वे रोम्णी पण्डितानां श्रोत्रियाणां तथैव च ॥ 63.5 ॥

रोमत्रयं दरिद्राणां रोगी निर्मांसजानुकः ॥
अल्पलिङ्गी च धनवान्स्याच्च पुत्रादिवर्जितः ॥ 63.6 ॥

स्थूललिङ्गो दरिद्रः स्यादुख्येकवृष्णी भवेत् ॥
विषमेस्त्रीचञ्चलो वै नृपः स्याद्वृषणे समे ॥ 63.7 ॥

प्रलम्बवृषणोऽल्पायुर्निर्द्रव्यः कुमणिर्भवेत् ॥
पाण्डुरैर्मलिनैश्चैव मणिभिश्च सुखी नरः ॥ 63.8 ॥

निः स्वाः सशब्दमूत्राः स्युर्नृपा निश्शब्दधारया ॥
भोगाढ्याः समजठरा निः स्वाः स्युर्घटसन्निभाः ॥ 63.9 ॥

सर्पोदरा दरिद्राः स्यू रेखाभिस्चायुरुच्यते ॥
ललाटे यस्य दृश्यन्ते तिस्त्रो रेखाः समाहिताः ॥ 63.10 ॥

सुखी पुत्रसमायुक्तः स षष्टिं जीवते नरः ॥
चत्वारिंशच्च वर्षाणि द्विरेखादर्शनान्नरः ॥ 63.11 ॥

विंशत्यब्दं त्वेकरेखा आकर्णान्ताः शतायुषः ॥ 63.12 ॥

सप्तत्यायुर्द्विरेखा तु षष्ट्यायुस्तिसृभिर्भवेत् ॥
व्यक्ताव्यक्ताभी रेखाभिर्विंशत्यायुर्भवेन्नरः ॥ 63.13 ॥

चत्वारिंशच्च वर्षाणि हीनरेखस्तु जीवति ॥
भिन्नाभिश्चैव रेखाभिरपमृत्युर्नरस्य हि ॥ 63.14 ॥

त्रिशूलं पट्टिशं वापि ललाटे यस्य दृश्यते ॥
धनपुत्र समायुक्तः स जीवेच्छरदः शतम् ॥ 63.15 ॥

तर्जन्या मध्यमाङ्गुल्या आयूरेखा तु मध्यतः ॥
संप्राप्ता या भवेद्रुद्र ! स जीवेच्छरदः शतम् ॥ 63.16 ॥

प्रथमा ज्ञानरेखा तु ह्यंगुष्ठादनुवर्त्तते ॥
मध्यमामूलगा रेखा आयूरेखा अतः परम् ॥ 63.17 ॥

कनिष्ठिकां समाश्रित्य आयूरेखा समाविशेत् ॥
अच्छिन्ना वा विभक्ता वा स जीवेच्छरदः शतम् ॥ 63.18 ॥

यस्य पाणितले रेखा आयुस्तस्य प्रकाशयेत् ॥
शतवर्षाणि जीवेच्च भोगी रुद्र ! न संशयः ॥ 63.19 ॥

कनिष्ठिकां समाश्रित्य मध्यमायामुपागता ॥
षष्ठिवर्षायुषं कुर्य्यादायूरेखा तु मानवम् ॥ 63.20 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिः शास्त्रे सामुद्रिके
पुँल्लक्षणनिरूपणं नाम त्रिषष्टितमोऽध्यायः ॥ 63 ॥

॥हरिरुवाच ॥
यस्यास्तु कुञ्चिताः केशा मुखं च परिमण्डलम् ॥
नाभिश्च दक्षिणावर्त्ता सा कन्या कुलवर्धिनी ॥ 64.1 ॥

या च काञ्चनवर्णाभा रक्तहस्तसरोरुहा ॥
सहस्त्राणां तु नारीणां भवेत्सापि पतिव्रता ॥ 64.2 ॥

वक्रकेशा च या कन्या मण्डलाक्षी च या भवेत् ॥
भर्त्ता च म्रियते तस्या नियतं दुः खभागिनी ॥ 64.3 ॥

पूर्णचन्द्रमुखी कन्या बालसूर्य्यसमप्रभा ॥
विशालनेत्रा बिम्बोष्ठी सा कन्या लभते सुखम् ॥ 64.4 ॥

रेखाभिर्बहुभिः क्लेशं स्वल्पाभिर्धनहीनता ॥
रक्ताभिः सुखमाप्नोति कृष्णाभिः प्रेष्यतांव्रजेत् ॥ 64.5 ॥

कार्य्ये च मन्त्री सत्स्त्री स्यात्सती (खी) स्यात्करणेषु च ॥
स्नेहेषु भार्य्या माता स्याद्वेश्या च शयने शुभा ॥ 64.6 ॥

अङ्कुशं कुण्डलं चक्रं यस्याः पाणितले भवेत् ॥
पुत्रं प्रसूयते नारी नरेन्द्रं लभते पतिम् ॥ 64.7 ॥

यस्यास्तु रोमशौ पार्श्वौ रोमशौ च पयोधरौ ॥
अन्नतौ चाधरोष्ठौ च क्षिप्रं मारयते पतिम् ॥ 64.8 ॥

यस्याः पाणितले रेखा प्राकारस्तोरणं भवेत् ॥
अपि दासकुले जाता राज्ञीत्वमुपगच्छति ॥ 64.9 ॥

उद्वृत्ता कपिला यस्य रोमराजी निरन्तरम् ॥
अपि राजकुले जाता दासीत्वमुपगच्छति ॥ 64.10 ॥

यस्या अनामिकाङ्गुष्ठौ पृथिव्यां नैव तिष्ठतः ॥
पतिं मारयते क्षिप्रं स्वेच्छाचारेण वर्त्तते ॥ 64.11 ॥

यस्या गमनमात्रेण भूमिकम्पः प्रजायते ॥
पतिं मारयते क्षिप्रं स्वेच्छाचारेण वर्त्तते ॥ 64.12 ॥

चक्षुः स्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् ॥
त्वचः स्नेहेन शाय्यां च पादस्नेहेन वाहनम् ॥ 64.13 ॥

स्निग्धोन्नतौ ताम्रनखौ नार्याश्च चरणौ शुभौ ॥
मत्स्याङ्कुशाब्जचिह्नौ च चक्रलाङ्गललक्षितौ ॥ 64.14 ॥

अस्वेदिनौ मृदुतलौ प्रशस्तौ चरणौ स्त्रियाः ॥
शुभे जङ्घे विरोमे च ऊरू हस्तिकरोपमौ ॥ 64.15 ॥

अश्वत्थपत्रसदृशं विपुलं गुह्यमुत्तमम् ॥
नाभिः प्रशस्ता गम्भीरा दक्षिणावर्त्तिका शुभा ॥
अरोमा त्रिवली नार्य्या हृत्स्तनौ रोमवर्जितौ ॥ 64.16 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिः शास्त्रे सामुद्रिके स्त्रीलक्षणनिरूपणं नाम चतुः षष्टितमोऽध्यायः ॥ 64 ॥

॥हरिरुवाच ॥

समुद्रोक्तं प्रवक्ष्यामि नरस्त्रीलक्षणं शुभम् ॥
येन विज्ञातमात्रेण अतीतानागताप्रमा ॥ 65.1 ॥

अस्वेदिनौ मृदुतलौ कमलोदरसन्निभौ ॥
श्लेष्टाङ्गुली ताम्रनखौ पादावुष्णौ शिरोज्झितौ ॥ 65.2 ॥

कूर्मोन्नतौ गूढगुल्फौ सुपार्ष्णो नृपतेः स्मृतौ ॥
शू(स) र्पाकारौ विरूक्षौ च वक्रौ पादौ शिरालकौ ॥ 65.3 ॥

संशुष्कौ पाण्डुरनखौ निः स्वस्य विरलाङ्गुली ॥
मार्गायोत्कंटकौ पादौ कषायसदृशौ तथा ॥ 65.4 ॥

विच्छित्तिदौ च वंशस्य ब्रह्मन्घौ शङ्कु (पक्र) सन्निभौ ॥
अगम्यागमने प्रीतौ जङ्घा विरलरोमिका ॥ 65.5 ॥

मृदुरोमा समा जङ्घा तथा करिकरप्रभा ॥
ऊरवो जानवस्तुल्या नृपस्योपचिताः स्मृताः ॥ 65.6 ॥

निः स्वस्य सृगालजङ्घा रौमैकैकं चकूपके ॥
नृपाणां श्रोत्रियाणां च द्वे द्वे श्रिये च धीमताम् ॥ 65.7 ॥

त्र्याद्यैर्निः स्वा मानवाः स्युर्दुः स्वभाजश्च निन्दिताः ॥
केशाश्च वै कुञ्चिताश्च प्रवासे म्रियते नरः ॥ 65.8 ॥

निर्मांसजानुः सौभाग्यमल्पैर्निम्नै रतिः स्त्रियाः ॥
विकटैश्च दरिद्राः स्युः समांसै राज्यमेव च ॥ 65.9 ॥

महद्भिरायुराख्यातं ह्यल्पलिङ्गो धनी नरः ॥
अपत्यरहितश्चैव स्थूललिङ्गो घनोज्झितः ॥ 65.10 ॥

मेढ्र वामनते चैव सुतार्थरहितो भवेत् ॥
वक्रेऽन्यथा पुत्रवान्त्स्याद्दारिद्र्यं विनतेत्वधः ॥ 65.11 ॥

अल्पे त्वतनयो लिङ्गेशिरालेऽथ सुखी नरः ॥
स्थूलग्रन्थियुते लिङ्गे भवेत्पुत्रादिसंयुतः ॥ 65.12 ॥

कोशगूढे दीर्घैर्भुग्नैश्च धनवर्जितः ॥
बलवान्युद्धशीलश्च लघुशेक्तः स एव च ॥ 65.13 ॥

दुर्बलस्त्वेकवृषणो विषमाभ्याञ्चलः स्त्रियाम् ॥
समाभ्यां क्षितिपः प्रोक्तः प्रलम्बेन शताब्दवान् ॥ 65.14 ॥

उद्वृं (द्ध) ताभ्यां च बह्वायू रूक्षैर्मणिभिरीश्वरः ॥
पाण्डरैर्मणिभिर्निः स्वा मलिनैः सुखभागिनः ॥ 65.15 ॥

सशब्दनिः शब्दमूत्राः स्युदंरिद्राश्च मानवाः ॥
एकद्वित्रिचतुः पञ्चषड्भिर्धाराभिरेव च ॥ 65.16 ॥

दक्षिणावर्त्तचलितमूत्रा भिश्च नृपाः स्मृताः ॥
विकीर्णमूत्रा निः स्वाश्च प्रधानसुखदायिकाः ॥ 65.17 ॥

एकधाराश्च वनिताः स्निग्धैर्मणिभिरुन्नतैः ॥
समैः स्त्रीरत्नधनिनो मध्ये निम्नैश्च कन्यकाः ॥ 65.18 ॥

शुष्कैर्निश्वा विशुष्कैश्च दुर्भगाः परिकीर्त्तिताः ॥
पुष्पगन्धे नृपाः शुक्रे मधुगन्धे धनं बहुः ॥ 65.19 ॥

पुत्राः शुक्रे मत्स्यगन्धे तनुशुक्रे च कन्यकाः ॥
महाभोगी मांसगन्धे यज्वा स्यान्मदगन्धिनि ॥ 65.20 ॥

दरिद्रः क्षारगन्धे च दीर्घायुः शीघ्रमैथुनी ॥
अशीघ्रमैथुन्यल्पायुः स्थूलस्फिक् स्याद्धनोज्झितः ॥ 65.21 ॥

मांसलस्फिक् सुखी स्याच्च सिंहस्फिक् भूपतिः स्मृतः ॥
भवेत्सिंहकटी राजा निः स्वः कपिकटिर्नरः ॥ 65.22 ॥

सर्पोदरा दरिद्राः स्युः पिठरैश्च घटैः समैः ॥
धनिनो विपुलैः पार्श्वैर्निः स्वा रक्तैश्च निम्नगैः ॥ 65.23 ॥

समकक्षाश्च भोगाढ्या निम्नकक्षा धनोज्झिताः ॥
नृपाश्चोन्नतकक्षाः स्युर्जिह्ना विषमकक्षकाः ॥ 65.24 ॥

मत्स्योदरा बहुधना नाभिभिः सुखिनः स्मृताः ॥

विस्तीर्णाभिर्बहुलाभिर्निम्नाभिः क्लेशभागिनः ॥ 65.25 ॥

बलिमध्यगता नाभिः शूलबाधां करोति हि ॥
वामावर्त्तश्च साध्यं वै मेधां दक्षिणतस्तथा ॥ 65.26 ॥

पार्श्वायता चिरायुर्दा तूपविष्टा धनेश्वरम् ॥
अधो गवाढ्यं कुर्य्याच्च नृपत्वं पद्मकर्णिका ॥ 65.27 ॥

एकबलिः शतायुः स्याच्छ्रीभोगी द्विवलिः स्मृतः ॥
त्रिवलिः क्ष्माप आचार्य्य ऋजुभिर्वालिभिः सुखी ॥ 65.28 ॥

अगम्यागामी जिह्मबलिर्भूपाः पार्श्वैश्च मांसलैः ॥
मृदुभिः सुसमैश्चैव दक्षिणावर्त्तरोमभिः ॥ 65.29 ॥

विपरीतैः परप्रेष्या निर्द्रव्याः सुखवर्जिताः ॥
अनुद्धतैश्चूचुकैश्च भवन्ति सुभगा नराः ॥ 65.30 ॥

निर्धना विषमैर्दोर्घैः पीतोपचितकैर्नृपाः ॥
समोन्नतं च हृदयमकम्पं मांसलं पृथु ॥ 65.31 ॥

नृपाणामधमानां च खररोमशिरालकम् ॥
अर्थवान्समवक्षाः स्यात्पीनैर्वक्षोभिरूर्जितः ॥ 65.32 ॥

वक्षोभिर्विषमैर्निः स्वः शस्त्रेणनिधनास्तथा ॥
विषमैर्जत्रुभिर्निः स्वा अस्थिनद्धैश्च मानवाः ॥ 65.33 ॥

उन्नतैर्भोगिनो निम्नैर्निः स्वाः पीनैर्धनान्विताः ॥
निः स्वश्चिपिटकण्ठः स्याच्छिराशुष्कगलः सुखी ॥ 65.34 ॥

शूरः स्यान्महिषग्रीवः शास्त्रात्तो मृगकण्ठकः ॥
कम्बुग्रीवश्च नृपतिर्लम्बकण्ठोऽतिभक्षकः ॥ 65.35 ॥

अरोमशा भुग्नपृष्ठं शुभंचाशुभमन्यथा ॥
कक्षाश्वत्थदला श्रेष्ठा सुगन्धिर्मृगरोमिका ॥ 65.36 ॥

अन्यथा त्वर्थहीनानां दारिद्र्यस्य च कारणम् ॥
संमासौ चैव भुग्नाल्पौ श्लिष्टौ च विपुलौ शुभौ ॥ 65.37 ॥

आजानुलम्बितौ बाहू वृत्तौ पीनौ नृपेश्वरे ॥
निः स्वानां रोमशौ ह्रस्वौ श्रेष्ठौ करिकर प्रभौ ॥ 65.38 ॥

हस्ताङ्गुलय एव स्युवायुद्वारयुताः शुभाः ॥
मेधाविनां च सूक्ष्माः स्युर्भृत्यानां चिपिटाः स्मृताः ॥ 65.39 ॥

स्थूलाङ्गुलीभिर्निः स्वाः स्युर्नताः स्युः सुकृशैस्तदा ॥
कपितुल्यकराः निः स्वा व्याघ्रतुल्यकरैर्बलम् ॥ 65.40 ॥

पितृवित्तविनाशश्च निम्नात्करतलान्नराः ॥
मणिबन्धैर्निगूढैश्च सुश्लिष्टैः शुभगन्धिभिः ॥ 65.41 ॥

नृपा हीनाः करच्छैदैः सशब्दैर्धनवर्जिताः ॥
संवृतैश्चैव निम्नैश्च धनिनः परिकीर्त्तिताः ॥ 65.42 ॥

प्रोत्तानक रदातारो विषमैर्विषमा नराः ॥
करैः करतलैश्चैव लाक्षाभैरीश्वरास्तलैः ॥ 65.43 ॥

परदाररताः पीतैरूक्षैर्निः स्वा नरा मताः ॥
तुषतुल्यनखाः क्लीबाः कुटिलैः स्फुटितैर्नराः ॥ 65.44 ॥

निः स्वाश्च कुनखैस्तद्वद्विवर्णैः परतर्ककाः ॥
ताम्रैर्भूपा धनाढ्याश्च अङ्गुष्ठैः सयवैस्तथा ॥ 65.45 ॥

अङ्गुष्ठमूलजैः पुत्री स्याद्दीर्घांगुलिपर्वकः ॥
दीर्घायुः सुभगश्चैव निर्धनो विरलाङ्गुलिः ॥ 65.46 ॥

घनाङ्गुलिश्च सधनस्तिस्रो रेखाश्चयस्य वै ॥
नृपतेः करतलगा मणिबन्धात्समुत्थिताः ॥ 65.47 ॥

युगमीनाङ्कितनरो भवेत्सत्रप्रदो नरः ॥
वज्राकाराश्च धनिनां मत्स्यपुच्छनिभा बुधे ॥ 65.48 ॥

शङ्खातपत्रशिविकागजपद्मोपमा नृपे ॥
कुम्भाङ्कुशपताकाभा मृणालाभा निधीश्वरे ॥ 65.49 ॥

दामाभाश्च गवाढ्यानां स्वस्तिकाभा नृपेश्वरे ॥
चक्रासितोमरधनुः कुन्ताभा नृपतेः करे ॥ 65.50 ॥

उलूखलाभा यज्ञाढ्या वेदीभा चाग्निहोत्रिणि ॥
वापीदेवकुल्याभास्त्रिकोणाभाश्चधार्मिके ॥ 65.51 ॥

अङ्गुष्ठमूलगा रेखाः पुत्राः सूक्ष्माश्च दारिकाः ॥
प्रदेशिनीगता रेखा कनिष्ठामूलगामिनी ॥ 65.52 ॥

शतायुषं च कुरुते छिन्नया तरुतो भयम् ॥
निः स्वाश्च बहुरेखाः स्युनिर्द्रव्याश्चिबुकैः कृशैः ॥ 65.53 ॥

मांसलैश्च धनोपेता आरक्तैरधरैर्नृपाः ॥
बिम्बोपमैश्च स्फुटितैरोष्ठैरूक्षैश्चकण्डितैः ॥ 65.54 ॥

विषमैर्धनहीनाश्च दन्ताः स्निग्धा घनाः शुभाः ॥
तीक्ष्णा दन्ताः समाः श्रेष्ठा जिह्वा रक्ता समा शुभा ॥ 65.55 ॥

श्लक्ष्णा दीर्घा च विज्ञेया तालुः श्वेते धनक्षये ॥
कृष्णे च परुषो वक्रं समं सौम्यं च संवृतम् ॥ 65.56 ॥

भूपानाममलं श्लक्ष्णं विपरीतं च दुः खिनाम् ॥
महा दुः खं दुर्भगाणां स्त्रीमुखं पुत्रमाप्नुयात् ॥ 65.57 ॥

आढ्यानां वर्त्तुलं वक्रं निर्द्रव्याणां च दीर्घकम् ॥
भीरुवक्त्रः पापकर्मा धूर्त्तानां चतुरश्रकम् ॥ 65.58 ॥

निम्नं वक्रमपुत्राणां कृपणानां च ह्रस्वकम् ॥
सम्पूर्णं भोगिनां कान्तं श्मश्रु स्निग्धं शुभं मृदु ॥ 65.59 ॥

संहतं चास्फुटिताग्रं रक्तश्मश्रुश्च चौरकः ॥
रक्ताल्पपरुषश्मश्रुकर्णाः स्युः पापमृत्यवः ॥ 65.60 ॥

निर्मांसैश्चिपिटैर्भोगाः कृपणा ह्रस्वकर्णकाः ॥
शङ्कुकर्णाश्च राजानो रोमकर्णा गतायुषः ॥ 65.61 ॥

बृहत्कर्णाश्च धनिनोराजानः परिकीर्त्तिताः ॥

कर्णैः स्निग्धावनद्धैश्च व्यालम्बैर्मांसलैर्नृपाः ॥ 65.62 ॥

भोगी वै निम्नगण्डः स्यान्मत्री सम्पूर्णगण्डकः ॥
शुकनासः सुखी स्याच्च शुष्कनासोऽतिजीवनः ॥ 65.63 ॥

छिन्नाग्रकूपनासः स्यादगम्यागमने रतः ॥
दीर्घनासे च सौभाग्यं चौरश्चाकुञ्चितेन्द्रियः ॥ 65.64 ॥

मृत्युश्चिपिटनासे स्याद्धीनो भाग्यवतां भवेत् ॥
स्वल्पच्छिद्रौ सुपुटौ च अवक्रौ च नृपेश्वरे ॥ 65.65 ॥

क्रूरे दक्षिणवक्रा स्याद्वलिनां च क्षुतं सकृत् ॥
स्याद्विनिष्पिण्डितं ह्लादि सानुनादं च जीवकृत् ॥ 65.66 ॥

वक्रान्तैः पद्मपत्राभैर्लोचनैः सुखभागिनः ॥
मार्जारलोचनैः पाप्मा दुरात्मा मधुपिङ्गलैः ॥ 65.67 ॥

क्रूराः केकरनेत्राश्च हरिताक्षाः सकल्मषाः ॥
जिह्यैश्च लोचनैः शूराः सेनान्यो गजलोचनाः ॥ 65.68 ॥

गम्भीराक्षा ईश्वराः स्युर्मन्त्रिणः स्थूलचक्षुषः ॥
नीलोत्प लाक्षा विद्वांसः सौभाग्यं श्यामचक्षुषाम् ॥ 65.69 ॥

स्यात्कृष्णतारकाक्षाणामक्ष्णामुत्पाटनं किल ॥
मण्डलाक्षाश्च पापाः स्युर्निः स्वाः स्युर्दीनलोचनाः ॥ 65.70 ॥

दृक् स्निग्धा विपुला भोगे अल्पायुरधिकोन्नता ॥
विशालोन्नताः सुखिनी दरिद्रा विषमभ्रुवः ॥ 65.71 ॥

घनदीर्घासुसक्तभ्रूर्बालेन्दून्नतसुभ्रुवः ॥
आढ्यो निः स्वश्च खण्डभ्रूर्मध्ये च विनतभ्रुवः ॥ 65.72 ॥

स्त्रीषु गम्यासु सक्ताः स्युः सुतार्थे परिवर्जिताः ॥
उन्नतैर्विपुलैः शङ्खैर्ललाटैर्विषमैस्तथा ॥ 65.73 ॥

निर्धना धनवन्तश्च अर्द्धेन्दुसदृशैर्नराः ॥
आचार्य्याः शुक्तिविशालैः शिरालैः पापकारिणः ॥ 65.74 ॥

उन्नताभिः शिराभिश्च स्वस्तिकाभिर्धनेश्वराः ॥
निम्नैर्ललाटैर्बन्धार्हाः क्रूरकर्मरतास्तथा ॥ 65.75 ॥

संवृतैश्च ललाटैश्च कृपणा उन्नतैर्नृपाः ॥
अनश्रु स्निग्धरुदितमदीनं शुभदं नृणाम् ॥ 65.76 ॥

प्रचुराश्रुदीनं रूक्षं च रुदितं च सुखावहम् ॥
अकम्पं हसितं श्रेष्ठं मीलिताक्षमघावहम् ॥ 65.77 ॥

असकृद्धसितं दुष्टं सोन्मादस्य ह्यनेकधा ॥
ललाटोपसृतास्तिस्त्रो रेखाः स्युः शतवर्षिणाम् ॥ 65.78 ॥

नृपत्वं स्याच्चतसृभिरायुः पञ्चनवत्यथ ॥
अरेखेणायुर्नवतिर्विच्छिन्नाभिश्च पुंश्चलाः ॥ 65.79 ॥

केशान्तोपगताभिश्च अशीत्यायुर्नरो भवेत् ॥
पञ्चभिः सप्तभिः षड्भिः पञ्चाशद्वहुभिस्तथा ॥ 65.80 ॥

चत्वारिंशच्च वक्राभिस्त्रिंशद्भ्रूलग्नगामिभिः ॥
विंशतिर्वामवक्रा भिरायुः क्षुद्राभिरल्पकम् ॥ 65.81 ॥

छत्राकारैः शिरोभिस्तु नृपा निम्नशिरा धनी ॥
चिपिटैश्च पितुर्मृत्युर्गवाद्याः परिमण्डलैः ॥ 65.82 ॥

घटमूर्द्धा पापरुचिर्धनाद्यैः परिवर्जितः ॥
कृष्णैराकुञ्चितैः केशैः स्निग्धैरेकैकसम्भवैः ॥ 65.83 ॥

अभिन्नाग्रैश्च मृदुभिर्न चातिबहुभिर्नृपाः ॥
बहुमूलैश्च विषमैः स्थूलाग्रैः कपिलैस्तथआ ॥ 65.84 ॥

निः स्वाश्चैवातिकुचिलैर्घनैरसित (धिक) मूर्द्धजैः ॥
यद्यद्गात्रं महारूक्षं शिरालं मांसवर्जितम् ॥ 65.85 ॥

तत्तत्स्या दशुभं सर्वं ततोऽन्यथा ॥
विपुलस्त्रिषु गम्भीरो दीर्घः सूक्ष्मश्च पञ्चसु ॥ 65.86 ॥

षडुन्नतश्चतुर्ह्रस्वो रक्तः सप्तसमो नृपः ॥
नाभिः स्वरश्च ससत्त्वं च त्रयं गम्भीरमीरितम् ॥ 65.87 ॥

पुंसः स्यादतिविस्तीर्णं ललाटं वदनं ह्युरः ॥
चक्षुः कक्षा नासिका च षट् स्यु र्नृपकृकाटिकाः ॥ 65.88 ॥

उन्नतानि च ह्रस्वनि जङ्घा ग्रीवा च लिङ्गकम् ॥
पृष्ठं चत्वारि रक्तानि करताल्वधरा नखाः ॥ 65.89 ॥

नेत्रान्तपादजिह्वौष्ठाः पञ्च सूक्ष्माणि सन्ति वै ॥
दशनांगुलिपर्वाणि नखकेशत्वचः शुभाः ॥ 65.90 ॥

दीर्घाः स्तनान्तरं बाहुदन्तलोचननासिकाः ॥
नराणां लक्षणं प्रोक्तं वदामि स्त्रीषु लक्षणम् ॥ 65.91 ॥

राज्याः स्निग्धौ समौ पादौ तलौ ताम्रौ नखौ तथा ॥
श्लिष्टांगुली चोन्नताग्रौ तां पाप्य नृपतिर्भवेत् ॥ 65.92 ॥

निगूढगुल्फोपचितौ पद्मकान्तितलौ शुभौ ॥
अस्वेदिनौ मृदुतलौ मत्स्यांकुशध्वजाञ्चितौ ॥ 65.93 ॥

वज्राब्जहलचिह्नौ च दास्याः पादौ ततोऽन्यथा ॥
जङ्घे च रोमरहिते सुवृत्ते विशिरे शुभे ॥ 65.94 ॥

अनुल्बणं सन्धिदेशं समं जानुद्वयं शुभम् ॥
ऊरू करिकराकारावरोमौ च समौ शुभौ ॥ 65.95 ॥

अश्वत्थपत्रसदृशं विपुलं गुह्यमुत्तमम् ॥
श्रोणीललाटकं स्त्रीणामूरु कूर्मोन्नतं शुभम् ॥ 65.96 ॥

गूढो मणिश्च शुभदो नितम्बश्च गुरुः शुभः ॥
विस्तीर्णमांसोपचिता गम्भीरा विपुला शुभा ॥ 65.97 ॥

नाभिः प्रदक्षिणावर्त्ता मध्यं त्रिबलिशोभितम् ॥
अरोमशौ स्तनौ पीनौ घनावविषमौ शुभौ ॥ 65.98 ॥

कठिनौ रोमशा शस्ता मृदुग्रीवा च कम्बुभा ॥

आरक्तावधरौ श्रेष्ठौ मांसलं वर्त्तुलं मुखम् ॥ 65.99 ॥

कुन्दपुष्पसमा दन्ता भाषितं कोकिलासमम् ॥
दाक्षिण्ययुक्तमशठं हंसशब्दसुखावहम् ॥ 65.100 ॥

नासा समा समपुटा स्त्रीणां तु रुचिरा शुभा ॥
नीलोत्पलनिभं चक्षुर्नासालग्नं न लम्बकम् ॥ 65.101 ॥

न पृथू बालेन्दुनिभे भ्रुवौ चाथ ललाटकम् ॥
शुभमर्द्धेन्दुसंस्थानमतुङ्गं स्यादलोमशम् ॥ 65.102 ॥

सुमांसलं कर्णयुग्मं समं मृदु समाहितम् ॥
स्निग्धा नीलाश्च मृदवो मूर्द्धजाः कुञ्चिताः कचाः ॥ 65.103 ॥

स्त्रीणां समं शिरः श्रेष्ठं पादे पाणितलेऽथ वा ॥
वाजिकुञ्जरश्रीवृक्षयूपेषुयवतोमरैः ॥ 65.104 ॥

ध्वजचामरमालाभिः शैलकुण्डलवेदिभिः ॥
शङ्खातपत्रपद्मैश्च मत्स्यस्वस्तिकसद्रथैः ॥ 65.105 ॥

लक्षणैरङ्कुशाद्यैश्च स्त्रियः स्यू राजवल्लभाः ॥
निगूढमणिबन्धौ च पद्मगर्भोपमौ करौ ॥ 65.106 ॥

न निम्नं नोन्नतं स्त्रीणां भवेत्करतलं शुभम् ॥
रेखान्वितं त्वविधवां कुर्य्यात्संभोगिनीं स्त्रियम् ॥
रेखा या मणिबन्धोत्था गता मध्याङ्गुलिं करे ॥ 65.107 ॥

गता पाणितले या च योर्द्ध्वपादतले स्थिता ॥
स्त्रीणां पुंसां तथा सा स्याद्राज्याय च सुखाय च ॥ 65.108 ॥

कनिष्ठिकामूलभवा रेखा कुर्य्याच्छतायुषम् ॥
प्रदेशिनीमध्यमाभ्यामन्तरालगता सती ॥ 65.109 ॥

ऊना ऊनायुषं कुर्य्याद्रेखाश्चांगुष्ठमूलगाः ॥
बृहत्यः पुत्रास्तन्व्यस्तु प्रमदाः परिकीर्त्तिताः ॥ 65.110 ॥

स्वल्पायुषो बहु (लघु) च्छिन्ना दीर्घाच्छिन्ना महायुषम् ॥

शुभं तु लक्षणं स्त्रीणां प्रोक्तं त्वशुभमन्यथा ॥ 65.111 ॥

कनिष्ठिकानामिका वा यस्या न स्पृशते महीम् ॥
अङ्गुष्ठं वा गतातीत्य तर्जनी कुलटा च सा ॥ 65.112 ॥

ऊर्द्ध्वं द्वाभ्यां पिण्डिकाभ्यां जङ्घे चातिशिरालके ॥
रोमशेचातिमांसे च कुम्भाकारं तथोदरम् ॥ 65.113 ॥

वामावर्त्तं निम्नमल्पं दुः खितानां च गुह्यकम् ॥
ग्रीवया ह्रस्वया निः स्वा दीर्घया च कुलक्षयः ॥ 65.114 ॥

पृथुलया प्रचण्डाश्च स्त्रियः स्युर्नात्र संशयः ॥
केकरे पिङ्गले नेत्रे श्यामे लोलेक्षणा सती ॥ 65.115 ॥

स्मिते कूपे गण्डयोश्च सा ध्रुवं व्यभिचारिणी ॥
प्रलम्बिनी ललाटे तु देवरं हन्ति चाङ्गना ॥ 65.116 ॥

उदरे श्वशुरं हन्ति पतिं हन्ति स्फिचोर्द्वयोः ॥
या तु रोमोत्तरौष्ठी स्यान्न शुभा भर्त्तुरेव हि ॥ 65.117 ॥

स्तनौ सरोमावशुभौ कर्णौ च विषमौ तथा ॥
कराला विषमा दन्ताः क्लेशाय च भवन्ति ते ॥ 65.118 ॥

चौर्य्याय कृष्णमांसाश्च दीर्घा भुर्त्तुश्च मृत्यवे ॥
क्रव्यादरूपैर्हस्तैश्च वृककाकादिसन्निभैः ॥ 65.119 ॥

शिरालैर्विषमैः शुष्कैर्वित्तहीना भवन्ति हि ॥
समुन्नतोत्तरौष्ठी या कलहे रूक्षभाषिणी ॥ 65.120 ॥

स्त्रीषु दोषा विरूपासु पत्राकारो गुणास्ततः ॥
नरस्त्रीलक्षणं प्रोक्तं वक्ष्ये तज्ज्ञानदायकम् ॥ 65.121 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिः शास्त्रे सामुद्रिके स्त्रीनरलक्षणं नाम पञ्चषष्टितमोऽध्यायः ॥ 65 ॥

॥ हरिरुवाच ॥
निर्लक्षणा शुभा स्याच्च चक्राङ्कितशिलार्चनात् ॥
आदौ सुदर्शनो मूर्तिर्लक्ष्मीनारायणः परः ॥ 66.1 ॥

त्रिचक्रोऽसावच्युतः स्याच्चतुश्चक्रश्चतुर्भुजः ॥
वासुदेवश्च प्रद्युम्नस्ततः सङ्कर्षणः स्मृतः ॥ 66.2 ॥

पुरुषोत्तमश्चाष्टमः स्यान्नव्यूहो दशात्मकः ॥
एकादशोऽनिरुद्धः स्याद्द्वादशो द्वादशात्मकः ॥ 66.3 ॥

अत ऊर्ध्वमनन्तः स्याच्छक्रे रेकादिकैः क्रमात् ॥
सुदर्शना लक्षिताश्च पूजिताः सर्वकामदाः ॥ 66.4 ॥

शालग्रामशिला यत्र देवो द्वारवतीभवः ॥
उभयोः सङ्गमो यत्र तत्र मुक्तिर्न संशयः ॥ 66.5 ॥

शालग्रामो द्वारका च नैमिषं पुष्करं गया ॥
वाराणसी प्रयागश्च कुरुक्षेत्रं च सूकरम् ॥ 66.6 ॥

गङ्गा च नर्मदा चैव चन्द्रभागा सरस्वती ॥
पुरुषोत्तमो महाकालस्तीर्थान्येतानि शङ्कर ॥ 66.7 ॥

सर्वपापहराण्येव भुक्तमुक्तिप्रदानि वै ॥
प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः ॥ 66.8 ॥

अङ्गिराः श्रीमुखो भावः युवा धाता तथैव च ॥
ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो विषुः ॥ 66.9 ॥

चित्रभानुः स्वभानुश्च तारणः पार्थिवो व्ययः ॥
सर्वजित्सर्वधारी च विरोधी विकृतिः स्वरः ॥ 66.10 ॥

नन्दनो विजयश्चैव जयो मन्मथदुर्मुखौ ॥
हेमलम्बो विलंबश्च विकारः शर्वरी प्लवः ॥ 66.11 ॥

शुभकृच्छोभनः क्रोधी विश्वावमुपराभवौ ॥
प्लवङ्गः कीलकः सौम्यः साधारणविरोधकृत् ॥ 66.12 ॥

परिधावी प्रमादी च आनन्दो राक्षसो नलः ॥
पिङ्गलः कालसिद्धार्थौ रौद्रिर्वै दुर्मतिस्तथा ॥ 66.13 ॥

दुन्दुभी रुधिरोद्गारी रक्ताक्षः क्रोधनोऽक्षयः ॥
अशोभनाः शोभनाश्च नाम्नैवैते हि वत्सराः ॥ 66.14 ॥

कालं वक्ष्यामि संसिद्ध्यै रुद्र पञ्चस्वरोदयात् ॥
राजा सा(मा) जा उदासा च पीडा मृत्युस्तथैव च ॥ 66.15 ॥

आ ई ऊ ऐ औ स्वरांश्च लिखेत्पञ्चाग्निकोष्ठके ॥
ऊर्ध्वतिर्य्यग्गतै ररवैः षड्वह्निक्रममागतैः ॥ 66.16 ॥

तिथी एका ग्निकोष्ठेषु त्रयो राजाथ सा (मा) जयाः ॥
उदासामृत्युपीडाश्च कुजः सोमसुतः क्रमात् ॥ 66.17 ॥

गुरुशुक्रौ च मन्दश्च रविचन्द्रौ यथोदितम् ॥
रेवत्यादिमृगान्ताश्च ऋक्षाणि प्रथमा कला ॥ 66.18 ॥

पञ्चपञ्चान्यत्र भानि चैत्राद्य उदयस्तथा ॥
द्वादशाहैर्द्वयोर्मासनाम्नोराद्यक्षरं तथा ॥ 66.19 ॥

कलालिङ्गा च या तिष्ठेत्पञ्चमस्तस्य वै मृतिः ॥
कला तिथिस्तथा वारो नक्षत्रं मासमेव च ॥ 66.20 ॥

नामोदयस्य पूर्वं च तथा भवति नान्यथा ॥
ओं क्षौं (क्षौः) शिवाय नमः ॥ 66.21 ॥

क्षामाद्यङ्गशिवामीक्षा विषग्रहमतिर्हर ॥
त्रैलोक्यमोहनं बीजं नृसिंहस्य तु पद्म(न्न)गम् ॥ 66.22 ॥

मृत्युञ्जयो गणो लक्ष्मी रोचनाद्यैस्तु लेखितः ॥
भूर्जे तु धारिताः कण्ठे बाहौ चेति जयादिदाः ॥ 66.23 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिः शास्त्रे शालग्रामषष्ट्यूब्दस्वरोदयानां निरूपणं नाम षट्षष्टितमोऽध्यायः इति ॥ 66 ॥

॥सूत उवाच ॥
हरेः श्रुत्वा हरो गौरीं देहस्थं ज्ञानमब्रवीत् ॥ 67.1 ॥

कुजो वह्नी रविः पृथ्वी सौरिरापः प्रकीर्त्तितः ॥
वायुसंस्थास्थितो राहुर्दक्षरन्ध्रावभासकः ॥ 67.2 ॥

गुरुः शुक्रस्तथा सौम्यश्चन्द्रश्चैव चतुर्थकः ॥
वामनाडीं तु मध्यस्थां कारयेदात्मनस्तथा ॥ 67.3 ॥

यदाचर इलायुक्तस्तदा कर्मसमाचरेत् ॥
स्थानसेवां तथा ध्यानं वाणिज्यं राजदर्शनम् ॥ 67.4 ॥

अन्यानि शुभकर्माणि कारयेत प्रयत्नतः ॥
दक्षनाडीप्रवाहे तु शनिर्भौमश्च सैहिकः ॥ 67.5 ॥

इनश्चैव तथाप्ये पापानामुदयो भवेत् ॥
शुभाशुभविवेको हि ज्ञायते तु स्वरोदयात् ॥ 67.6 ॥

देहमध्ये स्थिता नाड्यो बहुरूपाः सुविस्तराः ॥
नाभेरधस्ताद्यः कन्दस्त्वंकुरास्तत्र निर्गताः ॥ 67.7 ॥

द्विसप्ततिसहस्त्राणि नाभिमध्ये व्यवस्थिते ॥
चक्रवच्च स्थितास्तास्तु सर्वाः प्राणहराः स्मृताः ॥ 67.8 ॥

तासां मध्ये त्रयः श्रेष्ठा वामदक्षिणमध्यमाः ॥
वामा सोमात्मिका प्रोक्ता दक्षिणा रविसन्निभा ॥ 67.9 ॥

मध्यमा च भवेदग्निः फलंती कालपूरिणी ॥
वामा ह्यमृतरूपा च जगदाप्यायने स्थिता ॥ 67.10 ॥

दक्षिणा रौद्रभागेन जगच्छोषयते सदा ॥
द्वयोर्वाहे तु मृत्युः स्यात्सर्वकार्य्यविनाशिनी ॥ 67.11 ॥

निर्गमे तु भवेद्वामा प्रवेशे दक्षिणा स्मृता ॥
इडाचारे तथा सौम्यं चन्द्रसूर्य्यगतस्तथा ॥ 67.12 ॥

कारयेत्क्रूर कर्माणि प्राणे पिंगलसंस्थिते ॥
यात्रायां सर्वकार्येषु विषापहारणे इडा ॥ 67.13 ॥

भोजने मैथुने युद्धे पिंगला सिद्धिदायिका ॥
उच्चाटमारणाद्येषु कर्मस्वेतेषु पिङ्गला ॥ 67.14 ॥

मैथुने चैव संग्रामे भोजने सिद्धिदायिका ॥
शोभनेषु च कार्य्येषु यात्रायां विषकर्मणि ॥ 67.15 ॥

शान्तिमुक्त्यर्थसिद्ध्यै च इडा योज्या नराधिपैः ॥
द्वाभ्यां चैव प्रवाहे च क्रूरसौम्यविवर्जने ॥ 67.16 ॥

विषवत्तं तु जानीयात्संस्मरेत्तु विचक्षणः ॥
सौम्यादिशुभकार्येषु लाभादिजयजीविते ॥ 67.17 ॥

गमनागमने चैव वामा सर्वत्र पूजिता ॥
युद्धादिभोजने घाते स्त्रीणां चैव तु सङ्गमे ॥ 67.18 ॥

प्रशस्ता दक्षिणा नाडी प्रवेशे क्षुद्रकर्मणि ॥
शुभाशुभानि कार्य्याणि लाभालाभौ जयाजयौ ॥ 67.19 ॥

जीवाजीवाय यत्पृच्छेन्न सिध्यति च मध्यमा ॥
वामाचारेऽथवा दक्षे प्रत्यये यत्र नायकः ॥ 67.20 ॥

तनुस्थः पृच्छते यस्तु तत्र सिद्धिर्न संशयः ॥
वैच्छन्दो वामदेवस्तु यदा वहति चात्मनि ॥ 67.21 ॥

तत्र भागे स्थितः पृच्छेत्सिद्धिर्भवति निष्फला ॥
वामे वा दक्षिणे वापि यत्र संक्रमते शिवा ॥ 67.22 ॥

घोरे घोराणि कार्य्याणि सौम्ये वै मध्यमानि च ॥
प्रस्थिते भागतो हंसे द्वाभ्यां वै सर्ववाहिनी ॥ 67.23 ॥

तदा मृत्युं विजानीयाद्योगी योगविशारदः ॥
यत्र यत्र स्थितः पृच्छेद्वामदक्षिणसंमुखः ॥ 67.24 ॥

तत्र तत्र समं दिश्याद्वातस्योदयनं सदा ॥
अग्रतो वामिका श्रेष्ठा पृष्ठतो दक्षिणा शुभा ॥ 67.25 ॥

वामेन वामिका प्रोक्ता दक्षिणे दक्षिणा शुभा ॥
वामे वामा शुभे चैव दक्षिणे दक्षिणा शुभा ॥ 67.26 ॥

जीवो जीवति जीवेन यच्छून्यं तस्त्वरो भवेत् ॥
यत्किञ्चित्कार्य्यमुद्दिष्टं जयादिशुभलक्षणम् ॥ 67.27 ॥

तत्सर्वं पूर्णनाड्यां तु जायते निर्विकल्पतः ॥
अन्यनाड्यादिपर्य्यन्तं पक्षत्रयमुदाहृतम् ॥ 67.28 ॥

यावत्षष्ठी तु पृच्छायां पूर्णायां प्रथमो जयेत् ॥
रिक्तायां तु द्वितीयस्तु कथयेत्तदशङ्कितः ॥ 67.29 ॥

वामाचारसमो वायुर्जायते कर्मसिद्धिदः ॥
प्रवृत्ते दक्षिणे मार्गे विषमे विषमाक्षरम् ॥ 67.30 ॥

अन्यत्र वामवाहे तु नाम वै विषमाक्षरम् ॥
तदासौ जयमाप्नोति योधः संग्राममध्यतः ॥ 67.31 ॥

दक्षवातप्रवाहे तु यदि नाम समाक्षरम् ॥
जा(ज) यते नात्र सन्देहो नाडीमघ्ये तु लक्षयेत् ॥ 67.32 ॥

पिङ्गलान्तर्गते प्राणे शमनीयाहवं जयेत् ॥
यावन्नाड्युदयं चारस्तां दिशं यावदापयेत् ॥ 67.33 ॥

न दातुं जायते सोऽपि नात्र कार्य्या विचारणा ॥
अथ संग्राममध्ये तु यत्र नाडी सदा वहेत् ॥ 67.34 ॥

सा दिशा जयमाप्नोति शून्ये भंगं विनिर्दिशेत् ॥
जातचारे जयं विद्यान्मृतके मृतमादिशेत् ॥ 67.35 ॥

जयं पराजयं चैव यो जानाति स पण्डितः ॥
वामे वा दक्षिणे वापि यत्र सञ्चरते शिवम् ॥ 67.36 ॥

कृत्वा तत्पदमाप्नोति यात्रा सन्ततशोभना ॥
शशिसूर्य्यप्रवाहे तु सति युद्धं समाचरेत् ॥ 67.37 ॥

यस्तु पृच्छति तत्रस्थः स साधुर्जयतिध्रुवम् ॥
यां दिशं वहते वायुस्तां दिशं यावदाजयः ॥ 67.38 ॥

जायते नात्र सन्देह हन्द्रो यद्यग्रतः स्थितः ॥
मेष्याद्या दश या नाड्यो दक्षिणा वाम संस्थिताः ॥ 67.39 ॥

चरेस्थिरे तद्विमार्गे तादृशेतादृशे क्रमात् ॥
निर्गमे निर्गमं याति संग्रहे संग्रहं विदुः ॥ 67.40 ॥

पृच्छकस्य वचः श्रुत्वा घण्टाकारेण लक्षयेत् ॥
वामे वा दक्षिणे वापि पञ्चतत्त्वस्थितः शिवे ॥ 67.41 ॥

ऊर्द्ध्वेऽग्निरध आपश्च तिर्य्यक्संस्थः प्रभञ्जनः ॥
मध्ये तु पृथिवी ज्ञेया नभः सर्वत्र सर्वदा ॥ 67.42 ॥

ऊर्द्ध्वे मृत्युरधः शान्तिस्तिर्य्यक् चोच्चाटयेत्सुधीः ॥
मध्ये स्तम्भं विजानीयान्मोक्षः सर्वत्र सर्वगे ॥ 67.43 ॥

इति श्रीगारुडेमहापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे स्वरोदये शुभाशुभनिरूपणं नाम सप्तषष्टितमोऽध्यायः ॥ 67 ॥

॥ सूत उवाच ॥
परिक्षां वच्मिरत्नानां बलो नामासुरोऽभवत् ॥
इन्द्राद्या निर्जितास्तेन विजेतुं तैर्न शक्यते ॥ 68.1 ॥

वरव्याजेन पशुतां याचितः स सुरैर्मखे ॥
बलो ददौ स (स्व) पशुतामतिसत्त्व सुरैर्हतः ॥ 68.2 ॥

पशुवत्स विशस्तस्तैः स्ववाक्याशनियन्त्रितः ॥
बलो लोकोपराय देवानां हितकाम्यया ॥ 68.3 ॥

तस्य सत्त्वविशुद्धस्य विशुद्धेन च कर्मणा ॥
कायस्यावयवाः सर्वे रत्नबीजत्वमाययुः ॥ 68.4 ॥

देवानामथ यक्षाणां सिद्धानां पवनाशिनाम् ॥
रत्नबीजंस्व(जम)यं ग्राहः सुमहानभवत्तदा ॥ 68.5 ॥

तेषां तु पततां वेगाद्विमानेन विहायसा ॥
यद्यत्पपात रत्नानां बीजं क्वचन किञ्चन ॥ 68.6 ॥

महोदधौ सरिति वा पवर्त काननेऽपि वा ॥
तत्तदाकरतां यातं स्थानमाधेयगौरवात् ॥ 68.7 ॥

तेषु रक्षोविषव्यालव्याधिघ्नान्यघहानि च ॥
प्रादुर्भवन्ति रत्नानि तथैव विगुणानि च ॥ 68.8 ॥

वज्रं मुक्तामणयः सपद्मरागाः समरकताः प्रोक्ताः ॥
अपि चेन्द्रनीलमणिवरवैदूर्य्याः पुष्परागाश्च ॥ 68.9 ॥

कर्केतनं सपुलकं रुधिराख्यसमन्वितं तथा स्फटिकम् ॥
विद्रुममणिश्च यत्नादुद्दिष्टं संग्रहे तज्ज्ञैः ॥ 68.10 ॥

आकारवर्णौ प्रथमं गुणदोषौ तत्फलं परीक्षा च ॥
मूल्यं च रत्नकुशलैर्विज्ञेयं सर्वशास्त्राणाम् ॥ 68.11 ॥

कुलग्नेषूपजायन्ते यानि चोपहतेऽहनि ॥
दौषैस्तान्यपियुज्यन्ते हीयन्ते गुणसम्पदा ॥ 68.12 ॥

परीक्षापरिशुद्धानां रत्नानां पृथिवीभुजा ॥
धारणं संग्रहो वापि कार्य्यः श्रियमभीप्सता ॥ 68.13 ॥

शास्त्रज्ञाः कुशलाश्चापि रत्नभाजः परीक्षकाः ॥
त एव मूल्यमात्राया वेत्तारः परिकीर्त्तिताः ॥ 68.14 ॥

महा प्रभावं विबुधैर्यस्यमाद्वज्रमुदाहृतम् ॥
वज्रपूर्वा परीक्षेयं ततोऽस्माभिः प्रकीत्त्र्यते ॥ 68.15 ॥

तस्यास्थिलेशो निपपात येषु भुवः प्रदेशेषु कथञ्चिदेव ॥
वज्राणि वज्रायुधनिर्जिगीषोर्भवन्ति नानाकृतिमन्ति तेषु ॥ 68.16 ॥

हैममातङ्गसौराष्ट्राः पौण्ड्रकालिङ्गकोशलाः ॥
वेण्वातटाः ससौवीरा वज्रस्याष्ट विहारकाः ॥ 68.17 ॥

आताम्रा हिमशैलजाश्च शशिभा वेण्वातटीयाः स्मृताः सौवीरे त्वसिताब्जमेघसदृशास्ताम्राश्च सौराष्ट्रजाः ॥
कालिङ्गाः कन कावदातरुचिराः पीतप्रभाः कोसले श्यामाः पुंड्रभवा मतंगविषये नात्यन्तपीतप्रभाः ॥ 68.18 ॥

अत्यर्थं लघु वर्णतश्च गुणवत्पार्श्वेषु सम्यक् समंरेखाबिन्दुकलङ्ककाकपदकत्रासादिभिर्वर्जितम् ॥
लोकेऽस्मिन्परामाणुमात्रमपि यद्वज्रं क्वचिदृश्यते तस्मिन्देवसमाश्रयो ह्यवितथस्तीक्ष्णाग्रधारं यदि ॥ 68.19 ॥

वज्रेषु वर्णयुक्त्या देवानामपि विग्रहः प्रोक्तः ॥
वर्णेभ्यश्च विभागः कार्य्यो वर्णाश्रयादेव ॥ 68.20 ॥

हरितसितपीतपिंगश्यामास्ताम्राः स्वभावतो रुचिराः ॥
हरिवरुणशक्रहुतवहपितृपतिमरुतां स्वका वर्णाः ॥ 68.21 ॥

विप्रस्य शङ्खकुमुदस्फटिकावदातः स्यात्क्षत्त्रियस्य शशबभ्रुविलोचनाभः ॥
वैश्यस्य कान्तकदलीदलसन्निकाशः शूद्रस्य धौतकरवालसमानदीप्तिः ॥ 68.22 ॥

द्वौ वज्रवर्णौ पृथिवीपतीनां सद्भिः प्रदिष्टौ न तु सार्वजन्यौ ॥
यः स्याज्जवाविद्रुमभङ्गशोणो यो वा हरिद्रारसन्निकाशः ॥ 68.23 ॥

ईशत्वात्सर्ववर्णानां गुणवत्सार्ववर्णिकम्॥
कामतो धारयेद्राजा न त्वन्योऽन्यत्कथञ्चन ॥ 68.24 ॥

अधरोत्तरवृत्तया हि यादृक् स्याद्वर्णसङ्करः ॥
ततः कष्टतरो वज्रवर्णानां सङ्करो मतः ॥ 68.25 ॥

न च मार्गविभागमात्रवृत्त्या विदुषा वज्रपरिग्रहो विधेयः ॥
गुणवद्गुणसम्पदां विभूतिर्विपरीतो व्यसनोदयस्य हेतुः ॥ 68.26 ॥

एकमपि यस्य श्रृङ्गं विदलितमवलोक्यते विशीर्णं वा ॥
गुणवदपि तन्न धार्य्यं वज्रं श्रेयोऽर्थिभिर्भवने ॥ 68.27 ॥

स्फुटिताग्निवि शीर्णश्रृङ्गदेशं मलवर्णैः पृषतैरुपेतमध्यम् ॥
न हि वज्रभृतोऽपि वज्रमाशु श्रियमप्याश्रयलालसां न कुर्य्यात् ॥ 68.28 ॥

यस्यैकदेशः क्षतजावभासो यद्वा भवेल्लोहितवर्णचित्रम् ॥
न तन्न कुर्य्याद्ध्रियमाणमाशु स्वच्छन्दमृत्योरपि जीवितान्तम् ॥ 68.29 ॥

कोट्यः पार्श्वनि धाराश्च षडष्टौ द्वादशेति च ॥
उत्तुङ्गसमतीक्ष्णाग्राः वज्रस्याकरजा गुणाः ॥ 68.30 ॥

षट्कोटि शुद्वममलं स्फुटतीक्ष्णधारं वर्णान्वितं लघु सुपार्श्वमपेतदोषम् ॥
इन्द्रायुधांशुविसृतिच्छुरितान्तरिक्षमेवंविधं भुवि भवेत्सुलभं न वज्रम् ॥ 68.31 ॥

तीक्ष्णाग्रं विमलमपेतसर्वदोषं धत्ते यः प्रयततनुः सदैव वज्रम् ॥
वृद्धिस्तं प्रतिदिनमेति यावदायुः स्त्रीसम्पत्सुतधनधान्यगोपशूनाम् ॥ 68.32 ॥

व्यालवह्निविषव्याघ्रतस्कराम्बुभयानि च ॥
दूरात्तस्य निवर्त्तन्ते कर्माण्याथर्वणानि च ॥ 68.33 ॥

यदि वज्रमपेतसर्वदोषं बिभृयात्तण्डुलविंशतिं गुरुत्वे ॥
मणिशास्त्रविदो वदन्ति तस्य द्विगुणं रूपकलक्षमग्रमूल्यम् ॥ 68.34 ॥

त्रिभागहीनार्द्धतदर्द्धशेषं त्रयोदशं त्रिंशदतोऽर्द्धभागाः ॥
अशीतिभागोऽथ शतांशभागः सहस्त्रभागोऽल्पसमानयोगः ॥ 68.35 ॥

यत्तण्डुलैर्द्वादशभिः कृतस्य वज्रस्य मूल्यं प्रथमं प्रदिष्टम् ॥
द्वाभ्यां क्रमाद्वानिमुपागतस्य त्वेकावमानस्य विनिश्चयोऽयम् ॥ 68.36 ॥

न चापि तण्डुलैरेव वज्राणां धरणक्रमः ॥
अष्टाभिः सर्षपैर्गौरैस्तंण्डुलं परिकल्पयेत् ॥ 68.37 ॥

यत्तु सर्वगुणैर्युक्तं वज्रं तरति वारिणि ॥
रत्नवर्गे समस्तेऽपि तस्य धारणमिष्यते ॥ 68.38 ॥

अल्पेनापि हि दोषेण लक्ष्यालक्ष्येण द्वषितम् ॥
स्व (स) मूल्याद्दशमं भागं वज्रं लभति मानवः ॥ 68.39 ॥

प्रकटानेकदोषस्य स्वल्पस्य महतोऽपि वा ॥
स्व (सु) मूल्याच्छतशो भागो वज्रस्य न विधीयते ॥ 68.40 ॥

स्पष्टदोषमलङ्कारे वज्रं यद्यपि दृश्यते ॥
रत्नानां परिकर्मार्थं मूल्यं तस्य भवेल्लघु ॥ 68.41 ॥

प्रथमं गुणसम्पदाभ्युपेतं प्रतिबद्धं समुपैति यच्च दोषम् ॥
अलमाभरणेन तस्य राज्ञो गुणहीनोऽपि मणिर्न भूषणाय ॥ 68.42 ॥

नार्य्या वज्रमधार्य्यं गुणवदपि सुतप्रसूतिमिच्छन्त्या ॥
अन्यत्र दीर्घाचिपिटत्र्यश्राद्यगुणैर्वियुक्ताच्च ॥ 68.43 ॥

अयसा पुष्परागेण तथा गोमेदकेन च ॥
वैदूर्य्यस्फटिकाभ्यां च काचैश्चापि पृथग्विधैः ॥ 68.44 ॥

प्रतिरूपाणि कुर्वन्ति वज्रस्य कुशला जनाः ॥
परीक्षा तेषु कर्त्तव्या विद्वद्भिः सुपरीक्षकैः ॥ 68.45 ॥

क्षारोल्लेखनशाणाभिस्तेषां कार्य्यं परीक्षणम् ॥
पृथिव्यां यानि रत्नानि ये चान्ये लोहधातवः ॥ 68.46 ॥

सर्वाणि विलिखेद्वज्रं तच्च तैर्न विलिख्यते ॥
गुरुता सर्वरत्नानां गौरवाधारकारणम् ॥ 68.47 ॥

वज्रे तां वैपरीत्येन सूरयः परिचक्षते ॥
जातिरजातिं विलिखति जातिं विलिखंति वज्रकुरुविन्दाः ॥ 68.48 ॥

वज्रैर्वज्रं विलिखति नान्येन विलिख्यते वज्रम् ॥
वज्राणि मुक्तामणयो ये च केचन जातयः ॥ 68.49 ॥

न तेषां प्रतिबद्धानां भवत्यूर्द्ध्वगामिनी ॥
तिर्य्यक्क्षतत्वात्केषाञ्चित्कथञ्चिद्यदि जायते ॥
तिर्य्यग्विलिख्यमानानां सा (स) पार्श्वेषु विहन्यते ॥ 68.50 ॥

यद्यपि विशीर्णकोटिः स बिन्दुरेखान्वितो विवर्णो वा ॥
तदपि धनधान्यपुत्रान्करोति सेन्द्रायुधो वज्रः ॥ 68.51 ॥

सौदा मिनीविस्फुरिताभिरामं राजा यथोक्तं कलिशं दधानः ॥
पराक्रमाक्रान्तपरप्रतापः समस्तसामन्तभुवं भुनक्ति ॥ 68.52 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे रत्नतद्विशेषवज्रपरीक्षणादिवर्णनं नामाष्टषष्टितमोऽध्यायः ॥ 68 ॥

॥ सूत उवाच ॥

द्विपेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि ॥
मुक्ताफलानि प्रथितानि लोके तेषां च शुक्त्युद्भवमेव भूरि ॥ 69.1 ॥

तत्रैव चैकस्य हि मूलमात्र निविश्यते रत्नपदस्य जातु ॥
वेध्यं तु शुक्तयुद्भवमेव तेषां शेषाण्यवेध्यानि वदन्ति तज्ज्ञाः ॥ 69.2 ॥

त्वक्सारनागेन्द्रतिमिप्रसूतं यच्छङ्खजं यच्च वरा हजातम् ॥
प्रायो विमुक्तानि भवन्ति भासा शस्तानि माङ्गल्यतया तथापि ॥ 69.3 ॥

या मौक्तिकानामिह जातयेऽष्टौ प्रकीर्त्तिता रत्नविनिश्चयज्ञैः ॥
कम्बूद्भवं तेष्वधमं प्रदिष्टमुत्पद्यते यच्च गजेन्द्रकुम्भात् ॥ 69.4 ॥

स्वयोनिमद्यच्छवितुल्यवर्णं शाङ्खं बृहल्लोलफलप्रमाणम् ॥
उत्पद्यते वारणकुम्भमध्यादापीतवर्णं प्रभया विहीनम् ॥ 69.5 ॥

ये कम्बवः शांर्गमुखावमर्शपीतस्य शङ्खप्रवरस्य गोत्रे ॥
मतङ्गजाश्चापि विशुद्धवंश्यास्ते मौक्तिकानां प्रभवाः प्रदिष्टाः ॥ 69.6 ॥

उत्पद्यते मौक्तिकमेषु वृत्तमापीतवर्णं प्रभया विहीनम् ॥
पाठीनपृष्ठस्य समानवर्णं मीनात्सुवृत्तं लघु चातिसूक्ष्मम् ॥ 69.7 ॥

उत्पद्यते वारिचराननेषु मत्स्याश्चे ते मध्यचराः पयोधेः ॥
वराहदंष्ट्राप्रभवं प्रदिष्टं तस्यैव दंष्ट्रांकुरतुल्यवर्णम् ॥ 69.8 ॥

क्वचित्कथञ्चित्स भुवः प्रदेशे प्रजायते सूकरवद्विशिष्टः ॥
वर्षोपलानां समवर्णशोभं त्वक्सारपर्वप्रभवं प्रदिष्टम् ॥ 69.9 ॥

ते वेणवो दिव्यजनोपभोग्ये स्थाने प्ररोहन्ति न सार्वजन्ये ॥
भौजं गमं मीनविशुद्धवृत्तं संस्थानतोऽत्युज्ज्वलवर्णशोभम् ॥ 69.10 ॥

नितान्तधौतप्रविकल्पमाननिस्त्रिंशधारासमवर्णकान्ति ॥
प्राप्यातिरत्नानि महाप्रभाणि राज्यं श्रियं वा महतीं दुरापाम् ॥ 69.11 ॥

तेजोऽन्विताः पुण्यकृतो भवन्ति मुक्ताफलस्याहिशिरोभवस्य ॥
जिज्ञासया रत्नधनं विधिज्ञैः शुभेमुहूर्त्ते प्रयतैः प्रयत्नात् ॥ 69.12 ॥

रक्षाविधानं सुमहद्विधाय हर्म्योपरिष्ठं क्रियते यदा तत् ॥
तदा महादुन्दुभिमन्द्रघोषैर्विद्युल्लताविस्फुरितान्तरालैः ॥ 69.13 ॥

पयोधराक्रान्तिविलम्बिनम्रैर्धनैवैराव्रियतेऽन्तरिक्षम् ॥
न तं भुजङ्गा न तु यातुधाना न व्याधयो नाप्युपसर्गदोषाः ॥ 69.14 ॥

हिंसन्ति यस्याहिशिरः समुत्थं मुक्ताफलं तिष्ठति कोशमध्ये ॥
नाभ्येति मेघप्रभवं धरित्रीं विप्रद्गतं तद्विबुधा हरन्ति ॥ 69.15 ॥

अर्चिः प्रभानावृतदिग्विभागमादित्यवददुः खविभाव्यबिम्बम् ॥
तेजस्तिरस्कृत्य हुताशनेन्दुनक्षत्रताराप्रभवं समग्रम् ॥ 69.16 ॥

दिवा यथा दीप्तिंकरं तथैव तमोऽवगाढास्वपि तन्निशासु ॥
विचित्ररत्नद्युतिचारुतोया चतुः समुद्राभरणोपपन्ना ॥ 69.17 ॥

मूल्यं न वा स्यादिति निश्चयो मे कृत्स्ना मही तस्य सुवर्णपूर्णा ॥
हीनोऽपियस्तल्लभते कदाचिद्विपाकयोगान्महतः शुभस्य ॥ 69.18 ॥

सापत्न्यहीनां स महीं समग्रां भुनक्ति तत्तिष्ठति यावदेव ॥
न केवलं तच्छुभकृन्नृपस्य भाग्यैः प्रजानामपि तस्य जन्म ॥ 69.19 ॥

तद्योजनानां परितः सहस्त्रं सर्वानन‍र्थान्विमुखी करोति ॥
नक्षत्रमालेव दिवो विशीर्णा दन्तावलिस्तस्य महासुरस्य ॥ 69.20 ॥

विचित्रवर्णेषु विशुद्धवर्णा पयः सु पत्युः पयसां पपात ॥
सम्पूर्णचन्द्रांशुकलापकान्तेर्मणिप्रवेकस्य महागुणस्य ॥ 69.21 ॥

तच्छुक्तिमत्सु स्थितिमाप बीजमासन्पुराऽप्यन्यभवानि यानि ॥
यस्मिन्प्रदेशेऽम्बुनिधौ पपात सुचारुमुक्तामणिरत्नबीजम् ॥
तस्मिन्पयस्तोयधरावकीर्णं शुक्तौ स्थितं मौक्तिकतामवाप ॥ 69.22 ॥

सैंहलिकपारलौकिकसौराष्ट्रिकताम्रपर्णपारशवाः ॥
कौबेरपाण्ड्यहाटकहेमकमित्याकरास्त्वष्टौ ॥ 69.23 ॥

शुक्त्युद्भवं नातिनिकृष्टवर्णं प्रमाणसंस्थानगुणप्रभाभिः ॥
उत्पद्यते वर्द्धनपारसीकपाताललोकान्तरसिंहलेषु ॥ 69.24 ॥

चिन्त्या न तस्याकरजा विशेषा रूपे प्रमाणे च यतेत विद्वान् ॥
न च व्यवस्थास्ति गुणागुणेषु सर्वत्र सर्वाकृतयो भवन्ति ॥ 69.25 ॥

एतस्य शुक्तिप्रभस्य मुक्ताफलस्य चान्येन समुन्मितस्य ॥
मूल्यं सहस्त्राणि तु रूपकाणां त्रिभिः शतैरप्याधिकानि पंच ॥ 69.26 ॥

यन्माषकार्द्धेन ततो विहीनं तत्पंचभागद्वयहीनमूल्यम् ॥
यन्माषकांस्त्रीन्बिभृयात्सहस्त्रे द्वे तस्य मूल्यं परमं प्रदिष्टम् ॥ 69.27 ॥

अर्द्धाधिकौ द्वौ वहतोऽस्य मूल्यं त्रिभिः शतैरप्यधिकं सहस्त्रम् ॥

द्विमाष कोन्मानितगौरवस्य शतानि चाष्टौ कथितानि मूल्यम् ॥ 69.28 ॥

अर्द्धाधिकं माषकमुन्मितस्य समं च विंशत्रितयं शतानाम् ॥
गुंजाश्च षड् धारयतः शते द्वे मूल्यं परं तस्य वदन्ति तज्ज्ञाः ॥
अध्यर्द्धमुन्मान(प) कृतं शतं स्यान्मूल्यं गुणैस्तस्य समन्वितस्य ॥ 69.29 ॥

यदि षोडशभिर्भवेदनूनंधरणं तत्प्रवदन्ति दार्विकाख्यम् ॥
अधिकं दशभिः शतं च मूल्यं समवाप्नोत्यपि बालिशस्य हस्तात् ॥ 69.30 ॥

द्विगुणैर्दशभिर्भवेदनूनं धरणं तद्भवकं वदन्ति तज्ज्ञाः ॥
नवसप्ततिमाप्नुयात्स्वमूल्यं यदि न स्याद्गुणसम्पदा विहीनम् ॥ 69.31 ॥

त्रिंशता धरणं पूर्णं शिक्यं तस्येति कीर्त्त्यते ॥
चत्वारिंशद्भवेत्तस्याः परं मूल्यं विनिश्चयः ॥ 69.32 ॥

चत्वारिंशद्र भवेत्तस्यास्त्रिंशन्मूल्यं लभेत् सा ॥
पंचाशत्तु भवेत्सोमस्तस्य मूल्यं तु विंशतिः ॥ 69.33 ॥

षष्टिर्निकरशीर्षं स्यात्तस्या मूल्यं चतुर्दश ॥
अशीतिर्नवतिश्चैव कूप्येति परिकीर्त्तिता ॥
एकादश स्यान्नव च तयोर्मूल्यमनुक्रमात् ॥ 69.34 ॥

आदाय तत्सकलमेव ततोऽन्नभाण्डं जम्बीरजातरसयोजनया विपक्रम् ॥
घृष्टं ततो मृदुतनूकृतपिण्डमूलैः कुर्य्याद्यथेष्टमनु मौक्तिकमाशु विद्धम् ॥ 69.35 ॥

मृल्लिप्तमत्स्यपुटमध्यगतं तु कृत्वा पश्चात्पचेत्तनु ततश्च बिडालपुट्या ॥
दुग्धे ततः पयसि तं विपचेत्सुधायां पक्वं ततोऽपि पयसा शुचिचिक्रणेन ॥ 69.36 ॥

शुद्धं ततो विमलवस्त्रनिघर्षणेन स्यान्मौक्तिकं विपुलसद्गुणकान्तियुक्तम् ॥
व्याडिर्जगाद जगतां हि महाप्रभावः सिद्धो विदग्धहिततत्परया दयालुः ॥ 69.37 ॥

श्वेतकाचसमं तारं हेमांशशतयोजितम् ॥
रसमध्ये प्रधार्य्येत मौक्तिकं देहभूषणम् ॥ 69.38 ॥

एवं हि सिंहले देशे कुर्वन्ति कुशला जनाः ॥
यस्मिन्कृत्रिमसन्देहः क्वचिद्भवति मौक्तिके ॥ 69.39 ॥

उष्णे सलवणे स्नेहे निशां तद्वासयेज्जले ॥
ब्रीहिभिर्मर्दनीयं वा शुष्कवस्त्रोपवेष्टितम् ॥ 69.40 ॥

यत्तु नायाति वैवर्ण्यं विज्ञेयं तदकृत्रिमम् ॥
सितं प्रमाणवत्स्निग्धं गुरु स्वच्छं सुनिर्मलम् ॥ 69.41 ॥

तेजोऽधिकं सुवृत्तं च मौक्तिकं गुणवत्स्मृतम् ॥ 69.42 ॥

प्रमाणवद्गौरवरश्मियुक्तं सितं सुवृत्तं समसूक्ष्मवेधम् ॥
अक्रेतुरप्यावहति प्रमोदं यन्मौक्तिकं तद्गुणवत्प्रदिष्टम् ॥ 69.43 ॥

एवं समस्तेन गुणोदयेन यन्मौक्तिकं योगमुपागतं स्यात् ॥
न तस्य भर्त्तारमनर्थजात एकोऽपि कश्चित् समुपैति दोषः ॥ 69.44 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे मुक्ताफलप्रमाणादिवर्णनं नाम मुक्ताफलपरीक्षा नामैकोनसप्ततितमोऽध्यायः ॥ 69 ॥

॥सूत उवाच ॥

दिवाकरस्तस्य महामहिम्नो महासुरस्योत्तमरत्नबीजम् ॥
असृग्गृहीत्वा चरितुं प्रतस्थे निस्त्रिंशनीलेन नभः स्थलेन ॥ 70.1 ॥

जेत्रा सुराणां समरेष्वजस्रं वीर्य्यावलेपोद्धतमानसेन ॥
लङ्काधिपेनार्द्धपथे समेत्य स्वर्भानुनेव प्रसभं निरुद्धः ॥ 70.2 ॥

तत्सिंहलीचारुनितम्बबिम्बविक्षोभिताागाधमहाह्रदायाम् ॥
पूगद्रुमाबद्धतटद्वयायां मुमोच सूर्य्यः सरिदुत्तमायाम् ॥ 70.3 ॥

ततः प्रभृति सा गङ्गा तुल्यपुण्यफलोदया ॥
नाम्ना रावणगङ्गेति प्रथिमानमुपागता ॥ 70.4 ॥

ततः प्रभृत्येव च शर्वरीषु कूलानि रत्नैर्निचितानि तस्याः ॥
सुवर्णनाराचशतैरिवान्तर्बहिः प्रदीप्तैर्निशितानि भान्ति ॥ 70.5 ॥

तस्यास्तटेपूज्ज्वचारुरागा भवन्ति तोयेषु च पद्मरागाः ॥
सौगन्धिकोत्थाः कुरुविन्दजाश्च महागुणाः स्फाटिकसंप्रसूताः ॥ 70.6 ॥

बन्धू कगुंजासकलेन्द्रगोपजवासमासृक्समवर्णशोभाः ॥
भ्राजिष्णवो दाडिमबीजवर्णास्तथापरे किंशुकपुष्पभासः ॥ 70.7 ॥

सिन्दुरपद्मोत्पलकुंकुमानां लाक्षारसस्यापि समानवर्णः ॥
सांद्रेऽपि रागे प्रभया स्वयैव भान्ति स्वलक्ष्याः स्फुटमध्यशोभाः ॥ 70.8 ॥

भानोश्च भासामनुवेधयोगामासाद्य रशमि प्रकरेण दूरम् ॥
पार्श्वानि सर्वाण्यनुरञ्जयन्ति गुणापपन्नाः स्फटिकप्रसूताः ॥ 70.9 ॥

कुसुम्भनीलव्यतिमिश्ररागप्रत्युग्ररक्ताबुजतुल्यभासः ॥
तथापरेऽरुष्करकण्टकारिपुष्पत्विषो हिङ्गुलवत्त्विषोऽन्ये ॥ 70.10 ॥

चकोरपुंस्कोकिलसारसानां नेत्रावभासश्च भवन्ति केचित् ॥
अन्ये पुनः सन्ति च पुष्पितानां तुल्यत्विषा कोकनदोत्तमानाम् ॥ 70.11 ॥

प्रभावकाठिन्यगुरुत्वयोगैः प्रायः समानाः स्फटिकोद्भवानाम् ॥
आनीलरक्तोत्पलचारुभासः सौगन्धिकोत्था मणयो भवन्ति ॥ 70.12 ॥

कामं तु रागः कुरुविन्दजेषु स नैव यादृक् स्फटिकोद्भवेषु ॥
निरर्चिषोऽन्तर्बहुला भवन्ति प्रभाववन्तोऽपि नतैः समस्तैः ॥ 70.13 ॥

ये तु रावणगङ्गायां जायन्ते कुरुविन्दकाः ॥
पद्मरागघनं रागं बिभ्राणाः स्फटिकार्चिषः ॥ 70.14 ॥

वर्णानुयायिनस्तेषा मान्ध्रदेशे तथा परे ॥
न जायन्ते हि ये केचिन्मूल्यलेशमवाप्नुयुः ॥ 70.15 ॥

तथैव स्फाटिकोत्थानां देशे तुम्बुरुसंज्ञके ॥
सधर्माणः प्रजायन्ते स्वल्पमूल्या हि ते स्मृताः ॥ 70.16 ॥

वर्णाधिक्यं गुरुत्वं च स्निग्धता समताच्छता ॥
अर्चिष्मत्ता महत्ता च मणीनां गुणसंग्रहः ॥ 70.17 ॥

ये कर्करच्छिद्रमलोपदिग्धाः प्रभाविमुक्ताः परुषा विवर्णाः ॥
न ते प्रशस्ता मणयो भवन्ति समानतो जातिगुणैः समस्तैः ॥ 70.18 ॥

दोषोपसृष्टं मणिमप्रबोधाद्विभर्त्ति यः कश्चन कञ्चिदेव ॥
तं शोकचिन्तामयमृत्युवित्तनाशादयो दोषगणा भजंते ॥ 70.19 ॥

कामं चारुतराः पंच जातीना प्रतिरूपकाः ॥
विजा तयः प्रयत्नेन विद्वांस्तनुपलक्षयेत् ॥ 70.20 ॥

कलशपुरोद्भवसिंहलतुम्बुरुदेशोत्थमुक्तपाणीयाः ॥
श्रीपूर्णकाश्च सदृशा विजातयः पद्मरागाणाम् ॥ 70.21 ॥

तुषोपसर्गात्कलशाभिधानमाताम्रभावादपि तुम्बुरूत्थम् ॥
काष्ण्र्यात्तथा सिंहलदेशजातं मुक्ताभिधानं नभसः स्वभावात् ॥ 70.22 ॥

श्रीपूर्णकं दीप्तिविनाकृतत्वाद्विजातिलिङ्गाश्रय एव भेदः ॥
यस्ताम्रिकां पुष्यति पद्मरागो योगात्तुषाणामिव पूर्णमध्यः ॥ 70.23 ॥

स्नेहप्रदिग्धः प्रतिभाति यश्च यो वा प्रघृष्टः प्रजहाति दीप्तिम् ॥
आक्रान्तमूर्द्धा च तथाङ्गुलिभ्यां यः कालिकां पार्श्वगतां बिभर्त्ति ॥ 70.24 ॥

संप्राप्य चोत्क्षिप्य यथानुवृत्तिं विभर्तियः सर्वगुणानतीव ॥
तुल्यप्रमाणस्य च तुल्यजातेर्यो वा गुरुत्वेन भवेत्तु तुल्यः ॥
प्राप्यापि रत्नाकरजा स्वजातिं लक्षेद्गुरुत्वेन गुणेन विद्वान् ॥ 70.25 ॥

अप्रणश्यति सन्देहे शाणे तु परिलेखयेत् ॥
सु(स्व) जातकसमुत्थेन लिखित्वापि परस्परम् ॥ 70.26 ॥

वज्रं वा कुरुविन्दं वा विमुच्यानेन केनचित् ॥
नाशक्यं लेखनं कर्त्तुं पद्मरागेन्द्रनीलयोः ॥ 70.27 ॥

जात्यस्य सर्वेऽपि मणेर्न जातु विजातयः सन्ति समानवर्णाः ॥

तथापि नानाकरणार्थमेव भेदप्रकारः परमः प्रदिष्टः ॥ 70.28 ॥

गुणोपपन्नेन सहावबद्धोमेणिर्न धार्यो विगुणो हि जात्या ॥
न कौस्तुभेनापि सहावबद्धं विद्वान्विजातिं बिभृयात्कदाचित् ॥ 70.29 ॥

चाण्डाल एकोऽपि यथा द्विजातीन्समेत्य भूरीनपि हन्त्ययत्नात् ॥
अथो मणीन्भूरिगुणोपपन्नाञ्शक्नोति विप्लावयितुं विजात्यः ॥ 70.30 ॥

सपत्नमध्येऽपि कृताधिवासं प्रमादवृत्तावपि वर्त्तमानम् ॥
न पद्मरागस्य महागुणस्य भर्त्तारमापत्स्पृशतीह काचित् ॥ 70.31 ॥

दोषोपसर्गप्रभवाश्च ये ते नोपद्रवास्तं समभिद्रवन्ति ॥
गुणैः समुत्तेजितचारुरागं यः पद्मरागं प्रयतो बिभर्त्ति ॥ 70.32 ॥

वज्रस्य यत्तण्डुलसंख्ययोक्तं मूल्यं समुत्पादितगौरवस्य ॥
तत्पद्मरागस्य महागुणस्य तन्माषकल्पाकलितस्य मूल्यम् ॥ 70.33 ॥

वर्णदाप्त्यपपन्नं हि मणिरत्नं प्रशस्यते ॥
ताभ्यामीषदपि भ्रष्टं मणिमूल्यात्प्रहीयते ॥ 70.34 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पद्मरागपरीक्षणं नाम सप्ततितमोऽध्यायः ॥ 70 ॥

॥सूत उवाच ॥
दानवाधिपतेः पित्तमादाय भुजगाधिपः ॥
द्विधा कुर्वन्निव व्योम सत्वरं वासुकिर्ययौ ॥ 71.1 ॥

स तदा स्वशिरोरत्नप्रभादीप्ते नभोऽम्बुधौ ॥
राजतः स महानेकः खण्डसेतुरिवाबभौ ॥ 71.2 ॥

ततः पक्षनिपातेन संहरन्निव रोदसी ॥
गरुत्मान्पन्नगेन्द्रस्य प्रहर्तुमुपचक्रमे ॥ 71.3 ॥

सहसैव मुमोच तत्फणीन्द्रः सुरसाभ्यक्ततुरुष्क (रष्क) पादपायाम् ॥
कलिकाघनगन्धवासिता यां वरमाणिक्यगिरेरुपत्यकायाम् ॥ 71.4 ॥

तस्य प्रपातसमनन्तरकालमेव तद्वद्वरालयमतीत्य रमासमीपे ॥
स्थानं क्षितेरुपपयोनिधितीरलेखंयां वरमाणिक्यगिरेरुपत्यकायाम् ॥ 71.5 ॥

तत्रैव किञ्चित्पततस्तु पित्तादुपेत्य जग्राह ततो गरुत्मान् ॥
मूर्च्छापरीतः सहसैव घोणारन्ध्रद्वयेन प्रमुमोच सर्वम् ॥ 71.6 ॥

तत्राकठोरशुककण्ठशिरीषपुष्पखद्योतपृष्ठचरशाद्वलशैवलानाम् ॥
कल्हारशष्पकभुजङ्गभुजाञ्च पत्रप्राप्तत्विषो मरकताः शुभदा भवन्ति ॥ 71.7 ॥

तद्यत्र भोगीन्द्रभुजाभियुक्तं पपात पित्तं दितिजाधिपस्य ॥
तस्याकरस्यातितरां स देशो दुः खोपलभ्यश्च गुणैश्च युक्तः ॥ 71.8 ॥

तस्मिन्मरकतस्थाने यत्किञ्चिदुपजायते ॥
तत्सर्वं विषरोगाणां प्रशमाय प्रकीर्त्यते ॥ 71.9 ॥

सर्वमन्त्रौषधिगणैर्यन्न शक्यं चिकित्सितुम् ॥
महाहिदंष्ट्राप्रभवं विषं तत्तेन शाम्यति ॥ 71.10 ॥

अन्यदप्याकरे तत्र यद्दोषैरुपवर्जितम् ॥
जायते तत्पवित्राणामुत्तमं परिकीर्त्तितम् ॥ 71.11 ॥

अत्यन्तहरितवर्णं कोमलमर्चिर्विभेदजटिलं च ॥
काञ्चनचूर्णस्यान्तः पूर्णमिव लक्ष्यते यच्च ॥ 71.12 ॥

युक्तं संस्थानगुणैः समरागं गौरवेण न विहीनम् ॥
सवितुः करसंस्पर्शाच्छुरयति सर्वाश्रमं दीप्त्या ॥ 71.13 ॥

हित्वा च हरितभावं यस्यान्तर्विनिहिता भवेद्दीप्तिः ॥
अचिरप्रभाप्रभाहतनवशाद्वलसन्निभा भाति ॥ 71.14 ॥

यच्च मनसः प्रसादं विदधाति निरीक्ष्यमतिमात्रम् ॥
तन्मरकतं महागुणमिति रत्नविदां मनोवृत्तिः ॥ 71.15 ॥

वर्णस्याति विभुत्वाद्यस्यान्तः स्वच्छकिरणपरिधानम् ॥
सान्द्रस्निग्धविशुद्धं कोमलबर्हिप्रभादिसमकान्ति ॥ 71.16 ॥

वर्णोज्ज्वलया कान्त्या सान्द्राकारो विभासया भाति ॥
तदपि गुणवत्संज्ञामाप्नोति हि यादृशी पूर्वम् ॥ 71.17 ॥

शबलकठोरमलिनं रूक्षं पाषाणकर्करोपेतम् ॥
दिग्धं शिलाजतुना मरकतमेवंविधं विगुणम् ॥ 71.18 ॥

यत्सन्धिशोषितं रत्नमन्यन्मरकताद्भवेत् ॥
श्रेयस्कामैर्न तद्धार्य्यं क्रेतव्यं वा कथञ्चन ॥ 71.19 ॥

भल्लातकी पुत्रिका च तद्वर्णसमयोगतः ॥
मणेर्मरकतस्यैते लक्षणीया विजातयः ॥ 71.20 ॥

क्षौमेण वाससा मृष्टा दीप्तिं त्यजति पुत्रिका ॥
लाघवेनैव काचस्य शक्या कर्त्तुं विभावना ॥ 71.21 ॥

कस्यचिदनेकरूपैर्मरकतमनुगच्छतोऽपि गुणवर्णैः ॥
भल्लातकस्यस्वनात्तु वैषम्यमुपैति वर्णस्य ॥ 71.22 ॥

वज्राणि मुक्ताः सन्त्यन्ये ये च केचिद्विजातयः ॥
तेषां नाप्रतिबद्धानां भा भवत्यूर्द्ध्वगामिनी ॥ 71.23 ॥

ऋजुत्वाच्चैव केषाञ्चित्कथञ्चिदुपजायते ॥
तिर्य्यगालोच्यमानानां सद्यश्चैव प्रणश्यति ॥ 71.24 ॥

स्नानाचमनजप्येषु रक्षामन्त्रक्रियाविधौ ॥
ददद्भिर्गोहिरण्यानि कुर्वद्भिः साधनानि च ॥ 71.25 ॥

दैवपित्र्यातिथेयेषु गुरुसंपूजनेषु च ॥
बाध्यमानेषु विविधैर्दोषजातैर्विषोद्भवैः ॥ 71.26 ॥

दोषैर्हीनं गुणैर्युक्तं काञ्चनप्रतियोजितम् ॥
संग्रामे विचरद्भिश्च धार्य्यं मरकतं बुधैः ॥ 71.27 ॥

तुलया पद्मरागस्य यन्मूल्यमुपजायते ॥
लभतेऽभ्यधिकं तस्माद्गुणैर्मरकतं युतम् ॥ 71.28 ॥

तथा च पद्मरागाणां दोषैर्मूल्यं प्रहीयते ॥
ततोऽस्याप्यधिका हानिर्दोषैर्मरकते भवेत् ॥ 71.29 ॥

इति श्रीगारुडे महापुराणे पुर्वखण्डे प्रथमांशाख्ये आचारकाण्डे मरकतपरीक्षणं नामैकसप्ततितमोऽध्यायः ॥ 71 ॥

॥ सूत उवाच ॥
तत्रैव सिंहलवधूकरपल्लवाग्रव्यालूनबाललवलीकुसुमप्रवाले ॥
देशे पपात दितिजस्य नितान्तकान्तं प्रोत्फुल्लनीरजसमद्युति नेत्रयुग्मम् ॥ 72.1 ॥

तत्प्रत्ययादुभयशोभनवीचिभासा विस्तारिणी जलनिधेरुपकच्छभूमिः ॥
प्रोद्भिन्नकेतकवनप्रतिबद्धलेखासान्द्रेन्द्रनीलमणिरत्नवती विभाति ॥ 72.2 ॥

तत्रासिताब्जहलभृद्वसनासिभृंगशार्ङ्गायुधांगहरकण्ठकषायपुष्पैः ॥
शुष्केतरैश्च कुसुमैर्गिरिकर्णिकायास्तस्माद्भवन्ति मणयः सदृशावभासः ॥ 72.3 ॥

अन्ये प्रसन्नपयसः पयसां निधातुरम्बुत्विषः शिखिगणप्रतिमास्तथान्ये ॥
नीलीरसप्रभवबुद्वुदभाश्च केचित्केचित्तथा समदकोकिलकण्ठभासः ॥ 72.4 ॥

एकप्रकारा विस्पष्टवर्णशोभावभासिनः ॥
जायन्ते मणयस्तस्मिन्निन्द्रनीला महागुणाः ॥ 72.5 ॥

मृत्पाषाणशिलारन्ध्रकर्करात्रासंयुताः ॥
अभ्रिकापटलच्छायावर्णदोषैश्च दूषिताः ॥ 72.6 ॥

तत एव हि जायन्ते मणयस्तत्र सूरयः ॥
शास्त्रसम्बोधितधियस्तान्प्रशंसन्ति सूरयः ॥ 72.7 ॥

धार्य्यमाणस्य ये दृष्टा पद्मरागमणेर्गुणाः ॥
धारणादिन्द्रनीलस्य तानेवाप्नोति मानवः ॥ 72.8 ॥

यथा च पद्मरागाणां जातकत्रितयं भवेत् ॥
इन्द्र नीलेष्वपि तथा द्रष्टव्यमविशेषतः ॥ 72.9 ॥

परीक्षाप्रत्ययैर्यैश्च पद्मरागः परीक्ष्यते ॥
त एव प्रत्यया दृष्टा इन्द्रनीलमणेरपि ॥ 72.10 ॥

यावन्तं च क्रमेदग्निं पद्मरागोपयोगतः ॥
इन्द्रनीलमणिस्तस्मात्क्रमेत सुमहत्तरम् ॥ 72.11 ॥

तथापि न परीक्षार्थं गुणानामभि (ति) वृद्धये ॥
मणिरग्नौ समाधेयः कथञ्चिदपि कश्चन ॥ 72.12 ॥

अग्निमात्रापरिज्ञाने दाहदोषैश्च दूषितः ॥
सोऽनर्थाय भवेद्भर्त्तुः कर्त्तुः कारयितुस्तथा ॥ 72.13 ॥

काचोत्पलकरवीरस्फटिकाद्या इह बुधैः सवैदूर्य्याः ॥
कथिता विजातय इमे सदृशा मणिनेन्द्रनीलेन ॥ 72.14 ॥

गुरुभावकठिनभावावेतेषां नित्यमेव विज्ञेयौ ॥
काचाद्यथावदुत्तरविवर्द्धमानौ विशेषेण ॥ 72.15 ॥

इन्द्रनीलो यथा कश्चिद्विभर्त्त्याताम्रवर्णताम् ॥
रक्षणयौ तथा ताम्रौ करवीरोत्पलावुभौ ॥ 72.16 ॥

यस्य मध्यगता भाति नीलस्येन्द्रायुधप्रभा ॥
तमिन्द्रनीलमित्याहुर्महार्हं भुवि दुर्लभम् ॥ 72.17 ॥

यस्य वर्णस्य भूयस्त्वात्क्षीरे शतगुणे स्थितः ॥
नीलतां तन्नयेत्सर्वं महानीलः स उच्यते ॥ 72.18 ॥

यत्पद्मरागस्य महागुणस्य मूल्यं भवेन्माषसमुन्मितस्य ॥
तदिन्द्रनीलस्य महागुणस्य सुवर्ण संख्याकुलितस्य मूल्यम् ॥ 72.19 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे इन्द्रनीलपरीक्षणं नाम द्विसप्ततितमोऽध्यायः ॥ 72 ॥

॥सूत उवाच ॥
वैदूर्य्यपुष्परागाणां कर्केते भीष्मके वदे ॥
परीक्षां ब्रह्मणा प्रोक्तां व्यासेन कथितां द्विजा ॥ 73.1 ॥

कल्पान्तकालक्षुबिताम्बुराशेर्निर्ह्लादकल्पाद्दितिजस्य नादात् ॥
वैदूर्य्यमुत्पन्नमनेकवर्णं शोभाभिरामद्युतिवर्णबीजम् ॥ 73.2 ॥

अविदूरे विदूरस्य गिरेरुत्तुङ्गरोधसः ॥
कामभूतिकसीमानमनु तस्याकरो भवेत् ॥ 73.3 ॥

तस्य नादसमुत्थत्वादाकरः सुमहागुणः ॥
अभूदुत्तरीतो लोके लोकत्रयविभूषणः ॥ 73.4 ॥

तस्यैव दानवपतेर्निनदानुरूपाः प्रवृट्पयोदवरदर्शित चारुरूपाः ॥
वैदूर्य्यरत्नमणयो विविधावभासस्तस्मात्स्फुलिङ्गनिवहा इव संबभूवुः ॥ 73.5 ॥

पद्मरागमुपादाय मणिवर्णा हि ये क्षितौ ॥
सर्वांस्तान्वर्णशोभाभिर्वैदूर्य्यमनुगच्छति ॥ 73.6 ॥

तेषां प्रधानं शिखिकण्ठनीलं यद्वा भवेद्वेणुदलप्रकाशम् ॥
चाषाग्रपक्षप्रतिमश्रियो ये न ते प्रशस्ता मणिशास्त्रविद्भिः ॥ 73.7 ॥

गुणवान्वैदूर्य्यमणिर्योजयति स्वामिनं परंभा (भो) ग्यैः ॥
दोषैर्युक्तो दोषैस्तस्माद्यत्नात्परीक्षेत ॥ 73.8 ॥

गिरिकाचशिशुपालौ काच स्फटिकाश्च धूमनिर्भिन्नाः ॥
वैदूर्य्यमणेरेते विजातयः सन्निभाः सन्ति ॥ 73.9 ॥

लिख्याभावात्काचं लघुभावाच्छैसुपालकं विद्यात् ॥
गिरिकाचसदीप्तित्वात्स्फटिकं वर्णोज्ज्वलत्वेन ॥ 73.10 ॥

यदिन्द्रनीलस्य महागुणस्य सुवर्णसंख्याकलितस्य मूल्यम् ॥
तदेव वैदूर्य्यमणेः प्रदिष्टं पलद्वयोन्मापि तगौरवस्य ॥ 73.11 ॥

जात्यस्य सर्वेऽपि मणेस्तु यादृग्विजातयः सन्ति समानवर्णाः ॥
तथापि नानाकरणानुमेयभेदप्रकारः परमः प्रदिष्टः ॥ 73.12 ॥

सुखोपलक्ष्यश्च सदा विचार्य्यो ह्ययं प्रभेदो विदुषा नरेण ॥
स्नेहप्रभेदो लघुता मृदुत्वं विजातिलिङ्गं खलु सार्वजन्यम् ॥ 73.13 ॥

कुशलाकुशलैः प्रपूर्य्यमाणाः प्रतिबद्धाः प्रतिसत्क्रियाप्रयोगैः ॥
गुणदोषसमुद्भवं लभन्ते मणयोऽर्थोन्तरमूल्यमेव भिन्नाः ॥ 73.14 ॥

क्रमशः समतीतवर्तमानाः प्रतिबद्धा मणिबन्धकेन यत्नात् ॥
यदि नाम भवन्ति दोषहीना मणयः षड्गुणमाप्नुवन्ति मूल्यम् ॥ 73.15 ॥

आकरान्समतीतानामुदधेस्तीरसन्निधौ ॥
मूल्यमेतन्मणीनां तु न सर्वत्र महीतले ॥ 73.16 ॥

सुवर्णो मनुना यस्तु प्रोक्तः षोडशमाषकः ॥
तस्य सप्ततितमो भागः संज्ञारूपं करिष्यति ॥ 73.17 ॥

शाणश्चतुर्माषमानो माषकः पंचकृष्णलः ॥
पलस्य दशमो भागो धरणः परिकीर्त्तितः ॥ 73.18 ॥

इत्थं मणिविधिः प्रोक्तो रत्नानां मूल्यनिश्चये ॥ 73.19 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वैदूर्य्यपरीक्षणं नाम त्रिसप्ततितमोऽध्यायः ॥ 73 ॥

॥ सूत उवाच ॥

पतिताया हिमाद्रौ तु त्वचस्तस्य सुरद्विषः ॥
प्रादुर्भवन्ति ताभ्यस्तु पुष्प (ष्य) रागा महागुणाः ॥ 74.1 ॥

आपीतपाण्डुरुचिरः पाषाणः पद्मरागसंज्ञस्तु ॥
कौकण्टकनामा स्यात्स एव यदि लोहितापीतः ॥ 74.2 ॥

आलोहितस्तु पीतः स्वच्छः काषायकः स एकोक्तः ॥
आनीलशुक्लवर्णः स्निग्धः सोमाल(न) कः सगुणः ॥ 74.3 ॥

अत्यन्तलोहितो यः स एव खलु पद्मरागसंज्ञः स्यात् ॥
अपि चेन्द्रनीलसंज्ञः स एव कथितः सुनीलः सन् ॥ 74.4 ॥

मूल्यं वैदूर्य्यमणेरिव गदितं ह्यस्य रत्नसारविदा ॥
धारणफलं च तद्वत्किं तु स्त्रीणां सुतप्रदो भवति ॥ 74.5 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पुष्परागपरीक्षणं नाम चतुः सप्ततितमोऽध्यायः ॥ 74 ॥

॥सूत उवाच ॥

वायुर्नखान्दैत्यपतेर्गृहीत्वा चिक्षेप सत्पद्मवनेषु हृष्टः ॥
ततः प्रसूतं पवनोपपन्नं कर्केतनं पूजयतमं पृथिव्याम् ॥ 75.1 ॥

वर्णेन तद्रुधिरसोममधुप्रकाशमाताम्रपीतदहनोज्ज्वलितं विभाति ॥
नीलं पुनः खलु सितं परुषं विभिन्नं व्याध्यादिदोषकरणेन च तद्विभाति ॥ 75.2 ॥

स्निग्धा विशुद्धाः समरागिणश्च आपीतवर्णा गुरवो विचित्राः ॥
त्रासव्रणव्यालविवर्जिताश्च कर्केतनास्ते परमं पवित्राः ॥ 75.3 ॥

पात्रेण काञ्चनमयेन तु वेष्टयित्वा तप्तं यदा हुतवहे भवति प्रकाशम् ॥
रोगप्रणाशनकरं कलिनाशनं तदायुष्करं कुलकरं च सुखप्रदं च ॥ 75.4 ॥

एवंविधं बहुगुणं मणिमावहन्ति कर्केतनं शुभलङ्कृतये नरा ये ॥
ते पूजिता बहुधना बहुबान्धवाश्च नित्योज्ज्वलाः प्रमुदिता अपिते भवन्ति ॥ 75.5 ॥

एकेऽपनह्य विकृताकुलनीलभासः प्रम्लानरागलुलिताः कलुषा विरूपाः ॥
तेजोऽतिदीप्ति कुलपुष्टिविहीनवर्णाः कर्केतनस्य सदृशं वपुरुद्वहन्ति ॥ 75.6 ॥

कर्केतनं यदि परीक्षितवर्णरूपं प्रत्यग्रभास्वरदिवाकरसुप्रकाशम् ॥
तस्योत्तमस्य मणि शास्त्रविदां महिम्ना तुल्यं तु मूल्यमुदितं तुलितस्य कार्य्यम् ॥ 75.7 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे कर्केतनपरीक्षणं नाम पञ्चसप्ततितमोऽध्यायः ॥ 75 ॥

सूत उवाच ॥
हिमवत्युत्तरदेशे वीर्य्यं पतितं सुरद्विषस्तस्य ॥
संप्राप्तमुत्तमानामाकरतां भीष्मरत्नानाम् ॥ 76.1 ॥

शुक्लाः शङ्खाब्जनिभाः स्योनाकसन्निभाः प्रभावन्तः ॥
प्रभवन्ति ततस्तरुणा वज्रनिभा भीष्मपाषाणाः ॥ 76.2 ॥

हेमादिप्रतिबद्धाः शुद्धमपि श्रद्धया विधत्ते यः ॥
भीष्ममणिं ग्रीवादिषु सुसम्पदं स सर्वदा लभते ॥ 76.3 ॥

निरीक्ष्य पलायन्ते यं तमरण्यनिवासिनः समीपेऽपि ॥
द्वीपिवृकशरभकुञ्जरसिंहव्याघ्रादयो हिंस्राः ॥ 76.4 ॥

तसोयत्कलतष्टतरोर्भवति भयं न चास्तीशमुपहसन्ति ॥
भीष्ममणिर्गुणयुक्तो सम्यक्प्राप्ताङ्गुलीकलत्रत्वः ॥ 76.5 ॥

पितृतर्पणे पितृणां तृप्तिर्बहुवार्षिकी भवति ॥
शाम्यन्त्यद्भुतान्यपि सर्पाण्डजाखुवृश्चिकविषाणि ॥
सलिलाग्निवैरितस्करभयानि भीमानि नश्यन्ति ॥ 76.6 ॥

शैवलबलाहकाभं पुरुषं पीतप्रभं प्रभाहीनम् ॥
मलिनद्युति च विवर्णं दूरात्परिवर्जयेत्प्राज्ञः ॥ 76.7 ॥

मूल्यं प्रकल्प्यमेषां विबुधवरैर्देशकालविज्ञानात् ॥
दूरे भूतानां बहु किञ्चिन्निकटप्रसूतानाम् ॥ 76.8 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वैदूर्य्यपरीक्षणं नाम षट्सप्ततितमोऽध्यायः ॥ 76 ॥

॥सूत उवाच ॥

पुण्येषु पर्वतवरेषु च निम्नगासु स्थानान्तरेषु च तथोत्तरदेशगत्वात् ॥
संस्थापिताः स्वनखबाहुगतेः प्रकाशं संपूज्य दानवपतिं प्रथिते प्रदेशे ॥ 77.1 ॥

दाशार्णवागदर (व) मेकलकालगादौ गुञ्जाञ्जनक्षौद्रमृणालवर्णाः ॥
गन्धर्ववह्निकदलीसदृशावभासा एते प्रशस्ताः पुलकाः प्रसूताः ॥ 77.2 ॥

शङ्खाब्जभृङ्गार्कविचित्रभङ्गा सूत्रैरु (र्व्य) पेताः परमाः पवित्राः ॥
मङ्गल्ययुक्ता बहुभक्तिचित्रा वृद्धिप्रदास्ते पुलका भवन्ति ॥ 77.3 ॥

काका (क.) श्वरासभसृगालवृकोग्ररूपैर्गृध्रैः समांसरुधिरार्द्रमुखैरुपेताः ॥
मृत्युप्रदाश्च विदुषा परिवर्जनीया मूल्यं पलस्य कथितं च शतानि पञ्च ॥ 77.4 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पुलकपरीक्षणं नाम सप्तसप्ततितमोऽध्यायः ॥ 77 ॥

॥ सूत उवाच ॥
हुतभुग्रूपमादाय दानवस्य यथेप्सितम् ॥
नर्मदायां निचिक्षेप किञ्चिद्धीनादिभूमिषु ॥ 78.1 ॥

तत्रेन्द्रगोपकलितं शुकवक्रवर्णं संस्थानतः प्रकटपीनसमानमात्रम् ॥
नानाप्रकारविहितं रुधिराक्ष(ख्य) रत्नमुद्धृत्य तस्य खलु सर्वसमानमेव ॥ 78.2 ॥

मध्येन्दुपाण्डुरमतीव विशुद्धवर्णं तच्चेन्द्रनीलसदृशं पटलं तुले स्यात् ॥
सैश्वर्य्यभृत्यजननं कथितं तदैव पक्वञ्च तत्किल भवेत्सुरवज्रवर्णम् ॥ 78.3 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे रुधिराक्षरत्नपरीक्षणं नामाष्टसप्ततितमोऽध्यायः ॥ 78 ॥

॥ सूत उवाच ॥
कावेरविन्ध्ययवनचीननेपालभूमिषु ॥
लाङ्गली व्यकिरन्मेदो दानवस्य प्रयत्नतः ॥ 79.1 ॥

आकाशशुद्धं तैलाख्यमुत्पन्नं स्फटिकं ततः ॥
मृणालशङ्खधवलं किञ्चिद्वर्णान्तरन्वितम् ॥ 79.2 ॥

न त्तुल्यं हि रत्नानामथवा पापनाशनम् ॥
संस्कृतं शिल्पिना सद्यो मूल्यं किञ्चिल्लभेत्ततः (दा) ॥ 79.3 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे स्फटिकपरीक्षणं नामैकोनाशीतितमोऽध्यायः ॥ 79 ॥

॥ सूत उवाच ॥
आदाय शेषस्तस्यान्त्रं बलस्य केलादिषु ॥
चिक्षेप तत्र जायन्ते विद्रुमाः सुभहागुणाः ॥ 80.1 ॥

तत्र प्रधानं शशलोहिताभं गुञ्जाजवापुष्पनिभं प्रदिष्टम् ॥
सुनीलकं देवकरोमकञ्च स्थानानि तेषु प्रभवं सुरागम् ॥ 80.2 ॥

अन्यत्र जातं च न तत्प्रधानं मूल्यं भवेच्छिल्पिविशेषयोगात् ॥
प्रसन्नं कोमलं स्निग्धं सुरागं विद्रुमं हि तत् ॥ 80.3 ॥

धनधान्यकरं लोके विषार्त्तिभयनाशनम् ॥
परीक्षा पुलकस्योक्ता रुधिराक्षस्य वै मणेः ॥
स्फटिकस्य विद्रुमस्य रत्नज्ञानाय शौनक ! ॥ 80.4 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विद्रुमपरीक्षणं नामाशीतितमोऽध्यायः ॥ 80 ॥

॥ (अथ तीर्थक्षेत्रमाहात्म्यमारभ्यते ) ॥

॥ सूत उवाच ॥

सर्वतीर्थानि वक्ष्यामि गङ्गा तीर्थोत्तमोत्तमा ॥
सर्वत्र सुलभा गङ्गात्रिषु स्थानेषु दुर्लभा ॥ 81.1 ॥

गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥
प्रयागं परमं तीर्थं मृतानां भुक्तिमुक्तिदम् ॥ 81.2 ॥

सेवनात्कृतपिण्डानां पापजित्कामदं नृणाम् ॥
वाराणसी परं तीर्थं विश्वेशो यत्र केशवः ॥ 81.3 ॥

कुरुक्षेत्रं परं तीर्थं दानाद्यैर्भुक्तिमुक्तिदम् ॥
प्रभासं परं तीर्थं सोमनाथो हि तत्र च ॥ 81.4 ॥

द्वारका च पुरी रम्या भुक्तिमुक्तिप्रदायिका ॥
प्राची सरस्वती पुण्या सप्तसारस्वतं परम् ॥ 81.5 ॥

केदारं सर्वपापघ्नं स (श) म्भलग्राम उत्तमः ॥
नरनारायणं तीर्थं मुक्त्यै वदरिकाश्रमः ॥ 81.6 ॥

श्वेतद्वीपं पुरी माया नैमिषं पुष्करं परम् ॥
अयोध्यां चार्घ्यतीर्थं तु चित्रकूटं च गोमती ॥ 81.7 ॥

वैनायकं महीतीर्थं रामगिर्य्याश्रमं परम् ॥
काञ्चीपुरी तुङ्गभद्रा श्रीशैलं सेतुबन्धनम् ॥ 81.8 ॥

रामेश्वरं परं तीर्थं कार्त्तिकेयं तथोत्तमम् ॥
भृगुतुङ्गं कामतीर्थं तीर्थं चामरकंटकम् ॥ 81.9 ॥

उज्जयिन्यां महाकालः कुब्जके श्रीधरो हरिः ॥
कुब्जाम्रकं महातीर्थं कालसर्पिश्च कामदम् ॥ 81.10 ॥

महाकेशी च कावेरी चन्द्रभागा विपाशया ॥
एकाम्रं च तथा तीर्थं ब्रह्मेशं देवकोटकम् ॥ 81.11 ॥

मथुरा च पुरी रम्या शोणश्चैव महानदः ॥
जम्बूसरो महातीर्थं तानि तीर्थानि विद्धि च ॥ 81.12 ॥

सूर्य्यः शिवो गणो देवी हरिर्यत्र च तिष्ठति ॥
एतेषु च यथान्येषु स्नानं दानं जपस्तपः ॥ 81.13 ॥

पूजा श्राद्धं पिण्डदानं सर्वं भवति चाक्षयम् ॥

शालग्रामं सर्वदं स्यात्तीर्थं पशुपतेः परम् ॥ 81.14 ॥

कोकामुखं च वाराहं भा (भु) ण्डीरं स्वामिसंज्ञकम् ॥
लो (मो) हदण्डे महाविष्णुर्मन्दारे मधुसूदनः ॥ 81.15 ॥

कामरूपं महातीर्थं कामाख्या (क्षा) यत्र तिष्ठति ॥
पुण्ड्रवर्द्धनकं तीर्थं कार्त्तिकेयश्च यत्र च ॥ 81.16 ॥

विरजस्तु महातीर्थं तीर्थं श्रीपुरुषोत्तमम् ॥
महेन्द्रपर्वतस्तीर्थं कावेरी च नदी परा ॥ 81.17 ॥

गोदावरी महातीर्थं पयोष्णी वरदा नदी ॥
विन्ध्यः पापहरं तीर्थं नर्मदाभेद उत्तमः ॥ 81.18 ॥

गोकर्णं परमं तीर्थं तीर्थं माहिष्मती पुरी ॥
कालञ्जरं महीतीर्थं शुक्लतीर्थमनुत्तमम् ॥ 81.19 ॥

कृते शौचे मुक्तिदं च शार्ङ्गधारी तदन्तिके ॥
विरजं सर्वदं तीर्थं स्वर्णाक्षं तीर्थमुत्तमम् ॥ 81.20 ॥

नन्दितीर्थं मुक्तिदं च कोटितीर्थफलप्रदम् ॥
नासिक्यं च महातीर्थं गोवर्द्धनमतः परम् ॥ 81.21 ॥

कृष्णवेणीं भीमरथीं गण्डकीं या त्विरावती ॥
तीर्थं बिन्दुसरः पुण्यं विष्णुपादोदकं परम् ॥ 81.22 ॥

ब्रह्मध्यानं परं तीर्थं तीर्थमिन्द्रियनिग्रहः ॥
दमस्तीर्थं तु परमं भवशुद्धिः परं तथा ॥ 81.23 ॥

ज्ञानह्रदे ध्यानजले रागद्वेषमलापहे ॥
यः स्नाति मानसे तीर्थे स याति परमां गतिम् ॥ 81.24 ॥

इदं तीर्थमिदं नेति ये नरा भेददर्शिनः ॥
तेषां विधीयते तीर्थगमनं तत्फलं च यत् ॥ 81.25 ॥

सर्वं ब्रह्मेतियोऽवेति नातीर्थं तस्य किञ्चन ॥
एतेषु स्नानदानानि श्राद्धं पिण्डमथाक्षयम् ॥ 81.26 ॥

सर्वा नद्यः सर्वशैलाः तीर्थं देवादिसेवितम् ॥
श्रीरङ्गं च हरेस्तीर्थं तापी श्रेष्ठा महानदी ॥ 81.27 ॥

सप्तगोदावरं तीर्थं तीर्थं कोणगिरिः परम् ॥

महालक्ष्मीर्यत्र देवी प्रणीता परमा नदी ॥ 81.28 ॥

सह्याद्रौ देवदेवेश एकवीरः सुरेश्वरी ॥
गङ्गाद्वारे कुशावर्त्ते विन्ध्यके नीलपर्वते ॥ 81.29 ॥

स्नात्वा कनखले तीर्थे स भवेन्न पुनर्भवे ॥
॥सूत उवाच ॥
एतान्यन्यानि तीर्थानि स्नानाद्यैः सर्वदानि हि ॥ 81.30 ॥

श्रुत्वाऽब्रवीद्धरेर्ब्रह्मा व्यासं दक्षादिसंयुतम् ॥
एतान्युक्त्वा च तीर्थानि पुनस्तीर्थोत्तमोत्तमम् ॥

गयाख्यं प्राह सर्वेषामक्षयं ब्रह्मलोकदम् ॥ 81.31 ॥
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सर्वतीर्थ माहात्म्यं नामैकाशीतितमोऽध्यायः ॥ 81 ॥

॥श्रीगणेशाय नमः ॥
(अथ गयामाहात्म्यं प्रारभ्यते) ॥
ब्रह्मोवाच ॥
सारात्सारतरं व्यास गयामाहात्म्यमुत्तमम् ॥
प्रवक्ष्यामि समासेन भुक्तिमुक्तिप्रदं श्रृणु ॥ 82.1 ॥

गयासुरोऽभवत्पूर्वं वीर्य्यवान्परमः स च ॥
तपस्तप्यन्महाघोरं सर्वभूतोपतापनम् ॥ 82.2 ॥

तत्तपस्तापिता देवास्तद्वधार्थं हरिं गताः ॥
शरणं हरिरूचे तान् भवितव्यं शिवात्मभइः ॥ 82.3 ॥

पात्यतेऽस्य महादेहो तथेत्यूचुः सुरा हरिम् ॥
कदाचिच्छिवपूजार्थं क्षीराब्धेः कमलानि च ॥ 82.4 ॥

आनीय कीकटे देशे शयनं चाकरोद्वली ॥
विष्णुमायाविमूढोऽसौ गदया विष्णुना हतः ॥ 82.5 ॥

अतो गदाधरो विष्णुर्गयायां मुक्तिदः स्थितः ॥
तस्य देहो लिङ्गरूपी स्थितः शुद्धे पितामहः ॥ 82.6 ॥

जनार्द्दनश्च कालेशस्तथान्यः प्रपितामहः ॥
विष्णुराहाथ मर्य्यादां पुण्यक्षेत्रं भविष्यति ॥ 82.7 ॥

यज्ञं श्राद्धं पिण्डदानं स्नानादि कुरुते नरः ॥
स स्वर्गं ब्रह्मलोकं च गच्छेन्न नरकं नरः ॥ 82.8 ॥

गयातीर्थं परं ज्ञात्वा यागं चक्रे पितामहः ॥
ब्राह्मणान्पूजयामास ऋत्विगर्थमुपागतान् ॥ 82.9 ॥

महानदीं रसवहां सृष्ट्वा वाप्यादिकं तथा ॥
भक्ष्यभोज्यफलादींश्च कामधेनुं तथासृजत् ॥ 82.10 ॥

पञ्चक्रोशं गया क्षेत्रं ब्राह्मणेभ्यो ददौ प्रभुः ॥
धर्मयागेषु लोभात्तु प्रतिगृह्य धनादिकम् ॥ 82.11 ॥

स्थिता विप्रास्तदा शप्ता गयायां ब्राह्मणास्ततः ॥
मा भूत्त्रैपुरुषी विद्या मा भूत्त्रैपुरुषं धनम् ॥ 82.12 ॥

युष्माकं स्याद्वारिवहा नदी पाषाणपर्वतः ॥
शप्तैस्तु प्रार्थितो ब्रह्मानुग्रहं कृतवान्प्रभुः ॥ 82.13 ॥

लोकाः पुण्या गयायां हि श्राद्धिनो ब्रह्मलोकगाः ॥
युष्मान्ये पूजयिष्यन्ति तैरहं पूजितः सदा ॥ 82.14 ॥

ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा ॥
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ॥ 82.15 ॥

समुद्राः सरितः सर्वा वापीकूपह्रदास्तथा ॥
स्नातुकामा गयातीर्थं व्यास यान्ति न संशयः ॥ 82.16 ॥

ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ॥
पापं तत्सङ्गजं सर्वं गयाश्राद्धाद्विनश्यति ॥ 82.17 ॥

असंस्कृता मृता य च पशुचोरहताश्च ये ॥
सर्पदष्टा गयाश्राद्धान्मुक्ताः स्वर्गं व्रजन्ति ते ॥ 82.18 ॥

गयायां पिण्डदानेन यत्फलं लभते नरः ॥
न तच्छक्यं मया वक्तुं वर्षकोटिशतैरपि ॥ 82.19 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गयामाहात्म्यं नाम द्व्यशीतितमोऽध्यायः ॥ 82 ॥

॥ब्रह्मोवाच ॥
कीकटेषु गया पुण्या पुण्यं राजगृहं वनम् ॥
विषयश्चारणः पुण्यो नदीनां च पुनः पुना ॥ 83.1 ॥

मुण्डपृष्ठं तु पूर्वस्मिन्पश्चिमे दक्षिणोत्तरे ॥
सार्द्धक्रोशद्वयं मानं गयायां परिकीर्त्तितम् ॥ 83.2 ॥

पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ॥
तत्र पिण्डप्रदानेन तृप्तिर्भवति शाश्वती ॥ 83.3 ॥

नगाज्जनार्दनाच्चैव कूपाच्चोत्तरमानसात् ॥
एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ॥ 83.4 ॥

तत्र पिण्डप्रदानेन पितॄणा परमा गतिः ॥
गयागमनमात्रेण पितॄणामनृणो भवेत् ॥ 83.5 ॥

गयायां पितृरूपेण देवदेवो जनार्द्दनः ॥
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते वै ऋणत्रयात् ॥ 83.6 ॥

रथमार्गं गयतीर्थे दृष्ट्वा रुद्रपदादिके ॥
कालेश्वरं च केदारं पितॄणामनृणो भवेत् ॥ 83.7 ॥

दृष्ट्वा पितामहं देवं सर्वपापैः प्रमुच्यते ॥
लोकं त्वनामयं याति दृष्ट्वा च प्रपितामहम् ॥ 83.8 ॥

तथा गदाधरं देवं माधवं पुरुषोत्तमम् ॥
तं प्रणम्य प्रयत्नेन न भूयो जायते नरः ॥ 83.9 ॥

मौनादित्यं महात्मानं कनकार्कं विशेषतः ॥
दृष्ट्वा मौनेन विप्रर्षे पितॄणामनृणो भवेत् ॥ 83.10 ॥

ब्रह्माणं पूजयित्वा च ब्रह्मलोकमवाप्नुयात् ॥
गायत्रीं प्रतरुत्थाय यस्तु पश्यति मानवः ॥ 83.11 ॥

सन्ध्यां कृत्वा प्रयत्नेन सर्ववेदफलं लभेत् ॥
सावित्रीं चैव मध्याह्ने दृष्ट्वा यज्ञफलं लभेत् ॥ 83.12 ॥

सरस्वतीं च सायाह्ने दृष्ट्वा दानफलं लभेत् ॥
नगस्थमीश्वरं दृष्ट्वा पितॄणामनृणो भवेत् ॥ 83.13 ॥

धर्मारण्यं धर्ममीशं दृष्ट्वा स्यादृणनाशनम् ॥
देवं गृध्रेश्वरं दृष्ट्वा को न मुच्येत बन्धनात् ॥ 83.14 ॥

धेनुं दृष्ट्वा धेनुवने ब्रह्मलोकं नयेत्पितॄन् ॥
प्रभासेशं प्रभासे च दृष्ट्वा याति परां गतिम् ॥ 83.15 ॥

कोटीश्वरं चाश्वमेधं दृष्ट्वा स्यादृणनाशनम् ॥
स्वर्गद्वारेश्वरं दृष्ट्वा मुच्यते भवबन्धनात् ॥ 83.16 ॥

रामेश्वरं गदालोलं दृष्ट्वा स्वर्गमवाप्नुयात् ॥
ब्रह्मेश्वरं तथा दृष्ट्वा मुच्यते ब्रह्महत्यया ॥ 83.17 ॥

मुण्डपृष्ठे महाचण्डीं दृष्ट्वा कामानवाप्नुयात् ॥
फल्ग्वीशं फल्गुचण्डीं च गौरीं दृष्ट्वा च मङ्गलाम् ॥ 83.18 ॥

गोमकं गोपतिं देवं पितॄणामनृणो भवेत् ॥
अङ्गारेशं च सिद्धेशं गयादित्यं गजं तथा ॥ 83.19 ॥

मार्कण्डेयेश्वरं दृष्ट्वा पितॄणामनृणो भवेत् ॥
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ॥ 83.20 ॥

एतेन किं न पर्य्याप्तं नृणां सुकृतकारिणाम् ॥
ब्रह्मलोकं प्रयान्तीह पुरुषा एकविंशतिः ॥ 83.21 ॥

पृथिव्यां यानि तीर्थानि ये समुद्राः सरांसि च ॥
फल्गुतीर्थं गमिष्यन्ति वारमेकं दिने दिने ॥ 83.22 ॥

पृथिव्यां च गया पुण्या गयायां च गयाशिरः ॥
श्रेष्ठं तथा फल्गुतीर्थं तन्मुखं च सुरस्य हि ॥ 83.23 ॥

उदीचि कनकानद्यो नाभितीर्थं तु मध्यतः ॥
पुण्यं ब्रह्मसदस्तीर्थं स्नानात्स्याद्ब्रह्मलोकदम् ॥ 83.24 ॥

कूपे पिण्डादिकं कृत्वा पितॄणामनृणो भवेत् ॥
तथाक्षयवटे श्राद्धी ब्रह्मलोकं नयेत्पितॄन् ॥ 83.25 ॥

हंसतीर्थे नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥
कोटितीथ गयालोके वैतरण्यां च गोमके ॥ 83.26 ॥

ब्रह्मलोकं नयेच्छ्राद्धी पुरुषानेकविंशतिम् ॥
ब्रह्मतीर्थे रामतीर्थे आग्नेये सोमतीर्थके ॥ 83.27 ॥

श्राद्धी रामह्रदे ब्रह्मलोकं पितृकुलं नयेत् ॥
उत्तरे मानसे श्राद्धी न भूयो जायते नरः ॥ 83.28 ॥

दक्षिणे मानसे श्राद्धी ब्रह्मलोकं पितॄन्नयेत् ॥
स्वगद्वारे नरः श्राद्धी ब्रह्मलोकं नयेत्पितॄन् ॥
भीष्मतर्पणकृत्तस्य कूटे तारयते पितॄन् ॥
गृध्रेश्वरे तथा श्राद्धी पितॄणामनृणो भवेत् ॥ 83.29 ॥

श्राद्धी च धेनुकारण्ये ब्रह्मलोकं पितॄन्नयेत् ॥
तिलधेनुप्रदः स्नात्वा दृष्ट्वा धेनुं न संशयः ॥ 83.30 ॥

ऐन्द्रे वा नरतीर्थे च वासवे वैष्णवे तथा ॥
महानद्यां कृतश्राद्धो ब्रह्मलोकं नयेत्पितॄन् ॥ 83.31 ॥

गायत्त्रे चैव सावित्रे तीर्थे सारस्वते तथा ॥
स्नानसन्ध्यातर्पणकृच्छ्राद्धी चैकोत्तरं शतम् ॥ 83.32 ॥

पितॄणां तु कुलं ब्रह्मलोकं नयति मानवः ॥
ब्रह्मयोनिं विनिर्गच्छेत्प्रयतः पितृमानसः ॥ 83.33 ॥

तर्पयित्वा पितॄन्देवान्न विशेद्योनिसङ्कटे ॥
तर्पणे काकजङ्घार्या पितॄणां तृप्तिरक्षया ॥ 83.34 ॥

धर्मारण्ये मतङ्गस्य वाप्यां श्राद्धाद्दिवं व्रजेत् ॥
धर्मयूपे च कूपे त पितॄणामनृणो भवेत् ॥ 83.35 ॥

प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ॥
मयागत्य मतङ्गेऽस्मिन्पितॄणां निष्कृतिः कृता ॥ 83.36 ॥

रामतीर्थे नराः स्नात्वा श्राद्धं कृत्वा प्रभासके ॥
शिलायां प्रेतभावात्स्युर्मुक्ताः पितृगणाः किल ॥ 83.37 ॥

श्राद्धकृच्छ्र स्वपुष्टायां त्रिः सफ्तकुंलमुद्धरेत् ॥
श्राद्धकृन्मुण्डपृष्ठादौ ब्रह्मलोकं नयेत्पितॄन् ॥ 83.38 ॥

गयायां न हि तत्स्थानं यत्र तीर्थं न विद्यते ॥
पञ्चक्रोशे गयाक्षेत्रे यत्र तत्र तु पिण्डदः ॥ 83.39 ॥

अक्षयं फलमाप्नोति ब्रह्मलोकं नयेत्पितॄन् ॥
जनार्दनस्य हस्ते तु पिण्डं दद्यात्स्वकं नरः ॥ 83.40 ॥

एष पिण्डे मया दत्तस्तव हस्ते जनार्दन ! ॥
परलोकं गते मोक्षमक्षय्यमुपतिष्ठताम् ॥ 83.41 ॥

ब्रह्मलोकमवाप्नोति पितृभिः सह निश्चितम् ॥

गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ॥ 83.42 ॥

गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम् ॥
धर्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव च ॥ 83.43 ॥

दृष्ट्वैतानि पितॄंश्चार्यवंश्यान्विंशतिमुद्धरेत् ॥
ब्रह्मारण्यं महानद्याः पश्चिमोभाग उच्यते ॥ 83.44 ॥

पूर्वो ब्रह्मसदो भागो नागाद्रिर्भरताश्रमः ॥
भरतस्याश्रमे श्राद्धी मतङ्गस्य पदे भवेत् ॥ 83.45 ॥

गयाशीर्षाद्दक्षिणतो महानद्याश्च पश्चिमे ॥
तत्स्मृतं चम्पकवनं तत्र पाण्डुशिलास्ति हि ॥ 83.46 ॥

श्राद्धी तत्र तृतीयायां निश्चिरायाश्च मण्डले ॥
महाह्रदे च कौशिक्यामक्षयं फलमाप्नुयात् ॥ 83.47 ॥

वैतरण्या श्चोत्तरतस्तृतीयाख्यो जलाशयः ॥
पदानि तत्र क्रौञ्चस्य श्राद्धी स्वर्गं नयेत्पितॄन् ॥ 83.48 ॥

क्रौञ्चपादादुत्तरतो निश्चिराख्यो जलाशयः ॥
सकृद्यत्राभिगमनं सकृत्पिंण्डप्रपातनम् ॥ 83.49 ॥

दुर्लभं किं पुनर्नित्यमस्मिन्नेव व्यवस्थितः ॥
महानद्यामुपस्पृश्य तर्पयेत्पितृदेवताः ॥ 83.50 ॥

अक्षयान्प्राप्नुयाल्लोकान्कुलं चापि समुद्धरेत् ॥
सावित्रे पठ्यते सन्ध्या कृता स्याद्द्वादशाब्दिकी ॥ 83.51 ॥

शुक्लकृष्णावुभौ पक्षौ गयायां यो वसेन्नरः पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः ॥ 83.52 ॥

गयायां मुण्डपृष्ठं च अरविन्दं च पर्वतम् ॥
तृतीयं क्रौंचपादं च दृष्ट्वा पापैः प्रमुच्यते ॥ 83.53 ॥

मकरे वर्त्तमाने च ग्रहणे चन्द्रसूर्य्ययोः ॥
दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ॥ 83.54 ॥

महाह्रदे च कौशिक्यां मूलक्षेत्रे विशेषतः ॥
गुहायां गृध्रकूटस्य श्राद्धं दत्तं (सप्त) महाफलम् ॥ 83.55 ॥

यत्र माहेश्वरी धारा श्राद्धी तत्रानृणो भवेत् ॥
पुण्यां विशालामासाद्य नदीं त्रैलोक्य विश्रुताम् ॥ 83.56 ॥

अग्निष्टोममवाप्नोति श्राद्धी प्रायाद्दिवं नरः ॥
श्राद्धी मासपदे स्नात्वा वाजपेयफलं लभेत् ॥ 83.57 ॥

रविपादे पिण्डदानात्पतितोद्धारणं भवेत् ॥
गयास्थो यो ददात्यन्नं पितरस्तेन पुत्रिणः ॥ 83.58 ॥

कांक्षन्ते पितरः पुत्रान्नरकाद्भयभीरवः ॥
गयां यास्यति यः कश्चित्सोऽस्मान्सन्तरयिष्यति ॥ 83.59 ॥

गयाप्राप्तं सुतं दृष्ट्वा पितृणामुत्सवो भवेत् ॥
पद्भ्यामपि जलं स्पृष्ट्वा अस्मभ्यं किल दास्यति ॥ 83.60 ॥

आत्मजो वा तथान्यो वा गयाकूपे यदा तदा ॥
यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ॥ 83.61 ॥

पुण्डरीकं विष्णुलोकं प्राप्नुयात्कोटितीर्थगः ॥
या सा वैतरणी नाम त्रिषु लोकेषु विश्रुता ॥ 83.62 ॥

सावतीर्णा गयाक्षेत्रे पितृणां तारणाय हि ॥
श्राद्धदः पिण्डदस्तत्र गोप्रदानं करोति यः ॥ 83.63 ॥

एकविंशतिवंश्यान्स तारयेन्नात्र संशयः ॥
यदि पुत्रो गयां गच्छेत्कदाचित्कालपर्यये ॥ 83.64 ॥

तानेव भोजयेद्विप्रान्ब्रह्मणा ये प्रकल्पिताः ॥
तेषां ब्रह्मसदः स्थानं सोमपानं तथैव च ॥ 83.65 ॥

ब्रह्मप्रकल्पितं स्थानं विप्रा ब्रह्मप्रकल्पपिताः ॥
पूजितैः पूजिताः सर्वे पितृभिः सह देवताः ॥ 83.66 ॥

तर्पयेत्तु गयाविप्रान्हव्यकव्यैर्विधानतः ॥
स्थानं देहपरित्यागे गयायां तु विधीयते ॥ 83.67 ॥

यः करोति वृषोत्सर्गं गयाक्षेत्रे ह्यनुत्तमे ॥
अग्निष्टोमशतं पुण्यं लभते नात्र संशयः ॥ 83.68 ॥

आत्मनोऽपि महाबुद्धिर्गयायां तु तिलैर्विना ॥
पिण्डनिर्वापणं कुर्य्यादन्येषामपि मानवः ॥ 83.69 ॥

यावन्तो ज्ञातयः पित्र्या बान्धवाः सुहृदस्तथा ॥
तेभ्यो व्यासगयाभूमौ पिण्डो देयो विधानतः ॥ 83.70 ॥

रामतीर्थे नरः स्नात्वा गोशतस्याप्नुयात्फलम् ॥
मतङ्गवाप्यां स्नात्वा च गोसहस्त्रफलं लभेत् ॥ 83.71 ॥

निश्चिरासङ्गमे स्नात्वा ब्रह्मलोकं नयेत्पितॄन् ॥
वसिष्ठस्याश्रमे स्नात्वा वाजपेयं च विन्दति ॥ 83.72 ॥

महाकौश्यां समावासादश्वमेधफलं लभेत् ॥
पितामहस्य सरसः प्रसृता लोकपावनी ॥ 83.73 ॥

समीपे त्वग्निधारेति विश्रुता कपिला हि सा ॥
अग्निष्टोमफलं श्राद्धी स्नात्वात्र कृतकृत्यता ॥ 83.74 ॥

श्राद्धी कुमारधारायामश्वमेधफलं लभेत् ॥
कुमारमभिगम्याथ नत्वा मुक्तिमवाप्नुयात् ॥ 83.75 ॥

सोमकुण्डे नरः स्नात्वा सोमलोकं च गच्छति ॥
संवर्त्तस्य नरो वाप्यां सुभगः स्यात्तु पिण्डदः ॥ 83.76 ॥

धौतपापो नरो याति प्रेतकुण्डे च पिण्डदः ॥
देवनद्यां लेलिहाने मथने जानुगर्त्तके ॥ 83.77 ॥

एवमादिषु तीर्थेषु पिण्डदस्तारयेत्पितॄन् ॥
नत्वा देवान्वसिष्ठेशप्रभृतीनृणसंक्षयम् ॥ 83.78 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गयामाहात्म्यं नाम त्र्यशीतितमोऽध्यायः ॥ 83 ॥

॥ब्रह्मोवाच ॥
उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ॥
विधाय कापटं विषं ग्रामस्यापि प्रदक्षिणम् ॥ 84.1 ॥

ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ॥
कृत्वा प्रदक्षिणं गच्छेत्प्रतिग्रहविवर्जितः ॥ 84.2 ॥

गृहाच्चलितमात्रस्य गयायां गमनं प्रति ॥
स्वर्गारोहणसोपानं पितॄणां तु पदे पदे ॥ 84.3 ॥

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ॥
वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥ 84.4 ॥

दिवा च सर्वदा रात्रौ गयायां श्राद्धकृद्भवेत् ॥
वाराणस्यां कृतं श्राद्धं तीर्थे शोणनदे तथा ॥ 84.5 ॥

पुनः पुनामहानद्यां श्राद्धी स्वर्गं पितॄन्नयेत् ॥
उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥ 84.6 ॥

तस्मिन्निवर्त्तयेच्छ्राद्धं स्नानं चैव निवर्त्तयेत् ॥
कामान्स लभते दिव्यान्मोक्षोपायं च सर्वशः ॥ 84.7 ॥

दक्षिणं मानसं गत्वा मौनी पिण्डादि कारयेत् ॥
ऋणत्रयापाकरणं लभेद्दक्षिणमानसे ॥ 84.8 ॥

सिद्धानां प्रीतिजननैः पापानां च भयङ्करैः ॥
लेलिहानैर्महाघोरैरक्षतैः पन्नगोत्तमैः ॥ 84.9 ॥

नाम्ना कनखलं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥
उदीच्यां मुण्डपृष्ठस्य देवर्षिगणसेवितम् ॥ 84.10 ॥

तत्र स्नात्वा दिवं याति श्राद्धं दत्तमथाक्षयम् ॥
सूर्य्यं नत्वा त्विदं कुर्य्यात्कृतपिण्डादिसत्क्रियः ॥ 84.11 ॥

कव्यवाहस्तथा सोमो यमश्चैवार्य्यमा तथा ॥
अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥ 84.12 ॥

आगच्छन्तु महाभागा युषमाभी रक्षितास्त्विह ॥
मदीयाः पितरो ये च कुले जाताः सनाभयः ॥ 84.13 ॥

तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम् ॥
कृतपिण्डः फल्गुतीर्थे पश्यैद्देवं पितामहम् ॥ 84.14 ॥

गदाधरं ततः पश्येत्पितृणामनृणामनृणो भवेत् ॥
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ॥ 84.15 ॥

आत्मानं तारयेत्सद्यो दश पूर्वान्दशापरान् ॥
प्रथमेह्निविधिः प्रोक्तो द्वितीयदिवसे व्रजेत् ॥ 84.16 ॥

धर्मारण्यं मतङ्गस्य वाप्यां पिण्डादिकृद्भवेत् ॥
धर्मारण्यं समासाद्य वाजपेयफलं लभेत् ॥ 84.17 ॥

राजसूयाश्वमेधाभ्यां फलं स्याद्ब्रह्मतीर्थके ॥
श्राद्धं पिण्डोदकं कार्य्यं मध्ये वै कूपयूपयोः ॥ 84.18 ॥

कूपोदकेन तत्कार्य्यं पितॄणां दत्तमक्षयम् ॥
तृतीयेऽह्नि ब्रह्मसदो गत्वा स्नात्वाथ तर्पणम् ॥ 84.19 ॥

कृत्वा श्राद्धादिकं पिण्डं मध्ये वै यूपकूपयोः ॥
गोप्रचारसमीपस्था आब्रह्म ब्रह्मकल्पिताः ॥ 84.20 ॥

तेषां सेवनमात्रेण पितरो मोक्षगामिनः ॥
यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत् ॥ 84.21 ॥

फल्गुतीर्थे चतुर्थेऽहनि स्नात्वा देवादितर्पणम् ॥
कृत्वा श्राद्धंगयाशीर्षे कुर्याद्रुद्रपदादिषु ॥ 84.22 ॥

पिण्डान्देहिमुखे व्यासे पंचाग्नौ च पदत्रये ॥
सूर्य्येन्दुकार्त्तिकेयेषु कृतं श्राद्धं तथाक्षयम् ॥ 84.23 ॥

श्राद्धं तु नवदेवत्यं कुर्य्याद्द्वादशदैवतम् ॥
अन्वष्टकासु वृद्धौ च गयायां मृतवासरे ॥ 84.24 ॥

अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥
स्नात्वा दशाश्वमेधे तु दृष्ट्वा देवं पितामहम् ॥ 84.25 ॥

रुद्रपादं नरः स्पृष्ट्वा न चेहावर्त्तते पुनः ॥
त्रिर्वित्तपूर्णां पृथिवीं दत्त्वा यत्फलमाप्नुयात् ॥ 84.26 ॥

स तत्फलमवाप्नोति कृत्वा श्राद्धं गयाशिरे ॥
शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे ॥ 84.27 ॥

पितरो यान्ति देवत्वं नात्र कार्य्या विचारणा ॥
मुण्डपृष्टे पदं न्यस्तं महादेवेन धीमता ॥ 84.28 ॥

अल्पेन तपसा तत्र महापुण्यमवाप्नुयात् ॥
गयाशीर्षे तु यः पिण्डान्नाम्ना येषां तु निर्वपेत् ॥ 84.29 ॥

नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ॥
पञ्चमेऽह्नि गंदालोले स्नात्वा वटतले ततः ॥ 84.30 ॥

पिण्डान्दद्यात्पितॄणां च सकलं तारयेत्कुलम् ॥
वटमूलं समासाद्य शाकेनोष्णोदकेन वा ॥ 84.31 ॥

एकस्मिन् भोजिते विप्र कोटिर्भवति भोजिताः ॥
कृते श्राद्धेऽक्षयवटे दृष्ट्वा च प्रपितामहम् ॥ 84.32 ॥

अक्षयान्लभते लोकान्कुलानामुद्धरेच्छतम् ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥ 84.33 ॥

यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥
प्रेतः कश्चित्समुद्दिश्य वणिजं कञ्चिदब्रवीत् ॥ 84.34 ॥

मम नाम्ना गयाशीर्षे पिण्डनिर्वपणं कुरु ॥
प्रेतभावाद्विमुक्तः स्यांस्वर्गदो दातुरेव च ॥ 84.35 ॥

श्रुत्वा वणिग्गयाशीर्ष प्रेतराजाय पिण्डकम् ॥
प्रददावनुजैः सार्द्धं स्वपितृभ्यस्ततो ददौ ॥ 84.36 ॥

सर्वे मुक्ता विशालोऽपि सपुत्रोऽभुच्च पिंडदः ॥
विशालायां विशालोऽभूद्राजपुत्रोब्रवीद्द्विजान् ॥ 84.37 ॥

कथं पुत्रादयः स्युर्मे विप्राश्चोतुर्विशालकम् ॥
गयायां पिण्डदानेन तव सर्वं भविष्यति ॥ 84.38 ॥

विशालोऽथ गयाशीर्ष पिण्डदोऽभूच्च पुत्रवान् ॥
दृष्ट्वाकाशे सितं रक्तं कृष्णं पुरुषमब्रवीत् ॥ 84.39 ॥

के यूयं तेषु चैवैकः सितः प्रोचे विशालकम् ॥
अहं सितस्ते जनक इन्द्रलोकं गतः शुभम् ॥ 84.40 ॥

मम पुत्र पिता रक्तो ब्रह्महा पापकृत्परम् ॥
अयं पितामहः कृष्ण ऋषयोऽनेन घातिताः ॥ 84.41 ॥

अवीचिं नरकं प्राप्तौ मुक्तौ जातौ च पिण्डदः ॥
मुक्तीकृतास्ततः सर्वे व्रजामः स्वर्गमुत्तमम् ॥ 84.42 ॥

कृतकृत्यो विशालोऽपि राज्यं कृत्वा दिवं ययौ ॥
येऽस्मत्कुले तु पितरो लुप्तपिण्डोदकक्रियाः ॥ 84.43 ॥

ये चाप्यकृतचूडास्तु ये च गर्भाद्विनिस्सृताः ॥
येषां दाहो न क्रियाच येऽग्निदग्धास्तथापरे ॥ 84.44 ॥

भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥
पिता पितामहश्चैव तथैव प्रपितामहः ॥ 84.45 ॥

माता पितामही चैव तथैव प्रपितामही ॥
तथा मातामहश्चैव प्रमातामह एव च ॥ 84.46 ॥

वृद्धप्रमातामहश्च तथा मातामही परम् ॥
प्रमातामही तथा वृद्धप्रमातामहीति वै ॥ 84.47 ॥

अन्येषां चैव पिंडोऽयमक्षय्यमुपतिष्ठताम् ॥ 84.48 ॥
इति श्रागारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गयामाहात्म्यं नाम चतुरशीतितमोऽध्यायः ॥ 84 ॥

॥ब्रह्मोवाच ॥
स्नात्वा प्रेतशिलादौ तु वरुणास्थामृतेन च ॥
पिण्डं दद्यादिमैर्मन्त्रैरावाह्य च पितॄन्परान् ॥ 85.1 ॥

अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ॥
आवाहयिष्येतान्सर्वान् दर्भपृष्ठे तिलोदकैः ॥ 85.2 ॥

पितृवंशे मृता ये च मातृवंशे च ये मृताः ॥
तेषामुद्धरणार्थाये इमं पिण्डं ददाम्यहम् ॥ 85.3 ॥

मातामहकुले ये च गतिर्येषां न विद्यते ॥
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ 85.4 ॥

अजातदन्ता ये केचिद्ये च गर्भे प्रपीडिताः ॥
तेषामुद्धरणार्थाय इम पिण्डं ददाम्यहम् ॥ 85.5 ॥

बन्धुवर्गाश्च ये केचिन्नामगोत्रविवर्जिताः ॥
स्वगोत्रे परगोत्रे वा गतिर्येषां न विद्यते ॥
तेषामुद्धरणार्थाय इम पिण्डं ददाम्यहम् ॥ 85.6 ॥

उद्बन्धनमृता ये च विषशस्रहताश्च ये ॥
आत्मोपघातिनो ये च तेभ्यः पिण्डं ददाम्यहम् ॥ 85.7 ॥

अग्निदाहे मृता ये च सिंहव्याघ्रहताश्चये ॥
दंष्ट्रिभिः श्रृङ्गिभिर्वापि तेषां पिण्डं ददाम्यहम् ॥ 85.8 ॥

अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथापरे ॥
विद्युच्चौरहता ये च तेभ्यः पिण्डं ददाम्यहम् ॥ 85.9 ॥

रौरवे चान्धतामिस्त्रे कालसूत्रे च ये गताः ॥
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ 85.10 ॥

असिपत्रवने घोरे कुम्भीपाके च ये गताः ॥
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ 85.11 ॥

अन्येषां यातना स्थानां प्रेतलोकनिवासिनाम् ॥
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ 85.12 ॥

पुशुयोनिं गता ये च पक्षिकीटसरीसृपाः ॥
अथवा वृक्षयोनि स्थास्तेभ्यः पिण्डं ददाम्यहम् ॥ 85.13 ॥

असंख्ययातनासंस्था ये नीता यमशासनैः ॥

तेषामुद्धरणार्थाय इमं पिंडं ददाम्यहम् ॥ 85.14 ॥

जात्यन्तरसहस्त्रेषु भ्रमन्ति स्वेन कर्मणा ॥
मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम् ॥ 85.15 ॥

ये बान्धवाऽबान्धवा वा येऽन्यजन्मनि बान्धवाः ॥
ते सर्वेतृप्तिमायान्तु पिण्डदानेन सर्वदा ॥ 85.16 ॥

ये केचित्प्रेतरूपेण वर्त्तन्ते पितरो मम ॥
ते सर्वे तृप्तिमायान्तु पिण्डदानेन सर्वदा ॥ 85.17 ॥

ये मे पितृकुले जाताः कुले मातुस्तथैव च ॥
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥ 85.18 ॥

ये मे कुले लुप्तपिण्डाः पुत्त्रदारविवर्जिताः ॥
क्रियालो पहता ये च जात्यन्धाः पङ्गवस्तथा ॥ 85.19 ॥

विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम ॥
तेषां पिण्डं मया दत्तमक्षय्यमुपतिष्ठताम् ॥ 85.20 ॥

साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा ॥
मया गयां समासाद्य पितॄणां निष्कृतिः कृता ॥ 85.21 ॥

आगतोऽहं गयां देव ! पितृकार्य्ये गदाधर ॥
तन्मे साक्षी भवत्वद्य अनृणोऽहमृणत्रयात् ॥ 85.22 ॥

महानदी ब्रह्मसरोऽक्षयो वटः प्रभासमुद्यन्तमहो ? गयाशिरः ॥
सरस्वतीधर्मकधेनुपृष्ठा एते कुरुक्षेत्रगता गयायाम् ॥ 85.23 ॥

इति श्रीगारुडे महापुराणे पुर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गयामाहात्म्यं नाम पञ्चाशीतितमोऽध्यायः ॥ 85 ॥

॥ब्रह्मोवाच ॥

येयं प्रेतशिला ख्याता गयायां सा त्रिधा स्थिता ॥
प्रभासे प्रेतकुण्डे च गयासुरशिरस्यपि ॥ 86.1 ॥

धर्मेण धारिता भूत्यै सर्वदेवमयी शिला ॥
प्रेतत्वं ये गता नृणां मित्राद्या बान्धवादयः ॥ 86.2 ॥

तेषामुद्धरणार्थाय यतः प्रेतशिला शुभा ॥
अतोऽत्र मुनयो भूपा राजपत्न्यादयः सदा ॥ 86.3 ॥

तस्यां शिलायां श्राद्धादिकर्त्तारो ब्रह्मलोकगाः ॥
गयासुरस्य यन्मुण्डं तस्य पृष्ठे शिला यतः ॥ 86.4 ॥

मुण्डपृष्ठो गिरिस्तस्मात्सर्वदेवमयो ह्ययम् ॥
मुण्डपृष्ठस्य पादेषु यतो ब्रह्मसरोमुखाः ॥ 86.5 ॥

अरविन्दवनं तेषु तेन चैवोपलक्षितः ॥
अरविन्दो गिरिर्नाम क्रौञ्चपादाङ्कितो यतः ॥ 86.6 ॥

तस्माद्गिरिः क्रौञ्चपादः पितॄणां ब्रह्मलोकदः ॥
गदाधरादयो देवा आद्या आदौ व्यवस्थिताः ॥ 86.7 ॥

शिलारूपेण चाव्यक्तास्तस्माद्देवमयी शिला ॥
गया शिरश्छादयित्वा गुरुत्वादास्थिता शिला ॥ 86.8 ॥

कालान्तरेण व्यक्तश्चस्थित आदिगदाधरः ॥
महारुद्रादिदेवैस्तु आनादिनिधनो हरिः ॥ 86.9 ॥

धर्म संरक्षणार्थाय अधर्मादिविनष्टये ॥
दैत्यराक्षसनाशार्थं मत्स्यः पूर्वं यथाभवत् ॥ 86.10 ॥

कूर्मो वराहो नृहरिर्वामनो राम ऊर्जितः ॥
यथा दाशरथी रामः कृष्णोबुद्धोऽथ कल्क्यपि ॥ 86.11 ॥

तथा व्यक्तोऽव्यक्तरूपी आसीदादिर्गदाधरः ॥
आदिरादौ पूजितोऽत्र देवैर्ब्रह्मादिभिर्यतः ॥ 86.12 ॥

पाद्याद्यैर्गन्धपुष्पाद्यैरत आदिगदाधरः ॥
गदाधरं सुरैः सार्द्धमाद्यं गत्वा ददाति यः ॥ 86.13 ॥

अर्घ्यं पात्रं च पाद्यं च गन्धपुष्पं च धूपकम् ॥
दीपं नैवैद्यमुत्कृष्टं माल्यानि विविधानि च ॥ 86.14 ॥

वस्त्राणि मुकुटं घण्टां चामरं प्रेक्षणीयकम् ॥
अलङ्कारादिकं पिण्डमन्नदानादिकं तथा ॥ 86.15 ॥

तेषां तावद्धनं धान्यमायुरारो ग्यसम्पदः ॥
पुत्रादिसन्ततिश्रेयोविद्यार्थं काम ईप्सितः ॥ 86.16 ॥

भार्य्या स्वर्गादिवासश्च स्वर्गादागत्य राज्यकम् ॥
कुलीनः सत्त्वसम्पन्नो रणे मर्दितशात्रवनः ॥ 86.17 ॥

वधबन्धविनिर्मुक्तश्चान्ते मोक्षमवाप्नुयात् ॥
श्राद्धपिण्डादिकर्त्तारः पितृभिर्ब्रह्मलोकगाः ॥ 86.18 ॥

जगन्नाथं येऽप्चयन्ति सुभद्रां बलभद्रकम् ॥
ज्ञानं प्राप्य श्रियं पुत्रान्व्रजन्ति पुरुषोत्तमम् ॥ 86.19 ॥

पुरुषोत्तमराजस्य सूर्य्यस्य च गणस्य च ॥
पुरतस्तत्र पिण्डादि पितृणां ब्रह्मलोकदः ॥ 86.20 ॥

नत्वा कपर्द्दिविघ्नेशं सर्वविघ्नैः प्रमुच्यते ॥
कार्त्तिकेयं पूजयित्वा ब्रह्मलोकमवाप्नुयात् ॥ 86.21 ॥

द्वादशादित्यमभ्यर्च्य सर्वरोगैः प्रमुच्यते ॥
वैश्वानरं समभ्यर्च्य उत्तमां दीप्तिमाप्नुयात् ॥ 86.22 ॥

रेवन्तं पूजयित्वाथ अश्वानाप्नोत्यनुत्तमान् ॥
अभ्यर्च्येन्द्रं महैश्वर्य्यं गौरीं सौभाग्यमाप्नुयात् ॥ 86.23 ॥

विद्यां सरस्वतीं प्रार्च्य लक्ष्मीं संपूज्य च श्रियम् ॥
गरुडं च समभ्यर्च्य विघ्नवृन्दात्प्रमुच्यते ॥ 86.24 ॥

क्षेत्रपालं समभ्यर्च्य ग्रहवृन्दैः प्रमुच्यते ॥
मुण्डपृष्ठं समभ्यर्च्य सर्वकाममवाप्नुयात् ॥ 86.25 ॥

नागाष्टकं समभ्यर्च्य नागदष्टो विमुच्यते ॥
ब्रह्माणं पूजयित्वा च ब्रह्मलोकमवाप्नुयात् ॥ 86.26 ॥

बलभद्रं समभ्यर्च्य बलारोग्यमवाप्नुयात् ॥
सुभद्रां पूजयित्वा तु सौभाग्यं परमाप्नुयात् ॥ 86.27 ॥

सर्वान्कामानवाप्नोति संपूज्य पुरुषोत्तमम् ॥
नारायणं तु संपूज्य नराणामधिपो भवेत् ॥ 86.28 ॥

स्पृष्ट्वा नत्वा नारसिंहं संग्रामे विजयी भवेत् ॥
वराहं पूजयित्वा तु भूमिराज्यमवाप्नुयात् ॥ 86.29 ॥

मालाविद्याधरौ स्पष्ट्वा विद्याधरपदं लभेत् ॥
सर्वान्कामानवाप्नोति संपूज्यादिगदाधरम् ॥ 86.30 ॥

सोमनाथं समभ्यर्च्य शिवलोकमवाप्नुयात् ॥
रुद्रेश्वरं नमस्कृत्य रुद्रलोके महीयते ॥ 86.31 ॥

रामेश्वरं नरो नत्वा रामवत्सुप्रियो भवेत् ॥
ब्रह्मेश्वरं नरः स्तुत्वा ब्रह्मलोकाय कल्प्यते ॥ 86.32 ॥

कालेश्वरं समभ्यर्च्य नरः कालञ्जयो भवेत् ॥
केदारं पूजयित्वा तु शिवलोके महीयते ॥ 86.33 ॥

सिद्धेश्वरं च संपूज्य सिद्धो ब्रह्मपुरं व्रजेत् ॥
आद्यै रुद्रादिभिः सार्द्धं दृष्ट्वा ह्यादिगदाधरम् ॥ 86.34 ॥

कुलानां शतमुद्धृत्य नयेद्ब्रह्मपुरं नरः ॥
धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थो चार्थमाप्नुयात् ॥ 86.35 ॥

कामान्संप्राप्नुयात्कामी मोक्षार्थी मोक्षमाप्नुयात् ॥
राज्यार्थो राज्यमाप्नोति शान्त्यर्थी शान्तिमाप्नुयात् ॥ 86.36 ॥

सर्वार्थी सर्वमाप्नोति संपूज्यादिगदाधरम् ॥
पुत्रान्पुत्रार्थिनी स्त्री च सौभाग्यं च तदर्थिनी ॥ 86.37 ॥

वंशार्थिनी च वंशान्वै प्राप्याच्र्यादिगदाधरम् ॥
श्राद्धेन पिण्डदानेन अन्नदानेन वारिदः ॥ 86.38 ॥

ब्रह्मलोकमवाप्नोति संपूज्यादिगदाधरम् ॥
पृथिव्यां सर्वतीर्थेभ्यो यथा श्रेष्ठा गया पुरी ॥ 86.39 ॥

तथा शिलादिरूपश्च श्रेष्ठश्चैव गदाधरः ॥
तस्मिन्दृष्टे शिला दृष्टा यतः सर्वं गदाधरः ॥ 86.40 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गयामाहात्म्यं नाम षडशीतितमोऽध्यायः ॥ 86 ॥ (इति गयामाहात्म्यं समाप्तम्) ॥

॥हरिरुवाच ॥

चतुर्दशमनून्वक्ष्ये तत्सुताश्च शुकादिकान् ॥
मनुः स्वायम्भुवः पूर्वमग्निघ्राद्याश्च तत्सुताः ॥ ८७.१ ॥

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥
वसिष्ठश्च महातेजा ऋषयः सप्तकीर्त्तिताः ॥ ८७.२ ॥

जयाख्याशाचमिताख्याश्च शुक्रा यामास्तथैव च ॥
गणा द्वादशकाश्चैति चत्वारः सोमपायिनः ॥ ८७.३ ॥

विश्वभुग्वामदेवेन्द्रो बाष्कलिस्तदरिर्ह्यभूत् ॥
स हतो विष्णुना दैत्यश्चक्रेण सुमहात्मना ॥ ८७.४ ॥

मनुः स्वारोचिषश्चाथ तत्पुत्रो मण्डलेश्वरः ॥
चैत्रको विनतश्चैव कर्णान्तो विद्युतो रविः ॥ ८७.५ ॥

बृहद्गुणो नभश्चैव महाबलपराक्रमः ॥
ऊर्ज स्तम्बस्तथा प्राण ऋषभो निश्चल (र) स्तथा ॥ ८७.६ ॥

दत्तो (म्भो) लिश्चावरीवांश्च ऋष्यः सप्तकीर्त्तिताः ॥
तुषिता द्वादश प्रोक्तास्तथा पारावताश्च ये ॥ ८७.७ ॥

इन्द्रो विपश्चिद्देवानां तद्रिपुः पुरुकृत्सरः ॥
जघान हस्तिरूपेण भगवान्मधुसूदनः ॥ ८७.८ ॥

औत्तमस्य मनोः पुत्रा आजश्च परशुस्तथा ॥
विनीतश्च सुकेतुश्च सुमित्रः सुबलः शुचिः ॥ ८७.९ ॥

देवो देवावृधो रुद्र ! महोत्साहोजितस्तथा ॥
रथौजा ऊर्द्ध्वबाहुश्च शरणश्चानघो मुनिः ॥ ८७.१० ॥

सुतपाः शङ्कुरित्येते ऋषयः सप्त कीर्त्तिताः ॥
वशवर्त्तिस्वधामानः शिवाः सत्याः प्रतर्दनाः ॥ ८७.११ ॥

पञ्च देवगणाः प्रोक्ता सर्वे द्वादशकास्तु ते ॥
इन्द्रः स्वशान्तिस्तच्छुक्रः प्रलम्बो नाम दानवः ॥ ८७.१२ ॥

मत्स्यरूपी हरिर्विष्णुस्तं जघान च दानवम् ॥
तामसस्य मनोः पुत्रा जानुजङ्घोऽथ निर्भयः ॥ ८७.१३ ॥

नवख्यातिर्नयश्चैव प्रियभृत्यो विविक्षिपः ॥
हवुष्कधिः प्रस्तलाक्षः कृबन्धुः कृतस्तथा ॥ ८७.१४ ॥

ज्योतिर्धामा पृथुः (धृष्ट) काव्यश्चैत्रश्चेताग्निहेमकाः (कौ) ॥
मुनयः कीर्त्तिताः सप्त सुरागाः सुधियस्तथा ॥ ८७.१५ ॥

हरयो देवतानां च चत्वारः पञ्च (सप्त) विंशकाः ॥
गणा इन्द्रः शिविस्तस्य शत्रुर्भीमरथाः स्मृताः ॥ ८७.१६ ॥

हरिणा कूर्मरूपेण हतो भीमरथोऽसुरः ॥
रैवतस्य मनोः पुत्रो महा प्राणश्च साधकः ॥ ८७.१७ ॥

वन (ल) बन्धुर्निरमित्रः प्रत्यङ्गः परहा शुचिः ॥
दृढव्रतः केतुश्रृङ्गं ऋषयस्तस्य वर्ण्यते ॥ ८७.१८ ॥

वेदश्रीर्वेदबाहुश्च ऊर्द्ध्वबाहुस्तथैव च ॥
हिरण्यरोमा पर्जन्यः सत्यनेत्रः (नामा) स्वधाम च ॥ ८७.१९ ॥

अभूतरजसश्चैव तथा देवाश्वमेधसः ॥
वैकुण्ठ (ण्ठाः श्चामृत (ता) श्चैव चत्वारो देवतागणाः ॥ ८७.२० ॥

गणे चतुर्दश सुरा विभुरिन्द्रः प्रतापवान् ॥
शान्तः शत्रुर्हतो दैत्यो हंसरूपेण विष्णुना ॥ ८७.२१ ॥

चाक्षुषस्य मनोः पुत्रा उरुः पुरुर्महाबलः ॥
शतद्युम्नस्तपस्वी च सत्यबाहुः(क्यो) कृतिस्तथा ॥ ८७.२२ ॥

अग्निष्णुरतिरात्रश्च सुद्युम्नश्च तथा नरः ॥
हविष्मानुत्तमः श्रीमान्स्व (सु) धामा विरजस्तथा ॥ ८७.२३ ॥

अभिमानः सहिष्णुश्च मधुश्रीऋर्षयः स्मृताः ॥
आर्य्याः प्रसूता भाव्याश्च लेखाश्च पृथुकास्तथा ॥ ८७.२४ ॥

अष्टकस्य गणाः पञ्च तथा प्रोक्ता दिवौकसाम् ॥
इन्द्रो मनोजवः शत्रुर्महाकालो महाभुजः ॥ ८७.२५ ॥

अश्वरूपेण स हतो हरिणा लोकधारिणा ॥
मनोर्वैवस्वतस्येते पुत्रा विष्णुपरायणाः ॥ ८७.२६ ॥

इक्ष्वाकुरथ नाभागो धृष्टः शर्यातिरेव च ॥
नरिष्यन्तस्तथा पांशुर्नभो नेदिष्ठ एव च ॥ ८७.२७ ॥

करूषश्च पृषध्रश्च सुद्युम्नश्च मनोः सुताः ॥
अत्रिर्वसिष्ठो भगवाञ्जमदग्निश्च कश्यपः ॥ ८७.२८ ॥

गौतमश्च भरद्वाजो विशामित्रोऽथ सप्तमः ॥
तथा ह्येकोनपञ्चाशन्मरुतः परिकीर्त्तिताः ॥ ८७.२९ ॥

आदित्या वसवः साध्यागणा द्वादशकास्त्रयः ॥
एकादशा तथा रुद्रा वसवोऽष्टौ प्रकीर्त्तिताः ॥ ८७.३० ॥

द्वावश्विनौ विनिर्दिष्टौ विश्वेदेवास्तथा दशा ॥
दशौवाङ्गिरसो देवा नव देवगणास्तथा ॥ ८७.३१ ॥

तेजस्वी नाम वै शक्रो हिरण्याक्षो रिपुः स्मृतः ॥
हतो वराहरूपेण हरिण्याख्योऽथ विष्णुना ॥ ८७.३२ ॥

वक्ष्ये मनोर्भविष्यस्य सावर्ण्याख्यस्य वै सुतान् ॥
विजयश्चार्ववीरश्च निर्मोहः सत्यवाक्कृतिः ॥ ८७.३३ ॥

वरिष्ठश्च गरिष्ठश्च वाचः सङ्गतिरेव च ॥
अश्वत्थामा कृपो व्यासो गालवो दीप्तिमानथ ॥ ८७.३४ ॥

ऋष्यश्रृङ्गस्तथा राम ऋषयः सप्त कीर्त्तिताः ॥
सुतपा अमृताभाश्च मुख्याश्चापि तथा सुराः ॥ ८७.३५ ॥

तेषां गणस्तु देवाना मेकैको विंशकः स्मृतः ॥
विरोचनसुतस्तेषां बलिरिन्द्रो भविष्यति ॥ ८७.३६ ॥

दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम् ॥

ऋद्धिमिन्द्रपदं हित्वा ततः सिद्धिमवाप्स्यति ॥ ८७.३७ ॥

वारुणेर्दक्षसावर्णेर्नवमस्य सुताञ्छृणु ॥
धृतिकेतुर्दीप्तिकेतुः पञ्चहस्तो निरामयः ॥
पृथुश्रवा बृहद्द्युम्न ऋचीको बृहतो गुणः ॥ ८७.३८ ॥

मेधातिथिर्द्युतिश्चैव सबलो वसुरेव च ॥
ज्योतिष्मान्हव्यकव्यौ च ऋषयो विभुरीश्वरः ॥ ८७.३९ ॥

परो मरीचिर्गर्भश्च स्व (सु) धर्माणश्च ते त्रयः ॥
देशशत्रु) कालकाक्षस्तद्धन्ता पद्मनाभकः ॥ ८७.४० ॥

(भविष्यन्ति तदा देवा एकैको द्वादशो गणः ॥
तेषामिन्द्रो महावीर्यो भविष्यत्यद्भुतो हर ॥ )
धर्मपुत्रस्य पुत्रांस्तु दशमस्य मनोः श्रृणु ॥
सुक्षेत्रश्चोत्तमौजाश्च भूरिश्रेण्यश्च वीर्य्यवान् ॥ ८७.४१ ॥

शतानीको निरमित्रो वृषसेनो जयद्रथः ॥
भूरिद्युम्नः सुवर्चाश्च शान्तिरिन्द्रः प्रतापवान् ॥ ८७.४२ ॥

अयो (पो) मूर्त्तिर्हविष्मांश्च सुकृतिश्चाव्ययस्तथा ॥
नाभागोऽप्रतिमौजाश्च सौरभ ऋषयस्तथा ॥ ८७.४३ ॥

प्राणाख्याः शतसंख्यास्तु देवतानां गणस्तदा ॥
तेषामिन्द्रश्च भविता शान्तिर्नाम महाबलः ॥
बलिः शत्रुस्तं हरिश्च गदया घातयिष्यति ॥ ८७.४४ ॥

रुद्र पुत्रस्य ते पुत्रान्वक्ष्याम्येकादशस्य तु ॥
सर्वत्रगः सुशर्मा च देवानीकः पुरुर्गुरुः ॥ ८७.४५ ॥

क्षेत्रवर्णो दृढेषुश्च आर्द्रकः पुत्रकस्तथा ॥
हविष्मांश्च हविष्यश्च वरुणो विश्वविस्तरौ ॥ ८७.४६ ॥

विष्णुश्चैवाग्नितेजाश्च ऋषयः सप्त कीर्त्तिताः ॥
विहंगमाः कामङ्गमा निर्माणरुचयस्तथा ॥ ८७.४७ ॥

एकैकस्त्रिंशकस्तेषां गणश्चैन्द्रश्च वै वृषः ॥

दशग्रीवो रिपुस्तस्य श्रीरूपी घातयिष्यति ॥ ८७.४८ ॥

मनोस्तु दक्षपुत्रस्य द्वादशस्यात्मजाञ्छृणु ॥
देववानु पदेवश्च देवश्रेष्ठो विदूरथः ॥ ८७.४९ ॥

मित्रवान्मित्रदेवश्च मित्रबिन्दुश्च वीर्य्यवान् ॥
मित्रवाहः प्रवाहश्च दक्षपुत्रमनोः सुताः ॥ ८७.५० ॥

तपस्वी सुतपाश्चैव तपोमूर्त्तिस्तपोरतिः ॥
तपोधृतिर्द्युतिश्चान्यः सप्तमश्च तपोधनाः ॥ ८७.५१ ॥

स्वधर्माणः सुतपसो हरितो रोहितास्तथा ॥
सुरारयो गणाश्चैते प्रत्येकं दशको गणः ॥ ८७.५२ ॥

ऋतधामा च भद्रे (तत्रे) न्द्रस्तारको नाम तद्रिपुः ॥
हरिर्नपुंसको भूत्वा घातयिष्यति शङ्कर ॥ ८७.५३ ॥

त्रयोदशस्य रौच्यस्य मनोः पुत्राम्निबोध मे ॥
चित्रसेनो विचित्रश्च तपोधर्मरतो धृतिः ॥ ८७.५४ ॥

सुनेत्रः क्षेत्रवृत्तिश्च सुनयो धर्मपो दृढः ॥
धृतिमानव्ययश्चैव निशारूपो निरुत्सुकः ॥ ८७.५५ ॥

निर्मोहस्तत्त्वदर्शो च ऋषयः सप्त कीर्त्तिताः ॥
स्व (सु) रोमाणः स्व (सु) धर्माणः स्व (सु) कर्माणस्तथामराः ॥ ८७.५६ ॥

त्रयस्त्रिंशद्विभेदास्ते देवानां तत्र वै गणाः ॥
इन्द्रो दिवस्पतिः शत्रुस्त्विष्टिभो नाम दानवः ॥ ८७.५७ ॥

मायूरेण च रूपेण घातयिष्यति माधवः ॥
चतुर्दशस्य भौत्यस्य श्रृणु पुत्रान्मनोर्मम ॥ ८७.५८ ॥

उरुर्गभीरो धृष्टश्च तरस्वीग्रा (ग्र) ह एव च ॥
अभिमानि प्रवीरश्च जिष्णुः संक्रन्दनस्तथा ॥
तेजस्वी दुर्लभश्चैव भौत्यस्यैते मनोः सुताः ॥ ८७.५९ ॥

अग्नीध्रश्चाग्निबाहुश्च मागधश्च तथा शुचिः ॥

अजितो मुक्तशुक्रौ च ऋषयः सप्त कीर्तिताः ॥ ८७.६० ॥

चाक्षुषाः कर्मनिष्ठाश्च पवित्रा भ्राजिनस्तथा ॥
वचावृथा देवगणाः पञ्च प्रोक्तास्तु सप्तकाः ॥ ८७.६१ ॥

शुचिरिन्द्रो महादैत्यो रिपुहन्ता हरिः स्वयम् ॥
एको देवश्चतुर्द्धा तु व्यासरूपेण विष्णुना ॥ ८७.६२ ॥

कृतस्ततः पुराणानि विद्याश्चाष्टादशैव तु ॥
अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः ॥ ८७.६३ ॥

पुराणं धर्मशास्त्रं च आयुर्वेदार्थशास्त्रकम् ॥
धनुर्वेदश्च गान्धर्वो विद्या ह्यष्टादशैव ताः ॥ ८७.६४ ॥

इति श्रागारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे मनुतद्वंशनिरूपणं नाम स्पताशीतितमोऽध्यायः ॥ ८७ ॥

॥सूत उवाच ॥
हरिर्मन्वन्तराण्याह ब्रह्मादिभ्यो हराय च ॥
मार्कण्डेयः पितृस्तो त्रं क्रौञ्चुकिं प्राह तच्छृणु ॥ 88.1 ॥

मार्कण्डेय उवाच ॥
रुचिः प्रजापतिः पूर्वं निर्ममो निरहंकृतिः ॥
अत्रस्तोऽमितमायी च चचार पृथिवीमिमाम् ॥ 88.2 ॥

अनग्निमनिकेतं तमेकाहारमनाश्रमम् ॥
विमुक्तसङ्गं तं दृष्ट्वा प्रोचुः स्वपितरो मुनिम् ॥ 88.3 ॥

पितर ऊचुः ॥
वत्स कस्मात्त्वया पुण्यो न कृतो दार संग्रहः ॥
स्वर्गापवर्गहे (से)तुत्वाद्वन्धस्तेनानिशं (निमिषं) विना ॥ 88.4 ॥

गृही समस्तदेवानां पितृणां च तथार्हणम् ॥
ऋषीणामर्थिनां चैव कुर्वल्लो कानवाप्नुयात् ॥ 88.5 ॥

स्वाहोच्चारणतो देवान्स्वधोच्चारणतः पितृन् ॥
विभजत्यन्नदानेन भृत्याद्यानतिथीनपि ॥ 88.6 ॥

सत्त्वं दैवादृणाद्वन्धमिममस्मदृणादपि ॥
अवाप्तोऽसि मनुष्यर्षे भूतेभ्यश्च दिनेदिने ॥ 88.7 ॥

अनुत्पाद्य सुतान्देवानसन्तर्प्य पितृस्तथा ॥
अकृत्वा च कथं मौण्ड्यं स्वर्गतिं प्राप्तुमिच्छसि ॥ 88.8 ॥

क्लेशबोधैककं पुत्रं अन्यायेन भवेत्तव ॥
मृतस्य नरकं त्यक्त्वा क्लेशं एवान्यजन्मनि ॥ 88.9 ॥

॥रुचिरुवाच ॥
परिग्रहोऽतिदुः खाय पापाया धोगतेस्तथा ॥
भवत्यतो मया पूर्वं न कृतो दारसंग्रहः ॥ 88.10 ॥

आत्मनः संशयोपायः क्रियते क्षणमन्त्रणात् ॥
स्वमुक्तिहेतुर्न भवत्यसावपि परिग्रहात् ॥ 88.11 ॥

प्रक्षाल्यतेऽनुदिवसं य आत्मा निष्परिग्रहः ॥
मम त्वपङ्कदिग्धोऽपि विद्याम्भोभिर्वरं हि तत् ॥ 88.12 ॥

अनेकभवसंभूतकर्मपङ्काङ्कितो बुधैः ॥
आत्मा तत्त्वज्ञानतोयैः प्रक्षाल्यो नियतेन्द्रियैः ॥ 88.13 ॥

पितर ऊचुः ॥
युक्तं प्रक्षालनं कर्त्तुमात्मनोऽपि यतेन्द्रियैः ॥
किं तु नोपायमार्गोऽयं यतस्त्वं पुत्र वर्त्तसे ॥ 88.14 ॥

पञ्चयज्ञैस्तपोदानैरशुभं नुदतस्तव ॥
फलाभिसन्धिरहितैः पूर्वकम शुभाशुभैः ॥ 88.15 ॥

एवं न बन्धो भवति कुर्वतः कारणात्मकम् ॥
न च बन्धाय तत्कर्म भवत्यनतिसन्निभम् ॥ 88.16 ॥

पूर्वकर्म कृतं भोगैः क्षीयते ह्यनिशन्तथा ॥
सुखदुः खात्मकैर्वत्स पुण्या पुण्यात्मकं नृणाम् ॥ 88.17 ॥

एवं प्रक्षाल्यते प्राज्ञैरात्मा बन्धाच्च रक्ष्यते ॥
रक्ष्यश्च स्वविवेकैर्न पापपङ्केन दह्यते ॥ 88.18 ॥

रुचिरुवाच ॥
अविद्या पच्यते वेदे कर्ममार्गात्पितामहाः ॥
तत्कथं कर्मणो मार्गे भवन्तो योजयन्ति माम् ॥ 88.19 ॥

पितर उचुः ॥
अविद्या सर्वमेवैतत्कर्मणैतन्मृषा वचः ॥
किं तु विद्यापरिप्राप्तौ हेतुः कर्म न संशयः ॥ 88.20 ॥

विहिताकरणानर्थो न सद्भिः क्रियते तु यः ॥
संयमो मुक्तये योऽन्यः प्रत्युताधोगतिप्रदः ॥ 88.21 ॥

प्रक्षालयामीति भवान्यदेतन्मन्यते वरम् ॥
विहिताकरणोद्भूतैः पापैस्त्वमपि दह्यसे ॥ 88.22 ॥

अविद्याप्युपकाराय विषवज्जायते नृणाम् ॥
अनुष्ठानाभ्युपायेन बन्धयोग्यापि नो हि सा ॥ 88.23 ॥

तस्माद्वत्स कुरुष्व त्वं विधिवद्दारसंग्रहम् ॥
आजन्म विफलन्तेऽस्तु असम्प्राप्यान्यलौकिकम् ॥ 88.24 ॥

॥रुचिरुवाच ॥
वृद्धोऽहं साम्प्रतं को मे पितरः सम्प्रिदास्यति ॥
भार्यान्तथा दरिद्रस्य दुष्करो दारसंग्रहः ॥ 88.25 ॥

॥पितर ऊचुः ॥

अस्माकं पतनं वत्स भवतश्चाप्यधोगतिः ॥
नूनं भावि भवित्री च नाभिनन्दसि नो वचः ॥ 88.26 ॥

इत्युक्त्वा पितरस्तस्य पश्यतो मुनिसत्तम ॥
बभूवुः सहसाऽदृश्या दीपा वातहता इव ॥ 88.27 ॥

मुनिः क्रौंचुकये प्राह मार्कण्डेयो महातपाः ॥
रुचिवृत्तान्तमखिलं पितृसंवादलक्षणम् ॥ 88.28 ॥

इति श्रागारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे कर्मज्ञानमा नामाष्टाशीतितमोऽध्यायः ॥ 88 ॥

॥सूत उवाच ॥
पृष्टः क्रौञ्चुकिनोवाच मार्कण्डेयः पुनश्च तम् ॥
स तेन पितृवाक्यने भृशमुद्वग्नमानसः ॥ 89.1 ॥

कन्याभिलाषी विप्रर्षिः परिबभ्राम मेदिनीम् ॥
कन्यामलभमानोऽसौ पितृवाक्येन दीपितः ॥
चिन्तामवाप महीतमतीवोद्विग्नमानसः ॥ 89.2 ॥

किं करोमि क्व गच्छामि कथं मे दारसंग्रहः ॥
क्षिप्रं भवेन्मत्पितॄणां ममाभ्युदयकारकम् ॥ 89.3 ॥

इति चिन्तयतस्तस्यमतिर्जाता महात्मनः ॥
तपसाराधयाम्येनं ब्रह्माणं कमलोद्भवम् ॥ 89.4 ॥

ततो वर्षशतं दिव्यं तपस्तेपे महामनाः ॥
तत्र स्थितश्चिरं कालं वनेषु नियमस्थितः ॥
आराधनाय स तदा परं नियममास्थितः ॥ 89.5 ॥

ततः प्रदर्शयामास ब्रह्मा लोकपितामहः ॥
उवाचाथ प्रसन्नोऽस्मीत्युच्यतामभिवाञ्छितम् ॥ 89.6 ॥

ततोऽसौ प्रणिपत्याह ब्रह्माणं जगतो गतिम् ॥
पितॄणां वचनात्तेन यत्कर्तुमभिवाञ्छितम् ॥ 89.7 ॥

॥ ब्रह्मोवाच ॥
प्रजापतिस्त्वं भविता स्रष्टव्या भवता प्रजाः ॥
सृष्ट्वा प्रजाः सुतान्विप्रः समुत्पाद्य क्रियास्तथा ॥ 89.8 ॥

कृत्वा कृताधिकारस्त्वं ततः सिद्धिमवाप्स्यसि ॥
सत्वं यथोक्तं पितृभिः कुरु दारपरिग्रहम् ॥ 89.9 ॥

कामं चेममभिध्याय क्रियतां पितृपूजनम् ॥
त एव तुष्टाः पितरः प्रदास्यन्ति तवेप्सितम् ॥
पत्नीं सुतांश्च सन्तुष्टाः किं न दद्युः पितामहाः ॥ 89.10 ॥

॥ मार्कण्डेय उवाच ॥
इत्यृषिर्वचनं श्रुत्वा ब्रह्मणोऽव्यक्तजन्मनः ॥
नद्या विविक्ते पुलिने चकार पितृतर्पणम् ॥ 89.11 ॥

तुष्टाव च पितॄन्विप्रः स्तवैरेभिरथादृतः ॥
एकाग्रप्रयतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ 89.12 ॥

॥ रुचिरुवाच ॥
नमस्येऽहं पितॄन् भक्त्या ये वसन्त्यधिदेवतम् ॥
देवैरपि हि तर्प्यन्ते ये श्राद्धेषु स्वधोत्तरैः ॥ 89.13 ॥

नमस्येऽहं पितॄन् स्वर्गे ये तर्प्यन्ते महर्षिभिः ॥
श्राद्धैर्मनोमयैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः ॥ 89.14 ॥

नमस्येऽहं पितॄन्स्वर्गे सिद्धाः सन्तर्पयन्ति यान् ॥
श्राद्धेषु दिव्यैः सकलैरुपहारैरनुत्तमैः ॥ 89.15 ॥

नमस्येऽहं पितॄन् भक्त्या येऽर्च्यन्ते गुह्यकैर्दिवि ॥
तन्मयत्वेन वाञ्छद्भिः ऋद्धिमात्यन्तिकीं पराम् ॥ 89.16 ॥

नमस्येऽहं पितॄन्मर्त्यैरर्च्यन्ते भुवि ये सदा ॥
श्राद्धेषु श्रद्धयाभीष्टलोकपुष्टिप्रदायिनः ॥ 89.17 ॥

नमस्येऽहं पितॄन्विप्रैरर्च्यन्ते भुवि ये सदा ॥
वाञ्छिताभीष्टलाभाय प्राजापत्यप्रदायिनः ॥ 89.18 ॥

नमस्येऽहं पितॄन्ये वै तर्प्यन्तेऽरण्यवासिभिः ॥
वन्यैः श्राद्धैर्यताहारैस्तपोनिर्धूतकल्मषैः ॥ 89.19 ॥

नमस्येऽहं पितॄन्विप्रैर्नैष्ठिकैर्धर्मचारिभिः ॥
ये संयतात्मभिर्नित्यं सन्तर्प्यन्ते समाधिभिः ॥ 89.20 ॥

नमस्येऽहं पितॄश्राद्धै राजन्यास्तर्पयन्ति यान् ॥
कव्यैरशेषैर्विधिवल्लोकद्वयफलप्रदान् ॥ 89.21 ॥

नमस्येऽहं पितॄन्वैश्यैरर्च्यन्ते भुवि ये सदा ॥
स्वकर्माभिरतैर्नित्यं पुष्पधूपान्नवारिभिः ॥ 89.22 ॥

नमस्येऽहं पितॄश्राद्धे शूद्रैरपि च भक्तितः ॥
सन्तर्प्यते जगत्कृत्स्नं नाम्ना ख्याताः सुकालिनः ॥ 89.23 ॥

नमस्येऽहं पितॄश्राद्धे पाताले ये महासुरैः ॥
सन्तर्प्यन्ते सुधाहारास्त्यक्तदम्भमदैः सदा ॥ 89.24 ॥

नमस्येऽहं पितॄश्राद्धैरर्च्यन्ते ये रसातले ॥
भोगैरशेषैर्विधिवन्नागैः कामानभीप्सुभिः ॥ 89.25 ॥

नमस्येऽहं पितॄश्राद्धैः सर्पैः सन्तर्पितान्सदा ॥
तत्रैव विधिवन्मन्त्रभोगसम्पत्समन्वितैः ॥ 89.26 ॥

पितॄन्नमस्ये निवसन्ति साक्षाद्ये देवलोकेऽथ महीतले वा ॥
तथान्तरिक्षे च सुरारिपूज्यास्ते वै प्रतीच्छन्तु मयोपनीतम् ॥ 89.27 ॥

पितॄन्नमस्ये परमार्थभूता ये वै विमाने निवसन्त्यमूर्त्ताः ॥
यजन्ति यानस्तमलैर्मनोभिर्योगीश्वराः क्लेशविमुक्तिहेतून् ॥ 89.28 ॥

पितॄन्नमस्ये दिवि ये च मूर्त्ताः स्वधाभुजः काम्यफलाभिसन्धौ ॥
प्रदानशक्ताः सकलेप्सितानां विमुक्तिदा येऽनभिसंहितेषु ॥ 89.29 ॥

तृप्यन्तु तेऽस्मिन्पितरः समस्ता इच्छावतां ये प्रदिशन्ति कामान् ॥
सुरत्वमिन्द्रत्वमितोऽधिकं वा गजाश्वरत्नानि महागृहाणि ॥ 89.30 ॥

सोमस्य ये रश्मिषु येऽर्कबिम्बे शुक्ले विमाने च सदा वसन्ति ॥
तृप्यन्तु तेऽस्मिन्पितरोऽन्नतोयैर्गन्धादिना पुष्टिमितो व्रजन्तु ॥ 89.31 ॥

येषां हुतेऽग्नौ हविषा च तृप्तिर्ये भुञ्जते विप्रशरीरसंस्थाः ॥
ये पिण्डदानेन मुदं प्रयान्ति तृप्यन्तु तेऽस्मिन्पितरोऽन्नतोयैः ॥ 89.32 ॥

ये खड्गमांसेन सुरैरभीष्टैः कृष्णैस्तिलैर्दिव्य मनोहरैश्च ॥
कालेन शाकेन महर्षिवर्य्यैः संप्रीणितास्ते मुदमत्र यान्तु ॥ 89.33 ॥

कव्यान्यशेषाणि च यान्यभीष्टान्यतीव तेषां मम पूजितानाम् ॥
तेषाञ्च सान्निध्यमिहास्तु पुष्पगन्धाम्बुभोज्येषु मया कृतेषु ॥ 89.34 ॥

दिने दिने ये प्रतिगृह्णतेऽर्चां मासान्तपूज्या भुवि येऽष्टकासु ॥
ये वत्सरान्तेऽभ्युदये च पूज्याः प्रयान्तु ते मे पितरोऽत्र तुष्टिम् ॥ 89.35 ॥

पूज्या द्विजानां कुमुदेन्दुभासो ये क्षत्त्रियाणां ज्वलनार्कवर्णाः ॥
तथा विशां ये कनकावदाता नीलीप्रभाः शूद्रजनस्य ये च ॥ 89.36 ॥

तेऽस्मिन्समस्ता मम पुष्पगन्धधूपाम्बुभोज्यादिनिवेदनेन ॥
तथाग्निहोमेन च यान्ति तृप्तिं सदा पितृभ्यः प्रणतोऽस्मि तेभ्यः ॥ 89.37 ॥

ये देवपूर्वाण्यभितृप्तिहेतोर श्नन्ति कव्यानि शुभाहृतानि ॥
तृप्ताश्च ये भूतिसृजो भवन्ति तृप्यन्तु तेऽस्मिन्प्रणतोऽस्मि तेभ्यः ॥ 89.38 ॥

रक्षांसि भूतान्यसुरांस्तथोग्रान्निर्णाशयन्तु त्वशिवं प्रजानाम् ॥
आद्याः सुराणाममरेशपूज्यास्तृप्यन्तु तेऽस्मिन्प्रणतोऽस्मितेभ्यः ॥ 89.39 ॥

अग्निष्वात्ता बर्हिषद आज्यपाः सोमपास्तथा ॥
व्रजन्तु तृप्तिं श्राद्धेऽस्मिन्पितरस्तर्पिता मया ॥ 89.40 ॥

अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ॥
तथा बर्हिषदः पान्तु याम्यां मे पितरः सदा ॥
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ॥ 89.41 ॥

रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥
सर्वतः पितरो रक्षां कुर्वन्तु मम नित्यशः ॥ 89.42 ॥

विश्वो विश्वभुगाराध्यो धर्मो धन्यः शुभाननः ॥
भूतिदो भूतिकृद् भूतिः पितृणां ये गणा नव ॥ 89.43 ॥

कल्याणः कल्यदः कर्त्ता कल्यः कल्यतराश्रयः ॥
कल्यताहेतुरन्घः षडिमे ते गणाः स्मृताः ॥ 89.44 ॥

वरो वरेण्यो वरदस्तुष्टिदः पुष्टिदस्तथा ॥
विश्वपाता तथा धाता सप्तैते च गणाः स्मृताः ॥ 89.45 ॥

महान्महात्मा महितो महिमावान्महाबलः ॥
गणाः पञ्च तथैवैते पितृणां पापनाशनाः ॥ 89.46 ॥

सुखदो धनदश्चान्यो धर्मदोऽन्यश्च भूतिदः ॥
पितृणां कथ्यते चैव तथा गणचतुष्टयम् ॥ 89.47 ॥

एकत्रिंशत्पितृगणा यैर्व्याप्तमखिलं जगत् ॥
त एवात्र पितृगणास्तुष्यन्तु च मदाहितात् ॥ 89.48 ॥

॥मार्कण्डेय उवाच ॥
एवं तु स्तुवतस्तस्य तेजसोराशिरुच्छ्रितः ॥
प्रादुर्बभूव सहसा गगनव्याप्तिकारकः ॥ 89.49 ॥

तदृष्ट्वा सुमहत्तेजः समाच्छाद्य स्थितं जगत् ॥
जानुभ्यामवनीं गत्वा रुचिः स्तोत्रमिदंजगौ ॥ 89.50 ॥

रुचिरुवाच ॥
अर्चितानाममूर्त्तानां पितृणां दीप्ततेजसाम् ॥
नमस्यामि सदा तेषां ध्यानिनां दिव्यचक्षुषाम् ॥ 89.51 ॥

इन्द्रादीनां च नेतारो दक्षमारीचयोस्तथा ॥
सप्तर्षीणां तथान्येषां तान्नमस्यामि कामदान् ॥ 89.52 ॥

मन्वादीनां च नेतारः सूर्य्याचन्द्रमसोस्तथा ॥
तान्नमस्याम्यहं सर्वान्पितृनप्युदधावपि ॥ 89.53 ॥

नक्षत्राणां ग्रहाणां च वाय्वग्न्योर्नभसस्तथा ॥
द्यावापृथिव्योश्च तथा नमस्यामि कृताञ्जलिः ॥ 89.54 ॥

प्रजापतेः कश्यपाय सोमाय वरुणाय च ॥
योगेश्वरेभ्यश्च सदा नमस्यामि कृताञ्जलिः ॥ 89.55 ॥

नमो गणेभ्यः सप्तभ्यस्तथा लोकेषु सप्तसु ॥
स्वायम्भुवे नमस्यामि ब्रह्मणे योगचक्षुषे ॥ 89.56 ॥

सोमाधारान्पितृगणान्योगमूर्त्तिधरांस्तथा ॥
नमस्यामि तथा सोमं पितरं जगतामहम् ॥ 89.57 ॥

अग्निरूपांस्तथैवान्यान्नमस्यामि पितॄनहम् ॥
अग्निसोममयं विश्वं यत एतदशेषतः ॥ 89.58 ॥

ये च तेजसि ये चैते सोमसूर्य्याग्निमूर्त्तयः ॥
जगत्स्वरूपिणश्चैव तथा ब्रह्मस्वरूपिणः ॥ 89.59 ॥

तेभ्योऽखिलेभ्यो योगिभ्यः पितृभ्यो यतमानसः ॥
नमोनमो नमस्तेऽस्तु प्रसीदन्तु स्वधाभुजः ॥ 89.60 ॥

॥मार्कण्डेय उवाच ॥
एवं स्तुतास्ततस्तेन तेजसो मुनिसत्तमाः ॥
निश्चक्रमुस्ते पितरो भासयन्तो दिशोदश ॥ 89.61 ॥

निवेदनञ्च यत्तेन पुष्पगन्धानुलेपनम् ॥
तद्भूषितानथ स तान्ददृशे पुरतः स्थितान् ॥ 89.62 ॥

प्रणिपत्य रुचिर्भक्त्या पुनरेव कृताञ्जलिः ॥
नमस्तुभ्यं नमस्तुभ्यमित्याह पृथगादृतः ॥ 89.63 ॥

ततः प्रसन्नाः पितरस्तमूचुर्मुनिसत्तमम् ॥
वरं वृणीष्वेति स तानुवाचानतकन्धरः ॥ 89.64 ॥

रुचिरुवाच ॥
प्रजानां सर्गकर्त्तृत्वमादिष्टं ब्रह्मणा मम ॥
सोऽहं पत्नीमभीप्सामि धन्यां दिव्यां प्रजावतीम् ॥ 89.65 ॥

पितर ऊचुः ॥
अत्रैव सद्यः पत्नी ते भवत्वतिमनोरमा ॥
तस्याञ्च पुत्रो भविता भवतो मुनिसत्तम ! ॥ 89.66 ॥

मन्वन्तराधिपो धीमांस्त्वन्नाम्नैवोपलक्षितः ॥
रुचे ! रौच्य इति ख्यातिं प्रयास्यति जगत्त्रये ॥ 89.67 ॥

तस्यापि बहवः पुत्रा महाबलपराक्रमाः ॥
भविष्यन्ति महात्मानः पृथिवीपरिपालकाः ॥ 89.68 ॥

त्वं च प्रजापतिर्भूत्वा प्रजाः सृष्ट्वा चतुर्विधाः ॥
क्षीणाधिकारो धर्मज्ञस्ततः सिद्धिमवाप्स्यसि ॥ 89.69 ॥

स्तोत्रेणानेन च नरो योऽस्मांस्तोष्यति भक्तितः ॥
तस्य तुष्टा वयं भोगानात्मजं ध्यानमुत्तमम् ॥ 89.70 ॥

आयुरारोग्यमर्थं च पुत्रपौत्रादिकं तथा ॥
वांछद्भिः सततं स्तव्याः स्तोत्रेणानेन वै यतः ॥ 89.71 ॥

श्राद्धेषु य इमं भक्त्या त्वस्मत्प्रीतिकरं स्तवम् ॥
पठिष्यति द्विजाग्रयाणां भुंजतां पुरतः स्थितः ॥ 89.72 ॥

स्तोत्रश्रवणसंप्रीत्या सन्निधाने परे कृते ॥
अस्माभिरक्षयं श्राद्धं तद्भविष्यत्यसंशयम् ॥ 89.73 ॥

यद्यप्यश्रोत्रियं श्राद्धं यद्यप्युपहतं भवेत् ॥
अन्यायोपात्तवित्तेन यदि वा कृतमन्यथा ॥ 89.74 ॥

अश्राद्धार्हैरुपतैरुपहारैस्तथा कृतैः ॥
अकालेऽप्यथ वा देशे विधिहीनमथापि वा ॥ 89.75 ॥

अश्रद्धया वा पुरुषैर्दम्भमाश्रित्य यत्कृतम् ॥
अस्माकं तृप्तये श्राद्धन्तथाप्येतदुदीरणात् ॥ 89.76 ॥

यत्रैतत्पठ्यते श्राद्धे स्तोत्रमस्तत्सुखावहम् ॥
अस्माकं जायते तृप्तिस्तत्र द्वादशावर्षिकी ॥ 89.77 ॥

हेमन्ते द्वादशाब्दानि तृप्तिमेतत्प्रयच्छति ॥
शिशिरे द्विगुणाब्दानि तृप्तिं स्तोत्रमिदं शुभम् ॥ 89.78 ॥

वसन्ते षोडश समास्तृप्तये श्राद्धकर्मणि ॥
ग्रीष्मे च षोडशैवैतत्पठितं तृप्तिकारकम् ॥ 89.79 ॥

विकलेऽपि कृते श्राद्धे स्तोत्रेणानेन साधिते ॥
वर्षासु तृप्तिरस्माकमक्षय्या जायते रुचे ॥ 89.80 ॥

शरत्कालेऽपि पठितं श्राद्धकाले प्रयच्छति ॥
अस्माकमेतत्पुरुषैस्तृप्तिं पंचदशाब्दिकीम् ॥ 89.81 ॥

यस्मिन् गेहे च लिखितमेतत्तिष्ठति नित्यदा ॥
सन्निधानं कृते श्राद्धे तत्रास्माकं भविष्यति ॥ 89.82 ॥

तस्मादेतत्त्वया श्राद्धे विप्राणां भुञ्जतां पुरः ॥
श्रावणीयं महाभाग अस्माकं पुष्टिकारकम् ॥ 89.83 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे रुचिकृतपितृस्तोत्रं नामैकोननवतितमोऽध्यायः ॥ 89 ॥

॥ मार्कण्डेय उवाच ॥
ततस्तस्मान्नदीमध्यात्समुत्तस्थौ मनोरमा ॥
प्रम्लौचा नाम तन्वङ्गी तत्समीपे वराप्सराः ॥ 90.1 ॥

सा चोवाच महात्मानं रुचिं सुमधुराक्षरम् ॥
प्रसादयामास भूयः प्रम्लोचा च वराप्सराः ॥ 90.2 ॥

अतीवरूपिणी कन्या मत्प्रसाद्वराङ्गना ॥
जाता वरुणपुत्रेण पुष्करेण महात्मना ॥ 90.3 ॥

तां गृहाण मया दत्तां भार्य्यार्थे वरवर्णिनीम् ॥
मनुर्महामतिस्तस्यां समुत्पत्स्यति ते सुतः ॥ 90.4 ॥

मार्कंडेय उवाच ॥
तथेति तेन साप्युक्ता तस्मात्तोयाद्वपुष्मतीम् ॥
उद्दधार ततः कन्यां मानिनीं नाम नामतः ॥ 90.5 ॥

नद्याश्च पुलिने तस्मिन्स मुनिर्मुनिसत्तमाः ॥
जग्राह पाणिं विधिवत्समानीय महामुनिः ॥ 90.6 ॥

तस्यां तस्य सुतो जज्ञे महावीर्य्यो महाद्युतिः ॥
रुचे रौच्य इति ख्यातो यो मया पूर्वमीरितः ॥ 90.7 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे प्रम्लोचागमनं नाम नवतितमोऽध्यायः ॥ 90 ॥

॥ सूत उवाच ॥
स्वायम्भुवाद्या मुनयो हरिं ध्यायन्ति कर्मणा ॥
व्रताचारार्चनाध्यानस्तुतिजप्यपरायणाः ॥ 91.1 ॥

देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितम् ॥
आकशेन विहीनं वै तेजसा परिवर्जितम् ॥ 91.2 ॥

उदकेन विहीनं वै तद्धर्मपरिवर्जितम् ॥
पृथिवीरहितं चैव सर्वभूतविवर्जितम् ॥ 91.3 ॥

भूताध्यक्षं तथा बद्धनियन्तारं प्रभुं विभुम् ॥
चैतन्यरूपतारूपं सर्वाध्यक्षं निरञ्जनम् ॥ 91.4 ॥

मुक्तसङ्गं महेशानं सर्वदेवप्रपूजितम् ॥
तेजोरूपमसत्त्वं च तपसा परिवर्जितम् ॥ 91.5 ॥

रहितं रजसा नित्यं व्यतिरिक्तं गुणैस्त्रिभिः ॥
सर्वरूपविहीनं वै कर्तृत्वादिविवर्जितम् ॥ 91.6 ॥

वासनारहितं शुद्धं सर्वदोषविवर्जितम् ॥
पिपासावर्जितं तत्तच्छो कमोहविवर्जितम् ॥ 91.7 ॥

जरामरणहीनं वै कूटस्थं मोहवर्जितम् ॥
उत्पत्तिरहितं चैव प्रलयेन विवर्जितम् ॥ 91.8 ॥

सत्यं सर्वाचारहीनं निष्कलं परमेश्वरम् ॥
जाग्रत्स्वप्नसुषुप्त्यादिवर्जितं नामवर्जितम् ॥ 91.9 ॥

अध्यक्षं जाग्रदादीनां शान्तरूपं सुरेश्वरम् ॥
जाग्रदादिस्थितं नित्यं कार्य्यकारणवर्जितम् ॥ 91.10 ॥

सर्वदृष्टं तथा मूर्तं सूक्ष्मं सूक्ष्मतरं परम् ॥
ज्ञानदृक् श्रोत्रविज्ञानं परमानन्दरूपकम् ॥ 91.11 ॥

विश्वेन रहितं तद्वत्तैजसेन विवर्जितम् ॥
प्राज्ञेन रहितञ्चैव तुरीयं परमाक्षरम् ॥ 91.12 ॥

सर्वगोप्तृ सर्वहन्तृ सर्वभूतात्मरूपि च ॥
बुद्धिधर्मविहीनं वै निराधारं शिवं हरिम् ॥ 91.13 ॥

विक्रियारहितं चैव वेदान्तैर्वेद्यमेव च ॥
वेदरूपं परं भूतमिन्द्रियेभ्यः परं शुभम् ॥ 91.14 ॥

शब्देन वर्जितञ्चैव रसेन च विवर्जितम् ॥
स्पर्शेन रहितं देवं रूपमात्रविवर्जितम् ॥ 91.15 ॥

रूपेण रहितञ्चैव गन्धेन परिवर्जितम् ॥
अनादि ब्रह्मरन्ध्रान्तमहं ब्रह्मास्मि केवलम् ॥ 91.16 ॥

एवं ज्ञात्वा महादेवध्यानं कुर्य्याज्जितेन्द्रियः ॥
ध्यानं यः कुरुते ह्येवं स भवेद्ब्रह्म मानवः ॥ 91.17 ॥

इति ध्यानं समाख्यातमश्विरस्य मया तव ॥
अधुना कथयाम्यन्यत्किन्तद्ब्रूहि वृषध्वज ॥ 91.18 ॥

इति श्रीगारुडे महापुराणे प्रथमांशाख्ये आचारकाण्डे हरिध्यानं नामैकनवतितमोऽध्यायः ॥ 91 ॥

॥रुद्रउवाच ॥
विष्णोर्ध्यानं पुनर्ब्रूहि शङ्खचक्रगदाधर ॥
येन विज्ञातमात्रेण कृतकृत्यो भवेन्नरः ॥ 92.1 ॥

॥हरिरुवाच ॥
प्रवक्ष्यामि हरेर्ध्यानं मायातन्त्रविमर्दकम् ॥
मूर्त्तामूर्तादिभेदेन तद्ध्यानं द्विविधं हर ॥ 92.2 ॥

अमूर्त्तं रुद्र कथितं हन्त मूर्त्तं ब्रवीम्यहम् ॥
सूर्य्यकोटिप्रतीकाशो जिष्णुर्भ्राजिष्णुरेकतः ॥ 92.3 ॥

कुन्दगोक्षीरधवलो हरिर्ध्येयो मुमुक्षुभिः ॥
विशालेन सुसौम्येन शङ्खेन च समन्वितः ॥ 92.4 ॥

सहस्त्रादित्यतुल्येन ज्वालामालोग्ररूपिणा ॥
चक्रेण चान्वितः शान्तो गदाहस्तः शुभाननः ॥ 92.5 ॥

किरीटेन महार्हेण रत्नप्रज्वलितेन च ॥
सायुधः सर्वगो देवः सरोरुहधरस्तथा ॥ 92.6 ॥

वनमालाधरः शुभ्रः समांसो हेमभूषणः ॥
सुवस्त्रः शुद्धदेहश्च सुकर्णः पद्मसंस्थितः ॥ 92.7 ॥

हिरण्मयशरीरश्च चारुहारी शुभाङ्गदः ॥
केयूरेण समायुक्तो वनमालासमन्वितः ॥ 92.8 ॥

श्रीवत्सकौस्तुभयुतो लक्ष्मीवन्द्येक्षणान्वितः ॥
अणिमादिगुणैर्युक्तः सृष्टिसंहारकारकः ॥ 92.9 ॥

मुनिध्येयोऽसुरध्येयो देवध्येयोऽतिसुन्दरः ॥
ब्रह्मादिस्तम्बपर्य्यन्तभूतजातहृदिस्थितः ॥ 92.10 ॥

सनातनोऽव्ययो मेध्यः सर्वानुग्रहकृत्प्रभुः ॥
नारायणो महादेवः स्फुरन्मकरकुण्डलः ॥ 92.11 ॥

सन्तापनाशनोऽभ्यर्च्यो मङ्गल्यो दुष्टनाशनः ॥
सर्वात्मा सर्वरूपश्च सर्वगो ग्रहनाशनः ॥ 92.12 ॥

चार्वङ्गुलीयसंयुक्तः सुदीप्तनख एव च ॥
शरण्यः सुखकारी च सौम्यरूपो महेश्वरः ॥ 92.13 ॥

सर्वालङ्कारसंयुक्तश्चारुचन्दनचर्चितः ॥

सर्वदेवसमायुक्तः सर्वदेवप्रियङ्करः ॥ 92.14 ॥

सर्वलोकहितैषी च सर्वेशः सर्वभावनः ॥
आदित्यमण्डले संस्थो अग्निस्थो वारिसंस्थितः ॥ 92.15 ॥

वासुदेवो जगद्धाता ध्येयो विष्णुर्मुमुक्षुभिः ॥
वासुदेवोऽहमस्मीति आत्मा ध्येयो हरिर्हरिः ॥ 92.16 ॥

ध्यायन्त्येवं च ये विष्णुं ते यान्ति परमां गतिम् ॥
याज्ञवल्क्यः पुरा ह्येवं ध्यात्वा विष्णुं सुरेश्वरम् ॥ 92.17 ॥

धर्मोपदेशकर्त्तृत्वं संप्राप्यागात्परं पदम् ॥
तस्मात्त्वमपि देवेश ! विष्णुं चिन्तय शङ्कर ! ॥ 92.18 ॥

विष्णुध्यानं पठेद्यस्तु प्राप्नोति परमां गतिम् ॥ 92.19 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुध्यानं नाम द्विनवतितमोऽध्यायः ॥ 92 ॥

॥महेश्वर उवाच ॥
याज्ञवल्क्येन यत्पूर्वं धर्मं प्रोक्तं कथं हरे ! ॥
तन्मे काथय केशिघ्न ! यथा तत्त्वेन माधव ! ॥ 93.1 ॥

हरिरुवाच ॥
याज्ञवल्क्यं नमस्कृत्य मिथिलायां समास्थितम् ॥
अपृच्छन्नृषयो गत्वा वर्णधर्माद्यशेषतः ॥
तेभ्यः स कथयामास विष्णुं ध्यात्वा जितेन्द्रियः ॥ 93.2 ॥

याज्ञवल्क्य उवाच ॥
यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत ॥
पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ॥ 93.3 ॥

वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥
वक्तारो धर्मशास्त्राणां मनुर्विष्णुर्यमोऽङ्गिराः ॥ 93.4 ॥

वसिष्ठदक्षसंवर्त्तशातातपपराशराः ॥
आपस्तम्बोशनोव्यासाः कात्यायनबृहस्पती ॥ 93.5 ॥

गौतमः शङ्खलिखितो हारीतोऽत्रिरहं तथा ॥
एते विष्णुं समाराध्य जाता धर्मोपदेशकाः ॥ 93.6 ॥

देशकाल उपायेन द्रव्यं श्रद्धासमन्वितम् ॥
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥ 93.7 ॥

इज्याचारो दमोऽहिंसा दानं स्वाध्यायकर्म च ॥
अयं च परमो धर्मो यद्योगेनात्मदर्शनम् ॥ 93.8 ॥

चत्वारो वेदधर्मज्ञाः परास्त्रैविद्यमेव वा ॥
सा ब्रूते यत्स्वधर्मः स्यादेको वाध्यात्मवित्तमः ॥ 93.9 ॥

ब्रह्मक्षात्त्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ॥
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥ 93.10 ॥

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा ॥
षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म च ॥ 93.11 ॥

अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ॥
षष्ठेऽन्नप्राशनं मासि चूडां कुर्य्याद्यथाकुलम् ॥ 93.12 ॥

एवमेनः शमं याति बीजगर्भसमुद्भवम् ॥
तूष्णीमेताः क्रियाः स्त्रीणां विवाहश्च समन्त्रकः ॥ 93.13 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तवर्णधर्म्मनिरूपणं नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥

॥याज्ञवल्क्य उवाच ॥

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ॥
रज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ 94.1 ॥

उपनीय कुरुः शिष्यं महाव्याहृतिपूर्वकम् ॥
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ 94.2 ॥

दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ॥
कुर्य्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥ 94.3 ॥

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ॥
गन्धलेपक्षयकरं शौचं कुर्य्यान्महाव्रतः ॥ 94.4 ॥

अन्तर्जानुः शुचौ देश उपविष्ट उदङ्मुखः ॥
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ 94.5 ॥

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ॥
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ 94.6 ॥

त्रिः प्राश्यापो द्विरुन्मृज्य खान्याद्भिः समुपस्पृशेत् ॥
अद्भिस्तु प्रकृतिस्थाभिर्होनाभिः फेनबुद्बैः ॥ 94.7 ॥

हृत्कण्ठतालुनाभिस्तु यथासंख्यं द्विजातयः ॥
शुध्येरंस्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ 94.8 ॥

स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ॥
सूर्य्यस्य चाप्युपस्थानं गायत्त्रयाः प्रत्ययं जपः ॥ 94.9 ॥

गायत्त्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्विकाम् ॥
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ 94.10 ॥

प्राणानायम्य सम्प्रोक्ष्य त्र्यृचेनाब्दैवतेन तु ॥
जपन्नासीत सावित्त्रीं प्रत्यगातारकोदयात् ॥ 94.11 ॥

सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्य्यदर्शनात् ॥
अग्निकार्य्यं ततः कुर्य्यात्सन्ध्ययोरुभयोरपि ॥ 94.12 ॥

ततोऽभिवादयेद्वृद्वानसावहमिति ब्रुवन् ॥
गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥ 94.13 ॥

साहूतश्चाप्यधीयीत सर्वं चास्मै निवेदयेत् ॥
हितं तस्याचरेन्नित्यं मनोवाक्कायकर्मभिः ॥ 94.14 ॥

दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ॥
ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये ॥ 94.15 ॥

आदिमध्यावसानेषु भवेच्छन्दोपलक्षिता ॥
ब्राह्मणक्षत्त्रियविशां भैक्षचर्य्या यथाक्रमम् ॥ 94.16 ॥

कृताग्निकार्य्यो भुञ्जीत विनीतो गुर्वनुज्ञया ॥
आपोशानक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ॥ 94.17 ॥

ब्रह्मचार्य्यास्थितो नैकमन्नमद्यादनापदि ॥
ब्राह्मणः काममश्रीयाच्छ्राद्धे व्रतमपडियन् ॥ 94.18 ॥

मधु मांसं तथा स्विन्नमित्यादि परिवर्जयेत् ॥
स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ॥ 94.19 ॥

उपनीय ददात्येनामाचार्य्यः स प्रकीर्त्तितः ॥
एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते ॥ 94.20 ॥

एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥
प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा ॥ 94.21 ॥

ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥
आषोडशाऽऽद्वाविंशाच्चाचतुर्विंशाच्च वत्सरात् ॥ 94.22 ॥

ब्रह्मक्षत्त्रविशां काल औपनायनिकः परः ॥
अत ऊर्द्ध्वं पतन्त्येते सर्वधर्मविवर्जिताः ॥ 94.23 ॥

सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥
मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनम् ॥ 94.24 ॥

ब्राह्मणक्षत्त्रिय विशस्तस्मादेते द्विजातयः ॥
यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ॥ 94.25 ॥

वेद एव द्विजातीनां निः श्रेयसकरः परः ॥
मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः ॥ 94.26 ॥

पितॄन्मधुघृताभ्यां च ऋचोऽधीते हि सोऽन्वहम् ॥
यजुः साम पठेत्तद्वदथर्वाङ्गिरसं द्विजः ॥ 94.27 ॥

सन्तर्पयेत्पितॄन्देवान्सोऽन्वहं हि घृतामृतैः ॥
वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः ॥ 94.28 ॥

इतिहासांस्तथा विद्या योऽधीते शक्तितोऽन्वहम् ॥
सन्तर्पयेत्पितृन्देवान्मांसक्षीरोदनादिभिः ॥ 94.29 ॥

ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ॥
यं यं क्रतुमधीतेसौ तस्यस्याप्नुयात्फलम् ॥ 94.30 ॥

भूमिदानस्य तपसः स्वाध्यायफलभाग्द्विजः ॥
नेष्ठिको ब्रह्मचारी तु वसेदाचार्य्यसन्निधौ ॥ 94.31 ॥

तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥
अनेन विधिना देहे साधयेद्विजितेन्द्रियः ॥
ब्रह्मलोकमवाप्नोति न चेह जायते पुनः ॥ 94.32 ॥

इत श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाक्ये आचारकाण्डे याज्ञवल्क्योक्तवर्णधर्मनिरूपणं नाम चतुर्नवतितमोऽध्यायः ॥ 94 ॥

॥याज्ञवल्क्य उवाच ॥
श्रृण्वन्तु मुनयो धर्मान् गृहस्थस्य यतव्रताः ॥
गुरवे च धनं दत्त्वा स्नात्वा च तदनुज्ञया ॥ 95.1 ॥

समापितब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत् ॥
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ 95.2 ॥

अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥
पञ्चमात्सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा ॥ 95.3 ॥

दशपुरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ॥
सवर्णः श्रोत्रियो विद्वान्वरो दोषान्वितो न च ॥ 95.4 ॥

यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ॥
न तन्मम मतं यस्मात्तत्रायं जायते स्वयम् ॥ 95.5 ॥

तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ॥
ब्राह्मणक्षत्त्रियविशां भार्य्याः स्वा शूद्रजन्मनः ॥ 95.6 ॥

ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ॥
तज्जः पुनात्युभयतः पुरुषोनेकविंशतिम् ॥ 95.7 ॥

यज्ञस्थायर्त्विजे दैवमादायार्षस्तु गोयुगम् ॥
चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ 95.8 ॥

इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने ॥
स कायः पावयेत्तज्जः षड्वंश्यानात्मना सह ॥ 95.9 ॥

आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः ॥
राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात् ॥ 95.10 ॥

चत्वारो ब्राह्मणस्याद्यास्तथा गान्धर्वराक्षसौ ॥
राज्ञस्तथासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥ 95.11 ॥

पाणिर्ग्राह्यः सवर्णासु गृह्णीत क्षत्त्रिया शरम् ॥
वैश्या प्रतोदमादद्याद्वेदने चाग्रजन्मनः ॥ 95.12 ॥

पिता पितामहो भ्राता सकुल्यो जननी तथा ॥
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ 95.13 ॥

अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ॥
एषामभावे दातृणां कन्या कुर्य्यात्स्वयंवरम् ॥ 95.14 ॥

सकृत्प्रदीयते कन्या हरंस्तां चोरदण्डभाक् ॥
अदुष्टां हि त्यजन्दण्ड्यः सुदुष्टां तु परित्यजेत् ॥ 95.15 ॥

अपुत्रीगुर्वनुज्ञातो देवरः पुत्रकान्यगा ॥
सपिण्डो वा समोत्रो वा घृताभ्यक्त ऋताविंयात् ॥ 95.16 ॥

आगर्भसम्भवं गच्छेत्पतितस्त्वन्यथा भवेत् ॥
अनेन विधिना जात क्षेत्रपस्य भवेत्सुतः ॥ 95.17 ॥

हृताधिकारां मलिनां पिण्डमात्रोपसेविनीम् ॥
परिभूतामधः शय्यां वासयेद्व्यभिचारिणीम् ॥ 95.18 ॥

सोमः शौचं ददौ तासां गन्धर्वश्च सुभां गिरम् ॥
पावकः सर्वमेध्यत्वं मेध्या वै योषितो यतः ॥ 95.19 ॥

व्यभिचाराद्दतौशुद्धिर्गर्भेत्यागं करोति च ॥
गर्भभर्त्तृवधे तासां तथा महति पातके ॥ 95.20 ॥

सुरापी व्याधिता द्वेष्ट्री वन्ध्यार्थघ्न्यप्रियंवदा ॥
अधिविन्ना च भर्तव्या महदेनोन्यथा भवेत् ॥ 95.21 ॥

यत्राविरोधो दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते ॥
मृते जीवति या पत्यौ या नान्यमुपगच्छति ॥ 95.22 ॥

सेह कीर्त्तिमवाप्नोति मोदते चोमया सह ॥
शुद्धां त्यजंस्तृतीयांशं दद्यादामरणं स्त्रियाः ॥ 95.23 ॥

स्त्रीभिर्भर्तुर्वचः कार्य्यमेष धर्मः परः स्त्रियाः ॥
षोडशर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ॥ 95.24 ॥

ब्रह्मचारी च पर्वाण्याद्याश्ततस्त्रस्तु वर्जयेत् ॥
एवं गच्छं स्त्रियं क्षामां मघां मूलां च वर्जयेत् ॥ 95.25 ॥

लक्षण्यं जनयेदेव पुत्रं रोगविवर्जितम् ॥
यथा कामी भवेद्वापि स्त्रीणां (स्म) वलमनुस्मरन् ॥ 95.26 ॥

स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतस्ततः ॥
भर्त्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ॥ 95.27 ॥

बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥
संयतो पस्करा दक्षा हृष्टा व्ययपराङ्मुखी ॥ 95.28 ॥

श्वश्रूश्वशुरयोः कुर्य्यात्पादयोर्वन्दनं सदा ॥
क्रीडाशरीरसंस्कारसमाजोत्सवदर्शनम् ॥ 95.29 ॥

हास्यं परगृहे यानं त्यजेत्प्रेषितभर्तृका ॥
रक्षेत्कन्यां पिता बाल्ये यौवने पतिरेव ताम् ॥ 95.30 ॥

वार्द्धक्ये रक्षते पुत्रो ह्यन्यथा ज्ञातयस्तथा ॥
पतिं विना न तिष्ठेत्तु दिवा वा यदि वा निशि ॥ 95.31 ॥

ज्येष्ठां धर्मविधौ कुर्य्यान्न कनिष्ठां कदाचन ॥
दाहयेदग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ॥ 95.32 ॥

आहरेद्विधिवद्दारानग्निं चैवाविलम्बितः ॥
हिता भर्त्तुर्दिवं गच्छेदिह कीर्त्तीरवाप्य च ॥ 95.33 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तगृहल्थधर्मनिर्णयो नाम पञ्चनवतितमोऽध्यायः ॥ 95 ॥

॥ याज्ञवल्क्य उवाच ॥

वक्ष्ये सङ्करजात्यादिगृहस्थादि विधिं परम् ॥
विप्रान्मूर्धावषिक्तो हि क्षात्त्रियायां विशः स्त्रियाम् ॥ 96.1 ॥

जातोऽम्बष्ठस्तु शूद्रायां निषादः पर्वतोऽपि वा ॥
माहिष्यः क्षत्त्रियाज्जातो वैश्यायां म्लेच्छसंज्ञितः ॥ 96.2 ॥

शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः ॥
ब्राह्मण्यां क्षत्त्रियात्सूतो वैश्याद्वैदेहकस्तथा ॥ 96.3 ॥

शूद्राज्जातस्तु चांडालः सर्ववर्णविगर्हितः ॥
क्षत्त्रिया मागधं वैश्याच्छूद्रा क्षेत्रावमेव च ॥ 96.4 ॥

शूद्रादयोगवं वैश्या जनयामास वै सुतम् ॥
माहिष्येण करण्यां तु रथकारः प्रजायते ॥ 96.5 ॥

असत्सन्तस्तु वै ज्ञेयाः प्रतिलोमानुलोमजाः ॥
जात्युत्कर्षाद्द्विजो ज्ञेयः सप्तमे पञ्चमेऽपि वा ॥ 96.6 ॥

व्यत्यये कर्मणां साम्यं पूर्ववच्चोत्तरावरम् ॥
कर्म स्मार्त्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ॥ 96.7 ॥

दायकालादृते वापि श्रौतं वैतानिकाग्निषु ॥
शरीरचिन्तां निर्वर्त्त्य कृतशौचविधिर्द्विजः ॥ 96.8 ॥

प्रातः सन्ध्यामुपासीत दन्तधावनपूर्वकम् ॥
हुत्वाग्नौ सूर्य्यदेवत्याञ्जपेन्मन्त्रान्समाहितः ॥ 96.9 ॥

वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ॥
योगक्षोमादिसिद्ध्यर्थमुपेयादीश्वरं गृही ॥ 96.10 ॥

स्नात्वा देवान्पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥
वेदानथ पुराणानि सेतिहासानि शक्तितः ॥ 96.11 ॥

जपयज्ञानुसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥
बलिकर्मस्वधाहोमस्वाध्यायातिथिसक्रियाः ॥ 96.12 ॥

भूतपित्रमरब्रह्ममनुष्याणां महामखाः ॥
देवेभ्यस्तु हुतं चाग्नौ क्षिपेद्भूतबलिं हरेत् ॥ 96.13 ॥

अन्नं भूमौश्वचाण्डालवायसेभ्यश्च निः क्षिपेत् ॥
अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम् ॥ 96.14 ॥

स्वाध्यायमन्वहं कुर्य्यान्न पचेच्चान्नमात्मने ॥
बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ॥ 96.15 ॥

संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥
प्राणाग्निहोत्रविधिनाश्नीयादन्नमकुत्सयन् ॥ 96.16 ॥

मितं विपाकं च हितं भक्ष्यं बालादिपूर्वकम् ॥
आपोशानेनोपरिष्टादधस्ताच्चैव भुज्यते ॥ 96.17 ॥

अनग्नमममृतं चैव कार्य्यमन्नं द्विजन्मना ॥
अतिथिभ्यस्तु वर्णेभ्यो देयं शक्त्याऽनुपूर्वशः ॥ 96.18 ॥

अप्रणोद्योऽतिथिः सायमपि नात्र विचारणा ॥
सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च ॥ 96.19 ॥

आगतान् भोजयेत्सर्वान्महोक्षं श्रोत्रियाय च ॥
प्रतिसंवत्सरं त्वर्च्याः स्नातकाचार्य्यपार्थिवाः ॥ 96.20 ॥

प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः ॥
अध्वनीनोऽतिथिः प्रोक्तः श्रोत्रियो वेदपारगः ॥ 96.21 ॥

मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥
परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ॥ 96.22 ॥

वाक्पाणिपादचापल्यं वर्जयच्चातिभोजनम् ॥
श्रोत्रियं वातिथिं तृप्तमासीमान्तादनुव्रजेत् ॥ 96.23 ॥

अहः शेषं सहासीत शिष्टैरिष्टैश्च बन्धुभिः ॥
उपास्य पश्चिमां सन्ध्यां हुत्वाग्नौ भोजनं ततः ॥ 96.24 ॥

कुर्य्याद्भृत्यैः समायुक्तैश्चिन्तयेदात्मनो हितम् ॥
ब्राह्मे मुहूर्त्ते चोत्थाय मान्यो विप्रो धनादिभिः ॥ 96.25 ॥

वृद्धार्त्तानां समादेयः पन्था वै भारवाहिनाम् ॥
इज्याध्ययनदानानि वैश्यस्य क्षत्त्रियस्य च ॥ 96.26 ॥

प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ॥
प्रधानं क्षत्त्रिये कर्म प्रजानां परिपालनम् ॥ 96.27 ॥

कुसीदकृषिवाणिज्यं पाशुपाल्यं विशः स्मृतम् ॥
शूद्रस्य द्विजशुश्रूषा द्विजो यज्ञान्न हापयेत् ॥ 96.28 ॥

अहिंसा सत्यमस्तेयं शौचमिन्द्रियसंयमः ॥
दमः क्षमार्जवं दानं सर्वेषां धर्मसाधनम् ॥ 96.29 ॥

आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा ॥
त्रैवार्षिका धिकान्नो यः स सोमं पातुमर्हति ॥ 96.30 ॥

स्यादन्नं वार्षिकं यस्य कुर्य्यात्प्राकसौमिकीं क्रियाम् ॥
प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ॥ 96.31 ॥

कर्त्तव्याऽऽग्रहणेष्टिश्च चातुर्मास्यानि यत्नतः ॥
एषामसम्भवे कुर्य्यादिष्टिं वैश्वानरीं द्विजः ॥ 96.32 ॥

हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम् ॥
चण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात ॥ 96.33 ॥

यज्ञार्थलब्धं नाददद्याद्भासः काकोऽपि वा भवेत् ॥
कुसूतकुम्भीधान्यो वा त्र्याहिकः श्वस्तनोऽपि वा ॥ 96.34 ॥

जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः ॥
न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः ॥ 96.35 ॥

राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ॥
दम्भहैतुकपाषण्डिबकवृत्तींश्च वर्जयेत् ॥ 96.36 ॥

शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः ॥
न भार्य्यादर्शनेऽश्रीयान्नैकवासा न संस्थितः ॥ 96.37 ॥

अप्रियं न वदेज्जातु ब्रह्मसूत्री विनीतवान् ॥
देवप्रदक्षिणाङ्कुर्य्याद्यष्टिमान्सकमण्डलुः ॥ 96.38 ॥

न तु मेहेन्नदीच्छायाभस्मगोष्टाम्बुवर्त्मसु ॥
न प्रत्यग्न्यर्कगोसोमसन्ध्याम्बुस्त्रीद्विजन्मनाम् ॥ 96.39 ॥

नेक्षेताग्न्यर्कनग्नां स्त्रीं न च संसृष्टमैथुनाम् ॥
न च मूत्रं पुरीषं वा स्वपेत्प्रत्यकूशिरा न च ॥ 96.40 ॥

ष्टीवनासृक्शकृन्मूत्रविषाण्यप्सु न संक्षिपेत् ॥
पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् ॥ 96.41 ॥

पिबेन्नाञ्जलिना तोयं न शयानं प्रबोधयेत् ॥
नाक्षैः क्रीडेच्च कितवैर्व्याधितैश्च न संविशेत् ॥ 96.42 ॥

विरुद्धं वर्जयेत्कम प्रेतधूमं नदीतटम् ॥
केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥ 96.43 ॥

नाचक्षीत धयन्तीं गां नाद्वारेणाविशेत्क्वचित् ॥
न राज्ञः प्रतिगृह्णायाल्लुब्धस्योच्छास्त्रवर्त्तिनः ॥ 96.44 ॥

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ॥
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य च ॥ 96.45 ॥

पौषमासस्य रोहिण्यामष्टकायामथापि वा ॥
जलान्ते छन्दसां कुर्य्यादुत्सर्गं विधिवद्वहिः ॥ 96.46 ॥

अनध्यायस्त्र्यहं प्रेते शिष्यर्त्त्विग्गुरुबन्धुषु ॥
उपाकर्मणि चोत्सर्गे स्वशाखश्रोत्रिये मृते ॥ 96.47 ॥

सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ॥
समाप्य वेदं त्वनिशमारण्यकमधीत्य च ॥ 96.48 ॥

पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ॥
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥ 96.49 ॥

पशुमण्डूकनकुलश्वाहिमार्जारसूकरैः ॥
कृतेऽन्तरे त्वहोरात्रं शुक्रपाते तथोच्छ्र्ये ॥ 96.50 ॥

श्वक्रोष्टुगर्दभोलूकसामबाणार्त्तनिः स्वने ॥
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥ 96.51 ॥

देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ॥
भुक्त्वार्द्रपाणिरम्भोऽन्तरर्द्धरात्रेऽतिमारुते ॥ 96.52 ॥

दिग्दाहे पांशुवर्षेषु सन्ध्यानी हारभीतिषु ॥
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ 96.53 ॥

खरोष्ट्रयानहस्त्यश्वनौवृक्षगिरिरोहणे ॥
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः ॥ 96.54 ॥

वेददिष्टं तथाचार्य्यं राजच्छायां परस्त्रियम् ॥
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनानि च ॥ 96.55 ॥

विप्राहिक्षत्त्रियात्मानो नावज्ञेयाः कदाचन ॥
दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ॥ 96.56 ॥

श्रुतिस्मृत्युक्तमाचारं कुर्य्यान्मर्मणि न स्पृशेत् ॥
न निन्दाताडने कुर्य्यात्सुतं शिष्यं च ताडयेत् ॥ 96.57 ॥

आचरेत्सर्वदा धर्मं तद्विरुद्धं तु नाचरेत् ॥
मातापित्रतिथीभ्याढ्यैर्विवादं नाचरेद्गृही ॥ 96.58 ॥

पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिषु ॥
स्नायान्नदीप्रस्रवणदेवखातह्रदेषु च ॥ 96.59 ॥

वर्जयेत्परशय्यादि न चाश्रीयादनापदि ॥
कदर्य्यबद्धचो (वै) राणां तथा चानग्निकस्य च ॥ 96.60 ॥

वैणाभिशस्तवार्द्धुष्यगणिकागणदीक्षिणाम् ॥
चिकित्सकातुरक्रुद्धक्लीबरङ्गोपजीविनाम् ॥ 96.61 ॥

क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥
शास्त्रविक्रयिणश्चैव स्त्रीजितग्रामयाजिनाम् ॥ 96.62 ॥

नृशंसराजरजककृतघ्नवधजीविनाम् ॥
पिशुनानृतिनोश्चैव सोमविक्रयिणस्तथा ॥ 96.63 ॥

वन्दिनां स्वर्णकाराणामन्नमेषां कदाचन ॥
न भोक्तव्यं वृथा मांसं केशकीटसमन्वितम् ॥ 96.64 ॥

भक्तं पर्य्युषितोच्छिष्टं श्वस्पृष्टं पतितो (ते) क्षितम् ॥
उदक्यास्पृष्टसंघुष्टमपर्य्याप्तं च वर्जयेत् ॥ 96.65 ॥

गोघ्रातं शकुनोच्छिष्टं पादस्पृष्ट च कामतः ॥
शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः ॥ 96.66 ॥

भोज्यान्नो नापितश्चैव यश्चात्मानं निवेदयेत् ॥
अन्नं पर्य्युषितं भोज्यं स्नेहाक्तं चिरसंभृ (स्थि) तम् ॥ 96.67 ॥

अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥
औष्ट्रमैकशफं स्त्रीणां पयश्च परिवर्जयेत् ॥ 96.68 ॥

क्रव्यादपक्षिदात्यूहशुकमांसानि वर्जयेत् ॥
सारसैकशफान्हंसान्बलाकबकटिट्टिभान् ॥ 96.69 ॥

वृथा कृसरसंयाव पायसापूपशष्कुलीः ॥
कुररं जालपादं च खञ्जरीटमृगद्विजान् ॥ 96.70 ॥

चाषान्मत्स्यात्रक्तपादञ्चग्द्ध्वा वै कामतो नरः ॥
बन्धुरं कामतो जग्द्ध्वा सोप वासस्त्र्यहं भवेत् ॥ 96.71 ॥

पलाण्डुलशुनादीनि जग्द्ध्वा चान्द्रायणं चरेत् ॥
श्राद्धे देवान्पितॄन्प्राच्र्य खादन्मांसं न दोषभाक् ॥ 96.72 ॥

वसेत्स नरके घोर दिनानि पशुरोमतः ॥
सम्मितानि दुराचारो यो हन्त्यविधिना पशून् ॥
मांसं सन्त्यज्य संप्रार्थ्य कामान्याति ततो हरिम् ॥ 96.73 ॥

इति श्रीगारुजे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तश्राद्धनिरूपणं नाम षण्णवतितमोऽध्यायः ॥ 96 ॥

॥याज्ञवल्क्य उवाच ॥
द्रव्यशुद्धिंप्रवक्ष्यामि तन्निबोधत सत्तमाः ॥
सौवर्णराजताब्जानां शङ्खरज्ज्वादिचर्मणाम् ॥ 97.1 ॥

पात्राणां चासनानां च वारिणा शुद्धिरिष्यते ॥
उष्णवाभः स्रुक्स्रुवयोर्धान्यादेः प्रोक्षणेन च ॥ 97.2 ॥

तक्षणाद्दारुश्रृङ्गादेर्यज्ञपात्रस्य मार्जनात् ॥
सोष्णैरुदकगोमूत्रैः शुध्यत्याविककौशिकम् ॥ 97.3 ॥

भैक्ष्यं योषिन्मुखं पश्यन्पुनः पाकान्महीमयम् ॥
गोघ्नातेऽन्ने तथा केशमक्षिकाकीटदूषिते ॥ 97.4 ॥

भस्मक्षेपाद्विशुद्धिः स्याद्भूशुद्धिर्माजनादिना ॥
त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ॥ 97.5 ॥

भस्माद्भिर्लोहकांस्यानामज्ञातं च सदा शुचि ॥
अमेध्याक्तस्य मृत्तोयैर्गन्धलेपापकर्षणात् ॥ 97.6 ॥

शुचि गोतृप्तिदं तोयं प्रकृतिस्थं महीगतम् ॥
तथा मांसं श्वचाण्डालक्रव्यादादिनिपातितम् ॥ 97.7 ॥

रश्मिरग्नी रजश्छाया गौरश्वो वसुधानिलाः ॥
अश्वाजविप्रुषो मेध्या स्तथाचमनबिन्दवः ॥ 97.8 ॥

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्याप्रसर्पणे ॥
आचान्तः पुनराचामेद्वासोऽन्यत्परिधाय च ॥ 97.9 ॥

क्षुते निष्ठीविते स्वापे परिधानेऽश्रुपातने ॥
पञ्चस्वेतेषु नाचामेद्दक्षिणं श्रवणं स्पृशेत् ॥
तिष्ठन्त्यग्न्यादयो देवा विप्रकर्णे तु दक्षिणे ॥ 97.10 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तद्रव्यशुद्धिनिरूपणं नाम सप्तनवतितमोऽध्यायः ॥ 97 ॥

॥याज्ञवल्क्य उवाच ॥

अथ दानिविधिं वक्ष्ये तन्मे श्रृणुत सुव्रताः ॥
अन्येभ्यो ब्राह्मणाः श्रेष्ठास्तेभ्यश्चैव क्रियापराः ॥ 98.1 ॥

ब्रह्मवेत्ता च तेभ्योऽपि पात्रं विद्यात्तपोऽन्विताः (तम्) ॥
गोभूधान्यहिरण्यादि पात्रे दातव्यमर्चितम् ॥ 98.2 ॥

विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ॥
गृह्णन्प्रदातारमधो नयत्यात्मानमेव च ॥ 98.3 ॥

दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ॥
याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः ॥ 98.4 ॥

हेमश्रृङ्गी शफैः रौप्यैः सुशीला वस्त्रसंयुता ॥
सकांस्यापात्रा दातव्या क्षीरिणी गौः सदक्षिणा ॥ 98.5 ॥

दशसौवर्णिकं श्रृङ्गं शफं सप्तपलैः कृतम् ॥
पञ्चाशत्पलिकं पात्रं कांस्यं वत्सस्य कीर्त्त्यते ॥ 98.6 ॥

स्वर्णपिप्पलपात्रेण वत्सो वा वत्सिकापि वा ॥
अस्या अपि च दातव्यमपत्यं रोगवर्जितम् ॥ 98.7 ॥

दाता स्वर्गमवाप्नोति वत्सरान्रोमसंमितान् ॥
कपिला चेत्तारयते भूयश्चासप्तमं कुलम् ॥ 98.8 ॥

यावद्वत्सस्य द्वौ पादौ मुखं योन्यां प्रदृश्यते ॥
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ 98.9 ॥

यथा कथञ्चिद्दत्त्वा गां धेनुं वाऽधेनुमेव वा ॥
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥ 98.10 ॥

श्रान्तसंवाहनं रोगिपरिचर्य्या सुरार्चनम् ॥
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥ 98.11 ॥

द्विजाय यदभीष्टं तु दत्त्वा स्वर्गमवाप्नुयात् ॥
भूदीपांश्चान्नवस्त्राणि सर्पिर्दत्त्वा व्रजेच्छ्रियम् ॥ 98.12 ॥

गृहधान्यच्छत्रमाल्यवृक्षयानघृतं जलम् ॥
शय्यानुलेपनं दत्त्वा स्वर्गलोके महीयते ॥ 98.13 ॥

ब्रह्मदाता ब्रह्मलोकं प्राप्नोति सुरदुर्लभम् ॥
वेदार्थयज्ञशास्त्राणि धर्मशास्त्राणि चैव हि ॥ 98.14 ॥

मूल्येनापि लिखित्वापि ब्रह्मलोकमवाप्नुयात् ॥
एतन्मूलं जगद्यस्मादसृजत्पूर्वमीश्वरः ॥ 98.15 ॥

तस्मात्सर्वप्रयत्नेन कार्य्यो वेदार्थसंग्रहः ॥
इतिहासपुराणं वा लिखित्वा यः प्रयच्छति ॥ 98.16 ॥

ब्रह्मदानसमं पुण्यं प्राप्नोति द्विगुणोन्नतिम् ॥
लोकायतं कुतर्कश्च प्राकृतम्लेच्छभाषितम् ॥ 98.17 ॥

न श्रोतव्यं द्विजेनैतदधो नयति तं द्विजम् ॥
समर्थो यो न गृह्णीयाद्दातृलोकानवाप्नुयात् ॥ 98.18 ॥

कुशाः शाकं पयो गन्धाः प्रत्याख्येया न वारि च ॥
अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ॥ 98.19 ॥

अन्यत्र कुलटाषण्डपतितेभ्यो द्विषस्तथा ॥
देवातिथ्यर्चनकृते पितृतृप्त्यर्थमेव च ॥
सर्वतः प्रतिगृह्णीयादात्मतृप्त्यर्थमेव च ॥ 98.20 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तदानधर्मनिरूपणं
नामाष्टनवतितमोऽध्यायः ॥ 98 ॥

॥याज्ञवल्क्य उवाच ॥
अथ श्राद्धविधिं वक्ष्ये सर्वपापप्रणाशनम् ॥
अमावस्याष्टकावृद्धिकृष्णपक्षायनद्वयम् ॥ 99.1 ॥

द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्य्यसंक्रमः ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः ॥ 99.2 ॥

श्राद्धं प्रतिरुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः ॥
अग्नियः सर्वदेवेषु श्रोत्रियो वेदविद्युवा ॥ 99.3 ॥

वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णिकः ॥
स्वस्त्रीयऋत्विगजामातायज्यश्वशुरमातुलाः ॥ 99.4 ॥

त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः ॥
कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निब्रह्मचारिणः ॥ 99.5 ॥

पितृमातृपराश्चैव ब्राह्मणाः श्राद्धदेवताः ॥
रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ॥ 99.6 ॥

अवकीर्ण्याद यो ये च ये चाचारविवर्जिताः ॥
अवैष्णवाश्च ते सर्वे न श्राद्धार्हाः कदाचन ॥ 99.7 ॥

निमन्त्रयेच्च पूर्वेद्युर्द्विजैर्भाव्यं च संयतैः ॥
आजान्तांश्चैव पूर्वाह्णेह्यासनेषूपवेशयेत् ॥ 99.8 ॥

युग्मान्देवे तथा पित्र्ये स्वप्रदेशेषु शक्तितः ॥
द्वौ दैव प्रागुदक् पित्र्ये त्रीण्येकं चोभयोः पृथक् ॥ 99.9 ॥

मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥
हस्तप्रक्षालनं दत्त्वा विष्टरार्थे कुशानपि ॥ 99.10 ॥

आवाह्य तदनुज्ञातो विश्वदेवासइत्यृचा ॥
यवैरन्नं विकीर्य्याथ भोजने सपवित्रके ॥ 99.11 ॥

शन्नोदेव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा ॥
यादिव्या इति मन्त्रेण हस्तेष्वेव विनिः क्षिपेत् ॥ 99.12 ॥

गन्धोदके तथा दीपमाल्यदामप्रदीपकम् ॥
अपसव्यं ततः कृत्वा पितृणामप्रदक्षिणम् ॥ 99.13 ॥

द्विगुणांस्तु कुशान्दत्त्वा उशन्तस्त्वेत्यृचा पितॄन् ॥
आवाह्य तदनु ज्ञातो जपेदायन्तुनस्ततः ॥ 99.14 ॥

यवार्थस्तु तिलैः कार्य्यः कुर्य्यादर्घ्यादि पूर्ववत् ॥
दत्त्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ॥ 99.15 ॥

पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ॥
अग्नौ करिष्य आदाय पृच्छत्यन्नं घृप्लुतम् ॥ 99.16 ॥

कुरुष्वेति तथोक्तोसौ हुत्वाग्नौ पितृयज्ञवत् ॥
हुतशेषं प्रदद्याच्च भाजनेषु समाहितः ॥ 99.17 ॥

यथालाभोपपन्नेषु रौप्येषु च विशेषतः ॥
दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम् ॥ 99.18 ॥

कृत्वे दंविष्णुरित्येवं द्विजाङ्गुष्ठं निवेशयेत् ॥
सव्याहृतिं च गायत्रीं मधुवातेत्यृचस्तथा ॥ 99.19 ॥

जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥
अन्नमिष्टं हविष्यं च दद्यादक्रोधनोत्वरः ॥ 99.20 ॥

आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा ॥
अन्नमादाय तृप्ताः स्थः शेषं चैवान्नमन्वहम् च ॥ 99.21 ॥

तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत्सकृत् ॥
सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ॥ 99.22 ॥

उच्छिष्टसन्निधौ पिण्डान्प्रदद्यात्पितृयज्ञवत् ॥
मातामहानामप्येवं दद्यादाचमनं ततः ॥ 99.23 ॥

स्वस्ति वाच्यं ततो दद्यादक्षय्योदकमेव च ॥
दत्त्वा च दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ॥ 99.24 ॥

वाच्यतामिन्यनुज्ञातः पितृभ्यश्च स्वधोच्यताम् ॥
विप्रैरस्तु स्वधेत्युक्तो भूमौ सिञ्चेत्ततो जलम् ॥ 99.25 ॥

प्रीयन्तामिति चाहैवं विश्वेदेव्यं जलं ददत् ॥
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ॥ 99.26 ॥

श्रद्धा च नो मा व्यगमद्वहु देयं च नोऽस्त्विवति ॥
इत्युक्तोऽपि प्रिया वाचः प्रणिपत्य विसर्जयेत् ॥ 99.27 ॥

वाजेवाजे इति प्रीत्या पितृपूर्वं विसर्जनम् ॥
यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निपातिताः ॥ 99.28 ॥

पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत् ॥
प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ॥ 99.29 ॥

ब्रह्मचारीं भवेत्तां तु रजनीं भार्य्यया सह ॥
एवं प्रदक्षिणं कृत्वा वृद्धौ नान्दीमुखानपि ॥ 99.30 ॥

यजेत्तदधिकर्कन्धूमिश्राः पिण्डा यैवः श्रिताः ॥
एकोद्दिष्टं दैवहीनं एकान्नैकपवित्रकम् ॥ 99.31 ॥

आवाहनाग्नौकरणरहितं त्वपसव्यवत् ॥
उपतिष्ठतामित्यक्षय्यस्थाने विप्रान्विसर्जयेत् ॥ 99.32 ॥

अभिरम्यतां प्रब्रूयाद् ब्रुयुस्तेभिरताः स्म ह ॥
गन्धो दकतिलैर्मिश्रं कुर्य्यात्पात्रचतुष्टयम् ॥ 99.33 ॥

अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ॥ 99.34 ॥

एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥
अर्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत् ॥ 99.35 ॥

तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजः ॥
पिण्डांश्च गोज विप्रेभ्यो दद्याद्ग्नौ जलेऽपि वा ॥ 99.36 ॥

हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ॥
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥ 99.37 ॥

ऐणरौरववा राहशाशमांसैर्यथाक्रमम् ॥
मासवृद्ध्यापि तुष्यन्ति दत्तैरिह पितामहाः ॥ 99.38 ॥

दद्याद्वर्षात्रयोदश्यां मघासु च न संशयः ॥
प्रतिपत्प्रभृतिष्वेवं कन्या दीश्राद्धदो लभेत् ॥ 99.39 ॥

शस्त्रेण निहतानां तु चतुर्दश्यां प्रदीयते ॥
स्वर्गं ह्यपत्यमोजश्च शौर्य्यं क्षेत्रं बलं तथा ॥ 99.40 ॥

पुत्रश्रैष्ट्यं स सौभाग्यं समृद्धिं मुख्यतां शुभम् ॥
प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतींस्तथा ॥ 99.41 ॥

अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥
धनं विद्यां च वाक्सिद्धिं कुप्यं गोजाविकं तथा ॥ 99.42 ॥

अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ॥
कृत्तिकादिभरण्यन्तं स कामान्प्राप्नुयादिमान् ॥ 99.43 ॥

वस्त्राद्याः प्रीणयन्त्येव नरं श्राद्धकृतं द्विजाः ॥
आयुः प्रजा धनं विद्यां स्वर्गमोक्षसुखानि च ॥ 99.44 ॥

प्रयच्छति यथा राज्यं प्रीत्या नित्यं पितामहः ॥ 99.45 ॥

इति श्रागारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तश्राद्धविधिनिरूपणं नाम नवनवतितमोऽध्यायः ॥ 99 ॥

॥याज्ञवल्क्य उवाच ॥
विनायकोपसृष्टस्य लक्षणानि निबोधत ॥
स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥ 100.1 ॥

विमना विफलारम्भः संसदित्यनिमित्ततः ॥
राजा राज्यं कुमारी च पतिं पुत्रं च गुर्विणी ॥ 100.2 ॥

नाप्नुयात्स्नापनं तस्य पुण्येऽह्निविधिपूर्वकम् ॥
गौरसर्षपकल्केन साज्येनोत्सारितस्य तु ॥ 100.3 ॥

सर्वौषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा ॥
भद्रासनोपविष्टस्य स्वस्ति वाच्यं द्विजाञ्छुभान् ॥ 100.4 ॥

मृत्तिकां रोचनां गन्धान् गुग्गुलुं चाप्सु निः क्षिपेत् ॥
या आहृता एकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ॥ 100.5 ॥

चर्मण्यानुडुहे रक्ते स्थाप्यं भद्रासने तथा ॥
सहस्त्राक्षं शतधारमृषिभिः पावनं स्मृतम् ॥ 100.6 ॥

तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥
भगं तु वरुणो राजा भगं सूर्य्यो बृहस्पतिः ॥ 100.7 ॥

भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि ॥ 100.8 ॥

ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नुंतु ते सदा ॥
स्नातस्य सार्षपं तैलं स्नुवेणौदुम्बरेण तु ॥ 100.9 ॥

जुहुयान्मूर्द्धनि कुशान्सव्येन परिगृह्य च ॥
मितश्चसमितश्चैव तथा शालकटङ्कटौ ॥ 100.10 ॥

कुष्माण्डो राजपुत्रश्च अन्ते स्वाहासमन्वितैः ॥
दद्याच्चतुष्पथे भूमौ कुशानास्तीर्य्य सर्वशः ॥ 100.11 ॥

कृताकृतांस्तण्डुलांश्च पललौदनमेव च ॥
पुष्पं चित्रं सुगन्धं च सुरां च त्रिविधामपि ॥ 100.12 ॥

मूलकं पूरिकापूपं तथैवौण्डेरकस्रजः ॥
दधि पायसमन्नं च गुडपिष्टं समोदकम् ॥ 100.13 ॥

एतान्सर्वानुपाहृत्य भूमौ कृत्वा ततः शिरः ॥
अम्बिकामुपतिष्ठेच्च दद्यादर्घ्यं कृताञ्जलिः ॥ 100.14 ॥

दूर्वासर्षपपुष्पैश्च पुत्रजन्मभिरन्ततः ॥
कृतस्वस्त्ययनं चैव प्रार्थयेदम्बिकां सतीम् ॥ 100.15 ॥

रूपं देहि यशोदेहि भाग्यं भगवति ! देहि मे ॥
पुत्रान्देहि श्रियं देहि सर्वान्कामांश्च देहि मे ॥ 100.16 ॥

ब्राह्मणान् भोजयेत्पश्चाच्छुक्लवस्त्रानुलेपनैः ॥
वस्त्रयुग्मंगुरोर्दद्यासंपूज्य च ग्रहांस्तथा ॥
श्रेयः कर्मफलं विन्द्यात्सूर्यार्चनरतस्तथा ॥ 100.17 ॥

इति श्रागारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्लोक्तगणपतिकल्पनिरूपणं नाम
शततमोऽध्यायः ॥ 100 ॥

॥ याज्ञवल्क्य उवाच ॥
श्रीकामः शान्तिकामो वा ग्रहदृष्ट्यभिचारवान् ॥
ग्रहयंज्ञं समं कुर्य्याद्ग्रहाश्चैते बुधैः स्मृताः ॥ 101.1 ॥

सूर्य्यः सोमो मङ्गलश्च बुधश्चैव बृहस्पतिः ॥
शुक्रः शनैश्चरो राहुः केतुर्ग्रहगणाः स्मृताः ॥ 101.2 ॥

ताम्रकांस्यस्फाटिकाद्रक्तचन्दनात्स्वर्णकादुभौ ॥
रजतादयसः सीसात्कांस्याद्वर्णान्निबोधत ॥ 101.3 ॥

रक्तः शुक्लस्तथा रक्तः पीतः पीतः सितोसितः ॥
कृष्णः कृष्णः क्रमाद्वर्णा द्रव्याणि मुनयस्ततः ॥ 101.4 ॥

स्थापयेद्गहवर्णानि होमार्थं प्रलिखेत्पटे ॥
स्नापयेद्धोमयेच्चैव ग्रहद्रव्यैर्विधानतः ॥
सुवर्णानि प्रदेयानि वासांसि सुसुमानि च ॥ 101.5 ॥

गन्धाश्च बलयश्चैव धूपो देयश्चगुग्गुलुः ॥
कर्त्तव्यास्तत्र मन्त्रैश्च चरवः प्रतिदैवतम् ॥ 101.6 ॥

आकृष्णेन इमंदेवा अग्निर्मूर्द्धादिवः ककुत् ॥
उब्दुध्यस्वेति जुहुयादेभिरेव यथाक्रमम् ॥ 101.7 ॥

बृहस्पतेपरिदीयेति सर्वे अन्नात्परिसुतम् ॥
शन्नोदेवी कयानश्च केतुंक्रण्वन्निति क्रमात् ॥ 101.8 ॥

अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ॥
औदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ 101.9 ॥

होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्वितः ॥
गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम् ॥ 101.10 ॥

दध्योदनं हविः पूपान्मांसं चित्रान्नमेव च ॥
दद्याद्गहक्रमादेतान् ग्रहेभ्यो भोजनं ततः ॥ 101.11 ॥

धेनुः शङ्खस्तथानड्वान्हेम वासो हयस्तथा ॥
कृष्णा गौरायसं छाग एता वै दक्षिणाः क्रमात् ॥
ग्रहाः पूज्याः सदा यस्माद्रज्यादि प्राप्यते फलम् ॥ 101.12 ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तग्रहशान्तिनिरूपणं नामैकोत्तरशततमोऽध्यायः ॥ 101 ॥

॥ याज्ञवल्क्य उवाच ॥
वानप्रस्थाश्रमं वक्ष्ये तच्छृण्वन्तु महर्षयः ॥
पुत्रेषु भार्यां निः क्षिप्य वनं गच्छेत्सहैव वा ॥ 102.1 ॥

वानप्रस्थो ब्रह्मचारी साग्निः सोपासनः क्षमी ॥
अफालकृष्टेनाग्नींश्च पितृदेवातिथींस्तथा ॥ 102.2 ॥

भृत्यांस्तु तर्पयेच्छमश्रुजटालोमभृदात्मवान् ॥
दान्तस्त्रिसवर्णस्नायी निवृत्तश्च प्रतिग्रहात् ॥ 102.3 ॥

स्वाध्यायवान्ध्यानशीलः सर्वभूतहितेरतः (तिः) ॥
अह्नो मासस्य मध्ये वा कुर्य्यादर्वार्थपरिग्रहम् ॥ 102.4 ॥

कृतं त्यजेदाश्वयुजे युञ्जेत्कालं व्रतादिना ॥
पक्षे मासेथवाश्नीयाद्दन्तोलूखलिको भवेत् ॥ 102.5 ॥

चान्द्रायणी स्वपेद्भूमौ कर्म कुर्य्यात्फलादिना ॥
ग्रीष्मे पंचाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ॥ 102.6 ॥

आर्द्रवासास्तु हेमन्ते योगाभ्यासाद्दिनं नयेत् ॥
यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति ॥
अक्रुद्धः परितुष्टश्च समस्तस्य च तस्य च ॥ 102.7 ॥

इति श्रीगारुजे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तवानप्रस्थधर्मनिरूपणं नाम द्वयधिकशततमोऽध्यायः ॥ 102 ॥

॥ याज्ञवल्क्य उवाच ॥
भिक्षोर्धर्मं प्रवक्ष्यामितिनिबोधत सत्तमाः ॥
वनाद्गृहाद्वा कृत्वेष्टिं सर्ववेदसदक्षिणाम् ॥ 103.1 ॥

प्राजापत्यन्तदन्तेऽपि अग्निमारोप्य चात्मनि ॥
सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ॥ 103.2 ॥

सर्वारामं परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ॥
अप्रमत्तश्चरेद्भैक्ष्यं सायाह्ने नाभिलक्षितः ॥ 103.3 ॥

रोहिते भिक्षुकैर्ग्रामे यात्रामात्र मलोलुपः ॥
भवेत्परमहंसो वा एकदण्डी यमादितः ॥ 103.4 ॥

सिद्धयोगस्त्यजन्देहममृतत्वमिहाप्नुयात् ॥
दाताऽतिथिप्रियो ज्ञानी गृही श्राद्धेऽपिमुच्यते ॥ 103.5 ॥

इति श्रागारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तवानप्रस्थसन्न्यासधर्मनिरूपणं नाम त्र्युत्तरशततमोऽध्यायः ॥ 103 ॥

॥याज्ञवल्क्य उवाच ॥
नरकात्पताकोद्भूतात्क्षयात्पापस्य कर्मणः ॥
ब्रह्महा श्वा खरोष्ट्रः स्याद्बेको यकः सुराप्यपि ॥ 104.1 ॥

स्वर्णचोरः कृमिः कीटः तृणादिर्गुरुतल्पगः ॥
क्षयरोगी श्यावदन्तः कुनखी शिपिविष्टकः ॥ 104.2 ॥

ब्रह्महत्याक्रमात्स्युश्च तत्सर्वं वा शिशोर्भवेत् ॥
अन्नहर्त्ता मयावी स्यान्मूको रागापहारकः ॥ 104.3 ॥

धान्यहार्य्यतिरिक्ताङ्गः पिशुनः पूतिनासिकः ॥
तैलाहारी तैलपायी पूतिवक्त्रस्तु सूचकः ॥ 104.4 ॥

ब्रह्मस्वं कन्यकां क्रीत्वा वने रक्षो भवेद्वृषः ॥
रत्नहृद्धीनजातः स्यात्पत्रशाकहरः शिखी ॥ 104.5 ॥

गुच्छं चुचुन्दरी हृत्वा धान्यहृन्मूषको भवेत् ॥
फलं कपिः पशून्हृत्वा त्वजा काकः पयस्तथा ॥ 104.6 ॥

मांसं गृध्रः पटं श्वित्री चीरीलवणहारकः ॥
यथाकर्म फलं प्राप्य तिर्यक्त्वं कालपर्ययात् ॥ 104.7 ॥

जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः ॥
ततो निष्कलुषीभूता कुले महति योगिनः ॥ 104.8 ॥

जायन्ते लक्षणोपेता धनधान्यसमन्विताः ॥ 104.9 ॥

इति श्रागारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तकर्मविपाकनिरूपणं नाम
चतुरुत्तरशततमोऽध्यायः ॥ 104 ॥

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ॥
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ 105.1 ॥

तस्माद्यत्नेन कर्त्तव्यं प्रायश्चित्तं विशुद्धये ॥
एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति ॥ 105.2 ॥

लोकः प्रसीदेदात्मैवं प्रायश्चित्तैरघक्षयः ॥
प्रायश्चित्तमकुर्वाणाः पश्चात्तापविवर्जिताः ॥ 105.3 ॥

नरकान्यान्ति पापा वै महारौरवरौरवान् ॥
तामिस्रं लोहशङ्कुं च पूतिगन्धसमाकुलम् ॥ 105.4 ॥

हंसाभं लोहितोदं च सञ्जीवननदीपथम् ॥
महानिलयकाकोलमन्धतामिस्रवापनम् ॥ 105.5 ॥

अविचीं कुम्भीपाकं च यान्ति पापा ह्यपुण्यतः ॥
ब्रह्महा मद्यपः स्तेयी संयोगी गुरुतल्पगः ॥ 105.6 ॥

गुरुनिन्दा वेदनिन्दा ब्रह्महत्यासमे ह्युभे ॥
निषिद्धभक्षणं जिह्मक्रियाचरणमेव च ॥ 105.7 ॥

रजस्वलामुखास्वादः सुरापानसमानि तु ॥
अश्वरत्नादिहरणं सुवर्णस्तेयसम्मितम् ॥ 105.8 ॥

सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च ॥
सगोत्रासु तथा स्त्रीषु गुरुतल्पसमं स्मृतम् ॥ 105.9 ॥

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ॥
मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा ॥ 105.10 ॥

आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥
छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा ॥ 105.11 ॥

गोवधो व्रात्यतास्तेयमृणानां च परिक्रिया ॥
अनाहिताग्निताऽपण्यविक्रयः परिवेदनम् ॥ 105.12 ॥

भृत्याचाध्ययनादानं भृतकाध्यापनमन्तथा ॥
पारदार्य्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया ॥ 105.13 ॥

सच्छूद्रविट्क्षत्त्रबन्धोर्निन्दितार्थोपजीविता ॥
नास्तिक्यं व्रतलोपश्च शूल्यं गोश्वेव विक्रयः ॥ 105.14 ॥

पितृमातृसुहृत्त्यागस्तडागारामविक्रयः ॥
कन्यायादूषण चैव परिविन्दकयाजनम् ॥ 105.15 ॥

कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥
आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् ॥ 105.16 ॥

स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च ॥
असच्छास्त्राभिगमनं भार्य्यात्मपरिवि क्रयः ॥ 105.17 ॥

उपपापानि चोक्तानि प्रायश्चित्तं निबोधत ॥
शिरः कपालध्वजवान् भिक्षाशी कर्म वेदयन् ॥ 105.18 ॥

ब्रह्महा द्वादश समा मितभुक् शुद्धिमाप्नुयात् ॥
लोमभ्यः स्वाहेति च वा लोमप्रभृति वै तनुम् ॥ 105.19 ॥

मज्जान्तां जुहुयाद्वापि स्वस्वमन्त्रैर्यथाक्रमम् ॥
शुद्धिः स्याद्ब्राह्मणत्राणात्कृत्वैवं शुद्धिरेव च ॥ 105.20 ॥

निरातङ्कं द्विजं गां च ब्राह्मणार्थे हतोऽपि वा ॥
अरण्ये नियतो जुप्त्वा त्रिः कृत्वो वेदसंहिताम् ॥ 105.21 ॥

सरस्वतीं वा संसेव्यं धनं पात्रे समर्पयेत् ॥
यागस्थक्षत्रविड्घाते चरेद्ब्रह्महणो व्रतम् ॥ 105.22 ॥

गर्भहा वा यथावर्णं तथात्रेयीनिषू (सू) दनम् ॥
चरेद्वरतमहत्वापि घातनार्थमुपागतः ॥ 105.23 ॥

द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमाचरेत् ॥
सुराम्बुघृतगोमूत्रं पीत्वा शुद्धिः सुरापिणः ॥ 105.24 ॥

अग्निवर्णं घृतं वापि चीरवास जटी भवेत् ॥
व्रतं ब्रह्महणः कुर्य्यात्पुनः संस्कारमर्हति ॥ 105.25 ॥

रेतेविण्मूत्रपानाच्च सुरापा ब्राह्मणी तथा ॥
पतिलोकपरिभ्रष्टा गृध्री स्यात्सूकरी शुनी ॥ 105.26 ॥

स्वर्णहारी द्विजो राज्ञे दत्त्वा तु मुसलं तथा ॥
कर्मणः ख्यापनं कृत्वा हतस्तेन भवेच्छुचिः ॥ 105.27 ॥

आत्मतुल्यं सुवर्णं वा दत्त्वा शुद्धिमियाद्द्विजः ॥
शयने सार्द्धमायस्यां योषिता निभृतं स्वपेत् ॥ 105.28 ॥

उच्छेद्य लिङ्गं वृषणं नैर्ऋत्यामुत्सृजोद्दिशि ॥
प्राजापत्यं चरेत्कृच्छ्रं समा वा गुरुतल्पगः ॥ 105.29 ॥

चान्द्रायणं वा त्रीन्मासनभ्यसेद्वेदसंहिताम् ॥
पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयतः ॥ 105.30 ॥

गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुध्यति ॥
उपपातकशुद्धिः स्याच्चान्द्रायणव्रतेन च ॥ 105.31 ॥

पयसा वापि मासेन पराकेणापि वा पुनः ॥
ऋषभैकं सहस्त्रं गा दद्यात्क्षत्त्रवधे पुमान् ॥ 105.32 ॥

ब्रह्महत्याव्रतं वापि वत्सरत्रितयं चरेत् ॥
वैश्यहाऽब्दं च (ब्दांश्च) रेदेतद्दद्याद्वैकशतं गवाम् ॥ 105.33 ॥

षण्मासाच्छूद्रहा चैतद्दद्याद्वा धेनवो दश ॥
अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत् ॥ 105.34 ॥

मार्जारगोधानकुलपशुमण्डूकघातनात् ॥
पिबेत्क्षीरं त्र्यहं पापी कृच्छ्रं वाप्यधिकं चरेत् ॥ 105.35 ॥

गजे नीलान्वृषान्पञ्च शुके वत्सं द्विहायनम् ॥
खराजमेषेषु वृषो देयः क्रौञ्चे त्रिहायणः ॥ 105.36 ॥

वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतम् ॥
अवकीर्णो भवेद्गत्त्वा ब्रह्मचारी च योषितम् ॥ 105.37 ॥

गर्दभं पशुमालभ्य नैर्ऋतं च विशुध्यति ॥
मधुमांसाशने कार्य्यं कृच्छ्रं शेषव्रतानि च ॥ 105.38 ॥

कृच्छ्रत्रयं गुरुः कुर्य्यान्म्रियेत् प्रहितो यदि ॥
प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुध्यति ॥ 105.39 ॥

रिपून्धान्यप्रदानाद्यैः स्नेहाद्यैर्वाप्युपक्रमेत् ॥
क्रियमाणोपकारे च मृते विप्रे न पातकम् ॥ 105.40 ॥

महापापोपपापाभ्यां योभिशस्तो मृषा परम् ॥
अब्भक्षो मासमासीत स जापी नियतन्द्रियः ॥ 105.41 ॥

अनियुक्तो भ्रातृभार्य्यां गच्छंश्चान्द्रायणं चरेत् ॥
त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां शुचिर्भवेत् ॥ 105.42 ॥

गोष्ठे वसन्ब्रह्मचारी मासमेकं पयोव्रती ॥
गायत्रीजप्यनिरतो मुच्यतेऽसत्प्रतिग्रहात् ॥ 105.43 ॥

त्रिः कृच्छ्रमाचरेद्व्रात्ययाजकोऽपि चरन्नपि ॥
वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतान् ॥ 105.44 ॥

प्राणायामत्रयं कुर्य्यात्खरयानोष्ट्रयानगः ॥
नग्नः स्नात्वा च सुप्त्वा च गत्वा चैव दिवा स्त्रियम् ॥ 105.45 ॥

गुरुंत्वं कृत्य हुंकृत्य विप्रं निर्जित्य वाद तः ॥
प्रसाद्य तं च मुनयस्ततो ह्युपवसेद्दिनम् ॥ 105.46 ॥

विप्रे दण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने ॥
देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ॥ 105.47 ॥

प्रायश्चितं प्रकल्प्यं स्याद्यत्र योक्ता तु निष्कृतिः ॥
गर्भत्यागो भर्त्तृनिन्दा स्त्रीणां पतनकारणम् ॥ 105.48 ॥

एष ग्रहान्तिके दोषः तस्मात्तां दूतरस्त्यजेत् ॥
विख्यातदोषः कुर्वीत गुरोरनुमतं व्रतम् ॥ 105.49 ॥

असंविख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥
त्रिरात्रोपोषणो जप्त्वा ब्रह्महा त्वघमर्षणम् ॥ 105.50 ॥

अन्तर्जले विशुद्धे च दत्त्वा गां च पयस्विनीम् ॥
लोमभ्यः स्वाहेति ऋचा दिवसं मारुताशनः ॥ 105.51 ॥

जले जप्त्वा तु जुहुयाच्चात्वारिंशद्घृताहुतीः ॥
त्रिरात्रोपोषणो हुत्वा कूष्माण्डीभिर्घृतं शुचिः ॥ 105.52 ॥

सुरापः स्वर्णहारी च रुद्रजापी जले स्थितः ॥
सहस्त्रशीर्षाजप्येन मुच्यते गुरुतल्पगः ॥ 105.53 ॥

प्राणायामशतं कुर्य्यात्सर्वपापापनुक्त्ये ॥
ॐकाराभियुतं सोमसलिलप्रशनाच्छुचिः ॥ 105.54 ॥

कृत्वोपवासं रेतोविण्मूत्राणां प्राशनेद्विजः ॥
अज्ञानकृतपापस्य नाशः सन्ध्यात्रये कृते ॥ 105.55 ॥

रुद्रैकादशजप्याद्धि पापनाशो भवेद्द्विजैः ॥
वेदाभ्यासरतं शान्तं पञ्चयज्ञक्रियापरम् ॥ 105.56 ॥

न स्पृशन्ति हा पापानि चाशु स्मृत्वा ह्यपोहितः ॥
जप्त्वा सहस्त्रगायत्रीं शुचिर्ब्रह्महणाद्दते ॥ 105.57 ॥

ब्रह्मचर्य्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता ॥
अहिंसा स्तेयमाधुर्य्ये दमश्चैते यमाः स्मृताः ॥ 105.58 ॥

स्नानमौनोपवासोज्यास्वाध्यायोपस्थनिग्रहः ॥
तपोऽक्रोधो गुरोर्भक्तिः शौचं च नियमाः स्मृताः ॥ 105.59 ॥

पञ्चगव्यं तु गोक्षीरं दधिमूत्रशकृद्घृतम् ॥
जग्ध्वा परेह्न्युपवसेत्कृच्छ्रं सान्तपनं चरेत् ॥ 105.60 ॥

पृथक् सान्तपनैर्द्रव्यैः षडहः सोपवासकः ॥
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥ 105.61 ॥

पर्णोदुम्बरराजीवबील्वपत्रकुशोदकैः ॥
प्रत्येकं प्रत्यहाभ्यस्तैः पर्ण कृच्छ्र उदाहृतः ॥ 105.62 ॥

तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ॥
एकरात्रोपवासश्च तप्तकृच्छ्रश्च पावनः ॥ 105.63 ॥

एकभक्तेन नक्तेन तथैवायाचितेन च ॥
उपवासेन चैकेन पादकृच्छ्र उदाहृतः ॥ 105.64 ॥

यथा कथञ्चित्त्रिगुणः प्रजापत्योऽयमुच्यते ॥
अयमेवातिकृच्छ्रः स्यात्पाणिपूर्णाम्बुभोजनात् ॥ 105.65 ॥

कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिम् ॥
द्वादशाहोपवासैश्च पराकः समुदाहृतः ॥ 105.66 ॥

पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ॥
एकैकमुपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥ 105.67 ॥

एषां त्रिरात्रमभ्यासादेकैकं स्याद्यथाक्रमात् ॥
तुलापुरुष इत्येष ज्ञेयः पंचदशाहिकः ॥ 105.68 ॥

तिथिपिण्डांश्चरेद्वृद्ध्या शुक्ले शिख्यण्डसम्मितान् ॥
एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं चरेत् ॥ 105.69 ॥

यथाकथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम् ॥
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥ 105.70 ॥

कृत्वा त्रिषवणं स्नानं पिण्डं चान्द्रायणं चरेत् ॥
पवित्राणि जपेत्पिण्डान् गायत्र्या चाभिमन्त्रयेत् ॥ 105.71 ॥

अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु ॥
धर्मार्थो यश्चरेदेतच्चन्द्रस्यैति सलोकताम् ॥ 105.72 ॥

कृच्छ्रकृद्धर्मकामस्तु महतीं श्रियमश्नुते ॥ 105.73 ॥

इति श्रागारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तप्रायश्चित्तविवेको नाम पञ्चोत्तरशततमोऽध्यायः ॥ 105 ॥

याज्ञवल्क्य उवाच ।
प्रेता (त) शौचं प्रवक्ष्यामि तच्छृणुध्वं यतव्रताः ।
ऊनद्विवर्षं निखनेन्न कुर्यादु दकं ततः ॥ १,१०६.१ ॥

आ श्मशानादनुव्रज्य इतरैर्ज्ञातिभिर्युतः ।
यमसूक्तं तथा जप्यं जपद्भिर्लौकिकाग्निना ॥ १,१०६.२ ॥

स दग्धव्य उपेतश्चैदाहिताग्न्यावृतार्थवत् ।
सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयान्त्यपः ॥ १,१०६.३ ॥

अपनः शोशुचदघमनेन पितृदिङ्मुखाः ।
एवं मातामहाचार्यपत्नीनां चोदकक्रियाः ॥ १,१०६.४ ॥

कामोदकाः पुत्रसखिस्वस्त्रीयश्वशुरर्त्विजः ।
नामगोत्रेण ह्युदकं सकृत्सिञ्चन्ति वाग्यताः ॥ १,१०६.५ ॥

पाषण्डपतितानां तु न कुर्युरुदकक्रियाः ।
नब्रह्मचारिणो व्रात्या योषितः कामगास्तथा ॥ १,१०६.६ ॥
सुराप्यस्त्वात्मघातिन्यो नाशौचोदकभाजनाः ।
ततो न रोदितव्यं हि त्वनित्या जीवसं स्थितिः ॥ १,१०६.७ ॥
क्रिया कार्या यथाशक्ति ततो गच्छेद्गृहान्प्रति ।
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥ १,१०६.८ ॥
आचम्याथाग्निमुदकं गोमयं गौरसर्षपान् ।
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ॥ १,१०६.९ ॥
प्रवेशनादिकं कर्म प्रेतसंस्पर्शनादपि ।
ईक्षतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ॥ १,१०६.१० ॥
क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक्पृथक् ।
पिण्डयज्ञकृता देयं प्रेतायान्नं दिनत्रयम् ॥ १,१०६.११ ॥

जलमेकाहमाकाशे स्थाप्यं क्षीरं तु मृन्मये ।
वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदिताः ॥ १,१०६.१२ ॥

आदन्तजन्मनः सद्यः आचूडं नैशिकी स्मृता ।
त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम् ॥ १,१०६.१३ ॥

त्रिरात्रं दशरात्रं वा शावमाशौचमुच्यते ।
ऊनद्विवर्ष उभयोः सूतकं मातुरेव हि ॥ १,१०६.१४ ॥

अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति ।
दश द्वादश वर्णानां तथा पञ्चदशैव च ॥ १,१०६.१५ ॥

त्रिंशद्दिनानि च तथा भवति प्रेतसूतकम् ।
अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ॥ १,१०६.१६ ॥
गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च ।
अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ॥ १,१०६.१७ ॥
निवासराजनि तथा तदहः शुद्धिकार(ण)म् ।
हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम् ॥ १,१०६.१८ ॥
विषाद्यैश्च हतानां च नाशौचं पृथिवीपतेः ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ १,१०६.१९ ॥
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते ॥ १,१०६.२० ॥
कालोऽग्निः कर्ममृद्वायुर्मनो ज्ञानं तपो जपः (लम्) ।
पश्चात्ताषो निराहारः सर्वेषां शुद्धिहेतवः ॥ १,१०६.२१ ॥

अकार्यकारिणां दानं वेगो नद्यास्तु शुद्धिकृत् ।
क्षात्त्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः ॥ १,१०६.२२ ॥

फलसोमक्षौमवीरुद्दधि क्षीरं घृतं जलम् ।
तिलोदनरसक्षारमधु लाक्षा शृतं हविः ॥ १,१०६.२३ ॥

वस्त्रोपलासवं पुष्पं शाकमृच्चर्मपादुकम् ।
एणत्वचं च कौशेयं लवणं मासमेव च ॥ १,१०६.२४ ॥

पिण्याकमूलगन्धांश्च वैश्यवृत्तो न विक्रयेत् ।
धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः ॥ १,१०६.२५ ॥

लवणादि न विक्रीयात्तथा चापद्गतो द्विजः ।
हीनाद्विप्रो विगृह्णंश्च लिप्यते नार्कवद्द्विजः ॥ १,१०६.२६ ॥
कुर्यात्कृष्यादिकं तद्वदविक्रेया हयास्तथा ।
बुभुक्षितस्त्र्यं स्थित्वा दृष्ट्वा वृत्तिविवर्जितम् ।
राजा धर्म्यां प्रकुर्वीत वृत्तिं विप्रादिकस्य च ॥ १,१०६.२७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्ताशौचापद्वृत्त्योर्निरूपणं नाम षडुत्तरशततमोऽध्यायः

सूत उवाच ।

पराशरोऽब्रवीद्व्यासं धर्मं वर्णाश्रमादिकम् ।

कल्पेकल्पे क्षयोत्पत्त्या क्षीयन्ते नु प्रजादयः ॥ १,१०७.१ ॥

श्रुतिः स्मृतिः सदाचरो यः कश्चिद्वे दकर्तृकः ।

वेदाः स्मृता ब्राह्मणादौ धर्मा मन्वादिभिः सदा ॥ १,१०७.२ ॥

दानं कलियुगे धर्मः कर्तारं च कलौ त्यजेत् ।

पापकृत्यं तु तत्रैव शापं फलति वर्षतः ॥ १,१०७.३ ॥

आचारात्प्राप्नुयात्सर्वं षट्कर्माणि दिनेदिने ।

सन्ध्या स्नानं जपो होमो देवातिथ्यादिपूजनम् ॥ १,१०७.४ ॥

अपूर्वः सुव्रती विप्रो ह्यपूर्वा यतयस्तदा ।

क्षत्त्रियः परसैन्यानि जित्वा पृथ्वीं प्रपालयेत् ॥ १,१०७.५ ॥

वणिक्कृष्यादि वैश्ये स्याद्द्विजभक्तिश्च शूद्रके ।

अभक्ष्यभक्षणाच्चौर्यादगम्या गमनात्पतेत् ॥ १,१०७.६ ॥

कृषिं कुर्वन्द्विजः श्रान्तं बलीवर्दं न वाहयेत् ।

दिनार्धं स्नानयोगादिकारी विप्रांश्च भोजयेत् ॥ १,१०७.७ ॥

निर्वपेत्पञ्च यज्ञानि क्रूरे निन्दां च कारयेत् ।

तिलाज्यं न विक्रीणित सूनायज्ञमघान्वितः ॥ १,१०७.८ ॥

राज्ञो दत्त्वा तु षड्भागं देवतानां च विंशतिम् ।

त्रयस्त्रिंशच्च विप्राणां कृषिकर्ता न लिप्यते ॥ १,१०७.९ ॥

कर्षकाः क्षत्त्रविट्छूद्राः खलेऽदत्त्वा तु चौरकः ।

दिनत्रयेण शुध्येत ब्राह्मणः प्रेतसूतके ॥ १,१०७.१० ॥

क्षत्त्रो दशाहाद्वैश्यास्तु द्वादशाहान्मासि शूद्रकः ।

याति विप्रो दशाहात्तु क्षत्त्रो द्वादशकाद्दिनात् ॥ १,१०७.११ ॥

पञ्चदशाहाद्वैश्यस्तु शूद्रो मासेन शुध्यति ।

एकपिण्डास्तु दायादाः पृथग्द्वारनिकेतनाः ॥ १,१०७.१२ ॥

जन्मना च विपत्तौ च भवेत्तेषां च सूतकम् ।

चतुर्थे दशरात्रं स्यात्षण्णिशाः पुंसि पञ्चमे ॥ १,१०७.१३ ॥

षष्ठे चतुर हाच्छुद्धिः सप्तमे च दिनत्रयम् ।

देशान्तरे मृते बाले सद्यः शुद्धिर्यतो मृते ॥ १,१०७.१४ ॥

अजातदन्ता ये बाला ये च गर्भाद्विनिः सृताः ।

न तेषामग्निसंस्कारो न पिण्डं नोदकक्रिया ॥ १,१०७.१५ ॥

यदि गर्भो विपद्यत स्त्रवते वापि योषितः ।

यावन्मासं स्थितो गर्भस्तावद्दिनानि सूतकम् ॥ १,१०७.१६ ॥

आनामकरणात्सद्य आचूडान्तादहर्निशम् ।

आव्रतात्तु त्रिरात्रेण तदूर्ध्वन्दशभिर्दिनैः ॥ १,१०७.१७ ॥

आचतुर्थाद्भवेत्स्त्रवः पातः पञ्चमषष्ठयोः ।

ब्रह्मचर्या दग्निहोत्रान्नाशुद्धिः सङ्गवर्जनात् ॥ १,१०७.१८ ॥

शिल्पिनः कारवो वैद्या दासीदासाश्च भृत्यकाः ।

अग्निमाञ्छ्रोत्रियो राजा सद्यः शौचाः प्रकीर्तिताः ॥ १,१०७.१९ ॥

दशाहाच्छुध्यते माता स्नानात्सूते पिता शुचिः ।

सङ्गात्सूतौ सूतकं स्यादुपस्पृश्य पिता शुचिः ॥ १,१०७.२० ॥

विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके ।

पूर्वसंकल्पितादन्यवर्जनं च विधीयते ॥ १,१०७.२१ ॥

मृतेन शुध्यते सूतिः मृतवज्जातकं जनौ ।

गोग्रहादौ विपन्नानामेकरात्रं तु सूतकम् ॥ १,१०७.२२ ॥

अनाथप्रेतवहनात्प्राणायामेन शुध्यति ।

प्रेतशूद्रस्य वहनान्त्रिरात्रमशुचिर्भवेत् ॥ १,१०७.२३ ॥

आत्मघातिविषोद्वन्धकृमिदष्टे न संस्कृतिः ।

गोहतं कृमिदष्टं च स्पृष्ट्वा कृच्छ्रेण शुध्यति ॥ १,१०७.२४ ॥

अदुष्टापतितं भार्या यौवने या परित्यजेत् ।

सप्तजन्म भवेत्स्त्रीत्वं वैधव्यं च पुनः पुनः ॥ १,१०७.२५ ॥

बालहत्या त्वगमनादृतौ च स्त्री तु सूकरि ।

अगम्या व्रतकारिण्यो भ्रष्टपानोदकक्रियाः ॥ १,१०७.२६ ॥

औरसः क्षेत्रजः पुत्रः पितृजौ पिण्डदौ पितुः ।

परिवित्तेस्तु कृच्छ्रं स्यात्कन्यायाः कृच्छ्रमेव च ॥ १,१०७.२७ ॥

अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणञ्चरेत् ।

कुब्जवामनषण्डेषु गद्गदेषु जडेषु च ॥ १,१०७.२८ ॥

जात्यन्धबधिरे मूके न दोषः परिवेदने ।

नष्टे मृते प्रव्रजिते क्लीबे वा पतिते पतौ ॥ १,१०७.२९ ॥

पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ।

भर्त्रा सहमृता नारी रोमाब्दानि वसेद्दिवि ॥ १,१०७.३० ॥

श्वादिदष्टस्तु गायत्र्या जपाच्छुद्धो भवेन्नरः ।

दाह्यो लोकाग्निना विप्रश्चाण्डालाद्यैर्हतोऽग्निमान् ॥ १,१०७.३१ ॥

क्षीरैः प्रक्षाल्य तस्यास्थि स्वाग्निना मन्त्रतो दहेत् ।

प्रवासे तु मृते भूयः कृत्वा कुशमयं दहेत् ॥ १,१०७.३२ ॥

कृष्णाजिने समास्तीर्य षट्शतानि पलाशजान् ।

शमीं शिश्ने विनिःक्षिप्य अरणिं वृषणे क्षिपेत् ॥ १,१०७.३३ ॥

कण्डं दक्षिणहस्ते तु वामहस्ते तथोपभृत् ।

पार्श्वे तूलूखलं दद्यात्पृष्ठे तु मुसलं ददेत् ॥ १,१०७.३४ ॥

उरे निःक्षिप्य दृषदं तण्डुलाज्यतिलान्मुखे ।

श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीं च चक्षुषोः ॥ १,१०७.३५ ॥

कर्णे नेत्रे मुखे घ्राणे हिरण्यशकलान् क्षिपेत् ।

अग्निहोत्रोपकरणाद्ब्रह्मलोकगतिर्भवेत् ॥ १,१०७.३६ ॥

असौ स्वर्गाय लोकाय स्वाहेत्याज्याहुतिः सकृत् ।

हंससारसक्रौञ्चानां चक्रवाकं च कुक्कुटम् ॥ १,१०७.३७ ॥

मयरमेषघाती च अहोरात्रेण शुध्यति ।

पक्षिणः सकलान्हत्वा अहोरात्रेण शुध्यति ॥ १,१०७.३८ ॥

सर्वांश्चतुष्पदान्हत्वा अहोरात्रो षितो जपेत् ।

शूद्रं हत्वा चरेत्कृच्छ्रमतिकृच्छ्रं तु वैश्यहा ।

क्षत्त्रं चान्द्रायणं विप्रं द्वाविंशात्रिंशमाहरे (वहे) त् ॥ १,१०७.३९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाक्ये आचारकाण्डे पराशरोक्तधर्मनिरूपणं नाम सप्तोत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १०८
सूत उवाच ।
नीतिसारं प्रवक्ष्यामि अर्थशास्त्रादिसंश्रितम् ।
राजादिभ्यो हितं पुण्यमायुः स्वर्गादिदायकम् ॥ १,१०८.१ ॥

सद्भिः सङ्गं प्रकुर्वीत सिद्धिकामः सदा नरः ।
नासद्भिरिहलोकाय परलोकाय वा हितम् ॥ १,१०८.२ ॥

वर्जयेत्क्षुद्रसंवादमदुष्टस्य तु दर्शनम् ।
विरोधं सह मित्रेण संप्रीतिं शत्रुसेविना ॥ १,१०८.३ ॥

मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च ।
दुष्टानां संप्रयोगेण पण्डितोऽप्यवसीदति ॥ १,१०८.४ ॥

ब्राह्मणं बालिशं क्षत्त्रमयोद्धारं विशं जडम् ।
शूद्रमक्षरसंयुक्तं दूरतः परिवर्जयेत् ॥ १,१०८.५ ॥

कालेन रिपुणासन्धिः काले मित्रेण विग्रहः ।
कार्यकारणमाश्रित्य कालं क्षिपति पण्डितः ॥ १,१०८.६ ॥

कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ १,१०८.७ ॥

कालेषु हरते वीर्यं काले गर्भे च वर्तते ।
कालो जनयते सृष्टिं पुनः कालोऽपि संहरेत् ॥ १,१०८.८ ॥

कालः सूक्ष्मगतिर्नित्यं द्विविधश्चेह भाव्यते ।
स्थूलसंग्रहचारेण सूक्ष्मचारान्तरेण च ॥ १,१०८.९ ॥

नीतिसारं सुरेन्द्राय इममूच बृहस्पतिः ।
सर्वज्ञो येन चेन्द्रोऽभूद्दैत्यान्हत्वाप्नुयाद्दिवम् ॥ १,१०८.१० ॥

राजर्षिब्राह्मणैः कार्यं देवविप्रादिपूजनम् ।
अश्वमेधेन यष्टव्यं महापातकनाशनम् ॥ १,१०८.११ ॥

उत्तमैः सह साङ्गत्यं पण्डितैः सह सत्कथाम् ।
अलुब्धैः सह मित्रत्वं कुर्वाणो नावसीदति ॥ १,१०८.१२ ॥

परीवादं परार्थं च परिहासं परस्त्रियम् ।
परवेश्मनि वासं च न कुर्वीत कदाचन ॥ १,१०८.१३ ॥

परोऽपि हितवाबन्धुर्बन्धुरप्यहितः परः ।

अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ १,१०८.१४ ॥

स बन्धुर्यो हिते युक्तः स पिता यस्तु पोषकः ।
तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ १,१०८.१५ ॥

स भृत्यो यो विधेयस्तु तद्बीजं यत्प्ररोहति ।
सा भार्या या प्रियं ब्रूते स पुत्रो यस्तु जीवति ॥ १,१०८.१६ ॥

स जीवति गुणा यस्य धर्मो यस्य स जीवति ।
गुणधर्मविहीनो यो निष्फल तस्य जीवनम् ॥ १,१०८.१७ ॥

सा भार्या या गृहे दक्षा सा भार्याया प्रियंवदा ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥ १,१०८.१८ ॥

नित्य स्नाता सुगन्धा च नित्यं च प्रियवादिनी ।
अल्पभुक्ताल्पभाषी च सततं मङ्गलैर्युता ॥ १,१०८.१९ ॥

सततं धर्मबहुला सततं च पतिप्रिया ।
सततं प्रियवक्री च सततं त्वृतुकामिनी ॥ १,१०८.२० ॥

एतदादिक्रियायुक्ता सर्वसौ भाग्यवर्धिनी ।
यस्येदृशी भवेद्भाय्या स देवेन्द्रोन मानुषः ॥ १,१०८.२१ ॥

यस्य भार्या विरूपाक्षी कश्मला कलहप्रिया ।
उत्तरोत्तरवादा स्या सा जरा न जरा जरा ॥ १,१०८.२२ ॥

यस्य भार्या श्रितान्यञ्च परवेश्माभिकाङ्क्षिणी ।
कुक्रिया त्यक्तलज्जा च सा जरा न जरा जरा ॥ १,१०८.२३ ॥

यस्य भार्या गुणज्ञा च भर्तारमनुगामिनी ।
अल्पाल्पेन तु सन्तुष्टा सा प्रिया न प्रिया प्रिया ॥ १,१०८.२४ ॥

दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासोमृत्युरेव न संशयः ॥ १,१०८.२५ ॥

त्यज दुर्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्र स्मर नित्यमनित्यताम् ॥ १,१०८.२६ ॥

व्यालीकण्ठप्रदेशाह्यपि च फणभृद्भाषणा या च रौद्री या कृष्णा व्याकुलागी रुधिरनयनसंव्याकुला व्याघ्रकल्पा ।
क्रोधे यैवोग्रवक्त्रा स्फुरदनलशिखा काकजिह्वा कराला सेव्या न स्त्री विदग्धा परपुरगमना भ्रान्तचित्ता विराक्त ॥
१,१०८.२७ ॥

सक्तिः सुतोके सुकृतं कृतघ्ने शतिं च वह्नौ (सीतापहौ ह्यतपयैव)?हैमे ।
उत्पद्यते दैववशात्कदाचिद्वेश्यासु रागो न भवेत्कदाचित् ॥ १,१०८.२८ ॥

भुजङ्गमे वेश्मनि दृष्टिदृष्टे व्याधौ चिकित्साविनिवर्तिते च ।
देहे च बाल्यादिवयोऽन्विते च काला वृतोऽसौ लभते धृतिं कः ॥ १,१०८.२९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृहस्पतिप्रोक्तनीतिसारनिरूपणं नामाष्टोत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १०९
सूत उवाच ।
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १,१०९.१ ॥

त्यजेदकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ १,१०९.२ ॥

वरं हि नरके वासो न तु दुश्चरिते गृहे ।
नरकात्क्षीयते पाप कुगृहान्न निवर्तते ॥ १,१०९.३ ॥

चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।
न परीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ १,१०९.४ ॥

त्यजेद्देशमसद्वृत्तं वासं सोपद्रवं त्यजेत् ।
त्यजेत्कृपणराजानं मित्रं मायामयं त्यजेत् ॥ १,१०९.५ ॥

अर्थेन किं कृपणहस्तगतेन केन ज्ञानेन किं बहुशठाग्रहसंकुलेन ।
रूपेण किं गुणपराक्रमवर्जितेन मित्रेण किं व्यसनकालपराङ्मुखेन ॥ १,१०९.६ ॥

अदृष्टपूर्वा बहवः सहायाः सर्वे पदस्थस्य भवन्ति मित्राः ।
अर्थैर्विहीनस्य पदच्युतस्य भवत्यकाले स्वजनोऽपि शत्रुः ॥ १,१०९.७ ॥

आपत्सु मित्रं जानी याद्रणे शूरं रहः शुचिम् ।
मार्या च विभवे क्षीणे दुर्भिक्षे च प्रियातिथिम् ॥ १,१०९.८ ॥

वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसानिर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं मन्त्रिणः ।
पुष्पं पर्युषितं त्यजन्ति मधुपाः दग्धं वनान्तं मृगाः सर्वः कार्यवशाज्जनो हि रमते कस्यास्ति को वल्लभः ॥ १,१०९.९ ॥

लुब्धमर्थप्रदानेन श्लाध्यमञ्जलिकर्मणा ।
मूर्खं छन्दानुवृत्त्या च याथातथ्येन पण्डितम् ॥ १,१०९.१० ॥

सद्भावेन हि तुष्यन्ति देवाः सत्पुरुषा द्विजाः ।
इतरेः खाद्यपानेन मानदानेन पण्डिताः ॥ १,१०९.११ ॥

उत्तमं प्रणिपातेन शठं भेदेन योजयेत् ।
नीचं स्वल्पप्रदानेन समं तुल्यपराक्रमैः ॥ १,१०९.१२ ॥

यस्ययस्य हि यो भावस्तस्यतस्य हितं वदन् ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ १,१०९.१३ ॥

नदीनां च नखीनां च शृङ्गिणां शस्त्रपाणिनाम् ।

विश्वासो नैव गन्तव्यः स्त्रिषु राजकुलेषु च ॥ १,१०९.१४ ॥

अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
वञ्चनं चाप मानं च मतिमान्न प्रिकाशयेत् ॥ १,१०९.१५ ॥

हीनदुर्जनसंसर्ग अत्यन्तविरहादरः ।
स्नेहोऽन्यगेहवासश्च नारीसच्छीलनाशनम् ॥ १,१०९.१६ ॥

कस्य दोषः कुले नास्ति व्याधिना को पीडितः ।
केन न व्यसनं प्राप्तं श्रियः कस्य निरन्तराः ॥ १,१०९.१७ ॥

कोर्ऽथं प्राप्य न गर्वितो भुवि नरः कस्यापदोनागताः स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।
कः कालस्य न गोचरान्तरगतः कोर्ऽथो गतो गौरवं को वा दुर्जनवागुरानिपतितः क्षेमेण यातः पुमान् ॥ १,१०९.१८ ॥

सुहृत्स्वजनबन्धुर्न बुद्धिर्यस्य न चात्मनि ।
यस्मिन्कर्मणि सिद्धेऽपि न दृश्येत फलोदयः ।
विपत्तौ च महद्दुःखं तदवुधः कथमाचरेत् ॥ १,१०९.१९ ॥

यस्मिन्देशे न संमानं न प्रीतिर्न च बान्धवाः ।
न च विद्यागमः कश्चित्तं देशं परिवर्जयेत् ॥ १,१०९.२० ॥

धनस्य यस्य राजतो भयं न चास्ति चौरतः ।
मृतं च यन्न मुच्यते समर्जयस्व तद्धनम् ॥ १,१०९.२१ ॥

यदर्जितं प्राणहरैः परिश्रमैर्मृतस्य तं वै विभजन्तिरिक्थिनः ।
कृतं च यद्दुष्कृतमर्थलिप्सया तदेव दोषोपहतस्य यौतुकम् ॥ १,१०९.२२ ॥

सञ्चितं निहितं द्रव्यं परामृश्यं मुहुर्मुहुः ।
आखोरिव कदर्यस्य धनं दुः खाय केवलम् ॥ १,१०९.२३ ॥

नग्ना व्यसनिनो रूक्षाः कपालाङ्कितपाणयः ।
दर्शयन्तीह लोकस्य अदातुः फलमीदृशम् ॥ १,१०९.२४ ॥

शिक्षयन्ति च याचन्ते देहीति कृपणा जनाः ।
अवस्थेयमदानस्य मा भूदेवं भवानपि ॥ १,१०९.२५ ॥

सञ्चितं क्रतुशतैर्न युज्यते याचितं गुणवते न दीयते ।
तत्कदर्यपरिरक्षितं धनं चोरपार्थिवगृहे प्रयुज्यते ॥ १,१०९.२६ ॥

न देवेभ्यो न विप्रोभ्यो बन्धुभ्यो नैव चात्मने ।
कदर्यस्य धनं याति त्वग्नितस्करराजसु ॥ १,१०९.२७ ॥

अतिक्लेशेन येऽप्यर्था धर्मस्यातिक्रमेण च ।
अरेर्वा प्रणिपातेन मा भूतस्ते कदाचन ॥ १,१०९.२८ ॥

विद्याघातो ह्यनभ्यासः स्त्रीणां घातः कुचैलता ।
व्याधीनां भोजनं जीर्णं शत्रोर्घातः प्रपञ्चता ॥ १,१०९.२९ ॥

तस्करस्य वधो दण्डः कुमित्रस्याल्पभाषणम् ।
पृथक्शय्या तु नारीणां ब्राह्मणस्यानिमन्त्रणम् ॥ १,१०९.३० ॥

दुर्जनाः शिल्पिनो दासा दुष्टाश्च पटहाः स्त्रियः ।
ताडिता मार्दवं यान्ति न ते सत्कारभाजनम् ॥ १,१०९.३१ ॥

जानीयात्प्रेषणे भृत्यान्बान्धवान्व्यसनागमे ।
मित्रमापदि काले च भार्याञ्च विभवक्षये ॥ १,१०९.३२ ॥

स्त्रीणां द्विगुण आहारः प्रज्ञा चैव चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ १,१०९.३३ ॥

न स्वप्नेन जयेन्निद्रां न कामेन स्त्रियं जयेत् ।
न चेन्धनैर्जयेद्वह्निं न मद्येन तृषां जयेत् ॥ १,१०९.३४ ॥

समांसैर्भोजनैः स्निग्धैर्मद्यैर्गन्धविलेपनैः ।
वस्त्रैर्मनोरमैर्माल्यैः कामः स्त्रीषु विजृम्भते ॥ १,१०९.३५ ॥

ब्रह्मचर्येऽपि वक्तव्यं प्राप्तं मन्मथचेष्टितम् ।
हृद्यं हि पुरुषं दृष्ट्वा योनिः प्रक्लिद्यते स्त्रियाः ॥ १,१०९.३६ ॥

सुवेषं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् ।
योनिः क्लिद्यति नारीणां सत्यंसत्यं हि शौनक ! ॥ १,१०९.३७ ॥

नद्यश्च नार्यश्च समस्वभावाः स्वतन्त्रभावे गमनादिकेच ।
तोयैश्च दोषैश्च निपातयन्ति नद्यो हि कूलानि कुला नि नार्यः ॥ १,१०९.३८ ॥

नदी पातयते कूलं नारी पातयते कुलम् ।
नारीणाञ्च नदीनां च स्वच्छन्दा ललिता गतिः ॥ १,१०९.३९ ॥

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥ १,१०९.४० ॥

न तृप्तिरस्ति शिष्टानामिष्टानां प्रियवादिनाम् ।
सुखानाञ्च सुतानाञ्च जीवितस्य वरस्य च ॥ १,१०९.४१ ॥

राजा न तप्तो धनसंचयेन न सागरस्तृप्तिमगाज्जलेन ।
न पण्डितस्तृप्यति भाषितेन तृप्तं न चक्षुर्नृपदर्शनेन ॥ १,१०९.४२ ॥

स्वकर्म धर्मार्जितजीवितानां शास्त्रेषु दारेषु सदा रतानाम् ।
जितेन्द्रियाणामतिथिप्रियाणां गृहेऽपि मोक्षः पुरुषोत्तमानाम् ॥ १,१०९.४३ ॥

मनोऽनुकूलाः प्रमदारूपवत्यः स्वलङ्कृताः ।
वसः प्रासादपृष्ठेषु स्वर्गः स्याच्छुभकर्मणः ॥ १,१०९.४४ ॥

न दानेन न मानेन नार्जवेन न सवया ।
न शस्त्रेण न शास्त्रेण सर्वथा विषमा स्त्रियः ॥ १,१०९.४५ ॥

शनैर्विद्या शनैर्थाः शनैः पर्वतमारुहेत् ।
शनैः कामं च धर्मं च पञ्चैतानि शनैः शनैः ॥ १,१०९.४६ ॥

शाश्वतं देवपूजादि विप्रदानं च शाश्वतम् ।
शाश्वतं सगुणा विद्या सुहृन्मित्रं च शाश्वतम् ॥ १,१०९.४७ ॥

ये बालभावान्न पठन्ति विद्यां ये यौवनस्था ह्यधनात्मदाराः ।
ते शोचनीया इह जीवलोके मनुष्यरूपेण मृगाश्चरन्ति ॥ १,१०९.४८ ॥

पठने भोजने चित्तं न कुर्याच्छास्त्रसेवकः ।
सुदूरमपि विद्यार्थी व्रजेद्गरुडवेगवान् ॥ १,१०९.४९ ॥

ये बालभावे न पठन्ति विद्यां कामातुरा यौवननष्टवित्ताः ।
ते वृद्धबावे परिभूयमानाः संदह्यमानाः शिशिरे यथाब्जम् ॥ १,१०९.५० ॥

तर्केऽप्रतिष्ठा श्रुतयो विभिन्नाः नासावृषिर्यस्य मतं न भिन्नम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥ १,१०९.५१ ॥

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ।
नेत्रवक्त्रविकाराभ्यां लक्ष्यतेऽन्तर्गतं मनः ॥ १,१०९.५२ ॥

अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ।
उदीरितोर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति दर्शितम् ॥ १,१०९.५३ ॥

अर्थाद्भ्रष्टस्तीर्थयात्रां तु गच्छेत्सत्याद्भ्रष्टो रौरवं वै व्रजेच्च ।
योगाद्भ्रष्टः सत्यधृतिञ्च गच्छेद्राज्याद्भ्रष्टो मृगयायां व्रजेच्च ॥ १,१०९.५४ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृहद्द नीतिसारे नवोत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् ११०
सूत उवाच ।
योध्रुवाणि परित्यज्य ह्यध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति ह्यध्रुवं नष्टमेव च ॥ १,११०.१ ॥

वाग्यन्त्रहीनस्य नरस्य विद्या शस्त्रं यथा कापुरुषस्य हस्ते ।
न तुष्टिमुत्पादयते शरीरे ह्यन्धस्य दारा इव दर्शनीयाः ॥ १,११०.२ ॥

भोज्ये भोजनशक्तिश्च रतिशक्तिर्वरस्त्रियः ।
विभवे दानशक्तिश्च नाल्पस्य तपसः फलम् ॥ १,११०.३ ॥

अग्निहोत्रफला वेदाः शीलवृत्तिफलं शुभम् ।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ १,११०.४ ॥

वरयेत्कुलजां प्राज्ञो विरूपामपि कन्यकाम् ।
सुरूपां सुनितम्बाञ्च नाकुलीनां कदाचन ॥ १,११०.५ ॥

अर्थेनापि हि किं तेन यस्यानर्थे तु संगतिः ।
को हि नाम शिखाजातं पन्नगस्य मणिं हरेत् ॥ १,११०.६ ॥

हविर्दुष्टकुलद्वाह्यं बालादपि सुभाषितम् ।
अमेध्यात्काञ्चनं ग्राह्यं स्त्रीरत्नं दुष्कुलादपि ॥ १,११०.७ ॥

विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ १,११०.८ ॥

न राज्ञा सह मित्रत्वं न सर्पो निर्विषः क्वचित् ।
न कुलं निर्मलं तत्र स्त्रीजनो यत्र जायते ॥ १,११०.९ ॥

कुले नियोजयेद्भक्तं पुत्रं विद्यासु योजयेत् ।
व्यसने योजयेच्छत्रुमिष्टं धर्मे नियोज्येत् ॥ १,११०.१० ॥

स्थानेष्वेव प्रयोक्ताव्या भृत्याश्चाभरणानि च ।
न हि चूडामणिः पादे शोभते वै कदाचन ॥ १,११०.११ ॥

चूडामणिः समुद्रोऽग्निर्घण्टा चाखण्डमम्बरम् ।
अथवा पृथिवीपालो मूर्ध्नि पादे प्रमादतः ॥ १,११०.१२ ॥

कुसुमस्तबकस्येव द्वे गती तु मनस्विनः ।
मूर्ध्नि वा सर्वलोकानां शीर्षतः पतितो वने ॥ १,११०.१३ ॥

कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रतिबध्यते ।

न च विरौति न चापि स शोभते भवति योजयितुर्वचनीयता ॥ १,११०.१४ ॥

वाजिवारणलौहानां काष्ठपाषाणवाससाम् ।
नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ १,११०.१५ ॥

कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते सर्वगुणप्रमाथः ।
अधः खलेनापि कृतस्य वह्नेर्नाधः शिखा याति कदाचिदेव ॥ १,११०.१६ ॥

न सदश्वः कशाघातं सिंहो न गजगर्जितम् ।
वीरो वा परनिर्दिष्टं न सहेद्धीमनिः स्वनम् ॥ १,११०.१७ ॥

यदि विभवविहीनः प्रच्युतो वाशु दैवान्न तु खलजनसेवां काङ्क्षयेन्नैव नीचाम् ।
न तृणमदनकार्ये सुक्षुधार्तोऽत्ति सिंहः पिबति रुधिरमुष्णं प्रायशः कुञ्चराणाम् ॥ १,११०.१८ ॥

सकृद्दुष्टञ्च यो मित्रं पुनः सन्धातुमिच्छति ।
स मृत्युमेव गृह्णीयाद्गर्भमश्वतरी यथा ॥ १,११०.१९ ॥

शत्रोरपत्यानि प्रियंवदानि नोपेक्षितव्यानि बुधैर्मनुष्यैः ।
तान्येव कालेषु विपत्कराणि विषस्य पात्राण्यपि दारुणानि ॥ १,११०.२० ॥

उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥ १,११०.२१ ॥

अपकारपरान्नित्यं चिन्त येन्न कदाचन ।
स्वयमेव पतिष्यन्ति कूलजाता इव द्रुमाः ॥ १,११०.२२ ॥

अनर्था ह्यर्थरूषाश्च अर्थाश्चानर्थरूपिणः ।
भवन्ति ते विनाशाय दैवायत्तस्य वै सदा ॥ १,११०.२३ ॥

कार्यकालोचितापापा मतिः सञ्जायते हि वै ।
सानुकूले तु दैवे शं पुंसः सर्वत्र जायते ॥ १,११०.२४ ॥

धनप्रयोगकार्येषुः तथा विद्या गमेषु च ।
आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत् ॥ १,११०.२५ ॥

धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते न कुर्यात्तत्र संस्थितिम् ॥ १,११०.२६ ॥

लोकयात्रा भयं लज्जा दाक्षिण्यं दानशीलता ।
पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥ १,११०.२७ ॥

कालविच्छोत्रियो राजा नदी साधुश्च पञ्चमः ।

एते यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥ १,११०.२८ ॥

नैकत्र परिनिष्ठास्ति ज्ञानस्य किल शौनक ।
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कुत्रचित् ॥ १,११०.२९ ॥

न सर्ववित्कश्चिदिहास्ति लोके नात्यन्तमूर्खो भुवि चापि कश्चित् ।
ज्ञानेन नीचोत्तममध्यमेन योऽयं विजानाति स तेन विद्वान् ॥ १,११०.३० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृहद्द नीतिसारे दशोत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १११

सूत उवाच ।
पार्थिवस्य तु वक्ष्यामि भृत्यानाञ्चैव लक्षणम् ।
सर्वाणि हि महीपालः सम्यङ्नित्यं परीक्षयेत् ॥ १,१११.१ ॥

राज्यं पालयते नित्यं सत्यधर्मपरायणः ।
निर्जित्य परसैन्यानि क्षितं धर्मेण पालयेत् ॥ १,१११.२ ॥

पुष्पात्पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारण्ये न यथाङ्गारकारकः ॥ १,१११.३ ॥

दोग्धारः क्षीरभुञ्जाना विकृतं तन्न भुञ्जते ।
परराष्ट्रं महीपालैर्भोक्तव्यं न च दूषयेत् ॥ १,१११.४ ॥

नोधश्छिन्द्यात्तु यो धेन्वाः क्षारार्थो लभते पयः ।
एवं राष्ट्रं प्रयोगेण पीड्यमानं न वर्धते ॥ १,१११.५ ॥

तस्मात्सर्वप्रयत्नेन पृथिवीमनुपालयेन् ।
पालकस्य भवेद्भूमिः कीर्तिरायुर्यशो बलम् ॥ १,१११.६ ॥

आभ्यर्च्य विष्णुं धर्मात्मा गोब्राह्मणहिते रतः ।
प्रजाः पालयितुं शक्तः पार्थिवो विजितेन्द्रियः ॥ १,१११.७ ॥

ऐश्वर्यमध्रुवं प्राप्य राजा धर्मे मतिञ्चरेत् ।
क्षणेन विभवो नश्येन्नात्मायत्तं धनादिकम् ॥ १,१११.८ ॥

सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः ।
किन्तु वै वनितापाङ्गभङ्गिलोलं हि जीवितम् ॥ १,१११.९ ॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती रोगाश्च शत्रव इव प्रभवन्ति गात्रे ।
आयुः परिस्त्रवति भिन्नघटादिवाम्भो लोको न चात्महितमाचरतीह कश्चित् ॥ १,१११.१० ॥

निः शङ्कं किं मनुष्याः कुरुत परहितं युक्तमग्रे हितं यन्मोदध्वं कामिनीभिर्मदनशरहता मन्दमन्दातिदृष्ट्या ।
मा पापं संकुरुध्वं द्विजहरिपरमाः संभजध्वं सदैव आयुर्निः शेषमेति स्खलति जलघटीभूतमृत्युच्छलेन ॥ १,१११.११ ॥

मातृवत्परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत्सर्वभूतेषु यः पश्यति स पण्डितः ॥ १,१११.१२ ॥

एतदर्थं हि विप्रेन्द्रा राज्यमिच्छन्ति भूभृतः ।
यदेषां सर्वकार्येषु वचो न प्रतिहन्यते ॥ १,१११.१३ ॥

एतदर्थं हि कुर्वन्ति राजानो धनसञ्चयम् ।

रक्षयित्वा तु चात्मानं यद्धनं तद्द्विजातये ॥ १,१११.१४ ॥

ओङ्कारशब्दो विप्राणां येन राष्ट्रं प्रवर्धते ।
स राजा वर्धते योगाद्व्याधिभिश्च न बध्यते ॥ १,१११.१५ ॥

असमर्थाश्च कुर्वन्ति मुनयो द्रव्यसञ्चयम् ।
किं पुनस्तु महीपालः पुत्रवत्पालयन्प्रजाः ॥ १,१११.१६ ॥

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स मुमांल्लाके यस्यार्थाः स च पण्डितः ॥ १,१११.१७ ॥

त्यजन्ति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च सुहृज्जनाश्च ।
ते चार्थवन्तं पुनराश्रयन्ति ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥ १,१११.१८ ॥

अन्धा हि राजा भवति यस्तु सास्त्रविवर्जितः ।
अन्धः पश्यति चारेण शास्त्रहीनो न पश्यति ॥ १,१११.१९ ॥

यस्य पुत्राश्च भृत्याश्च मन्त्रिणश्च पुरोहिताः ।
इन्द्रियाणि प्रसुप्तानि तस्य राज्यं चिरं न हि ॥ १,१११.२० ॥

येनार्जितास्त्रयोऽप्योऽप्येते पुत्रा भृत्याश्च बान्धवाः ।
जिता तेन समं भूपैश्चतुरब्धिर्वसुन्धरा ॥ १,१११.२१ ॥

लङ्घयेच्छास्त्रयुक्तानि हेतुयुक्तानि यानि च ।
सहि नश्यति वै राजा इह लोके परत्र च ॥ १,१११.२२ ॥

मनस्तापं न कुर्वीत आपदं प्राप्य पार्थिवः ।
समबुद्धिः प्रसन्नात्मा प्रसन्नात्मा सुखदुःखे समो भवेत् ॥ १,१११.२३ ॥

धीराः कष्टमनुप्राप्य न भवन्ति विषादिनः ।
प्रविश्य वदनं राहोः किं नोदति पुनः शशी ॥ १,१११.२४ ॥

धिग्धिक्शरीरसुखलालितमानवेषु मा खेदयेद्धनकृशं हि शरीरमेव ।
सद्दारका ह्यधनपाण्डुसुताः श्रुता हि दुःखं विहाय पुनरेव सुखं प्रपन्नाः ॥ १,१११.२५ ॥

गन्धर्वविद्यामालोक्य वाद्यं च गणिकागणान् ।
धनुर्वेदार्थशास्त्राणि लोके रक्षेच्च भूपतिः ॥ १,१११.२६ ॥

कारणेन विना भृत्ये यस्तु कुप्यति पार्थिवः ।
स गृह्णाति विषोन्मादं कृष्णसर्पविसर्जितम् ॥ १,१११.२७ ॥

चापलाद्वारयेद्दृष्टिं मिथ्यावाक्यञ्च वारयेत् ।

मानवे श्रोत्रिये चैव भृत्यवर्गे सदैव हि ॥ १,१११.२८ ॥

लीलां करोति यो राजा भृत्यस्वजनगर्वितः ।
शासने सर्वदा क्षिप्रं रिपुभिः परिभूयते ॥ १,१११.२९ ॥

हुङ्कारे भृकुटीं नैव सदा कुर्वीत पार्थिवः ।
विना दोषेण यो भृत्यान्राजाधमण शास्ति च ।
लीलासुखानि भोग्यानि त्यजेदिह महीपतिः ॥ १,१११.३० ॥

सुखप्रवृत्तैः साध्यन्तै शत्रवो विग्रहे स्थितैः ॥ १,१११.३१ ॥

उद्योगः साहसंधैर्यं बुद्धिः शक्तिः पराक्रमः ।
षड्विधो यस्य उत्साहस्तस्य देवोऽपि शङ्कते ॥ १,१११.३२ ॥

उद्योगेन कृते कार्ये सिद्धर्यस्य न विद्यते ।
दैवं तस्य प्रमाणं हि कर्तव्यं पौरुषं सदा ॥ १,१११.३३ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृहद्द नीतिसारे एकादशोत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् ११२
सूत उवाच ।
भृत्या बहुविधा ज्ञेया उत्तमाधममध्यमाः ।
नियोक्तव्या यथार्हेषु त्रिविधेष्वेव कर्मसु ॥ १,११२.१ ॥

भृत्ये परिक्षणं वक्ष्ये यस्ययस्य हि यो गुणः ।
तमिमं संप्रवक्ष्यामि ये यथाकथितं किल ॥ १,११२.२ ॥

यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः ।
तथा चतुर्भिर्भृतकं परीक्षयेद्व्रतेन शीलेन कलेन कर्मणा ॥ १,११२.३ ॥

कुलशीलगुणोपेतः सत्यधर्मपरायणः ।
रूपवान्सुप्रसन्नश्च कोशाध्यक्षो विधीयते ॥ १,११२.४ ॥

मूल्यरूपपरीक्षाकृद्भवे द्रत्नपरीक्षकः ।
बलाबलपरिज्ञाता सेनाध्यक्षो विधीयते ॥ १,११२.५ ॥

इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ।
अप्रमादी प्रमाथी च प्रतीहारः स उच्यते ॥ १,११२.६ ॥

मेधावी वाक्पटुः प्राज्ञः सत्यवादी जितेन्द्रियः ।
सर्वशास्त्रसमालोकी ह्येष साधुः स लेखकः ॥ १,११२.७ ॥

बुद्धिमान्मतिमांश्चैव परचित्तोपलक्षकः ।
क्रूरो यथोक्तवादी च एष दूतो विधीयते ॥ १,११२.८ ॥

समस्तस्मृतिशास्त्रज्ञः पण्डितोऽथ जितेन्द्रियः ।
शौर्यवीर्यगुणोपेतो धर्माध्यक्षो विधीयते ॥ १,११२.९ ॥

पितृपैतामहो दक्षः शास्त्रज्ञः सत्यवाचकः ।
शुचिश्च कठिनश्चैव सूपकारः स उच्यते ॥ १,११२.१० ॥

आयुर्वेदकृताभ्यासः सर्वेषां प्रियदर्शनः ।
आयुः शीलगुणोपेतो वैद्य एव विधीयते ॥ १,११२.११ ॥

वेदवेदाङ्गतत्त्वज्ञो जपहमपरायणः ।
आशीर्वादपरो नित्यमेष राजपुरोहित ॥ १,११२.१२ ॥

लेखकः पाठकश्चैव गणकः प्रतिरोधकः ।
आलस्ययुक्तश्चैद्राजा कर्म संवर्जयेत्सदा ॥ १,११२.१३ ॥

द्विजिह्वमुद्वेगकरं क्रूरमेकान्तदारुणम् ।

खलस्याहेश्च वदनमपकाराय केवलम् ॥ १,११२.१४ ॥

दुर्जनः परिहर्तव्यो विद्ययालङ्कृतोऽपिसन् ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥ १,११२.१५ ॥

अकारणविष्कृतकोपधारिणः खलाद्भयं कस्य न नाम जायते ।
विषं महाहेर्विषमस्य दुर्वचः सदुः सहं सन्निपतेत्सदा मुखे ॥ १,११२.१६ ॥

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ।
अर्धराज्यहरं भृत्यं यो हन्यात्स न हन्यते ॥ १,११२.१७ ॥

शूरत्वयुक्ता मृदुमन्दवाक्या जितेन्द्रियाः सत्यपराक्रमाश्च ।
प्रागेव पश्चाद्विपरी तरुपा ये ते तु भृत्या न हिता भवन्ति ॥ १,११२.१८ ॥

निरालस्याः सुसन्तुष्टाः प्रतिबोधकाः ।
सुखदुः खसमा धीरा भृत्या लोकेषु दुर्लभाः ॥ १,११२.१९ ॥

क्षान्तिस्तयविहीनश्च क्रूरबुद्धिश्च निन्दकः ।
दाम्भिकः कपटी चैव शठश्च स्पृहयान्वितः ।
अशक्तो भयभीतश्च राज्ञा त्यक्तव्य एव सः ॥ १,११२.२० ॥

सुसन्धानानि चास्त्राणि शस्त्राणि विविधानि च ।
दुर्गे प्रवेशितव्यानि ततः शत्रुं निपातयेत् ॥ १,११२.२१ ॥

षण्मासमथ वर्षं वा सन्धिं कुर्यान्नराधिपः ।
पश्यन्सञ्चितमात्मानं पुनः शत्रुं निपातयेत् ॥ १,११२.२२ ॥

मूर्खान्नियोजयेद्यस्तु त्रयोऽप्येते महीपतेः ।
अयशश्चार्थनाशश्च नरके चैव पातनम् ॥ १,११२.२३ ॥

यत्किञ्चित्कुरुते कर्म शुभं वा यादि वाशुभम् ।
तेन स्म वर्धते राजा सूक्ष्मतो भृत्यकार्यतः ॥ १,११२.२४ ॥

तस्माद्भूमीश्वरः प्राज्ञं धर्मकामार्थसाधने ।
नियोज येद्धिसततं गोब्राह्मणहिताय वै ॥ १,११२.२५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृहस्पत्युक्त नीतिप्तारे द्वादशोत्तरकशततमोऽध्यायः

श्रीगरुडमहापुराणम् ११३
सूत उवाच ।
गुणवन्तं नियुञ्जीत गुणहीनं विवर्जयेत् ।
पण्डितस्य गुणाः सर्वे मूर्वे दोषाश्च केवलाः ॥ १,११३.१ ॥

सद्भिरासीत सततं सद्भिः कुर्वीत सङ्गतिम् ।
सद्भिर्विवादं मैत्रीञ्च नासद्भिः किञ्चिदाचरेत् ॥ १,११३.२ ॥

पण्डितैश्च विर्नातैश्च धर्मशैः सत्यवादिभिः ।
बन्ध्स्थोऽपि तिष्ठेच्च न तु राज्ये खलैः सह ॥ १,११३.३ ॥

सावशेषाणि कार्याणि कुवत्रर्थे युज्यते ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥ १,११३.४ ॥

मधुहेव दुहेत्सारं कुसुमञ्च न घातयेत् ।
वत्सापेक्षी दुहेत्क्षीरं भूमिं गाञ्चैव पार्थिपः ॥ १,११३.५ ॥

यथाक्रमेण पुष्पेभ्यश्चिनुते मधु षट्पदः ।
तथा वित्तमु पादाय राजा कुर्वीत सञ्चयम् ॥ १,११३.६ ॥

वल्मीकं मधुजालञ्च शुक्लण्क्षे तु चन्द्रमाः ।
राजद्रव्यञ्च भैक्ष्यञ्च स्तोकंस्तोकं प्रवर्धते ॥ १,११३.७ ॥

अर्जितस्य क्षयं दृष्टा संप्रदत्तस्य सञ्चयम् ।
अवन्ध्यं दिवसं कुर्याद्दानध्ययनकर्मसु ॥ १,११३.८ ॥

वनेऽपि दोषाः प्रभवन्ति रागिणां गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते निवृत्तरागस्य गृहं तपोवनम् ॥ १,११३.९ ॥

सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते पात्रं कुलं शलिन रक्ष्यते ॥ १,११३.१० ॥

वरं विन्ध्याटव्यां निवसनमभुक्तस्य मरणं वरं सर्पाकीर्णे शयनमथ कूपे निपतनम् ।
वरं भ्रान्तावर्ते सभयजलमध्ये प्रविशनं न तु स्वीये पक्षे हि धनमणु देहीति कथनम् ॥ १,११३.११ ॥

भाग्यक्षयेषु क्षीयन्ते नोपभोगेन सम्पदः ।
पूर्वार्जिते हि सुकृते न नश्यन्ति कदाचन ॥ १,११३.१२ ॥

विप्राणां भूषणं विद्या पृथिव्या भूषणं नृपः ।
नभसो भूषणं चन्द्रः शीलं सर्वस्य भूषणम् ॥ १,११३.१३ ॥

एते ते चन्द्रतुल्याः क्षितिपतितनया भीमसेनार्जुनाद्याः शुराः सत्यप्रतिज्ञा दिनकरवपुषः केशवेनोपगूढाः ।

ते वै दुष्टग्रहस्थाः कृपणवशगता भैक्ष्यचर्यां प्रयाताः को वा कस्मिन्समर्थो भवति विधिवशाद्भ्रामयेत्कर्मरेखा ॥ १,११३.१४ ॥

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रोयेन कपालपाणिपुटके भिक्षाटनं कारितः सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्णणे ॥ १,११३.१५ ॥

दाता बलिर्याचकको मुरारिर्दानं मही विप्रमुखस्य मध्ये ।
दत्त्वा फलं बन्धनमेव लब्धं नमोऽस्तु ते दैव यथेष्टकारिणे ॥ १,११३.१६ ॥

माता यदि भवेल्लक्ष्मीः पिता साक्षाज्जनार्दनः ।
कुबुद्धौ प्रतिपत्तिश्चैत्तस्मिन्दण्डः पतेत्सदा ॥ १,११३.१७ ॥

येनयेन यथा यद्वत्पुरा कर्म सुनिश्चितम् ।
तत्तदेवान्तरा भुङ्क्ते स्वयमाहितमात्मना ॥ १,११३.१८ ॥

आत्मना विहितं दुः खमात्मना विहितं सखम् ।
गर्भशय्यामुपादाय भुङ्क्ते वै पौर्वदैहिकम् ॥ १,११३.१९ ॥

न चान्तरिक्षे न समुद्रमध्ये न पर्वतानां विवरप्रवेशे ।
न मातृमूर्ध्नि प्रधृतस्तथाङ्के त्यक्तुं क्षमः कर्म कृतं नरो हि ॥ १,११३.२० ॥

दुगस्त्रिकूटः परिखा समुद्रो रक्षांसि योधाः परमा च वृत्तिः ।
शास्त्रञ्च वै तूशनसा प्रदिष्टं स रावणः कालवशाद्विनष्टः ॥ १,११३.२१ ॥

यस्मिन्वयसि यत्काले यद्दिवा यच्च वा निशि ।
यन्मुहूर्ते क्षणे वापि तत्तथा न तदन्यथा ॥ १,११३.२२ ॥

गच्छन्ति चान्तरिक्षे वा प्रविशन्ति महीतले ।
धारयन्ति दिशः सर्वा नादत्तमुपलभ्यते ॥ १,११३.२३ ॥

पुराधीता च या विद्या पुरा दत्तञ्च यद्धनम् ।
पुरा कृतानि कर्माणि ह्यग्रे धावन्ति धावतः ॥ १,११३.२४ ॥

कर्माण्यत्र प्रधानानि सम्यग्गृक्षे शुभग्रहे ।
वसिष्ठकृतलग्नापि जानकी दुः खभाजनम् ॥ १,११३.२५ ॥

स्थूलजङ्घो यदा रामः शब्दगामी च लक्ष्मणः ।
घनकेशी यदा सीता त्रयस्ते दुः खभाजनम् ॥ १,११३.२६ ॥

न पितुः कर्मणा पुत्रः पिता वा पुत्रकर्मणा ।
स्वयं कृतेन गच्छन्ति स्वयं बद्धाः स्वकर्मणा ॥ १,११३.२७ ॥

कर्मजन्यशरीरेषु रोगाः शरीरमानसाः ।
शरा इव पतन्तीह विमुक्ता दृढधन्विभिः ॥ १,११३.२८ ॥

अन्यथा शास्त्रगार्भिण्या धिया धीरोर्ऽथमीहते ।
स्वामिवत्प्राक्कृतं कर्म विदधाति तदन्यथा ॥ १,११३.२९ ॥

बालो युवा च वृद्धश्च यः करोति शुभाशुभम् ।
तस्यान्तस्यामवस्थायां भुङ्क्ते जन्मनिजन्मनि ॥ १,११३.३० ॥

अनीक्षमाणोऽपि नरो विदेशस्थोऽपि मानवः ।
स्वकर्मपातवातेन नीयते यत्र तत्फलम् ॥ १,११३.३१ ॥

प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं वारयितुं न शक्तः ।
अतो न शोचामि न विस्मयो मे ललाटलेखा न पुनः प्रयाति (यदस्मदीयं न तु तत्परेषाम् ॥ १,११३.३२ ॥

सर्पः कूपे गजः स्कन्धे बिल आखुश्च धावति ।
नरः शीघ्रतरादेव कर्मणः कः पलायते ॥ १,११३.३३ ॥

नाल्पा भवति सद्विद्या दीयमानापि वर्धते ।
कूपस्थमिव पानीयं भवत्येव बहूदकम् ॥ १,११३.३४ ॥

येर्ऽथा धर्मेण ते सत्या येऽधर्मेण गताः श्रियः ।
धर्मार्थो च महांल्लोके तत्स्मृत्वा ह्यर्थकारणात् ॥ १,११३.३५ ॥

अन्नार्थो यानि दुः खानि करोति कृपणो जनः ।
तान्येव यदि धर्मार्थो न भूयः क्लेशभाजनम् ॥ १,११३.३६ ॥

सर्वेषामेव शौचानामन्नशौचं विशिष्यते ।
योऽन्नार्थैः शुचिः शौचान्न मृदा वारिणा शुचिः ॥ १,११३.३७ ॥

सत्यं शौचं मनः शौचं शौचमिन्द्रियनिग्रहः ।
सर्वभूते दया शौचं जलशौचञ्च पञ्चमम् ॥ १,११३.३८ ॥

यस्य सत्यञ्च शौचञ्च तस्य स्वर्गो न दुर्लभः ।
सत्यं हि वचनं यस्य सोऽश्वमेधाद्विशिष्यते ॥ १,११३.३९ ॥

मृत्तिकानां सहस्रेण चोदकानां शतेन हि ।
न शुध्यति दुराचारो भावोपहतचेतनः ॥ १,११३.४० ॥

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ १,११३.४१ ॥

न प्रहृष्यति संमानैर्नावमानैः प्रकुप्यति ।
न क्रुद्धः परुषं ब्रूयादेतत्साधोस्तु लक्षणम् ॥ १,११३.४२ ॥

दरिद्रस्य मनुष्यस्य प्राज्ञस्य मधुरस्य च ।
काले श्रुत्वा हितं वाक्यं न कश्चित्परितुष्यति ॥ १,११३.४३ ॥

न मन्त्रबलवीर्येण प्रज्ञया पौरुषेण च ।
अलभ्यं लभ्यते मर्त्यैस्तत्र का परिवेदना ॥ १,११३.४४ ॥

अयाचितो मया लब्धो पुनर्मत्प्रेषणाद्गतः ।
यत्रागतस्तत्र गतस्तत्र का परिवेदना ॥ १,११३.४५ ॥

एकवृक्षे सदा रात्रौ नानापक्षिसमागमः ।
प्रभातेऽन्यदिशो यान्ति का तत्र परिवेदना ॥ १,११३.४६ ॥

एकसार्थप्रयाताना सर्वेषान्तत्र गामिनाम् ।
यस्त्वेकस्त्वरितो याति का तत्र परिवेदना ॥ १,११३.४७ ॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि शौनक ।
अव्यक्तनिधनान्येनव का तत्र परिवेदना ॥ १,११३.४८ ॥

नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
कुशाग्रेण तु संस्पृष्टं प्राप्तकालो न जीवति ॥ १,११३.४९ ॥

लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।
प्राप्तव्यान्येव प्राप्नाति दुः खानि च सुखानि च ॥ १,११३.५० ॥

तत्तत्प्राप्नोति पुरुषः किं प्रलापैः करिष्यति ।
आचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥ १,११३.५१ ॥

शीलं कुलं नैव न चैव विद्या ज्ञानं गुणा नैव न बीजशुद्धिः ।
भाग्यानि पूर्वं तपसार्जितानि काले फलन्त्यस्य यथैव वृक्षाः ॥ १,११३.५२ ॥

तत्र मृत्युर्यत्र हन्ता तत्र श्रीर्यत्र सम्पदः ।
तत्र तत्र स्वयं याति प्रेर्यमाणः स्वकर्मभिः ॥ १,११३.५३ ॥

भूतपूर्वं कृतं कर्म कर्तारमनुतिष्ठति ।
यथा धेनुसहस्रेषु वत्सो विन्दन्ति मातरम् ॥ १,११३.५४ ॥

एवं पूर्वकृतं कर्म कर्तारमनुतिष्ठाति ।
सुकृतं भुङ्क्ष्व चात्मीयं मूढ किं परितप्यसे ॥ १,११३.५५ ॥

यथा पूर्वकृतं कर्म शुभं वा यदि वाशुभम् ।
तथा जन्मान्तरे तद्वै कर्ता रमनुगच्छति ॥ १,११३.५६ ॥

नीचः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बलिवमात्राणि पश्यन्नपि न पश्यति ॥ १,११३.५७ ॥

रागद्वेषादियुक्तानां न सुखं कुत्रचिद्द्विज ।
विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥ १,११३.५८ ॥

यत्र स्नेहो भयं तत्र स्नेहो दुः खस्य भाजनम् ।
स्नेहमूलानि दुः खानि तस्मिस्त्यक्ते महत्सुखम् ॥ १,११३.५९ ॥

शरीरमेवायतनं दुः खस्य च सुखस्य च ।
जीवितञ्च शरीरञ्च जात्यैव सह जायते ॥ १,११३.६० ॥

सर्वं परवशं दुः खं सर्व मात्मवशं सुखम् ।
एतद्विद्यात्समासेन लक्षणं सुखदुः खयोः ॥ १,११३.६१ ॥

सुखस्यानन्तरं दुः खं दुः खस्यानन्तरं सुखम् ।
शुखं दुः खं मनुष्याणां चक्रवत्परिवर्तते ॥ १,११३.६२ ॥

यद्गतं तदतिक्रान्तं यदि स्यात्तच्च दूरतः ।
वर्तमानेन वर्तेत न स शोकेन बाध्यते ॥ १,११३.६३ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृहद्द नीतिसारे त्रयोशोत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् ११४
सूत उवाच ।
न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ।
कारणादेव जायन्ते मित्राणि रिपवस्तथा ॥ १,११४.१ ॥

शोकत्राणं भयत्राणं प्रीतिविश्वासभाजनम् ।
केन रत्नांमदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ १,११४.२ ॥

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ १,११४.३ ॥

न मातरि न दारेषु न सोदर्ये न चात्मजे ।
विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे ॥ १,११४.४ ॥

यदिच्छेच्छाश्वतीं प्रीतिं त्रीन्दोषान्परिवर्जयेत् ।
द्युतमर्थप्रयोगञ्च परोक्षे दारदर्शनम् ॥ १,११४.५ ॥

मात्रा स्वस्त्रा दुहित्रा वा न विविक्तासनो वसेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ १,११४.६ ॥

विपरीतरतिः कामः स्वायतेषु न विद्यते ।
यथोपायो वधो दण्डस्तथैव ह्यनु वर्तते ॥ १,११४.७ ॥

अपि कल्पानिलस्यैव तुरगस्य महोदधेः ।
शक्यते प्रसरो बोद्धुं न ह्यरक्तस्ये चतसः ॥ १,११४.८ ॥

क्षणो नास्ति रहो नास्ति न स्ति प्रार्थयिता जनः ।
तेन शौनक नारीणां सतीत्वमुपजायते ॥ १,११४.९ ॥

एक वै सेवते नित्यमन्यश्चेतपि रोचते ।
पुरुषाणामलाभेन नारी चैव पतिव्रता ॥ १,११४.१० ॥

जननी यानि कुरुते रहस्यं मदनातुरा ।
सुतैस्तानि न चिन्त्यानि शीलविप्रतिपत्तिभिः ॥ १,११४.११ ॥

पराधीना निद्रा परहृदयकृत्यानुसरणं सदा हेला हास्यं नियतमपि शोकेन रहितम् ।
पणे न्यस्तः कायो विटजनखुरैर्दारितगलो बहूत्कण्ठवृत्तिर्जगति गणिक्राया बहुमतः ॥ १,११४.१२ ॥

अग्निरापः स्त्रियो मूर्खाः सर्पा राजकुलानि च ।
नित्यं परोपसेव्यानि सद्यः प्राणहराणि षट् ॥ १,११४.१३ ॥

किं चित्रं यदि वेद (शब्द) शास्त्रकुशलो विप्रो भवेत्पण्डितः किं चित्रं यदि दण्डनीतिकुशलो राजा भवेद्धार्मिकः ।

किं चित्रं यदि रूपयौवनवती साध्वी भवेत्कामिनी तच्चित्रं यदि निर्धनोऽपि पुरुषः पापं न कुर्यात्क्वचित् ॥ १,११४.१४ ॥

नात्मच्छिद्रं परे दद्याद्विद्याच्छिद्रं परस्य च ।
गूहेत्कूर्म इवाङ्गानि परभावञ्च लक्षयेत् ॥ १,११४.१५ ॥

पातालतलवा सिन्य उच्चप्राकारसंस्थिताः ।
यदि नो चिकुरोद्भेदाल्लभ्यन्ते कैः स्त्रियो न हि ॥ १,११४.१६ ॥

समधर्मा हि मर्मज्ञस्तीक्ष्णः स्वजनकण्टकः ।
न तथा बाधते शत्रुः कृतवैरो बहिः स्थितः ॥ १,११४.१७ ॥

स पण्डितो यो ह्यनुञ्जयेद्वै मिष्टेन बालं विनियेन शिष्टम् ।
अर्थेन नारीं तपसा हि देवान्सर्वांश्च लोकांश्च सुसंग्रहेण ॥ १,११४.१८ ॥

छलेन मित्रं कलुषेण धर्मं परोपतापेन समृद्धिभावनम् ।
सुखेन विद्यां पुरुषेण नारीं वाञ्छन्ति वै ये न च पण्डितास्ते ॥ १,११४.१९ ॥

फलार्थो फलिनं वृक्षं यश्छिन्द्याद्दुर्मतिर्नरः ।
निष्फलं तस्य वै कार्यां महादोषमवाप्नुयात् ॥ १,११४.२० ॥

सधनो हि तपस्वी च दूरतो वै कृतश्रमः ।
मद्यप स्त्री सतीत्येवं विप्र न श्रद्दधाम्यहम् ॥ १,११४.२१ ॥

न विश्वसेदविश्वस्ते मित्रस्यापि न विश्वसेत् ।
कदाचित्कुपितं मित्रं सर्वं गुह्यं प्रकाशयेत् ॥ १,११४.२२ ॥

सर्वभूतेषु विश्वासः सर्वभूतेषु सात्त्विकः ।
स्वबावमात्मना गूहेदेतत्साधोर्हि लक्षणम् ॥ १,११४.२३ ॥

यस्मिन्कस्मिन्कृते कार्ये कर्तारमनुवर्तते ।
सर्वथा वर्तमानोऽपि धैर्यबुद्धिन्तु कारयेत् ॥ १,११४.२४ ॥

वृद्धाः स्त्रियो नवं मद्यं शुष्कं मांसं त्रिमूलकम् ।
रात्रौ दधि दिवा स्वप्नं विद्वान्षट्परिवर्जयेत् ॥ १,११४.२५ ॥

विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम् ।
विषं कुशिक्षिता विद्या अजीर्णे भोजनं विषम् ॥ १,११४.२६ ॥

प्रियं गानमकुण्ठस्य नीचस्योच्चासनं प्रियम् ।
प्रियं दानं दरिद्रस्य भूनश्चतरुणी प्रिया ॥ १,११४.२७ ॥

अत्यम्बुपानं कठिनाशनञ्च धातुक्षयोवेगविधारणञ्च ।

दिवाशयो जागरणञ्च रात्रौ षड्भिर्नराणां निवसन्ति रोगाः ॥ १,११४.२८ ॥

बालातपश्चाप्यतिमैथुनञ्च श्मशानधूमः करतापनञ्च ।
रजस्वलावक्त्रनिरीक्षणञ्च सुदीर्घमायुर्ननु कर्षयेच्च ॥ १,११४.२९ ॥

शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ १,११४.३० ॥

सद्यः पक्वघृतं द्राक्षा बाला स्त्री क्षीरभोजनम् ।
उष्णोदकं तरुच्छाया सद्यः प्राणहराणि षट् ॥ १,११४.३१ ॥

कूपादकं वटच्छाया नारीणाञ्च पयोधरः ।
शीतकाले भवेदुष्णमुष्णकाले च शीतलम् ॥ १,११४.३२ ॥

त्रयो बलकराः सद्यो बालाभ्यङ्गसुभोजनम् ।
त्रयो बलहराः सद्यो ह्यध्वा वे मैथुनं ज्वरः ॥ १,११४.३३ ॥

शुष्कं मांसं पयो नित्यं भार्यामित्रैः सहैव तु ।
न भाक्तव्यं नृपैः सार्धं वियोगं कुरुते क्षणात् ॥ १,११४.३४ ॥

कुचेलिन दन्तमलोपधारिणं बह्वाशिनं निष्ठुरवाक्यभाषिणम् ।
सूर्योदये ह्यस्तमयेऽपि शायिनं विमुञ्चति श्रीरपि चक्रपाणिनम् ॥ १,११४.३५ ॥

नित्यं छेदस्तृणानं धरणिविलखनं पादयोश्चापमार्ष्टिः दन्तानामप्यशौचं मलिनवसनता रूक्षता मूर्धजानाम् ।
द्वे सध्ये चापि निद्रा विवसनशयनं ग्रासहासातिरेकः स्वाङ्गे पीठे च वाद्यं निधनमुपनयेत्केशवस्यापि लक्ष्मीम् ॥ १,११४.३६ ॥

शिरः सुधौतं चरणौ सुमार्जितौ वराङ्गनासेवनमल्पभोजनम् ।
अनग्नशायित्वमपर्वमैथुनं चिरप्रनष्टां श्रियमानयन्ति षट् ॥ १,११४.३७ ॥

यस्य कस्य तु पुष्पस्य पाणाडरस्य विशेषतः ।
शिरसा धार्यमाणस्य ह्यलक्ष्मीः प्रतिहन्यते ॥ १,११४.३८ ॥

दीपस्य पश्चिमा छाया छाया शय्यासनस्य च ।
रजकस्य तु यत्तीर्थलक्ष्मीस्तत्र तिष्ठति ॥ १,११४.३९ ॥

बालातपः प्रेतधूमः स्त्री वृद्धा तरुणं दधि ।
आयुष्कामो न सेवेत तथा संमार्जनीरजः ॥ १,११४.४० ॥

गजाश्वरथधान्यानां गवाञ्चैव रजः शुभम् ।
अशुभं च विजानीयात्खरोष्ट्रजाविकेषु च ॥ १,११४.४१ ॥

गवां रजो धान्यरजः पुत्रस्याङ्गभवं रजः ।
एतद्रजो महाशस्तं महापातकनाशनम् ॥ १,११४.४२ ॥

अजारजः खररजो यत्तु संमार्जनीरजः ।
एतद्रजो महापापं महाकिल्बिषकारकम् ॥ १,११४.४३ ॥

शूर्पवातो नखाग्राम्बु स्नानवस्त्रमृजोदकम् ।
केशाम्बु मार्जनीरेणुर्हन्ति पुण्यं पुरा कृतम् ॥ १,११४.४४ ॥

विप्रयोर्विप्रवह्न्योश्च दम्पत्योः स्वामिनोस्तथा ।
अन्तरेण न गन्तव्यं हयस्य वृषभस्य च ॥ १,११४.४५ ॥

स्त्रीषु राजाग्निसर्पेषु स्वाध्याये शत्रुसेवने ।
भोगास्वादेषु विश्वासं कः प्राज्ञः कर्तुमर्हति ॥ १,११४.४६ ॥

न विश्वसेदविश्वस्तं विश्वस्तं विश्वस्तं नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलादपि निकृन्तति ॥ १,११४.४७ ॥

वैरिणा सह सन्धाय विश्वस्तो यदि तिष्ठति ।
स वृक्षाग्रे प्रसुप्तो हि पतितः प्रतिबुध्यते ॥ १,११४.४८ ॥

नात्यन्तं मृदुना भाव्यं नात्यन्तं कूरकर्मणा ।
मृदुनैव मृदुं हन्ति दारुणेनैव दारुणम् ॥ १,११४.४९ ॥

नात्यन्तं सरलैर्भाव्यं नात्यन्तं मृदुना तथा ।
सरलास्तत्र छिद्यन्ते कुब्जास्तिष्ठन्ति पादपाः ॥ १,११४.५० ॥

नमन्ति फलिनो वृक्षा नमन्ति गुणिनो जनाः ।
शुष्कवृक्षाश्च मूर्खाश्च भिद्यन्ते न नमन्ति च ॥ १,११४.५१ ॥

अप्रार्थितानि दुः खानि यथैवायान्ति यान्ति च ।
मार्जार इव लुम्पेत तथा प्रार्थयितार नरः ॥ १,११४.५२ ॥

पूर्वं पश्चाच्चरन्त्यार्ये सदैव बहुसम्पदः ।
विपरीतमनार्ये च यथेच्छसि तथा चर ॥ १,११४.५३ ॥

षट्कर्णो भिद्यते मन्त्रश्चतुः कर्णश्चधार्यते ।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्त न बुध्यते ॥ १,११४.५४ ॥

तया गवा किं क्रियते या न दोग्ध्री न गर्भिणी ।
कोर्ऽथ पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥ १,११४.५५ ॥

एकेनापि सुपुत्रेण विद्यायुक्तेन धीमता ।
कुलं पुरुषसिंहेन चन्द्रेण गगनं यथा ॥ १,११४.५६ ॥

एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वनं सुवासितं सर्वं सुपुत्रेण कुलं यथा ॥ १,११४.५७ ॥

एको हि गुणवान्पुत्रो निर्गुणेन शतेन किम् ।
चन्द्रो हन्ति तमांस्येको न च ज्योतिः सहस्रकम् ॥ १,११४.५८ ॥

लालयेत्पञ्च वर्षाणि दश वर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥ १,११४.५९ ॥

जायमानो हरेद्दारान् वर्धमानो हरेद्धनम् ।
म्रियमाणो हरेत्प्राणान्नास्ति पुत्रसमो रिपुः ॥ १,११४.६० ॥

केचिन्मृगमुखा व्याघ्राः केचिद्व्याघ्रमुखा मृगाः ।
तत्स्वरूपपहिज्ञाने ह्यविश्वासः पदेपदे ॥ १,११४.६१ ॥

एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ १,११४.६२ ॥

एतदेवानुमन्येत भोगा हि क्षणभङ्गिनः ।
स्निग्धेषु च विदग्धस्य मतयो वै ह्यनाकुलाः ॥ १,११४.६३ ॥

ज्येष्ठः पितृसमो भ्राता मृते पितरि शौनक ।
सर्वेषां स पिता हि स्यात्सर्वेषामनुपालकः ॥ १,११४.६४ ॥

कनिष्ठेषु च सर्वेषु समत्वेनानुवर्तते ।
समापभोगजीवेषु यथैवं तनयेषु च ॥ १,११४.६५ ॥

बहूनामल्पसाराणां समवायो हि दारुणः ।
तृणैरावेष्टिता रज्जुस्तया नागोऽपि बध्यते ॥ १,११४.६६ ॥

अपहृत्य परस्वं हि यस्तु दानं प्रयच्छति ।
स दाता नरकं याति यस्यार्थास्तस्य तत्फलम् ॥ १,११४.६७ ॥

देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ १,११४.६८ ॥

ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ १,११४.६९ ॥

नाश्नन्ति पितरो देवाः क्षुद्रस्य वृषलीपतेः ।
भार्याजितस्य नाश्नन्ति यस्याश्चोपपतिर्गृहे ॥ १,११४.७० ॥

अकृजज्ञमनार्यञ्च दीर्धरोषमनार्जवम् ।
चतुरो विद्धि चाण्डालाञ्जात्या जायेत पञ्चमः ॥ १,११४.७१ ॥

नोपेक्षितव्यो दुर्बद्धि शत्रुरल्पोऽप्यवज्ञया ।
वह्निरल्पोऽप्यसंहार्यः कुरुते भस्मसाज्जगत् ॥ १,११४.७२ ॥

नवे वयसि यः शान्तः स शान्त इति मे मतिः ।
धातुषु क्षीयमाणेषु शमः कस्य न जायते ॥ १,११४.७३ ॥

पन्थान इव विप्रेन्द्र सर्वसाधारणाः श्रियः ।
मदीया इति मत्वा वै न हि हर्षयुतो भवेत् ॥ १,११४.७४ ॥

चित्तायत्तं धातुवश्यं शरीरं चित्ते नष्टे धातवो यान्ति नाशम् ।
तस्माच्चित्तं सर्वदा रक्षणीयं स्वस्थे चित्ते धातवः सम्भवन्ति ॥ १,११४.७५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृहद्द नीतिसारे चतुर्दशोत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् ११५
सूत उवाच ।
कुमार्यां च कुमित्रं च कुराजानं कुपुत्रकम् ।
कुकन्यां च कुदेशं च दूरतः परिवर्जयेत् ॥ १,११५.१ ॥

धर्मः प्रव्रजितस्तपः प्रचलितं सत्यं च दूरं गतं पृथ्वी वन्ध्यफला जनाः कपटिनो लौल्ये स्थिता ब्राह्मणाः ।
मर्त्याः स्त्रीवशगाः स्त्रियश्च चपला नीचा जना उन्नताः हा कष्टं खलुजीवितं कलियुगे धन्या जना ये मृताः ॥ १,११५.२ ॥

धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् ।
परचित्तगतान् दारान्पुत्रं कुव्यसने स्थितम् ॥ १,११५.३ ॥

कुपुत्रे निर्वृतिर्नास्ति कुभार्यायां कुतो रतिः ।
सुमित्र नास्ति विश्वासः कुराज्ये नास्ति जीवितम् ॥ १,११५.४ ॥

परान्नं च परस्वं च परशय्याः परस्त्रियः ।
परवेश्मनि वासश्च शक्रादपि हरेच्छ्रियम् ॥ १,११५.५ ॥

आलापाद्गात्रसंस्पर्शात्संसर्गात्सह भोजनात् ।
आसनाच्छयनाद्यानात्पापं संक्रमते नृणाम् ॥ १,११५.६ ॥

स्त्रियो नश्यन्ति रूपेण तपः क्रोधन नश्यति ।
गावो द्वरप्रचारेण शूद्रान्नेन द्विजोत्तमः ॥ १,११५.७ ॥

आसनादेकशय्यायां बोजनात्पङ्क्तिसङ्करात् ।
ततः संक्रमते पापं घटाद्धट इवोदकम् ॥ १,११५.८ ॥

लालने बहवो दोषास्ताडने बहवो गुणाः ।
तस्माच्छिष्यं च पुत्रं च ताडयेन्न तु लालयेत् ॥ १,११५.९ ॥

अध्वा जरा देहवतां पर्वतानां जलं जरा ।
असंभोगश्च नारीणां वस्त्राणामातपो जरा ॥ १,११५.१० ॥

अधमाः कलिमिच्छन्ति सन्धिमिच्छति मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥ १,११५.११ ॥

मानो हि मूलमर्थस्य माने सति धनेन किम् ।
प्रभ्रष्टमानदर्पस्य किं धनेन किमायुषा ॥ १,११५.१२ ॥

अधमा धनमिच्छन्ति धनमानौ हि मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥ १,११५.१३ ॥

वनेऽपि सिंहा न नमन्ति कं च बुभु क्षिता मांसनिरीक्षणं च ।

धनैर्विहीनाः सुकुलेषु जाता न नीचकर्माणि समारभन्ते ॥ १,११५.१४ ॥

नाभिषेको न संस्कारः सिंहस्य क्रियते वने ।
नित्यमूर्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ १,११५.१५ ॥

वणिक्प्रमादी भृकश्च मानी भिक्षुर्विलासी ह्यधनश्च कामी ।
वराङ्गना चाप्रियवादिनी च न ते च कर्माणि समारभन्ते ॥ १,११५.१६ ॥

दाता दरिद्रः कृपणोर्ऽथयुक्तः पुत्त्रोऽविधेयः कुजनस्य सेवा ।
परोपकारेषु नरस्य मृत्युः प्रजायते दुश्चरितानि पञ्च ॥ १,११५.१७ ॥

कान्तावियोगः स्वजनापमानं ऋणस्य शेषः कुजनस्य सेवा ।
दारिद्रयाभावाद्विमुखाश्च मित्रा विनाग्निना पञ्च दहन्ति तीव्राः ॥ १,११५.१८ ॥

चिन्तासहस्रेषु च तेषु मध्ये चिन्ताश्चतस्रोऽप्यसिधारतुल्याः ।
नीचापमानं क्षुधितं कलत्रं भार्या विरक्ता सहजोपरोधः ॥ १,११५.१९ ॥

वश्यश्च पुत्रैर्ऽथ करी च विद्या अरोगिता सज्जनसङ्गतिश्च ।
इष्टा च भार्या वशवर्तिनी च दुः खस्य मूलोद्धरणानि पञ्च ॥ १,११५.२० ॥

कुरङ्गमातङ्गपतङ्गंभृग मीना हताः पञ्चबिरेव पञ्च ।
एकः प्रमाथी स कथं न घात्यो यः सेवते पञ्चभिरेव पञ्च ॥ १,११५.२१ ॥

अधीरः कर्कशः स्तब्धः कुचेलः स्वयमागतः ।
पञ्च विप्रा न पूज्यन्ते बृहस्पतिसमा अपि ॥ १,११५.२२ ॥

आयुः कर्म च वित्तं च विद्या निधनमेव च ।
पञ्चैतानि विविच्यन्ते जायमानस्य देहिनः ॥ १,११५.२३ ॥

पर्वतारोहणे तोये गोकुले दुष्टनिग्रहे ।
पतितस्य समुत्थाने शस्ताः पञ्च (ह्येते) गुणाः स्मृताः ॥ १,११५.२४ ॥

अभ्रच्छाया खले प्रीतिः परनारीषु संगतिः ।
पञ्चैते ह्यस्थिरा भावा यौवनानि धनानि च ॥ १,११५.२५ ॥

अस्थिरं जीवितं लोके अस्थिरं धनयौवनम् ।
अस्थिरं पुत्रदाराद्यं धर्मः कीर्तिर्यशः स्थिरम् ॥ १,११५.२६ ॥

शत जीवितमत्यल्पं रात्रिस्तस्यार्धहारिणी ।
व्याधिशोकजरायासैरर्धं तदपि निष्फलम् ॥ १,११५.२७ ॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं तस्यार्धस्थितकिञ्चिदर्धमधिकं बाल्यस्य काले गतम् ।

किञ्चिद्वन्धुवियोगदुः खमरणैर्भूपालसेवागतं शेषं वारितरङ्गगर्भचपलं मानेन किं मानिनाम् ॥ १,११५.२८ ॥

अहोरात्रमयो लोके जरारूपेण संचरेत् ।
मृत्युर्ग्रसति भूतानि पवनं पन्नगो यथा ॥ १,११५.२९ ॥

गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतो न चेत् ।
सर्वसत्त्वहितार्थाय पशोरिव विचेष्टितम् ॥ १,११५.३० ॥

अहितहितविचारशून्यबुद्धेः श्रुतिसमये बहुभिर्वितर्कितस्य ।
उदरभरणमात्रतुष्टबुद्धेः पुरुषपशोश्च पशोश्च को विशेषः ॥ १,११५.३१ ॥

शौर्ये तपसि दाने च यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥ १,११५.३२ ॥

यज्जीव्यते क्षणमपि प्रथितं मनुष्यैर्विज्ञानविक्रमयशोभिरभग्नमानैः ।
तन्नाम जीवितमिति प्रवदन्ति तज्ज्ञाः काकोऽपि जीवति चिरं च बलिं च भुङ्क्ते ॥ १,११५.३३ ॥

किं जीवितेन धनमानविवर्जितेन मित्रेण किं भवति भीतिसशङ्कितेन ।
सिंहव्रतं चरत गच्छत मा विषादं काकोऽपि जीवति चिरं च बलिं च भुङ्क्ते ॥ १,११५.३४ ॥

यो वात्मनीह न गुरौ न च भृत्यवर्गे दीने दयां न कुरुते न च मित्रकार्ये ।
किं तस्य जीवितफलेनमनुष्यलोके काकोऽपि जीवति चिरं च बलिं च भुङ्क्ते ॥ १,११५.३५ ॥

यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च ।
स लौहकारभस्त्रेव श्वसन्नपि न जीवति ॥ १,११५.३६ ॥

स्वाधीनवृत्तेः साफल्यं न पराधीनवर्तिता ।
ये पराधीनकर्माणो जीवन्तोऽपि च ते मृताः ॥ १,११५.३७ ॥

सु(स्व) पूरा वै कापुरुषाः सु(स्व) पूरो मूषिकाञ्जलिः ।
असन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ १,११५.३८ ॥

अभ्रच्छाया तृणादग्निर्नोचसेवा पथो जलम् ।
वेश्यारागः खले प्रीतिः षडेते बुद्वुदोपमाः ॥ १,११५.३९ ॥

वाचा विहितसार्थेन लोको न च सुखायते ।
जीवितं मानमूलं हि माने म्लाने कुतः सुखम्? ॥ १,११५.४० ॥

अबलस्य बलं राजा बालस्य रुदितं बलम् ।
बलं मूर्खस्य मौनं हि तस्करस्यानृतं बलम् ॥ १,११५.४१ ॥

यथायथा हि पुरुषः शास्त्रं समधिगच्छति ।

तथातथास्य मेधा स्याद्विज्ञानं चास्य रोचते ॥ १,११५.४२ ॥

यथायथा हि पुरुषः कल्याणे कुरुते मतिम् ।
तथातथा हि सर्वत्र श्लिष्यते लोकसुप्रियः ॥ १,११५.४३ ॥

लोभप्रमादविश्वासैः पुरुषो नश्यति त्रिभिः ।
तस्माल्लोभो न कर्तव्यः प्रमादो नोन विश्वसेत् ॥ १,११५.४४ ॥

तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।
उत्पन्ने तु भये तीव्रे स्थातव्यं वै ह्यभीतवत् ॥ १,११५.४५ ॥

ऋणशेषं चाग्निशेषं व्याधिशेषं तथैव च ।
पुनः पुनः प्रवर्धन्ते तस्माच्छेषं न कारयेत् ॥ १,११५.४६ ॥

कृते प्रतिकृतं कुर्याद्धिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि दुष्टे दोषं समाचरेत् ॥ १,११५.४७ ॥

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं मायामयमरिं तथा ॥ १,११५.४८ ॥

दुर्जनस्य हि संगेन सुजनोऽपि विनश्यति ।
प्रसन्नमपि पानीयं कर्दमैः कलुषीकृतम् ॥ १,११५.४९ ॥

स भुङ्क्ते सद्विजो भुङ्क्ते समशेषनिरूपणम् ।
तस्मात्सर्वप्रयत्नेन द्विजः पूज्यः प्रयत्नतः ॥ १,११५.५० ॥

तद्भुज्यते यद्द्विजभुक्तशेषं स बुद्धिमान्यो न करोति पापम् ।
तत्सौहृदं यक्रियते परोक्षे दम्भैर्विना यः क्रियते स धर्मः ॥ १,११५.५१ ॥

न सा सभा यत्र न सन्ति वृद्धाः वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मः स नो यत्र न सत्यमस्ति नैतत्सत्यं यच्छलेनानुविद्धम् ॥ १,११५.५२ ॥

ब्राह्मणोऽपि मनुष्याणामादित्यश्चैव तेजसाम् ।
शिरोऽपि सर्वगात्राणां व्रतानां सत्यमुत्तमम् ॥ १,११५.५३ ॥

तन्मङ्गलं यत्र मनः प्रसन्नं तज्जीवनं यन्न परस्य सेवा ।
तदर्जितं यत्स्वजनेन भुक्तं तद्गर्जितं यत्समरे रिपूणाम् ॥ १,११५.५४ ॥

सा स्त्रीया न मदं कुर्यात्स सुखी तृष्णयोज्झितः ।
तन्मित्रं यत्र विश्वासः पुरुषः स जितेन्द्रियः ॥ १,११५.५५ ॥

तत्र मुक्तादरस्नेहो विलुप्तं यत्र सौहृदम् ।

तदेव केवलं श्लघ्यं यस्यात्मा क्रियते स्तुतौ ॥ १,११५.५६ ॥

नदीनामग्निहोत्राणां भारतस्य कलस्य च ।
मूलान्वेषो न कर्तव्यो मूलाद्दोषो न हीयते ॥ १,११५.५७ ॥

लवणजलान्ता नद्यः स्त्रीभेदान्तं च मैथुनम् ।
पैशुन्यं जनवार्तान्तं वित्तं दुः खत्रयान्तकम् ॥ १,११५.५८ ॥

राज्यश्रीर्ब्रह्मशापान्ता पापान्तं ब्रह्मवर्चसम् ।
आचान्तं घोषवासान्तं कुलस्यान्तं स्त्रिया प्रभो (भुः) ॥ १,११५.५९ ॥

सर्वे क्षयान्ता निलयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ १,११५.६० ॥

यदीच्छेत्पुनरागन्तुं नातिदूरमनुव्रजेत् ।
उदकान्तान्निवर्तेत स्निग्धवर्णाच्च पादपात् ॥ १,११५.६१ ॥

अनायके न वस्तव्यं न चैव बहुनायके ।
स्त्रीनायके न वस्तव्यं वस्तव्यं बालनायके ॥ १,११५.६२ ॥

पिता रक्षति कौमारे भत्ता रक्षति यौवने ।
पुत्रस्तु स्थविरे काले न स्त्री स्वातन्त्र्यमर्हति ॥ १,११५.६३ ॥

त्यजेद्वन्ध्यामष्टमेऽब्दे नवमे तु मृतप्रिजाम् ।
एकादशे स्त्रीजननीं सद्यश्चाप्रियावादिनीम् ॥ १,११५.६४ ॥

अनर्थित्वान्मनुष्याणां भिया परिजनस्य च ।
अर्थादपेतमर्यादास्त्रयस्तिष्ठन्ति भर्तृषु ॥ १,११५.६५ ॥

अश्वं श्रान्तं गजं मत्तं गावः प्रथमसूतिकाः ।
अनूदके च मण्डूकान्प्राज्ञो दूरेण वर्जयेत् ॥ १,११५.६६ ॥

अर्थातुराणां न सुहृन्न बन्धुः कामातुराणां न भयं न लज्जा ।
चिन्तातुराणां न सुखं न निद्रा क्षुधातुराणां न बलं न तेजः ॥ १,११५.६७ ॥

कुतो निद्रा दरिद्रस्य परप्रेष्यवरस्य च ।
परनारीप्रसक्तस्य परद्रव्यहरस्य च ॥ १,११५.६८ ॥

सुखं स्वपित्यनृणवान्व्याधिमुक्तश्च यो नरः ।
सावकाशस्तु वै भुङ्क्ते यस्तु दारैर्न सङ्गतः ॥ १,११५.६९ ॥

अम्भसः परिमाणे उन्नतं कमलं भवेत् ।

स्वस्वामिना बलवता भृत्यो भवति गर्वितः ॥ १,११५.७० ॥

स्थानस्थितस्य पद्मस्य मित्रे वरुणभास्करौ ।
स्थानच्युतस्य तस्यैव क्लेदशोषणकारकौ ॥ १,११५.७१ ॥

ये पदस्थस्य मित्त्राणि ते तस्य रिपुतां गताः ।
भानोः पद्मे जले प्रीतिः स्थलोद्धरणशोषणः ॥ १,११५.७२ ॥

स्थानस्थितानि पूज्यन्ते पूज्यन्ते च पदे स्थिताः ।
स्थानभ्रष्टा न पूज्यन्ते केशा दन्ता नखा नराः ॥ १,११५.७३ ॥

आचारः कुलमाख्यति देशमाख्याति भाषितम् ।
सम्भ्रमः स्नेहमाख्याति वपुराख्याति भोजनम् ॥ १,११५.७४ ॥

वृथा वृष्टिः समुद्रस्य वृथा तृप्तस्य भोजनम् ।
वृथा दानं समृद्धस्य नीचस्य सुकृतं वथा ॥ १,११५.७५ ॥

दूरस्थोऽपि समीपस्थो यो यस्य हृदये स्थितः ।
हृदयादपि निष्क्रान्तः समीपस्थोऽपि दूरतः ॥ १,११५.७६ ॥

मुखभङ्गः स्वरो दीनो गात्रस्वेदो महद्भयम् ।
मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ १,११५.७७ ॥

कुब्जस्य कीटघातस्य वातान्निष्कासितस्य च ।
शिखरे वसतस्तस्य वरं जन्म न याचितम् ॥ १,११५.७८ ॥

जगत्पतिर्हि याचित्वा विष्णुर्वामनतां यतः ।
कान्योऽधिकतरस्तस्य योर्ऽथो याति न लाघवम् ॥ १,११५.७९ ॥

माता शत्रुः पिता वैरी बाला येन न पाठिताः ।
सभामध्ये न शोभन्ते हंसमध्ये बकायथा ॥ १,११५.८० ॥

विद्या नाम कुरूपरूपमधिकं विद्यातिगुप्तं धनं विद्या साधुकरी जनप्रियकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनार्तिनाशनकरी विद्या परं दैवतं विद्या राजसु पूजिता हि मनुजो विद्यविहीनः पशुः ॥ १,११५.८१ ॥

गृहे चाभ्यन्तरे द्रव्यं लग्नं चैव तु दृश्यते ।
अशेषं हरणीयं च विद्या न ह्रियते परैः ॥ १,११५.८२ ॥

शौनकीयं नीतिसारं विष्णुः सर्वत्रतानि च ।
कथयामास वैपूर्वं तत्र शुश्राव शङ्करः ।
शङ्करादशृणोद्व्यासो व्यासादस्माभिरेव च ॥ १,११५.८३ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे शौनकोक्तनीतिसारादिवर्णनं नाम पञ्चदशोत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् ११६
ब्रह्मोवाच ।
व्रतानि व्यास वक्ष्यामि हरिर्यैः सर्वदो भवेत् ।
सर्वमासर्क्षतिथिषु वारेषु हरिरर्चितः ॥ १,११६.१ ॥

एकभक्तेन नक्तेन उपवासफलादिना ।
ददाति धनधान्यादि पुत्रराज्यजयादिकम् ॥ १,११६.२ ॥

वैश्वानरः प्रतिपदि कुबेरः पूजितोऽर्थदः ।
पोष्य ब्रह्मो प्रतिपद्यर्चितः श्रीस्तथाश्विनी ॥ १,११६.३ ॥

द्वितीयायां यमो लक्ष्मीनारायण इहार्थदः ।
तृतीयायां त्रिदेवाश्च गौरीविघ्नेशशङ्कराः ॥ १,११६.४ ॥

चतुर्थ्यां च चतुर्व्यूहः पञ्चम्यामर्चितो हरिः ।
कार्तिकेयो रविः षष्ठ्यां सप्तम्यां भास्करोऽर्थदः ॥ १,११६.५ ॥

दुर्गाष्टम्यां नवम्यां च मातरोऽथ दिशोऽर्थदाः ।
दशम्यां च यमश्चन्द्र एकादश्यामृषीन्यजेत् ॥ १,११६.६ ॥

द्वादश्यां च हरिः कामस्त्रयोदश्यां महेश्वरः ।
चतुर्दश्यां पञ्चदश्यां ब्रह्मा च पितरोऽर्थदाः ॥ १,११६.७ ॥

अमावास्यां पूजनीया वारा वै भास्करादयः ।
नक्षत्राणि च योगाश्च पूजिताः सर्वदायकाः ॥ १,११६.८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे तिथ्यादिव्रतवर्णनं नाम षोडशोत्तरशततमोऽध्यायः
श्रीगरुडमहापुराणम् ११६
ब्रह्मोवाच ।
व्रतानि व्यास वक्ष्यामि हरिर्यैः सर्वदो भवेत् ।
सर्वमासर्क्षतिथिषु वारेषु हरिरर्चितः ॥ १,११६.१ ॥

एकभक्तेन नक्तेन उपवासफलादिना ।
ददाति धनधान्यादि पुत्रराज्यजयादिकम् ॥ १,११६.२ ॥

वैश्वानरः प्रतिपदि कुबेरः पूजितोऽर्थदः ।
पोष्य ब्रह्मो प्रतिपद्यर्चितः श्रिस्तथाश्विनी ॥ १,११६.३ ॥

द्वितीयायां यमो लक्ष्मीनारायण इहार्थदः ।
तृतीयायां त्रिदेवाश्च गौरीविघ्नेशशङ्कराः ॥ १,११६.४ ॥

चतुर्थ्यां च चतुर्व्यूहः पञ्चम्यामर्चितो हरिः ।
कार्तिकेयो रविः षष्ठ्यां सप्तम्यां भास्करोऽर्थदः ॥ १,११६.५ ॥

दुर्गाष्टम्यां नवम्यां च मातरोऽथ दिशोऽर्थदाः ।
दशम्यां च यमश्चन्द्र एकादश्यामृषीन्यजेत् ॥ १,११६.६ ॥

द्वादश्यां च हरिः कामस्त्रयोदश्यां महेश्वरः ।
चतुर्दश्यां पञ्चदश्यां ब्रह्मा च पितरोऽर्थदाः ॥ १,११६.७ ॥

अमावास्यां पूजनीया वारा वै भास्करादयः ।
नक्षत्राणि च योगाश्च पूजिताः सर्वदायकाः ॥ १,११६.८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे तिथ्यादिव्रतवर्णनं नाम षोडशोत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् ११७
ब्रह्मोवाच ।
मार्गशीर्षे सिते पक्षे व्यासांनङ्गत्रयोदशी ।
मल्लिकाजं दन्तकाष्ठं धुतूरैः पूजयेच्छिवम् ॥ १,११७.१ ॥

अनङ्गायेति नैवेद्यं मधप्राश्याथ पौषके ।
योगेश्वरं पूजयेच्च बिल्वपत्रैः कदम्बजम् ।
दन्तकाष्ठं चन्दनादि नैवेद्यं कृसरादिकम् ॥ १,११७.२ ॥

माघे नटेश्वरायाचर्य कुन्दैर्मौक्तिकमालया ।
प्लक्षेण दन्तकाष्ठं च नैवेद्यं पूरिका मुने ॥ १,११७.३ ॥

वीरेश्वरं फाल्गुने तु पूजयेत्तु मरूबकैः ।
शर्कराशाकमण्डाश्च चूतजं दन्तधावनम् ॥ १,११७.४ ॥

चैत्रे यजेत्सु रूपाय कर्पूरं प्राशयेन्निशि ।
दन्तधावनाटजं नैवेद्यं शष्कुलीं ददेत् ॥ १,११७.५ ॥

पूजा दमनकः शम्भोर्वेशाखेऽशोक्रपुष्पकैः ।
महारूपाय नैवेद्यं गुडभक्तं पुट्टबरम् ॥ १,११७.६ ॥

दन्तकाष्ठं प्राशयेच्च ददेज्जतीफलं तथा ।
प्रद्युम्नं पूजयेज्ज्येष्ठे चम्पकैर्बिल्वजं दशेत् ॥ १,११७.७ ॥

लवगारा तथा षढि उमामदति शासनः? ।
अगुरुं दन्तकाष्ठं च तमपामार्गकैर्यजेत् ॥ १,११७.८ ॥

श्रावणे करवीरं च शम्भवे शूलपाणये ।
गन्धाशनो घृताद्यैश्च करवीरजशोधनम् ॥ १,११७.९ ॥

सद्योजातं भाद्रपदे बकुलैः पूपकैर्यजेत् ।
गन्धर्वाशो मदनकमाश्विने च सुराधिपम् ॥ १,११७.१० ॥

चम्पकैः स्वर्णवा (धार्) यादो जिन्मोदकसंप्रदः ।
खादिरं दन्तकाष्ठं च कार्तिके रुद्रमर्चयेत् ॥ १,११७.११ ॥

बदर्या दन्तकाष्ठं च मदनो दशमाशनः ।
क्षीरशाकप्रदः पद्मैरब्दन्ते शिवमर्चयेत् ॥ १,११७.१२ ॥

रतिमुक्तमनङ्गं च स्वर्णमण्डलसंस्थितम् ।
गन्धाद्यैर्दशसाहस्रं तिलव्रीह्यादि होमयेत् ॥ १,११७.१३ ॥

जागरं गीतवदित्रं प्रभितऽभ्याच्र्य वेदयेत् ।
द्विजाय शय्यां पात्रं च छत्रं वस्त्रमुपानहौ ॥ १,११७.१४ ॥

गां द्विजं भोजयेद्भक्त्या कृतकृत्यो भवेन्नरः ।
एतदुद्यापनं सर्वं व्रतेषु ध्येपमीद्दशम् ।
फलञ्च श्रीसुतारोग्यसौभाग्यस्वर्गतं भवेत् ॥ १,११७.१५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेऽनङ्गत्रयोदशीव्रतं नाम सप्तदशोत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् ११८
ब्रह्मोवाच ।
व्रतं कैवल्यशमनमखण्डद्वादशीं वदे ।
मागशीर्षे सिते पक्षे गव्याशी समुपोषितः ॥ १,११८.१ ॥

द्वादश्यां पूजये द्विष्णुं दद्यान्मासचतुष्टयम् ।
पञ्चव्रीहियुतं पात्रं विप्रायेदमुदाहरेत् ॥ १,११८.२ ॥

सप्तजन्मनि हे विष्णो यन्मया हि व्रतं कृतम् ।
भगवंस्त्वत्प्रसादेन तदखण्डमिहास्तु मे ॥ १,११८.३ ॥

यथाखण्डं जगत्सर्वं त्वमेव पुरुषोत्तम ।
तथाखिलान्यखण्डानि व्रितानि मम सन्ति वै ॥ १,११८.४ ॥

सक्तुपात्राणि चैत्रादौ श्रावणादौ घृतान्वितान् ।
व्रतकृद्वतपूर्णस्तु स्त्रीपुत्रस्वर्गभाग्भवेत् ॥ १,११८.५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेऽखण्डद्वादशीव्रतकथनंनामाष्टादशोत्तर शततमोऽध्यायः

श्रीगरुडमहापुराणम् ११९
ब्रह्मोवाच ।
अगस्त्यार्घ्यव्रतं वक्ष्ये भुक्तिमुक्तिप्रदायकम् ।
अप्राप्ते भास्करे कन्यां सति भागे त्रिभिर्दिनैः ॥ १,११९.१ ॥

अर्घ्यं दद्यादगस्त्याय मूर्तिं संपूज्य वै मुने ! ।
काशपुष्पमयीं कुम्भे प्रदोषे कृतजागरः ॥ १,११९.२ ॥

दध्यक्षताद्यैः संपूज्य उपोष्य फलपुष्पकैः ।
पञ्चवर्णसमायुक्तं हेमरौप्यसमन्वितम् ॥ १,११९.३ ॥

सप्तधान्ययुतं पात्रं दधिचन्दनचर्चितम् ।
अगस्त्यः खनमानेति मन्त्रेणार्घ्यं प्रदापयेत् ॥ १,११९.४ ॥

खासपुष्पप्रतीकाश अग्निमारुतसम्भव ! ।
मित्रावारुणयोः पुत्रो कुम्भयोने नमोऽस्तु ते ॥ १,११९.५ ॥

शूद्रस्त्र्यादिरनेनैव त्यजेद्धान्यं फलं रसम् ।
दद्याद्द्विजातये कुम्भं सहिरण्यं सदक्षिणम् ।
भोजयेच्च द्विजान्सप्त वर्षं कृत्वा तु सर्वभाक् ॥ १,११९.६ ॥

इति श्रीगारुडे महापुराणे प्रथमांशाख्ये आचारकाण्डेऽगस्त्यार्घ्यव्रतं नामैकोनविंशत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १२०
ब्रह्मोवाच ।
रम्भातृतीयां वक्ष्य च सौभग्यश्रीसुतादिदाम् ।
मार्गशीर्षेसिते पक्षे तृतीयायामुपोषितः ॥ १,१२०.१ ॥

गौरीं यजेद्विल्वपत्रैः कुशोदककरस्ततः ।
कदम्बादौ गिरिसुतां पौषे मरुबकैर्यजेत् ॥ १,१२०.२ ॥

कर्पूरादः कृसरदो मल्लिकादन्तकाष्ठकृत् ।
माघेसुभद्रां कल्हारैर्घृताशो मण्डकप्रदः ॥ १,१२०.३ ॥

गीतीमयं तन्तकाष्ठं फाल्गुने गोमतीं यजेत् ।
कुन्दैः कृत्वा दन्तकाष्ठं जीवाशः शष्कुलीप्रदः ॥ १,१२०.४ ॥

विशालाक्षीं दमनकैश्चैत्रे च कृसरप्रदः ।
दधिप्राशो दन्तकाष्ठं तगरं श्रीमुखीं यजेत् ॥ १,१२०.५ ॥

वैशाखे कर्णिकारैश्च अशोकाशो वटप्रदः ।
ज्येष्ठे नारायणीमर्चेच्छतपत्रैश्च खण्डदः ।
लवङ्गाशो भवेदेव आषाढे माधवीं यजेत् ॥ १,१२०.६ ॥

तिलाशो बिल्वपत्रैश्च क्षीरान्नवटकप्रदः ।
औदुम्बरं दन्तकाष्ठं तगर्याः श्रावणे श्रियम् ॥ १,१२०.७ ॥

दन्तकाष्ठं मल्लिकाया क्षीरदो ह्युत्तमां यजेत् ।
पद्मैर्यजेद्भाद्रपदे शृङ्गदाशो गृडादिदः ॥ १,१२०.८ ॥

राजपुत्रीं चाश्वयुजे जपापुष्पैश्च जीरकम् ।
प्राशयेन्निशि नैवेद्यैः कृसरैः कार्तिके यजेत् ॥ १,१२०.९ ॥

जातीपुष्पैः पद्मजां च पञ्चगव्याशनो यजेत् ।
घृतोदनं च वर्षान्ते सपत्नीकान्द्विजान्यजेत् ॥ १,१२०.१० ॥

उमामहेश्वरं पूज्य प्रदद्याच्च गुडादिकम् ।
वस्त्रच्छत्रसुवर्णाद्यैः रात्रौ च कृतजागरः ।
गीतवाद्यैर्ददत्प्रतर्गवाद्यं सर्वमान्पुयात् ॥ १,१२०.११ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे रम्भातृतीयाव्रतं नाम विंशत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १२१
ब्रह्मोवाच ।
चातुर्मास्यव्रतान्यूचे एकादश्यां समाचरेत् ।
आषाढ्यां पौर्णमास्यां वा सर्वेणहरिमर्च्यच ॥ १,१२१.१ ॥

इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमाप्नोतु प्रसन्ने त्वयि केशव ॥ १,१२१.२ ॥

गृहीतेऽस्मिन्व्रते देव यद्यपूर्णे म्रियाम्यहम् ।
तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन ॥ १,१२१.३ ॥

एवमभ्यर्च्य गृह्णीयाद्व्रतार्चनजपादिकम् ।
सर्वाघं च क्षयं याति चिकीर्षेद्यो हरेर्व्रतम् ॥ १,१२१.४ ॥

स्नात्वायोभ्यच्य गृह्णीयाद्व्रतार्चनजपादिकम् ।
स्नात्वा यच्चतुरो मासानेकभक्तेन पूजयेत् ।
विष्णुं स याति विष्णोर्व लोकं मलविवर्जितम् ॥ १,१२१.५ ॥

मद्यमांससुरात्यगी वेदविद्धरिपूजनात् ।
तैलवर्जि विष्णुलोकं विष्णुभाक्कृच्छ्रपादकृत् ॥ १,१२१.६ ॥

एकरात्रोपवासाच्च देवो वैमानिको भवेत् ।
श्वेतद्वीपं त्रिरात्रात्तु व्रजेत्षष्ठान्नकृन्नरः ॥ १,१२१.७ ॥

चान्द्रायणाद्धरेर्धाम लभेन्मुक्तिमयाचिताम् ।
प्राजापत्यं विष्णुलोकं पराकव्रतकृद्धरिम् ॥ १,१२१.८ ॥

सक्तुयावकभिक्षाशी पयोदधिघृताशनः ।
गोमूत्रयावकाहारः पञ्चगव्यकृताशनः ।
शाकमलफलाद्याशी रसवर्जो च विष्णुभाक् ॥ १,१२१.९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे चातुर्मास्यव्रतनिरूपणं नामकावशत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १२२

ब्रह्मोवाच ।

व्रतं मासोपवासाख्यं सर्वोत्कृष्टं वदामिते ।
वानप्रस्थो यतिर्नारी कुर्यान्मासोपवासकम् ॥ १,१२२.१ ॥

आश्विनस्य सिते पक्षे एकादश्यामुपोषितः ।
व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु ॥ १,१२२.२ ॥

अद्यप्रभृत्यहं विष्णो यावदुत्थानकं तव ।
अर्चयेत्वामनश्रंस्तु दिनानि त्रिंशदेव तु ॥ १,१२२.३ ॥

कार्तिकाश्विनयोर्विष्णो द्वादश्योः शुक्लयोरहम् ।
म्रियेयद्यन्तराले तु व्रतभङ्गो न मे भवेत् ॥ १,१२२.४ ॥

हरिं यजोत्त्रिषवणस्नायी गन्धादिभिर्व्रती ।
गात्राभ्यङ्गं गन्धलेपं देवतायतने त्यजेत् ॥ १,१२२.५ ॥

द्वादश्यामथ संपूज्य प्रदद्याद्द्विजभोजनम् ।
ततश्च पारणं कुर्याद्धरेर्मासोपवासकृत् ॥ १,१२२.६ ॥

दुग्धादिप्राशनं कुर्याद्व्रतस्थो मूर्छितोऽन्तरा ।
दुग्धाद्यैर्न व्रतं नश्येद्भुक्तिमुक्तिमवाप्नुयात् ॥ १,१२२.७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे मासोपवासव्रतं नाम द्वाविंशत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १२३
ब्रह्मोवाच ।
व्रतानि कार्तिके वक्ष्ये स्नात्वा विष्णुं प्रपूजयेत् ।
एकभक्तेन नक्तेन मासं वायाचितेन वा ॥ १,१२३.१ ॥

दुग्धशाकफलाद्यैर्वा उपवासेन वा पुनः ।
सर्वपापविनिर्मुक्तः प्राप्तकामो हरिं व्रजेत् ॥ १,१२३.२ ॥

सदा हरेर्व्रतं श्रेष्ठं ततः स्याद्दक्षिणायने ।
चातुर्मास्ये ततस्तस्मात्कार्तिके भीष्मपञ्चकम् ॥ १,१२३.३ ॥

ततः श्रेष्ठव्रतं शुक्लस्यैकादश्यां समाचरेत् ।
स्नात्वा त्रिकालं पित्रादीन्यवाद्यैरर्चयेद्धरिम् ॥ १,१२३.४ ॥

यजेन्मौनी घृताद्यैश्च पञ्चगव्येन वारिभिः ।
स्नापयित्वाथ कर्पूरमुखैश्चैवानुलेपयेत् ॥ १,१२३.५ ॥

घृताक्तगुग्गुलैर्धूपं द्विजः पञ्चदिनं दहेत् ।
नैवद्यं परमान्नं तु जपेदष्टोत्तरं शतम् ॥ १,१२३.६ ॥

ओं नमो वासुदेवाय घृतव्रीहितिलादिकम् ।
अष्टाक्षरेण मन्त्रेण स्वाहान्तेन तु होमयेत् ॥ १,१२३.७ ॥

प्रथमेऽह्नि हरेः पादौ यजेत्पद्मैर्द्वितयिक ।
बिल्वपत्रैर्जानुदेशं नाभि गन्धेन चापरे ॥ १,१२३.८ ॥

स्कन्धा बिल्वजवाभिश्च पञ्चमेऽह्नि शिरोर्ऽचयत् ।
मालत्या भूमिशायी स्याद्गोमयं प्राशयेत्क्रमात् ॥ १,१२३.९ ॥

गोमूत्रं च दधि क्षीरं पञ्चमे पञ्चगव्यकम् ।
नक्तं कुर्यात्पञ्चदश्यां व्रती स्याद्भुक्तिमुक्तिभाक् ॥ १,१२३.१० ॥

एकादशीव्रतं नित्यं तत्कुर्यात्पक्षयोर्द्वयोः ।
अघौघनरकं हन्यात्सर्वदं विष्णुलोकदम् ॥ १,१२३.११ ॥

एकादशी द्वादशी च निशान्ते च त्रयोदशी ।
नित्यमेकादशी यत्र तत्र सन्निहितो हरिः ॥ १,१२३.१२ ॥

दशम्येकादशी यत्र तत्रस्थाश्चासुरादयः ।
द्वादश्यां पारण कुर्यात्सूतके मृतके चरेत् ॥ १,१२३.१३ ॥

चतुर्दशीं प्रतिपदं पूर्वमिश्रामुपावसेत् ।

पौर्णमास्या ममावास्यां प्रतिपन्मिश्रितां मुने ॥ १,१२३.१४ ॥

द्वितीयां तृतीयामिश्रां तृतीयाञ्चाप्युपावसेत् ।
चतुर्थ्या सङ्गतां नित्यं चतुर्थोञ्चनया युताम् ।
पञ्चमींषष्ठ्यसंयुक्तां षष्ठ्या युक्ताञ्च सप्तमीम् ॥ १,१२३.१५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भीष्मपञ्चकादिव्रतं नाम त्रयोविंशत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १२४
ब्रह्मोवाच ।
शिवरात्रिव्रतं वक्ष्ये कथां वै सर्वकामदाम् ।
यथा च गौरी भूतेशं पृच्छति स्म परं व्रतम् ॥ १,१२४.१ ॥

ईश्वरौवाच ।
माघफाल्गुनयोर्मध्ये कृष्णा या तु चतुर्दशी ।
तस्यां जागरणाद्रुद्रः पूजितो भुक्तिमुक्तिदः ॥ १,१२४.२ ॥

कामयुक्तो हरः पूज्यो द्वादश्यामि केशवः ।
उपोषितैः पूजितः सन्नरकात्तरयत्तथा ॥ १,१२४.३ ॥

निषादश्चर्बुदे राजा पापी सुन्दरसेनकः ।
स कुक्कुरैः समायुक्तो मृगान्हन्तुं वनं गतः ॥ १,१२४.४ ॥

मृगादि कमसंप्राप्य क्षुत्पिपासार्दितो गिरौ ।
रात्रौ तडागतीरेषु निकुञ्जे जाग्रदास्थितः ॥ १,१२४.५ ॥

तत्रास्ति लिङ्गं स्वं रक्षञ्छरीरं चाक्षिपत्ततः ।
पर्णानि चापतन्मूर्ध्नि लिङ्गस्यैव न जानतः ॥ १,१२४.६ ॥

तेन धूलिनिरोधाय क्षिप्तं नीरं च लिङ्गके ।
शरः प्रमादेनैकस्तु प्रच्युतः करपल्लवात् ॥ १,१२४.७ ॥

जानुभ्यामवनीं गत्वा लिङ्गं स्प्टष्ट्वा गृहीतवान् ।
एवं स्नानं स्पर्शनं च पूजनं जागरोऽभवत् ॥ १,१२४.८ ॥

प्रातर्गृहागतो भार्यादत्तान्नं भुक्तवान्स च ।
काले मृतो यमभटैः पाशैर्बद्ध्वा तु नीयते ॥ १,१२४.९ ॥

तदा मम गणैर्युद्धे जित्वा मुक्तीकृतः स च ।
कुक्कुरेण सहैवाभूद्गणो मत्पार्श्वगोऽमलः ॥ १,१२४.१० ॥

एवमज्ञानतः पुण्यञ्ज्ञानात्पुण्यमथाक्षयम् ।
त्रयोदश्यां शिवं पूज्य कुर्यात्त नियमं व्रती ॥ १,१२४.११ ॥

प्रातर्देव ! चतुर्दश्यां जागरिष्याम्यहं निशि ।
पूजां दानं तपो होमं करिष्याम्यात्मशक्तितः ॥ १,१२४.१२ ॥

चतुर्दश्यां निराहारो भूत्वा शम्भो परेऽहनि ।
भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर ॥ १,१२४.१३ ॥

पञ्चगव्यामृतैः स्नाप्य तत्काले गुरुं श्रितः ।
ओं नमो नमः शिवाय गन्धाद्यः पूजयेद्धरम् ॥ १,१२४.१४ ॥

तिलतण्डुलव्रीहींश्च जुहुयात्सघृतं चरुम् ।
हुत्वा पूर्णाहुतिं दत्त्वा शृणुयाद्गीतसत्कथाम् ॥ १,१२४.१५ ॥

अर्धरात्रे त्रियामे च चतुर्थे च पुनयर्जत् ।
मूलमन्त्रं तथा जप्त्वा प्रभाते तु क्षमापयेत् ॥ १,१२४.१६ ॥

अविघ्नेन व्रतं देव ! त्वत्प्रसदान्मयार्चितम् ।
क्षमस्व जगतां नाथ ! त्रैलोक्याधिपते हर ! ॥ १,१२४.१७ ॥

यन्मयाद्य कृतं पुण्यं यद्रुद्रस्य निवेदितम् ।
त्वत्प्रसादान्मया देव ! व्रतमद्य समापितम् ॥ १,१२४.१८ ॥

प्रसन्नो भव मे श्रीमन् गृहं प्रति च गम्यताम् ।
त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः ॥ १,१२४.१९ ॥

भोजयेद्ध्याननिष्ठांश्च वस्त्रच्छत्रादिकं ददेत् ।
देवादिदेव भूतेश लोकानुग्रहकारक ॥ १,१२४.२० ॥

यन्मया श्रद्धया दत्तं प्रीयतां तेन मे प्रभुः ।
इति क्षमाप्य च व्रती कुर्याद्वादशवार्षिकम् ॥ १,१२४.२१ ॥

कीर्तिश्रीपुत्रराज्यादि प्राप्य शैवं पुरं व्रजेत् ।
द्वादशेष्वपि मासेषु प्रकुर्यादिह जागरम् ॥ १,१२४.२२ ॥

व्रती द्वादश संभोज्य दीपदः स्वर्गमाप्नुयात् ॥ १,१२४.२३ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे शिवरात्रिव्रतं नाम चतुर्विंशत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १२५
पितामह उवाच ।
मान्धाता चक्रवर्त्यासीदुपोष्यैकादशीं नृपः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयारपि ॥ १,१२५.१ ॥

दशम्येकादशीमिश्रा गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥ १,१२५.२ ॥

द्वादश्येकादशी यत्र तत्र सन्निहितो हरिः ।
दशम्येकादशी यत्र तत्र सन्निहितोऽसुरः ।
बहुवाक्यविरोधेन सन्देहो जायते यदा ॥ १,१२५.३ ॥

द्वादशी तु तदा ग्राह्या त्रयोदश्यान्तु पारणम् ।
एकादशी कलापिस्यादुपोष्या द्वादशी तथा ॥ १,१२५.४ ॥

एकादशी द्वादशी च विशेषेण त्रयोदशी ।
त्रिमिश्रा सा तिथिर्ग्राह्या सर्वपापहरा शुभा ॥ १,१२५.५ ॥

एकादशीमुपोष्यैवद्वादशीम थवा द्विज ! ।
त्रिमिश्रां चैव कुर्वीत न दशम्या युतां क्वचित् ॥ १,१२५.६ ॥

रात्रौ जागरणं कुर्वन्पुराणश्रवणं नृपः ।
गदाधरं पूजयंश्च उपोष्यैका दशीद्वयम् ।
रुक्माङ्गदो ययौ मोक्षमन्ये चैकादशीव्रतम् ॥ १,१२५.७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकादशीमाहात्म्यं नाम पञ्चविंशत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १२६
ब्रह्मोवाच ।
येनार्चनेन वै लोको जगाम परमां गतिम् ।
तमर्चनं प्रवक्ष्यामि भुक्तिमुक्तिकरं परम् ॥ १,१२६.१ ॥

सामान्यमण्डलं न्यस्य धातारं द्वारदेशतः ।
विधातारं तथा गङ्गां यमुनां च महानदीम् ॥ १,१२६.२ ॥

द्वारश्रियं च दण्डं च प्रचण्डं वास्तुपूरुषम् ।
मध्ये चाधारशक्तिं च कूर्मं चानन्तमर्चयेत् ॥ १,१२६.३ ॥

भूमिं धर्मं तथा ज्ञानं वैरग्यैश्वर्यमेव च ।
अधर्मादींश्च चतुरः कन्दं नालं च पङ्कजम् ॥ १,१२६.४ ॥

कर्णिकां केसरं सत्त्वं राजसं तामसं गुणम् ।
सुर्यादिमण्डलान्येव विमलाद्याश्च शक्तयः ॥ १,१२६.५ ॥

दुर्गां गणं सरस्वतीं क्षेत्रपालं च कोणके ।
आसनं मूर्तिमभ्यर्च्य वासुदेवं बलं स्मरन् ॥ १,१२६.६ ॥

अनिरुद्धं महात्मानं नारायणमथार्चयेत् ।
हृदयादीनि चाङ्गानि शङ्खादीन्यायुधानि च ॥ १,१२६.७ ॥

श्रीगरुडमहापुराणम् १२७
ब्रह्मोवाच ।
माघमासे शुक्लपक्षे सूर्यर्क्षेण युता पुरा ।
एकादशी तथा चैका भीमेन समुपोषिता ॥ १,१२७.१ ॥

आश्चर्यं तु व्रतं कृत्वा पितृणामनृणोऽभवत् ।
भीमद्वादशी विख्याता प्राणिनां पुण्यवर्धिनी ॥ १,१२७.२ ॥

नक्षत्रेण विनाप्येषा ब्रह्महत्यादि नाशयेत् ।
विनिहन्ति महापापं कुनृपो विषयं यथा ॥ १,१२७.३ ॥

कुपुत्रस्तु कुलं यद्वत्कुभार्या च पतिं यथा ।
अधर्मं च यथा धर्मः कुमन्त्री च यथा नृपम् ॥ १,१२७.४ ॥

अज्ञानेन यथा ज्ञानं शौचमाशौचकं यथा ।
अश्रद्धया यथा श्रद्धा सत्यञ्चैवानृतैर्यथा ॥ १,१२७.५ ॥

हिमं यथोष्णमाहन्यादनर्थं चार्थसंचयः ।
यथा प्रकर्तिनाद्दानं तपो वै विस्मयाद्यथा ॥ १,१२७.६ ॥

अशिक्षया यथा पुत्रो गावो दूरगतैर्यथा ।
क्रोधेन च यथा शान्तिर्यथा वित्तमवद्धनात् ॥ १,१२७.७ ॥

ज्ञानेनैयथा विद्या निष्कामेन यथा फलम् ।
तथैव पापनाशाय प्रोक्तेयं द्वादशी शुभा ॥ १,१२७.८ ॥

ब्रह्महत्या सुरा पान स्तेयं गुर्वङ्गनागमः ।
युगपत्तुप्रजातानिहन्ति त्रिपुष्करम् ॥ १,१२७.९ ॥

न चापि नैमिषं क्षेत्रं कुरुक्षेत्रं प्रभासकम् ।
कालिन्दी यमुना गङ्गा न चैव न सरस्वती ॥ १,१२७.१० ॥

चैव सर्वतीर्थानि एकादश्याः समानि हि ।
न दानं न जपो होमो न चान्यत्सुकृतं क्वचित् ॥ १,१२७.११ ॥

एकतः पृथिवीदानमेकतो हरिवासरः ।
ततोऽप्येका महापुण्या इयमेकादशी वरा ॥ १,१२७.१२ ॥

अस्मिन्वराहपुरुषं कृत्वा देवं तु हाटकम् ।
घटोपरि नवे पात्रे कृत्वा वै ताम्रभाजने ॥ १,१२७.१३ ॥

सर्वबीजभृते विप्राः सितवस्त्रावगण्ठिते ।

सहिरण्यप्रदीपाद्यैः कृत्वा पूजां प्रयत्ननः ॥ १,१२७.१४ ॥

वराहाय नमः पादौ क्रोडाकृतये नमः कटिम् ।
नाभिं गंभीरघोषया उरः श्रीवत्सधारिणे ॥ १,१२७.१५ ॥

बाहुं सहस्रशिरसे ग्रीवां सर्वेश्वराय च ।
मुखं सर्वात्मने पूज्यं ललाटं प्रभवाय च ॥ १,१२७.१६ ॥

केशाः शतमयूखाय पूज्या देवस्य चक्रिणः ।
विधिना पूजयित्वा तु कृत्वा जागरणं निशि ॥ १,१२७.१७ ॥

श्रुत्वा पुराणं देवस्य माहात्म्यप्रतिपादकम् ।
प्रातर्विप्राय दत्त्वा च याचकाय शुभाय तत् ॥ १,१२७.१८ ॥

कनकक्रोडसहितं सन्निवेद्य परिच्छदम् ।
पश्चात्तु पारणं कुर्यान्नातितृप्तः सकृद्व्रतः ॥ १,१२७.१९ ॥

एवं कृत्वा नरो विद्यान्न भूय स्तनपो भवेत् ।
उपोष्यैकादशीं पुण्यां मुच्यते वै ऋणत्रयात् ।
मनोऽभिलषितावाप्तिः कृत्वा सर्वव्रतादिकम् ॥ १,१२७.२० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकादशीमाहात्म्यं नाम सप्तविंशत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १२८
ब्रह्मोवाच ।
व्रतानि व्यास वक्ष्यामि यैस्तुष्टः सर्वदो हरिः ।
शास्त्रोदितो हि नियमो व्रतं तच्च तपो मतम् ॥ १,१२८.१ ॥

नियमास्तु विशेषाः स्युः व्रतस्यास्य दमादयः ।
नित्यं त्रिषवणं स्नायादधः शयी जितेन्द्रियः ॥ १,१२८.२ ॥

स्त्रीशूद्रपतितानां तु वर्जयेदभिभाषणम् ।
पवित्राणि च पञ्चैव जुहुयाच्चैव शक्तितः ॥ १,१२८.३ ॥

कृच्छ्राण्येतानि सर्वाणि चरेत्सुकृतवान्नरः ।
केशानां रक्षणार्थं तु द्विगुणं व्रतमाचरेत् ॥ १,१२८.४ ॥

कांस्यं माषं मसूरं चचणकं कोरदूषकम् ।
शाकं मधु परान्नं च वर्जयेदुपवासवान् ॥ १,१२८.५ ॥

पुष्पालङ्कारवस्त्राणि धूपगन्धानुलेपनम् ।
उपवासेन दुष्येत्तु दन्तधावनमञ्जनम् ॥ १,१२८.६ ॥

दन्तकाष्ठं पञ्चगव्यं कृत्वा प्रातर्व्रतं चरेत् ।
असकृज्जलपानाच्च ताम्बूलस्य च भक्षणात् ॥ १,१२८.७ ॥

उपवासः प्रदुष्येत दिवास्वप्ना क्षमैथुनात् ।
क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ॥ १,१२८.८ ॥

देवपूजाग्निहवने सन्तोषोस्तेयमेव च ।
सर्वव्रतेष्वयं धर्मः सामान्यो दशधास्मृतः ॥ १,१२८.९ ॥

नक्षत्रदर्शनान्नक्तमनक्तं निशि भोजनम् ।
गोमूत्रं च पल दद्यादर्धाङ्गुष्ठं तु गोमयम् ॥ १,१२८.१० ॥

क्षीरं सप्तपलं दद्याद्दध्नश्चैव पलत्रयम् ।
घृतमेकफलं दद्यात्पलमेकं कुशोदकम् ॥ १,१२८.११ ॥

गायत्र्या चैव गन्धेति आप्यायस्व द्द दधिग्रहः ।
तेजोऽसीति च देवस्य ब्रह्मकूर्चव्रतं चरेत् ॥ १,१२८.१२ ॥

अग्न्याधानं प्रतिष्ठां तु यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥ १,१२८.१३ ॥

माङ्गल्यमभिषेकं च मलमासे विवर्जयत् ।

दर्शाद्दर्शस्य चान्द्रः स्यात्त्रिंशाहोभिस्तु सावनः ॥ १,१२८.१४ ॥

रविसंक्रमणात्सौरो नाक्षत्रः सप्तविंशतिः ।
सौरो मासो विवाहाय यज्ञादौ सावनस्थितिः ॥ १,१२८.१५ ॥

युग्माग्नियुगभूतानि षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्दश्याथ पूर्णिमा ॥ १,१२८.१६ ॥

प्रतिपद्यप्यमावास्या तिथ्योर्मस्यं महाफलम् ।
एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुरा कृतम् ॥ १,१२८.१७ ॥

प्रारब्धतपसा स्त्रीणां रजो हन्याद्व्रतं न हि ।
अन्यैर्दानादिकं कुर्यात्कायिकं स्वयमेव च ॥ १,१२८.१८ ॥

क्रोधात्प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्यदि ।
दिनत्रयं न भुञ्जीत शिरसो मुण्डनं भवेत् ॥ १,१२८.१९ ॥

असामर्थ्ये शरीरस्य पुत्रादीन्कारयेद्व्रतम् ।
व्रतस्थं मूर्छितं विप्रं जलादीन्यनुपाययेत् ॥ १,१२८.२० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे व्रतपरिभाषा नामाष्टाविंशत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १२९
ब्रह्मोवाच ।
वक्ष्ये प्रतिपदादीनि व्रतानि व्यास शृण्वथ ।
वाश्वानरपदं याति शिखिव्रतमिदं स्मृतम् ॥ १,१२९.१ ॥

प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः ।
चैत्रादौ कारयेच्चैव ब्रह्मपूजां यथाविधि ।
गन्धपुष्पार्चनैर्दानैर्माल्याद्यैश्च मनोरमैः ॥ १,१२९.२ ॥

सहोमैः पूजयेद्देवं सर्वान्कामानवाप्नुयात् ।
कार्तिके त सितेऽष्टम्यां पुष्पहारी च वत्सरम् ॥ १,१२९.३ ॥

पुष्पादिदाता रूपेण रूपभागी भवेन्नरः ।
कृष्णपक्षे तृतीयायां श्रावणे श्रीधरं श्रिया ॥ १,१२९.४ ॥

यजेदशून्यशय्यायां फलं दद्याद्द्विजातये ।
शय्यां दत्त्वा प्रार्थयेच्च श्रीधराय नमः श्रियै ॥ १,१२९.५ ॥

उमांशिवं हुताशं च तृतीयायां च पूजयेत् ।
हविष्यमन्न नैवेद्य देय दमनकं तथा ॥ १,१२९.६ ॥

चैत्रादौ फलमाप्नोति उमया मे प्रभाषितम् ।
फाल्गुनादितृतीयायां लवणं यस्तु वर्जयेत् ॥ १,१२९.७ ॥

समाप्ते शयनं दद्याद्गृहं चोपस्करान्वितम् ।
संपूज्य विप्रमिथनं भवानी प्रीयतामिति ॥ १,१२९.८ ॥

गौरीलोके वसेन्नित्यं सौभाग्यकरमुत्तमम् ।
गौरी काली उमा भद्रा दुर्गा कान्तिः सरस्वती ॥ १,१२९.९ ॥

मङ्गला वैष्णवी लक्ष्मीः शिवा नारायणी क्रमात् ।
मार्गेतृतीयामारभ्य अवियोगादिमाप्नुयात् ॥ १,१२९.१० ॥

चतुर्थ्यां सितमाघादौ निराहारो व्रतान्वितः ।
दत्त्वा तिलांस्तु विप्राय स्वयं भुङ्क्ते तिलोदकम् ॥ १,१२९.११ ॥

वर्षद्वये समाप्तिश्च निर्विघ्नादिं समाप्नुयात् ।
गः स्वाहा मूलमन्त्रोऽयं प्रणवेन समन्वितः ॥ १,१२९.१२ ॥

ग्लैं ग्लांहृदये गां गीं हूं ह्रीं ह्रीं शिरः शिखा ।
गूं वर्म गों च गैं नेत्रं गों च आवाहनादिषु ॥ १,१२९.१३ ॥

आगच्छोल्काय गनन्धोल्कः पुष्पोल्को धूपकोल्ककः ।
दीपोल्काय महोल्काय बलिश्चाथ विस (मार्) जनम् ॥ १,१२९.१४ ॥

सिदेधोल्काय च गायत्री (त्र) न्यासोंगुष्ठादिरीरितः ।
ओं महाकर्णाय विद्महेवक्रतुण्डाय धीमहितन्नो दन्तिः प्रचोदयात् ॥ १,१२९.१५ ॥

पूजयोत्तिलहोमैश्च एते पूज्या गणास्तथा ।
गणाय गणपतये स्वाहा कूष्माण्डकाय च ॥ १,१२९.१६ ॥

अमोघोल्कायैकदन्ताय त्रिपुरान्तकरूपिणे ।
ओं श्याम (व) दन्तविकरालास्याहवेपाय वै नमः ॥ १,१२९.१७ ॥

पद्मदंष्टाय स्वाहान्ते मुद्रा वै नर्तनं गणे ।
हस्ततालश्च हसनं सौभाग्यादिफलं भवेत् ॥ १,१२९.१८ ॥

मार्गशीर्षे तथा शुक्लचतुर्थ्यां पूजयेद्गण ।
अब्दं प्राप्नोति विद्याश्रीकीर्त्यायुः पुत्रसन्ततिम् ॥ १,१२९.१९ ॥

सोमवारे चतुर्थ्यां च समुपोष्यार्चयेद्गणम् ।
जपञ्जुह्वत्स्मरन्विद्या स्वर्गं निर्वाणतां व्रजेत् ॥ १,१२९.२० ॥

यजेच्छुक्लचतुर्थ्यां यः खण्डलड्डुकमोद (मण्ड) कैः ।
विघ्नाचनेन सर्वान्स कामान्सौभाग्यमाप्नुयात् ॥ १,१२९.२१ ॥

पुत्रादिकं दमनकैर्दमनाख्या चतुर्थ्यपि ।
आं गणपतये नमः चतुर्थ्यन्तं यजेद्गणम् ॥ १,१२९.२२ ॥

मासे तु यस्मिन्कस्मिंश्चिज्जुहुयाद्वा जपेत्स्मरेत् ।
सर्वान्कामानवाप्नोति सर्वविघ्नविनाशनम् ॥ १,१२९.२३ ॥

विनायकं मूर्तिकाद्यं यजेदेभिश्च नामभिः ।
सोऽपि सद्गतिमाप्नोति स्वर्गमोक्षसुखानि च ॥ १,१२९.२४ ॥

गणपूज्यो वक्रतुण्ड एकदंष्ट्री त्रियम्बकः ।
नीलग्रीवो लम्बोदरो विकटो विघ्नराजकः ॥ १,१२९.२५ ॥

धूम्रवर्णो भालचन्द्रो दशमस्त विनायकः ।
गणपतिर्हस्तिमुखो द्वादशारे यजेद्गणम् ॥ १,१२९.२६ ॥

पृथक्समस्तं मधावी सर्वान्कामान वाप्नुयात् ।
श्रावणे चाश्विने भाद्रे पञ्चम्यां कात्तिक शुभे ॥ १,१२९.२७ ॥

वासुकिस्तक्षकश्चैव कालीयो मणिभद्रकः ।
ऐरावतो धृतराष्टः कर्कोटकधनञ्जयौ ॥ १,१२९.२८ ॥

घृताद्यैः स्नापिता ह्येते आयुरारोग्यसम्पदः ।
अनन्तं वासुकिं शङ्खं पद्मं कम्बलमेव च ॥ १,१२९.२९ ॥

तथा कर्कोटकं नागं धृतराष्ट्रं च शङ्खकम् ।
कालीयं तक्षकं चैव पिङ्गलं मासिमासि च ॥ १,१२९.३० ॥

यजेद्भाद्रसिते नागानष्टौ मुक्तिं दिवं व्रजेत् ।
द्वारस्योभयतो लेख्याः श्रावणे तु सिते यजेत् ॥ १,१२९.३१ ॥

पञ्चम्यां पूजयेन्नागाननन्तान्द्यान्महोरगान् ।
क्षीरं सर्पिश्च नैवेद्यं देयं सर्वविषापहम् ।
नागा अभयहस्ताश्च दष्टोद्धारातु पञ्चमी ॥ १,१२९.३२ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे दष्टोद्धारपञ्चमव्रितं नामैकोनत्रिंशोत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १३०
ब्रह्मोवाच ।
एवं भाद्रपदे मासि कार्तिकेयं प्रपूयेत् ।
स्नानदानादिकं सर्वमस्यामक्षय्यमुच्यते ॥ १,१३०.१ ॥

सप्तम्यां प्राशयेच्चपि भोज्यं विप्रान्नविं यजेत् ।
ओं खखोल्कायमृतत्वं (तन्तं) प्रियसङ्गमो भव सद स्वाहा ॥ १,१३०.२ ॥

अष्टम्यां पारणं कुर्यान्मरीचं प्राश्य स्वर्गभाक्
सप्तम्यां नियतः स्नात्वा पूजयित्वा दिवाकरम् ॥ १,१३०.३ ॥

दद्यात्फलानि विप्रेभ्यो मार्तण्डः प्रीयतामिति ।
खर्जूरं नारिकेलं वा प्राशयेन्मातुलुङ्गकम् ॥ १,१३०.४ ॥

सर्वे भवन्तु सफला मम कामाः समन्ततः ।
(इति फलसप्तमी)
संपूज्य देवं सप्तम्यां पायसेनाथ भोजयेत् ॥ १,१३०.५ ॥

विप्रांश्च दक्षिणां दत्त्वा स्वयं चाथ पयः पिबेत् ।
भक्ष्यं चोष्यं तथा लेह्यं ओदनं चेति कीर्तितम् ॥ १,१३०.६ ॥

धनपुत्रादिकामस्तु त्यजेदेतदनोदनः
वाय्वाशी विजयेत्क्षुच्च कुर्याद्विजयसप्तमीम् ।
अद्यादर्कं च कामेच्छुरुपवासे तरेन्मदम् ॥ १,१३०.७ ॥

गोधूममाषयवषष्टिककांस्यपात्रं पाषाणपिष्टमधुमैषुनमद्यमांसम् ।
अभ्यञ्जनाञ्जनतिलांश्च विवर्जयेद्यः तस्येषितं भवति सप्तसु सप्तमीषु ॥ १,१३०.८ ॥

(इति विजयसप्तमीव्रतम्) ।
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सप्तमीव्रतनिरूपणं नाम त्रिंशोत्तरशततमोऽध्यायः

ब्रह्मोवाच ।
ब्रह्मन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः ।
दूर्वां सौरीं गणेशं च फलपुष्पैः शिवं यजेत् ॥ १,१३१.१ ॥

फलव्रीह्यादिभिः सर्वैः शम्भवेनमः शिवाय च ।
त्वं दूर्वेऽमृजन्मासि ह्यष्टमी सर्वकामभाक् ॥ १,१३१.२ ॥

अनग्निपक्रमश्रीयान्मुच्यते ब्रह्महत्यया ।
(इति दूर्वाष्टमीव्रतम्) ।
कृष्णाष्टम्यां च रोहिण्यामर्धरात्रेर्ऽचनं हरेः ॥ १,१३१.३ ॥

कार्या विद्धापि सप्तम्या हन्ति पापं त्रिजन्मनः ।
उपोषितोर्ऽचयेन्मन्त्रैस्तिथि भान्ते च पारणम् ॥ १,१३१.४ ॥

योगाय योगपतये योगेश्वराय योगसम्भवाय गोविन्दाय नमोनमः ।
(स्नानमन्त्रः( यज्ञाय यज्ञेश्वराय यज्ञपतये गोविन्दाय नमोनमः ॥ १,१३१.५ ॥

(अर्चनद्द)विश्वाय विश्वेश्वराय विश्वपतये गोविन्दाय नमोनमः ।
(शयनद्द)सर्वाय सर्वेश्वराय सर्वेताय सर्वसम्भवाय गोविन्दाय नमोनमः ॥ १,१३१.६ ॥

स्थण्डिले पूजयेद्देवं सचन्द्रां रोहिणीं तथा ।
शङ्खे तोयं समादाय सपुष्पफलचन्दनम् ॥ १,१३१.७ ॥

जानुभ्यामवनीं गत्वा चन्द्रायार्घ्यं निवेदयेत् ।
क्षिरोदार्णवसंभूत ! अत्रिनेत्रसमुद्भव ! ॥ १,१३१.८ ॥

गृहाणार्घ्यं शशाङ्केश (मं) रोहिण्या सहितो मम ।
श्रियै च वसुदे वाय नन्दाय च बलाय च ॥ १,१३१.९ ॥

यशोदायै ततो दद्यादर्घ्यं फलसमन्वितम् ।
अनन्तं (घं) वामनं शौरिं वैकुष्ठं पुरुषोत्तमम् ॥ १,१३१.१० ॥

वासुदेवं हृषीकेशं माधवं मधुसूदनम् ।
वराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् ॥ १,१३१.११ ॥

दामोदरं पद्मनाभं केशवं गारुडध्वजम् ।
गोविन्दमच्युतं देवमनन्तम पराजितम् ॥ १,१३१.१२ ॥

अधोक्षजं जगद्वीजं सर्गस्थित्यन्तकारणम् ।
अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् ॥ १,१३१.१३ ॥

नारायणं चतुर्बाहुं शङ्खचक्रगदाधरम् ।
पीतम्बरधरं दिव्यं वनमालाविभूषितम् ॥ १,१३१.१४ ॥

श्रीवत्साङ्कं जगद्धाम श्रीपतिं श्रीधरं हरिम् ।
यं देवं देवकी देवी वसुदेवादजीजनत् ॥ १,१३१.१५ ॥

भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः ।
नामान्येतानि संकीर्त्य गत्यर्थं प्रार्थयेत्पुनः ॥ १,१३१.१६ ॥

त्राहि मां देवदेवेश ! हरे ! संसारसागरात् ।
त्राहि मां सर्वपापघ्न ! दुः खशोकार्णवात्प्रभो ! ॥ १,१३१.१७ ॥

देवकीनन्दन ! श्रीश ! हरे ! संसारसागरात् ।
दुर्वृत्तांस्त्रायसे विष्णो ! ये स्मरन्ति सकृत्सकृत् ॥ १,१३१.१८ ॥

सोऽहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात् ।
पुष्कराक्ष ! निमग्नोऽहं महतयज्ञानसागरे ॥ १,१३१.१९ ॥

त्राहि मां देवदेवेश ! त्वामृतेऽन्यो न रक्षिता ।
स्वजन्म वासुदेवाप गोब्राह्मणहिताय च ॥ १,१३१.२० ॥

जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ।
शान्तिरस्तु शिवं चास्तु धनविख्यातिराज्यभाक् ॥ १,१३१.२१ ॥

(इति कृष्णाष्टमीव्रतम्) ।
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे कृष्णाष्टमीव्रतनिरूपणं ना मैकत्रिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १३२

ब्रह्मोवाच ।

नक्ताशी त्वष्टमीं यावद्वर्षान्ते चैव धेनुदः ।
पौरन्दरपदं याति सद्गतिव्रतमुच्यते ! ॥ १,१३२.१ ॥

शुक्लाष्टभ्यां पौषमासे महारुद्रेति साधु वै ।
मत्प्रीतये कृतं देवि शथसाहस्रिकं फलम् ॥ १,१३२.२ ॥

अष्टमी बुधवारेण पक्षयोरुभयोर्यदा ।
भविष्यति तदा तस्यां व्रतमेतत्कथा परा ॥ १,१३२.३ ॥

तस्यां नियमकर्तारो न स्युः खण्डितसम्पदः ।
तण्डुलस्याष्टमुष्टीनां वर्जयित्वाङ्गुलिद्वयम् ॥ १,१३२.४ ॥

भक्तं सद्भक्तिश्रद्धाभ्यां मुक्तिकामी हि मानवः ।
आम्र पत्रपुटे कृत्वा यो भुङ्क्ते कुशवोष्टिते ॥ १,१३२.५ ॥

कलम्बिकाम्लिकोपेतं काम्यं तस्य फलं भवे (लभे) त् ।
बुधं पञ्चोपचारेण पूजयित्वा जलाशये ॥ १,१३२.६ ॥

शक्तितो दक्षिणं दद्यात्कर्करीं तण्डुलान्विताम् ।
बुं बुधायेति बीजं स्यात्स्वाहान्तः कमलादिकः ॥ १,१३२.७ ॥

बाणचापधरंश्यामं दले चाङ्गनि मध्यतः ।
बुधाष्टमीकथा पुण्या श्रोतव्या कृतिभिर्ध्रुवम् ॥ १,१३२.८ ॥

पुरे पाटलिपुत्राख्ये वीरो नाम द्विजोत्तमः ।
रम्भा भार्या तस्य चासीत्कौशिकः पुत्र उत्तमः ॥ १,१३२.९ ॥

दुहिता विजयानाम्नी व (ध) नपालो वृषोऽभवत् ।
गृहीत्वा कौशिकस्तं च ग्रीष्मे गङ्गां गतोऽरमत् ॥ १,१३२.१० ॥

गोपालकैर्वृषश्चौरैः क्रीडास्थोपहृतो बलात् ।
गङ्गातः स च उत्थाय वनं बभ्राम दुः खितः ॥ १,१३२.११ ॥

जलार्थं विजया चागाद्भ्रा(न्मा) त्रा सार्धं च साप्यगात् ।
पिपासितो मृणालार्थो आगतोऽथ सरोवरम् ॥ १,१३२.१२ ॥

दिव्यस्त्रीणां च पूजादीन्दृष्ट्वा चाप्यथ विस्मितः ।
स ता गत्वा ययाचेऽन्नं सानुजोऽहं बुभुक्षितः ॥ १,१३२.१३ ॥

स्त्रियोऽब्रुवन्व्रतं कर्तुं दास्यामश्च कुरु व्रतम् ।

पत्न्यर्थं धनपाना (लार्) थं पूजयामासतुर्बुधम् ॥ १,१३२.१४ ॥

पुटद्वयं गृहीत्वान्नं बुभुजाते प्रदत्तकम् ।
स्त्रियो गतास्तौ धनदौ धनपानमपश्यताम् ॥ १,१३२.१५ ॥

चौरैर्दत्तं गृहीत्वाथ प्रदोषे प्राप्तवान् गृहम् ।
वीरं च दुः खितं नत्वा रात्रौ सुप्तो यथासुखम् ॥ १,१३२.१६ ॥

कन्यां च युवतीं दृष्ट्वा कस्मै देया सुता मया ।
यमायेत्यब्रवीद्दुः खात्साचाराद्व्रतसत्फलात् ॥ १,१३२.१७ ॥

स्वर्गं गतौ च पितरौ व्रतं राज्याय कौ शिकः ।
चक्रेऽयोध्यामहाराज्यं दत्त्वा च भगिनीं यमे ॥ १,१३२.१८ ॥

यमोऽपि विजयामाह गृहस्था भव मे पुरे ।
नोद्घाटयान्यत्रगते यमे सा न तथाकरोत् ।
अपश्यन्मातरं स्वां सा पाशयातनया स्थिताम् ॥ १,१३२.१९ ॥

अथोद्विग्ना कोशिकोक्तं ज्ञात्वा मुक्तिप्रदं व्रतम् ।
चक्रे च सा ततो मुक्ता माता तस्माच्चरेद्व्रतम् ॥ १,१३२.२० ॥

व्तपुण्यप्रभावेण स्वर्गं गत्वावसत्सुखम् ॥ १,१३२.२१ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बुधाष्टमीव्रतनिरूपणं नाम द्वात्रिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १३३
ब्रह्मोवाच ।
अशोककलिका ह्यष्टौ ये पिबन्ति पुनर्वसौ ।
चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ॥ १,१३३.१ ॥

त्वामशोक ! हराभीष्ट ! मधुमाससमुद्भव ।
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु ॥ १,१३३.२ ॥

(इत्यशोकाष्टमीव्रतम्) ।
ब्रह्मोवाच ।
शुक्लाष्टम्यामाश्वयुजे उत्तराषाढया युता ।
सा महानवमीत्युक्ता स्नानदानादि चाक्षयम् ॥ १,१३३.३ ॥

नवमी केवला चापि दुर्गां चैव तु पूजयेत् ।
महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् ॥ १,१३३.४ ॥

अयाचितादि षष्ठ्यादौ राजा शत्रुजयाया च ।
जपहोमसमायुक्तः कन्यां वा भोजयेत्सदा ॥ १,१३३.५ ॥

दुर्गेदुर्गे रक्षिणि स्वाहा मन्त्रोऽयं पूजनादिषु ।
दीर्घाकारादिमात्राभिर्नव देव्यो नमोऽन्तिकाः ॥ १,१३३.६ ॥

षड्भिः पदैर्नमः स्वाहा वषडादिहृदादिकम् ।
अङ्गुष्ठादिकनिष्ठान्तं न्यस्य वै पृजयेच्छिवाम् ॥ १,१३३.७ ॥

अष्टम्यां नव गेहानि दारुजान्येकमेव वा ।
तस्मिन्देवी प्रकर्तव्या हैमी वाराजतापि वा ॥ १,१३३.८ ॥

शूले खड्गे पुस्तके वा पटे वा मण्डले (पे) यजेत् ।
कपालं खेटकं घण्टां दर्पणं तर्जनीं धनः ॥ १,१३३.९ ॥

ध्वजं डमरुकं पाशं वामहस्तेषु बिभ्रती ।
शक्तिं च मुद्गरं शूलं वज्रं खड्गं तथाङ्कुशम् ॥ १,१३३.१० ॥

शरं चक्रं शलाकां च दुर्गामायुधसंयुताम् ।
शेषाः षोडशहस्तां स्युरञ्जनं डमरुं विना ॥ १,१३३.११ ॥

रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ।
चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ॥ १,१३३.१२ ॥

नवमी चोग्रचण्डा च मध्यमाग्निप्रभाकृतिः ।
रोचना त्वरुणा कृष्णा नीलं धूम्रा च शुक्लका ॥ १,१३३.१३ ॥

पाता च पाण्डुरा प्रोक्ता आलीढं हरितं तथा ।
म (मा) हिषोऽस्य स खड्गाग्रप्रकचग्रहमुष्टिकः ॥ १,१३३.१४ ॥

जप्त्वा दशाक्षरीं विद्यां नासौ केनापि बध्यते ।
पञ्च (ञ्चा) दशाङ्गुलं खड्गं त्रिशूलं च ततो यजेत् ।
लिङ्गस्यां पूजयेद्वापि पादुकेऽथ जलेऽपि वा ॥ १,१३३.१५ ॥

विचित्रां रक्षयेत्पूजामष्टम्यामुपवासयेत् ।
पञ्चाब्दं महिषं बस्तं रात्रिशेषे च घातयेत् ॥ १,१३३.१६ ॥

विधिवत्कालिकालीति तदुत्थरुधिरादिकम् ।
नेरृत्यां पूतनां चैव वायव्यां पापराक्षसीम् ॥ १,१३३.१७ ॥

दद्याच्चरक्यै चैशान्यामाग्नेय्यां च विदारिकाम् ॥ १,१३३.१८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे महानवमीव्रतं नाम त्रयस्त्रिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १३४
ब्रह्मोवाच ।
महाकौशिकमन्त्रश्च कथ्यतेऽत्र महाफलः ॥ १,१३४.१ ॥

(महाकौशिकमन्त्रः)ओं महाकौशिकाय नमः ।
ओं हूं हूं प्रस्फुर लल लल कुल्व कुल्व चुल्व चुल्व खल्ल खल्ल मुल्व मुल्व गुल्व गुल्व तुल्व पुल्ल पुल्ल धल्व धुल्व धुम धुम धमधम मारय मारय धकधक वज्ञापयज्ञापय विदारयविदारय कम्पकम्प कम्पयकम्पय पूरयपूरय आवेशयावेशय ओं ह्रीं ओं ह्रीं हं वं वं हुं तटतट मदमद ह्रीं ओं हूं नैरृताया नमः निरृतये दातव्यम् ।
महाकौशिकमन्त्रेण मन्त्रितं बलिमर्पयेत् ॥ १,१३४.२ ॥

तस्याग्रतो नृपः स्नायाच्छत्रं कृत्वा च पैष्टिकम् ।
खड्गेन घातयित्वा तु दद्यात्स्कन्दविशाखयोः ॥ १,१३४.३ ॥

मातृणां चैव देवीनां पूजा कार्या तथा निशि ।
ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ॥ १,१३४.४ ॥

वाराही चैव माहेन्द्री चामुण्डा चण्डिका तथा ।
जयन्ती मङ्गला काली भद्रकाली कपालिनी ॥ १,१३४.५ ॥

दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ।
क्षीराद्यैः स्नापयेद्देवीं कन्यकाः प्रमदास्तथा ॥ १,१३४.६ ॥

द्विजाती (दी) नथ पाषण्डानन्नदानेन पूजयेत् ।
ध्वजपत्रपताकाद्यै रथयात्रासु वस्त्रकैः ।
महानवम्यां पूजेयं जयराज्यादिदायिका ॥ १,१३४.७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे महानवम्यां महाकौशिकमन्त्रकृत्यादिविवरणं नाम चतुस्त्रिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १३५

ब्रह्मोवाच ।
नवम्यामाश्विने शुक्ले एकभक्तेन पूजयेत् ।
देवीं विप्रंल्लक्षमेकञ्जपेद्वीरं व्रती नरः ॥ १,१३५.१ ॥

(ति वीरनवमीव्रतम्) ।
ब्रह्मोवाच ।
चैत्रे शुक्लनवम्यां च देवीं दमनकैर्यजेत् ।
आयुरारोग्यसौभाग्यं शत्रुभिश्चापराजितः ॥ १,१३५.२ ॥

(इति दमनकनवमीव्रतम्) ।
ब्रह्मोवाच ।
दशम्यामेकभक्ताशी समान्ते दशधेनुदः ।
दिशश्च काञ्चनीर्दत्त्वा ब्रह्माण्डाधिपतिर्भवेत् ॥ १,१३५.३ ॥

(इति दिग्दशमीव्रतम्) ब्रह्मोवाच ।
एकादश्यामृषिपूजा कार्या सर्वोपकारिका ।
धनवान्पुत्रवांश्चान्ते ऋषिलोके महीयते ॥ १,१३५.४ ॥

मरीचिरत्र्यं गिरसौ पुलसत्यः पुलहः क्रतुः ।
प्रचेताश्च वसिष्ठश्च भृगुर्नारद एव च ॥ १,१३५.५ ॥

चैत्रादौ कारयेत्पूजां माल्यैश्च दमनोद्भवैः ।
अशोकाख्याष्टमीप्रोक्ता वीराख्या नवमीतथा ॥ १,१३५.६ ॥

दमनाख्या दिग्दशमी नवम्येकादशी तथा ॥ १,१३५.७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ऋष्येकादशीव्रतं नाम पञ्चत्रिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १३६
ब्रह्मोवाच ।
श्रवणद्वादशों वक्ष्ये भुक्तिमुक्तिप्रदायिनीम् ।
एकादशी द्वादशी च श्रवणेन च संयुता ॥ १,१३६.१ ॥

विजया सा तिथिः प्रोक्ता हरिपूजादि चाक्षयम् ।
एक भक्तेन नक्तेन तथैवायाचितेन च ॥ १,१३६.२ ॥

उपवासेन भैक्ष्येण नैवाद्बादशिको भवेत् ।
कास्यं मांसं तथा क्षौद्रं लोभं वितथभाषणम् ॥ १,१३६.३ ॥

व्यायामं च व्यवायं च दिवास्वप्नमथाञ्जनम् ।
शिलाषिष्टं मसूरं च द्वादश्यां वर्जयेन्नरः ॥ १,१३६.४ ॥

मासी भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥ १,१३६.५ ॥

संगम सरितां स्नानं बुधयुक्ता महाफला ।
कुंभे सरत्ने सजले यजेत्स्वर्णं तु वामनम् ॥ १,१३६.६ ॥

सितवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितम् ।
ओं नमो वासुदेवाय शिरः संपूजयेत्ततः ॥ १,१३६.७ ॥

श्रीधराय मुखं तद्वत्कण्ठं कृष्णाय वै नमः ।
नमः श्रीपतये वक्षो भुजौ सर्वास्त्रधारिणे ॥ १,१३६.८ ॥

व्यापकाय नमः कुक्षौ केशवायोदरं बुधः ।
त्रैलोक्यपतये मेढ्रं जङ्घे सर्वभृते नमः ॥ १,१३६.९ ॥

सर्वात्मने नमः पादौ नैवेद्यं घृतपायसम् ।
कुम्भांश्च मोदकान्दद्याज्जागरं कारयेन्निशि ॥ १,१३६.१० ॥

स्नात्वाचान्तोर्ऽचयित्वा तु कृतपुष्पाञ्जलिर्वदेत् ।
नमोनमस्ते गोविन्द बुध श्रवणसंज्ञक ! ॥ १,१३६.११ ॥

अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव ।
प्रीयतां देवदेवेशो विप्रेभ्यः कलशान्ददेत् ।
नद्यस्तीरेऽयः वा कुर्यात्सर्वान्कामानवाप्नुयात् ॥ १,१३६. १२ ॥

इति श्रीगारुडे महापुराणे पुर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्रवणद्वादशीव्रतनिरूपणं नाम षट्त्रिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १३७

ब्रह्मोवाच ।
कामदेवत्रयोदश्यां पूज्यो दमनकादिभिः ।
रतिप्रीतिसमायुक्तो ह्यसोको मणिभूषितः ॥ १,१३७.१ ॥

(इति मदनकत्रयोदशीव्रतम्) ।
चतुर्दश्यां तथाष्टभ्यां पक्ष्योः शुक्लकृष्णयोः ।
योऽब्दमेकं न भुञ्जीत मुक्तिभाक्शिवपूजनात् ॥ १,१३७.२ ॥

(इति शिवचतुर्दश्यष्टमीव्रतम्) ।
त्रिरात्रोपोषितो दद्यात्कार्तिक्यां भवनं शुभम् ।
सूर्यलोकमवाप्नोति धामव्रतमिदं शुभम् ॥ १,१३७.३ ॥

अमावस्यां पितॄणां च दत्तं जलादितदक्षयम् ।
नक्ताभ्याशी वारनाम्ना यजन्वाराणि सर्वभाक् ॥ १,१३७.४ ॥

(इति वारव्रतानि) ।
द्वादशर्क्षाणि विप्रर्षे ! प्रतिमासं तु यानि वै ।
तन्नाम्नान्तेऽतच्युतं तेषु सम्यक्संपूजयेन्नरः ॥ १,१३७.५ ॥

केशवं मार्गशीर्षे तु इत्यादौ कृतिकादिके (का) ।
घृतहोमश्चतुर्मासं कृसरञ्च निवेदयेत् ॥ १,१३७.६ ॥

आषाढादौ पायसं तु विप्रांस्तेनैव भोजयेत् ।
पञ्चाव्यजलस्नाननैवेद्यैर्नक्तमाचरेत् ॥ १,१३७.७ ॥

अर्वाग्विसर्जनाद्द्रव्यं नैवेद्यं सर्वमुच्यते ।
विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात् ॥ १,१३७.८ ॥

पाञ्चरात्रविदो मुख्या नैवेद्यं भुञ्जते स्वयम् ।
एवं संवत्सरस्यान्ते विशेषेण प्रपूजयेत् ॥ १,१३७.९ ॥

नमोनमस्तेऽच्युत ! संक्षयोऽस्तु पापस्य वृद्धिं समुपैतु पुण्यम् ।
ऐश्वर्यवित्तादि सदाक्षयं मे तथास्तु मे सन्ततिरक्षयैव ॥ १,१३७.१० ॥

यथाच्युत !त्वं परतः परस्मात्स ब्रह्मभूतः परतः परस्मात् ।
तथाच्युतं मे कुरु वाञ्छितं सदा मया कृतं पापहराप्रमेय ॥ १,१३७.११ ॥

अच्युतानन्त ! गोविन्द ! प्रसीद यदभीप्सितम् ।
तदक्षयममेयात्मन्कुरुष्व पुरुषोत्तम ॥ १,१३७.१२ ॥

कुर्याद्वै सप्त वर्षाणि आयुः श्रीसद्गतीर्नरः ।

उपोष्यैकादशीब्दमष्टमीं च चतुर्दशीम् ॥ १,१३७.१३ ॥

सप्तमीं पूजयेद्विष्णुं दुर्गां शम्बुं रविं क्रमात् ।
तेषां लोकं समाप्नोति सर्वकामांश्च निर्मलः ॥ १,१३७.१४ ॥

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन शाकाद्यैः पूजयन्तसर्वदेवताः ॥ १,१३७.१५ ॥

सर्वः सर्वासु तिथिषु भुक्तिं मुक्तिमवाप्नुयात् ।
धनदोऽग्निः प्रतिपदि नासत्यो दस्त्र अर्चितः ॥ १,१३७.१६ ॥

श्रीर्यमश्च द्वितीयायां पञ्चम्या पार्वती श्रिया ।
नागाः षष्ठ्यां कार्तिकेयः सप्तम्यां भास्करोर्ऽथदः ॥ १,१३७.१७ ॥

दुर्गाष्टम्यां मातरश्च नवम्यामथ तक्षकः ।
इन्द्रो दशम्यां धनद एकादश्यां मुनीश्वराः ॥ १,१३७.१८ ॥

द्वादश्यां च हरिः कामस्त्रयोदश्यां महेश्वरः ।
चतुर्दश्यां पञ्चदश्यां ब्रह्मा च पितरोऽपरे ॥ १,१३७.१९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे तिथिवारनक्षत्रादिव्रतनिरूपणं नाम सप्तत्रिंशदुत्तरशततमोऽध्यायः

(इति व्रतानि समाप्तानि)।
हरिरुवाच।
राज्ञां वंशान्प्रवक्ष्यामि वंशानुचरितानि च।
विष्णुनाभ्यब्जतो ब्रह्मा दक्षोऽङ्गुष्ठाच्च तस्य वै ॥ १,१३८.१ ॥

ततोऽपितर्विवस्वांश्च ततः सूनुर्विवस्वतः मनुरिक्ष्वाकुशर्याती नृगो धृष्टः प्रषध्रकः ॥ १,१३८.२ ॥

नरिष्यन्तश्च नाभागो दिष्टः शशक एव च।
मनोरासीदिला कन्या सुद्युम्नोऽस्य सुतोऽभवत् ॥ १,१३८.३ ॥

इलायां तु बुधाज्जातो राजा रुद्र पुरूरवाः।
सुतास्त्रयश्च सुद्युम्नादुत्कलो विनतो गयः ॥ १,१३८.४ ॥

अभृच्छूद्रो गोवधात्तु पृषध्रस्तु मनोः सुतः।
करूषात्क्षत्त्रिया जाता कारूषा इति विश्रुताः ॥ १,१३८.५ ॥

दिष्टपुत्रस्तु नाभागो वैश्यातामगमत्स च।
तस्माद्भलन्दनः पुत्रो वत्सप्रीतिर्भलन्दनात् ॥ १,१३८.६ ॥

ततः पांशुः खनित्रोऽभूद्भूपस्तस्मात्ततः क्षुपः।
क्षुपाद्विंशोऽभवत्पुत्रो विंशाज्जातो विविंशकः ॥ १,१३८.७ ॥

विविंशाच्च खनीनेत्रो विभूतिस्तत्सुतः स्मृतः।
करन्धमो विभूतेस्तु ततो जातोऽप्यविक्षितः ॥ १,१३८.८ ॥

मरुत्तोऽविक्षितस्यापि नरिष्यन्तस्ततः स्मृतः।
नरिष्यन्तात्तमो जातस्ततोभूद्राजवर्धनः ॥ १,१३८.९ ॥

राजवर्धात्सुधृतिश्च नरोऽभूत्सुधृतेः सुतः।
नराच्च केवलः पुत्रः केवलाद्धुन्धुमानपि ॥ १,१३८.१० ॥

धुन्धुमतो वेगवांश्च बुधो वेगवतः सुतः।
तृणबिन्दुर्बुधाज्जातः कान्या चैलविला तथा ॥ १,१३८.११ ॥

विशालं जनयामास तृणबिन्दोस्त्वलम्बुसा।
विशालाद्धेमचन्द्रोऽभूद्धेम चन्द्राच्च चन्द्रकः ॥ १,१३८.१२ ॥

धूम्राश्वश्चैव चन्द्रात्तु धूम्राश्वात्सृञ्जयस्तथा।
सञ्जयात्सहदेवोऽभूत्कृशाश्वस्तत्सुतोऽभवत् ॥ १,१३८.१३ ॥

कृशाश्वात्सोमदत्तस्तुततोऽभूज्जनमेजयः।

तत्पुत्रश्च सुमन्तिश्च एते वैशालका नृपाः ॥ १,१३८.१४ ॥

शर्यातेस्तु सुकन्याबूत्सा भार्या च्यवनस्य तु ।
अनन्तो नाम शार्यते रनन्ताद्रेवतोऽभवत् ॥ १,१३८.१५ ॥

रैवतो रेवतस्यापि रैवताद्रेवती सुता ।
धृष्टस्य धार्ष्टर्(त) कं क्षेत्रं वैष्णवं (श्यकं) तद्वभूव ह ॥ १,१३८.१६ ॥

नाभागपुत्रो नेष्ठो ह्यम्बरीषोऽपि तत्सुतः ।
अम्बरीषाद्विरूपोऽभूत्पृषदश्वो विरूपतः ॥ १,१३८.१७ ॥

रथीनरश्च तत्पुत्रो वासुदेवपरायणः ।
इक्ष्वाकोस्तु त्रयः पुत्राः विकुक्षिनिमिदण्डकाः ॥ १,१३८.१८ ॥

इक्ष्वाकुजो विकुक्षिस्तु शशादः शशभक्षणात् ।
पुरञ्जयः शशादाच्च ककुत्स्थाख्योऽभवत्सुतः ॥ १,१३८.१९ ॥

अनेनास्तु ककुत्सथाच्च पृथुः पुत्रस्त्वनेनसः ।
विश्वरातः पृथोः पुत्र आर्द्रेऽभूद्विश्वराततः ॥ १,१३८.२० ॥

युवनाश्वोऽभवच्चार्द्राच्छावस्तो युवनाश्वतः ।
बृहदश्वस्तुशावस्तात्तत्पुत्रः कुवलाश्वकः ॥ १,१३८.२१ ॥

धुन्धुमारो हि विक्यातो दृढश्वश्चततोऽभवत् ।
चन्द्राश्वः कपिलाश्वश्च हर्यश्वश्च दृढश्वतः ॥ १,१३८.२२ ॥

हर्यश्वाच्च निकुम्बोऽभूद्धिताश्वश्च निकुम्भतः ।
पूजाश्वश्च हिताश्वाच्च तत्सतो युवनाश्वकः ॥ १,१३८.२३ ॥

युवनाश्वाच्च मान्धाता बिन्दुमत्यास्ततोऽभवत् ।
मुचुकुन्दोऽम्बरीषश्च पुरुकुत्सस्त्रयः सुताः ॥ १,१३८.२४ ॥

पञ्चाशत्कन्यकाश्चैव भार्यास्ताः सौभरेर्मुनेः ।
युवनाश्वोऽम्बरीषाच्च हरितो युवनाश्वतः ॥ १,१३८.२५ ॥

पुरुकुत्सान्नर्मदायां त्रसदस्युरबूत्सुतः ।
अनरण्यस्ततो जातो हर्यश्वोऽप्यनरण्यतः ॥ १,१३८.२६ ॥

तत्पुत्रोऽभूद्वसुमनास्त्रिधन्वा तस्य चात्मजः ।
त्रय्यारुणस्तस्य पुत्रस्तस्त सत्यरतः सुतः ॥ १,१३८.२७ ॥

यस्त्रिशङ्कुः समाख्यातो हरिश्चन्द्रोऽभवत्ततः ।

हरिश्चन्द्राद्रोहिताश्वो हरितो रोहिताश्वतः ॥ १,१३८.२८ ॥

हरितस्य सुतश्चञ्चुश्चञ्चोश्च विजयः सुतः ।
विजयाद्रुरुको जज्ञे रुरुकात्तु वृकः सुतः ॥ १,१३८.२९ ॥

वृकाद्बाहुर्नृपोऽभूच्च बाहोस्तु सगरः स्मृतः ।
षष्टिः पुत्र सहस्राणि सुमत्यां सगराद्बर ॥ १,१३८.३० ॥

केशिन्यामेक एवासावसमञ्जससंज्ञकः ॥ १,१३८.३१ ॥

तस्यांशुमान्सुतो विद्वान्दिलीपस्तत्सुतोऽभवत् ।
भगीरथो दिलीपाच्च यो गङ्गामानयद्भुवम् ॥ १,१३८.३२ ॥

श्रुतो भगीरथसुतो नाभगश्च श्रुतात्किल ।
नाभागादम्बरीषोऽभूत्सिन्दुद्वीपोऽम्बरीषतः ॥ १,१३८.३३ ॥

सिन्दुद्वीपस्यायुतायुरृतुपर्णस्तदात्मजः ।
ऋतुषर्णात्सर्वकामः सुदासोऽभूत्तदात्मजः ॥ १,१३८.३४ ॥

सुदासस्य च सौदासो नाम्ना मित्रसहः स्मृतः ।
कल्माष पादसंज्ञश्च दमयन्त्यां तदात्मजः ॥ १,१३८.३५ ॥

अश्वकाख्योऽभवत्पुत्रो ह्यश्वकान्मूल(न्मृच्छ) कोऽभवत् ।
ततो दशरथो राजा तस्य चैलविलः सुतः ॥ १,१३८.३६ ॥

तस्य विश्वसहः पुत्रः खट्वाङ्गश्च तदात्मजः ।
खट्वाङ्गद्दीर्घबाहुश्च दीर्घबाहोर्ह्यजः सुतः ॥ १,१३८.३७ ॥

तस्य पुत्त्रो दशरथश्चत्वारस्तत्सुताः स्मृताः ।
रामलक्ष्मणशत्रुघ्नभरताश्च महाबलाः ॥ १,१३८.३८ ॥

रामात्कुशलवौ जातौ भरतात्तार्क्षपुष्करौ ।
चित्राङ्गदश्चन्द्रकेतुर्लक्ष्मणात्संबभूवतुः ॥ १,१३८.३९ ॥

सुबाहुशूरसेनौ च शत्रुघ्नात्संबभूवतुः ।
कुशस्य चातिथिः पुत्रो निषधो ह्यतिथेः सुतः ॥ १,१३८.४० ॥

निषधस्य नलः पुत्रो नलस्य च नभाः स्मृतः ।
नभसः पुण्डरीकस्तुक्षेमधन्वा तदात्मजः ॥ १,१३८.४१ ॥

देवानीकस्तस्य पुत्रो देवानीकादहीनकः ।
अहीनकाद्रुरुर्यज्ञे पारियात्रो रुरोः सुतः ॥ १,१३८.४२ ॥

पारियात्राद्दलो यज्ञे दल पुत्रश्छलः स्मृतः ।
छलादुक्थस्ततो ह्युक्थाद्वज्रनाभस्ततो गणः ॥ १,१३८.४३ ॥

उषिताश्वो गणाज्जज्ञे ततो विश्वसहोऽभवत् ।
हिरण्यनाभस्तत्पुत्रस्तत्पुत्रः पुष्पकः स्मृतः ॥ १,१३८.४४ ॥

ध्रुवसन्धिरभूत्पुष्पाद्ध्रुवसन्धेः सुदर्शनः ।
सुदर्शनादग्निवर्णः पद्मवणोऽग्निवर्णतः ॥ १,१३८.४५ ॥

शीघ्रस्तु पद्मवर्णात्तु शीघ्रात्पुत्रो मरुस्त्वभूत् ।
मरोः प्रसुश्रुतः पुत्रस्तस्य चोदावसुः सुतः ॥ १,१३८.४६ ॥

उदावसोर्नन्दिवर्धनः सुकेतुर्नन्दिवर्धनात् ।
सुकेतोर्देवरातोऽभूद्वृहदुक्थस्ततः सुतः ॥ १,१३८.४७ ॥

बृहदुक्थान्महावीर्यः सुधृतिस्तस्य चात्मजः ।
सुधृतेर्धृष्टकेतुश्च हर्यश्वो धृष्टकेतुतः ॥ १,१३८.४८ ॥

हर्यश्वात्तु मरुर्जातो मरोः प्रतीन्धकोऽभवत् ।
प्रतीन्धकात्कृतिरथो देवमीढस्तदात्मजः ॥ १,१३८.४९ ॥

विबुधो देवमीढात्तु विबुधात्तु महाधृतिः ।
महाधृतेः कीर्तिरातो महारोमा तदात्मजः ॥ १,१३८.५० ॥

महारोम्णः स्वर्णरोमा ह्रस्वरोमा तदात्मजः ।
सीरध्वजो ह्रस्वरोम्णः तस्य सीताभवत्सुता ॥ १,१३८.५१ ॥

भ्राता कुशध्वजस्तस्य सीरध्वजात्तु भानुमान् ।
शतद्युम्नो भानुमतः शतद्युम्नाच्छुचिः स्मृतः ॥ १,१३८.५२ ॥

ऊर्जनामा शुचेः पुत्रः सनद्वाजस्तदात्मजः ।
सनद्वाजात्कुलिर्जातोऽनञ्जनस्तु कुलेः सुतः ॥ १,१३८.५३ ॥

अनञ्जनाच्च कुलजित्तस्यापि चाधिनेमिकः ।
श्रुतायुस्तस्य पुत्रोऽभूत्सुपार्श्वश्च तदात्मजः ॥ १,१३८.५४ ॥

सुपार्श्वात्सृंजयो जातः क्षेमारिः सृजयात्समृतः ।
क्षेमारि तस्त्वनेनाश्च तस्य रामरथः स्मृतः ॥ १,१३८.५५ ॥

सत्यरथो रामरथात्तस्मादुपगुरुः स्मृतः ।
उपगुरोरुपगुप्तः स्वागतश्चोपगुप्ततः ॥ १,१३८.५६ ॥

स्वनरः स्वागताज्जज्ञे सुवर्चास्तस्य चात्मजः ।
सुवर्चसः सुपार्श्वस्तु सुश्रुतश्च सुपार्श्वतः ॥ १,१३८.५७ ॥

जयस्तु सुश्रुताज्जज्ञे जयात्तु विजयोऽभवत् ।
विजयस्य ऋतः पुत्रः ऋतस्य सुनयः सुतः ॥ १,१३८.५८ ॥

सुनयाद्वीतहव्यस्तु वीतहव्याद्धृतिः स्मृतः ।
बहुलाश्वो धृतेः पुत्रो बहुलाश्वात्कृतिः स्मृतः ॥ १,१३८.५९ ॥

जनकस्य द्वये वंशे उक्तो योगसमाश्रयः ॥ १,१३८.६० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सूर्यवंशवर्णनं नामाष्टत्रिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १३९
हरिरुवाच ।
सूर्यस्य कथितो वंशः सोमवंशं शृणुष्व मे ।
नारायणसुतो ब्रह्मा ब्रह्मणोऽत्रेः समुद्भवः ॥ १,१३९.१ ॥

अत्रेः सोमस्तस्य भार्या तारा सुरगुरोः प्रिया ।
सोमात्तरा बुधं जज्ञे बुधपुत्रः पुरूरवाः ॥ १,१३९.२ ॥

बुधपुत्रादथोर्वश्यां षट्पुत्रास्तु श्रुतात्मकः ।
विश्वावसुः शतायुश्च आयुर्धीमानमावसुः ॥ १,१३९.३ ॥

अमावसोर्भीमनामा भीमपुत्रश्च काञ्चनः ।
काञ्चनस्य सुहोत्रोऽभूज्जह्नुश्चाभूत्सुहोत्रतः ॥ १,१३९.४ ॥

जह्नोः सुमन्तुरभवत्सुमन्तोरपजापकः ।
बलाकाश्वस्तस्य पुत्रो बलाकाश्वात्कुशः स्मृतः ॥ १,१३९.५ ॥

कुशाश्वः कुशनाभश्चामूर्तरयो वसुः कुशात् ।
गाधिः कुशाश्वात्संजज्ञे विश्वामित्रस्तदात्मजः ॥ १,१३९.६ ॥

कन्या सत्यवती दत्ता ऋचीकाय द्विजाय सा ।
ऋचीकाज्जमदाग्निश्च रामस्तस्याभवत्सुतः ॥ १,१३९.७ ॥

विश्वामित्राद्देवरातमदुच्छन्दादयः सुताः ।
आयुषो नहुषस्तस्मादनेना रजिरम्भकौ ॥ १,१३९.८ ॥

क्षत्त्रवृद्धः क्षत्त्रवृद्धात्सुहोत्रश्चाभवन्नृपः ।
काश्यकाशौगृत्समदः सुहोत्रादभवंस्त्रयः ॥ १,१३९.९ ॥

गृत्समदाच्छौन कोऽभूत्काश्याद्दीर्घतमास्तथा ।
वैद्यो धन्वन्तरिस्तस्मात्केतुमांश्च तदात्मजः ॥ १,१३९.१० ॥

भीमरथः केतुमतो दिवोदासस्तदात्मजः ।
दिवोदासात्प्रतर्दनः शत्रुजित्सोऽत्र विश्रुतः ॥ १,१३९.११ ॥

ऋतध्वजस्तस्य पुत्रो ह्यलर्कश्च ऋतध्वजात् ।
अलर्कात्सन्नतिर्जज्ञे सुनीतः सन्नतेः सुतः ॥ १,१३९.१२ ॥

सत्यकेतुः सुनीतस्य सत्यकेतोर्विभुः सुतः ।
विभोस्तु सुविभुः पुत्रः सुविभोः सुकुमारकः ॥ १,१३९.१३ ॥

सुकुमाराद्धृष्टकेतुर्वीतिहोत्रस्तदात्मजः ।

वीतिहोत्रस्य भर्गोऽभूद्भर्गभूमिस्तदात्मजः ॥ १,१३९.१४ ॥

वैष्णवाः स्युर्महात्मान इत्येते काशयो नृपाः ।
पञ्चपुत्रशतान्यासन्रजेः शक्रेण संहृताः ॥ १,१३९.१५ ॥

प्रतिक्षत्त्रः क्षत्त्रवृद्धात्संजयश्च त दात्मजः ।
विजयः संजयस्यापि विजयस्य कृतः सुतः ॥ १,१३९.१६ ॥

कृताद्वृषधनश्चाभूत्सहदेवस्तदात्मजः ।
सहदेवाददीनोऽभूज्जयत्सेनोऽप्यदीनतः ॥ १,१३९.१७ ॥

जयत्सेनात्संकृतिश्च क्षत्त्रधर्मा च संकृतेः ।
यतिर्ययातिः संयातिरयातिर्विकृतिः क्रमात् ॥ १,१३९.१८ ॥

नहुषस्य सुताः ख्याता ययातेर्नृपतेस्तथा ।
यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ १,१३९.१९ ॥

द्रुह्युं चानुं च पूरुञ्च शर्मिष्ठा वार्षपार्वणी ।
सहस्रजीत्क्रोष्टुमना रघुश्चैव यदोः सुताः ॥ १,१३९.२० ॥

सहस्रजितः शतजित्तस्माद्वै हयहैहयौ ।
अनरण्यो हयात्पुत्रो धर्मो हैहयतोऽभवत् ॥ १,१३९.२१ ॥

धर्मस्य धर्मनेत्रोऽबूत्कुन्तिर्वै धर्मनेत्रतः ।
कुन्तेर्बभूत साहञ्जिर्महिष्मांश्च तदात्मजः ॥ १,१३९.२२ ॥

भद्रश्रेण्यस्तस्य पुत्त्रो भद्रश्रेणयस्य दुर्दमः ।
धनको दुर्दमाच्चैव कृतवीर्यश्च जानकिः ॥ १,१३९.२३ ॥

कृताग्निः कृतकर्मा च कृतौजाः सुमहाबलः ।
कृतवीर्यादर्जुनोऽभूदर्जुनाच्छूरसेनकः ॥ १,१३९.२४ ॥

जयध्वजो मधुः शूरो वृषणः पञ्च सव्रताः ।
जयध्वजात्तालजङ्घो भरतस्तालजङ्गतः ॥ १,१३९.२५ ॥

वृषणस्य मधुः पुत्त्रो मधोर्वृष्ण्यादिवंशकः ।
क्रोष्टोर्विजज्ञिवान्पुत्त्र आहिस्तस्य महात्मनः ॥ १,१३९.२६ ॥

आहेरुशङ्कुः संजज्ञेतस्य चित्ररथः सतः ।
शशबिन्दुश्चित्ररथात्पत्न्यो लक्षञ्च तस्य ह ॥ १,१३९.२७ ॥

दशलक्षञ्च पुत्राणां पृथुकीर्त्यादयो वराः ।

पृथुकीर्तिः पृथुजयः पृथुदानः पृथुश्रवाः ॥ १,१३९.२८ ॥

पृथुश्रवसोऽभूत्तम उशनास्तमसोऽभवत् ।
तत्पुत्रः शितगुर्नाम श्रीरुक्मकवचस्ततः ॥ १,१३९.२९ ॥

रुक्मश्च पृथुरुक्मश्च ज्यामघः पालितो हरिः ।
श्रीरुक्मकवचस्यैते विदर्भो ज्यामघात्तथा ॥ १,१३९.३० ॥

भार्यायाञ्चैव शैब्यायां विदर्भात्क्रथकौशिकौ ।
रोमपादो रोमपादाद्बभ्रुर्बभ्रोर्धृतिस्तथा ॥ १,१३९.३१ ॥

कौशिकस्य ऋचिः पुत्रः ततश्चैद्यो नृपः किल ।
कुन्तिः किलास्य पुत्रोऽभूत्कुन्तेर्वृष्णिः सुतः स्मृतः ॥ १,१३९.३२ ॥

वृष्णेश्च निवृतिः पुत्रो दशार्हे निवृतेस्तथा ।
दशार्हस्य सुतो व्योमा जीमूतश्च तदात्मजः ॥ १,१३९.३३ ॥

जीमूताद्विकृतिर्जज्ञे ततो भीमरथोऽभवत् ।
ततो मधुरथो जज्ञे शकुनिस्तस्य चात्मजः ॥ १,१३९.३४ ॥

करम्भिः शकुनेः पुत्रस्तस्य वै देववान्स्मृतः ।
देवक्षत्त्रो देवनतो देवक्षत्त्रान्मधुः स्मृतः ॥ १,१३९.३५ ॥

कुरुवंशो मधोः पुत्रो ह्यनुश्च कुरुवंशतः ।
पुरुहोत्रो ह्यनोः पुत्रो ह्यंशुश्च पुरुहोत्रतः ॥ १,१३९.३६ ॥

सत्त्वश्रुतः सुतश्चांशोस्ततो वै सात्त्वतो नृपः ।
भजिनो भजमानश्च सात्वतादन्धकः सुतः ॥ १,१३९.३७ ॥

महाभोजो वृष्णि दिव्यावन्यो देवावृधोऽभवत् ।
निमिवृष्णी भजमानादयुताजित्तथैव च ॥ १,१३९.३८ ॥

शतजिच्च सहस्राजिद्बभ्रुर्देवो बृहस्पतिः ।
महाभोजात्तु भोजोऽभूत्तद्वृष्णेश्च सुमित्रकः ॥ १,१३९.३९ ॥

स्वधाजित्संज्ञकस्तस्मादनमित्राशिनी तथा ।
अनमित्रस्य निघ्नोऽभून्निघ्नाच्छत्राजितोऽभवत् ॥ १,१३९.४० ॥

प्रसेनश्चापरः ख्यातो ह्यनमित्राच्छिबिस्तथा ।
शिबेस्तु सत्यकः पुत्रः सत्यकात्सात्यकिस्तथा ॥ १,१३९.४१ ॥

सात्यकेः सञ्जयः पुत्रः कुलिश्चैव तदात्मजः ।

कुलेर्युगन्धरः पुत्रस्ते शैबेयाः प्रकीर्तिताः ॥ १,१३९.४२ ॥

अनमित्रान्वये वृष्णिः श्वफल्कश्चित्रकः सुतः ।
श्वफल्काच्चैवगान्दिन्यामक्रूरो वैष्णवोऽभवत् ॥ १,१३९.४३ ॥

उपमद्गुरथाक्रूराद्देवद्योतस्ततः सुतः ।
देववानुपदेवश्च ह्यक्रूरस्य सुतौ स्मृतौ ॥ १,१३९.४४ ॥

पृथुर्विपृथुश्चित्रस्य त्वन्धकस्य शुचिः स्मृतः ।
कुकुरो भजमानस्य तथा कम्बलबर्हिषः ॥ १,१३९.४५ ॥

धृष्टस्तु कुकुराज्जज्ञे तस्मात्कापोतरोमकः ।
तदात्मजो विलोमा च विलोम्नस्तुम्बुरुः सुतः ॥ १,१३९.४६ ॥

तस्माच्चदुन्दुभिर्जज्ञे पुनर्वसुरतः स्मृतः ।
तस्याहुकश्चाहुकी च कन्या चैवाहुकस्य तु ॥ १,१३९.४७ ॥

देवकश्चोग्रसेनश्च देवकाद्देवकी त्वभूत् ।
वृकदेवोपदेवाच सहदेवा सुरक्षिता ॥ १,१३९.४८ ॥

श्रीदेवी शान्तिदेवी च वसुदेव उवाह ताः ।
देववानुपदेवश्च सहदेवासुतौ स्मृतौ ॥ १,१३९.४९ ॥

उग्रसेनस्य कंसोऽभूत्सुनामा च वटादयः ।
विदूरथो भजमानाच्छूरश्चाभूद्विदूरथात् ॥ १,१३९.५० ॥

विदूरथसुतस्याथ सूरस्यापि शमी सुतः ।
प्रतिक्षत्रश्च शमिनः स्वयम्भोजस्तदात्मजः ॥ १,१३९.५१ ॥

हृदिकश्च स्वयम्भोजात्कृतवर्मा तदात्मजः ।
देवः शतधनुश्चैव शूराद्वै देवमीढुषः ॥ १,१३९.५२ ॥

दश पुत्रा मारिषायां वसुदेवादयोऽभवन् ।
पृथा च श्रुतदेवी च श्रुतकीर्तिः श्रुतश्रवाः ॥ १,१३९.५३ ॥

राजाधिदेवो शूराच्च पृथां कुन्तेः सुतामदात् ।
सा दत्ता कुन्तिना पाण्डोस्तस्यां धर्मानिलेन्द्रकैः ॥ १,१३९.५४ ॥

युधिष्ठिरो भीमपार्थो नकुलः सहदेवकः ।
माद्रयां नासत्यदस्त्राभ्यां कुन्त्यां कर्णः पुराभवत् ॥ १,१३९.५५ ॥

श्रुतदेव्यां दन्तवक्रो जज्ञे वै युद्धदुर्मदः ।

सन्तर्दनादयः पञ्च श्रुतकीर्त्याञ्च कैकयात् ॥ १,१३९.५६ ॥

राजाधिदेव्यां जज्ञाते विन्दश्चैवानुविन्दकः ।
श्रुतश्रवा दमघोषात्प्रजज्ञे शिशुपालकम् ॥ १,१३९.५७ ॥

पौरवी रोहीणा भार्या मदिरानकदुन्दुभेः ।
देवकीप्रमुखा भद्रा रोहिण्यां बलभद्रकः ॥ १,१३९.५८ ॥

सारणाद्याः शठश्चैव रेवत्यां बलभद्रतः ।
निशठश्चोल्मुको जातो देवक्यां षट्च जज्ञिरे ॥ १,१३९.५९ ॥

कीर्तिमांश्च सुषेणश्च ह्युदार्यो भद्रसेनकः ।
ऋजुदासो भद्रदेवः कंस एवावधीच्च तान् ॥ १,१३९.६० ॥

संकर्षणः सप्तमोऽभूदष्टमः कृष्ण एव च ।
षोडशस्त्रीसहस्राणि भार्याणाञ्चाभवन्हरेः ॥ १,१३९.६१ ॥

रुक्मिणी सत्यभामा च लक्ष्मणा चारुहासिनी ।
श्रेष्ठा जाम्बवती चाष्टौ जज्ञिरे ताः सुतान्बहून् ॥ १,१३९.६२ ॥

प्रद्युम्नश्चारुदेष्णश्च प्रधानाः साम्ब एव च ।
प्रद्युम्नादनिरुद्धोऽभूत्ककुद्मिन्यां महाबलः ॥ १,१३९.६३ ॥

अनिरुद्धात्सुभद्रायां वज्रो नाम नृपोऽभवत् ।
प्रतिबाहुर्वज्रसुतश्चारुस्तस्य सुतोऽभवत् ॥ १,१३९.६४ ॥

वह्निस्तु तुर्वसोर्वंशे वह्नेर्भर्गोऽभवत्सुतः ।
भर्गाद्भानुरभूत्पुत्रो भानोः पुत्रः करन्धमः ॥ १,१३९.६५ ॥

करन्धमस्य मरुतो द्रुह्योर्वंशं निबोध मे ।
द्रुह्योस्तु तनयः सेतुरारद्धश्च तदात्मजः ॥ १,१३९.६६ ॥

आरद्धस्यैव गान्ध रो घर्मो गान्धारतोऽभवत् ।
घृतस्तु घर्मपुत्रोऽभूद्दुर्गमश्च घृस्य तु ॥ १,१३९.६७ ॥

प्रचेता दुर्गमस्यैव अनोर्वंशं शृणुष्व मे ।
अनोः सभानरः पुत्रस्तस्मा कालञ्जयोऽभवत् ॥ १,१३९.६८ ॥

कालञ्जयात्सृञ्जयोऽभूत्सृञ्जयात्तु पुरुञ्जयः ।
जनमेजयस्तु तत्पुत्रो महाशालस्तदात्मजः ॥ १,१३९.६९ ॥

महामना महाशालदुशीनर इह स्मृतः ।

अशीनराच्छिबिर्जज्ञे वृषदर्भः शिवेः सुतः ॥ १,१३९.७० ॥

महामनोजात्तितिक्षोः पुत्रोऽभूच्च रुषद्रथः ।
हेमो रुषद्रथाज्जज्ञे सुतपा हेमतोऽभवत् ॥ १,१३९.७१ ॥

बलिः सुतपसो जज्ञे ह्यङ्गवङ्गकलिङ्गकाः ।
अन्धः पैण्ड्रश्च बालेया ह्यनपानस्तथाङ्गतः ॥ १,१३९.७२ ॥

अनपानाद्दिविरथस्ततो धर्मरथोऽभवत् ।
रोमपादो धर्मरथाच्चतुरङ्गस्तदात्मजः ॥ १,१३९.७३ ॥

पृथुलाक्षस्तस्य पुत्रश्चम्पोऽभूत्पृथुलाक्षतः ।
चम्पपुत्रश्च हर्यङ्गस्तस्य भद्ररथः सुतः ॥ १,१३९.७४ ॥

बृहत्कर्मा सुतस्तस्य बृहद्भानुस्ततोऽभवत् ।
बुहन्मना बृहाद्भानोस्तस्य पुत्रो जयद्रथः ॥ १,१३९.७५ ॥

जयज्रथस्य विजयो विजयस्य धृतिः सुतः ।
धृतेर्धृव्रतः पुत्रः सत्यधर्मा धृतव्रतात् ॥ १,१३९.७६ ॥

तस्य पुत्रस्त्वधिरथः कर्णस्तस्य सुतोऽभवत् ॥ १,१३९.७७ ॥

वृर्षसेनस्तु कर्णस्य पुरुवंश्याञ्छृणुष्व मे ॥ १,१३९.७८ ॥

इति श्रीगारुडे महुपाराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे चन्द्रवंशवर्णनं नामैकोनचत्वारिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १४०
हरिरुवाच ।
जनमेजयः पुरोश्चाभून्नमस्युर्जनमेजयात् ।
तस्य पुत्रश्चाभयदः सुद्युश्चाभयदादभूत् ॥ १,१४०.१ ॥

सुद्योर्बहुगतिः पुत्रः संजातिस्तस्य चात्मजः ।
वत्सजातिश्च सञ्जातेः रौद्राश्वश्च तदात्मजः ॥ १,१४०.२ ॥

ऋतेयुः स्थण्डिलेयुश्च कक्षेयुश्च कृतेयुकः ।
जलेयुः सन्ततेयुश्च रोद्राश्वस्य सुता वराः ॥ १,१४०.३ ॥

रतिनार ऋतेयोश्च तस्य प्रतिरथः सुतः ।
तस्य मेधातिथिः पुत्रस्तत्पुत्रश्चैनिलः स्मृतः ॥ १,१४०.४ ॥

ऐनिलस्य तु दुष्यन्तो भरतस्तस्य चात्मजः ।
शकुन्तलायां संजज्ञे वितथो भरतादभूत् ॥ १,१४०.५ ॥

वितथस्य सुतो मन्युर्मन्योश्चैव नरः स्मृतः ।
नरस्य संकृतिः पुत्रो गर्गो वै संकृतेः सुतः ॥ १,१४०.६ ॥

गर्गादमन्युः पुत्रो वै शिनिः पुत्रो व्यजायत ।
मन्युपुत्रान्महावीर्यात्सुतोऽभवदुरुक्षयः ॥ १,१४०.७ ॥

उरुक्षयात्त्रय्यारुणिर्व्यूहक्षत्राच्च मन्युजात् ।
सुहोत्रस्तस्य हस्ती च अजमीढद्विमीढकौ ॥ १,१४०.८ ॥

हस्तिनः पुरुमीढश्च कण्वोऽभूदजमीढतः ।
कण्वान्मेधातिथिर्जज्ञे यतः काण्वायना द्विजाः ॥ १,१४०.९ ॥

अजमीढाद्वृहदिषुस्तत्पुत्रश्च बृहद्धनुः ।
बृहत्कर्मा तस्य पुत्रस्तस्य पुत्रो जयद्रथः ॥ १,१४०.१० ॥

जयद्रथाद्विश्वजिच्च सेनजिच्च तदात्मजः ।
रुचिराश्वः सेनजितः पृथुसेनस्तदात्मजः ॥ १,१४०.११ ॥

पारस्तु पृथुसेनस्य पाराद्द्वीपोऽभवन्नृपः ।
नृपस्य सृमरः पुत्रः सुकृतिश्च पृथोः सुतः ॥ १,१४०.१२ ॥

विभ्राजः सुकृतेः पुत्रो विभ्राजादश्वहोऽभवत् ।
कृत्यां तस्माद्ब्रह्मदत्तो विष्वक्सेनस्तदात्मजः ॥ १,१४०.१३ ॥

यवीनरो द्विमीढस्य धृतिमांश्च यवीनरात् ।

धतिमतः सत्यधृतिर्दृढनेमिस्तदात्मजः ॥ १,१४०.१४ ॥

दृढनेमेः सुपार्श्वोऽभूत्सुपार्श्वात्सन्नतिस्तथा ।
कृस्तु सन्नतेः पुत्रः कृतादुग्रायुधोऽभवत् ॥ १,१४०.१५ ॥

उग्रायुधाच्च क्षेम्यौऽभूत्सुधीरस्तु तदात्मजः ।
पुरञ्जयः सुधीराच्च तस्य पुत्रो विदूरथः ॥ १,१४०.१६ ॥

अजमीढान्नलिन्याञ्च नीलो नाम नृपोऽभवत् ।
नीलाच्छान्तिरभूत्पुत्रः सुशान्तिस्तस्य चात्मजः ॥ १,१४०.१७ ॥

सुशान्तेश्च पुरुर्जातो ह्यर्कस्तस्य सुतोऽभवत् ।
अर्कस्य चैव हर्यश्वो हर्यश्वान्मुकुलोऽभवत् ॥ १,१४०.१८ ॥

यवीनरो बृहद्भानुः कम्पिल्लः सृञ्जयस्तथा ।
पाञ्चालान्मुकुलाज्जज्ञे शरद्वान्वैष्णवो महान् ॥ १,१४०.१९ ॥

दिवोदासो द्वितीयोऽस्य ह्यहल्यायां शरद्वतः ।
शतानन्दोऽभवत्पुत्रस्तस्य सत्यधृतिः सतः ॥ १,१४०.२० ॥

कृपः कृपी सत्यधृतेरुर्वश्यां वीर्यहानितः ।
द्रोणपत्नी कृपी जज्ञे अश्वत्थामानमुत्तमम् ॥ १,१४०.२१ ॥

दिवोदासान्मित्रयुश्च मित्रयोश्च्यवनोऽभवत् ।
सुदासश्च्यवनाज्जज्ञे सौदासस्तस्य जात्मजः ॥ १,१४०.२२ ॥

सहदेवस्तस्य पुत्रः सहदेवात्तु सोमकः ।
जन्तुस्तु सोमकाज्जज्ञे पृषतश्चापरो महान् ॥ १,१४०.२३ ॥

पृषताद्द्रुपदो जज्ञे धृष्टद्युम्नस्ततोऽभवत् ।
धृष्टद्युम्नाद्धृष्टकेतुरृक्षोऽभूतजमीढतः ॥ १,१४०.२४ ॥

ऋक्षात्संवरणो जज्ञे कुरुः संवरणादभूत् ।
सुधनुश्च पीक्षिच्च जह्नुश्चैव कुरोः सुताः ॥ १,१४०.२५ ॥

सुधनुषः सुहोत्रोऽभूच्च्यवनोऽभूत्सुहोत्रतः ।
च्यवनात्कृतको जज्ञे तथोपरिचरो वसुः ॥ १,१४०.२६ ॥

बृहद्रथश्च प्रत्यग्रः सत्याद्याश्च वसोः सुताः ।
बृहद्रथात्कुशाग्रश्च कुशाग्राद्दृषभोऽभवत् ॥ १,१४०.२७ ॥

ऋषभात्पुष्पवांस्तस्माज्जज्ञे सत्यहितो नृपः ।

सत्यहितात्सुधन्वाभूज्जह्नुश्चव सुधन्वनः ॥ १,१४०.२८ ॥

बृहद्रथाज्जरासन्धः सहदेवस्तदात्मजः ।
सहदेवाच्च च सोमापिः सोमापेः श्रुतवान्सुतः ॥ १,१४०.२९ ॥

भीमसेनोग्रसेनौ च श्रुतसेनोऽपराजितः ।
जनमेजयस्तथान्योऽभूज्जह्नोस्तु सुरथोऽभवत् ॥ १,१४०.३० ॥

विदूरथस्तु सुरथात्सार्वभौमो विदूरथात् ।
जयसेनः सार्वभौमादावधीतस्तदात्मजः ॥ १,१४०.३१ ॥

अयुतायुस्तस्य पुत्रस्तस्य चाक्रोधनः सुतः ।
अक्रोधनस्यातिथिश्च ऋक्षोऽभूदतिथेः सुतः ॥ १,१४०.३२ ॥

ऋक्षाच्च भीमसेनोऽभूद्दिलीपो भीमसेनतः ।
प्रतीपोऽभूद्दिलीपाच्च देवापिस्तु प्रतीपतः ॥ १,१४०.३३ ॥

शन्तनुश्चैव बाह्लीकस्त्रयस्ते भ्रातरो नृपाः ।
बाह्लीकात्सोमदत्तोऽभूद्भूरिर्भूरिश्रवास्ततः ॥ १,१४०.३४ ॥

शलश्च शन्तनोर्भीष्मो गङ्गायां धार्मिको महान् ।
चित्राङ्गदविचित्रौ तु सत्यवत्यान्तु शन्तनोः ॥ १,१४०.३५ ॥

भार्ये विचित्रवीर्यस्य त्वम्बिकाम्बालिके तयोः ।
धृराष्ट्रं च पाण्डुञ्च तद्दास्यां विदुरन्तथा ॥ १,१४०.३६ ॥

व्यास उत्पादयामास गान्धागी धृतराष्ट्रतः ।
शतपुत्रं दुर्योधनाद्यं पाण्डोः पञ्च प्रजज्ञिरे ॥ १,१४०.३७ ॥

प्रतिबिन्ध्यः श्रुतसोमः श्रुतकीर्तिस्तथार्जुनात् ।
शतानीकः श्रुतकर्मा द्रौपद्यां पञ्च वै क्रमात् ॥ १,१४०.३८ ॥

यौधेयी च हिडिम्बा च कौशी चैव सुभद्रिका ।
विजया वै रेणुमती पञ्चभ्यस्तु सुताः क्रमात् ॥ १,१४०.३९ ॥

देवको घचोत्कचश्च ह्यभिमन्युश्च सर्वगः ।
सुहोत्रो निरमित्रश्च परीक्षिदभिमन्युजः ॥ १,१४०.४० ॥

जनमेजयोऽस्य ततो भविष्यांश्च नृपाञ्छृणु ॥ १,१४०.४१ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे चन्द्रवंशवर्णनं नाम चत्वारिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १४१

हरिरुवाच ।

शतानीको ह्यश्वमेधदत्तश्चाप्यधिसोमकः ।
कृष्णोऽनिरुद्धश्चाप्युष्णस्ततश्चित्ररथो नृपः ॥ १,१४१.१ ॥

शुचिद्रथो वृष्णिमांश्च सुपेणश्च सुनीथकः ।
नृचक्षुश्च मुखाबाणः मेधावी च नृपञ्जयः ॥ १,१४१.२ ॥

पारिप्लवश्च मुनयो मेधावी च नृपञ्जयः ।
बृहद्रथो हरिस्तिग्मो शतानीकः सुदानकः ॥ १,१४१.३ ॥

उदानोऽह्निनरश्चैव दण्डपाणिर्निमित्तकः ।
क्षेमकश्च ततः शूद्रः पिता पूर्वस्ततः सुतः ॥ १,१४१.४ ॥

बृहद्बलास्तु कथयन्ते नृपोश्चैक्ष्वाकुवंशजाः ।
बृहद्बलादुरुक्षयो वत्सव्यूहस्ततः परः ॥ १,१४१.५ ॥

वत्सव्यूहात्ततः सूर्यः सहदेवस्तदात्मजः ।
बृहदश्वो भानुरथः प्रतीच्यश्च प्रतीतकः ।
मनुदेवः सुनक्षत्रः किन्नरश्चान्तरिक्षकः ॥ १,१४१.६ ॥

सुपर्णः कृतजिच्चैव बृहद्भ्राजश्च धार्मिकः ।
कृतञ्जयो धनञ्जयः संजयः शाक्य एव च ॥ १,१४१.७ ॥

शुद्धोदनो बाहुलश्च सेनजित्क्षुद्रकस्तथा ।
सुमित्रः कुडवश्चातः सुमित्रान्मागधाञ्छृणु ॥ १,१४१.८ ॥

जरासन्धः सहदेवः सोमापिश्च श्रुतश्रवाः ।
अयुतायुर्निरमित्रः सुक्षत्रो बहुकर्मकः ॥ १,१४१.९ ॥

श्रुतञ्जयः सेनजिच्च भूरिश्चैव शुचिस्तथा ।
क्षेम्यश्च सुव्रतो धर्मः श्मश्रुलो दृढसेनकः ॥ १,१४१.१० ॥

सुमतिः सुबलो नीतो सत्यजिद्विश्वजित्तथा ।
इषुञ्जयश्च इत्येते नृपा बार्हद्रथाः स्मृताः ॥ १,१४१.११ ॥

अधर्मिष्ठाश्च शूद्राश्च भविष्यन्ति नृपास्ततः ।
स्वर्गादिकृद्धि भगवान्साक्षान्नारायणोऽव्ययः ॥ १,१४१.१२ ॥

नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको लयः ।
याति भूः प्रलयं चाप्सु ह्यापस्तेजसि पावकः ॥ १,१४१.१३ ॥

वायौ वायुश्च वियति त्वाकाशौ यात्यहङ्कृतौ ।
अहं बुद्धौ मतिर्जीवे जीवोऽव्यक्ते तदात्मनि ॥ १,१४१.१४ ॥

आत्मा परेश्वरो विष्णुरेको नारायणो नरः ।
अविनाश्यपरं सर्वं जगत्स्वर्गादि नाशि हि ॥ १,१४१.१५ ॥

नृपादयो गता नाशमतः पापं विवर्जयेत् ।
धर्मं कुर्यात्स्थिरं येन पापं हित्वा हरिं व्रजेत् ॥ १,१४१.१६ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भविष्य राजवंश द्द नामैकचत्वारिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १४२
ब्रह्मोवाच ।
विंशादीन्पालयामास ह्यवतीर्णो हरिः प्रभुः ।
दैत्यधर्मस्य नाशार्थं वेदधर्मादिगुप्तये ॥ १,१४२.१ ॥

मत्स्यादिकस्वरूपेण त्ववतारं करोत्यजः ।
मत्स्यो भूत्वा हयग्रीवं दैत्यं हत्वाजिकण्टकम् ॥ १,१४२.२ ॥

वेदानानीय मन्वादीन्पालयामास केशवः ।
मन्दरं धारयामास कूर्मो भूत्वा हिताय च ॥ १,१४२.३ ॥

क्षीरोदमथने वै द्यो देवो धन्वन्तरिर्ह्यर्यभूत् ।
बिभ्रत्कमण्डलुं पूर्णममृतेन समुत्थितः ॥ १,१४२.४ ॥

आयुर्वेदमथाष्टाङ्गं सुश्रुताय स उक्तवान् ।
अमृतं पाययामास स्त्रीरूपी च सुरान्हरिः ॥ १,१४२.५ ॥

अवतीर्णो वराहोऽथ हिरण्याक्षं जघान ह ।
पृथिवीं धारयामास पालयामास देवताः ॥ १,१४२.६ ॥

नरसिंहोऽवर्तीर्णोऽथ हिरण्यकशिपुंरिपुम् ।
दैत्यान्निहतवान्वेदधर्मादीनभ्यपालयत् ॥ १,१४२.७ ॥

ततः परशुरामोऽभूज्जमदग्नेर्जगत्प्रभुः ।
त्रिः सप्तकृत्वः पृथिवीं चक्रे निः क्षत्त्रियां हरिः ॥ १,१४२.८ ॥

कार्तवीर्यं जघानाजौ कश्यपाय महीं ददौ ।
यागं कृत्वा महाबाहुर्महेन्द्रे पर्वते स्थितः ॥ १,१४२.९ ॥

ततो रामो भविष्णुश्च चतुर्धा दुष्टमर्दनः ।
पुत्रो दशरथाज्जज्ञे रामश्च भरतोऽनुजः ॥ १,१४२.१० ॥

लक्ष्मणश्चाथ शत्रुघ्नो रामभार्या च जानकी ।
रामश्च पितृसत्यार्थं मातृभ्यो हितमाचरन् ॥ १,१४२.११ ॥

शृङ्गवेरं चित्रकूटं दण्डकारण्यमागतः ।
नासां शूर्पणखायाश्च च्छित्त्वाथ खरदूषणम् ॥ १,१४२.१२ ॥

हत्वा स राक्षसं सीतापहारिरजनीचरम् ।
रावणं चानुजं तस्य लङ्कापुर्यां विभीषणम् ॥ १,१४२.१३ ॥

रक्षोराज्ये च संस्थाप्य सुग्रीवनुमन्मुखैः ।

आरुह्य पुष्पकं सार्धं सीतया पतिभक्तया ॥ १,१४२.१४ ॥

लक्ष्मणेनानुकूलेन ह्ययोध्यां स्वपुरीं गतः ।
राज्यं चकार देवादीन्पालयामास स प्रजाः ॥ १,१४२.१५ ॥

धर्मसंरक्षणं चक्रे ह्यश्वमेधादिकान्क्रतून् ।
सा महीपतिना रेमे रामेणैव यथासुखम् ॥ १,१४२.१६ ॥

रावणस्य गृहे सीता स्थिता भेजे न रावणम् ।
कर्मणा मनसा वाचा सा गता राघवं सदा ॥ १,१४२.१७ ॥

पतिव्रता तु सा सीता ह्यनसूया यथैव तु ।
पतिव्रताया माहात्म्यं शृणु त्वं कथयाम्यहम् ॥ १,१४२.१८ ॥

कौशिको ब्राह्मणः कुष्ठी प्रतिष्ठानेऽभवत्पुरा ।
तं तथा व्याधितं भार्या पतिं देवमिवार्चयत् ॥ १,१४२.१९ ॥

निर्भर्त्सितापि भर्तारं तममन्यत दैवतम् ।
भर्त्रोक्ता सानयद्वेश्यां शुल्कमादाय चाधिकम् ॥ १,१४२.२० ॥

पथि सूले तदा प्रोतमचौरं चौरशङ्कया ।
माण्डव्यमतिदुः खार्तमन्धकारेऽथ स द्विजः ॥ १,१४२.२१ ॥

पत्नीस्कन्धसमारूढश्चालयामास कौशिकः ।
पादावमर्शणत्क्रुद्धो माण्डव्यस्तमुवाच ह ॥ १,१४२.२२ ॥

सूर्योदये मृतिस्तस्य येनाहं चालितः पदा ।
तच्छ्रुत्वा प्राह तद्भार्या सूर्यो नोदयमेष्यति ॥ १,१४२.२३ ॥

ततः सूर्योदयाभावाद भवत्सततं निशा ।
बहून्यब्दप्रमाणानि ततो देवा भयं ययुः ॥ १,१४२.२४ ॥

ब्रह्माणं शरणं जग्मुस्तामूचे पद्मसम्भवः ।
प्रशाम्यते तेजसैव तपस्तेजस्त्वनेन वै ॥ १,१४२.२५ ॥

पतिव्रताया माहात्म्यान्नोद्गच्छति दिवाकरः ।
तस्य चानुदयाद्धानिर्मर्त्यानां भवतां तथा ॥ १,१४२.२६ ॥

तस्मात्पतिव्रतामत्रेरनसूयां तपस्विनीम् ।
प्रसादयत वै पत्नीं भानोरुदयकाम्यया ॥ १,१४२.२७ ॥

तैः सा प्रसादिता गत्वा ह्यनसूया पतिव्रता ।

कृत्वादित्योदयं सा च तं भर्तारमजीवयत् ।
पतिव्रतानसूयायाः सीताभूदधिका किल ॥ १,१४२.२८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे दशावतारद्द नाम द्विचत्वारिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १४३

ब्रह्मोवाच ।

रामायणमतो वक्ष्ये श्रुतं पापविनाशनम् ।
विष्णुनाभ्यब्जतो ब्रह्मा मरीचिस्तत्सुतोऽभवत् ॥ १,१४३.१ ॥

मरीचेः कश्यपस्तस्माद्रविस्तस्मान्मनुः स्मृतः ।
मनोरिक्ष्वाकुरस्याभूद्वंशे राजा रघुः स्मृतः ॥ १,१४३.२ ॥

रघोरजस्ततो जातो राजा दशरथो बली ।
तस्य पुत्रास्तु चत्वारो महाबलपराक्रमाः ॥ १,१४३.३ ॥

कौसल्यायाम भूद्रामो भरतः कैकयीसुतः ।
सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायां बभूवतुः ॥ १,१४३.४ ॥

रामो भक्तः पितुर्मातुर्विश्वामित्रादवाप्तवान् ।
अस्त्रग्रामं ततो यक्षीं ताटकां प्रजघान ह ॥ १,१४३.५ ॥

विशावमित्रस्य यज्ञे वै सुबाहुं न्यवधीद्बली ।
जनकस्य क्रतुं गत्वा उपयेमेऽथ जानकीम् ॥ १,१४३.६ ॥

ऊर्मिलां लक्ष्मणो वीरो भरतो माण्डवीं सुताम् ।
शत्रुघ्नो वै कीर्तिमतीं कुशध्वजसुते उभे ॥ १,१४३.७ ॥

पित्रादिभिरयोध्यायां गत्वा रामादयः स्थिताः ।
युधाजितं मातुलञ्च शत्रुघ्नभरतौ गतौ ॥ १,१४३.८ ॥

गतयोर्नृपवर्योऽसौ राज्यं दातुं समुद्यतः ।
स रामाय तत्पुत्राय कैकेय्या प्रार्थितस्तदा ॥ १,१४३.९ ॥

चतुर्दशसमावासो वनेरामस्य वाञ्छितः ।
रामः पितृहितार्थञ्च लक्ष्मणेन च सीतया ॥ १,१४३.१० ॥

राज्यञ्च तृणवत्त्यक्त्वा शृङ्गवेरपुरं गतः ।
रथं त्यक्त्वा प्रयागञ्च चित्रकूटगिरिं गतः ॥ १,१४३.११ ॥

रामस्य तु वियोगेन राजा स्वर्गं समाश्रितः ।
संस्कृत्य भरतश्चागाद्राममाह बलान्वितः ॥ १,१४३.१२ ॥

अयोध्यान्तु समागत्य राज्यं कुरु महामते ।
स नैच्छत्पादुके दत्त्वा राज्याय भरताय तु ॥ १,१४३.१३ ॥

विसर्जितोऽथ भरतो रामराज्यमपालयत् ।

नन्दिग्रामे स्थितो भक्तो ह्ययोध्यां नाविशद्व्रती ॥ १,१४३.१४ ॥

रामोऽपि चित्रकूटाच्च ह्यत्रेराश्रममाययौ ।
नत्वा सुतीक्ष्णं चागस्त्यं दण्डकारण्यमागतः ॥ १,१४३.१५ ॥

तत्र शूर्पणखा नाम राक्षसी चात्तुमागता ।
निकृत्य कर्णौ नासे च रामेणाथापवारिता ॥ १,१४३.१६ ॥

तत्प्रेरितः खरश्चागाद्दूषणस्त्रिशिरास्तथा ।
चतुर्दशसहस्रेण रक्षसान्तु बलेन च ॥ १,१४३.१७ ॥

रामोऽपि प्रेषयामास बाणैर्यमपुरञ्च तान् ।
राक्षस्या प्रेरितोऽभ्यागाद्रावणो हरणाय हि ॥ १,१४३.१८ ॥

मृगरूपं स मारीचं कृत्वाग्रेऽथ त्रिदण्डधृक् ।
सीतया प्रेरितो रामो मारीचं निजघान ह ॥ १,१४३.१९ ॥

म्रियमाणः स च प्राह हा सीते ! लक्ष्मणोति च ।
सीतोक्तो लक्ष्मणोऽथागाद्रामश्चानुददर्श तम् ॥ १,१४३.२० ॥

उवाच राक्षसी माया नूनं सीता हृतेति सः ।
रावणोऽन्तरमासाद्य ह्यङ्केनादाय जानकीम् ॥ १,१४३.२१ ॥

जटायुषं विनिर्भिद्य ययौ लङ्कां ततो बली ।
अशोकवृक्षच्छायायां रक्षितां तामधारयत् ॥ १,१४३.२२ ॥

आगत्य रामः सून्याञ्च पर्णशालां ददर्श ह ।
शोकं कृत्वाथ जानक्या मार्गणं कृतवान्प्रभुः ॥ १,१४३.२३ ॥

जटायुषञ्च संस्कृत्य तदुक्तो दक्षिणां दिशम् ।
गत्वा सख्यं ततश्चक्रे सुग्रीवेण च राघवः ॥ १,१४३.२४ ॥

सप्त तालान्विनिर्भिद्य शरेणानतपर्वणा ।
वालिनञ्च विनिर्भिद्य किष्किन्धायां हरीश्वरम् ॥ १,१४३.२५ ॥

सुग्रीवं कृतवान्राम ऋश्यमूके स्वयं स्थितः ।
सुग्रीवः प्रेषयामास वानरान्पर्वतोपमान् ॥ १,१४३.२६ ॥

सीताया मार्गणं कर्तुं पूर्वाद्याशासु सोत्सवान् ।
प्रतीचीमुत्तरां प्राचीं दिशं गत्वा समागताः ॥ १,१४३.२७ ॥

दक्षिणान्तु दिशं ये च मार्गयन्तोऽथ जानकीम् ।

वनानि पर्वतान्द्वीपान्नदीनां पुलिनानि च ॥ १,१४३.२८ ॥

जानकीन्ते ह्यपश्यन्तो मरणे कृतनिश्चयाः ।
सम्पातिवचनाज्ज्ञात्वा हनूमान्कपिकुञ्जरः ॥ १,१४३.२९ ॥

शतयोजनविस्तीर्णं पुप्लुवे मकरालयम् ।
अपश्यज्जानकीं तत्र ह्यशोकवनिकास्थिताम् ॥ १,१४३.३० ॥

भर्त्सितां राक्षसीभिश्च रावणेन च रक्षसा ।
भव भार्येति वदता चिन्तयन्तीञ्च राघवम् ॥ १,१४३.३१ ॥

अङ्गुलीयं कपिर्दत्त्वा सीतां कौशल्यमब्रवीत् ।
रामस्य तस्य दूतोऽहं शोकं मा कुरु मैथिलि ॥ १,१४३.३२ ॥

स्वाभिज्ञानञ्च मे देहि येन रामः स्मरिष्यति ।
तच्छ्रुत्वा प्रददौ सीता वेणीरत्नं हनूमते ॥ १,१४३.३३ ॥

यथा रामो नयेच्छीघ्रं तथा वाच्यं त्वया कपे ।
तथेत्युक्त्वा तु हनुमान्वनं दिव्यं बभञ्ज ह ॥ १,१४३.३४ ॥

हत्वाक्षं राक्षसांश्चान्यान्बन्धनं स्वयमागतः ।
सर्वैरिन्द्रजितो बाणैर्दृष्ट्वा रावणमब्रवीत् ॥ १,१४३.३५ ॥

रामदूतोऽस्मि हनुमान्देहि रामाय मैथिलीम् ।
एतच्छ्रुत्वा प्रकुपितो दीपयामास पुच्छकम् ॥ १,१४३.३६ ॥

कपिर्ज्वलितलाङ्गूलो लङ्कां देहेऽ महाबलः ।
दग्ध्वा लङ्कां समायातो रामपार्श्वं स वानरः ॥ १,१४३.३७ ॥

जग्ध्वा फलं मधुवने दृष्टा सीतत्यवेदयत् ।
वेणीरत्नञ्च रामाय रामो लङ्कापुरीं ययौ ॥ १,१४३.३८ ॥

ससुग्रीवः स हनुमान्सांगदश्च सलक्ष्मणः ।
विभीषणोऽपि सम्प्राप्तः शरणं राघवं प्रति ॥ १,१४३.३९ ॥

लङ्कैश्वर्येष्वभ्यषिञ्चद्रामस्तं रावणानुजम् ।
रामो नलेन सेतुञ्च कृत्वाब्धौ चोत्ततार तम् ॥ १,१४३.४० ॥

सुवेलावस्थितश्चैव पुरीं लङ्कां ददर्शह ।
अथ ते वानरा वीरा नीलाङ्गदनलादयः ॥ १,१४३.४१ ॥

धूम्रधूम्राक्षवीरेन्द्रा जाम्बवत्प्रमुखास्तदा ।

मैन्दद्विविदमुख्यास्ते पुरीं लङ्कां बभञ्जिरे ॥ १,१४३.४२ ॥

राक्षसांश्च महाकायान्कालाञ्जनचयोपमान् ।
रामः सलक्ष्मणो हत्वा सकपिः सर्वराक्षसान् ॥ १,१४३.४३ ॥

विद्युज्जिह्वञ्च धूम्राक्षं देवान्तकनरान्त कौ ।
महोदरमहापार्श्वावतिकायं महाबलम् ॥ १,१४३.४४ ॥

कुम्भं निकुम्भं मत्तञ्च मकराक्षं ह्यकम्पनम् ।
प्रहस्तं वीरमुन्मत्तं कुम्भकर्णं महाबलम् ॥ १,१४३.४५ ॥

रावणिं लक्ष्मणोऽच्छिन्त ह्यस्त्राद्यै राघवो बली ।
निकृत्य बाहुचक्राणि रावणन्तु न्यपातयन् ॥ १,१४३.४६ ॥

सीतां शुद्धां गृहीत्वाथ विमाने पुष्पके स्थितः ।
सवानरः समायातो ह्ययोध्यां प्रवरां पुरीम् ॥ १,१४३.४७ ॥

तत्र राज्यं चकाराथ पुत्त्रवत्पालयन्प्रजाः ।
दशाश्वमेधानाहृत्य गयाशिरसि पातनम् ॥ १,१४३.४८ ॥

पिण्डानां विधिवत्कृत्वा दत्त्वा दानानि राघवः ।
पुत्रौ कुशलवौ दृष्ट्वा तौ च राज्येऽभ्यषेचयत् ॥ १,१४३.४९ ॥

एकादशसहस्राणि रामो राज्यमकारयत् ।
शत्रुघ्नो लवणं जघ्ने शैलूषं भतस्ततः ॥ १,१४३.५० ॥

अगस्त्यादीन्मुनीन्नत्वा श्रुत्वोत्पत्तिञ्च रक्षसाम् ।
स्वर्गं गतो जनैः सार्धमयोध्यास्थैः कृतार्थकः ॥ १,१४३.५१ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे रामायणवर्णनं नाम त्रिचत्वारिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १४४
ब्रह्मोवाच ।
हरिवंशं प्रवक्ष्यामि कृष्णमाहात्म्यमुत्तमम् ।
वसुदेवात्तु देवक्यां वासुदेवो बलोऽभवत् ॥ १,१४४.१ ॥

धर्मादिरक्षणार्थाय ह्यधर्मादिविनष्टये ।
कृष्णः पीत्वा स्तनौ गाढं पूतनामनयत्क्षयम् ॥ १,१४४.२ ॥

शकटः परिवृत्तोऽथ भग्नौ च यमलार्जुनौ ।
दमितः कालियो नागो धेनुको विनिपातितः ॥ १,१४४.३ ॥

धृतो गोवर्धनः शैल इन्द्रेण परिपूजितः ।
भारावतरणं चक्रे प्रतिज्ञां कृतवान्हरिः ॥ १,१४४.४ ॥

रक्षणायार्जुनादेश्च ह्यरिष्टादिर्निपातितः ।
केशी विनिहतो दैत्यो गोपाद्याः परितोषिताः ॥ १,१४४.५ ॥

चाणूरो मुष्टिको मल्लः कंसो मञ्चान्निपातितः ।
रुक्मिणीसत्यभामाद्याः ह्यष्टौ पत्न्यो हरेः पराः ॥ १,१४४.६ ॥

षोढश स्त्रीसहस्राणि ह्यन्यान्यास महात्मनः ।
तासां पुत्राश्च पौत्राद्याः शतशोऽथ सहस्रशः ॥ १,१४४.७ ॥

रुक्मिण्याञ्चैव प्रद्युम्नो न्यवधीच्छंबरञ्च यः ।
तस्य पुत्रोऽनिरुद्धोऽभूदुषाबाणसुतापतिः ॥ १,१४४.८ ॥

हरिशकरयोर्यत्र महायुद्धं बभूव ह ।
बाणबाहुसहस्रञ्च च्छिन्नं बाहुद्वयं ह्यभूत् ॥ १,१४४.९ ॥

नरको निहतो येन पारिजातं जहार यः ।
बलश्च शिसुपालश्च हतश्च द्विविदः कपिः ॥ १,१४४.१० ॥

अनिरुद्धादभूद्वज्रः स च राजा गते हरौ ।
सन्दीपनिं गुरुञ्चक्रे सपुत्रञ्च चकार सः ।
मथुरायां चोग्रसेनं पालनं च दिवौकसाम् ॥ १,१४४.११ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे हरिवंशवर्णनं नाम चतुश्चात्वारिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १४५
ब्रह्मोवाच ।
भारतं संप्रवक्ष्यामि भारावतरणं भुवः ।
चक्रे कृष्णो युध्यमानः पाण्डवादिनिमित्ततः ॥ १,१४५.१ ॥

विष्णुनाभ्यब्जतो ब्रह्मा ब्रह्मपुत्रोऽत्रिरत्रितः ।
सोमस्ततो बुधस्तस्मादिलायां च पुरूरवाः ॥ १,१४५.२ ॥

तस्यायुस्तत्र वंशेऽभूद्ययातिर्भरतः कुरुः ।
शन्तनुस्तस्य वंशेऽभूद्गङ्गायां शन्तनोः सुतः ॥ १,१४५.३ ॥

भीष्मः सर्वगुणैयुक्तो ब्रह्मवैवर्तपारगः ॥ १,१४५.४ ॥

शन्तनोः सत्यवत्यां च द्वौ पुत्रौ संबभूवतुः ।
चित्राङ्गदन्तु गन्धर्वः पुत्रं चित्राङ्गदोऽवधीत् ॥ १,१४५.५ ॥

अन्यो विचित्रवीर्योऽभूत्काशीराजसुतापतिः ।
विचित्रवीर्ये स्वर्याते व्यासात्तत्क्षेत्रतोऽभवत् ॥ १,१४५.६ ॥

धृतराष्टोऽम्बिकापुत्रः पाण्डुराम्बालिकासुतः ।
भुजिष्यायान्तु विदुरो गान्धार्यां धृतराष्ट्रतः ॥ १,१४५.७ ॥

दुर्योधनप्रधानास्तु शतसंख्या महाबलाः ।
पाण्डोः कुन्त्याञ्च माद्यां च पञ्च पुत्राः प्रजज्ञिरे ॥ १,१४५.८ ॥

युधिष्ठिरो भीमसेनो ह्यर्जुनो नकुलस्तथा ।
सहदेवश्च पञ्चैते महाबलपराक्रमाः ॥ १,१४५.९ ॥

कुरुपाण्डवयोर्वैरं दैवयो गाद्बभूव ह ।
दुर्योधनेनाधीरेण पाण्डवाः समुपद्रुताः ॥ १,१४५.१० ॥

दग्धा जतुगृहे वीरास्ते मुक्ताः स्वधियामलाः ॥ १,१४५.११ ॥

ततस्तदेकचक्रायां ब्राह्मणस्य निवेशने ।
विविशुस्ते महात्मानो निहत्य बकराक्षसम् ॥ १,१४५.१२ ॥

ततः पाञ्चालविषयेद्रौपद्यास्ते स्वयंवरम् ।
विज्ञाय वीर्यशुल्कान्तां पाण्डवा उपयेमिरे ॥ १,१४५.१३ ॥

द्रोणभीष्मानुमत्या तु धृतराष्ट्रः समानयत् ।
अर्द्वराज्यं ततः प्राप्ता इन्द्रप्रस्थे पुरोत्तमे ॥ १,१४५.१४ ॥

राजसूयन्ततश्चक्रुः सभां कृत्वा यतव्रताः ।
अर्जुनो द्वारवत्यान्तु सुभद्रां प्राप्तवान्प्रियाम् ।
वासुदेवस्य भगिनीमनुमत्या मुरद्विषः ॥ १,१४५.१५ ॥

नन्दिघोषं रथं दिव्यमग्नेर्धनुरनुत्तमम् ।
गाण्डीवं नाम तद्दिव्यं त्रिषु लोकेषु विश्रुतम् ।
अक्षयान्सायकांश्चैव तथाभेद्यञ्च दंशनम् ॥ १,१४५.१६ ॥

स तेन धनुषा वीरः पाण्डवो जातवेदसम् ।
कृष्णद्वितीयो बीभत्सुरतर्पयत वीर्यवान् ॥ १,१४५.१७ ॥

नृपान्दिग्विजये जित्वा रत्नान्यादाय वै ददौ ।
युधिष्ठिराय महते भ्रात्रे नीतिविदे मुदा ॥ १,१४५.१८ ॥

युधिष्ठिरोऽपि धर्मात्मा भ्रातृभिः परिवारितः ।
जितो दुर्योधनेनैव मायाद्यूतेन पापिना ।
कर्णदुः शासनमते स्थितेन शकुनेर्मते ॥ १,१४५.१९ ॥

अथ द्वादश वर्षाणि वने तेपुर्महत्तपः ।
सधौम्या द्रौपदीषष्ठा मुनिवृन्दाभिसंवृताः ॥ १,१४५.२० ॥

ययुर्विराटनगरं गुप्तरूपेण संश्रिताः ।
वर्षमेकं महाप्राज्ञा गोग्रहात्तमपालयन् ॥ १,१४५.२१ ॥

तते याताः स्वकं राष्ट्रं प्रार्थयामासुरादृताः ।
पञ्चग्रामानर्धराज्याद्वीरा दुर्योधनं नृपम् ॥ १,१४५.२२ ॥

नाप्तवन्तः कुरुक्षेत्रे युद्धञ्चक्रुर्बलान्विताः ।
अक्षौहिणीभिर्दिव्याभिः सप्तभिः परिवारिताः ॥ १,१४५.२३ ॥

एकादशभिरुद्युक्ता युक्ता दुर्योधनादयः ।
आसीद्युद्धं संकुलं च देवासुररणोपमम् ॥ १,१४५.२४ ॥

भीष्मः सेनापतिरभूदादौ दौर्योधने बले ।
पाण्डवानां शिखण्डी च तयोर्युद्धं बभूव ह ।
शस्त्राशस्त्रि महाघोरं धसरात्रं शराशरि ॥ १,१४५.२५ ॥

शिखण्ड्यर्जुनबाणैश्च भीष्मः शरशतैश्चितः ।
उत्तरायणमावीक्ष्य ध्यात्वा देवं गदाधरम् ॥ १,१४५.२६ ॥

उक्त्वा धर्मान्बहुविधांस्तर्पयित्वा पितृन्बहून् ।
आनन्दे तु पदे लीनो विमले मुक्तकिल्बिषे ॥ १,१४५.२७ ॥

ततो द्रोणो ययौ योद्धुं धृष्टद्युम्नेन बीर्यवान् ।
दिनानि पञ्च तद्युद्धमासीत्परमदारुणम् ॥ १,१४५.२८ ॥

यत्र ते पृथिवीपाला हताः पार्थेन संगरे ।
शोकसागरमासाद्य द्रोणोऽपि स्वर्गमाप्तवान् ॥ १,१४५.२९ ॥

ततः कर्णा ययौ योद्धुमर्जुनेन मिहात्मना ।
दिनद्वयं महायुद्धं कृत्वा पार्थास्त्रसागरे ।
निमग्नः सूर्यलोकन्तु ततः प्राप स वीर्यवान् ॥ १,१४५.३० ॥

ततः शल्यो ययौ योद्धुं धर्मराजेन धीमता ।
दिनार्धेन हतः शल्यो बाणैर्ज्वलनसन्निभैः ॥ १,१४५.३१ ॥

दुर्योधनोऽथ वेगेन गदामादाय वीर्यवान् ।
अभ्यधावत वै भीभं कालान्तकयमोपमः ॥ १,१४५.३२ ॥

अथ भीमेन वीरेण गदया विनिपातितः ।
अश्वत्थामा गतो द्रौणिः सुप्तसैन्यं ततो निशि ॥ १,१४५.३३ ॥

जघान बाहुवीर्येण पितुर्वधमनुस्मरन् ।
धृष्टद्युम्नं जघानाथ द्रौपदेयांश्च वीर्यवान् ॥ १,१४५.३४ ॥

द्रौपद्यां रुद्यमानायामश्वत्थाम्नः शिरोमणिम् ।
ऐषिकास्त्रेण तं जित्वा जग्राहार्जुन उत्तमम् ॥ १,१४५.३५ ॥

युधिष्ठिरः समाश्वास्य स्त्रीजनं शोकसंकुलम् ।
स्नात्वा सन्तर्प्य देवांश्च पितॄनथ पितामहान् ॥ १,१४५.३६ ॥

आश्वासितोऽथ भीष्मेण राज्यञ्चैवाकरोन्महत् ।
विष्णुमीजेऽश्वमेधेन विधिवद्दक्षिणावता ॥ १,१४५.३७ ॥

राज्ये परीक्षितं स्थाप्य यादवानां विनाशनम् ।
श्रुत्वा तु मौसले राजा जप्त्वा नामसहस्रकम् ॥ १,१४५.३८ ॥

विष्णोः स्वर्गं जगामाथ भीमाद्यैर्भ्रातृभिर्युतः ।
वासुदेवः पुनर्बुद्धसंमोहाय सुरद्विषाम् ॥ १,१४५.३९ ॥

कल्किर्विष्णुश्च भविता शंभलग्रामके पुनः ।
अश्वारूढोऽखिलांल्लोकांस्तदा भस्मीकरिष्यति ॥ १,१४५.४० ॥

देवादीनां रक्षणाय ह्यधर्महारणाय च ।

दुष्टानाञ्च वधार्थाय ह्यवतारं करोति च ॥ १,१४५.४१ ॥

यथा धन्वन्तरिर्वंशे जातः क्षीरोदमन्थने ।
देवादीनां जीवनाय ह्यायुर्वेदमुवाच ह ॥ १,१४५.४२ ॥

विश्वामित्रसुतायैव शुश्रुताय महात्मने ।
भारतांश्चावतारांश्च श्रुत्वा स्वर्गं व्रजेन्नरः ॥ १,१४५.४३ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भारतादिवर्णनं नाम पञ्चचत्वारिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १४६
धन्वन्तरिरुवाच ।
सर्वरोगनिदानञ्च वक्ष्ये सुश्रुत तत्त्वतः ।
आत्रेयाद्यैर्मुनिवरैर्यथा पूर्वमुदीरितम् ॥ १,१४६.१ ॥

रोगः पाप्मा ज्वरो व्याधिर्विकारो दुष्ट आमयः ।
यक्ष्मातङ्कगदा बाधाः शब्दाः पर्यायवाचिनः ॥ १,१४६.२ ॥

निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ।
संप्राप्तिश्चैति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ १,१४६.३ ॥

निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ।
निदानमाहुः पर्यायैः प्राग्रूपं येन लक्ष्यते ॥ १,१४६.४ ॥

उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः ।
लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ॥ १,१४६.५ ॥

तदेव व्यक्ततां यातं रूपमित्यभिधीयते ।
संस्थानां व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ॥ १,१४६.६ ॥

हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् ।
औषधान्नविहाराणामुपयोगं सुखावहम् ॥ १,१४६.७ ॥

विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ।
विपरीतोऽनुपशयो व्याध्यसात्म्येतिसंज्ञितः ॥ १,१४६.८ ॥

यथा दुष्टेन दोषेण यथा चानुविसर्पता ।
निर्वृत्तिरामयस्यासौ संप्राप्तिरभिधीयते ॥ १,१४६.९ ॥

संख्याविकल्पप्राधान्यबलकालविशेषतः ।
सा भिद्यते यथात्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ॥ १,१४६.१० ॥

दोषाणां समवेतानां विकल्पोशांशकल्पना ।
स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ॥ १,१४६.११ ॥

हेत्वादिकात्स्न्यावयवैर्बलाबलविशेषणम् ।
नक्तन्दिनार्धभुक्तांशैर्व्याधिकालो यथामलम् ॥ १,१४६.१२ ॥

इति प्रोक्तो निदानार्थः स व्यासेनोपदेक्ष्यते ।
सर्वेषामेव रोगाणां निदानं कुपिता मलाः ॥ १,१४६.१३ ॥

तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ।

अहितस्त्रिविधो योगस्त्रयाणां प्रागुदाहृतः ॥ १,१४६.१४ ॥

तिक्तोषणकषायाम्लरूक्षाप्रमितयोजनैः ।
धावनोदीरणनिशाजागरात्युच्चभाषणैः ॥ १,१४६.१५ ॥

क्रियाभियोगबीशोकचिन्ताव्यायाममैथुनैः ।
ग्रीष्माहोरात्रभुक्त्यन्ते प्रकुप्यति समीरणः ॥ १,१४६.१६ ॥

पित्तं कट्वालतीक्ष्णोष्णकटुक्रोधविदाहिभिः ।
शरन्मध्याह्नरात्र्यर्धविदाहसमयेषु च ॥ १,१४६.१७ ॥

स्वाद्वम्ललवणस्निग्धगुर्वभिष्यन्दिशीतलैः ।
आस्यास्वप्नसुखाजीर्णदिवास्वप्नादिबृंहणैः ॥ १,१४६.१८ ॥

प्रिच्छर्दनाद्ययोगेन भुक्तान्नस्याप्यजीर्णके ।
पूर्वाह्ने पूर्वरात्रे च श्लेष्मा वक्ष्यामि सङ्करान् ॥ १,१४६.१९ ॥

मिश्रीभावात्समस्तानां सन्निपातस्तथा पुनः ।
संकीर्णाजीर्णविषमविरुद्धाद्यशनादिभिः ॥ १,१४६.२० ॥

व्यापन्नमद्यपानीयशुष्कशाकाममूलकैः ।
पिण्याकमृत्यवसरपूतिशुष्ककृशमिषैः ॥ १,१४६.२१ ॥

दोषत्रयकरैस्तैस्तैस्तथान्नपरिवर्ततः ।
धातोर्दुष्टात्पुरो वाताद्द्विग्रहावेशविप्लवात् ॥ १,१४६.२२ ॥

दुष्टामान्नैरतिश्लैष्मग्रहैर्जन्मर्क्षपीडनात् ।
मिथ्यायोगाच्च विविधात्पापानाञ्च निषेवणात् ।
स्त्रीणां प्रसववैषम्यात्तथा मिथ्योपचारतः ॥ १,१४६.२३ ॥

प्रतिरोगमिति क्रुद्धा रोगविध्यनुगामिनः ।
रसायनं प्रपद्याशु दोषा देहे विकुर्वते ॥ १,१४६.२४ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाक्ये आचारकाण्डे सर्वरोगनिदानं नाम षट्चत्वारिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १४७
धन्वन्तरिरुवाच ।
वक्ष्ये ज्वरनिदानं हि सर्वज्वरविबुद्धये ।
ज्वरो रोगपतिः पाप्मा मृत्युराजोऽशनोऽन्तकः ।
क्रुद्धदक्षाध्वरध्वंसिरुद्रोर्ध्वनयनोद्भवः ॥ १,१४७.१ ॥

तत्सन्तापो मोहमयः सन्तापात्मापचारजः ।
विविधैर्नामभिः क्रूरो नानायोनिषु वर्तते ॥ १,१४७.२ ॥

पाकलो गजेष्वभितापो वाजिष्वलर्कः कुक्कुरेषु ।
इन्द्रमदो जलदेष्वप्सु नीलिका ज्योतिरोषधीषु भूम्यामूषरो नाम ॥ १,१४७.३ ॥

हृल्लासश्छर्दनं कासः स्तंभः शैत्य त्वगादिषु ।
अङ्गेषु च समुद्भूताः पिडकाश्च कफोद्भवे ॥ १,१४७.४ ॥

काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ।
निदानोक्तोनुपशयो विपरीतोपशायिता ॥ १,१४७.५ ॥

अरुचिश्चाविपाकश्च स्तंभमालस्यमेव च ।
हृद्दाहश्च विपाकश्च तन्द्रा चालस्यमेव च ।
वस्तिर्विमर्दावनया दोषाणामप्रवर्तनम् ॥ १,१४७.६ ॥

लालाप्रसेको हृल्लासः क्षुन्नाशो रसदं मुखम् ।
स्वच्छमुष्णगुरुत्वञ्च गात्राणां बहुमूत्रता ।
न विजीर्णं न च म्लानिर्ज्वरस्यामस्य लक्षणम् ॥ १,१४७.७ ॥

क्षुत्क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् ।
दोषप्रवृत्तिरष्टाहान्निरामज्वरलक्षणम् ॥ १,१४७.८ ॥

यथा स्वलिङ्गं संसर्गे ज्वरसंसर्गजोऽपि वा ।
शिरोर्तिमूर्छावमिदेहदाहकण्ठास्यशोषारुचिपर्वभेदाः ।
उन्निद्रता संभ्रमरोमहर्षा जृंभातिवाक्त्वं पवनात्सपित्तात् ॥ १,१४७.९ ॥

तापहान्यरुचिपर्वशिरोरुक्ष्ठीवनश्वसनकासविवर्णाः ।
शीतजाड्यतिमिरभ्रमितन्द्राश्लेष्मवातजनितज्वरलिङ्गम् ॥ १,१४७.१० ॥

शीतस्तम्भस्वेददाहाव्यवस्थास्तृष्णा कासः श्लेष्मपित्तप्रवृत्तिः ।
मोहस्तन्द्रालिप्ततिक्तास्यता च ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य ॥ १,१४७.११ ॥

सर्वजो लक्षणैः सर्वैर्दाहोऽत्र च मुहुर्मुहुः ।
तदुच्छीतं महा निद्रा दिवा जागरणं निशि ॥ १,१४७.१२ ॥

सदा वा नैव वा निद्रा महास्वेदो हि नैव वा ।
गीतनर्तनहास्यादिः प्रकृतेहाप्रवर्तनम् ॥ १,१४७.१३ ॥

साश्रुणी कलुषे रक्ते भुग्ने लुलितपक्ष्मणी ।
अक्षिणी पिण्डिकापार्श्वशिरः पर्वास्थिरुग्भ्रमः ॥ १,१४७.१४ ॥

सस्वनौ सरुजौ कर्णौ महाशीतौ हि नैव वा ।
परिदग्धा खरा जिह्वा गुरुस्त्रस्ताङ्गसन्धिता ॥ १,१४७.१५ ॥

ष्ठीवनं रक्तपित्तस्य लोठनं शिरसोऽतितृट् ।
कोष्ठानां श्यावरक्तानां मण्डलानां च दर्शनम् ॥ १,१४७.१६ ॥

हृद्व्यथा मलंससर्गः प्रवृत्तिर्वाल्पशोऽति वा ।
स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापितः ॥ १,१४७.१७ ॥

दोषपाकश्चिरं तन्द्रा प्रततं कण्ठकूजनम् ।
सन्निपातमभिन्यासं तं ब्रूयाच्च हतौजसम् ॥ १,१४७.१८ ॥

वायुना कण्ठरुद्धेन पित्तमन्तः सुपीडितम् ।
व्यवायित्वाच्च सौख्याच्च बहिर्मर्गं प्रपद्यते ।
तेन हारिद्रनेत्रत्वं सन्निपातोद्भवेज्वरे ॥ १,१४७.१९ ॥

दोषे विवृद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः ।
सान्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥ १,१४७.२० ॥

अन्यत्र सन्निपातोत्थं यत्र पित्तं पृथक्स्थितम् ।
त्वचि कोष्ठे च वा दाहं विदधाति पुरोऽनु वा ॥ १,१४७.२१ ॥

तद्वद्वातकफे शीतं दाहादिर्दुस्तरस्तयोः ।
शीतादौ तत्र पित्तेन कफे स्यान्दितशोषिते ॥ १,१४७.२२ ॥

पित्ते शान्तेऽथ वै मूर्छा मदस्तृष्णा च जायते ।
दाहादौ पुनरन्तेषु तन्द्रालस्ये वमिः क्रमात् ॥ १,१४७.२३ ॥

आगन्तुरभिगाताभिषङ्गशापाभिचारतः ।
चतुर्धा तु कृतः स्वेदो दाहाद्यैरभिघातजः ॥ १,१४७.२४ ॥

श्रमाच्च तस्मिन्पवनः प्रायो रक्तं प्रदूषयन् ।
सव्यथाशोकवैवर्ण्यं सरुजं कुरुते ज्वरम् ॥ १,१४७.२५ ॥

ग्रहावेशौषधिविषक्रोधभीशोककामजः ॥ १,१४७.२६ ॥

अभिषङ्गग्रहोऽप्यस्मिन्नकस्माद्वासरोदने ।
ओषधीगन्धजे मूर्छा शिरोरुग्वमथुः क्षयः ॥ १,१४७.२७ ॥

विषान्मूर्छातिसारश्च श्यावता दाहकृद्भ्रमः ।
क्रोधात्कम्पः शिरोरुक्च प्रलापो भयशोकजे ॥ १,१४७.२८ ॥

कामाद्भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयाः ।
ग्रहादौ सन्निपातस्य रूपादौ मरुतस्तयोः ॥ १,१४७.२९ ॥

कोपात्कोपेऽपि पित्तस्य यौ तु शापाभिचारजौ ।
सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ ॥ १,१४७.३० ॥

तन्त्रा भिचारिकैर्मन्त्रैर्दूयमानञ्च तप्यते ।
पूर्वञ्चैतस्ततो देहस्ततो विस्फोटदिग्भ्रमैः ॥ १,१४७.३१ ॥

सदाहमूर्छाग्रस्तस्य प्रत्यहं वर्धते ज्वरः ।
इति ज्वरोऽष्टधा दृष्टः समासाद्द्विविधस्तु सः ॥ १,१४७.३२ ॥

शारीरो मानसः सौम्यस्तीक्ष्णोंन्तर्बहिराश्रयः ।
प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामकः ॥ १,१४७.३३ ॥

पूर्वं शरिरे शरीरे तापो मनसि मानसे ।
पवनैर्योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् ॥ १,१४७.३४ ॥

दाहः पित्तयुते मिश्रं मिश्रेऽन्तः संश्रये पुनः ।
ज्वरेऽधिकं विकाराः स्युरन्तः क्षोभो मलग्रहः ॥ १,१४७.३५ ॥

बहिरेव बहिर्वेगे तापोऽपि च स साधितः ।
वर्षाशरद्वसन्तेषु वाताद्यैः प्रकृतः क्रमात् ॥ १,१४७.३६ ॥

वैकृतोऽन्यः स दुः साध्यः प्रायश्च प्राकृतोऽनिलात् ।
वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितं ज्वरम् ॥ १,१४७.३७ ॥

कुर्याच्च पित्तं शरदि तस्य चानुचरः कफः ।
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ॥ १,१४७.३८ ॥

कफो वसन्ते तमपि वातपित्तं भवेदनु ।
बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ॥ १,१४७.३९ ॥

सर्वथा विकृतिज्ञाने प्रागसाध्य उदाहृतः ।
ज्वरोपद्रवतीक्ष्णत्वं मन्दाग्निर्बहुमूत्रता ॥ १,१४७.४० ॥

न प्रवृत्तिर्न विजीर्णा न क्षुत्सामज्वराकृतिः ।
ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ॥ १,१४७.४१ ॥

मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ।
जीर्णतामविपर्यासात्सप्तरात्रं च लङ्घनम् ॥ १,१४७.४२ ॥

ज्वरः पञ्चविधः प्रोक्तो मलकालबलाबलात् ।
प्रायशः सन्निपातेन भूयसामुपदिश्यते ॥ १,१४७.४३ ॥

सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ।
धातुमूत्रशकृद्वाहिस्नोत सां व्यापिनो मलाः ॥ १,१४७.४४ ॥

तापयन्तस्तनुं सर्वां तुल्यदृष्ट्यादिवर्धिताः ।
बलिनो गुरवस्तस्याविशेषेण रसाश्रिताः ॥ १,१४७.४५ ॥

सततं निष्प्रतिद्वन्द्वाज्वरं कुर्युः सुदुः सहम् ।
मलं ज्वरोष्णधातून्वा स शीघ्रं क्षपयेत्ततः ॥ १,१४७.४६ ॥

सर्वाकारं रसादीनां शुद्ध्यासुद्ध्यापि वा क्रमात् ।
वातपित्तकफैः सप्तद शद्वादशवासरात् ॥ १,१४७.४७ ॥

प्रायोऽनुयाति मर्यादां मोक्षाय च वधाय च ।
इत्यग्निवेशस्य मतं हारीतस्य पुनः स्मृतिः ॥ १,१४७.४८ ॥

द्विगुणा सप्तमी या च नवम्येकादशी तथा ।
एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥ १,१४७.४९ ॥

शुद्ध्याशुद्ध्या ज्वरः कालं दीर्घमप्यत्र वर्तते ।
कृशानां व्याधियुक्तानां मिथ्याहारादिसेविनाम् ॥ १,१४७.५० ॥

अल्पोऽपि दोषो दुष्ट्यादेर्लब्ध्वान्यतमतो बलम् ।
स प्रत्यनीको विषमं यस्माद्वृद्धिक्षयान्वितः ॥ १,१४७.५१ ॥

सविक्षेपो ज्वरं कुर्याद्विषमक्षयवृद्धिभाक् ।
दोषः प्रवर्तते तेषां स्वे काले ज्वरयन्बली ॥ १,१४७.५२ ॥

निवर्तते पुनश्चैव प्रत्यनीकबलाबलः ।
क्षीणदोषो ज्वरः सूक्ष्मो रसादिष्वेव लीयते ॥ १,१४७.५३ ॥

लीनत्वात्कार्श्यवैवर्ण्यजाड्यादीनां दधाति सः ।
आसन्नविकृतास्यत्वात्स्रोतसां रसवाहिनाम् ॥ १,१४७.५४ ॥

आशु सर्वस्य वपुषो व्याप्तिदोषो न जायते ।
सन्तः सततस्तेन विपरीतो विपर्ययात् ॥ १,१४७.५५ ॥

विषमो विषमारम्भः क्षपाकालेन सङ्गवान् ।
दोषो रक्ताश्रयः प्रायः करोति सन्ततं ज्वरम् ॥ १,१४७.५६ ॥

अहोरात्रस्य सन्धौ स्यात्सकृदन्येद्युराश्रितः ।
तस्मिन्मांसवहा नाडी मेदोनाडी तृतीयके ॥ १,१४७.५७ ॥

ग्राही पित्तानिलान्मूर्ध्नस्त्रिकस्य कफपित्ततः ।
सपृष्ठस्यानिलकफात्स चैकाहान्तरः स्मृतः ॥ १,१४७.५८ ॥

चतुर्थको मलैर्मेदोमज्जास्थ्यन्यतरे स्थितः ।
मज्जास्थ एव ह्यपरः प्रभावमनुदर्शयेत् ॥ १,१४७.५९ ॥

द्विधा कफोणिजङ्घाभ्यां स पूर्वं शिरसानिलात् ।
अस्थिमज्जोरुपगतश्चतुर्थकविपर्ययः ॥ १,१४७.६० ॥

त्रिधा त्र्यहं ज्वरयति दिनमेकन्तु मुञ्चति ।
बला बलेन दोषणामन्यचेष्टादिजन्मनाम् ॥ १,१४७.६१ ॥

पक्वानामविपर्यासात्सप्तरात्रञ्च लङ्घयेत् ।
ज्वरः स्यान्मनसस्तद्वत्कर्मणश्च तदातदा ॥ १,१४७.६२ ॥

गम्भीरधातुचारित्वात्सन्निपातेन सम्भवात् ।
तुल्योच्छ्रयाच्च दोषाणां दुश्चिकित्स्यश्चतुर्थकः ॥ १,१४७.६३ ॥

सूक्षामात्सूक्ष्मज्वरेष्वेषु दूरदूरतरेषु च ।
दोषो रक्तादिमार्गेषु शनैरल्पश्चिरेण यत् ॥ १,१४७.६४ ॥

याति देहञ्च नाशेषं सन्तापादीन्करोत्यतः ।
क्रमो यत्नेन विच्छिन्नः सतापो लक्ष्यते ज्वरः ॥ १,१४७.६५ ॥

विषमो विषमारम्भः क्षपाकालानुसारवान् ।
यथोत्तरं मन्दगतिर्मन्दशक्तिर्यथायथम् ॥ १,१४७.६६ ॥

कालेनाप्नोति सदृशान्स रसादींस्तथातथा ।
दोषो ज्वरयति क्रुद्धश्चिराच्चिरतरेण च ॥ १,१४७.६७ ॥

भूमौ स्थितं जलैः सिक्तं कालं नैव प्रतीक्षते ।
अङ्कुराय यथा बीजं दोषबीजं भवेत्तथा ॥ १,१४७.६८ ॥

वेगं कृत्वाविषं यद्वदाशये नयते बलम् ।
कुप्यत्याप्तबलं भूयः कालदोषविषन्तथा ॥ १,१४७.६९ ॥

एवं ज्वराः प्रवर्तन्ते विषमाः सततादयः ।
उत्क्लेशो गौरवं दैन्यं भङ्गोऽङ्गानां विजृम्भणम् ॥ १,१४७.७० ॥

अरोचको वमिः श्वासः सर्वस्मिन्नसगे ज्वरे ।
रक्तनिष्ठीवनं तृष्णा रूक्षोष्णं पीडकोद्यमः ॥ १,१४७.७१ ॥

दाहरागभ्रममदप्रलापो रक्तसंश्रिते ।
तृड्ग्लानिः स्पृष्टवर्चस्कमन्तर्दाहो भ्रमस्तमः ॥ १,१४७.७२ ॥

दौर्गन्ध्यं गात्रविक्षेपो मांसस्थे मेदसि स्थिते ।
स्वेदोऽतितृष्णा वमनं दौर्गन्ध्यं वा सहिष्णुता ॥ १,१४७.७३ ॥

प्रलापो ग्लानिररुचिरस्थिगे त्वस्थिभेदनम् ।
दोषप्रवृत्तिरुद्बोधः श्वासांगक्षेपकूजनम् ॥ १,१४७.७४ ॥

अन्तर्दाहो बहिः शैत्यं श्वासो हिक्का हि मज्जमे ।
तमसो दर्शनं मर्मच्छेदनं स्तब्धमेढ्रता ॥ १,१४७.७५ ॥

शुक्रप्रवृत्तौ मृत्युस्तु जायते शुक्रसंश्रये ।
उत्तरोत्तरदुः साध्याः पञ्चान्ये तु विपर्यये ॥ १,१४७.७६ ॥

प्रलिम्पन्निव गात्राणि श्लेष्मणा गौरवेण च ।
मन्दज्वरप्रलापस्तु सशीतः स्यात्प्रलेपकः ॥ १,१४७.७७ ॥

नित्यं मन्दज्वरो रूक्षः शीतकृच्छ्रेण गच्छति ।
स्तब्धाङ्गः श्लेष्मभूयिष्ठो भवेदङ्गबलाशकः ॥ १,१४७.७८ ॥

हरिद्राभेदवर्णाभस्तद्वल्लेपं प्रमेहति ।
स वै हारिद्रको नाम ज्वरभेदोऽन्तकः स्मृतः ॥ १,१४७.७९ ॥

कफवातौ समौ यत्र हीनपित्तस्य देहिनः ।
तीक्ष्णोऽथ वा दिवा मन्दो जायते रात्रिजो ज्वरः ॥ १,१४७.८० ॥

दिवाकरार्पितबले व्यायामाच्च विशोषिते ।
शरीरे नियतं वाताज्ज्वरः स्यात्पौर्वरात्रिकः ॥ १,१४७.८१ ॥

आमाशये यदात्मस्थे श्लेष्मपित्ते ह्यधः स्थिते ।
तदर्धं शीतलं देहे ह्यर्धं चोष्णं प्रजायते ॥ १,१४७.८२ ॥

काये पित्तं यदा न्यस्तं श्लेष्मा चान्ते व्यवस्थितः ।
उष्णत्वं तेन देहस्य शीतत्वं करपादयोः ॥ १,१४७.८३ ॥

रसरक्ताश्रयः साध्यो मांस मेदोगतश्च यः ।
अस्थिमज्जागतः कृच्छ्रस्तैस्तैः स्वाङ्गैर्हतप्रभः ॥ १,१४७.८४ ॥

विसंज्ञो ज्र्वेगार्तः सक्रोध इव वीक्षते ।
सदोषमुष्णञ्च सदा शकृन्मुञ्चति वेगवत् ॥ १,१४७.८५ ॥

देहो लघुर्व्यपगतक्लममोहतापः पाको मुखे करणसौष्ठवमव्यथत्वम् ।
स्वेदः क्षुवः प्रकृतियोगिमनोऽन्नलिप्सा कण्डूश्च मूर्ध्नि विगत्ज्वरलक्षणानि ॥ १,१४७.८६ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्वरनिदानादिकं नाम सप्तचत्वारिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १४८
धन्वन्तरिरुवाच ।
अथातो रक्तपित्तस्य निदानं प्रवदाम्यहम् ।
भृशोष्णतिक्तकट्वम्ललवणादिविदाहिभिः ॥ १,१४८.१ ॥

कोद्रवोद्दालकैश्चान्यैस्तदुक्तैरति सेवितैः ।
कुपितं पैत्तिकैः पित्तं द्रवं रक्तञ्च मूर्छति ॥ १,१४८.२ ॥

तैर्मिथस्तुल्यरूपत्वमागम्य व्याप्नुवंस्तनुम् ।
पित्तरक्तस्य विकृतेः संसर्गाद्दषणादपि ॥ १,१४८.३ ॥

गन्धवर्णानुवृत्तेषु रक्तेन व्यपदिश्यते ।
प्रभवत्यसृजः स्थानात्प्लीहतो यकृतश्च सः ॥ १,१४८.४ ॥

शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः ।
छर्धितश्छर्दिबै भत्स्यं कासः श्वासो भ्रमः क्लमः ॥ १,१४८.५ ॥

लोहितो न हितो मत्स्यगन्धास्यात्वञ्च विज्वरे ।
रक्तहारिद्रहरितवर्णता नयनादिषु ॥ १,१४८.६ ॥

नीललोहित पीतानां वर्णानामविवेचनम् ।
स्वप्ने इन्मादधर्मित्वं भवत्यस्मिन्भविष्यति ॥ १,१४८.७ ॥

उर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ।
कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्तते ॥ १,१४८.८ ॥

ऊर्ध्वं साध्यं कफाद्यस्मात्तद्विरेचनसाधितम् ।
बह्वौषधानि पित्तस्य विरेको हि वरौषधम् ॥ १,१४८.९ ॥

अनुबन्धी कफो यत्र तत्र तस्यापि शुद्धिकृत् ।
कषायाः स्वादवो यस्य विशुद्धौ श्लेष्मला हिताः ॥ १,१४८.१० ॥

कटुतिक्तकषाया वा ये निसर्गात्कफावहाः ।
अधो याप्यञ्च नायुष्मांस्तत्प्रच्छर्दनसाधकम् ॥ १,१४८.११ ॥

अल्पौषधञ्च पित्तस्य वमनं नावमौषधम् ।
अनुबन्धि बलं यस्य शान्तपित्तनरस्य च ॥ १,१४८.१२ ॥

कषायश्च हितस्तस्य मधुरा एव केवलम् ।
कफमारुतसंस्पृष्टमसाध्यमुपनामनम् ॥ १,१४८.१३ ॥

असह्यं प्रतिलोमत्वादसाध्यादौषधस्य च ।

न हि संशोधनं किञ्चिदस्य च प्रतिलोमिनः ॥ १,१४८.१४ ॥

शोधनं प्रतिलोमञ्च रक्तपित्तेऽभिसर्जितम् ।
एवमेवोपशमनं संशोधनमिहेष्यते ॥ १,१४८.१५ ॥

संसृष्टेषु हि दोषेषु सर्वथा छर्दनं हितम् ।
तत्र दोषोऽत्र गमनं शिवास्त्र इव लक्ष्यते ॥ १,१४८.१६ ॥

उपद्रवाश्च विकृतिं फलतस्तेषु साधितम् ॥ १,१४८.१७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे रक्तपित्तनिदानं नामाष्टचत्वारिंशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १४९
धन्वन्तरिरुवाच ।
आशुकारी यतः कासः स एवातः प्रवक्ष्यते ।
पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ॥ १,१४९.१ ॥

क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम् ।
तेषां भविष्यतां रूपं कण्ठे कण्डूररोचकः ॥ १,१४९.२ ॥

शुष्ककर्णास्यकण्ठत्वं तत्राधोविहितोऽनिलः ।
ऊर्ध्वं प्रवृत्तः प्राप्यो रस्तस्मिन्कण्ठे च संसृजन् ॥ १,१४९.३ ॥

शिरास्रोतांसि संपूर्य ततोऽङ्गान्युत्क्षिपन्ति च ।
क्षिपन्निवाक्षिणी क्लिष्टस्वरः पार्श्वे च पीडयन् ॥ १,१४९.४ ॥

प्रवर्तते सवक्रेण भिन्नकांस्योपमध्वनिः ।
हृत्पार्श्वेरुशिरः शूलमोहक्षोभस्वरक्षयान् ॥ १,१४९.५ ॥

करोति शुष्ककासञ्च महावेगरुजास्वनम् ।
सोंगहर्षो कफं शुष्कं कृच्छ्रान्मुक्त्वाल्पतां व्रजेत् ॥ १,१४९.६ ॥

पित्तात्पीताक्षिकत्वं च तिक्तास्यत्वं ज्वरो भ्रमः ।
पित्तासृग्वमनं तृष्णा वैस्वर्यं धूमको मदः ॥ १,१४९.७ ॥

प्रततं कासवेगे च ज्योतिषामिव दर्शनम् ।
कफादुरोऽल्परुङ्मूर्धि हृदयं स्तिमिते गुरु ॥ १,१४९.८ ॥

कण्ठे प्रलेपमदजं पीनसच्छर्द्यरोचकाः ।
रोमहर्षो धनस्निग्धंश्लेष्मणाञ्च प्रवर्तनम् ॥ १,१४९.९ ॥

युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम् ।
उपस्यन्तः क्षतो वायुः पित्तेनानुगतो बली ॥ १,१४९.१० ॥

कुपितः कुरुते कासं कफं तेन सशोणितम् ।
पीतं श्यावञ्च शुष्कञ्च ग्रथितं कुपितं बहु ॥ १,१४९.११ ॥

ष्ठीवेत्कण्ठेन रुजता विभिन्नेनैव चोरसा ।
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ॥ १,१४९.१२ ॥

दुः खस्पर्शेन शूलेन भेदपीडाहितापिना ।
पर्वभेदज्वरश्वासतृष्णावैस्वर्यकम्पवान् ॥ १,१४९.१३ ॥

पारावत इवोत्कूजन्पार्श्वशूली ततोऽस्य च ।

कफाद्यैर्वमनं पक्तिबलवर्णञ्च हीयते ॥ १,१४९.१४ ॥

क्षीणस्य सासृङ्मूत्रत्वं श्वासपृष्टकटिग्रहः ।
षायुप्रधानाः कुपिता धावतो राजयक्ष्मणः ॥ १,१४९.१५ ॥

कर्वन्ति यक्ष्मायतने कासं ष्ठीवत्कफं ततः ।
पूतिपूयोपमं वीतं मिश्रं हरितलोहितम् ॥ १,१४९.१६ ॥

सुप्यते तुद्यत इव हृदयं पचतीव च ।
अकस्मादुष्णशीतेच्छा बह्वाशित्वं बलक्षयः ॥ १,१४९.१७ ॥

स्निग्धप्रसन्नवक्रत्वं श्रीमद्दर्शननेत्रता ।
ततोऽस्य क्षयरूपाणि सर्वाण्याविर्भवन्ति च ॥ १,१४९.१८ ॥

इत्येष क्षयजः कास क्षीणानां देहनाशनः ।
याप्यौ वा बलिनां तद्वत्क्षतजोऽपि नवौ तु तौ ॥ १,१४९.१९ ॥

सिध्येतामपि सामर्थ्यात्साध्यादौ च पृथक्क्रमः ।
मिश्रा याप्याश्च ये सर्वे जरसः स्थविरस्य च ॥ १,१४९.२० ॥

कासश्वासक्षयच्छर्दिस्वरसादादयो गदाः ।
भवन्त्युपेक्षया यस्मात्तस्मात्तास्त्वरया जयेत् ॥ १,१४९.२१ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे कासनिदाना नामैकोनपञ्चाशदुत्तरशततमोध्यायः

श्रीगरुडमहापुराणम् १५०
धन्वन्तरिरुवाच ।
अथातः श्वासरोगस्य निदानं प्रवदाम्यहम् ।
कासवृद्ध्या भवेच्छ्वासः पूर्वैर्वा दोषकोपनैः ॥ १,१५०.१ ॥

आमातिसारवमथुविषपाण्डुज्वरैरपि ।
रजोधूमानिलैर्मर्मघातादपि हिमाम्बुना ॥ १,१५०.२ ॥

क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पञ्चमः ।
कफोपरुद्धगमनपवनो विष्वगास्थितः ॥ १,१५०.३ ॥

प्राणोदकान्नवाहीनि दुष्टस्रोतांसि दूषयन् ।
उरः स्थः कुरुते श्वासमामाशयसमुद्भवम् ॥ १,१५०.४ ॥

प्राग्रूपं तस्य हृत्पार्श्वशूलं प्राणविलोमता ।
आनाहः शङ्खभेदश्च तत्रायासोऽतिभोजनैः ॥ १,१५०.५ ॥

प्रेरितः प्रेरयन्क्षुद्रं स्वयं स समलं मरुत् ।
प्रतिलोमं शिरा गच्छेदुदीर्य पवनः कफम् ॥ १,१५०.६ ॥

परिगृह्यशिरोग्रीवमुरः पार्श्वे च पीडयन् ।
कासं घुर्घुरकं मोहमरुचिम्पीनसं भृशम् ॥ १,१५०.७ ॥

करोति तीव्रवेगञ्च श्वासं प्राणोपतापिनम् ।
प्रताम्येत्तस्य वेगेनष्ठीवनान्ते क्षणं सुखी ॥ १,१५०.८ ॥

कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्यमर्हति ।
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्तिमान् ॥ १,१५०.९ ॥

विशुष्कास्यो मुहुः श्वासः काङ्क्षत्युष्णं सवेपथुः ।
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्धते ॥ १,१५०.१० ॥

स याप्यस्तमकः साध्यो नरस्य बलिनो भवेत् ।
ज्वरमूर्छावतः सीतैर्न शाम्येत्प्रथमस्तु सः ॥ १,१५०.११ ॥

कासश्वसितवच्छीर्णमर्मच्छेदरुजार्दितः ।
सस्वेदमूर्छः सानाहो बस्तिदाहविबोधवान् ॥ १,१५०.१२ ॥

अधोदृष्टिः शुताक्षस्तु स्निह्यद्रक्तैकलोचनः ।
शुष्कास्यः प्रलपन्दीनो नष्टच्छायो विचेतनः ॥ १,१५०.१३ ॥

महातामहता दीनो नादेन श्वसिति क्रथन् ।

उद्धूयमानः संरब्धो मत्तर्षभ इवानिशम् ॥ १,१५०.१४ ॥

प्रनष्टज्ञानविज्ञानो विभ्रान्तनयनाननः ।
नेत्रे समाक्षिपन्बद्धमूत्रवर्चा विशीर्णवाक् ॥ १,१५०.१५ ॥

शुष्ककण्ठो मुहुश्चैव कर्णशङ्खाशिरोऽतिरुक् ।
यो दीर्घमुच्छ्वसित्यूर्ध्वं न च प्रत्याहरत्यधः ॥ १,१५०.१६ ॥

श्लेष्मावृतमुखश्रोत्रः क्रुद्धगन्धवहार्दितः ।
ऊर्ध्वं समीक्षते भ्रान्तमक्षिणी परितः क्षिपन् ॥ १,१५०.१७ ॥

मर्मसु च्छिद्यमानेषु परिदेवी निरुद्धवाक् ।
एते सिध्येयुरव्यक्ताः व्यक्ताः प्राणहरा ध्रुवम् ॥ १,१५०.१८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्वासनिदाना नाम पञ्चाशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १५१
धन्वन्तरिरुवाच ।
हिक्रारोगनिदानञ्च वक्ष्ये सुश्रुत ! तच्छृणु ।
श्वासैकहेतुः प्राग्रूपं संख्या प्रकृतिसंश्रया ॥ १,१५१.१ ॥

हिक्रा भक्ष्योद्भवा क्षुद्रा यमला महतीति च ।
गम्भीरा च मरुत्तत्र त्वरयायुक्तिसेवितैः ॥ १,१५१.२ ॥

रूक्षतीक्ष्णखराशान्तैरन्नपानैः प्रपीडितः ।
करोति हिक्रां श्वसनः मन्दशब्दां क्षुधानुगाम् ॥ १,१५१.३ ॥

समं सन्ध्यान्नपानेन या प्रयाति च सान्नजा ।
आयासात्पवनः क्रुद्धः क्षुद्रां हिक्रां प्रवर्तयेत् ॥ १,१५१.४ ॥

जत्रुमूलात्परिसृता मन्दवेगवन्ती हि सा ।
वृद्धिमायासतो याति भुक्तमात्रे च मार्दबम् ॥ १,१५१.५ ॥

चिरेण यमलैर्वेगैर्या हिक्रा संप्रवर्तते ।
परिणामान्मुखे वृद्धिं परिणामे च गच्छति ॥ १,१५१.६ ॥

कम्पयन्ती शिरो ग्रीवां यमलां तां विनिर्दिशेत् ।
प्रलापच्छर्द्यतीसारनेत्रविप्लुतजृम्भिता ॥ १,१५१.७ ॥

यमला वेगिनी हिक्रा परिणामवती च सा ।
ध्वस्तभ्रूशङ्खयुग्मस्य श्रुतिविप्लुतचक्षुषः ॥ १,१५१.८ ॥

स्तम्भयन्ती तनुं वाचं स्मृतिं संज्ञां च मुञ्चती ।
तुदन्ती मार्गमाणस्य कुर्वती मर्मघट्टनम् ॥ १,१५१.९ ॥

पृष्ठतो नमनं साष्यं महाहिक्रा प्रवर्तते ।
महाशूला महाशब्दा महावेगा महाबला ॥ १,१५१.१० ॥

पक्राशयाच्च नाभेर्वा पूर्ववत्सा प्रवर्तते ॥ १,१५१.११ ॥

तद्रूपा सा महत्कुर्याञ्जृम्भणां गप्रसारणम् ।
गम्भीरेण निदानेन गम्भीरा तु सुसाधयेत् ॥ १,१५१.१२ ॥

आद्ये द्वे वर्जयेदन्ये सर्वलिङ्गां च वेगिनीम् ।
सर्वस्य संचितामस्य स्थविरस्य व्यवायिनः ॥ १,१५१.१३ ॥

व्याधिभिः क्षीणदेहस्य भक्तच्छेदकृशस्य च ।
सर्वेऽपि रोगा नाशाय न त्वेवं शाघ्रकारिणः ॥ १,१५१.१४ ॥

हिक्राश्वासौ यथा तौ हि मृत्युकाले कृतालयौ ॥ १,१५१.१५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे हिक्रानिदाना नामैकपञ्चाशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १५२

धन्वन्तरिरुवाच ।

अथातो यक्ष्मरोगस्य निदानं प्रवदाम्यहम् ।
अनेकरोगानुगतो बहुरोगपुरोगमः ॥ १,१५२.१ ॥

राजयक्ष्मा क्षयः शोषो रोगराडिति कथ्यते ।
नक्षत्राणां द्विजानाञ्च राज्ञोऽभूद्यदयं पुरा ॥ १,१५२.२ ॥

यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ।
देहौषधक्षयकृतेः क्षयस्तत्सम्भवाच्च सः ॥ १,१५२.३ ॥

रसादिशोषणाच्छोषो रोगराडिति राजवत् ।
साहसं वेगसंरोधः शुक्रौजः स्नेहसंक्षयः ॥ १,१५२.४ ॥

अन्नपानविधित्यागश्चत्वारस्तस्यहेतवः ।
तैरुदीर्णोऽनिलः पित्तं व्यर्थं चोदीर्य सर्वतः ॥ १,१५२.५ ॥

शरिरसन्धिमाविश्य ताः शिराः प्रतिपीडयन् ।
मुखानि स्रोतसां रुद्ध्वा तथैवातिविसृज्य वा ॥ १,१५२.६ ॥

मध्यमूर्ध्वमधस्तिर्यगव्यथां सञ्जनयेद्धृदः ।
रूपं भविष्यतस्तस्य प्रतिश्यायो भृशं ज्वरः ॥ १,१५२.७ ॥

प्रसेको मुखमाधुर्यं मार्दवं वह्निदे हयोः ।
लौल्यभावोऽन्नपानादौ शुचावशुचिवीक्षणम् ॥ १,१५२.८ ॥

मक्षिकातृणकेशादिपातः प्रायोऽन्नपानयोः ।
हृल्लासश्छर्दिररुचिरस्नातेऽपि बलक्षयः ॥ १,१५२.९ ॥

पाण्योरुवक्षः पादास्यकुक्ष्यक्ष्णोरतिशुक्लता ।
बाह्वोः प्रतोदो जिह्वायाः काये बैभत्स्यदर्शनम् ॥ १,१५२.१० ॥

स्त्रीमद्यमांसप्रियता घृणिता मूर्धगुण्ठनम् ।
नखकेशास्थिवृद्धिश्च स्वप्ने चाभिभवो भवेत् ॥ १,१५२.११ ॥

पतनं कृकलासाहिकपिश्वापदपक्षिभिः ।
केशास्थितुषभस्मादितरौ समधिरोहणम् ॥ १,१५२.१२ ॥

शून्यानां ग्रामदेशानां दर्शनं शुष्यतोऽम्भसः ।
ज्योतिर्दिवि दवाग्नीनां ज्वलतां च महीरुहाम् ॥ १,१५२.१३ ॥

पीनसश्वासकासं च स्वरमूर्धरुजोऽरुचिः ।

ऊर्ध्वनिः श्वाससंशोषावधश्छर्दिश्च कोष्ठगे ॥ १,१५२.१४ ॥

स्थिते पार्श्वे च रुग्बोधे सन्धिस्थे भवति ज्वरः ।
रूपाण्यैकादशैतानि जायन्ते राजयक्ष्मणः ॥ १,१५२.१५ ॥

तेषामुपद्रवान्विद्यात्कण्ठध्वंसकरी रुजाः ।
जृम्भाङ्गमर्दनिष्ठीववह्निमान्द्यास्यपूतिता ॥ १,१५२.१६ ॥

तत्र वाताच्छिरः पार्श्वशूलनं सांगमर्दनम् ।
कण्ठरोधः स्वरभ्रंशः पित्तात्पादांसपाणिषु ॥ १,१५२.१७ ॥

दाहोऽतिसारोऽसृक्छर्दिर्मुखगन्धो ज्वरो मदः ।
कफादरोचकच्छर्दिकासा अर्ध्वां गगौरवम् ॥ १,१५२.१८ ॥

प्रसेकः पीनसः श्वासः स्वरभेदोऽल्पवह्निता ।
दोषैर्मन्दानलत्वेन शोथलेपकफोल्बणैः ॥ १,१५२.१९ ॥

स्रोतोमुखेषु रुद्धेषु धातुषु स्वल्पकेषु च ।
विदाहो मनसः स्थाने भवन्त्यन्ये ह्युपद्रवाः ॥ १,१५२.२० ॥

पच्यते कोष्ठ एवान्नमम्लयुक्तै रसैर्युतम् ।
प्रायोऽस्य क्षयभागानां नैवान्नं चाङ्गपुष्टये ॥ १,१५२.२१ ॥

रसो ह्यस्य न रक्ताय मांसाय कुरुते तु तत् ।
उपष्टब्धः समन्ताच्च केवलं वर्तते क्षयी ॥ १,१५२.२२ ॥

लिङ्गेष्वल्पेष्वतिक्षीणं व्याधौ षट्करणक्षयम् ।
वर्जयेत्साधयेदेव सर्वेष्वपि ततोऽन्यथा ॥ १,१५२.२३ ॥

दोषैर्व्यस्तैः समस्तैश्च क्षयात्सर्वस्य मेदसः ।
स्वरभेदो भवेत्तस्य क्षामो रूक्षश्चलः स्वरः ॥ १,१५२.२४ ॥

शुकवर्णाभकण्ठत्वं स्निग्धोष्णोपशमोऽनिलात् ।
पित्तात्तालुगले दाहः शोषो भवति सन्ततम् ॥ १,१५२.२५ ॥

लिम्पन्निव कफैः कण्ठं मुखं घुरघुरायते ।
स्वयं विरुद्धैः सर्वैस्तु सर्वालिङ्गैः क्षयो भवेत् ॥ १,१५२.२६ ॥

धूमायतीव चात्यर्थमुदेति श्लेष्मलक्षणम् ।
कृच्छ्रसाध्याः क्षयाश्चात्र सर्वैरल्पञ्च वर्जयेत् ॥ १,१५२.२७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे यक्ष्मनिदाना नाम द्विपञ्चाशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १५३ ।
धन्वन्तरिरुवाच ।
अरोचकनिदान्ते वक्ष्येऽहं सुश्रुताधुना ।
अरोचको भवेद्दोषैर्जिह्वाहृदयसंश्रयैः ॥ १,१५३.१ ॥

सन्निपातेन मनसः सन्तापेन च पञ्चमः ।
कषायतिक्तमधुरं वातादिषु मुखं क्रमात् ॥ १,१५३.२ ॥

सर्वं वीतरसं शोकक्रोधादिषु यथा मनः ।
छर्दिदोषैः पृथक्सर्वैर्दुष्टैरन्यैश्च पञ्चमः ॥ १,१५३.३ ॥

उदानोऽधिकृतान्दोषान्सर्वं सन्ध्यर्हमस्यति ।
आशु क्लेशोऽस्य लावण्यप्रसेकारुचयः क्रमात् ॥ १,१५३.४ ॥

नाभिपृष्ठं रुजत्याशु पार्श्वे चाहारमुत्क्षिपेत् ।
ततो विच्छिन्नल्पाल्पकषायं फेनिलं वमेत् ॥ १,१५३.५ ॥

शब्दोद्गरयुतः कृच्छ्रमनुकृच्छ्रेण वेगवत् ।
कासास्यशोषकं वातात्स्वरपीडासमन्वितम् ॥ १,१५३.६ ॥

पित्तात्क्षारोदकनिभं धूम्रं हरितपीतकम् ।
सासृगम्लं कटुतिक्तं तृण्मूर्छादाहपाकवत् ॥ १,१५३.७ ॥

कफात्स्निग्धं घनं पीतं श्लेष्मतस्तु समाक्षिकम् ।
मधुरं लवणं भूरि प्रसक्तं लोमहर्षणम् ॥ १,१५३.८ ॥

मखश्वयथुमाधुर्यतन्द्राहृल्लासकासवान् ।
सर्वैर्लिङ्गैः समापन्नस्त्याज्यो भवति सर्वथा ॥ १,१५३.९ ॥

सर्वं यस्य च विद्विष्टं दर्शनश्रवणादिभिः ।
वातादिनैव संक्रुद्धकृमिदुष्टान्नजे गदे ।
शूलवेपतुहृल्लासो विशेषात्कृमिजे भवेत् ॥ १,१५३.१० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेऽरोचकनिदाना नाम त्रिपञ्चाशदुत्तरशततमोऽध्यायः

धन्वन्तरिरुवाच ।
हृद्रोगादिनिदानं ते वक्ष्येऽहं सुश्रुताधुना ।
कृमिहृद्रोगलिङ्गैश्च स्मृताः पञ्च तु हृद्गताः ॥ १,१५४.१ ॥

वातेन शून्यातात्यर्थं भुज्यते रोरुदीति च ।
भिद्यते शुष्यते स्तब्धं हृदयं शून्यता भ्रमः ॥ १,१५४.२ ॥

अकस्माद्दीनता शोको भयं शब्देऽसैष्णुता ।
वेपथुर्वेपनान्मोहः श्वासरोधोऽल्पनिद्रता ॥ १,१५४.३ ॥

पित्तात्तृष्णा श्रमो दाहो स्वेदोऽम्लकफजः क्रमः ।
छर्दनं ह्यम्लपित्तस्य धूमकल्पितको ज्वरः ॥ १,१५४.४ ॥

श्लेष्मणा हृदयं स्तब्धं भारिकं साश्मगर्भवत् ।
कासास्थिसादनिष्ठीवनिद्रालस्यारुचिज्वराः ॥ १,१५४.५ ॥

हृद्रोगे हि त्रिभिर्दषैः कृमिभिः श्यावनेत्रता ।
तमः प्रवेशो हृल्लासः शोथः कण्डूः कफस्त्रुतिः ॥ १,१५४.६ ॥

हृदयं सततं चात्र क्रकचेनेव दीर्यते ।
चिकित्सदामयं (रं) घोरं तच्छीघ्रं शीघ्रमारिणम् ॥ १,१५४.७ ॥

वातात्पित्तात्कफात्तृष्णा सन्निपाताद्बलक्षयः ।
षष्ठी स्यादुपसर्गाच्च वातपित्ते च कारणम् ॥ १,१५४.८ ॥

सर्वेषु तत्प्रकोपो हि सम्यग्धातुप्रशोषणात् ।
सर्वदेहभ्रामोत्कम्पतापहृद्दाहमोहकृत् ॥ १,१५४.९ ॥

जिह्वामूलगलक्लोमतालुतोयवहाः शिराः ।
संशोष्य तृष्णा जायन्ते तासां सामान्यलक्षणम् ॥ १,१५४.१० ॥

मुखशोषो जलातृप्तिरन्नद्वेषः स्वरक्षयः ।
कण्ठोष्ठतालुकार्कश्याज्जिह्वानिष्क्रमणे क्लमः ॥ १,१५४.११ ॥

प्रलापश्चित्तविभ्रंशो ह्युद्गराद्यस्तथामयः ।
मारुतात्क्षामतादैन्यं शङ्खभे (तो) दः शिरौभ्रमः ॥ १,१५४.१२ ॥

गन्धाज्ञानास्यवैरस्यश्रुतिनिद्राबलक्षयाः ।
शीताम्लफेनवृद्धिश्च पित्तान्मूर्छास्यतिक्तता ॥ १,१५४.१३ ॥

रक्तेक्षणत्वं सततं शोषो दाहोऽतिधूमकः ।

कफो रसाद्विकुपितस्तोयवाहिषु मारुतः ॥ १,१५४.१४ ॥

स्रोतस्तु सकफं तेन पङ्कवच्छोष्यते ततः ।
शूकैरिवाचितः कण्ठो निद्रा मधुरवक्रता ॥ १,१५४.१५ ॥

आध्मानं शिरसो जाड्यं स्तैमित्यच्छर्द्यरोचकम् ।
आलस्यमविपाकञ्च यः स स्यात्सर्वलक्षणः ॥ १,१५४.१६ ॥

आमोद्भवाच्च रक्तस्य संरोधाद्वातपित्तता ।
उष्णाक्रान्तस्य सहसा शीताम्भो भजतस्तृषा ॥ १,१५४.१७ ॥

उष्णादूर्ध्वं गतः कोष्ठं कुर्याद्वै पित्तजैवसा ।
या च पानातिपानोत्था तीक्ष्णाग्रे स्नेहपाकजा ॥ १,१५४.१८ ॥

स्निग्धकट्वम्ललवणभोजनेन कफोद्भवा ।
तृष्णारसक्षयोक्तेन लक्षणेन क्षयात्मिका ॥ १,१५४.१९ ॥

शोषमोहज्वराद्यन्यदीर्घरोगोपसर्गतः ।
या तृष्णा जायते तीव्रा सोपसर्गात्मिका स्मृता ॥ १,१५४.२० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे आम्लपित्तनिदाना नाम चतुः
पञ्चाशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १५५
धन्वन्तरिरुवाच ।
वक्ष्ये मदात्ययादेश्च निदानं मुनिभाषितम् ।
तीक्ष्णाम्लरूक्षसूक्ष्माम्लव्यवायासुकरं लघु ॥ १,१५५.१ ॥

विकाशि विशदं मद्यं मेदसोऽस्माद्विपर्ययः ।
तीक्ष्णोदयाश्च दिव्युक्ताश्चित्तोपप्लविनो गुणाः ॥ १,१५५.२ ॥

जीवितान्ताः प्रजायन्ते विषेणोत्कर्षवर्तिना ।
तीक्ष्णादिभिर्गुणैर्मद्यं मान्द्यदीनोजसो गुणान् ॥ १,१५५.३ ॥

दशभिर्गुणैः संक्षोम्यं चेतो नयति चाक्रियम् ।
आद्ये मदे द्वितीयेऽपि प्रम (मो) दायतने स्थितः ॥ १,१५५.४ ॥

दुर्विकल्पहतो मूढः सुखमित्यभिमुच्यते ।
मध्यमोत्तमयोः सन्धिं प्राप्य राजासनो मदः ॥ १,१५५.५ ॥

निरङ्कुश इव व्यालो न किञ्चिन्नाचरेत्ततः ।
इयं भूमिरवाच्यानां दौः शीलस्येदमास्पदम् ॥ १,१५५.६ ॥

एकोऽयं बहुमार्गायाः दुर्गर्(म) तेर्दर्शकः परम् ।
निश्चेष्टः सन्नवाक्शेते तृतीयेऽत्र मदे स्थितः ॥ १,१५५.७ ॥

मरणादपि पापात्मा गतः पापतरां दशाम् ।
धर्माधर्मं सुखं दुः खं मानानर्थं हिताहितम् ॥ १,१५५.८ ॥

न वेद शीकमोहार्तं शोष (क) मोहादिसंयुतः ।
सोन्मादभ्रममूर्छायां सापस्मारः पतत्यधः ॥ १,१५५.९ ॥

नाति माद्यन्ति बलिनः कृताहारा महाशनाः ।
वातात्पित्तात्कफात्सर्वैर्भवेद्रोगो मदात्ययः ॥ १,१५५.१० ॥

सामान्यलक्षणं तेषां प्रमोहो हृदयव्यथा ।
विभेदं प्रसभं तृष्णा सौम्यो ग्लानिर्ज्वरोऽरुचिः ॥ १,१५५.११ ॥

पुरोविबन्धस्तिमिरं कासः श्वासः प्रजागरः ।
स्वेदोऽतिमात्रं विष्टम्भः श्वयथुश्चित्तविभ्रमः ॥ १,१५५.१२ ॥

स्वप्नेनेवाभिभवति न चोक्तश्च स भाषतेः ।
पित्ताद्दाहज्वरः स्वेदो मोहो नित्यं च विभ्रमः ॥ १,१५५.१३ ॥

श्लेष्मणश्छर्दिर्हृल्लासो निद्रा चोदरगौरवम् ।

सर्वजे सर्वलिङ्गत्वं ज्ञात्वा मद्यं पिबेत्तु यः ॥ १,१५५.१४ ॥

सहसा रुचिरं चान्यतरध्वंसकशोषिणौ ।
भवेतां?मारुतात्कष्टाद्भवेत्त स्य विशेषतः ॥ १,१५५.१५ ॥

ध्वंसकश्लेष्मनिष्ठिवाः कण्ठशोषोऽतिनिद्रता ।
शब्दासहत्वं तच्चित्तविक्षेपोऽङ्गे हि वातरुक् ॥ १,१५५.१६ ॥

हृत्कण्ठरोगः संमोहः श्वासतृष्णावमिज्वराः ।
निवर्तेद्यस्तु मद्येभ्यो जितात्मा बुद्धिपूर्वकृत् ॥ १,१५५.१७ ॥

विकारैः क्लिश्यते जातु न स शरीरमानसः ।
रजोमोहहिताहारपास्य स्युस्त्रयो गदाः ॥ १,१५५.१८ ॥

वसासृक्क्लेदनावाहिस्रोतोरोधः सुद्भवाः ।
मदमूर्छापसंन्यासा यथोत्तरबलोद्भवाः ॥ १,१५५.१९ ॥

मदोऽत्र दोषैः सर्वैस्तु रक्तमद्यविषैरपि ।
शक्त्यानन्त्याद्गताभासश्चलश्छलितवेष्टितः ॥ १,१५५.२० ॥

रूक्षश्यामारुणतनुर्मद्ये वातोद्भवे भवेत् ।
पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः ॥ १,१५५.२१ ॥

स्वप्नेऽसम्बद्धवाक्यादिः कफाद्ध्यानपरो हि सः ।
सर्वोत्थसन्निपातेन रक्तस्तम्भाङ्गदूषणम् ॥ १,१५५.२२ ॥

पित्तलिङ्गत्वमाद्येन विकृतेहा स्वराज्ञता ।
विसत्कम्पोतिनिद्रा च सर्वेभ्योऽभ्यधिकं श्रमः ॥ १,१५५.२३ ॥

लक्षयेल्लक्षणोत्कर्षाद्वातादीञ्छोणितादिषु ।
अरुणं नीलकृष्णं वा सम्प्रविश्यन्विशेत्तमः ॥ १,१५५.२४ ॥

शीघ्रं च प्रतिबुध्येत हृत्पीडा वेपथुर्भ्रमः ।
कासः श्यावारुणा च्छाया मूर्छायां मारुतात्मकः ॥ १,१५५.२५ ॥

पित्तेन रक्तं पीतं वा नभः पश्यन्विशेत्तमः ।
विबुध्येत च सस्वेदो दाहतृष्णोपपीडितः ॥ १,१५५.२६ ॥

भिन्नवत्पीतनीलाभो रक्तनीलाकुलेक्षणः ।
कफेन मेघसंकाशं पश्यत्याकाशमाविशेत् ॥ १,१५५.२७ ॥

तमश्चिराच्च बुध्ये हृदुरः सुप्रसेकवान् ।

गुरुभिस्तिमितै (रै) रङ्गे राजधर्मावबन्धान् (वत्) ॥ १,१५५.२८ ॥

सर्वाकृतिस्त्रिभिर्दोषैरपस्मार इवापरः ।
पातयत्याशु निश्चेष्टं विना बीभत्सचेष्टितैः ॥ १,१५५.२९ ॥

दोषैस्तु मदमूर्छायां कृतवेगेषु देहिनाम् ।
स्वयमेवोपशाम्यन्ति संन्यासेनौषधैर्निवा ॥ १,१५५.३० ॥

वाग्देहमनसां चेष्टामाक्षिप्यातिबलाबलाः ।
ससन्यासं निपतिताः प्राणाघातनसंश्रयाः ॥ १,१५५.३१ ॥

भवन्ति तेन पुरुषाः काष्ठभूता मृतोपमाः ।
म्रियेत शीघ्रं शीघ्रं चेच्चिकित्सा न प्रयुज्यते ॥ १,१५५.३२ ॥

अगाधे ग्राहबहुले सलिलौघ इवार्णवे ।
संन्यासे विनिमज्जन्तं नरमाशु निवर्तयेत् ॥ १,१५५.३३ ॥

मदमानरोषतोष प्रवृत्तिभिरितस्ततः ।
युक्तायुक्तं च समं युक्तिं युङ्क्ते न मद्येन ॥ १,१५५.३४ ॥

बलकासदेशपात्रं प्रकृतिसहतामथवा वयांसि? ।
प्रविभज्ज्यात्तनुरूपं पिबति ततः पिबत्यमृत ॥ १,१५५.३५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे मदात्ययादिनिदानं नाम पञ्चपञ्चाशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १५६
धन्वन्तरिरुवाच ।
अथार्शसां निदानं च व्याख्यास्यमि च सुश्रुत ! ।
सर्वदा प्राणिनां मांसे कीलकाः प्रभवन्ति ये ॥ १,१५६.१ ॥

अर्शांसि तस्मादुच्यन्ते गुदमार्गनिरोधनात् ।
दोषस्त्वङ्मांसमेदांसि सन्दूष्य विविधाकृतीन् ॥ १,१५६.२ ॥

मांसांकुरानपानादौ कुर्वन्त्यर्शांसि तान्जगुः ।
सहजन्मान्तरोत्थेन भेदो द्वेधा समासतः ॥ १,१५६.३ ॥

शुष्काग्रावाविभेदाश्च गुदस्थानानुसंश्रयाः ।
अर्धपञ्चाङ्गुलिस्तस्मिंस्तिस्रोऽध्यर्धाङ्गुलिस्थिताः ॥ १,१५६.४ ॥

बाल्यप्रवाहिणी तासामन्त्रमध्ये विसर्जिनी ।
बाह्यासंवरणे तस्या गुदादौ बहिरङ्गुले ॥ १,१५६.५ ॥

सार्धाङ्गुलप्रमाणेन रोमाण्यत्र ततः परम् ।
तत्र हेतुः सहोत्थानां बाल्ये बीजोपतप्तता ॥ १,१५६.६ ॥

अर्शसां बीजसृष्टिस्तु मातापित्रपचारतः ।
देवतानां प्रकोपे हि सान्निपातस्य चान्यतः ॥ १,१५६.७ ॥

असाध्या एवमाख्याताः सर्वे रोगाः कुलोद्भवाः ।
सहजानि विशेषेण रूक्षदुर्दर्शनानि तु ॥ १,१५६.८ ॥

अन्तर्मुखानि पाण्डूनि दारुणोपद्रवाणि च ।
योज्यानि च पृथोग्दोषसंसर्गनिचयात्स्वतः ॥ १,१५६.९ ॥

शुष्काणि वातश्लेष्मभ्यामार्द्राणि त्वस्य पित्ततः ।
दोषप्रकोपहेतुस्तु प्रागुक्तेवस्त्रसादिनि ॥ १,१५६.१० ॥

अग्नौ मलेऽतिनिचिते पुनश्चायं (ति) व्यवायतः ।
पानसंक्षोभविषमकठिनक्षुद्रकाशनात् ॥ १,१५६.११ ॥

बस्तिनेत्रगलौष्ठोत्थतलभेदादिघट्टनात् ।
भृशशीताम्बुसंस्पर्शप्रततातिप्रवाहणात् ॥ १,१५६.१२ ॥

गतमूत्रशकृद्वेगधारणात्तदुदीरणात् ।
जुगुप्सातीसारमेव ग्रहणी सोऽप्युपद्रवः ॥ १,१५६.१३ ॥

कर्षणाद्विषमादेश्चचेष्टाभ्यो योषितां पुनः ।

आमगर्भप्रपतनाद्गर्भवृद्धिप्रपीडनात् ॥ १,१५६.१४ ॥

ईदृशैश्चापरैर्वायुरपानः कुपितो मले ।
पायोर्वलीषु सद्रवृत्तिभास्वन्निः पूर्णमूर्तिषु ॥ १,१५६.१५ ॥

जायन्तेर्ऽशांसितु तत्पूर्वं लक्षणं वह्निमन्दता ।
विष्टम्भः सास्थिसदनं पिण्डि (ष्ट) कोद्वेष्टनं भ्रमः ॥ १,१५६.१६ ॥

सान्द्रोत्थोनेत्रयोः शोथः शकृद्भवेदोऽथ वा ग्रहः ।
मारुतः पुरतो मूढः प्रायो नाभेरधश्चरन् ॥ १,१५६.१७ ॥

सरक्तः परिकृन्तंश्च कृच्छ्रादाकुञ्चति श्वसन् ।
अन्त्रकूजनमाटोपः क्षारितोद्गारभूरिता ॥ १,१५६.१८ ॥

प्रभूतमूत्रमल्पा विडश्रद्धा धूम्रकोष्ठकः ।
शिरः पृष्ठोरसां शूलमालस्यं भिन्नवर्चसम् ॥ १,१५६.१९ ॥

इन्द्रियार्थेषु लौल्यं च क्रोधो दुः खोपचारतः ।
आशङ्का ग्रहणी शोथः पाण्डुगुल्मोदरेषु च ॥ १,१५६.२० ॥

एतान्येव विवर्धन्ते जातेष्वहतनामसु ।
निवर्तमानो मानो हि तैरधोमार्गरोधतः ॥ १,१५६.२१ ॥

क्षोभयेदनिलानन्यान् सर्वेन्द्रियशरीगान् ।
तथा मूत्रशकृत्पित्तकफान्वायुश्च शोषयन् ॥ १,१५६.२२ ॥

मुष्णात्यग्निं ततः सर्वे भवन्ति प्रायशोर्ऽशसः ।
कृशो भृशं हतोत्साहो दीनः क्षामोऽथ निष्प्रभः ॥ १,१५६.२३ ॥

असारी विगतच्छायो जन्तुदग्ध इवद्रुम ।
कृच्छ्रैरुग्रद्रवैर्ग्रस्तो यक्ष्मोक्तैर्मर्मपीडनैः ॥ १,१५६.२४ ॥

तथा काशपिपासास्यवैरस्यश्वासपीनसैः ।
क्लमाङ्गभङ्गवमथुक्षवथुश्वयथुज्वरैः ॥ १,१५६.२५ ॥

क्लैब्यबाधिर्यस्तैमित्यशर्करापरिपीडितः ।
क्षामो भिन्नस्वरो ध्यायन्मुहुः ष्ठीवन्नरोचकी ॥ १,१५६.२६ ॥

सर्वपर्वास्थिहृन्नाभीपायुवङ्क्षणशूलवान् ।
गुदेनस्त्रवता पित्तं बलाकोदरसन्निभम् ॥ १,१५६.२७ ॥

विशुष्कं चैव मुक्ताग्रं पक्वामं चान्तरान्तरम् ।

पाण्डुपित्तं हरिद्राक्तं पिच्छिलं चोपवेश्यते ॥ १,१५६.२८ ॥

गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमचिमान्विताः ।
पीनाङ्गारारुणाः स्तब्धा विषमाः परुषाकराः ॥ १,१५६.२९ ॥

मिथो विसदृश वक्रास्तीक्ष्णा विस्फुटि(रि)ताननाः ।
शिम्बीखर्जूरकर्कन्धूकार्पासफलसन्निभाः ॥ १,१५६.३० ॥

केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः ।
शिरः पार्श्वांसजङ्घोरुवङ्क्षणाद्यधिकव्यथाः ॥ १,१५६.३१ ॥

क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः ।
कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः ॥ १,१५६.३२ ॥

तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ।
रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥ १,१५६.३३ ॥

कृष्णत्वग्बद्धविण्मूत्रनेत्रवक्त्रश्च जायते ।
गुल्मप्लीहोदराष्ठीलासंभवस्तस्य चैव हि ॥ १,१५६.३४ ॥

पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ।
तन्वग्रस्त्राविणो विश्रास्तनवो मृदवः श्लथाः ॥ १,१५६.३५ ॥

शुकजिह्वा यकृत्खण्डजलौकावक्त्रसन्निभाः ।
दाहशो (ष) कज्वरस्वेदतृण्मूर्छारुचिमोहदाः ॥ १,१५६.३६ ॥

सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः ।
यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः ॥ १,१५६.३७ ॥

श्लेष्मोल्बणा महामूला घना मन्दरुजः सिताः ।
उत्सन्नोपचितस्निग्धस्तब्धवृत्तगुरुस्थिराः ॥ १,१५६.३८ ॥

पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः ।
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥ १,१५६.३९ ॥

वङ्क्षणानाहिनः पुयुबस्तिनाभिविकर्तनाः ।
सकाशश्वासहृल्लासप्रसेकारुचिपीनसाः ॥ १,१५६.४० ॥

महकृच्छ्रशिरोजाड्यशिशिरक्षारकारिणः ।
क्लैब्याग्निमार्दवच्छर्द्यतीसारादिविकारदाः ॥ १,१५६.४१ ॥

वसाभसकफप्राज्यपुरीषासृक्प्रवाहिकाः ।

न स्त्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः ॥ १,१५६.४२ ॥

संसृष्टलिङ्गत्संसर्गनिचयात्सर्वलक्षणाः ।
रक्तोल्बणा गुदे कीलाः पीताकृतिसमन्विताः ॥ १,१५६.४३ ॥

वटप्रसेहसदृशाः गुञ्जाविद्रुमसन्निभाः ।
तेऽत्यर्थं दुष्टमुष्णं च गाढविष्टंभपीडिताः ॥ १,१५६.४४ ॥

स्त्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ।
केकाभः पीड्यते दुः खैः शोणितक्षयसम्भवैः ॥ १,१५६.४५ ॥

हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ।
मुद्गकोद्रवजंबीरकरीरचणकादिभिः ॥ १,१५६.४६ ॥

रूक्षैः संग्राहिभिर्वायुर्विट्स्थाने कुपितो बली ।
अधोवहानि स्रोतांसि संरुध्याधः प्रशोषयन् ॥ १,१५६.४७ ॥

पुरीषं वातविष्णूत्रसंगं कुर्वीत दारुणम्? ।
तेन तीव्रा रुजा कोष्ठपृष्ठहृत्पार्श्वगा भवेत् ॥ १,१५६.४८ ॥

आध्मानमुदरे विष्ठा हृल्लासपरिकर्तने ।
बस्तौ च सुतरां शूलो गण्डश्वयथुसंभवः ॥ १,१५६.४९ ॥

पवनस्योर्ध्वगामित्वात्ततश्छर्द्यरुचिज्वराः ।
हृद्रोगग्रहणीदोषमूत्रसंगप्रवाहिकाः ॥ १,१५६.५० ॥

बाधिर्यातिशिरः श्वासशिरोरुक्काशपीनसाः? ।
मनोविकारस्तृट्श्वासपित्तगुल्मोदरादयः ॥ १,१५६.५१ ॥

एते च वातजा रोगा जायन्ते भृशदारुणाः ।
दुर्नामामृत्यूदावर्तपरमोऽयमुपद्रवः ॥ १,१५६.५२ ॥

वाताभिभूतकोष्ठानां तैर्विनापि विजायते ।
सहजानि तु दोषाणि यानि चाभ्यन्तरे वलौ ॥ १,१५६.५३ ॥

स्थितानि तान्यसाध्यानि याप्यन्तेऽग्निबलादिभिः ।
द्वन्द्वजानि द्वितीयायां वला यान्याश्रितानि च ॥ १,१५६.५४ ॥

कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ।
बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च ॥ १,१५६.५५ ॥

अर्शांसि सुखसाध्यानि न चिरोत्पत्तिकानि च ।

मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि तु ॥ १,१५६.५६ ॥

गण्डूपदस्य रूपाणि पिच्छिलानि मृदूनि च ।
व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ॥ १,१५६.५७ ॥

कीलोपमं स्थिरखरं चर्मकीलं च तद्विदुः ।
वातेन तोदः पारुष्यं पित्तादसितवक्त्रता ॥ १,१५६.५८ ॥

श्लेष्मणः स्निग्धता तस्य ग्रथितत्वं सवर्णता ।
अर्शसां प्रशमे यत्नमाशु कुर्वीत बुद्धिमान् ।
तान्याशु हि गदन्धा (कार्) य्य कुर्युर्बद्धगुदोदरम् ॥ १,१५६.५९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेऽर्शोनिदाना नाम षट्पञ्चाशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १५७
धन्वन्तरिरुवाच ।
अतीसारग्रहण्योश्च निदानं वच्मि सुश्रुत ।
दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड्विधः ॥ १,१५७.१ ॥

अतीसारः स सुतरां जायतेऽत्यम्बुपानतः ।
विशुष्कान्नवसास्नेहतिलपिष्टविरूढकैः ॥ १,१५७.२ ॥

मद्यरूक्षातिमात्रादिरसातिस्नेहविभ्रमात् ।
कृमिघोषविरोधाच्च तद्विधैः कुपितानिलः ॥ १,१५७.३ ॥

विस्त्रंसयत्यधोवातं हत्वा तेनैव चानलम् ।
व्यापार्यान्नशकृत्कोष्ठपुरीषद्रवतादयः ॥ १,१५७.४ ॥

प्रकल्पतेऽतीसारस्य लक्षणं तस्य भाविनः ।
भेदो हृद्गुदकोष्ठेषु गात्रस्वेदो मलग्रहः ॥ १,१५७.५ ॥

आध्मानमविपाकश्च तत्र वातेन विज्वरम् ।
अल्पाल्पं शब्दशून्याढ्यं विरु (ब)द्धमुपवेश्यते ॥ १,१५७.६ ॥

रूक्षं सफेनमच्छं च गृहीतं व मुहुर्मुहुः ।
तथादग्धगदाभासं पिच्छिलं परिकर्तयन् ॥ १,१५७.७ ॥

सशुष्कभ्रष्टपायुश्च हृष्टरोमा विनिश्वसन् ।
पित्तेन पीतमशितं हारिद्रं शाद्वलप्रभम् ॥ १,१५७.८ ॥

सरक्तमतिदुर्गन्धं तृण्मूर्छास्वेददाहवान् ।
सशूलपायुसन्तापपाकवाञ्छलेष्मणा घनम् ॥ १,१५७.९ ॥

पिच्छिलं तत्रानुसारमल्पाल्पं सप्रवाहिकम् ।
सरोमहर्पः सेक्लेशो गुरुबस्तिगुदोदरः ॥ १,१५७.१० ॥

कृतेऽप्यकृतसङ्गश्च सर्वात्मा सर्वलक्षणः ।
भयेन क्षुभिते चित्ते शायिते द्रावयेत्स (च्छ) कृत् ॥ १,१५७.११ ॥

वायुस्ततो निवार्येत क्षिप्रमुष्णं द्रवं प्लवम् ।
वातपित्ते समं लिङ्गमाहुस्तद्वच्च शोकतः ॥ १,१५७.१२ ॥

अतीसारः समासेन द्वेधा सामो निरामकः ।
सासृग्जातं रसद्रोगो गौरवादप्सु मुञ्चति? ।
शकृद्दुर्गन्धमाटोपविष्टम्भार्तिप्रसेकिनः ॥ १,१५७.१३ ॥

विपरीतो निरामस्तु कफात्कोऽपि न मज्जति ।
अतीसारेषु यो नाति यत्नवान् ग्रहणीगदः ॥ १,१५७.१४ ॥

तस्य स्यादग्निनिर्वाणकार्यैरत्यर्थसञ्चितैः ।
सामं शकृन्निरामं वा जीर्णं येनातिसार्यते ॥ १,१५७.१५ ॥

सोऽतिसारोऽतिसरणा दाशुकारीः स्वभावतः ।
सामंशीर्णमजीर्णेन जीर्णे पक्वं तु नैव च ॥ १,१५७.१६ ॥

चिरकृद्ग्रहणीदोषः सञ्चयांश्चोपवेशयेत् ।
अकस्माद्वारसुर्वेधमकस्मात्सन्धिनीमुहुः? ।
स चतुर्धा पृथग्दोषैः सन्निपाताच्च जायते ॥ १,१५७.१७ ॥

प्राग्रूपाङ्गस्य सदनं चिरात्पवन अल्पकः ।
प्रसेको वक्त्रवैरस्यमरुचिस्तृट्श्रमोभ्रमः ॥ १,१५७.१८ ॥

आब (न) द्धोदरता छर्दिः कर्णकेऽप्यनुकूजकम् ।
सामान्यलक्षणं कार्श्यं वमक स्तमको ज्वरः ॥ १,१५७.१९ ॥

मूर्छा शिरोरुविष्टम्भः श्वयथुः करपादयोः ।
तन्द्रानिलात्तालुशोषस्तिमिरं कर्णयोः स्वनः ॥ १,१५७.२० ॥

पार्श्वोरुवङ्क्षणग्रीवारुजा तीक्ष्णविषूचिका ।
रुग्णेषु वृद्धिः सर्वषु क्षुत्तृष्णापरिहर्त्रिका ॥ १,१५७.२१ ॥

जीर्णेजीर्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते ।
वाताद्धृद्रोगगुल्मार्शःप्लीहपाण्डुरशङ्किताः ॥ १,१५७.२२ ॥

चिराद्दुः खं द्रवं शुष्कं तुन्दारं शब्दफेनवत् ।
पुनः पुनः सृजेद्वर्चं पायुरुच्छ्वासकासवान् ॥ १,१५७.२३ ॥

पीतेन पीतनीलाभं पीताभं सृजति द्रवम् ।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ॥ १,१५७.२४ ॥

श्लेष्मणा पच्यते दुःखे मनश्छर्दिररोचकः ।
आस्योपदाहनिष्ठीवकासहृल्लासपीनसाः ॥ १,१५७.२५ ॥

हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ।
उद्गारो दुष्टमधुरः सदनं सप्रहर्षणम् ॥ १,१५७.२६ ॥

सम्भिन्नश्लेष्मसंश्लिष्टगुरुचाम्लैः (वर्चः) प्रवर्तचम् ।
अकृशस्यापि दौर्बल्यं सर्वजे सर्वदर्शनम् ॥ १,१५७.२७ ॥

विभागेऽङ्गस्य ये प्रोक्ता पिपासाद्यास्त्रयो मलाः ।
तेऽप्यस्य ग्रहणीदोषाः समन्तेष्वस्ति कारणम् ॥ १,१५७.२८ ॥

वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दरम् ।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः ॥ १,१५७.२९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेतिसारनिदान नाम सप्तञ्चाशदुत्तरशतमोऽध्यायः

श्रीगरुडमहापुराणम् १५८
धन्वन्तरिरुवाच ।
अथातो मूत्रघातस्य निदानं शृणु सुश्रुत ।
बस्तिबस्तिशिरोमेढ्रकटीवृषणपायु च ॥ १,१५८.१ ॥

एकसंवहनाः प्रोक्ता गुदास्थिविवराश्रयाः ।
अधोमुखोऽपि बस्तिर्हि मूत्रवाहिशिरामुखैः ॥ १,१५८.२ ॥

पार्श्वेभ्यः पूर्यते श्लक्ष्णै (सूक्ष्मैः) स्यन्दमानैरनारतम् ।
तैस्तैरेव प्रविश्यैवन्दोषान्कुवन्ति विंशतिम् ॥ १,१५८.३ ॥

मूत्राघातः प्रमेहश्च कृच्छ्रान्मर्म समाश्रयेत् ।
बस्तिवङ्क्षणमेढ्रार्तियुक्तोल्पाल्पं मुहुर्मुहुः ॥ १,१५८.४ ॥

मूत्राण्यावातजे कृच्छ्रपीत्ते पीतं सदाहरुक् ।
रक्तं वा कफजो बस्तिमेढ्रगौरवशोथवान् ॥ १,१५८.५ ॥

सपिच्छं सनिरुद्धं च सर्वैः सर्वात्मकं मलैः ।
यदा वायुर्मुखं बस्तेर्व्यावर्त्य पारिशोषयन् ॥ १,१५८.६ ॥

मूत्रं सपित्तं सकफं सशुक्रं वा तदा क्रमात् ।
संजायतेऽश्मरी घोरा पित्तं गोरिव रोचना ॥ १,१५८.७ ॥

श्लेष्माश्रया च सर्वा स्यादथास्याः पूर्वलक्षणम् ।
बस्त्याध्मानं तदासन्नदेशोहि परितोऽतिरुक् ॥ १,१५८.८ ॥

बस्तौ च मूत्रसङ्गित्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ।
सामान्यलिङ्गं रुङ्नाभिसीवनीबस्तिमूर्धसु ॥ १,१५८.९ ॥

विस्तीर्णवा सं मूत्रं स्यात्तथा मार्गनिरोधने ।
बद्धं बद्ध्वा सुखं मेहेदच्छं गोमेदकोपमम् ॥ १,१५८.१० ॥

तत्संक्षोभाद्भवेत्सासृङ्मांसमध्वनि रुग्भवेत् ।
तत्र बाताभिसृत्यार्तोदन्तान् खादति वेपते ॥ १,१५८.११ ॥

गृह्णाति मेहनं नाभिं पीडयत्यतिलक्षणम् ।
सानिलं मुञ्चति शकृन्मुहुर्मेहति बिन्दुशः ॥ १,१५८.१२ ॥

श्यामरूक्षाश्मरी चास्य स्याच्चिता कण्टकैरिव ।
पित्तेन दह्यते बस्तिः पच्यमान इवोष्णवान् ॥ १,१५८.१३ ॥

भल्लातकास्थिसंस्थाना रक्ता पीता सिताश्मरा ।

बस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ॥ १,१५८.१४ ॥

अश्मरी महती श्लक्ष्णा मधुवर्णाथ वा सिता ।
एता भवन्ति बालनां तेषामेव च भूयसाम् ॥ १,१५८.१५ ॥

आशयोपचयाल्पत्वाद्गहणाहरणे सुखी ।
सुक्राश्मरी तु महती जायते शुक्रधारणात् ॥ १,१५८.१६ ॥

स्थानच्युतमभुक्तं वा अण्डयोरन्तरेऽनिलः ।
शोषयत्युपसंगृह्य शुक्रं तच्छुक्रमश्मरी ॥ १,१५८.१७ ॥

बस्तिरुक्कृच्छ्रमूत्रत्वं शुक्ला श्वयथुकारिणी ।
तस्यामुत्पन्नमात्रायां शुष्कमेत्य विलीयते ॥ १,१५८.१८ ॥

पीडिते ज्वरकासेऽस्मिन्नश्मर्येव च शर्करा ।
असौ वा वायुना भिन्ना सा त्वस्मिन्नमुलोमगे ॥ १,१५८.१९ ॥

निरेति सह मूत्रेण प्रतिलोमे विपच्यते ।
मूत्रसंधारणं कुर्यात्क्रुद्धो बस्तेर्मुखे मरुत् ॥ १,१५८.२० ॥

मूत्रसङ्गं रुजं कण्डूं कदाचिच्च सुवामतः ।
प्रच्छाद्य बस्तिमुद्धृत्य गर्मान्तं स्थूलविप्लुताम् ॥ १,१५८.२१ ॥

करोति तत्र रुग्दाहं स्पन्दनोद्वेष्टनानि च ।
बिन्दुशश्च प्रवर्तेत मूत्रं बस्तौ तु पीडिते ॥ १,१५८.२२ ॥

धारावरोधश्चाप्येष वातबस्तिरिति स्मृतः ।
दुस्तरो दुस्तरतरो द्वितीयः प्रबलोऽनिलः ॥ १,१५८.२३ ॥

शकृप्मार्गस्य बस्तेश्च वायुरन्तरमाश्रितः ।
अष्ठीलाभं घनं ग्रन्थिं करोत्यच (ब) लमुन्नतम् ॥ १,१५८.२४ ॥

वाताष्ठीलेति सात्मानं विष्णूत्रानिल (ति) सर्गकृत् ।
विगुणः कुण्डलीभूतो बस्तौ तीव्रव्यथोनिलः ॥ १,१५८.२५ ॥

आबध्य मूत्रं भ्रमति संस्तम्भोद्वेष्टगौरवम् ।
मूत्रमल्पाल्पमथवा विमुञ्चति सकृत्सकृत् ॥ १,१५८.२६ ॥

वातकुण्डलिकेत्येव मूत्रं तु विधृतेऽचिरम् ।
न निरेति निरुद्धं वा मूत्रातीतं तदल्परुक् ॥ १,१५८.२७ ॥

विधारणात्प्रतिहतं वातादावर्तितं यदा ।

नाभेरधस्तादुदरं मूत्रमापूरयेत्तदा ॥ १,१५८.२८ ॥

कुर्यात्तीव्ररुगाध्मानमशक्तिं मलसंग्रहम् ।
तन्मूत्रं जाठरच्छिद्रवैगुण्येनानिलेन वा ॥ १,१५८.२९ ॥

आक्षिप्तमल्पमूत्रस्य वस्तौ नाभौ च वा मले ।
स्थित्वा प्लवेच्छनैः पश्चात्सरुजं वाथवारुजम् ॥ १,१५८.३० ॥

मूत्रोत्सर्गं सविच्छिन्नं तच्छ्रेयो गुरुशेफसोः ।
अन्तर्वस्ति मुखे तृष्णा स्थिराल्पं सहसा भवेत् ॥ १,१५८.३१ ॥

अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स उच्यते ।
मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धृतम् ॥ १,१५८.३२ ॥

स्थानाच्च्युतं मूत्रयतः प्राक्पश्चाद्वा प्रवर्तते ।
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ॥ १,१५८.३३ ॥

रूक्षदुर्बलयोर्वातेनोदावर्तं शकृद्यदा ।
मूत्रस्रोतोऽनुपर्येति संसृष्टं शकृता तदा ॥ १,१५८.३४ ॥

मूत्रबिन्दुं तुल्यगन्धं स्याद्विघातं तमादिशेत् ।
पित्तव्यायामतीक्ष्णाम्लभोजनाध्मानकादिभिः ॥ १,१५८.३५ ॥

प्रवृद्धवायुना मूत्रे वस्तिस्थे चैव दाहकृत् ।
मूत्रं वर्तयते पूर्वं सरक्तं रक्तमेव वा ॥ १,१५८.३६ ॥

उष्णं पुनः पुनः कृच्छ्रादुष्णवातं वदन्ति तम् ।
रूक्षस्य क्लान्तदेहस्य बस्तिस्थौ पित्तमारुतौ ॥ १,१५८.३७ ॥

मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ।
पित्तं कफो द्वादपि वा संहन्येतेनिलेनचेत् ॥ १,१५८.३८ ॥

कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ।
सदाहं रोचनाशङ्खचूर्णवर्णं भवेच्च तत् ॥ १,१५८.३९ ॥

शुष्कं समस्तवर्णं वा मूत्रसादं वदन्तितम् ।
इति विस्तारतः प्रोक्ता रोगा मूत्रप्रवर्तिताः ॥ १,१५८.४० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे मूत्राघातमूत्राकृच्छनिदान नामाष्टपञ्चाशदुत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १५९
धन्वन्वरिरुवाच ।
प्रमेहाणां निदानन्ते वक्ष्येऽहं शृणु सुश्रुत ! ।
प्रमेहा विंशतिस्तत्र श्लेष्मणो दश पित्ततः ॥ १,१५९.१ ॥

षट्चत्वारोऽनिलात्तेच मेदोमत्रकफावहाः ।
हारिद्रमेही कटुकं हरिद्रासन्निभं शकृत् ॥ १,१५९.२ ॥

विस्त्रं माञ्जिष्ठमेहेच मञ्जिष्ठा सलिलोपमम् ।
विस्त्रमुष्णं सलवणं रक्ताभ रक्तमेहतः ॥ १,१५९.३ ॥

वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः ।
मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ॥ १,१५९.४ ॥

हस्ती मत्त इवाजस्त्रं मूत्रं वेगविवर्जितम् ।
सलसीकं विवद्धं च हस्तिमेही प्रमेहति ॥ १,१५९.५ ॥

मधुमेही मधुसमं जायते स किल द्विधा ।
क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथे यदा ॥ १,१५९.६ ॥

आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयेत् ।
क्षणात्क्षीणः क्षणात्पूर्णो भजते कृच्छ्रसाध्यताम् ॥ १,१५९.७ ॥

कालेनोपेक्षितः सर्वोह्यायाति मधुमेहताम् ।
मधुरं यच्च मेहेषु प्रायो मध्विव मेहति ॥ १,१५९.८ ॥

सर्वे ते मधुमेहाख्या माधुर्याच्च तनोर्यतः ।
अविपाकोऽरुचिश्छर्दिर्निद्रा कासः सपीनसः ॥ १,१५९.९ ॥

उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ।
बस्तिमेहनयोस्तोदोमुष्कावदरणं ज्वरः ॥ १,१५९.१० ॥

दाहस्तृष्णाम्लिका मूर्छा विड्भेदः पित्तजन्मनाम् ।
वातजानामुदावर्तः कम्पहृद्ग्रहलोलताः ॥ १,१५९.११ ॥

शूलमुन्निद्राता शोषः श्वासः कासञ्च जायते ।
शराविका कच्छपिका ज्वालिनी विनतालजी ॥ १,१५९.१२ ॥

मसूरिका सर्षपिका पुत्रिणी सविदारिका ।
विद्रधिश्चेति पिडिकाः प्रमेहोपेक्षया दश ॥ १,१५९.१३ ॥

अन्नस्य कफसंश्लेषात्प्रायस्तत्र प्रवर्तनम् ।

स्वाद्वम्ललवणस्निग्धगुरुपिच्छिलशीतम् ॥ १,१५९.१४ ॥

नवं धान्यं सुरासूपमांसेक्षुगुडगोरसम् ।
एकस्थानासनवति शयनं विनिवर्तनम् ॥ १,१५९.१५ ॥

बस्तिमाश्रित्य कुरुते प्रमेहाद्दूषितः कफः ।
दूषयित्वा वपुः क्लेदं स्वेदमेदोवसामिषम् ॥ १,१५९.१६ ॥

पित्तं रक्तमतिक्षीणे कफादौ मूत्रसंश्रयम् ।
धातुं बस्तिमुपानीय तत्क्षयेच्चैव मारुतः ॥ १,१५९.१७ ॥

साध्यासाध्यप्रतीत्याद्याः मेहास्तेनैव तद्भवाः ।
समे समकृता दोषे परमत्वात्तथापि च ॥ १,१५९.१८ ॥

सामान्य लक्षणन्तेषां प्रभूताविलमूत्रता ।
दोषदूष्या विशेषेऽपि तत्संयोगविशेषतः ॥ १,१५९.१९ ॥

मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ।
अच्छं बहुसितं शीतं निर्गन्धमुदकोपमम् ॥ १,१५९.२० ॥

मेहत्युदकमेहेन किञ्चिदाविलपिच्छिलम् ।
इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः ॥ १,१५९.२१ ॥

सान्द्री भवेत्पर्युषितं सान्द्रमेहेन मेहति ।
सुरामेही सुरातुल्यमुपर्यच्छमधोघनम् ॥ १,१५९.२२ ॥

सहृष्टरोमा पिष्टेन पिष्टबद्बहुलं सितम् ।
शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥ १,१५९.२३ ॥

मूत्रयेत्सिकतामेही सिकतारूपिणो मलान् ।
शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥ १,१५९.२४ ॥

शनैः शनैः शनैर्मेही मन्दं मन्दंप्रमेहति ।
लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ १,१५९.२५ ॥

गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ।
नीलमेहन नीलाभं कालमेही मसीनिभम् ॥ १,१५९.२६ ॥

सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ।
अन्तोन्नता मध्यनिन्मा अक्लेदसुरुजान्विता ॥ १,१५९.२७ ॥

शरावमानसंस्थाना पिडिका स्याच्छराविका ।

सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः ॥ १,१५९.२८ ॥

महती पिडिका नीला विनता नाम सा स्मृता ।
दहति त्वचमुत्थाने ज्वालिनी कष्टदायिनी ॥ १,१५९.२९ ॥

रक्ता सिता स्फोटचिता दारुणा त्वलजी भवेत् ।
मसूराकृति संस्थाना विज्ञेया तु मसूरिका ॥ १,१५९.३० ॥

सर्षपोपमसंस्थाना जिह्वापाकमहारुजा ।
पुत्रिणी महती चाल्पा सुसूक्ष्मा पिडिका स्मृता ॥ १,१५९.३१ ॥

विदारीकन्दवद्वृत्ता कठिना च विदारिका ।
विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा ॥ १,१५९.३२ ॥

पुत्रिणी च विदारी च दुः सहा बहुमेदसः ।
सद्यः पित्तोल्बणास्त्वन्याः सम्भवन्त्यल्पमेदसः ॥ १,१५९.३३ ॥

पिडिकास्ता भवेयुः स्याद्दोषोद्रेको यथायथम् ।
प्रमेहेण विनाप्येता जायन्ते दुष्टमेदसः ॥ १,१५९.३४ ॥

तावच्च नोपलक्ष्यन्ते यावद्वर्णञ्च वर्जितम् ।
हारिद्रं रक्तवर्णं वा मेहप्राग्रूपवर्जितम् ॥ १,१५९.३५ ॥

यो मूत्रयेत तन्महें रक्तपित्तन्तु तद्विदुः ।
स्वेदोऽङ्गगान्धः शिथिलत्वमङ्गे श्य्याशनस्वप्नसुखाभिषङ्गः ।
हृन्नेत्रजिह्वाश्रवणोपदाहा घनोग्रता केशनखाभिवृद्धिः ॥ १,१५९.३६ ॥

शीतप्रियत्वं गलतालुशोषो माधुर्य मास्ये करपाददाहः ।
भविष्यतो मेहगणस्य रूपं मूत्रेऽपि धावन्ति पिपीलिकाश्च ॥ १,१५९.३७ ॥

तृष्णा प्रमेहे मधुरं प्रपिच्छं मध्वामये स्याद्विविधोविकारः ।
सम्पूरणाद्वा कफसम्भवः स्यात्क्षीणेषु दोषेष्वनिलात्मको वा ॥ १,१५९.३८ ॥

सम्पूर्णरूपाः कफपित्तमेहाः क्रमेण ये वै रतिसम्भवाश्च ।
सक्रामते पित्तकृतास्तु याप्याः साध्योऽस्ति मेहो यदि नास्ति दिष्टम् ॥ १,१५९.३९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे प्रमेहनिदान नामैकोनषष्ट्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १६०

धन्वन्तरिरुवाच ।
निदानं विद्रधेर्वक्ष्ये गुल्मस्य शृणु शुश्रुत ! ।
भुक्तैः पर्युषितात्युष्णशुष्करूक्षविदाहिभिः ॥ १,१६०.१ ।
धन्वन्तरिरुवाच ।
निदानं विद्रधेर्वक्ष्ये गुल्मस्य शृणु शुश्रुत ! ।
भुक्तैः पर्युषितात्युष्णशुष्करूक्षविदाहिभिः ॥ १,१६०.१ ॥

जिह्मशय्याविचेष्टाभिस्तैस्तैश्चासृक्प्रदूषणैः ।
दुष्टसत्वङ्मांसमेदोऽस्थिमदामृष्टोदराश्रयः ॥ १,१६०.२ ॥

यः शोथो बहिरन्तश्च महाशूलो महारुजः ।
वृत्तः स्यादायतो यो वा स्मृतो रोगः स विद्रधिः ॥ १,१६०.३ ॥

दोषैः पृथक्समुदितैः शोणितेन स्त्रतेन च ।
वहते तत्र तत्राङ्गे दारुणे ग्रथितोऽस्त्रुतः ॥ १,१६०.४ ॥

अन्तरा दारुणश्चैव गम्भीरो गुल्मवर्धनः ।
वल्मीकवत्समुत्स्त्रावी ह्यग्निमान्द्यञ्च जायते ॥ १,१६०.५ ॥

नाभिबस्तियकृत्प्लीहक्लोमहृत्कुक्षिवङ्क्षणि ।
हृदये वेपमाने तु तत्रतत्रातितीव्ररुक् ॥ १,१६०.६ ॥

श्यामारुणशिरोत्थानपाको विषमसंस्थितिः ।
संज्ञाच्छेदभ्रमानाहस्यन्दसर्पणशब्दवान् ॥ १,१६०.७ ॥

रक्तताम्रासितः पित्तात्तृण्मोहज्वरदाहवान् ।
क्षिप्तोत्थानप्रपाकश्च पाण्डुः कण्डूयुतः कफात् ॥ १,१६०.८ ॥

संक्लेशशीतकस्तम्भजृम्भारोचकगौरवाः ।
चिरोत्थानोऽविपाकश्च संकीर्णः सन्निपातजः ॥ १,१६०.९ ॥

सामर्थ्याच्चात्र विड्भेदो बाह्याभ्यन्तरलक्षणम् ।
कृष्णस्फोटावृतश्यामस्तीव्रदाहरुजाज्वरः ॥ १,१६०.१० ॥

पित्तलिङ्गोऽसृजा बाह्ये स्त्रीणामेव तथान्तरम् ।
शस्त्राद्यैरभिघातोत्थरक्तैश्च रोगकारणम् ॥ १,१६०.११ ॥

क्षतोत्थो वायुना क्षिप्तः स रक्तः पित्तमीरयन् ।
पित्तासृग्लक्षणं कुर्याद्विद्रधिं भूर्युपद्रवम् ॥ १,१६०.१२ ॥

तेनोपद्रवभेदश्च स्मृतोऽधिष्ठानभेदतः ।

नाभौ हि ध्मातं चेद्बस्तौ मूत्रकृच्छ्रञ्चजायते ॥ १,१६०.१३ ॥

श्वासप्रश्वासरोधश्च प्लीहायामतितृट्परम् ।
गलरोधश्च क्लोम्नि स्यात्सर्वाङ्गप्ररुजा हृदि ॥ १,१६०.१४ ॥

प्रमोहस्तमकः कासौ हृदयोद्घट्टनन्तथा ।
कुक्षिपार्श्वान्तरे चैव कुक्षौ दोषोपजन्म च ॥ १,१६०.१५ ॥

तथा चेदूरुसन्धौ च वङ्क्षणे कटिपृष्ठयोः ।
पार्श्वयोश्च व्यथा पायौ पवनस्य निरोधनम् ॥ १,१६०.१६ ॥

आमपक्वविदग्धत्वं तेषां शोथवदादिशेत् ।
नाभेरूर्ध्वमुखात्पक्वात्प्रद्रवन्त्यपरे गुदात् ॥ १,१६०.१७ ॥

गुदास्तनाभिजे विद्याद्दोषक्लेदोच्चविद्रधौ ।
कुरुते स्वाधिष्ठानस्य विवर्तं सन्निपातजः ॥ १,१६०.१८ ॥

पक्वो हि नाभिवस्तिस्थो भिन्नोऽन्तर्बहिरेव वा ।
पाकश्चान्तः प्रवृद्धस्य क्षीणस्योपद्रवार्दितः ॥ १,१६०.१९ ॥

विद्रधिश्च भवेत्तत्र पापानां पापयोषिताम् ।
मृते तु गर्भगे चैव सम्भवेच्छवयथर्घनः ॥ १,१६०.२० ॥

स्तने समत्थे दुःखं वा बाह्यविद्रधिलक्षणम् ।
नारीणां सूक्ष्मरक्तत्वात्कन्यायान्तु न जायते ॥ १,१६०.२१ ॥

क्रुद्धो रुद्धगतिर्वायुः शेफमूलकरो?हि सः ।
मुष्कवङ्क्षणतः प्राप्य फलकोषातिवाहिनीम् ॥ १,१६०.२२ ॥

आपीड्य धमनीवृद्धिं करोति फलकोषयोः ।
दोषो मेदःसु तत्रास्ते सवृद्धिः सप्तधा गदः ॥ १,१६०.२३ ॥

मूत्रन्तयोरप्यनिलाद्बाह्ये वाभ्यन्तरे तथा ।
वातपूर्णः खरस्पर्शो रूक्षो वाताच्च दाहकृत् ॥ १,१६०.२४ ॥

पक्वोदुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान् ।
कफात्तीव्रो गुरुः स्निग्धः कण्डूमान्कठिनोऽल्परुक् ॥ १,१६०.२५ ॥

कृष्णः स्फोटावृतः पिण्डों वृद्धिलिङ्गश्च रक्ततः ।
कफवन्मेदसां वृद्धिर्मृदुतालफलोपमः ॥ १,१६०.२६ ॥

मूत्रधारणशीलस्य मूत्रजस्तत्र गच्छतः ।

अलोभः पूर्णधृतिमान्क्षोभं याति सरन्मृदु ॥ १,१६०.२७ ॥

मूत्रकृच्छ्रमधस्ताच्च वलयः फलकोषयोः ।
वातकोपिभिसहारैः शीततोयावगाहनैः ॥ १,१६०.२८ ॥

विण्मूत्रधारणाच्चैव विषमाङ्गविचेष्टनैः ।
क्षोभितैः क्षोभितौजाश्च क्षीणान्तर्देहिनो यदा ॥ १,१६०.२९ ॥

पवनो विगुणीभूय शोणितं तदधोनयेत् ।
कुर्यात्ततत्क्षणसन्धिस्थो ग्रन्थ्याभः श्वयथुस्तदा ॥ १,१६०.३० ॥

उपेक्ष्यमाणस्य च गुल्मवृद्धिमाध्मानरुग्वै विविधाश्च रोगाः ।
सुपीडितोऽन्तः स्वनवान् प्रयाति प्रध्मापयन्नेति पुनश्च मूर्ध्नि ॥ १,१६०.३१ ॥

रक्तवृद्धिरसाध्येऽयं वातवृद्धिसमाकृतिः ।
रूक्षकृष्णारुणशिरा ऊर्णावृतगवाक्षवत् ॥ १,१६०.३२ ॥

वातोऽष्टधा पृथदौषैः संस्पृष्टैर्निचयं गतः ।
आर्तवस्य च दोषेण नारीणां जायतेऽष्टमः ॥ १,१६०.३३ ॥

ज्वरमूर्छातिसारैश्च वमनाद्यैश्च कर्मभिः ।
कर्शितो बलवान्याति शीतार्तश्च बुभुक्षितः ॥ १,१६०.३४ ॥

यः पिबत्यन्नपानानि लङ्घनप्लावनादिकम् ।
सेवते हीनसंज्ञाभिरर्दितः समुदीरयन् ॥ १,१६०.३५ ॥

स्नेहस्वेदावनभ्यस्य शोषणं वा निषेवयेत् ।
शुद्धो वा सुद्धिहानिर्वा भजेत स्पन्दनानि वा ॥ १,१६०.३६ ॥

वातोल्बणास्तस्य मलाः पृथक्चैव हि तेऽथवा ।
सर्वो रक्तयुतो वाताद्देहस्नोतोऽनुसारिणः ॥ १,१६०.३७ ॥

ऊर्ध्वाधोमार्गमावृत्य वायुः शूलं करोति वै ।
स्पर्शोपलभ्यं गुल्मोत्थमुष्णं ग्रन्थिस्वरूपिणम् ॥ १,१६०.३८ ॥

कर्षणात्कफविड्घातैर्मार्गस्यावरणेन वा ।
वायुः कृताश्रयः कोष्ठे रौक्ष्यात्काठिन्यमागतः ॥ १,१६०.३९ ॥

स्वतन्त्रः स्वाश्रये दुष्टः परतन्त्रः पराश्रये ।
ततः पिण्डकवच्छलेष्मा मलसंसृष्ट एव च ॥ १,१६०.४० ॥

गुलम इत्युच्यते बस्तिनाभिहृत्पार्श्वसंश्रयः ।

वातजन्ये शिरः शूलज्वर प्लीहान्त्रकूजनम् ॥ १,१६०.४१ ॥

वेधः सूच्येव विड्भ्रंशः कृच्छ्रे मूत्रं प्रवर्तते ।
गात्रे मुखे पदे शोथः हयग्निमान्द्यं तथैव च ॥ १,१६०.४२ ॥

रूक्षकृष्णत्वगादित्वं चलत्वादनिलस्यच ।
अनिरूपितसंस्थानो विविधाञ्जनयेद्व्यथाम् ॥ १,१६०.४३ ॥

पिपीलिकाव्याप्त इव गुल्मः स्फुरति नुद्यते ।
पित्ताद्दाहाम्लकौ मूर्छा विड्भेदः स्वेदतृड्ज्वराः ॥ १,१६०.४४ ॥

हारिद्रयं सर्वगात्रेषु गुल्माच्छोथस्य दर्शनम् ।
हीयते दीप्यते श्लेष्मा स्वस्थानं दहतीवच ॥ १,१६०.४५ ॥

कफात्स्तैमित्यमरुचिः सदनं शिरसि ज्वरः ।
पीनसालस्यहृल्लासौ शुक्लकृष्णत्वगादिता ॥ १,१६०.४६ ॥

गुल्मो गभीरः कठिनो गुरुर्गर्भस्थबालवत् ।
स्वस्थानस्था अधावन्तस्तत एवात्र मारकाः ॥ १,१६०.४७ ॥

प्रायस्तु यत्तद्द्वन्द्वोत्था गुल्माः संसृष्टमैथुनाः ।
सर्वजस्तीव्ररुग्दाहः शीघ्रपाकी घनोन्नतः ॥ १,१६०.४८ ॥

सोऽसाध्यो रक्तगुल्मस्तु स्त्रिया एव प्रजायते ।
ऋतौ या चैव शूलार्ता यति वा योनिरोगिणी ॥ १,१६०.४९ ॥

सेवते वानिलांश्च स्त्री क्रुद्धस्तस्याः समीरणः ।
निरुध्यात्यार्तवं योन्यां प्रतिमासं व्यवस्थितम् ॥ १,१६०.५० ॥

सुक्षौ करोति तद्गर्भे लिङ्गमाविष्करोति च ।
हृल्लासदौहृदस्तन्यदर्शनं कामचारिता ॥ १,१६०.५१ ॥

क्रमेण वायोः संसर्गात्पित्तं योनिषु सञ्चयम् ।
रक्तस्य कुरुते तस्या वातपित्तोक्तगुल्मजान् ॥ १,१६०.५२ ॥

गर्भाशये च सुतरां शूलांश्चैवासृगाश्रये ।
योनिस्त्रावश्च दौर्गन्ध्यं भूयः स्यन्दनवेदने ॥ १,१६०.५३ ॥

कदापि गर्भवद्गुल्मः सर्वे ते रतिसम्भवाः ।
पाकञ्चिरेण भजते नैधते विद्रधिः पुनः ॥ १,१६०.५४ ॥

पच्यते शीघ्रमत्यर्थं दुष्टरक्ताश्रयस्तु सः ।

अतः शीघ्रं विदाहित्वाद्वद्रधिः सोऽभीधीयते ॥ १,१६०.५५ ॥

गुल्मान्तारश्रये बस्तिदाहश्च प्लीहवेदना ।
अग्निवर्णबलभ्रंशो वेगानां वा प्रवर्तनम् ॥ १,१६०.५६ ॥

अतो विपर्यये बाह्यकोष्ठाङ्गेषु च नातिरुक् ।
वैवर्ण्यमथ वा कासो बहिरुन्नतताधिकम् ॥ १,१६०.५७ ॥

साटोपमत्युग्ररुजमाध्मानमुदरे भृशम् ।
ऊर्ध्वाधो वातरोधेन तमानाहं प्रचक्षते ॥ १,१६०.५८ ॥

धनश्चाष्ठ्युपमो ग्रन्थिलोऽष्ठीलातु समुन्नता ।
समस्तालिङ्गसंयुक्तः प्रत्यष्ठीला तदाकृतिः ॥ १,१६०.५९ ॥

पक्वशयोद्भवोऽप्येवं वायुस्तीव्ररुजाश्रयात् ।
उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वान्त्रविकूजनानि ॥ १,१६०.६० ॥

आचोपमाध्मानमपक्तिशक्तिः आसन्नगुल्मस्य भवेच्च चिह्नम् ॥ १,१६०.६१ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विद्रधिगुल्मनिदान नाम षष्ट्युत्तरशततमोध्यायः

श्रीगरुडमहापुराणम् १६१
धन्वन्तरिरुवाच ।
उदराणां निदानञ्च वक्ष्ये सुश्रुत तच्छृणु ।
रोगाः सर्वेऽपि मन्दाग्नौ सुतरामुदराणि तु ॥ १,१६१.१ ॥

अनीर्णामयाश्चाप्यन्ये जायन्ते मलसंचयात् ।
ऊर्ध्वाधो वायवो रुद्ध्वा व्याकुलाविप्रवाहिणी? ॥ १,१६१.२ ॥

प्राणानपानान्संदूष्य कुर्युस्तान्मांससन्धिगान् ।
आध्माप्य कुक्षिमुदरमष्टधा ते च भेदतः ॥ १,१६१.३ ॥

पृथग्दोषैः समस्तौश्च प्लीहवङ्क्षक्षतोदकैः ।
तेनार्ताः शुष्कताल्वोष्ठाः सर्वपादकरोदराः ॥ १,१६१.४ ॥

नष्टचेष्टबलाहाराः कृतप्रध्मात्कुक्षयः ।
पुरुषाः स्युः प्रेतरूपा भाविनस्तस्य लक्षणम् ॥ १,१६१.५ ॥

क्षुन्नाशोऽरुचिवत्सर्वं सविदाहञ्च पच्यते ।
जीर्णान्नं यो न जानाति सोऽपथ्यं सेवतेनरः ॥ १,१६१.६ ॥

क्षीयते बलमङ्गस्य श्वसित्यल्पोऽविचेष्टितः ।
विषयावृत्तिबुद्धिश्च शोकशोषादयोऽपिच ॥ १,१६१.७ ॥

रुग्बस्तिसन्धौ सततं लघ्वल्पभोजनैरपि ।
जराजीर्णो बलभ्रंशो भवेज्जठररोगिणः ॥ १,१६१.८ ॥

स्वतन्त्रतन्द्रालसता मलसर्गोऽल्पवह्निता ।
दाहः श्वयथुराध्मानमन्त्रे सलिलसम्भवे ॥ १,१६१.९ ॥

सर्वत्र तोये मरणं शोचनं तत्र निष्फलम् ।
गवाक्षवच्छिराजालैरुदरं गुड्गुडायते ॥ १,१६१.१० ॥

नाभिमन्त्रश्च विष्टभ्य वेगं कृत्वा प्रणश्यति ।
मारुते हृत्कटीनाभिपायुवङ्क्षणवेदनाः ॥ १,१६१.११ ॥

सशब्दो निः सरेद्वायुर्वहते मूत्रमल्पकम् ।
नातिमात्रं भवेल्लौल्यं नरस्य विरसं मुखम् ॥ १,१६१.१२ ॥

तत्रवातोदरे शोथः पाणिपान्मुखकुक्षिषु ।
कुक्षिपार्श्वोदरकटीपृष्ठरुक्पर्वभदनम् ॥ १,१६१.१३ ॥

शुष्ककासाङ्गमर्दाधोगुरुतामलसंग्रहः ।

श्यामारुणत्वगादित्वं मुखे च रसवद्विता ॥ १,१६१.१४ ॥

सतोदभेदमुदरं नीलकृष्णशिराततम् ।
आध्मातमुदरे शब्दमद्भुतं वा करोति सः ॥ १,१६१.१५ ॥

वायुश्चात्र सरुक्च्छब्दं विधत्ते सर्वथा गतिम् ।
पित्तोदरे ज्वरो मूर्छा दाहित्वं कटुकास्यता ॥ १,१६१.१६ ॥

भ्रमोतिसारः पीतत्वं त्वगादावुदरं हरित् ।
पीतताम्रशिरादित्वं सस्वेदं सोष्म दह्यते ॥ १,१६१.१७ ॥

धूमायते मृदुस्पर्शं क्षैप्रपाकं प्रदूयते ।
श्लेष्मोदरेषु सदनं स्वेदश्वयथुगौरवम् ॥ १,१६१.१८ ॥

निद्रा क्लेशोऽरुचिः श्वासः काशः शुक्लत्वगादिता ।
उदरं तिमिरं स्निग्धं शुक्लकृष्णशिरावृतम् ॥ १,१६१.१९ ॥

नीरातिवृद्धौ कठिनं शीतस्पर्शं गुरु स्थिरम् ।
त्रिदोषकोपने तैस्तैस्त्रिदोषजीनैतर्मलैः ॥ १,१६१.२० ॥

सर्वदूषणदुष्टाश्च सरक्ताः सञ्चिता मलाः ।
कोष्ठं प्राप्य विकुर्वाणाः शोषमूर्छाभ्रमान्वितम् ॥ १,१६१.२१ ॥

कुर्युस्त्रिलिङ्गमुदरं शीघ्रपाकं सुदारुणम् ।
वर्धते तच्च सुतरां शीतवातप्रदर्शने ॥ १,१६१.२२ ॥

अत्यशनाच्च संक्षोभाद्यानपानादिचेष्ठितैः ।
अविहितैश्च पानाद्यैर्वमनव्याधिकर्षणैः ॥ १,१६१.२३ ॥

वामपार्श्वास्थितः प्लीहा त्युतस्थानो विवर्धते ।
शोणिताद्वा रसादिभ्यो विवृद्धो जनयेद्व्यथाम् ॥ १,१६१.२४ ॥

सोऽष्ठीला चातिकठिनः प्रोन्नतः कूर्मपृष्ठवत्? ।
क्रमेण वर्धमानश्च कुक्षौ व्याततिमाहरेत् ॥ १,१६१.२५ ॥

श्वासकासपिपासास्यवैरस्याध्मानकज्वरैः ।
पाण्डुत्वमूर्छाछर्दित्वग्दाहमोहैश्च संयुतः ॥ १,१६१.२६ ॥

अरुणाभं विचित्राभं नीलहारिद्रराजितम् ।
उदावर्तेन चानाहमोहतृड्दगहनज्वरैः ॥ १,१६१.२७ ॥

गौरवारुचिकाठिन्यैर्विघातभ्रमसंक्रमात् ।

प्लीहवद्दक्षिणात्पार्श्वात्कुर्याद्यकृदपि च्युतम् ॥ १,१६१.२८ ॥

पक्वे भूते यकृति च सदा बद्धमलो गुदे ।
दुर्नामभिरुदावर्तैरन्यैर्वा पीडितो भवेत् ॥ १,१६१.२९ ॥

वर्चः पित्तकफान्बद्धान्करोति कुपितोऽनिलः ।
अपानो जठरे तेन संरुद्धो ज्वररुक्करः ॥ १,१६१.३० ॥

काशश्वासोरुसद्गनं शिरोरुङ्नाभिपार्श्वरुक् ।
मलासंगोऽरुचिश्छर्दिरुदरे मलमारुतः ॥ १,१६१.३१ ॥

स्थिरनीलारुणशिराजालैरुदरमावृतम् ।
नाभेरुपरि च प्रायो गोपुच्छाकृति जायते ॥ १,१६१.३२ ॥

अस्थ्यादिशल्यै रन्यैश्च विद्धे चैवोदरे तथा ।
पच्यते यकृतादिश्च तच्छिद्रैश्च सरन्बहिः ॥ १,१६१.३३ ॥

आम एव गुदाहेति ततोऽल्पाल्पः शकृद्रसः ।
स स्याद्विकृतगन्धोऽपि पिच्छिलः पीतलोहितः ॥ १,१६१.३४ ॥

शेषश्चापूर्य जठरं घोरमारभते ततः ।
वर्धते तदधो नाभेराशु चैति जलात्मताम् ॥ १,१६१.३५ ॥

उद्रिक्ते दोषरूपे च व्याप्ते च श्वासतृट्भ्रमैः ।
छिद्रोदरमिदं प्राहुः परिस्त्रावीति चापरे ॥ १,१६१.३६ ॥

प्रवृत्तस्नेहपानादेः सहसापथ्यसेविनः ।
अत्यम्बुपानान्मन्दाग्नेः क्षीणस्यातिकृशस्य च ॥ १,१६१.३७ ॥

रुद्धः स्वमार्गादनिलः कफश्च जलमूर्छितः ।
वर्धते तु तदेवाम्बु तन्मात्राद्विन्दुराशितः ॥ १,१६१.३८ ॥

तत्कोपादुदरं तृष्णागुदस्नुतिरुजान्वितम् ।
काशश्वासारुचियुतं नानावर्णाशिराततम् ॥ १,१६१.३९ ॥

तोयपूर्णान्मृदुस्पर्शात्सद्दशक्षोभवेपथु ।
बकोदरं स्थिरंस्निग्धं नाडीमावृत्य जायते ॥ १,१६१.४० ॥

उपेक्षायाञ्च सर्वेषां स्वस्थानां परिचालिताः ।
पाका द्रवा द्रवीकुर्युः सन्धिस्रोतोमुखान्यपि ॥ १,१६१.४१ ॥

स्वेदे चैव तु संरुद्धे मूर्छिताश्चान्तरस्थिताः ।

तदेवोदरमापूर्य कुर्यादुदरामयम् ॥ १,१६१.४२ ॥

गुरूदरं स्थितं वृत्तमाहतञ्च न शब्दकृत् ।
हीनबलं तथा घोरं नाड्यां स्पृष्टञ्च सपति ॥ १,१६१.४३ ॥

शिरान्तर्धानमुदरे सर्वलक्षणमुच्यते ।
वातपित्तकफप्लीहसन्निपातोदकोदरम् ॥ १,१६१.४४ ॥

पक्षाच्च जातसलिलं विष्टम्भोपद्रवान्वितम् ।
जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ॥ १,१६१.४५ ॥

इति श्रीगारुडे महापुराण्मे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकषष्ट्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १६२
धन्वन्तरिरुवाच ।
पाण्डुशोथनिदानञ्च शृणु सुश्रत वच्मि ते ।
पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः ॥ १,१६२.१ ॥

नत्रानिलेन बलिना क्षिप्ताक्षिप्तं यदि स्थितम् ।
धमनीर्दशमीः प्राप्य व्याप्नुवन्सकलां तनुम् ॥ १,१६२.२ ॥

त्वगसृक्छलेष्ममांसानि प्रदूष्यन्नसमाश्रितम् ।
त्वङ्मांसयोस्तु कुरुते त्वचि वर्णान् पृथग्विधान् ॥ १,१६२.३ ॥

स्वयं हरिद्रा हारिद्रं पाण्डुत्वं तेषु चाधिकम् ।
यातोऽयं प्रहतेदुग्रः स रोगस्तेन गौरवम् ॥ १,१६२.४ ॥

धातूनां स्पर्शशैथिल्यमामजश्च गुणक्षयः ।
ततोऽल्परक्तमेदोऽस्थिनिः सारः स्याच्छलथेन्द्रियः ॥ १,१६२.५ ॥

शीर्यमाणैरिवाङ्गैस्तु द्रवता हृदयेन च ।
शूलोक्षिकूटवदने स्तैमित्यं तत्र लालया ॥ १,१६२.६ ॥

हीनतृट्शिशिरद्वेषी शीर्णलोभो हतानलः ।
मन्दशक्तिर्ज्वरी श्वासी कर्णशूली तथा भ्रमी ॥ १,१६२.७ ॥

स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात् ।
प्राग्रूपमस्य हृदयस्पन्दनं रूक्षता त्वचि ॥ १,१६२.८ ॥

अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पमृत्रता ।
मेदः समानिलात्तत्र गाढरुक्क्लेदगात्रता ॥ १,१६२.९ ॥

कृष्णेक्षणं कृष्णशिरानखविण्मूत्रनेत्रता ।
शोथो नासास्यवैरस्यं विट्शोषः पार्श्वमूर्छना ॥ १,१६२.१० ॥

पित्ते हरितपित्ताभः शिरादिषु ज्वरस्तमः ।
तृट्शोषमूर्छादौर्गन्ध्यं शीतेच्छा कटुवक्रता ॥ १,१६२.११ ॥

विड्भेदश्चाम्लको दाहः कफाच्च हृदयार्द्रता ।
तन्द्रा लवणवक्रत्वं रोमहर्षः स्वरक्षयः ॥ १,१६२.१२ ॥

काशश्छर्दिश्च निचयान्नष्टलिङ्गोऽतिदुः सहः ।
उत्कृष्टेनिलपित्ताभ्या कटुर्वा मधुरः कफः ॥ १,१६२.१३ ॥

दूषयित्वा वसादींश्च रौक्ष्याद्रक्तविमोक्षणम् ।

स्रोतसां संक्षयं कुर्यादनुरुध्य च पूर्ववत् ॥ १,१६२.१४ ॥

पाण्डुरोगेक्षयेजाते नाभिपादास्यमेहनम् ।
पुरीषं कृमिवन्मुञ्चेद्भिन्नं सास्त्रं कफान्वितम् ॥ १,१६२.१५ ॥

यः पित्तरोगी सेवेत पित्तलं तस्य कामलम् ।
कोष्ठशा खोद्गतं पित्तं दग्ध्वासृङ्मांसमाहरेत् ॥ १,१६२.१६ ॥

हारिद्रमूत्रनेत्रत्वं मुखं रक्तं शकृत्तथा ।
दाही विपाकतृष्णावान् भेकाभो दुर्बलेन्द्रियः ॥ १,१६२.१७ ॥

भवेत्पित्तानुगः शोथः पाण्डुरोगावृतस्य च ।
उपेक्षया च शोथाद्याः सकृच्छ्राः कुम्भकामलाः ॥ १,१६२.१८ ॥

हरितश्यामपित्तत्वे पाण्डुरोगो यदा भवेत् ।
वातपित्ते भ्रमस्तृष्णा स्त्रीषु हर्षो मृदुज्वरः ॥ १,१६२.१९ ॥

तन्द्रा वा चानलभ्रंशस्तं वदन्ति हलीमकम् ।
आलस्यञ्चातिभवति तेषां पूर्वमुपद्रवः ॥ १,१६२.२० ॥

शोथः प्रधानः कथितः स एवातो निगद्यते ।
पित्तरक्तकफान्वायुर्दुष्टो दुष्टान्बहिः शिराः ॥ १,१६२.२१ ॥

नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम् ।
उत्सेधं संहतं शोथं तमाहुर्निचयादतः ॥ १,१६२.२२ ॥

सर्वहेतुविशषैस्तु रूपभेदान्नवात्मकम् ।
दोषैः पृथग्विधैः सर्वैरभिघाताद्विषादपि ॥ १,१६२.२३ ॥

तदेव नीयमानन्तु सर्वाङ्गे कामजम्भवेत् ।
पृथून्नताग्रग्रथितैर्विशेषैश्च त्रिधा विदुः ॥ १,१६२.२४ ॥

सामान्यहेतुः शोथानां दोषजातो विशेषतः ।
व्याधिः कर्मोपवासादिक्षीणस्य भवति द्रुतम् ॥ १,१६२.२५ ॥

अतिमात्रं यदासेवेद्गुरुमत्यन्तशीतलम् ।
लवणक्षारतीक्ष्णाम्लशाकाम्बुस्वप्नजागरम् ॥ १,१६२.२६ ॥

रोधो वेगस्य वल्लूरमजीर्णश्रममैथुनम् ।
पच्यते मार्गगमनं यानेन क्षोभिणापि वा ॥ १,१६२.२७ ॥

श्वासकासातिसारार्शोजठरप्रदरज्वराः ।

विष्टम्भालस्यकच्छर्दिहिक्कापाण्डुविसर्पकम् ॥ १,१६२.२८ ॥

ऊर्ध्वशोथमधो बस्तौ मध्ये कुर्वन्ति मध्यगाः ।
सर्वाङ्गगः सर्वगतः प्रत्यप्रत्यगेति तदाश्रयः ॥ १,१६२.२९ ॥

तत्पूर्वरूपं क्षवथुः शिरायामङ्गगौरवम् ।
वाताच्छोथश्चलो रूक्षः खररोमारुणोऽसितः ॥ १,१६२.३० ॥

शङ्खबस्त्यन्त्रशोफर्तिमेदोभेदाः प्रसुप्तिता ।
वातोत्तानः क्लमः शीघ्रमुन्नमेत्पीडितां तनुम् ॥ १,१६२.३१ ॥

सिग्धस्तु मर्दनैः शाम्येद्रात्रावल्पो दिवा महान् ।
त्वक्सर्षपविलिप्ते च तस्मिंश्चिमिचिमायते ॥ १,१६२.३२ ॥

पीतरक्तासिंताभासः पित्तजातश्च शोषकृत् ।
शीघ्रं नासौ वा प्रशमेन्मध्ये प्राग्दहते तनुम् ॥ १,१६२.३३ ॥

सतृट्दाहज्वरस्वेदो भ्रमक्लोदमदभ्रमाः ।
साभिलाषी शकृद्भेदो गन्धः स्पर्शसहो मृदुः ॥ १,१६२.३४ ॥

कण्डूमान्पाण्डुरोमा त्वक्कठिनः शीतलो गुरुः ।
स्निग्धःश्लक्ष्णः स्थिरः शूलो निद्राच्छर्द्यग्निमान्द्यकृत् ॥ १,१६२.३५ ॥

आघातेन च शस्त्रादिच्छेदभेदक्षतादिभिः ।
हिमानिलैर्दध्यनिलैर्भल्लातकपिकच्छजैः ॥ १,१६२.३६ ॥

रसैः शुष्कैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान् ।
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ॥ १,१६२.३७ ॥

विषजः सविषप्राणिपरिसर्पणमूत्रणात् ।
दंष्ट्रादन्तनखाघातादविषप्राणिनामपि ॥ १,१६२.३८ ॥

विण्मूत्रशुक्रोपहतमलवद्वस्तुसंङ्करात् ।
विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥ १,१६२.३९ ॥

मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः ।
नवोऽनुपद्रवः शोथः साध्योऽसाध्यः पुरेरितः ॥ १,१६२.४० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पाण्डुसोथनिदानं नाम द्विषष्ट्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १६३
धन्वन्तीररुवाच ।
विसर्पादिनिदानन्ते वक्ष्ये सुश्रुत तच्छृणु ।
स्याद्विसर्पो विघातात्तु दोषैर्दुष्टैश्च शोथवत् ॥ १,१६३.१ ॥

अधिष्ठानञ्च तं प्राहुर्बाह्यं तत्र भयाच्छ्रमात् ।
यथात्तरञ्च दुः साध्यस्तत्र दोषो यथायथम् ॥ १,१६३.२ ॥

प्रकोपनैः प्रकुपिता विशेषेण विदाहिभिः ।
देहे शीघ्रं विशन्तीह तेऽन्तरे हि स्थिता बहिः ॥ १,१६३.३ ॥

तृष्णाभियोगाद्वेगानां विषमाच्च प्रवर्तनात् ।
आशु चाग्निबलभ्रंशादतो बाह्यं विसर्पयेत् ॥ १,१६३.४ ॥

तत्र वातात्स वीसर्पो वातज्वरसमव्यथः ।
शोथस्फुरणनिस्तोदभेदायासार्तिहर्षवान् ॥ १,१६३.५ ॥

पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ।
कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ॥ १,१६३.६ ॥

सन्निपातसमुत्थाश्च सर्वलिङ्गसमन्विताः ।
स्वदोषलिङ्गैश्चीयन्ते सर्वैः स्फोटैरुपेक्षिताः ।
तेऽपि स्वेदान्विमुञ्चति बिभ्रतो व्रणलक्षणम् ॥ १,१६३.७ ॥

वातपित्ताज्ज्वरच्छर्दिमूर्छातीसारतृड्भ्रमैः ।
गन्थिभेदाग्निसदनतमकारोचकैर्युतः ॥ १,१६३.८ ॥

करोति सर्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत् ।
यंयं देशं विसर्पश्च विसर्पति भवेत्ससः ॥ १,१६३.९ ॥

शान्ताङ्गारासितो नीलो रक्तो वासु च चीयते ।
अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद्द्रुतं स च ॥ १,१६३.१० ॥

मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः ।
व्यथतेऽङ्गं हरेत्संज्ञां निद्राञ्च श्वासमीरयेत् ॥ १,१६३.११ ॥

हिक्काञ्च स गतोऽवस्थामीदृशीं लभते नरः ।
क्वचिन्मर्मारतिग्रस्तो भूमिशय्यासनादिषु ॥ १,१६३.१२ ॥

चेष्टमानस्ततः क्लिष्टो मनोदेहप्रमोहवान् ।
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ॥ १,१६३.१३ ॥

कफेन रुद्धः पवनो भित्त्वातं बहुधा कफम् ।
रक्तं वा वृद्धरक्तस्य त्वक्छिरास्नायुमांसगम् ॥ १,१६३.१४ ॥

दूषयित्वा तु दीर्घानुवृत्तस्थूलखरात्मिकाम् ।
ग्रन्थीनां कुरुते मालां सरक्तान्तीव्ररुग्ज्वराम् ॥ १,१६३.१५ ॥

श्वासकासातिसारास्यशोषहिक्कावमिभ्रमैः ।
मोहवैवर्ण्यमूर्छाङ्गभङ्गग्निसदनैर्युताम् ।
इत्ययं ग्रन्थिवीसर्पः कफमारुतकोपजः ॥ १,१६३.१६ ॥

कफपित्ताज्ज्वरः स्तम्भो निद्रा तन्द्रा शिरोरुजा ।
अङ्गावसादविक्षेपौ प्रलापारोचकभ्रमाः ॥ १,१६३.१७ ॥

मूर्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ।
आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ १,१६३.१८ ॥

प्रायेणामाशयं गृह्णन्नेकदेशं न चातिरुक् ।
पीडकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः ॥ १,१६३.१९ ॥

स्निग्धनोऽसितो मेचकाभो मलिनः शोथवान्गुरुः ।
गम्भीरपाकः प्रायोष्मस्पृष्टः क्लिन्नोंऽवदीर्यते ॥ १,१६३.२० ॥

पक्ववच्छीर्णमांसश्च स्पष्टस्नायुशिरागणः ।
सर्वगो लक्षणैः सर्वैः सर्वगत्वक्समर्पणः ।
शवगन्धी च वीसर्पः कर्दमाख्यमुशन्ति तम् ॥ १,१६३.२१ ॥

बाह्यहेतोः क्षतात्क्रुद्ध्वः सरक्तं पित्तमीरयन् ।
वीसर्पं मारुतः कुर्यात्कुलत्थसदृशैश्चितम् ॥ १,१६३.२२ ॥

स्फोटैः शोथज्वररुजादाहाढ्यं श्यावशोणितम् ।
पथग्दोषैस्त्रयः साध्या द्वन्द्वजाश्चानुपद्रवाः ॥ १,१६३.२३ ॥

असाध्याः कृतसर्वोत्थाः सर्वे चाक्रान्तमर्मणः ।
शीर्णस्नायुशिरामांसाः क्लिन्नाश्चशवगन्धयः ॥ १,१६३.२४ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वीसर्पनिदानं नाम त्रिपष्ट्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १६४

धन्वन्तरिरुवाच ।

मिथ्याहारविहारेण विशेषेण विरोधिना ।
साधुनिन्दावधाद्युद्धहरणाद्यैश्च सेवितैः ॥ १,१६४.१ ॥

पाप्मभिः कर्मभिः सद्यः प्राक्तनैः प्रेरितामलाः ।
शिराः प्रपद्य तैर्युक्तास्त्वग्वसारक्तमामिषम् ॥ १,१६४.२ ॥

दूषयन्ति च संशोष्य निश्चरन्तस्ततो बहिः ।
त्वचः कुर्वान्ति वैवर्ण्यं शिष्टाः कुष्ठमुशन्तितम् ॥ १,१६४.३ ॥

कालेनोपेक्षितं यत्स्यात्सर्वं कोष्ठानि तद्वपुः ।
प्रपद्य धातून्बाह्यान्तः सर्वान्संक्लेद्य चावहेत् ॥ १,१६४.४ ॥

सस्वेदक्लेदसङ्कोचान्कृमीन् सूक्ष्मांश्चदारुणान् ।
लोमत्वक्स्नायुधमनीराक्रामति यथाक्रमम् ॥ १,१६४.५ ॥

भस्माच्छादितवत्कुर्याद्बाह्यं कुष्ठमुदाहृतम् ।
कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः ॥ १,१६४.६ ॥

सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकस्ततः ।
वातेन कुष्ठं कापालं पित्तेनौदुम्बरं कफात् ॥ १,१६४.७ ॥

मण्डलाख्यं विचर्चो च ऋष्याख्यं वातपित्तजम् ।
चर्मैककुष्ठं किटिमं सिध्मालसविपादिकाः ॥ १,१६४.८ ॥

वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रूशतारुषी ।
पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा ॥ १,१६४.९ ॥

सर्वेभ्यः काकणं पूर्वत्रिकं दद्रु सकाकणम् ।
पुण्डरीकर्यजिह्वे च महाकुष्ठानि सप्त तु ॥ १,१६४.१० ॥

अतिश्लक्ष्णखरस्पर्शस्वेदास्वेदविवर्णताः ।
दाहः कण्डूस्त्वचि स्वापस्तोदः कोचोन्नतिस्तमः ॥ १,१६४.११ ॥

व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽतिकोपनम् ॥ १,१६४.१२ ॥

रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ।
कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ॥ १,१६४.१३ ॥

विस्तृताकृतिपर्यस्तन्दूषितैर्लोमभिश्चितम् ।

कापालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम् ॥ १,१६४.१४ ॥

उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत् ।
वर्तुलं बहुलकेत्युक्तं दाहरुजाधिकम् ॥ १,१६४.१५ ॥

असंच्छन्नमदरणं कृमिवत्स्यादुदुम्बरम् ।
स्थिरं सत्यानं गुरु स्निग्धं श्वेतरक्तं मलान्वितम् ॥ १,१६४.१६ ॥

अन्योन्यसक्तपुच्छूनबहुकण्डूस्नुतिकृमि ।
श्लक्ष्णपीताभासंयुक्तं मण्डलं परिकीर्तितम् ॥ १,१६४.१७ ॥

सकण्डूपिटिका श्यावा सक्लेदा च विचर्चिका ।
परुषन्तत्ररक्तान्तमन्तः श्यामं समुन्नतम् ॥ १,१६४.१८ ॥

ऋष्यजिह्वाकृतिप्रोक्तं ऋष्यजिह्वं बहुक्रिमि ।
हस्तिचर्मखरस्पर्शं चर्माख्यं कुष्ठमुच्यते ॥ १,१६४.१९ ॥

अस्वेदञ्चमत्स्यशल्कसन्निभं किटिमं पुनः ।
रूक्षाग्निवर्णं दुः स्पर्शं कण्डूमत्परुषासितम् ॥ १,१६४.२० ॥

अन्ता रूक्षं बहिः स्निग्धमन्तर्घृष्टं रजः किरेत् ।
श्लक्ष्णस्पर्शं तनु स्निग्धं स्वच्छमस्वेदपुष्पवत् ॥ १,१६४.२१ ॥

प्रायेण चोर्ध्वकार्श्यञ्च कुण्डैः कण्डूपरैश्चितम् ।
रक्तैरलंशुका पाणिपादे कुर्याद्विपादिका ॥ १,१६४.२२ ॥

तीव्रार्तिं गाढकण्डूञ्च सरागपिडिकाचितम् ।
दीर्घप्रतानदूर्वावदतसीकुसुमच्छवि ॥ १,१६४.२३ ॥

उच्छूनमण्डलो दद्रुः कण्डूमानिति कथ्यते ।
स्थूलमूलं सदाहार्ति रक्तस्त्रावं बहुव्रणम् ॥ १,१६४.२४ ॥

सादहकक्लेदरुजं प्रायशः सर्वजन्म च ।
रक्ताक्तमण्डलं पाण्डु कण्डूदाहरुजान्वितम् ॥ १,१६४.२५ ॥

सोत्सेधमाचितं रक्तैः कञ्जपर्णमिवाम्बुभिः ।
पुण्डरीकं भवेत्तद्धि चितं स्फोटैः सितारुणैः ॥ १,१६४.२६ ॥

विस्फोटपिटिका पामा कण्डूक्लेदरुजान्विताः ।
सूक्ष्मा श्यामारुणा रूक्षा प्रायः स्फिक्पाणिकूर्परे ॥ १,१६४.२७ ॥

सस्फोटसंस्पर्शसहं कण्डूरक्तातिदाहवत् ।

रक्तदलं चर्मदलं काकणं तीव्रदाहरुक् ॥ १,१६४.२८ ॥

पूर्वरक्तञ्च कृष्णञ्च काकणं त्रिफलोपमम् ।
कृष्णलिङ्गैर्युतैः सर्वैः स्वस्वकारणतो भवेत् ॥ १,१६४.२९ ॥

दोषभेदाय विहितैरादिशेल्लिङ्गकर्मभिः ।
कुष्ठस्वदोषानुगतं सर्वदोषगतं त्यजेत् ॥ १,१६४.३० ॥

कुष्ठोक्तं यच्च यच्चास्थिमज्जाशुक्रसमाश्रयम् ।
कृच्छ्रं मेदोमतञ्चैव याप्यं स्नाप्वास्थिमांसगम् ॥ १,१६४.३१ ॥

अकृच्छ्रं कफवातोत्थं त्वग्गतं त्वमलञ्च यत् ।
तत्र त्वचि स्थिते कष्ठे काये वैवर्ण्यरूक्षाता ॥ १,१६४.३२ ॥

स्वेदतापश्वयथवः शोणिते पिशिते पुनः ।
पाणिपादाश्रिताः स्फोटाः क्लेशात्सन्धिषु चाधिकम् ॥ १,१६४.३३ ॥

दोषस्याभीक्ष्णयोगेन दलनं स्याच्च मेदसि ।
नातिसंज्ञास्ति मज्जास्थिनेत्रवेगस्वरक्ष्यः ॥ १,१६४.३४ ॥

क्षते च क्रिमिभिः शुक्रे स्वदारापत्यबाधनम् ।
यथापूर्वाणि सर्वाणि स्वलिङ्गानि मृगादिषु ॥ १,१६४.३५ ॥

कष्ठैकसम्भवं श्वित्रं किलासं दारुणं भवेत् ।
निर्दिष्टमपरिस्त्रावि त्रिधातूद्भवसंश्रयम् ॥ १,१६४.३६ ॥

वातादूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ।
सदाहं रोमविध्वंसि कफाच्छ्वेतं घन गुरु ॥ १,१६४.३७ ॥

सकण्डूरं क्रमाद्रक्तमांसमेदः सु चादिशेत् ।
वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥ १,१६४.३८ ॥

अशुक्लरोमबहुलमसंश्लिष्टं मिथो नवम् ।
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥ १,१६४.३९ ॥

गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तरम् ।
वर्जनीयं विशेषेण किलासं सिद्धिमिच्छिता ॥ १,१६४.४० ॥

स्पर्शैकाहारसंगादिसेवनात्प्रायशो गदाः ।
एकशय्यासनाच्चैव वस्त्रमाल्यानुलेपनात् ॥ १,१६४.४१ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे कुष्ठरोगनिदान नाम चतुः षष्ट्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १६५
धन्वन्तरिरुवाच ।
क्रिमयश्च द्विधा प्रोक्ता बाह्यभ्यन्तरभेदतः ।
बहिर्मलकफासृग्विट्जन्मभेदाच्चतुर्विधाः ॥ १,१६५.१ ॥

नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः ।
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥ १,१६५.२ ॥

बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ।
द्विधा ते कोष्ठपिडिकाः कण्डूगण्डान्प्रकुर्वते ॥ १,१६५.३ ॥

कुष्ठैकहेतवोऽन्तर्जाः श्लेष्मजा बाह्यसम्भवाः ।
मधुरान्नगुडक्षीरदधिमत्स्यनवौदनैः ॥ १,१६५.४ ॥

कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ।
पृथुब्रध्ननिभाः केचित्केचिद्गण्डूपदोपमाः ॥ १,१६५.५ ॥

रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाणवः ।
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ॥ १,१६५.६ ॥

अन्त्रादा उदरावेष्टा हृदयादा महागुदाः ।
च्युरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते ॥ १,१६५.७ ॥

हृल्लासमास्यश्रवणमविपाकमरोचकम् ।
मूर्छाच्छर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ॥ १,१६५.८ ॥

रक्तवाहिशिरास्थानरक्तजा जन्तवोऽणवः ।
अपादा वृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शनाः ॥ १,१६५.९ ॥

केशादा रोमविध्वंसा रोमद्वीपा उदुम्बराः ।
षट्ते कुष्ठैककर्माणः सहसौरसमातरः ॥ १,१६५.१० ॥

पक्वाशये पुरीषोत्था जायन्तेऽथोविसर्पिणः ।
वृद्धास्ते स्युर्भवेयुश्च ते यदामाशयोन्मुखाः ॥ १,१६५.११ ॥

तदास्योद्गारनिः श्वामविड्गन्धानुविधायिनः ।
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥ १,१६५.१२ ॥

ते पञ्चनाम्ना क्रिमयः ककेरुकमकेरुकाः ।
सौसुरादाः सशूलाख्या लेलिहा जनयन्ति हि ॥ १,१६५.१३ ॥

वङ्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ।

रोमहर्षाग्निसदनं गुदकण्डूंर्विमार्गगाः ॥ १,१६५.१४ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे क्रिमिनिदानं नाम पञ्चषष्ठ्यधिकशततमोऽध्यायः

धन्वन्तरिरुवाच ।
वातव्याधिनिदानं ते वक्ष्ये सुश्रुत तच्छृणु ।
सर्वथानर्थकथने विघ्न एव च कारणम् ॥ १,१६६.१ ॥

अदृष्टदुष्टपवनशरीरमविशेषतः ।
स विश्वकर्मा विश्वात्मा विश्वरूपः प्रजापतिः ॥ १,१६६.२ ॥

स्रष्टा धाता विभुर्विष्णुः संहर्ता मृत्युरन्तकः ।
तद्वदुक्तं च यत्नेन यतितव्यमतः सदा ॥ १,१६६.३ ॥

तस्योक्ते दोषविज्ञाने कर्म प्राकृतवैकृतम् ।
समासव्यासतो दोषभेदानामवधार्य च ॥ १,१६६.४ ॥

प्रत्येकं पञ्चधा वीरो व्यापारश्चेह वैकृतः ।
तस्योच्यते विभागेन सनिदानं सलक्षणम् ॥ १,१६६.५ ॥

धातुक्षयकरैर्वायुः क्रुद्धो नातिनिषेव्यते ।
चतुः स्नोतोऽवकाशेषु भूयस्तान्येव पूरयेत् ॥ १,१६६.६ ॥

तेभ्यस्तु दोषपूर्णेभ्यः प्रच्छाद्य विवरं ततः ।
तव वायुः सकृत्क्रुद्धः शूलानाहान्त्रकूजनम् ॥ १,१६६.७ ॥

मलरोधं स्वरभ्रंशं दृष्टिपृष्ठकटिग्रहम् ।
करोत्येव पुनः काये कृच्छ्रानन्यानुपद्रवान् ॥ १,१६६.८ ॥

आमाशयोत्थवमथुश्वासकासविषूचिकाः ।
कण्डूपरोधघर्मादिव्याधीनूर्ध्वञ्च नाभितः ॥ १,१६६.९ ॥

श्रोत्रादीन्द्रियबाधां च त्वचि स्फोटनरूक्षताम् ।
चक्रेतीव्ररुजाश्वासगरामयविवर्णताः ॥ १,१६६.१० ॥

अन्त्रस्यान्तञ्च विष्टम्भमरुचिं कृशतां भ्रमम् ।
मांसमेदोगतग्रन्थिं चर्मादावुपकर्कशम् ॥ १,१६६.११ ॥

गुर्वङ्गन्तुद्यतेऽत्यर्थं दण्डमुष्टिहतं यथा ।
अस्थिस्थः सक्थिसन्ध्यस्थिशूलं तीव्रञ्च लक्षयेत् ॥ १,१६६.१२ ॥

मज्जस्थोऽस्थिषु चास्थैर्यमस्वप्नं यत्तदा रुजाम् ।
शुक्रस्य शीघ्रमुत्सङ्गसर्गान्विकृतिमेव वा ॥ १,१६६.१३ ॥

तत्तद्गर्भस्थशुक्रस्थः शिरस्याध्मानरिक्तताता ।

तत्र स्थानस्थितः कुर्यात्क्रुद्धः श्वयथुकृच्छ्रताम् ॥ १,१६६.१४ ॥

जलपूर्णदृतिस्पर्शं शोषं सन्धिगतोऽनिलः ।
सर्वाङ्गसंश्रयस्तोदभेदस्फुरणभञ्जनम् ॥ १,१६६.१५ ॥

स्तम्भनाक्षेपणं स्वप्नः सन्धिभञ्जनकम्पनम् ।
यदा तु धमनीः सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः ।
तदाङ्गमाक्षिपत्येष व्याधिराक्षेपणः स्मृतः ॥ १,१६६.१६ ॥

अधः प्रतिहतो वायुर्व्रजेदूर्ध्वं यदा पुनः ।
तदावष्टभ्य हृदयं शिरः शङ्खौ च पीडयेत् ॥ १,१६६.१७ ॥

सक्षिपेत्परितो गात्रं हनुं वा चास्य नामयत् ।
कृच्छ्रादुच्छ्वसितं चापि निमीलन्नयनद्वयम् ॥ १,१६६.१८ ॥

कपोत इव कूजेच्च निः संगः सोपतन्त्रकः ।
स एव वामनासायां युक्तस्तु मरुता हृदि ॥ १,१६६.१९ ॥

प्राप्नोति च मुहुः स्वास्थ्यं मुहुरस्वास्थ्यवान्भवेत् ।
अभिघातसमुत्थश्च दुश्चिकित्स्यतमो मतः ॥ १,१६६.२० ॥

स्वेदस्तम्भं तदा तस्य वायुश्छिन्नतनुर्यदा ।
व्याप्नोति सकलं देहं यत्र चायाम्यते पुनः ॥ १,१६६.२१ ॥

अन्तर्धान्तुगतश्चैव वेगस्तम्भं च नेत्रयोः ।
करोति जृम्भां सदनं दशनानां हतोद्यमम् ॥ १,१६६.२२ ॥

पार्श्वयोर्वेदनां बाह्यां हनुपृष्ठसिरोग्रहम् ।
देहस्य बहिरायामं पृष्ठतो हृदये शिरः ॥ १,१६६.२३ ॥

उरश्चोत्क्षिप्यते तत्र स्कन्धो वा नाम्यते तदा ।
दन्तेष्वास्ये च वैवर्ण्यं हयस्वेदस्तत्र गात्रतः ॥ १,१६६.२४ ॥

बाह्यायामं हनुस्तम्भं ब्रवते वातरोगिणम् ।
विण्मूत्रमसृजं प्राप्य ससमीरसमीरणाः? ॥ १,१६६.२५ ॥

आयच्छन्ति तनोर्देषाः सर्वमापादमस्तकम् ।
तिष्ठतः पाण्डुमात्रस्य व्रणायामः सुवर्धितः ॥ १,१६६.२६ ॥

गात्रवेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपणेन तत् ।
जिह्वाविलेखनादुष्णभक्षणादतिमानतः ॥ १,१६६.२७ ॥

कुपितो हनुमूलस्थः स्तम्भयित्वानिलो हनुम् ।
करोति विवृतास्यत्वमथवा संवृतास्यताम् ॥ १,१६६.२८ ॥

हनस्तम्भः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम् ।
वाग्वादिनी शिरास्तम्भो जिह्वां स्तम्भयतेऽनिलः ॥ १,१६६.२९ ॥

जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ।
शिरसा भारहरणादतिहास्यप्रभाषणात् ॥ १,१६६.३० ॥

विषमादुपधानाच्च कठिनानां च चर्वणात् ।
वायुर्विवर्धते तैश्च वातूलैरूर्ध्वमास्थितः ॥ १,१६६.३१ ॥

वक्रीकरोति वक्त्रं च ह्युच्चैर्हसितमीक्षितम् ।
ततोऽस्य कुरुते मृद्वीं वाक्शक्तिं स्तब्धनेत्रताम् ॥ १,१६६.३२ ॥

दन्तचालं स्वरभ्रंशः श्रुतिहानीक्षितग्रहौ ।
गन्धाज्ञानं स्मृतिध्वंसस्त्रासः श्वासश्च जायते ॥ १,१६६.३३ ॥

निष्ठीवः पार्श्वतोदश्च ह्येकस्याक्ष्णो निमीलनम् ।
जत्रोरूर्ध्वं रुजस्तीव्राः शरीरार्धधरोऽपि वा ॥ १,१६६.३४ ॥

तमाहुरर्दितं केचिदेकाङ्गमथ चापरे ।
रक्तमाश्रित्य च शिराः कुर्यान्मूर्धधराः शिराः? ॥ १,१६६.३५ ॥

रूक्षः सवेदनः कृष्णः सोऽसाध्यः स्याच्छिरोग्रहः ।
तनुं गृहीत्वा वायुश्च स्नायुस्तथैव च ॥ १,१६६.३६ ॥

पक्षमन्यतरं हन्ति पक्षाघातः स उच्यते ।
कृत्स्नस्य कायस्यार्धं स्यादकर्मण्यमचेतनम् ॥ १,१६६.३७ ॥

एकाङ्गरोगतां केचिदन्ये कक्षरुजां विदुः ।
सर्वाङ्गरोधः स्तम्भश्च सर्वकायाश्रितेऽनिले ॥ १,१६६.३८ ॥

शुद्धवातकृतः पक्षः कृच्छ्रसाध्यतमो मतः ।
कृच्छ्रश्चान्येन संसृष्टो विवृद्धः क्षयहेतुकः ॥ १,१६६.३९ ॥

आमबद्धायनः कुर्यात्संस्तभ्याङ्गं कफान्वितः ।
असाध्य एव सर्वो हि भवेद्दण्डापतानकः ॥ १,१६६.४० ॥

अंसमूलोत्थितो वायुः शिराः संकुच्य तत्रगः ।
बहिः प्रस्यन्दितहरं जनयत्येव बाहुकम् ॥ १,१६६.४१ ॥

तलं प्रत्यङ्गुलीनां यः कण्डरा बाहुपृष्ठतः ।
बाह्वोः कर्मक्षयकरी विपूची वेति सोच्यते ॥ १,१६६.४२ ॥

वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षैपेद्यदा ।
तदा खञ्जो भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥ १,१६६.४३ ॥

कम्पते गमनारम्भे खञ्जन्निव च गच्छति ।
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ १,१६६.४४ ॥

शीतोष्णद्रवसंसुष्कगुरुस्निग्धैश्च सेवितैः ।
जीर्णाजीर्णे तथायासक्षोभस्निग्धप्रजागरैः ॥ १,१६६.४५ ॥

श्लेष्मभेदः समये परमत्यर्थसंचितम् ।
अभिभूयेतरं दोषं शरीरं प्रतिपद्यते ॥ १,१६६.४६ ॥

सक्थ्यस्थीनि प्रपूर्यान्तः श्लेष्मणा स्तम्भितेन तत् ।
तदास्थि स्नाति तेनोरोस्तथा शीतानिलेन तु ॥ १,१६६.४७ ॥

श्यामाङ्गमङ्गस्तैमित्यतन्द्रामूर्छारुचिज्वरैः ।
तमूरुस्तम्भमित्याह बाह्यवातमथापरे ॥ १,१६६.४८ ॥

वातशोणितसंशोथो जानुमध्ये महारुजः ।
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलक्रोष्टुकशीर्षवत् ॥ १,१६६.४९ ॥

रुक्पादविषमन्यस्ते श्रमाद्वा जायते यदा ।
वातेन गुल्फमाक्षित्य तमाहुर्वातकण्टकम् ॥ १,१६६.५० ॥

पार्ष्णिप्रत्यङ्गुलीनाभौ कण्ठे वा मारुतार्दिते ।
सतिक्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते ॥ १,१६६.५१ ॥

हृष्येते चरणौ यस्य भवेतां चापि सुप्तकौ ।
पादहर्षः स विज्ञेयः कफमारुतकोपजः ॥ १,१६६.५२ ॥

पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ।
विशेषतश्चङ्क्रमतः पाददाहं तमादिशेत् ॥ १,१६६.५३ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वातव्याधिनिदानं नाम षटूषष्ट्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १६७
धन्वन्तरीरुवाच ।
वातरक्तनिदानं ते वक्ष्ये सुश्रुत तच्छृणु ।
विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः ॥ १,१६७.१ ॥

प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।
स्थूलानां सुखिनां चापि कुप्यते वातशोणितम् ॥ १,१६७.२ ॥

अग्निघातादशुद्धेश्च नृणामसृजि दूषिते ।
वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः ॥ १,१६७.३ ॥

तादृशैवासृजा रुद्धः प्राक्तदैव प्रदूषयेत् ।
तथा वातो गुदे पीडां बलासं वातशोणितम् ॥ १,१६७.४ ॥

संस्तभ्य जनयेत्पूर्वं पश्चात्सर्वत्र धावति ।
विशेषाद्वमनाद्यैश्च प्रलम्बस्तस्य लक्षणम् ॥ १,१६७.५ ॥

भविष्यतः कुष्ठसमं तथा साम्बुदसंज्ञकम् ।
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ॥ १,१६७.६ ॥

कण्डूस्फुरणनिस्तोदभेदगौरवसुप्तताः ।
भूत्वा भूत्वा प्रशाम्यन्ति मुहुराविर्भवन्ति च ॥ १,१६७.७ ॥

पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ।
आखोरिव विलं क्रुद्धः कृत्स्नं देहं बिधावति ॥ १,१६७.८ ॥

त्वङ्मांसाश्रयमत्तानं तत्पूर्वं जायते ततः ।
कालान्तरेण गम्भीरं सर्वधातूनभिद्रवेत् ॥ १,१६७.९ ॥

कट्यादिसंयतस्थाने त्वक्ताम्रश्यावलोहिताः ।
श्वयथुर्ग्रथितः पाकः स वायुश्चास्थिमज्जसु ॥ १,१६७.१० ॥

छिन्दन्निव चरत्यन्तश्चक्रीकुर्वंश्च वेगवान् ।
करोति खञ्जं पङ्गुं वा शरीरं सर्वतश्चरन् ॥ १,१६७.११ ॥

वाताधिकेऽधिकं तत्र शूलस्फुरणभञ्जनम् ।
शोथस्य रौक्ष्यं कृष्णत्वं श्यावतावृद्धिहानयः ॥ १,१६७.१२ ॥

धमन्यङ्गुलिसन्धीनां संकोचोङ्गग्रहो तिरुक् ।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥ १,१६७.१३ ॥

रक्ते शोथोऽतिरुक्तोदस्ताम्राश्चिमिचिमायते ।

स्निग्धरूक्षैः समं नैति कण्डुक्लेदसमन्वितः ॥ १,१६७.१४ ॥

पित्ते विदाहः संमोहः स्वादो मूर्छा मदस्तृषा ।
स्पर्शासहत्वं रुग्रावः शोषः पाको भृशोष्मता ॥ १,१६७.१५ ॥

कफे स्तैमित्यगुरुता सुप्तिस्निग्धत्वशीतता ।
कण्डूर्मन्दा च रुग्दबन्द्वं सर्वलिङ्गञ्च संकरात् ॥ १,१६७.१६ ॥

एकदोषञ्च संसाध्यं याप्यञ्चैव द्विदोषजम् ।
त्रिदोषजन्त्यजेदाशु रक्तपित्तं सुदारुणम् ॥ १,१६७.१७ ॥

रक्तमङ्गे निहन्त्याशु शाखासन्धिषु मारुतः ।
निवेश्यान्योन्यमावार्य वेदनाभिर्हरत्यसून् ॥ १,१६७.१८ ॥

वायौ पञ्चात्मके प्राणे रौक्ष्याच्चापल्यलङ्घनैः ।
अत्याहाराभिघाताच्च वेगोदीरणचारणैः ॥ १,१६७.१९ ॥

कुपितश्चक्षुरादीनामुपघातं प्रकल्पयेत् ।
पीनसो दाहतृट्कासश्वासादिश्चैव जायते ॥ १,१६७.२० ॥

कण्ठरोधोमलभ्रंशच्छर्द्यरोचकपीनसान् ।
कुर्याच्च गलगण्डदींस्तञ्जत्रुमूर्ध्वसंश्रयः ॥ १,१६७.२१ ॥

व्यानोऽतिगमनस्नानक्रीडाविषयचोष्टितैः ।
विरुद्धरूक्षभीहर्षविषादाद्यैश्च दूषितः ॥ १,१६७.२२ ॥

पुंस्त्वोत्साहबलभ्रंशशोकचित्तप्लवज्वरान् ।
सर्वाकारादिनिस्तोदरोमहर्षं सुषुप्तताम् ॥ १,१६७.२३ ॥

कुष्ठं विसर्पमन्यच्च कुर्यात्सर्वाङ्गसादनम् ।
समानो विषमाजीर्णशीतसङ्कीर्णभोजनैः ॥ १,१६७.२४ ॥

करोत्यकालशयनजागराद्यैश्च दूषितः ।
शूलगुल्मग्रहण्यादीन्यकृत्कामाश्रयान्गदान् ॥ १,१६७.२५ ॥

अपानो रूक्षगुर्वन्नवेगाघातातिवाहनैः ।
यानपानसमुत्थानचङ्क्रमैश्चातिसेवितैः ॥ १,१६७.२६ ॥

कुपितः कुरुते रोगान्कृत्स्नान् पक्वाशयाश्रयान् ।
मूत्रसुक्रप्रदोषार्शोगुदभ्रंशादिकान्बहून् ॥ १,१६७.२७ ॥

सर्वाङ्गमाततं सामं तन्द्रास्तैमित्यगौरवैः ।

स्निग्धत्वाद्बोध कालस्य शैत्यशोथाग्निहानयः ॥ १,१६७.२८ ॥

कण्डूरूक्षातिनाशेन तद्विधोपशमेन च ।
मुक्तिं विद्यान्निरामं तं तन्द्रादीनां विपर्ययात् ॥ १,१६७.२९ ॥

वायोरावरणं वातो बहुभेदं प्रचक्षते ।
पित्तलिङ्गावृते दाहस्तृष्णा शूलं भ्रमस्तमः ॥ १,१६७.३० ॥

कटुकोष्णाम्ललवणैर्विदाहशीतकामता ।
शैत्यगौरवशूलाग्निकट्वाज्यपयसोऽधिकम् ॥ १,१६७.३१ ॥

लङ्घनायासरूक्षोष्णकामता च कफावृते ।
कफावृतेऽङ्गमर्दः स्याद्धृल्लासो गुरुतारुचिः ॥ १,१६७.३२ ॥

रक्तवृते सदाहार्तिस्तवङ्मांसाश्रयजा भृशम् ।
भवेत्सरागः श्वयथुर्जायन्ते मण्डलानि च ॥ १,१६७.३३ ॥

शोथो मांसेन कठिनो हृल्लासपिटिकास्तथा ।
हर्षः पिपीलिकानां च संचार इव जायते ।
चललग्नो मृदुः शीतः शोथो गात्रेषु रोचकः ॥ १,१६७.३४ ॥

आढ्यवात इव ज्ञेयः स कृच्छ्रो मेदसावतः ।
स्पर्श आच्छादितेत्युष्णशीतलश्च त्वनावृते ।
मज्जावृते तु विषमं जृम्भणं परिवेष्टनम् ॥ १,१६७.३५ ॥

शूलञ्च पड्यिमानश्च पाणिभ्यां लभते सुखम् ।
शुक्रावृते तु शोथे वै चातिवेगो न विद्यते ॥ १,१६७.३६ ॥

भुक्ते कुक्षौ रुजा जीर्णे निकृत्तिर्भवति ध्रुवम् ।
मूत्राप्रवृत्तिराध्मानं बस्तेर्मूत्रावृते भवेत् ॥ १,१६७.३७ ॥

छिद्रावृते विबन्धोऽथ स्वस्थानं परिकृन्त ति ।
पतत्याशु ज्वराक्रान्तो मूर्छां च लभते नरः ॥ १,१६७.३८ ॥

सकृत्पीडितमन्येन दुष्टं शुक्रं चिरात्सृजेत् ।
सर्वधात्वावृते वायौ श्रोणिवङ्क्षणपृष्ठरुक् ॥ १,१६७.३९ ॥

विलोमे मारुते चैव हृदयं परिपीड्यते ।
भ्रमो मूर्छा रुजा दाहः पित्तेन प्राण आवृते ॥ १,१६७.४० ॥

रुजा तन्द्रा स्वरभ्रंशो दाहो व्याने तु सर्वशः ।
क्रमों गचेष्टाभङ्गश्च सन्तापः सहवेदनः ॥ १,१६७.४१ ॥

समान ऊष्मोपहतिः सस्वेदोपरतिः सुतृट् ।
दाहश्च स्यादपाने तु मले हारिद्रवर्णता ॥ १,१६७.४२ ॥

रजोवृद्धिस्तापनञ्च तथा चानाहमेहनम् ।
श्लेष्मणा प्रावृते प्राणे नादः स्नोतोऽवरोधनम् ॥ १,१६७.४३ ॥

ष्ठीवनञ्चैव सस्वेदश्वासनिः श्वाससंग्रहः ।
उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रहः ॥ १,१६७.४४ ॥

बलवर्णप्रणाशश्चा पाने पर्वास्थिसंग्रहः ।
गुरुताङ्गेषु सर्वेषु स्थूलत्वञ्चागतं भृशम् ॥ १,१६७.४५ ॥

समानेऽतिक्रियाज्ञत्वमस्वेदो मन्दवह्निता ।
अपाने सकलं मूत्रं शकृतः स्यात्प्रवर्तनम्? ॥ १,१६७.४६ ॥

इति द्वाविंशतिविधं वातरक्तामयं विदुः ।
प्राणादयस्तथान्योऽन्यं समाक्रान्ता यथाक्रमम् ॥ १,१६७.४७ ॥

सर्वेऽपि विंशतिविधं विद्यादावरणञ्च यत् ।
हृल्लासोच्छ्वाससंरोधः प्रतिश्यायः शिरोग्रहः ॥ १,१६७.४८ ॥

हृद्रोगो मुखशोषश्च प्राणेनापान आवृते ।
उदानेनावृते प्राणे भवेद्धै बलसंक्षयः ॥ १,१६७.४९ ॥

विचारणेन विभजेत्सर्वमावरणं भिषक् ।
स्थानान्यपेक्ष्य वातानां वृर्धिहानिं च कर्मणाम् ॥ १,१६७.५० ॥

प्राणादीनाञ्च पञ्चानां पित्तमावरणं मिथः ।
पित्तादीनामावसतिर्मिश्राणां मिश्रितैश्च तैः ॥ १,१६७.५१ ॥

मिश्रैः पित्तादिभिस्तद्वन्मिश्राण्यपित्वनेकधा ।
तांल्लक्षयेदवहितो यथास्वं लक्षणोदयात् ॥ १,१६७.५२ ॥

शनैः शनैश्चोपशयान्दृढानपि मुहुर्मुहुः ।
विशेषाज्जीवितं प्राण उदानो बलमुच्यते ।
स्यात्तयोः पीडनाद्धनिरायुषञ्च बलस्य च ॥ १,१६७.५३ ॥

आवृता वायवोऽज्ञाता ज्ञाता वा स्थानविच्युताः ।
प्रयत्नेनापि दुः साध्या भवेयुर्वानुपद्रवाः ॥ १,१६७.५४ ॥

विद्रधिप्लीहहृद्रोगगुल्माग्निसदनादयः ।

भवन्त्युपद्रवास्तेषामावृतानामुपेक्षया ॥ १,१६७.५५ ॥

निदानं सुश्रुत ! मया आत्रेयोक्तं समीरितम् ।
सर्वरोगविवेकाय नराद्यायुः प्रवृद्धये ॥ १,१६७.५६ ॥

एवं विज्ञाय रोगादींश्चिकित्सामथ वै चरेत् ।
त्रिफला सर्वरोगघ्नी मध्वाज्यगुडसंयुता ॥ १,१६७.५७ ॥

सव्योषा त्रिफला वापि सर्वरोगप्रमर्दिनी ।
शतावरीगुडूच्यग्निविडङ्गेन युताथवा ॥ १,१६७.५८ ॥

शतावरी गुडूच्यग्निः शुण्ठीमूषलिका बला ।
पुनर्नवा च बृहती निर्गुण्डी निम्बपत्रकम् ॥ १,१६७.५९ ॥

भृङ्गराजश्चामलकं वासकस्तद्रसेन वा ।
भाविता त्रिफला सप्तवारमेखमथापिवा ॥ १,१६७.६० ॥

पूर्वोक्तश्च यथालाभयुक्तैश्चूर्णञ्च मोदकः ।
वटिका घृततैलं वा कषायो शोषरोगनुत् ।
पलं पलार्धकं वापि कर्षं कर्षार्धमेव वा ॥ १,१६७.६१ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वातरक्तनि सप्तषष्ट्याधिकशततमोध्यायः

निदानं समाप्तम् ।
धन्वन्तरिरुवाच ।
सर्वरोगहरं सिद्धं योगसारं वदाम्यहम् ।
शृणु सुश्रुतं संक्षेपात्प्राणिनां जीवहेतवे ॥ १,१६८.१ ॥

कषायकटुतिक्ताम्लरूक्षाहारादिभोजनात् ।
चिन्ताव्यवयव्यायामभयशोकप्रजागरात् ॥ १,१६८.२ ॥

उच्चैर्भाषातिभाराच्च कर्मयोगातिकर्षणात् ।
वायुः कुप्यति पर्जन्ये जीर्णान्ने दिनसंक्षये ॥ १,१६८.३ ॥

उष्णाम्ल लवणक्षारकटुकाजीर्णभोजनात् ।
तीक्ष्णातपाग्निसन्तापमद्यक्रोधनिषेवणात् ॥ १,१६८.४ ॥

विदाहकाले भुक्तस्य मध्याह्ने जलदात्यये ।
ग्रीष्मकालेऽर्द्धरात्रेऽपि पित्तं कुप्यति देहिनः ॥ १,१६८.५ ॥

स्वाद्वम्ललवणस्निग्धगुरुशीतातिभोजनात् ।
नवान्नपिच्छिलानूपमांसादेः सेवनादपि ॥ १,१६८.६ ॥

अव्यायाम दिवास्वप्नशय्यासनसुखादिभिः ।
कफप्रदोषो भुक्ते च वसन्ते च प्रकुप्यति ॥ १,१६८.७ ॥

देहपारुष्यसंकोचतोदविष्टम्भकादयः ।
तथा च सुप्ता रोमहर्षस्तम्भनशोषणम् ॥ १,१६८.८ ॥

श्यामत्वमङ्गविश्लेषबलमायासवर्धनम् ।
वायोर्लिङ्गानि तैर्युक्तं रोगं वातात्मकं वदेत् ॥ १,१६८.९ ॥

दाहोष्मपादसंक्लेदकोपरागपरिश्रमाः ।
कट्वम्लशववैगन्ध्यस्वेदमूर्छातितृट्भ्रमाः ॥ १,१६८.१० ॥

हारिद्रं हरितत्वञ्च पित्तलिङ्गान्वितैर्नरः ।
देहे स्निग्धत्वमाधुर्यचिरकारित्वबन्धनम् ॥ १,१६८.११ ॥

स्तैमित्यतृप्तिसङ्घातशोथशतिलगौरवम् ।
कण्डूनिद्राभियोगश्च लक्षणं कफसम्भवम् ॥ १,१६८.१२ ॥

हेतुलक्षणसंसर्गाद्विद्याद्व्याधिं द्विदोषजम् ।
सर्वहेतुसमुत्पन्नं त्रिलिङ्गं सान्निपातिकम् ॥ १,१६८.१३ ॥

दोषधातुमलाधारो देहिनां देह उच्यते ।
तेषां समत्वमारोग्यं क्षयवृद्धेर्विपर्ययः ॥ १,१६८.१४ ॥

वसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ।
वातपित्तकफा दोषा विण्मूत्राद्या मलाः स्मृताः ॥ १,१६८.१५ ॥

वायुः शीतो लघुः सूक्ष्मः स्वरनाशीस्थिरो बली ।
पित्तमम्लकटूष्णञ्चापङ्क्ती रोगकारणम् ॥ १,१६८.१६ ॥

मधुरो लवणः स्निग्धो गुरुः श्लेषमातिपिच्छिलः ।
गुदश्रोण्याश्रयो वायुः पित्तं पक्वाशयस्थितम् ॥ १,१६८.१७ ॥

कफस्यामाशयस्थानं कण्ठो वा मूर्धसन्धयः ।
कटुतिक्तकषायाश्च कोपयन्ति समीरणम् ॥ १,१६८.१८ ॥

कट्वम्ललवणाः पित्तं स्वादूष्णलवणाः कफम् ।
एत एव विपर्यस्ताः शमायैषां प्रयोजिताः ।
भवन्ति रोगिणां शान्त्यै स्वस्थाने सुखहेतवः ॥ १,१६८.१९ ॥

चक्षुष्यो मधुरो ज्ञेयो रसधातुविवह्द्धनः ।
अम्लोत्तरो मनोहृद्यं तथा दीपनपाचनम् ॥ १,१६८.२० ॥

दीपनोज्वरतृष्णाघ्नस्तिक्तः शोधनशोषणः ।
पित्तलो लेखन स्तम्भी कषायो ग्राहिशोषणः ॥ १,१६८.२१ ॥

रसवीर्यविपाकानामाश्रयं द्रव्यमुत्तमम् ।
रसपाकान्तरस्थायि सर्वद्रव्याश्रयं द्रुतम् ॥ १,१६८.२२ ॥

शीतोष्णं लवणं वीर्यमथ वा शक्तिरिष्यते ।
रसानां द्विविधः पाको कटुरेव च ॥ १,१६८.२३ ॥

भिषग्भेषजरोगार्तपरिचारकसम्पदः ।
चिकित्साङ्गानिचत्वारि विपरीतान्यसिद्धये ॥ १,१६८.२४ ॥

देशकालवयोवह्निसाम्यप्रकृतिभेषजम् ।
देहसत्त्वबलव्याधीन्बुद्ध्वा कर्म समाचरेत् ॥ १,१६८.२५ ॥

बहूदकनगोऽनूपः कफमारुतकोपवान् ।
जाङ्गलोऽपरशाखी च रक्तपित्तगदोत्तरः ॥ १,१६८.२५*१ ॥

संसृष्टलक्षणोपेतो देशः साधारणः स्मृतः ।
बाल आ षोडशान्मध्यः सप्ततेर्वृद्ध उच्यते ॥ १,१६८.२६ ॥

कफपित्तानिलाः प्रायो यथाक्रममुदीरिताः ।
क्षाराग्निशस्त्ररहिता क्षीणे प्रवयसि क्रियाः ॥ १,१६८.२७ ॥

कृशस्य वृंहणं कार्यंस्थूलदेहस्य कर्षणम् ।
रक्षणं मध्यकायस्य देहभेदास्त्रयो मताः ॥ १,१६८.२८ ॥

स्थैर्यव्यायामसन्तोषैर्बोद्धव्यं यत्नतो बलम् ।
अविकारी महोत्साहो महासाहसिको नरः ॥ १,१६८.२९ ॥

पानाहारादयो यस्य विरुद्धाः प्रकृतेरपि ।
श्वसुखायोपकल्प्यन्ते तत्साम्यमिति कथ्यते ॥ १,१६८.३० ॥

गर्भिण्याः श्लैष्मिकैर्भक्ष्यैः श्लैष्मिको जायते नरः ।
वातलैः पित्तलैस्तद्वत्समधातुर्हिताशनात् ॥ १,१६८.३१ ॥

कृशो रूक्षोऽल्पकेशश्च चलचित्तो नरः स्थितः ।
बहुवाक्यरतः स्वप्नेवातप्रकृतिको नरः ॥ १,१६८.३२ ॥

अकालपलितो गौरः प्रस्वेदी कोपनो बुधः ।
स्वप्नेऽपि दीप्तिमत्प्रेक्षी पित्तप्रकृतिरुच्यते ॥ १,१६८.३३ ॥

स्थिरचित्तः स्वरः सूक्ष्मः प्रसन्नः स्निग्धमूर्धजः ।
स्वप्ने जलशिलालोकी श्लेष्म प्रकृतिको नरः ॥ १,१६८.३४ ॥

संमिश्रलक्षणैर्ज्ञेयो द्वित्रिदोषान्वयो नरः ।
दोषस्येतरसद्भावेऽप्यधिका प्रकृतिः स्मृताः ॥ १,१६८.३५ ॥

मन्दस्तीक्ष्णोऽथ विषमः समश्चैति चतुर्विधाः ।
कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनलः ॥ १,१६८.३६ ॥

समस्य पालनं कार्यं विषमे वातनिग्रहः ।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥ १,१६८.३७ ॥

प्रभवः सर्वरोगाणामजीर्णं चाग्निनाशनम् ।
आमाम्लरसविष्टम्भ लक्षणन्तच्चतुर्विधम् ॥ १,१६८.३८ ॥

आमाद्विषूचिका चैव हृदालस्यादयस्तथा ।
वचालवणतोयेन छर्दनं तत्र कारयेत् ॥ १,१६८.३९ ॥

शुक्राभावो भ्रमो मूर्छा तर्षोऽम्लात्संप्रवर्तते ।
अपक्वं तत्र शीताम्बुपानं वातनिषेवणम् ॥ १,१६८.४० ॥

गात्रभङ्गं शिरोजाड्यं भक्तदोषादयो गदान् ।
तस्मिन्स्वापो दिवा कार्योलङ्घनं च विवर्जनम् ॥ १,१६८.४१ ॥

शूलगुल्मौ च विण्मूत्रस्थानविष्टम्भसूचकौ ।
विधेयं स्वेदनं तत्र पानीयं लवणोदकम् ॥ १,१६८.४२ ॥

आमममम्लं च विष्टब्धं कफपित्तानिलैः क्रमात् ।
आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः ॥ १,१६८.४३ ॥

दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णविनाशनम् ।
अहितान्नै रोगराशिरहितान्नं ततस्त्यजेत् ॥ १,१६८.४४ ॥

उष्णाम्बु वानुपानं च माक्षिकैः पाचनं भवेत् ।
करीरदधिमत्स्यैश्च प्रायः क्षीरं विरुध्यते ॥ १,१६८.४५ ॥

बिल्वः शोणा च गम्भारी पाटला गणिकारिका ।
दीपनं कफवातघ्नं पञ्चमूलमिदं महत् ॥ १,१६८.४६ ॥

शालपर्णो पृश्निपर्णो बृहतीद्वयगोक्षुरम् ।
वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ॥ १,१६८.४७ ॥

उभयं दशसूलं स्यात्सन्निपातज्वरापहम् ।
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥ १,१६८.४८ ॥

एतैस्तैलानि सर्पोषि प्रलेपादलकां जयेत् ।
क्वाथाच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् ॥ १,१६८.४९ ॥

स्नेहञ्च तत्समं क्षीरं कल्कश्च स्नेहपादकः ।
संवर्तितौषधैः पाको बस्तौ पाने भवेत्समः ।
खरोऽभ्यङ्गे मृदुर्नस्ये पाकोऽपि संप्रकल्पयेत् ॥ १,१६८.५० ॥

स्थूलदेहन्द्रियाश्चिन्त्या प्रकृतिर्या त्वधिष्ठिता ।
आरोग्यमिति तं विद्यादायुष्मन्तमुपाचरेत् ॥ १,१६८.५१ ॥

यो गृह्णातीन्द्रियैरर्थान्विपरीतान्स मृत्युभाक् ।
भिषङ्मित्रगुरुद्वेषी प्रियारातिश्च यो भवेत् ॥ १,१६८.५२ ॥

गुल्फजानुललाटं च हनुर्गण्डस्तथैव च ।
भ्रष्टं स्थानच्युतं यस्य स जहात्यचिरादसून् ॥ १,१६८.५३ ॥

वामाक्षिमज्जनं जिह्वा श्यामा नासा विकारिणी ।
कृष्णौ स्थानच्युतौ चोष्ठौ कृष्णास्यं यस्यतं त्यजेत् ॥ १,१६८.५४ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वैद्यकशास्त्रपरिभाषा नामाष्टषष्ट्यधिकशततमोऽध्यायः

धन्वन्तरिरुवाच ।
हिताहितविवेकाय अनुपानविधिं ब्रुवे ।
रक्तशालि त्रिदोषघ्नं तृष्णामेदोनिवारकम् ॥ १,१६९.१ ॥

महाशालि परं वृष्यं कलमः श्लेष्मपित्तहा ।
शीत्तो गुरुस्त्रिदोषघ्नः प्रायशो गौरषष्टिकः ॥ १,१६९.२ ॥

श्यामाकः शोषणो रूक्षो वातलः श्लेष्मपित्तहा ।
तद्वत्प्रियङ्गुनीवारकोरदूषाः प्रकीर्तिताः ॥ १,१६९.३ ॥

बहुवारः सकृच्छीतः श्लेष्मपित्तहरो यवः ।
वृष्यः शीतो गुरुः स्वादुर्गोधूमो वातनाशनः ॥ १,१६९.४ ॥

कफपित्तास्त्रजिन्मुद्गः कषायो मधुरोलघुः ।
माषो बहुबलो वृष्यः पित्तश्लेष्महरो गुरुः ॥ १,१६९.५ ॥

अवृष्यः श्लेष्मपित्तघ्नो राजमाषोऽनिलार्तिनुत् ।
कुलत्थः श्वासहिक्काहृत्कफगुल्मानिलापहः ॥ १,१६९.६ ॥

रक्तपित्तज्वरोन्माथो शीतो ग्राही मकुष्ठकः ।
पुंस्त्वासृक्कफपित्तघ्नश्चणको वातलः स्मृतः ॥ १,१६९.७ ॥

मसूरो मधुरः शीव संग्रही कफपित्तहा ।
तद्वत्सर्वगुणाढ्यश्च कलायश्चातिवातलः ॥ १,१६९.८ ॥

आग्की कफपित्तघ्नो शुक्रला च तथा स्मृता ।
अतसी पित्तला ज्ञेया सिद्धार्थः कफवातजित् ॥ १,१६९.९ ॥

सक्षारमधुरस्निग्धो बलोष्णपित्तकृत्तिलः ।
बलघ्ना रूक्षलाः शीता विविधाः सस्यजातयः ॥ १,१६९.१० ॥

चित्रकेङ्गुदिनालीकाः पिप्पलीमधुशिग्रवः ।
चव्याचरणनिर्गुण्डीतर्कारीकाशमर्दकाः ॥ १,१६९.११ ॥

सबिल्वाः कफपित्तघ्नाः क्रिमिघ्ना लघुदीपकाः ।
वर्षाभूमार्करौ वातकफघ्नौ दोषनाशनौ ॥ १,१६९.१२ ॥

तिक्तरसः स्यादेरण्डः काकमाची त्रिदोषहृत् ।
चाङ्गेरी कफवातघ्नी सर्षपः सर्वदोषदम् ॥ १,१६९.१३ ॥

तद्वदेव च कौस्मसुम्भं राजिका वातपित्तला ।

नाडीचः कफपित्तघ्नः चुचुर्मधुरशीतलः ॥ १,१६९.१४ ॥

दोषघ्नं पद्मपत्रञ्च त्रिपुटं वातकृत्परम् ।
सक्षारः सर्वदोषघ्नो वास्तुको रोचनः परः ॥ १,१६९.१५ ॥

तण्डुकीयोविपहरः पालङ्क्याश्च तथापरे ।
मूलकं दोषकृच्छामं स्विन्नं वातकफापदम् ॥ १,१६९.१६ ॥

सर्वदोषहरं ह्यद्यं कण्ठ्यं तत्पक्वमिष्यते ।
कर्कोटकं सवार्ताकं पदोलं कारवेल्लकम् ॥ १,१६९.१७ ॥

कुष्ठमेहज्वरश्वासकासपित्तकफापहम् ।
सर्वदोषहरं हृद्यं कूष्माण्डं बस्तिशोधनम् ॥ १,१६९.१८ ॥

कलिङ्गालाबुनी पित्तनाशिनी वातकारिणी ।
त्रपुषोर्वारुके वातश्लेष्मले पित्तवारणे ॥ १,१६९.१९ ॥

वृक्षाम्लं कफवातघ्नं जम्बीरं कफवातनुत् ।
वातघ्नं दाडिमं ग्राहि नागरङ्गफलं गुरु ॥ १,१६९.२० ॥

केशरं मातुलुङ्गं च दीपनं कफवातनुत् ।
वातपित्तहरो माषस्त्वक्स्निग्धोष्णानिलापहः ॥ १,१६९.२१ ॥

सरमामलकं वृष्यं मधुरं हृद्यमम्लकृत् ।
भुक्तप्ररोचका पुण्या हरीतक्यमृतोपमा ॥ १,१६९.२२ ॥

स्त्रंसनी कफवातघ्नी ह्यक्षस्तद्वत्त्रिदोषजित् ।
वातश्लेष्महरं त्वम्लं स्त्रंसनं तिन्तिडीफलम् ॥ १,१६९.२३ ॥

दोषलं लकुचं स्वादु बकुलं कफवातजित् ।
गुल्मवातकफश्वासकासघ्नं बीजपूरकम् ॥ १,१६९.२४ ॥

कपित्थं ग्राहि दोषघ्नं पक्वं गुरु विषापहम् ।
कफपित्तकरं बालमापूर्णं पित्तवर्धनम् ॥ १,१६९.२५ ॥

पक्वाम्रं वातकृन्मांसशुक्रवर्णबलप्रदम् ।
वातघ्नं कफपित्तघ्नं ग्राहि विष्टम्भि जाम्बवम् ॥ १,१६९.२६ ॥

तिन्दुकं कफवातघ्नं बदरं वातपित्तहृत् ।
विष्टम्भि वातलं बिल्वं प्रियालं पवनापहम् ॥ १,१६९.२७ ॥

राजादनफलं मोचं पनसं नारिकेलजम् ।

शुक्रमांसकराण्याहुः स्वादुस्निग्धगुरूणि च ॥ १,१६९.२८ ॥

द्राक्षामधूकखर्जूरं कुङ्कुमं वातरक्तजित् ।
मागधी मधुरा पक्वा श्वासपित्तहरा परा ॥ १,१६९.२९ ॥

आर्द्रकं रोचकं वृष्यं दीपनं कफवातहृत् ।
शुण्ठीमरिचपिप्पल्यः कफवातजितो मताः ॥ १,१६९.३० ॥

अवृष्यं मरिचं विद्यादिति वैद्यकसंमतम् ।
गुल्मशूलविबन्धघ्नं हिङ्गुवातकफापहम् ॥ १,१६९.३१ ॥

यवानीधन्यकाजाज्यः वातश्लेष्मनुदः परम् ।
चक्षुष्यं सैन्धवं वृष्यं त्रिदोषशमनं स्मृतम् ॥ १,१६९.३२ ॥

सौवर्चलं विबन्धघ्नमुष्णं हृच्छूलनाशनम् ।
उष्णं शूलहरं तीक्ष्णं विडङ्गं वातनाशनम् ॥ १,१६९.३३ ॥

रोमकं वातलं स्वादु रोचनं क्लेदनं गुरु ।
हृत्पाण्डुगलरोगघ्नं यवक्षारोऽग्निदीपनः ॥ १,१६९.३४ ॥

दहनो दीपनस्तीक्ष्णः सर्जिक्षारो विदारणः ।
दोषघ्नं नाभसं वारिलघु हृद्यं विषापहम् ॥ १,१६९.३५ ॥

नादेयं वातलं रूक्षं सारसं मदुर लघु ।
वातश्लेष्महरं वार्प्यं ताडागं वातलं स्मृतम् ॥ १,१६९.३६ ॥

रौच्यमग्निकरं रूक्षं कफघ्नंलघु नैर्झरम् ।
दीपनं पित्तलं कौपमौद्भिदं पित्तनाशनम् ॥ १,१६९.३७ ॥

दिवार्ककिरणैर्जुष्टं रात्रौ चैवेन्दुरश्मिभिः ।
सर्वदोषविनिर्मुक्तं तत्तुल्यं गगनाम्बुना ॥ १,१६९.३८ ॥

उष्णं वारि ज्वरश्वासमेदोऽनिलकफापहम् ।
शृतं शीतत्रिदोषघ्नमुषितं तच्च दोषलम् ॥ १,१६९.३९ ॥

गोक्षीरं वातपित्तग्नं स्निग्धं गुरुरसायनम् ।
गव्याद्गुरुतरं स्निग्धं माहिष्वह्निनाशनम् ॥ १,१६९.४० ॥

छागं रक्तातिसारघ्नं कासश्वासकफापहम् ।
चक्षुष्यं जीवनं स्त्रीणां रक्तपित्ते चनावनम् ॥ १,१६९.४१ ॥

परं वातहरं वृष्यं पित्तश्लेष्मकरं दधि ।

दोषघ्नं मन्थजातन्तु मस्तु स्रोतोविशोधनम् ॥ १,१६९.४२ ॥

ग्रहण्यर्शोऽर्दितार्तिघ्नं नवनीतं नवोद्धृतम् ।
विकाराश्च किलाटाद्या गुरवः कुष्ठहेतवः ॥ १,१६९.४३ ॥

परं ग्रहणीशोथार्शः पाण्ड्वतीसारगुल्मनुत् ।
त्रिदोषशमनं तक्रं कथितं पूर्वसूरिभिः ॥ १,१६९.४४ ॥

वृष्यञ्च मधुरं सर्पिर्वातपित्तकफापहम् ।
गव्यं मेध्यञ्च चाक्षुष्यं संस्काराच्च त्रिदोषजित् ॥ १,१६९.४५ ॥

अपस्मारगदोन्मादमूर्छाघ्नं संस्कृतङ्घृतम् ।
अजादीनाञ्च सर्पोषि विद्याद्गोक्षीरसद्गुणैः ।
कफवातहरं मूत्रं सर्वक्रिमिविषापहम् ॥ १,१६९.४६ ॥

पाण्डुत्वोदरकुष्ठार्शः शोथगुल्मप्रमेहनुत् ।
वातश्लेष्महरं बल्यं तैलं कश्यं तिलोद्भवम् ॥ १,१६९.४७ ॥

सार्षपं कृमिपाण्डुघ्नं कफमेदोऽनिलापहम् ।
क्षौमं तैलमचक्षुष्यं पित्तहृद्वातनाशनम् ॥ १,१६९.४८ ॥

अक्षजं कफपित्तघ्नं केश्यं त्वक्श्रोत्रतर्पणम् ।
त्रिदोषघ्नं मधु प्रोक्तं वातलञ्च प्रकीर्तितम् ॥ १,१६९.४९ ॥

हिक्काश्वासकृमिच्छर्दिमेहतृष्णाविषामहम् ।
इक्षवोरक्तपित्तघ्नो बल्या वृष्याः कफप्रदाः ॥ १,१६९.५० ॥

फाणितं पित्तलं तव्रिं सुरा मत्स्यण्डिका लघुः ।
खण्डं वृष्यं तथा स्निग्धं स्वाद्वसृक्पित्तवातजित् ॥ १,१६९.५१ ॥

वातपित्तहरो रूक्षो वातघ्नः कफकृद्गुडः ।
स पित्तघ्नः परः पथ्यः पुराणोऽसृक्प्रसादनः ॥ १,१६९.५२ ॥

रक्तिपित्तहरा वृष्या सस्नेहा गडशर्करा ।
सर्वपित्तकरं मद्यमम्लत्वात्कफवातजित् ॥ १,१६९.५३ ॥

रक्तपित्तकरास्तीक्ष्णास्तथा सौवीरजातयः ।
पाचनो दीपनः पथ्यो मण्डः स्याद्भृष्टतण्डुलः ॥ १,१६९.५४ ॥

वातानुलोमनी लघ्वी पेया वस्तिविशोधनी ।
सतक्रदाडिमव्योषा सगुडा मधुपिप्पली ॥ १,१६९.५५ ॥

इन्तीयं सुकृता पेया कासश्वा सप्रवाहिकाः ।
पायसः कफकृद्बल्यः कृशरा वातनाशिनी ॥ १,१६९.५६ ॥

सुधौतः प्रस्त्रुतः स्निग्धः सुखोष्णो लघुरोचनः ।
कन्दमूलफलेहैः साधितो बृंहणोगुरुः ॥ १,१६९.५७ ॥

ईषदुष्णसेवनाच्च लघुः सूपः सुसाधितः ।
स्विन्न निष्पीडितं शाकं हितं स्नेहादिसंस्कृतम् ॥ १,१६९.५८ ॥

दाडिमामलकैर्यूषो वह्निकृद्वातपित्तहा ।
श्वासकासप्रतिश्यायकफघ्नो मलकैः कृतः ॥ १,१६९.५९ ॥

यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ।
मुद्गामलकजो ग्राही श्लेष्मपित्तविनाशनः ॥ १,१६९.६० ॥

सगुडं दधि वातघ्नं सक्तवो रूक्षवातुलाः ।
घृतपूर्णोऽग्निकारी स्याद्वृष्या गुर्वो च शष्कुली ॥ १,१६९.६१ ॥

बृंहणाः सामिषा भक्ष्यपिष्ट का गुखः स्मृताः ।
तैलसिद्धाश्च दृष्टिघ्नास्तोयस्विन्नाश्च दुर्जराः ॥ १,१६९.६२ ॥

अत्युष्णा मण्डकाः पथ्याः शीतला गुखो मताः ।
अनुपानञ्च पानीयं श्रमतृष्णादिनाशनम् ॥ १,१६९.६३ ॥

अन्नपानादिना रक्षा कृत्स्याद्रोगवर्जितः ।
अनुष्णः शिखिकण्ठाभो विषञ्चैव विवर्णकृत् ॥ १,१६९.६४ ॥

गन्धस्पर्शरसास्तीव्राभोक्तुश्च स्यान्मनोव्यथा ।
आघ्राणे चाक्षिरोगः स्यादसाध्यश्च भिषग्वरैः ।
वेपथुर्जृम्भणाद्यं स्याद्विषस्यैतत्तु लक्षणम् ॥ १,१६९.६५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे अनुपानादिविधिकथनं नामैकोनसप्तत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १७०
धन्वन्तरिरुवाच ।
ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः ।
मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः ।
शृतशीतं जलं दद्यात्पिपासाज्वरशान्तये ॥ १,१७०.१ ॥

नागरं देवकाष्ठञ्च धान्याकं बृहतीद्वयम् ।
दद्यात्पाचनकं पूर्वं ज्वरिताय ज्वरापहम् ॥ १,१७०.२ ॥

आरग्वधाभयामुस्तातिक्ताग्रन्थिकनिर्मितः ।
कषायः पाचनः सामे सशूले च ज्वरेहितः ॥ १,१७०.३ ॥

मधूकसारसिन्धूत्थवचोषणकणाः समाः ।
श्लक्ष्णं पिष्ट्वाम्भसा नस्यं कुर्यात्संज्ञाप्रबोधनम् ॥ १,१७०.४ ॥

त्रिवृद्विशालात्रिफलाकटुकारग्वधैः कृतः ।
सक्षारो भेदनः क्वाथः पेयः सर्वज्वरापहः ॥ १,१७०.५ ॥

महौषधामृतामुस्तचन्दनोशीरधान्यकैः ।
क्वाथस्तृतीयकं हन्ति शर्करामधुयोजितः ॥ १,१७०.६ ॥

अपामगजटाकट्यां लोहितैः सप्ततन्तुभिः ।
बद्ध्वा वारे रवेर्नूनं ज्वरं हन्ति तृतीयकम् ॥ १,१७०.७ ॥

गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः ।
तस्मै तिलोदकं दद्यान्मुञ्चत्यैकाहिको ज्वरः ॥ १,१७०.८ ॥

गुडूच्याः क्वाथकल्काभ्यां विफलावासकस्य च ।
मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः ॥ १,१७०.९ ॥

धात्रीशिवाकणावह्निक्वाथः सर्वज्वरान्तकः ।
ज्वरातिसारहरणमौषधं प्रवदाम्यथ ॥ १,१७०.१० ॥

पृश्निपर्णोबलाविल्वनागरोत्पलधान्यकैः ।
पाठेन्द्रयवभूनिम्बमुस्तपर्पटकैः शृताः ।
ज्यन्त्याममतीसारं सज्वरं समहौषधाः ॥ १,१७०.११ ॥

नागरातिविषामुस्तभूनिम्बामृतवत्सकैः ।
सर्वज्वरहरः क्वथः सर्वातीसारनाशनः ॥ १,१७०.१२ ॥

मुस्तपर्पटकदिव्यशृङ्गवेरशृतं पयः ।
शालपर्णो पृश्निपर्णो बृहती कण्टकारिका ॥ १,१७०.१३ ॥

बलाश्वदंष्ट्राबिल्वादि पाठानागरधान्यकम् ।
एतदाहारसंयोगे हितं सर्वातिसारिणाम् ॥ १,१७०.१४ ॥

बिल्वचूतास्थिक्वाथश्च खण्डं मध्वतिसारनुत् ।
अतिसारे हिता तद्वत्कुटजत्वक्कणायुता ॥ १,१७०.१५ ॥

वत्सकातिविषाविश्वकणाकन्दकषायकः ।
प्रयुक्तश्चामशूलाढ्ये ह्यतीसारे सशोणित ॥ १,१७०.१६ ॥

चिकित्साथ ग्रहण्यास्तुग्रहणी चाग्निनाशिनी ।
चित्रकाक्वाथक्लकाभ्यां ग्रहणीघ्नं क्षृतं हविः ।
गुल्मशोथोदरप्लीहशूलार्शोघ्नं प्रदीपनम् ॥ १,१७०.१७ ॥

सौवर्चलं सैन्धवञ्च विडङ्गौद्भिदमेव च ।
सामुद्रेण समं पञ्चलवणान्यत्र योजयेत् ॥ १,१७०.१८ ॥

भेषजं शस्त्रक्षाराग्न्यस्त्रिधा वै चार्शसां हरम् ।
विद्धि तच्चार्शसोघ्नन्तु यद्धि तक्रं नवोद्धृतम् ॥ १,१७०.१९ ॥

गुडूटीं पिप्पलीयुक्तामभयां घृतभर्जिताम् ।
त्रिवृदर्शोविनाशार्थं भक्षयेदम्ललोणिकाम् ॥ १,१७०.२० ॥

तिलेक्षुरससंयोगश्चार्शः कुष्ठ विनाशनः ।
पञ्चकोलं समरिचं सत्र्यूषणमथाग्निकृत् ॥ १,१७०.२१ ॥

हरीतकी भक्ष्यमाणा नागेरण गुडेन वा ।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ १,१७०.२२ ॥

फलत्रिकामृतासातिक्ताभूनिम्बनिम्बजः ।
क्वाथः क्षौद्रयुतो हन्यात्पाण्डुरोगं सकामलम् ॥ १,१७०.२३ ॥

त्रिवृच्च त्रिफला श्यामा पिप्पली शर्करा मधु ।
मोदकः सन्निपातान्तो रक्तपित्तज्वरापहः ॥ १,१७०.२४ ॥

वासायां विद्यमानायामाशायां जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ १,१७०.२५ ॥

आटरूपकमृद्वीकापथ्याक्वाथः सशर्करः ।
क्षौद्राढ्यः कासनिः श्वासरक्तपित्तनिबर्हणः ॥ १,१७०.२६ ॥

वासारसः खण्डमधुयुतः पीतोऽथरक्तजित् ।

सल्लकीबदरीजम्बुप्रियालाम्रार्जुनं धवः ।
पीतं क्षीरञ्च मध्वाढ्यं पृथक्छोणितवारणम् ॥ १,१७०.२७ ॥

समूलफलपत्राया निर्गुण्ड्याः स्वरसैर्घृतम् ।
सिद्धं पीत्वा क्षयक्षीणी निर्व्याधिर्भाति देववत् ॥ १,१७०.२८ ॥

हरीतकी कणा शुण्ठी मरिचं गुडसंयुतम् ।
कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः ॥ १,१७०.२९ ॥

कण्टकारिगुडूचीभ्यां पृथक्त्रिंशत्पले रसे ।
प्रस्थं सिद्धं घृतं स्याच्च कासनुद्वह्निदापनम् ॥ १,१७०.३० ॥

कृष्णा धात्री शिता शुण्ठी हक्काघ्नी मधुसंयुता ।
हिक्काश्वासी पिवेद्भार्ङ्गो सविश्वामुष्णवारिणा ॥ १,१७०.३१ ॥

तैलाक्तं स्वरभेदे वा खादिरं धारयेन्मुखे ।
पथ्यां पिप्पलिकायुक्तां संयुक्तां नागरेण वा ॥ १,१७०.३२ ॥

विडङ्गत्रिलाचूर्णं छर्दिहृन्मधुना सह ।
आम्रजम्बूकषायं वा पिबोन्माक्षिकसंयुतम् ॥ १,१७०.३३ ॥

छर्दिं सर्वां प्रणुदति तृष्णाञ्चैवापकर्षति ।
त्रिफला भ्रममूर्छाहृत्पीता सा मधुनापि वा ॥ १,१७०.३४ ॥

पञ्चगव्यं हितं पानादपस्मारग्रहादिनुत् ।
कूष्माण्डकरसो वाज्यं सयष्टिकं तदर्थकृत् ॥ १,१७०.३५ ॥

ब्राह्मीरसवचाकुष्ठशङ्खपुष्पीभिरेव च ।
पुराणं सेव्यमुन्मादग्रहापस्मारद्घृनुतम् ॥ १,१७०.३६ ॥

अश्वगन्धाकषाये च कल्के क्षीरे चतुर्गुणे ।
घृतपक्वन्तु वातघ्नं वृष्यं मां साय पुत्रकृत् ॥ १,१७०.३७ ॥

नीलीमुण्डीरिकाचूर्णं मधुसर्पिः समन्वितम् ।
छिन्नाक्वाथं पिबन्हन्ति वातरक्तं सुदुस्तरम् ॥ १,१७०.३८ ॥

सगुडाः पञ्च पथ्याश्च कुष्टार्शोवातसादनाः ।
गडचीस्वरसं कल्कं चूर्णं वा क्वाथमेव वा ॥ १,१७०.३९ ॥

वातरक्तान्तकं कालागुडूचीक्वाथकल्कतः ।
कुष्ठव्रणादिशमनं शृतमाज्यं सदुग्धकम् ॥ १,१७०.४० ॥

त्रिफलागुग्गुलुर्वातरक्तमूर्छापहारकः ।
ऊरुस्तम्भविनाशाय गोमूत्रेण च गुग्गुलुः ॥ १,१७०.४१ ॥

शुण्ठीगोक्षुरकक्वाथः सामवातार्तिशूलनुत् ।
दशमूलामृतैरण्डरास्नानागरदारुभिः ॥ १,१७०.४२ ॥

क्वाथो हन्ति माहशोथं मरीचगुडसंयुतः ।
कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः ॥ १,१७०.४३ ॥

कण्टकारिगुडूचीभ्यां पृथक्त्रिंशत्पले रसे ।
प्रस्थसिद्धं घृतञ्चैव कासनुद्धृदि दीपनः ॥ १,१७०.४४ ॥

कृष्णाधात्रीसिताशुण्ठीमरीचसैन्धवान्वितः ।
क्वाथ एरण्डतैलेन सामं हन्त्यनिलं गुरुम् ॥ १,१७०.४५ ॥

बला पुनर्नवैरण्डबृहतीद्वयगोक्षुरैः ।
सहिङ्गुलवर्णं पीतं वातशूलविमर्दनम् ॥ १,१७०.४६ ॥

त्रिफलानिम्बयष्टीककटुकारग्वधैः शृतम् ।
पाययेन्मधुना मिश्रं दाहशूलोपशान्तये ॥ १,१७०.४७ ॥

त्रिफलापः सयष्टीकाः परिणामार्तिनाशनाः ।
गोमूत्रशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम् ।
विलिहन्मधुसर्पिभ्यां शूलं हन्ति त्रिदोषजम् ॥ १,१७०.४८ ॥

त्रिवृत्कृष्णाहरीतक्यो द्विचतुष्पञ्चभागिकाः ।
गुटिका गुडतुल्यास्ता विड्विबन्धगदापहाः ॥ १,१७०.४९ ॥

हरीतकीयवक्षारपिप्पलीत्रिवृतस्तथा ।
घृतैश्चूर्णमिदं पेयमुदावर्ताविनाशनम् ॥ १,१७०.५० ॥

त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भाविताः ।
वटिका मूत्रपीतास्ताः श्रेष्टाश्चानाहभेदिकाः ॥ १,१७०.५१ ॥

त्र्यूषणत्रिफलाधन्यविडङ्गचव्यचित्रकैः ।
कल्कीकृतैर्घृतं सिद्धं संस्कारं वातगुल्मनुत् ॥ १,१७०.५२ ॥

मूलं नागरमानीतं सक्षीरं हृदयार्तिनुत् ।
सौवचलं तदर्धन्तु शिवानाञ्च घृतं पिबेत् ॥ १,१७०.५३ ॥

कणापाषाणभेदैर्वा शिलाजतुकचूर्णकम् ।
तण्डुलीभिर्गुडेनापि मूत्रकृच्छ्रीति जीवति ॥ १,१७०.५४ ॥

अमृतानागरीधात्रीवाजिगन्धात्रिकण्टकाम् ।
प्रपिबेद्वातरेगार्तः सशूलो मूत्रकृच्छ्रवान् ॥ १,१७०.५५ ॥

सितातुल्यो यवक्षारः सर्वकृच्छ्रनिवारणः ।
निदिग्धिकारसो वापि सक्षौद्रः कृच्छ्रनाशनः ॥ १,१७०.५६ ॥

लवणं त्रिफलाकल्कैर्मूत्राघातहरं स्मृतम् ।
मूत्रे विरुद्धे कर्पूरचूर्णं लिङ्गे प्रवेशयेत् ॥ १,१७०.५७ ॥

क्वाथश्च शिग्रुमूलोत्थः कटूष्णोश्मानिपातनः ।
सर्वमेहहरोधात्र्या रसःक्षौद्रनिशायुतः ।
त्रिफलादारुदार्व्यष्टक्वाथः क्षौद्रेण मेहहा ॥ १,१७०.५८ ॥

अस्वप्नं च व्यवायं च व्यायामाश्चिन्तनानि च ।
स्थौल्यमिच्छन्पपरित्यक्तं क्रमेणाभिप्रवर्धयेत् ॥ १,१७०.५९ ॥

यवश्यामाकभोजी स्यास्थौल्यकृन्मधुवारिणा ।
उष्णमन्नं समण्डं वा पिबन्कृशतनुर्भवेत् ॥ १,१७०.६० ॥

सचव्यजीरकं व्योषा हिङ्गुसौवर्चलामलाः ।
मधुना रक्तवः पीता मेधोघ्ना सर्वदीपनाः ॥ १,१७०.६१ ॥

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकाणि च ।
कल्कैः सिद्ध घृत प्रस्थं सक्षीरं जठरी पिबेत् ॥ १,१७०.६२ ॥

क्रमवृद्ध्या दशाहानि दश पैप्पालिकं दिनम् ।
वर्धयेत्पयसा सार्धं तथैवापानयेत्पुनः ॥ १,१७०.६३ ॥

क्षीरषष्टिकभोजीस्यादेवं कृष्णसहस्रकम् ।
बृंहणं मुद्गमायुष्यं प्लीहोदरविनाशनम् ॥ १,१७०.६४ ॥

पुनर्नवाक्वाथकल्कैः सिद्धं शोथहरं घृतम् ।
गावा मत्रेण संसेव्यं पिप्पली वा पयोऽन्विताः ।
गुडन वाभयां तुल्यां विश्वं वा शोथरोगिणा ॥ १,१७०.६५ ॥

तैलमेरण्डजं पीत्वा बलासिद्धं पयोऽन्वितम् ।
आध्मानशूलोपचितामन्त्रवृद्धिञ्जयेन्नरः ॥ १,१७०.६६ ॥

भ्रष्टोरुचकतैलेन कल्कः पथ्यासमुद्भवः ।
कृष्णसैन्धवसंयुक्तो वद्धिरोगहरः परः ॥ १,१७०.६७ ॥

निर्गुण्डीमूलनस्येन गण्डमाला विनश्यति ।
स्नुहीगण्डीरिकास्वेदो नाशयेदर्बुदानि च ॥ १,१७०.६८ ॥

हस्तिकर्णपलाशस्य गलगण्डं तु लेपतः ।
धत्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ॥ १,१७०.६९ ॥

प्रलेपःश्लीपदं हन्ति चिरोत्थमतिदारुणम् ।
शोभाञ्जनकसिन्धूत्थहिङ्गुं विद्रधिनाशनम् ॥ १,१७०.७० ॥

शरपुङ्खा मधुयुता यात्सर्स्वव्रणगेपणी ।
निम्बपत्रस्य वालेपः श्वयथुव्रणगेपणः ॥ १,१७०.७१ ॥

त्रिफला खदिरो दार्वो न्यग्रोधो व्रणशोधनः ।
सद्यः क्षतं व्रणं वैद्यः सशूलं परिषेचयेत् ॥ १,१७०.७२ ॥

यष्टीमधुकयुक्तेन किञ्चिदुष्णेन सर्पिषा ।
बुद्ध्वागन्तुव्रणान्वैद्यो घृतक्षौद्रसमन्विताम् ॥ १,१७०.७३ ॥

शीतां क्रियां प्रयुञ्जीत पित्तरक्तोष्मनाशिनीम् ।
क्वाथो वंशत्वगेरण्डश्वदंष्ट्रवनिदाकृतः ॥ १,१७०.७४ ॥

सहिङ्गुसैन्धवः पीतः कोष्ठस्थं स्त्रावयेदसृक् ।
यवकोलकुलत्थानां निःस्नेहेन रसेन वा ॥ १,१७०.७५ ॥

भुञ्जीतान्नं यवाग्वा वा पिवेत्सैन्धवसंयुतम् ।
करञ्जारिष्टनिर्गुण्डीरसो हन्याद्व्रणक्रिमीन् ॥ १,१७०.७६ ॥

त्रिफलाचूर्णसंयुक्तो गुग्गुलुर्वटकीकृतः ।
निर्यन्त्रणो विबन्धघ्नो व्रधनगेपणः ॥ १,१७०.७७ ॥

दूर्वास्वरससिद्धं वा तलं कम्पिल्लकेन वा ।
दार्वोत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥ १,१७०.७८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्वरादिचिकित्सानिरूपणं नाम सप्तत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १७१
धन्वन्तरिरुवाच ।
नाडीव्रणादिरोगाणां चिकित्सां शृणु सुश्रुत ।
नाडीं शस्त्रेण संपाट्य नाजीनां व्रणवत्क्रिया ॥ १,१७१.१ ॥

गुग्गुलुत्रिफलाव्योपैः समांशैराज्ययोजितैः ।
नाडीदुष्टव्रणं शूलं भगन्दरमथो जयेत् ॥ १,१७१.२ ॥

निर्गुण्डीरसतस्तैलं नाडीदुष्टव्रणापहम् ।
हितं पामामयानां तु पानाभ्यञ्जननावनैः ॥ १,१७१.३ ॥

गग्गुत्रिफलाकृष्णात्रिपञ्चैकांशयोजिता ।
घुटि (गुडि) काशोथगुल्मार्शोभगन्दरवतां हिता ॥ १,१७१.४ ॥

ध्वजमध्ये शिरावेधे विशुद्धिरुपदंशके ।
पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः ॥ १,१७१.५ ॥

पटोलनिम्बत्रिफलागुडूचीक्वाथमापिबेत् ।
सगुग्गुलुं सखदिरमुपदंशो विनश्यति ॥ १,१७१.६ ॥

दहेत्कटाहे त्रिफलां सामसी (षी) मधसंयुताम् ।
उपदंशे प्रलेपोऽय सद्यो रोपयते व्रणम् ॥ १,१७१.७ ॥

त्रिफलानिम्बभूनिम्बकरञ्जखदिरादिभिः ।
कल्कैः क्वाथैर्घृतं पक्वमुपदंशहरं परम् ॥ १,१७१.८ ॥

आदौ भग्नं विदित्वा तु सेचयेच्छीतलांबुना ।
पक्वेनालेपनं कार्यं बन्धनं च कुशान्वितम् ॥ १,१७१.९ ॥

माषं मांसं तथा सर्पिः क्षीरं यूषः सतीजलः ।
बृंहणं चान्नपानं स्यात्प्रदेयं भग्नरोगिणे ॥ १,१७१.१० ॥

रसोनमधुनासाज्यसिताकल्कं समश्नुता ।
छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥ १,१७१.११ ॥

अश्वत्थत्रिफलाव्योषाः सवरभिः समीकृतैः ।
तुल्यो गुग्गुलुना योज्यो भग्नसन्धिप्रसाध (कृत्) कः ॥ १,१७१.१२ ॥

सर्वकुष्ठेषु वमनं रेचनं रक्तमोक्षण ।
वचावासापटोलानां निम्बस्य कलिनीत्वचः ॥ १,१७१.१३ ॥

कषायो मधुना पीतो वातहृन्मदनान्वितः ।

विरेचनं प्रयोक्तव्यं त्रिवृत्कर्णफलत्रिकैः ॥ १,१७१.१४ ॥

मनः शिलांमरीचैस्तु तैलं कुष्ठविनाशनम् ।
सर्वकुष्ठे विलेपोऽयं शिवापञ्चगुडौदनम् ॥ १,१७१.१५ ॥

करञ्जैलगजैः कुष्ठं गोमूत्रेण प्रलेपतः ।
करवीरोद्वर्तनं च तैलाक्तस्य च कुष्ठहृत् ॥ १,१७१.१६ ॥

हरिद्रा मलयं रास्ना गुडूच्येडगजस्तथा ।
आरग्वधः करञ्जश्च लेपः कुष्ठहरः परः ॥ १,१७१.१७ ॥

मनः शिलाविडङ्गानि वागजी सर्षपास्तथा ।
करञ्जैर्मूत्रपिष्टोऽयं लेपः कुष्टहरोर्ऽकवत् ॥ १,१७१.१८ ॥

विडङ्गैडवचा कुष्ठनिशासिन्धूत्थसर्षपैः ।
मूत्राम्लपिष्टो लेपोऽयं दद्रूकुष्टविनाशनः ॥ १,१७१.१९ ॥

प्रपुन्नाटसुबीजानि धात्री सर्जरसः स्नुही ।
सौवीरपिष्टं दद्रूणामेतदुद्वर्तनं परम् ॥ १,१७१.२० ॥

आरग्वधस्य पत्राणि आरनालेन पेषयेत् ।
दद्रूकिट्टिम (भ) कुष्ठानि हन्ति सिध्मानमेव च ॥ १,१७१.२१ ॥

उष्णो पीता वागुजी च कुष्ठजित्क्षीरभोजनः ।
तिलाज्यत्रिफलाक्षौद्रव्योषभल्लातशर्कराः ।
वृष्याः सप्त समा मेध्याः कष्ठहाः कामचारिणः ॥ १,१७१.२२ ॥

विडङ्गत्रिफलाकृष्णाचूर्णं लीढं समाक्षिकम् ।
हन्ति कुष्ठक्रिमिमेहनाडीव्रणभगन्दरान् ॥ १,१७१.२३ ॥

यः खादेदभयारिष्टमरिष्टामलकानिशाः ।
स जयेत्सर्वकुष्ठानिमासादूर्ध्वं न संशयः ॥ १,१७१.२४ ॥

दह्यमानायुतः कुम्भे मूलगे खदिराङ्कुरः ।
साक्षधात्रीरसः क्षौद्रो हन्यात्कुष्ठं रसायनम् ॥ १,१७१.२५ ॥

धात्री खदिरयोः क्काथं पीत्वा वागजिसंयुतम् ।
शङ्खेन्दुधवलं श्वित्रं हन्ति तूर्णं न संशयः ॥ १,१७१.२६ ॥

पीत्वा भल्लातकं तैलं मासाद्व्याधिं जयेन्नरः ।
सेवितं खादिरं वारि पानाद्यैः कुष्ठजिद्भवेत् ॥ १,१७१.२७ ॥

भावितं मलपूक्वाथैः सोमराजीफलं बहु ।
कर्षं भक्षेदलवणो ह्यक्षफल्गुशृतं पिबेत् ॥ १,१७१.२८ ॥

हन्ति श्वित्रमसाध्यं च लेपे योज्यापराजिता ।
वासा शुद्धा च त्रिफला पटोलं च करञ्जकम् ॥ १,१७१.२९ ॥

निम्बाशनं कृष्णवेत्रं क्वाथकल्केन यद्घृतम् ।
वज्रकं तद्भवेत्कुष्ठं शतवर्षाणि जीवति ॥ १,१७१.३० ॥

स्वरसेन च दूर्वायाः पचेत्तैलं चतुर्गुणम् ।
कच्छूर्विचर्चिका पामा अभ्यङ्गादेव नश्यति ॥ १,१७१.३१ ॥

द्रुमत्वगर्ककुष्ठानि लवणानि च मूत्रकम् ।
गम्भारिकाचित्रकैस्तैस्तैलं कुष्ठव्रणादिनुत् ॥ १,१७१.३२ ॥

(अथाम्लपित्तचिकित्सा) धात्रीनिम्बफलं तद्वद्गोमूत्रेण च चित्रकम् ।
वासामृतापर्पटिकानिम्बभूनिम्बमार्करैः (वैः) ।
त्रिफलाकुलत्थैः क्वाथः सक्षौद्रश्चाम्लपित्तहा ॥ १,१७१.३३ ॥

फलत्रिकं पटोलं च तिक्तक्वाथः सितायुतः ।
पीतो यष्टीमधुयुतो ज्वरच्छर्द्यम्लपित्तजित् ॥ १,१७१.३४ ॥

वासाघृतं तिक्तघृतं पिप्पलीघृतमेव च ।
अम्लपित्ते प्रयोक्तव्यं गुडकूष्माण्डकं तथा ॥ १,१७१.३५ ॥

पिप्पली मधुसंयुक्ता अम्लपित्तविनाशिनी ।
श्लेष्माग्निमान्द्यनुत्पथ्यापिप्पलीगुडमोदकः ॥ १,१७१.३६ ॥

पिष्ट्वाजाजीं सधन्याकां घृप्रस्थं विपाचयेत् ।
कफपित्तारुचिहरं मन्दानलवमिं हरेत् ॥ १,१७१.३७ ॥

(इत्यम्लपित्तचिकित्सा) पिप्पल्यमृतभूनिम्बवासकारिष्टपर्पटैः ।
खदिरारिष्टकैः क्वाथो विस्फोटार्तिज्वरापहः ॥ १,१७१.३८ ॥

त्रिफलारससंयुक्तं सर्पिस्त्रिवृतयासह ।
प्रयोक्तव्यं विरेकार्थं वीसर्पज्वरशान्तये ॥ १,१७१.३९ ॥

खादिरात्रिफलारिष्टपटोलामृतवासकैः ।
क्वाथोऽष्टकाख्यो जयति रोमान्तिकमसूरिकाम् ॥ १,१७१.४० ॥

कुष्ठवीसर्पविस्फोटकण्ड्वादीनां विघातकः ।
लशुनानां तु चूर्णस्य घर्षो मशकनाशनः ॥ १,१७१.४१ ॥

चर्मकीलं जरुमणिं मशकांस्तिलकालकान् ।
उत्कृत्य शस्त्रेण दहेत्क्षागग्निभ्यामशेषतः ॥ १,१७१.४२ ॥

पटोलनीलीलेपः स्याज्जाल (ज्वाला) गर्दभरोगनुत् ।
गुञ्जाफलैः शृतं तलं भृङ्गराजरसेन तु ।
कण्ठ (ण्डु) दारुणकृत्कुष्ठवातव्याधिविनाशनम् ॥ १,१७१.४३ ॥

अर्कास्थिमज्जात्रिफलानालीछ्रा भृङ्गराजकम् ।
जीर्णे पक्वे लौहचूर्णं काञ्जिकं कृष्णकेशकृत् ॥ १,१७१.४४ ॥

क्षीरात्सशर्करसाद्द्विप्रस्थो मधुकात्पले ।
तैलम्य कुडवं पक्वं तन्नस्यं पलितापहम् ॥ १,१७१.४५ ॥

मुखरोगे तु त्रिफलागण्डूषपरिधारणम् ।
गृहधूम यवक्षारपाठाव्योपरसाञ्जनम् ॥ १,१७१.४६ ॥

तेजोदं त्रिफलालोध्रं चित्रकं चेति चूर्णितम् ।
सक्षौद्रं धारयेद्वक्त्रे ग्रीवादन्तास्यरोगनुत् ॥ १,१७१.४७ ॥

पटोल निम्बजम्व्वाग्रमालतीनवपल्लवाः ।
पञ्चपल्लवकः श्रेष्ठः कषयो मुखधावने ॥ १,१७१.४८ ॥

लशुनार्द्रकशिग्रूणां पारुल्या मूलकस्य च ।
रुदन्त्याश्च रसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ १,१७१.४९ ॥

तीव्रशूलोत्तरे कर्णे सशब्दे क्लेदवाहिनि ।
बस्तमूत्रं क्षिपेत्कोष्णं सैन्धवेनावचूर्णितम् ॥ १,१७१.५० ॥

जातीपत्ररसे तैलं पक्वं पूतिककर्णजित् ।
शुण्ठीतैलं सार्षपं च क्रोष्णं स्यात्कर्णशूलनुत् ॥ १,१७१.५१ ॥

पञ्चमूलिशृतं क्षीरं स्याच्चित्रकहरीतकी ।
सर्पिर्गुडः षडङ्गश्चयूषः पीनसशान्तये ॥ १,१७१.५२ ॥

अक्षिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः ।
पञ्चैते पञ्चरात्रेण प्रशमं यान्ति लङ्घनात् ॥ १,१७१.५३ ॥

धात्रीरसानाञ्च दृशः कोपं हरति पूरणात् ।
सक्षौद्रः सैन्धवो वापि शिग्रुदार्विरसाञ्जनम् ॥ १,१७१.५४ ॥

हरिद्रादारुसिन्धूत्थपथ्याजनवगौरिकैः ।

पिष्टैर्दत्तो बहिर्लपो नेत्रव्याधिनिवारकः ॥ १,१७१.५५ ॥

मृतभ्रष्टाभयालेपात्त्रिफला क्षीरसंयुता ।
शुण्ठीनिम्बदलैः पिष्टैः सुखोष्णैः स्वल्पसैन्धवैः ।
धार्यश्चक्षुषि संक्षेपाच्छोथकण्डूरुजापहः ॥ १,१७१.५६ ॥

अभयाक्षामृतं चैकद्विचतुर्भागिकं युतम् ।
मध्वाज्यलीढं क्वाथो वा सर्वनेत्ररुगर्दनम् ॥ १,१७१.५७ ॥

चन्दनत्रिफलापूगपलाशतरुमूलकैः ।
जलपिष्टैरियं विर्तिरशेषतिमिरापहा ॥ १,१७१.५८ ॥

दध्नातिघृष्टं मरिचं रात्र्यान्ध्यापहमञ्जनम् ।
त्रिफलाक्वाथकल्काभ्यां सपयस्कं शृतं घृतम् ॥ १,१७१.५९ ॥

तिमिराण्यचिराद्धन्यात्पीतमेतन्निशामुखे ।
पिप्पलीत्रिफला द्राक्षालोहचूर्णं ससैन्धवम् ॥ १,१७१.६० ॥

भृङ्गराजरसैर्घृष्टं घुटिकाञ्जनमिष्यते ।
आन्ध्यं सतिमिरं काचं हन्त्यन्यान्नेत्ररोगकान् ॥ १,१७१.६१ ॥

त्रिकटु त्रिफला नक्त सैन्धवं च मनः शिला ।
रुचकं शङ्खनाभिश्च जातीपुष्पाणि निम्बकम् ॥ १,१७१.६२ ॥

रसाञ्जनं भृङ्गराजं घृतं मधु पयस्तथा ।
एतत्पिष्ट्वा च वटिका सर्वनेत्ररुगर्दिनी ॥ १,१७१.६३ ॥

दग्धमेरण्डकं मूलं लेपात्काकिकपेषितम् ।
शिरोऽर्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दक (ज) म् ॥ १,१७१.६४ ॥

शतमूल्यैरण्डमूलचक्राव्याघ्रीपलैः शृतम् ।
तैलं नस्यमरुश्लेष्मतिमिरोर्ध्वर्(द्ध) गदापहम् ॥ १,१७१.६५ ॥

नाचनं (लनणं) सगुडं विश्वं पिप्पली वा ससैन्धवा ।
भुजस्तम्भादिरोगेषु सर्वेषूर्ध्वगदेषु च ॥ १,१७१.६६ ॥

सूर्यावर्ते विधातव्यं नस्यकर्मादिभेषजम् ।
दशमूलीकषायं तु सर्पिः सैन्धवसंयुतम् ।
नस्यमङ्गविभेदघ्नं सूर्यावर्तशिरोऽर्तिनुत् ॥ १,१७१.६७ ॥

दध्ना सौवर्चलाजाजीमधूकं नीलमुत्पलम् ।
पिबेत्क्षौद्रयुतं नारी वातासृग्दरपीडिता ॥ १,१७१.६८ ॥

वासकस्वरसं पैत्ते गुडूच्या रसमेव वा ।
जलेनामलकीबीजं कल्कं वाससितामधु ॥ १,१७१.६९ ॥

आमलक्या मधुरसं मूलं कार्पासमेव वा ।
पाण्डुप्रदरशान्त्यर्थं पिबेत्तण्डुलवारिणा ॥ १,१७१.७० ॥

तण्डुलीयकमूलं तु सक्षौद्रं सरसाञ्जनम् ।
तण्डुलोदकसंपीतं सर्वांश्चासृक्दराञ्जयेत् ।
कुशमूलं तण्डुलाद्भिः पीतं चासृक्दरं जयेत् ॥ १,१७१.७१ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नाडीव्रणादिचिकित्सावर्णनं नामैकसप्तत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १७२
धन्वन्तरिरुवाच ।
स्त्रीरोगादिचिकित्सां च वक्ष्ये सुश्रुत तच्छृणु ।
योनिव्यापत्सु भूयिष्टं शस्यते कर्म वातजित् ॥ १,१७२.१ ॥

वचोपकुञ्चिकाजातीकृष्णावासकसैन्धवम् ।
अजमोदायवक्षारं चित्रकं शर्करान्वितम् ॥ १,१७२.२ ॥

पिष्ट्वालोड्य जलाद्यैश्च खादयेद्धृतभर्जितम् ।
योनिपार्श्वार्तिहृद्रोगगुल्मार्शो विनिवर्तयेत् ॥ १,१७२.३ ॥

बदरीपत्रसंलेपाद्योनिर्भिन्ना प्रशाम्यति ।
लोध्रतुम्बीफलालेपाद्योनेर्दार्ढ्यं करोति च ॥ १,१७२.४ ॥

पञ्चपल्लवपिष्टाह्वमालतीकुसुमैर्घृतम् ।
रविपक्वमसृग्धारं योनिगन्धविनाशनम् ॥ १,१७२.५ ॥

सकाञ्जिकं जपापुष्पपुष्पं ज्योतिष्मतीदलम् ।
दूर्वापिष्टं च संप्राश्य चित्रकं शर्करान्वितम् ॥ १,१७२.६ ॥

धात्र्यञ्जनाभयाचूर्णं तोयपीतं रजो हरेत् ।
सदुग्धा लक्ष्मणा पीता नस्याद्वा पुत्रदा ऋतौ ॥ १,१७२.७ ॥

दुग्धस्यार्धाढकं चाज्यमश्वगन्धा च पुत्रदा ।
वन्ध्या पुत्रं लभेत्पीत्वा घृतेन व्योपकेसरम् ॥ १,१७२.८ ॥

कुशकाशोरुचृकानां मृलैर्गोक्षुरकस्य च ।
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत्परम् ॥ १,१७२.९ ॥

पाठालाङ्गलिसिंहाम्यमयूरकूटजैः पृथक् ।
नाभिबस्ति भगालेपात्सुखं नारी प्रसूयते ॥ १,१७२.१० ॥

सूताया हृच्छिरोबस्तिशूलमर्कन्द (क्वल्ल) संज्ञितम् ।
यवक्षारं पिबेत्तत्र मस्तु कोष्णोदकेन वा ॥ १,१७२.११ ॥

दशमूलीकृतः क्ताथः साज्यः मूतिरुजापहः ।
शातिलण्डुलचूर्णं तु सदुग्धं दुग्धकृद्भवेत् ॥ १,१७२.१२ ॥

विदारी कन्दस्वरसं मूलं कार्पासजं तथा ।
धात्री स्तन्यविशुद्ध्यर्थं मुद्गयूपरसाशिनी ॥ १,१७२.१३ ॥

कुष्ठा वचाभया ब्राहमी मधुरा क्षौद्रसर्पिषा ।

वर्णायुः कान्तिजननं लेह्यं वालम्य दापयेत् ॥ १,१७२.१४ ॥

स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिवेत् ।
स्वेदनं नाग्निशोफार्ते मृदा स्यादग्नितप्तया ॥ १,१७२.१५ ॥

लेहो मुस्तविपायाश्च वमिकासज्वरे पिबेत् ।
सुस्तशुण्ठीविषाविल्वकूटजैरतिसारनुत ॥ १,१७२.१६ ॥

मधु व्योषं मातुलुङ्गं हिक्काच्छर्दिनिवारणम् ।
कुष्ठेन्द्रयवसिद्धार्था निशा दूर्वा च कुष्ठजित् ॥ १,१७२.१७ ॥

महामुण्जितिकोजीच्यकाथैः स्नानं ग्रहापहम् ।
सप्तच्छदामयनिशाचन्दनैश्चानुलेपनम् ॥ १,१७२.१८ ॥

शङ्खाब्जबीजरुद्राक्षवचालौहादिधारणम् ।
ओं कं टं यं गं वैनतेयाय नमः ।
ओं हों हां हः मन्त्रेण शान्तिर्वालानां मार्जनाद्वलिदानतः ।
ओं ह्रीं बालग्रहाद्वलिं गृह्णीत वालं मुञ्चत स्वाहा ॥ १,१७२.१९ ॥

तण्डुलाद्भिः शिरीपस्य पलं पीतं विषापहम् ।
तण्डुलाद्भिश्च वर्षाभ्वाः शुक्लायाः सर्पदंशनुत् ॥ १,१७२.२० ॥

दध्याज्यं तण्डुलीयं च गृहधूमो निशा तथा ।
पिष्टं पानं तथा क्षौद्रं सिन्धृत्थस्य विपान्तकम् ॥ १,१७२.२१ ॥

अङ्कोटमूलनिष्क्वाथः साज्यः पीतो विषान्तकः ।
यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम् ॥ १,१७२.२२ ॥

सिन्दूत्यरार्कराशुण्ठीकणामधुगुडैः क्रमात् ।
वर्षादिष्वभया सेव्या रसायनगुणौषिणा ॥ १,१७२.२३ ॥

ज्वरस्यान्तेऽभयां चैकां प्रभुङ्क्ते द्वे विभीतके ।
भुक्त्वा मध्वाज्यधात्रीणां चतुष्कं शतवर्षकृत् ॥ १,१७२.२४ ॥

पीताश्वगन्धा पयसा घृतेनाशेपरोगनुत् ।
मण्डूकपर्ण्याः स्वरसो विदार्याश्चामृतोपमः ॥ १,१७२.२५ ॥

तिलधात्रीभृङ्गराजौ जग्ध्वा वर्षशती भवेत् ।
त्रिकटु त्रिफला वह्निर्गुडूची च शतावरी ॥ १,१७२.२६ ॥

विडङ्गलोहचूर्णं तु मधुना सह रोगनुत् ।
त्रिफला च कणा शुण्ठी गुडूची च शतावरी ॥ १,१७२.२७ ॥

विडङ्गभृङ्गराजादि भावितं सर्वरोगनुत् ।
चूर्णं विदार्या मध्वाज्यं लीढ्वा दश स्त्रियो व्रजेत् ॥ १,१७२.२८ ॥

घृतं शतावरीकल्कैः क्षीरैर्दशगुणैः पचेत् ।
शर्करापिप्पलीक्षौद्रयुक्तं वा जारकं विदुः ॥ १,१७२.२९ ॥

प्रतिमर्षोऽवपीडश्च नस्यं प्रवपनं तथा ।
शिरोविरेचनं चेति पञ्चकर्म च कथ्यते ॥ १,१७२.३० ॥

मासैर्द्विसंख्यैर्माघाद्यैः क्रमात्षड्तवः स्मृताः ।
अग्निसेवामधुक्षीरविकृतीः परिपेवयेत् ॥ १,१७२.३१ ॥

स्त्रीयुक्तः शिशिरे तद्वद्वसन्ते न दिवा स्वपेत् ।
त्यजेद्वर्षासु स्वप्नादीञ्छरदिन्दोश्च रश्मयः ॥ १,१७२.३२ ॥

पथ्यानि शालयो मुद्रा वर्षाम्भः क्वथितं पयः ।
निम्वातसीकुसुम्भानां शिग्रुसर्षपयोस्तथा ॥ १,१७२.३३ ॥

ज्योतिष्मतीमूलकानां तैलानि च हरन्ति हि ।
कृमिकुष्ठप्रमेहांश्च वातश्लेष्मशिरोरुजः ॥ १,१७२.३४ ॥

दाडिमामलकीकोलकरमर्दपियालकम् ।
जम्बीरं नागग्गं च आम्रातककपिन्थकम् ॥ १,१७२.३५ ॥

पित्तलान्यनिलघ्नानि कफोत्क्लेशकराणिच ।
जलं जीमूतकेक्ष्वाकुकुटजाकृतबन्धनम् ॥ १,१७२.३६ ॥

धामार्गवश्च संयोज्याः सर्वथा वमनेष्वमी ।
पूर्वाह्ने वमनायेते मदनेन्द्रयवी वचा ॥ १,१७२.३७ ॥

मृदुकोष्टश्च पित्तेन खरो वातकफाश्रयात् ।
मध्यमः समदोषे स्यात्त्रिवृत्तिते विरेचनम् ॥ १,१७२.३८ ॥

शर्करामधुसंयुक्तं सैन्धवं नगरं त्रिवृत् ।
हरीतकीविहङ्गानि गोमूत्रेण विरेचनम् ॥ १,१७२.३९ ॥

एरण्डतैलं त्रिफलाक्वाथश्च द्विगुणस्तथा ।
वातोल्बणेषु दोषेषु भोजयित्वाथ वामयेत् ॥ १,१७२.४० ॥

वंशादिनेत्रं कुर्वीत पडष्टद्वादशाङ्गुलम् ।
कर्कन्धूफलवच्छिद्रं वस्तिरुत्तानशायिने ॥ १,१७२.४१ ॥

निरूहदानेऽपि विधिरयमेवमुदीरितः ।
अर्धत्रिपट्पले मात्रा लघुमध्योत्तमः क्रमात् ॥ १,१७२.४२ ॥

पथ्याक्षवात्र्योकद्विचतुर्भाग रुगर्दनाः ।
शतवर्यसृताभृङ्गसिन्धुवारादिभाविताः ॥ १,१७२.४३ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे स्त्रीरोगचिकित्सादिकयनं नाम द्विसप्ततत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १७३
धन्वन्तरिरुवाच ।
द्रव्याणि मधुरादीनि वक्ष्ये रागहराण्यहम् ।
शालिषष्टिकगोधूमक्षीरं घृतं रसा मध ॥ १,१७३.१ ॥

मज्जाशृङ्गाटकयवकशेर्विवारुगीक्षुरम् ।
गम्भगी पौष्करं बीजं द्राक्षा खर्जूरकं बला ॥ १,१७३.२ ॥

नारिकलेक्ष्वात्मगुप्ता विदारी च प्रियालकम् ।
मधुकं तालकष्माण्डं मुख्योऽयं मधुरो गणः ॥ १,१७३.३ ॥

मूर्छादाहप्रशमनः पडिन्द्रियप्रसादनः ।
कृमिकृत्कफकृच्चैव एकोऽत्यर्थ निपेवितः ॥ १,१७३.४ ॥

श्वासकासाम्यमाधुर्यस्वरघातार्वुदानि च ।
गलगण्डश्लीपदानि गुडलेपादि कारयेत् ॥ १,१७३.५ ॥

दाडिमामलकाम्रं च कपित्थकरमर्दकौ ।
मातुलुङ्गाम्रातकं च बदरं तिन्तडीफलम् ॥ १,१७३.६ ॥

दधि तक्रं काञ्जिकं च लकुचं चाम्लवे तसम् ।
अम्लो लोणः शुण्ठीयुक्तो जारणः पाचनो रसः ॥ १,१७३.७ ॥

क्लेदनो वातकृद्धृप्यो विदाही चानुलोमनः ।
अम्लोऽत्यर्थं सेव्यमानः कुर्याद्वै दन्तहर्षकम् ॥ १,१७३.८ ॥

शरीरस्य च शैतिल्यं स्वरकण्ठास्यहृद्दहेत् ।
छिन्नभिन्नव्रणादीनि पाचयित्वाग्निभावितः ॥ १,१७३.९ ॥

लवणानि यवक्षारसर्जिकादिश्च लावणः ।
शोधनः पाचनः क्लेदी विश्लेषसर्पणादिकृत् ॥ १,१७३.१० ॥

मार्गरोधी मार्दवकृत्स एकः परिषेवितः ।
गात्रकण्डूकोष्ठशोथवैवर्ण्यं जनयेद्रसः ।
रक्तवातं पित्तरक्तं पुंस्त्वेन्द्रियरुजादिकम् ॥ १,१७३.११ ॥

व्योषशिग्रूमूलकं देवदारु च कुष्ठकम् ।
लशुनं वल्गुजी फलं मुस्तागुग्गुलुलाङ्गली ॥ १,१७३.१२ ॥

कटुको दीपनः शोधी कुष्ठकण्डूकफान्तकृत् ।
स्थौल्यालस्यक्रिमिहरः शुक्रमेदोविरोधनः ।
एकोऽत्यर्थं सेव्यमानः भ्रमदाहादिकृद्भवेत् ॥ १,१७३.१३ ॥

कृतमालः कीराणि हरिद्रेन्द्रयवास्तथा ।
स्वादुकण्टकवेत्राणि बृहतीद्वयशङ्खिनी ॥ १,१७३.१४ ॥

गुडूची चद्रवन्ती च त्रिवृन्मण्डूकपर्ण्यपि ।
कारवेल्लकवार्ताकुकरवीरकवासकाः ॥ १,१७३.१५ ॥

रोहिणी शङ्खचूर्णं च कर्कोटो वै जयन्तिका ।
जातीवारुणकं निम्बो ज्योतिष्मती पुनर्नवा ॥ १,१७३.१६ ॥

तिक्तो रसश्छेदनः स्याद्रोचनी दीपनस्तथा ।
शोधनो ज्वरतृष्णाघ्नो मूर्छाकण्ठार्तिकादिजित् ॥ १,१७३.१७ ॥

विण्मूत्रक्लेदसंशोषो ह्यत्यर्थं स च सेवितः ।
हनुस्तम्भाक्षेपकार्तिशिरः शूलव्रणादिकृत् ॥ १,१७३.१८ ॥

त्रिफलासल्लकीजम्बु आम्रातकवचादिकम् ।
तिन्दुकं वकुलं शालं पालङ्कीमुद्गचिल्लकम् ॥ १,१७३.१९ ॥

कषायो ग्राहको रोपी स्तम्भनक्लेदशोषणः ।
एकोऽत्यर्थं सेव्यमानो हृदये चाथ पीडकः ।
मुखशोषज्वराध्मानमन्यास्तम्भादिकारकः ॥ १,१७३.२० ॥

हरिद्राकुष्ठलवणं मेषशृङ्गिबलाद्वयम् ।
कच्छुरा सल्लकी पाठा पुनर्नवा शतावरी ॥ १,१७३.२१ ॥

अग्नि मन्थो ब्रह्मदण्डी श्वदंष्ट्रैरण्डके तथा ।
यवकोलकुलत्थादिकर्षांशी दशमूलकम् ।
पृथक्समस्तो वातातोर्बहुपित्तहरस्तथा ॥ १,१७३.२२ ॥

शतावरी विदारी च बालकोशीरचन्दनम् ।
दूर्वा वटः पिप्पली च बदरी सल्लकी तथा ॥ १,१७३.२३ ॥

कदली चोत्पलं पद्ममुदुम्बरपटोलकन् ।
अथ श्लेष्महरो वर्गो हरिद्रागुडकुष्ठकम् ॥ १,१७३.२४ ॥

शतपुष्पी च जाती च व्योषारग्वधलाङ्गली ।
सर्पिस्तैलवसामज्जाः स्नेहेषु प्रवरं स्मृतम् ॥ १,१७३.२५ ॥

तथा धीस्मृतिमेधाग्निकाङ्क्षिणां शस्यते घृतम् ।
केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम् ॥ १,१७३.२६ ॥

देयं बहुकफे वापि व्योषक्षारसमायुतम् ।
ग्रन्थिनाडीकृमिस्लेष्ममेदोमारुतरोगिषु ॥ १,१७३.२७ ॥

तैलं लाघवदार्ढ्याय क्रूरकोष्ठेषु देहिषु ।
वातातपाम्बुभारस्त्रीव्यायामक्षीणधातुषु ॥ १,१७३.२८ ॥

रूक्षक्लेशक्षयात्याग्निवाता वृतपथेषु ।
अथ दग्ध्वा शिराजालं योनिकर्म शिरोरुजि (जम् ) ॥ १,१७३.२९ ॥

उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ।
जघन्यस्य पलार्धेन स्नेहक्वाथौषधेषु च ॥ १,१७३.३० ॥

जलमुष्णं घृते देयं पृथक्तैले तु शस्यते ।
सेनेहे पित्ते तु तृष्णायां पिबेदुष्णोदकं नरः ॥ १,१७३.३१ ॥

वातानुलोमं दीप्ताग्रर्वर्चः स्निग्धस्य तन्मतम् ।
रूक्षम्य स्नेद्दनं कार्यमभिस्निग्धस्य रूक्षणम् ॥ १,१७३.३२ ॥

श्यामाककोरदोषान्नतक्रपिण्याकसकुभिः ।
वातश्लेष्माणि वाते वा कफे वा स्वेद इष्यते ।
न स्वेदयेदतिम्थूलरूक्षदुर्वलमूर्छितान् ॥ १,१७३.३३ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे योगसमदिवर्णनं नाम त्रिसप्तन्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १७४
धन्वतरिरुवाच ।
घृततैलादि वक्ष्यामि शृणु सुश्रुत रोगनुत् ।
शङ्खपुष्पी वचा सोमा ब्राह्मी ब्रह्मसुवर्चला ॥ १,१७४.१ ॥

अभया च गुडूची च अटरूपकवागुजी ।
एतैरक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ १,१७४.२ ॥

कण्टकार्या रसप्रस्थक्षीरप्रस्थममन्वितम् ।
एतद्ब्राह्मीघृतं नाम श्रुतिमेधाकरं परम् ॥ १,१७४.३ ॥

त्रिफलाचित्रकबलानिर्गुण्डी निम्बवासकाः ।
पुनर्नवा गुडूची च बृहती च शतावरी ॥ १,१७४.४ ॥

एतैर्घृतं यथालाभं सर्वरोगविमर्दनम् ।
बलाशतकषाये तु तैलस्यार्धाढकं पचेत् ।
कल्कैर्मधूकमञ्जिष्ठाचन्दनोत्पलपद्मकैः ॥ १,१७४.५ ॥

सूक्ष्मैलापिप्पलीकुष्ठत्वगेलागुरुकेसरैः ।
गन्धाश्वजीवनीयैश्च क्षीराढकसमाश्रितम् ॥ १,१७४.६ ॥

एतन्मृद्वग्निना पक्वं स्थापयेद्राजते शुभे ।
सर्ववातविकारांस्तु सर्वधात्वन्तराश्रयान् ॥ १,१७४.७ ॥

तैलमेतत्प्रशमयेद्वल्याक्यं राजवल्लभम् ।
शतावरीरसप्रस्थं क्षीरप्रस्थं तथैव च ॥ १,१७४.८ ॥

शतपुष्पं देवदारु मांसी शैलेयकं बला ।
चन्दनं तगरं कुष्टं मनः शिला ज्योतिष्मती ॥ १,१७४.९ ॥

एतैः कर्षसमैः कल्कैः घृतप्रस्थं विपाचयेत् ।
कुव्जवामनपङ्गूनां बधिरव्यङ्गकुष्ठिनाम् ॥ १,१७४.१० ॥

वायुना भग्नगात्राणां ये च सीदन्ति मैथुने ।
जराजर्जरगात्राणां चाध्मानमुख शोषिणाम् ॥ १,१७४.११ ॥

त्वग्गताश्चापि ये वाता शिरास्नायुगताश्च ये ।
सर्वांस्तान्नाशयत्याशु तैलं रोगकुलान्तकम् ॥ १,१७४.१२ ॥

नारायणमिदं तैलं विष्णुनोक्तं रुगर्दनम् ।
पृथक्तैलं घृतं कुर्यात्समस्तैरौषधैः पृथक् ॥ १,१७४.१३ ॥

शतावर्या गुडूच्या वा चित्रकै गोचनान्वितैः ।
निर्गुण्ड्या वा प्रसारः स्यात्कण्टकार्या रसादिभिः ॥ १,१७४.१४ ॥

वर्षाभूवालया वापि वासकन फलत्रिकैः ।
ब्राह्या चैग्ण्डकेनापि भृङ्गराजेन कुष्टिना ॥ १,१७४.१५ ॥

मुसल्या दशमूलेन खदिरेण वटादिभिः ।
वटिका मोदको वापि चूर्ण स्यात्सर्वरोगनुत् ॥ १,१७४.१६ ॥

घृतेन मधुना वापि अद्भिः खण्डगुडादिभिः ।
लवणैः कटुकैर्युक्तं यथालाभं च गेगनुत् ॥ १,१७४.१७ ॥

चित्रकार्कत्रिवृद्वापि यवानीहयमारकम् ।
सुधां च बालां गणिकां सप्तपर्णसुवर्चिकाम् ॥ १,१७४.१८ ॥

ज्योतिष्मतीञ्च संभृत्य तैलं धीरो विपाचयेत् ।
एतन्निष्यन्दनं तैलं भृशं दद्याद्भगन्दरे ॥ १,१७४.१९ ॥

शोधनं गेपणं चैव सर्ववर्णकरं परम् ।
चित्रकाद्यं महातैलं सर्वरोगप्रभञ्जनम् ॥ १,१७४.२० ॥

अजमोदं ससिन्दूरं हरितालं निशाद्वयम् ।
क्षारद्वयं फेनयुतमार्द्रक सर (शवः लोद्भवम् ॥ १,१७४.२१ ॥

इन्द्रवारुण्यपामार्गकदलैः स्यन्दनैः समम् ।
एभिः सर्षपजं तैलमजामूत्रैश्चयोजितम् ॥ १,१७४.२२ ॥

मृद्वग्निना पचेदेत्गव्यक्षीरेण संयुतम् ।
अजमोदादिकं तैलं गण्डमालां व्यपोहति ॥ १,१७४.२३ ॥

विदग्धस्तु पचेत्पक्वं चैव विशोधयेत् ।
रोपणं मृदुभावं च तैलेनानेन कारयेत् ॥ १,१७४.२४ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ब्राह्मीघृतादिवर्णनं नाम चतुः सप्तत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १७५
रुद्र उवाच ।
एवं धन्वन्तरिर्विष्णुः सुश्रुतादीनुवाच ह ।
हरिः पुनर्हरायाह नानायोगान्रुगर्दनान् ॥ १,१७५.१ ॥

हरिरुवाच ।
सर्वज्वरेषु प्रथमं कार्यं शङ्कर लङ्घनम् ।
क्वथितोदकपानं च तथा निर्वातसेवनम् ॥ १,१७५.२ ॥

अग्निस्वेदाज्ज्वरास्त्वेवं नाशमायान्तिहीश्वर ।
वातज्वरहरः क्वाथो गुडूच्या मुस्तकेन च ॥ १,१७५.३ ॥

दुरालभैश्चैव घृतं पित्तज्वरहरः शृणु ।
शुण्ठीपर्पटमुस्तैश्च बालकोशीरचन्दनैः ॥ १,१७५.४ ॥

साज्यः क्वाथः श्लेष्मजं तु सशुण्ठिः सदुरालभः ।
सवालकः सर्वज्ज्वरं सशुण्ठिः सहपर्पटः ॥ १,१७५.५ ॥

किराततिक्तैर्नारीगुडूचीशुण्ठिमुस्तकैः ।
पित्तज्वरहरः स्याच्च शृण्वन्यं योगमुत्तमम् ॥ १,१७५.६ ॥

वालकोशीरपाठाभिः कण्टकारिकमुस्तकैः ।
ज्वरनुच्च कृतः क्वाथस्तथा वै सुरदारुणा ॥ १,१७५.७ ॥

धन्याकनिम्बमुस्तानां समधुः स तु शङ्कर ।
पटोलपत्रयुक्तस्तु गुडूचीत्रिफलायुतः ॥ १,१७५.८ ॥

पीतोऽखिलज्वरहरः क्षुधाकृद्वातनुत्त्विदम् ।
हरीतकीपिप्लीनामामलीचित्रकोद्भवम् ॥ १,१७५.९ ॥

चूर्णं ज्वरं च क्वथितं धान्य (धन्या) कोशीरपपर्पटैः ।
आमलक्या गुडूच्या च मधुयुक्तं सचन्दनम् ॥ १,१७५.१० ॥

समस्तज्वरनुच्च स्यात्सन्निपातहरं शृणु ।
हरिद्रानिम्बत्रिफलामुस्तकैर्देवदारुणा ॥ १,१७५.११ ॥

कषायं कटुरोहिण्या सपटोलं सपत्रकम् ।
त्रिदोषज्वरनुच्चस्यात्पीतं तु क्वथितं जलम् ॥ १,१७५.१२ ॥

कण्टकार्या नागरस्य गुडूच्या पुष्करेण च ।
जग्ध्वा नागबलाचूर्णं श्वसकासादिनुद्भवेत् ॥ १,१७५.१३ ॥

कफवातज्वरे देयं जलमुष्णं पिपासिने ।
विश्वपर्पटकोशीरमुस्तचन्दनसाधितम् ॥ १,१७५.१४ ॥

दद्यात्सुशीतलं वारि तृट्छर्दिज्वरदाहनुत् ।
बिल्वादिप पञ्चमूलस्य क्वाथः स्याद्वातिके ज्वरे ॥ १,१७५.१५ ॥

पाचनं पिप्पलीमूलं गुडूचीविश्वभेषजम् ।
वातज्वरे त्वयं क्वाथो दत्तः शान्तिकरः परः ॥ १,१७५.१६ ॥

पित्तज्वरघ्नः समधुः क्वाथः पर्पटनिम्बयोः ।
विधाने क्रियमाणेऽपि य्सय संज्ञा न जायते ॥ १,१७५.१७ ॥

पादयोस्तु ललाटे वा दहेल्लौहशलाकया ।
तिक्ता पाठा पर्पटाश्च विशाला त्रिफला त्रिवृत् ।
सक्षीरो भेदनः क्वाथः सर्वज्वरविशोधनः ॥ १,१७५.१८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्वरहरनानायोगादिवर्णनं नाम पञ्चसप्तत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १७६
श्रीभगवानुवाच ।
सप्तरात्रात्प्रजायन्ते खल्वाटस्य कचाः शुभाः ।
दग्धहस्तिदन्तलेपात्साजाक्षीररसाञ्जनात् ॥ १,१७६.१ ॥

भृङ्गराजरसेनैव चतुर्भागेन साधितम् ।
केशवृद्धिकरं तैलं गुञ्जाचूर्णान्वितेन च ॥ १,१७६.२ ॥

एलामांसीकुष्ठमुरायुक्तमभ्यङ्गतः शिवम् ।
गुञ्जाफलं समादेयं लेपनं चन्द्रलुप्तनुत् ॥ १,१७६.३ ॥

आम्रास्थिचूर्णलेपाद्वै केशाः सूक्ष्मा भवन्ति च ।
करञ्जामलकैलाललाक्षालेपोऽरुणापहः ॥ १,१७६.४ ॥

आम्रास्थिमज्जामलकलेपात्केशा भवन्ति वै ।
बद्धमूला घना दीर्घाः स्नग्धाः स्युर्नोत्पतन्ति च ॥ १,१७६.५ ॥

विडङ्गगन्धपाषाणसाधितं तैलमुत्तमम् ।
सचतुर्गुणगोमूत्रं मनसः शिलमेव वा ॥ १,१७६.६ ॥

शिरोऽभ्यङ्गाच्छिराजन्मयूकालिख्याः क्षयं नयेत् ।
नवदग्धं शङ्खचूर्णं घृष्टसीसकलेपितम् ॥ १,१७६.७ ॥

कचाः श्लक्ष्णा महाकृष्णा भवन्ति वृषभध्वज ।
भृङ्गराजं लोहचूर्णं त्रिफला बीजपूरकम् ॥ १,१७६.८ ॥

नीली च करवीरं च गुडमेतैः समं शृतम् ।
पलितानीह कृष्णानि कुर्याल्लेपान्महौषधम् ॥ १,१७६.९ ॥

आम्रास्थिमज्जा त्रिफला नी (ता) ली च भृङ्ग राजकम् ।
जीर्णं पक्वं लोहचूर्णं काञ्जिकं कृष्णकेशकृत् ॥ १,१७६.१० ॥

चक्रमर्दकबीजानि कुष्ठमेरण्डमूलकम् ।
अत्यम्लकाञ्जिकं पिष्ट्वा लेपान्मस्तकरोगनुत् ॥ १,१७६.११ ॥

सैन्धवं च वचा हिङ्गु कुष्ठं नागेश्वरं तथा ।
शतपुष्पा देवदारु एभिस्तैलं तु साधितम् ॥ १,१७६.१२ ॥

गोपुरीपरसेनैव चतुर्भागेन संयुतम् ।
तत्कणभरणादुग्रकर्णशूलं क्षयं नयेत् ॥ १,१७६.१३ ॥

मेषमूत्रसैन्धवाभ्यां कर्णयोर्भरणाच्छिव ।

कर्णयोः पूतिनाशः स्यात्कृमिस्त्रावादिकस्य च ॥ १,१७६.१४ ॥

मालतीपुष्पदलयो रसेन भरणात्तथा ।
गोजलेनैव पूरेण पूयस्त्रावो विनश्यति ॥ १,१७६.१५ ॥

कष्ठमाषमरीचानि तगरं मधु पिप्पली ।
अपामार्गोऽश्वगन्धा च बृहती सितसर्षपाः ॥ १,१७६.१६ ॥

यवास्तिलाः सैन्धवं च पादिकोद्वर्तनं शुभम् ।
लिङ्गबाहुस्तनानां च कर्णयोर्वृद्धिकृद्भवेत् ।
कटुतैलं भल्लातकं बृहती फलदाडिमम् ॥ १,१७६.१७ ॥

वल्कलैः साधितैर्लिप्तं लिङ्गं तेन विवर्धते ॥ १,१७६.१८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे केशोत्पत्त्यादिवर्णनं नाम षट्सप्तत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १७७
हरिरुवाच ।
सोभाञ्जनपत्ररसं मधुयुक्तं हि चक्षुषोः ।
भ (च) रणाद्रोगहरणं भवेन्नास्त्यत्र संशयः ॥ १,१७७.१ ॥

अशीतितिलपुष्पाणि जात्याश्च कुसुमापि च ।
उषानिम्बामलाशुण्ठीपिप्पलीतण्डुलीयकम् ॥ १,१७७.२ ॥

छायासुष्कां वटीं कुर्यात्पिष्ट्वा तण्डुलवारिणा ।
मधुना सहसा चाक्ष्णोरञ्जनात्तिमिरादिनुत् ॥ १,१७७.३ ॥

बिभीतकास्थिमज्जा तु शङ्खनाभिर्मनः शिला ।
निम्बपत्रमरीचा नि अजामूत्रेण पेषयेत् ॥ १,१७७.४ ॥

पुष्पं रात्र्यन्धतां हन्ति तिमिरं पटलं तथा ।
चतुर्भागानि शङ्खस्य तदर्धेन मनः शिला ॥ १,१७७.५ ॥

सैन्धवं च तदर्धेनत्वेतत्पिष्ट्वादकेन तु ।
छायाशुष्कां तु वटिकां कृत्वा नयनमञ्जयेत् ॥ १,१७७.६ ॥

तिमिरं पटलं हन्ति पिचिटं च महौषधम् ।
त्रिकटु त्रिफलां चैव करं जस्य फलानि च ॥ १,१७७.७ ॥

सैन्धवं रजनीद्वे व भृङ्गराजरसेन हि ।
पिष्ट्वा तदञ्जनादेव तिमिरादिविनाशनम् ॥ १,१७७.८ ॥

आटरूषकमूलं तु काञ्जिकापिष्टमेव तु ।
तेनाक्षिबूमिलेपाच्च चक्षुः शूलं विनश्यति ॥ १,१७७.९ ॥

सतक्रं बदरीमूलं पीतं वाक्षिव्यथां हरेत् ।
सैन्धवं कटुतैलं च अपामार्गस्य मूलकम् ॥ १,१७७.१० ॥

क्षीरकाञ्जिकसंघृष्टं ताम्रपात्रे तु तेन च ।
अञ्जनात्पिञ्जटस्यैव नाशो भवति शङ्कर ॥ १,१७७.११ ॥

ओं दद्रु सर क्रों ह्रीं ठः ठः दद्रु सर ह्रीं ह्रीं ओं उं ऊ सर क्रीं क्रीं ठः ठः ।
आद्या हि वशामायान्ति मन्त्रेणानेन चाञ्जनात् ॥ १,१७७.१२ ॥

बिल्वकनीलिकामूलं पिष्टमभ्यञ्जनेन च ।
अनेनाञ्जितमात्रेण नश्यन्ति तिमिराणि हि ॥ १,१७७.१३ ॥

कटुकं (पिप्पली) तगरं चैव हरिद्रामलकं वचा ।

खदिरपिष्टवात्तश्च अञ्जनान्नेत्ररोगनुत् ॥ १,१७७.१४ ॥

नीरपूर्णमुखो धौति बृहन्मानेन योऽक्षिणी ।
प्रभाते नेत्ररोगैश्च नित्यं सर्वैः प्रमुच्यते ॥ १,१७७.१५ ॥

शुक्लैरण्डस्य मूलेन पत्रेणापि प्रसाधितम् ।
छगदग्धसेकमौष्ण्याच्चक्षुषोर्वातशलनत् ॥ १,१७७.१६ ॥

चन्दनं सैन्धवं वृद्धपालाशश्च हरीतकी ।
पटलं कुसुमं नीली च (व) क्रिकां हरतेऽञ्जनम् ॥ १,१७७.१७ ॥

गुञ्जामूलं छागमूत्रे घृष्टं तिमिरनुच्च तत्रौप्यताम्रसुवर्णानां हस्तघृष्टशलाकया ॥ १,१७७.१८ ॥

घृष्टमुद्वर्तनं रुद्र कामलाव्याधिनाशनम् ।
घोषाफलमपाघ्रातं पीतकामलनाशनम् ॥ १,१७७.१९ ॥

दूर्वादाडिमपुष्पं तु अलक्तकहरीतकी ।
नासार्शवातरक्तनुन्नस्याद्वै स्वरसेन हि ॥ १,१७७.२० ॥

आपिष्ट्वा जाङ्गली मू (तू) लं तद्रसेन वृषध्वज ।
नस्यादाराद्विनश्येत नाशार्शो नीललोहित ॥ १,१७७.२१ ॥

गव्यं घृतं सर्जरसं रुद्र धन्याकसैन्धवम् ।
धुत्तूरकं गैरिकं च एतैः साधितसिक्थकम् ॥ १,१७७.२२ ॥

सतैलं व्रणनुत्स्याच्च स्फुटितोद्घटिताधरे ।
जातीपत्रं च चर्वित्वा विधृतं मुखरोगनुत् ॥ १,१७७.२३ ॥

भक्षात्केसरबीजस्य दन्ताः स्युश्चलिताःस्थिराः ।
मुष्टकं कुष्ठमेला च यष्टिकं मधुवालकम् ॥ १,१७७.२४ ॥

धन्याकमेतददनान्मुखदुर्गन्धनुद्धर ।
कषायं कटुकं वापि तिक्तशाकस्य भक्षणात् ॥ १,१७७.२५ ॥

तलयुक्तस्य नित्यं स्यान्मुखदुर्गन्धताक्षयः ।
दन्तव्रणानि सर्वाणि क्षयं गच्छन्त्यनेन तु ॥ १,१७७.२६ ॥

काञ्जिकस्य सतैलस्य गण्डूषकवलास्थितिः ।
ताम्बूलचूर्णदग्धस्य मुखस्य व्याधिनुच्छिव ! ॥ १,१७७.२७ ॥

परित्यक्तश्लेष्मणश्च शुण्ठीचर्वणतो यथा ।
मातुलुङ्गदलान्येला यष्टी मधु च पिप्पली ॥ १,१७७.२८ ॥

जातीपत्रमथैषां च चूर्णं लीढ्वा तथा कृतम् ।
शेफालिकजटायाश्च चर्वणं गलशुण्ठिनुत् ॥ १,१७७.२९ ॥

नासाशिरारक्तकर्षान्नश्येच्छंशकर जिह्विका ।
रसः शिरीषबीजानां हरिद्रायाश्चतुर्गुणः ॥ १,१७७.३० ॥

तेन पक्वेन भूतेश नस्यं मस्तकरोगनुत् ।
गलरोगा विनश्यन्ति नस्यमात्रेण तत्क्षणात् ॥ १,१७७.३१ ॥

दन्तकीटविनाशः म्याद्गुञ्जामूलस्य चर्वणात् ।
काकजङ्घास्नुहीनीलीकवायो मधुमोजितः ॥ १,१७७.३२ ॥

दन्ताक्रान्तान्दन्तजांश्च कृमीन्नाशयते शिव ।
घतं कर्कटपादेन दुग्धोन्मिश्रेण साधितम् ॥ १,१७७.३३ ॥

तेन चाम्यङ्गितादन्ताः कुर्युः कटकटान्न हि ।
लिप्त्वा कर्कटपादेन केवलेनाथवाशिव ॥ १,१७७.३४ ॥

त्रिसप्ताहं वाः पिष्टानि ज्योतिष्मत्याः फलानि हि ।
शुक्लाभयामज्जलेपाद्दन्तस्याङ्ककलङ्कनुत् ॥ १,१७७.३५ ॥

लोध्रकुङ्कुममञ्जिष्ठालोहका लेयकानि च ।
यवतण्डुलमेतैश्च यष्टी मधुसमन्वितैः ॥ १,१७७.३६ ॥

वारिपिष्टैर्वक्त्रलेपः स्त्रीणां शोभनवक्त्रकृत् ।
द्विभागं छागदुग्धेन तैलप्रस्थं तु साधितम् ॥ १,१७७.३७ ॥

रक्तवन्दनमञ्जिष्ठालक्षाणां कर्षकेण वा ।
यष्टीमधुकुङ्कुमाभ्यां सप्ताहान्मुखकान्तिकृत् ॥ १,१७७.३८ ॥

शुण्ठीपिप्पलिचूर्णं तु गुडूची कण्टकारिका ।
एभिश्च क्वथितं वारि पीतं चाग्निं करोति वै ॥ १,१७७.३९ ॥

वातशूलक्षयं चैव कगेति प्रथमेश्वर ।
करञ्जपर्पटोशीरं बहती कटुरोहिणी ॥ १,१७७.४० ॥

गोक्षुरं क्वथितं त्वभिर्वारि पीतं श्रमापहन् ।
दाहं पित्तं ज्वरं शोषं मूर्छां चैव क्षयं नयेत् ॥ १,१७७.४१ ॥

मध्वाज्यपिप्पलीचूर्णं क्वथितं क्षीरसंयुतम् ।
पीतं हृद्रोगकासस्य विषमज्वरनुद्भवेत् ॥ १,१७७.४२ ॥

क्वाथौपधीनां सर्वासां कर्षार्धं ग्राह्यमेव च ।
वयोऽनुरूयतो ज्ञेयो विशेषो वृषभध्वज ॥ १,१७७.४३ ॥

दुग्धं पीतं तु संयुक्तं गोपुरीषरसेन च ।
विषमज्वरनुत्स्याच्च काकजन्धारसस्तथा ॥ १,१७७.४४ ॥

मशुण्ठि क्वथितं क्षीग्मजाया ज्वरनुद्भवेत् ।
यष्टीमधुकमुस्तं च सैन्धवं बृहतीफलम् ॥ १,१७७.४५ ॥

एतैर्नस्वप्रिदानाच्च निद्रा स्यात्पुरुपस्य च ।
मरीचप्रध्वश्वलालानस्यान्निद्रा भवेच्छिव ॥ १,१७७.४६ ॥

मूलं तु काकजङ्घाया निद्राकृत्स्याच्छिरस्थितम् ।
सिद्धं तैलं काञ्जिकेन तथा सर्जरसेन च ॥ १,१७७.४७ ॥

शीतोदकसमायुक्तं लेपात्सन्तापनाशनम् ।
शोणितज्वरदाहेभ्यो जातसन्तापनुत्तथा ॥ १,१७७.४८ ॥

शृकशैवालमन्थश्च शुण्ठीपापाणभेदकम् ।
शौवाञ्जनं गोक्षुरं वा वरुणच्छन्नमेव च ॥ १,१७७.४९ ॥

सौभाञ्जनस्य मूलं च एतैः क्वथितवारि च ।
दत्त्वा हिङ्गुयवक्षारं पीतं वातविनाशनम् ॥ १,१७७.५० ॥

पिप्पली पिप्पलीमूलं तथा भल्लातकं शिव ।
वार्येतैः क्वथितं पीतं वरशूलापहारकृत् ॥ १,१७७.५१ ॥

अश्वगन्धामूलकाभ्यां सिद्धा वल्मीकमृत्तिका ।
एतया मर्दनाद्रुद्र ऊरुस्तम्भः प्रशाम्यति ॥ १,१७७.५२ ॥

बृहतीकस्य वै मूलं संपिष्टमुदकेन च ।
पीतं संघातवातस्य विपाटनकृदेव च ॥ १,१७७.५३ ॥

पीतं तक्रेण मूलं च आर्द्रस्य तगरस्य च ।
हरेत्झिञ्जिनीवातं?वै वृक्षमिन्द्राशनिर्यथा ॥ १,१७७.५४ ॥

अस्थिसंहारमेकेन भक्तेन सह वादितम् ।
पतिं मांसरसेनापि वातनुच्चास्थिभङ्गनुत् ॥ १,१७७.५५ ॥

घृतलिप्तं सशुष्कं च छागीक्षीरेण संयुतम् ।
तल्लोपात्पादयार्नंश्येत्सक्षेप्ये चात्र संशयः ॥ १,१७७.५६ ॥

मध्वाज्यसैन्धवं सिक्थं गुडकैरिकगुग्गुलैः ।
ससर्जरसस्फुटितः क्लोमशुद्धिश्च लेपनात् ॥ १,१७७.५७ ॥

कटुतैलेन लिप्तो वै विधूमाग्नौ प्रतापितः ।
मृत्तिकारखादितः पादः समः स्याद्वृषभध्वज ॥ १,१७७.५८ ॥

सर्जरसाः सिक्थकं च जीरकं च हरीतकी ।
उत्साधितघृताभ्यङ्गो ह्यग्निदग्धव्यथापनुत् ॥ १,१७७.५९ ॥

तिलतैलं चाग्निदग्धं यवभस्मसमन्वितम् ।
अग्निदग्धव्रणं नश्येद्ब्रहुशः कृतलेपतः ॥ १,१७७.६० ॥

नवनीतं माहिषं च दग्धपिष्टतिलानि च ।
सभल्लाकं व्रणं नश्येद्धृच्छूलं नस्यलेपनात् ॥ १,१७७.६१ ॥

कर्पूरगव्यसर्पिर्भ्यां प्रहारः पूरितो हर ।
शस्त्रोद्भवः सबद्धश्च शुक्लवर्णेन शङ्कर ! ।
पाकं च वेदनां चैव संस्पृशेद्वृषभध्वज ॥ १,१७७.६२ ॥

आम्र (तस्य) मूलरसेनैव शस्त्रघातः प्रपूरितः ।
ढौकते शस्त्रघाताभ्यां निर्व्रणो घृपूरितः ॥ १,१७७.६३ ॥

शरपुङ्खा लज्जालुका पाठा चैषां तु मूलकम् ।
जलपिष्टं तस्य लेपाच्छस्त्रघातः प्रशाम्यति ॥ १,१७७.६४ ॥

मूलं च काकजङ्घायास्त्रिरात्रेणैव शोषितः ।
पाकपूतिं वेदनां च हन्ति वै रोहितो व्रणे ॥ १,१७७.६५ ॥

सजलं तिलतैलं च अपामार्गस्य मूलकम् ।
तत्सेकदानान्नश्येच्च प्रहारोद्भववेदना ॥ १,१७७.६६ ॥

अभयां सैन्धवं शुण्ठीमेतत्पिष्ट्वोदकेन तु ।
भक्षयित्वा ह्यजीर्णस्य नाशो भवति शङ्कर ! ॥ १,१७७.६७ ॥

कटिबद्धं निम्बमूलमक्षिसूलहरं भवेत् ।
शणमूलं सताम्बूलं दग्धमिन्द्रियकस्य (ल्प) हृत् ॥ १,१७७.६८ ॥

अन्नस्विन्नहरिद्रा च श्वेतसर्षपमूलकम् ।
बीजानि मातुलुङ्गस्य एषामुद्वर्तनं समम् ।
सप्तरात्रप्रयोगेण शुभदेहकरं भवेत् ॥ १,१७७.६९ ॥

श्वेतापराजितापत्रं निम्बपत्ररसेन तु ।

नस्यदानाड्डाकिनीनां मातॄणां ब्रह्मरक्षसाम् ।
मोक्षः स्यान्मधुसारेण नस्याच्च वृषभध्वज ॥ १,१७७.७० ॥

मूलं श्वेतजयन्त्याश्च पुष्यर्क्षे तु समाहृतम् ।
श्वेतापराजितार्कस्य चित्रकस्य च मूलकम् ।
कृत्वा तु वटिकां नारी तिलकेन वशी भवेत् ॥ १,१७७.७१ ॥

पिप्पलीलोहचूर्णं तु शुण्ठीश्चामलकानि च ।
समानि रुद्र जानीयात्सैन्धवं मधुशर्करा ॥ १,१७७.७२ ॥

उदुम्बरप्रमाणेन सप्ताहं भक्षणात्समम् ।
पुमांश्च बलवान्स स्याज्जीवेद्वर्षशतद्वयम् ।
ओं ठ ठ ठ इति सर्ववश्यप्रयोगेषु प्रयुक्तः सर्वकामकृत् ॥ १,१७७.७३ ॥

संगृह्य विद्वान्काकस्य निलयं प्रदहेच्च तत् ।
चिताग्नौ भस्म तच्छत्रोर्दत्तं शिरसि शङ्कर ॥ १,१७७.७४ ॥

तमुच्चाटयते रुद्र शृणु तद्योगमुत्तमम् ।
निः क्षिप्तं च पुरीषं वै वनमूषिकचर्मणि ॥ १,१७७.७५ ॥

कटितन्तुनिबद्धं वै कुर्यान्मलनिरोधनम् ।
कृष्णकाकस्य रक्तेन यस्य नाम प्रलिप्य च ॥ १,१७७.७६ ॥

च्युतदले मध्यमध्ये ततो निः क्षिप्यते हर ! ।
स खाद्यते काकवृन्दैर्नारी पुरुष एव च ॥ १,१७७.७७ ॥

शर्करामध्वजाक्षीरं तिलगोक्षुरकं समम् ।
स शत्रुं नाशयेद्रुद्र ! उच्चाटितमिदं हर ! ॥ १,१७७.७८ ॥

उलूककृष्णकाकस्य बिल्वस्याथ समिच्छतम् ।
रुधिरेण समायुक्तं ययोर्नाम्ना तु हूयते ।
तयोर्मध्ये महावैरं भवेन्नास्त्यत्र संशयः ॥ १,१७७.७९ ॥

भावितं ऋक्षदुग्धेन मत्स्यस्य रोहितस्य च ।
मांसं तत्साधितं तैलं तदभ्यङ्गाच्च रोगनुत् ।
चन्दनोदकनस्यात्तु रोमोत्थानं भवेत्पुनः ॥ १,१७७.८० ॥

हस्ते लाङ्गलिकाकन्दं गृहीतं तेन लेपितम् ।
शरीरं येन स पुमान्वृद्धेर्दर्पं व्यपोहति ॥ १,१७७.८१ ॥

मयूररुधिरेणैव जीवं संहरते शिव ।
ज्वलतां तु भुजङ्गानां बिलस्थानामपीश्वर ॥ १,१७७.८२ ॥

देहश्चिताग्नौ दग्धश्च सर्पस्याजगरस्य हि ।
तद्भस्म संमुखे क्षिप्तं शत्रणां भङ्गकृद्भवेत् ॥ १,१७७.८३ ॥

मन्त्रेणानेन तत्क्षिप्तं महाभङ्गकरं रिपोः ।
ओं ठ ठ ठ चाहीहिचाहीहि स्वाहा ।
ओं उदरं पाहिहि पाहिहिस्वाहा ॥ १,१७७.८४ ॥

सुदर्शनाया मलं तु पुष्यर्क्षे तु समाहृतम् ।
निः क्षिप्तं गृहमध्ये तु भुजङ्गा वर्जयन्ति तत् ॥ १,१७७.८५ ॥

अर्कमूलेन रविणा अर्काग्निज्वलिता शिव ।
युक्ता सिद्धार्थतैलेन वर्तिर्मार्गाहिनाशिनी ॥ १,१७७.८६ ॥

मार्जारपललं विष्ठा हरितालं च भावितम् ।
छाग मूत्रेण तल्लिप्तो मूषिको मूषिकान्हरेत् ॥ १,१७७.८७ ॥

मुक्तो हि मन्दिरे रुद्र नात्र कार्या विचारणा ।
विफलार्जुनपुष्पाणि भल्लातकशिरीषकम् ॥ १,१७७.८८ ॥

लाक्षा सर्जरसश्चैव विडङ्गश्चैव गुग्गुलुः ।
एतैर्धूपो मक्षिकाणां मशकाणां विनाशनः ॥ १,१७७.८९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नेत्राञ्जनादिनिरूपणं नाम सप्तसप्तत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १७८
हरिरुवाच ।
ब्रह्मदण्डीवचाकुष्ठं प्रियङ्गर्नागकेशरम् ।
दद्यात्ताम्बूलसंयुक्तं स्त्रीणां मन्त्रेण तद्वशम् ।
ओं नारायण्यै स्वाहा ॥ १,१७८.१ ॥

ताम्बूलं यस्य दीयेत स वशी स्यात्सुमन्त्रतः ।
ओं हरिः हरिः स्वाहा ॥ १,१७८.२ ॥

गोदन्तं हरितालञ्च संयुक्तं काकजिह्वया ।
चूर्णीकृत्य यस्य शिरे दीयते स वशी भवेत् ।
श्वेतसर्षपनिर्माल्यं यद्गृहे तद्विनाशकृत् ॥ १,१७८.३ ॥

वैभी तकं शाखोटकं मूलं पत्रेण संयुतम् ।
स्थाप्यते यद्गृहद्वारे तत्र वै कलहो भवेत् ॥ १,१७८.४ ॥

खञ्जरीटस्य मांसं तु मधुना सह पेषयेत् ।
ऋतुकालेयोनिलेपात्पुरुषो दासतामियात् ॥ १,१७८.५ ॥

अगुरुं गुग्गुलुं चैव नीलोत्पलसमन्वितम् ।
गुडेन धूपयित्वा तु राजद्वारे प्रियो भवेत् ॥ १,१७८.६ ॥

श्वेताप राजितामूलं पिष्टं रोचनया युतम् ।
यं पश्येत्तिलकेनैव वशी कर्यान्नृपालये ॥ १,१७८.७ ॥

काकजङ्घा वचा कुष्ठं निम्बपत्रं सुकुङ्कुमम् ।
आत्मरक्तसमायुक्तं वशी भवति मानवः ॥ १,१७८.८ ॥

आरण्यस्य बिडालस्य गृहित्वा रुधिरं शुभम् ।
करञ्जतैले तद्भाव्यं रुद्राग्नौ कज्जलं ततः ।
पातयेत्पद्मपत्रेण हादृश्यः स्यात्तदञ्जनात् ॥ १,१७८.९ ॥

ओं नमः खड्गवज्रपाणये महायक्षसेनापतये स्वाहा ।
ओं रुद्रं ह्रां ह्रीं वरशक्ता त्वरिताविद्या ।
ओं मातरः स्तम्भयस्वाहा ।
सहस्रं परिजप्यात्तु विद्येयं चौरवारिणी ।
महासुगन्धिकामूलं शुक्रं स्तम्भेत्कटौ स्थितम् ॥ १,१७८.१० ॥

ओं नमः सर्वसत्त्वेभ्यो नमः सिद्धिं कुरु कुरु स्वाहा ।
सप्ताभिमन्त्रितं कृत्वा करवीरस्य पुष्पकम् ।
स्त्रीणामग्रे भ्रामयच्च क्षणाद्वै सा वशे भवेत् ॥ १,१७८.११ ॥

ब्रह्मदण्डीं वचां पत्रं मधुना सह पेषयेत् ।
अङ्गलेपाच्च वनिता नान्यं भर्तारमिच्छति ॥ १,१७८.१२ ॥

ब्रह्मदण्डीशिखा वक्त्रे क्षिप्ता शुक्रस्य स्तम्भनम् ।
मूलं जयन्त्या वक्त्रस्थं व्यवहारे जयप्रदम् ॥ १,१७८.१३ ॥

भृङ्गराजस्य मूलं तु पिष्टं शुक्रेण संयुतम् ।
अक्षिणी चाञ्जयित्वा तु वशी कर्यान्नरं किल ॥ १,१७८.१४ ॥

अपराजिताशिखान्तु नीलोत्पलसमन्विताम् ।
ताम्बूलेन प्र (दाना) दद्याच्च वशीकरणमुत्तमम् ॥ १,१७८.१५ ॥

अङ्गुष्ठे च पदे गुल्फे जानौ च जघने तथा ।
नाभौ वक्षसि कुक्षौ च कक्षे कण्ठे कपोलके ॥ १,१७८.१६ ॥

ओष्ठे नेत्रे ललाटे च मूर्ध्नि चन्द्रकलाः स्थिताः ।
स्त्रीणां पक्षे सिते कृष्णे ऊर्ध्वाधः संस्थिता नृणाम् ॥ १,१७८.१७ ॥

वामाङ्गे दक्षिणाङ्गे च क्रमाद्रुद्र द्रवादिकृत् ।
चतुः षष्टि कलाः प्रोक्ताः कामशास्त्रे वशीकराः ।
आलिङ्गनाद्या नारीणां कमारीणां वशीकराः ॥ १,१७८.१८ ॥

रोचनागन्धुपुष्पाणि निम्बपुष्पं प्रियङ्गवः ।
कुङ्कमं चन्दनञ्चैव तिलकेन जगद्वशेत् ॥ १,१७८.१९ ॥

ओं ह्रीं गौरि देवि सौभाग्यं पुत्रवशादि देहि मे ।
ओं ह्रीं लक्ष्मि ! देवि सौभाग्यं सर्वं त्रैलोक्यमोहनम् ॥ १,१७८.२० ॥

सगन्धस्य हरिद्रायाः कुङ्कमानां च लेपतः ।
वशयेद्रुद्र धूपश्च तथापुष्पसुगन्धयोः ॥ १,१७८.२१ ॥

दुरालभा वचा कुष्ठं कुङ्कुमञ्च शतावरी ।
तिलतैलेन संयुक्तं योनिलेपाद्वशी नरः ॥ १,१७८.२२ ॥

निम्बकाष्ठस्य धूमेन धूपयित्वा भगं वधूः ।
सुभगास्यात्साति रुद्र पतिर्दासो भविष्यति ॥ १,१७८.२३ ॥

माहिषं नवनीतञ्च कष्टञ्च मधुयष्टिका ।
सौभाग्यं भगलेपात्स्यात्पतिर्दासो भवेत्तथा ॥ १,१७८.२४ ॥

मधुयष्टिश्च गोक्षीरं तथा च कण्टकारिका ।

एतानि समभागानि पिबेदुष्णेन वारिणा ।
चतुर्भागावशेषेण गर्भसम्भवमुत्तमम् ॥ १,१७८.२५ ॥

मातुलुङ्गस्य बीजानि क्षीरेण सह भावयेत् ।
तत्पीत्वा लभते गर्भं नात्र कार्या विचारणा ॥ १,१७८.२६ ॥

मातुलुङ्गस्य बीजानि मूलान्येरण्डकस्य च ।
घृतेन सह संयोज्य पाययेत्पुत्रकाक्षिणी ॥ १,१७८.२७ ॥

पश्वगन्धा मृत दुग्ध क्वथितं मुत्रकारकम् ।
पलाशस्य तु बीजानि क्षौद्रेण सह पेषयेत् ।
रजस्वला तु पीत्वा स्यात्मुष्पगर्भविवर्जिता ॥ १,१७८.२८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ह्यष्टसप्तत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १७९
हरिरुवाच ।
हरितालं यवक्षारं पत्राङ्गं रक्तचन्दनम् ।
जातिहिङ्गुलकं लाक्षां पक्त्वा दन्तान्प्रलेपयेत् ॥ १,१७९.१ ॥

हरीतकीकषायेण मृष्ट्वा दन्तान्प्रलेपयेत् ।
दन्ताः स्युर्लोहिताः पुंसः श्वेता रुद्र न संशयः ॥ १,१७९.२ ॥

मूलकं स्विद्य मन्दाग्नौ रसं तस्य प्रपूरयेत् ।
कर्णयोः पूरणात्तेन कर्णस्त्रावो विनश्यति ॥ १,१७९.३ ॥

अर्कपत्रं गृहीत्वा तु मन्दाग्नौ तापयेच्छनैः ।
निष्पीड्य पूरयेत्कर्णौ कर्णशूलं विनश्यति ॥ १,१७९.४ ॥

प्रियङ्गुमधुका चैव धातक्युत्पलपाङ्क्तिभिः ।
मञ्जिष्ठा लोध्रलाक्षाभिः कपित्थस्वरसेन च ।
पचेत्तैलं तथा स्त्रीणां नश्येत्क्लेदः प्रपूरणात् ॥ १,१७९.५ ॥

शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुमहौषधम् ।
सतपुष्पावचा कुष्ठं दारु शिग्र रसाञ्जनम् ॥ १,१७९.६ ॥

सौवर्चलं यवक्षारं तथा सर्जकसैन्धवम् ।
तथा ग्रन्थिर्विडं मुस्तं मधुयुक्तं चतुर्गुणम् ॥ १,१७९.७ ॥

मातुलुं गरसस्तद्वत्कदल्याश्च रसो हि तैः ।
पक्वतैलं हरेदाशु स्त्रावादींश्च न संशयः ॥ १,१७९.८ ॥

कर्णयोः कृमिनाशः स्यात्कटुतैलस्य पूरणात् ।
हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च ॥ १,१७९.९ ॥

विडङ्गभद्रं मुस्तञ्च सप्तमं विश्वभेषजम् ।
गोमूत्रेण च पिष्ट्वैव कृत्वा च वटिकां हर ! ।
अजीर्णहृद्भवेच्चैकं द्वयं विषूचिकापहम् ॥ १,१७९.१० ॥

पटोलं मधुना हन्ति गोमूत्रेण तथाबुदम् ।
एषा च शङ्करी वर्तिः सर्वनेत्रामया पहा ॥ १,१७९.११ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकोनाशीत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १८०

हरिरुवाच ।
वचा मांसी च बिल्वञ्च तगरं पद्मकेसरम् ।
नागपुष्पं प्रियङ्गुञ्च समभागानि चूर्णयेत् ।
अनेन धूपितो मर्त्यः कामवद्विचरेन्महीम् ॥ १,१८०.१ ॥

कर्पूरं देवदारुञ्च मधुना सह योजयेत् ।
लिङ्गलेपाच्च तेनैव वशीकुर्यात्स्त्रियं किल ॥ १,१८०.२ ॥

मैथुनं पुरुषो गच्छेद्गृह्णीयात्स्वकमिन्द्रियम् ।
वामहस्तेन वामञ्च हस्तं लिंपेत्तु यत्स्त्रियाः ।
आलिप्ता स्त्री वशं याति नान्यं पुरुषमिच्छति ॥ १,१८०.३ ॥

ओं रक्तचामुण्डे अमुकं मे वशमानय आनय ओं ह्रीं ह्रैं ह्रः फट् ।
इमं जप्त्वायुतं मन्त्रं तिलकेन च शङ्कर ! ।
गोरोचनासंयुतेन स्वरक्तेन वशी भवेत् ॥ १,१८०.४ ॥

सैन्धवं कृष्णलवणं सौवीरं मत्स्यपित्तकम् ।
मधु सर्पिः सितायुक्तं स्त्रीणां तद्भगलेपनात् ॥ १,१८०.५ ॥

यः पुमान्मैथुनं गच्छेन्नान्यां नारीं गमिष्यति ।
शङ्कपुष्पी वचा मांसी सोम राजी च फल्गुकम् ॥ १,१८०.६ ॥

माहिषं नवनीतञ्च त्वकीकृत्य भिषग्वरः ।
समूलानि स पत्राणि क्षीरेणाज्येन पेषयेत् ॥ १,१८०.७ ॥

गुटिकां शोधितां कृत्वा नारीयोन्या प्रवेशयेत् ।
दशवारं प्रसूतापि पुनः कन्या भविष्यति ॥ १,१८०.८ ॥

सर्षपाश्च वचा चैव मदनस्य फलानि च ।
मार्जारविष्ठा धत्तुर स्त्रीकेशेन समन्वितः ॥ १,१८०.९ ॥

चातुर्थिकहरो धूपो डाकिनीज्वरनाशकः ।
अर्जुनस्य च पुष्पाणि भल्लातकविडङ्गके ॥ १,१८०.१० ॥

बला चैव सर्जरसं सौवीरसर्षपास्तथा ।
सर्पयूकामक्षिकाणां धूमो मशकनाशनः ॥ १,१८०.११ ॥

भूतलायाश्च चूर्णेन स्तम्भः स्याद्योनिपूरणात् ।
तेन लेपनतो योनौ भगस्तम्भस्तु जायते ॥ १,१८०.१२ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे अशीत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १८१
हरिरुवाच ।
ताम्बूलञ्च घृतं क्षौद्रं लवणं ताम्रभाजने ।
तथा पयः समायुक्तं चक्षुः शूलहरं परम् ॥ १,१८१.१ ॥

हरीतकी वचा कुष्ठं व्योषं हिङ्गु मनः शिला ।
कासे श्वासे च हिक्कायां लिह्यात्क्षौद्रं घृप्लुतम् ॥ १,१८१.२ ॥

पिप्पलीत्रिफलाचूर्णं मधुना लेहयेन्नरः ।
नश्यते पीनसः कासः श्वासश्च बलवत्तरः ॥ १,१८१.३ ॥

समूलचित्रकं भस्मपिप्पलीचूर्णकं लिहेत् ।
श्वासं कासञ्च हिक्काञ्च मधुमिश्रं वृषध्वज ! ॥ १,१८१.४ ॥

नीलोत्पलं शर्करा च मधुकं पद्मकं समम् ।
तण्डुलोदकसंमिश्रं प्रशमेद्रक्तविक्रियाः ॥ १,१८१.५ ॥

शुण्ठी च शर्करा चैव तथा क्षौद्रेण संयुता ।
कोकिलस्वर एव स्याद्गुटिका भुक्तिमात्रतः ॥ १,१८१.६ ॥

हरितालं शङ्खचूर्णं कदलीदलभस्मना ।
एतदद्रव्येण चोद्वर्त्य लोमशातनमुत्तमम् ॥ १,१८१.७ ॥

लवणं हरितालञ्च तुम्बिन्याश्च फलानि च ।
लाक्षारससमायुक्तं लोमशातनमुत्तम् ॥ १,१८१.८ ॥

सुधा च हरितालञ्च शङ्खभस्म मनः शिला ।
सैन्धवेन सहैकत्र छागमूत्रेण पेषयेत् ॥ १,१८१.९ ॥

तत्क्षणोद्वर्तनादेव लोमशातनमुत्तमम् ।
शङ्खमामलकं पत्रं धातक्याः कुसुमानि च ॥ १,१८१.१० ॥

पिष्ट्वा तत्पयसा सार्धं सप्ताहं धारयेन्मुखे ।
स्निग्धाः श्वेताश्च दन्ताश्च भवन्ति विमलप्रभाः ॥ १,१८१.११ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकाशीत्यधिकशततमोऽध्यायः

हरिरुवाच ।
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् ।
हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते ॥ १,१८२.१ ॥

भुक्ते तु शर्करा पीता नवनीतेन बुद्धिकृत् ।
गुडस्य तु पुराणस्य पलमेकन्तु भक्षयेत् ।
स्त्रीसहस्रञ्च संगच्छेत्पुमान्बलयुतो हर ! ॥ १,१८२.२ ॥

कुष्ठं संचूर्णितं कृत्वा घृतमाक्षिकसंयुतम् ।
भक्षयेत्स्वप्नवेलायां बलीपलितनाशनम् ॥ १,१८२.३ ॥

अतसीमाषगोधूमचूर्णं कृत्वा तु पिप्पली ।
घृतेन लेपयेद्गात्रमोभिः सार्धं विचक्षणः ।
कन्दर्पसदृशो मर्त्यो नित्यं भवति शङ्कर ! ॥ १,१८२.४ ॥

यवास्तिलाश्वगन्धा च मुशली सरला गुडम् ।
एभिश्च रचितां जग्ध्वा तरुणो बलवान्भवेत् ॥ १,१८२.५ ॥

हिङ्गु सौवर्चलं शुण्ठीं पीत्वा तु क्वथितोदकैः ।
परिणामाख्यशूलञ्च अजीर्णञ्चैव नश्यति ॥ १,१८२.६ ॥

धातकीं सोमराजीञ्च क्षीरेण सह पेषयेत् ।
दुर्बलश्च भवेत्स्थूलो नात्र कार्या विचारणा ॥ १,१८२.७ ॥

शर्करामधुसंयुक्तं नवनीतं बली लिहेत् ।
क्षीराशी च क्षयी पुष्टिं मेधाञ्चैवातुलां व्रजेत् ॥ १,१८२.८ ॥

कुलीरचूर्णं सक्षीरं पीतञ्च क्षयरेगनुत् ।
भल्लातकं विडङ्गञ्च यवक्षारञ्च सैन्धवम् ॥ १,१८२.९ ॥

मनः शिला शङ्खचूर्णं तैलपक्वं तथैव च ।
लोमानि शातयत्येव नात्र कार्या विचारणा ॥ १,१८२.१० ॥

मालूरस्य रसं गृह्य जलौकां तत्र पेषयेत् ।
हस्तौ संलेपयेत्तेन त्वग्निस्तम्भनमुत्तमम् ॥ १,१८२.११ ॥

शाल्मलीरसमादाय खरमूत्रे निधाय तम् ।
अग्नयादौ विक्षिपेत्तेन हयग्निस्तम्भनमुत्तमम् ॥ १,१८२.१२ ॥

वायस्या उदरं गृह्य मण्डूकवसया सह ।
गुटिकां कारयेत्तेन ततोऽग्नौ संक्षैपेत्सुधीः ।
एवमेतत्प्रयोगेण हयग्निस्तम्भनमुत्तमम् ॥ १,१८२.१३ ॥

मुण्डीत्वक्च वचा मुस्तं मरिचं तगरं तथा ।
चर्वित्वा च त्विमं सद्यो जिह्वया ज्वलनं लिहेत् ॥ १,१८२.१४ ॥

गोरोचनां भृङ्गराजं चूर्णीकृत्यघृतं समम् ।
दिव्याम्भसः स्तम्भनं स्यान्मन्त्रेणानेन वै तथा ।
ओं अग्निस्तम्भनं कुरु कुरु ॥ १,१८२.१५ ॥

ओं नमो भगवते जलं स्तम्भय सं सं सं केक केकः चरचर ।
जलस्तम्भनमन्त्रोऽयं जलं स्तम्भयते शिव ! ॥ १,१८२.१६ ॥

गृध्रास्थिञ्च गवास्थिञ्च तथा निर्माल्यमेव च ।
अरेर्यो निखनेद्द्वारे पञ्चत्वमु पयाति सः ॥ १,१८२.१७ ॥

पञ्चरक्तानि पुष्पाणि पृथग्जात्या समालभेत् ।
कुङ्कुमेन समायुक्तमात्मरक्तसमन्वितम् ॥ १,१८२.१८ ॥

पुष्पेण तु समं पिष्ट्वा रोचनायाः पलैकतः ।
स्त्रिया पुंसा कृतो रुद्र ! तिलकोऽयं वशीकरः ॥ १,१८२.१९ ॥

ब्रह्मदण्डी तु पुष्येण भक्ष्ये पाने वशीकरः ।
यष्टि मधु पलैकेन पक्वमुष्णोदकं पिबेत् ॥ १,१८२.२० ॥

विष्टम्भिकाञ्च हृच्छूलं हरत्येव महेश्वर ! ।
ओं हूं जः ।
मन्त्रोऽयं हरते रुद्र ! सर्ववृश्चिकजं विषम् ॥ १,१८२.२१ ॥

पिप्पली नवनीतञ्च शृङ्गवेरं च सैन्धवम् ।
मरिचं दधि कुष्ठञ्च नस्ये पाने विषं हरेत् ॥ १,१८२.२२ ॥

त्रिफलार्द्रककुष्ठं च चन्दनं घृतसंयुतम् ।
एतत्पानाच्च लेपाच्च विषनाशो भवेच्छिव ! ॥ १,१८२.२३ ॥

पारावतस्य चाक्षीणि हरितालं मनः शिला ।
एतद्योगाद्विषं हन्ति वैनतेय इवोरगान् ॥ १,१८२.२४ ॥

सैन्धवं त्र्यूषणं चैव दधिमध्वाज्यसंयुतम् ।
वृश्चिकस्य विषं हन्ति लेपोऽयं वृषभध्वज ! ॥ १,१८२.२५ ॥

ब्रह्मदण्डीतिलान्क्वाथ्य चूर्णं त्रिकटुकं पिबेत् ।
नाशयेद्रुद्र ! गुल्मानि निरुद्धं रक्तमेव च ॥ १,१८२.२६ ॥

पीत्वा क्षीरं क्षौद्रयुतं नाशयेदसृजः स्त्रुतिम् ।
आटरूपकमूलेन भगं नाभिं च लेपयेत् ।
सुखं प्रसूयते नारी नात्र कार्या विचारणा ॥ १,१८२.२७ ॥

शर्करां मधुसंयुक्तां पीत्वा तण्डुलवारिणा ।
रक्तातिसारशमनं भवतीति वृषध्वज ! ॥ १,१८२.२८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे द्व्याशीत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १८३
हरिरुवाच ।
मरिचं शृङ्गवेरं च कुटजत्वचमेव च ।
पानाच्च ग्रहणी नश्येच्छशाङ्काङ्कितशेखर ! ॥ १,१८३.१ ॥

पिप्पली पिप्पलीमूलं मरिचं तगरं वचा ।
देवदारुरसं पाठां क्षीरेण सह पेषयेत् ॥ १,१८३.२ ॥

अनेनैव प्रयोगेण ह्यतिसारो विनश्यति ।
मरीचतिलपुष्पाभ्या मञ्जनं कामलापहम् ॥ १,१८३.३ ॥

हरीतकी समगुडा मधुना सह योजिता ।
विरेचनकरी रुद्र ! भवतीति न संशयः ॥ १,१८३.४ ॥

त्रिफला चित्रकं चित्रं तथा कटुकरोहिणी ।
उरुस्तम्भहरं ह्येतदुत्तमन्तु विरेचनम् ॥ १,१८३.५ ॥

हरीतकी शृङ्गवेरं देवदारु च चन्दनम् ।
क्वाथयेच्छागदुग्धेन अपामार्गस्य मूलकम् ।
ऊरुस्तम्भं जयन्त्या वा सप्तरात्रेण नाशयेत् ॥ १,१८३.६ ॥

अनन्ताशृङ्गवेरस्य सूक्ष्मचूर्णानि कारयेत् ।
गुग्गुलं गुडतुल्यं च गुटिकामुपयुज्यच ।
वायुः स्नायुगतं चैव अग्निमान्द्यं च नाशयेत् ॥ १,१८३.७ ॥

सङ्खपुष्पीन्तु पुष्पेण समुद्धृत्य सपत्रिकाम् ।
समूलां छागदुग्धेन अपस्मारहरं पिबेत् ॥ १,१८३.८ ॥

अश्वगन्धाभये चैव उदकेन समं पिबेत् ।
रक्तपित्तं विनश्येत्तु नात्र कार्या विचारणा ॥ १,१८३.९ ॥

हरीतकीकुष्ठचूर्णं कृत्वा आस्यं च पूरयेत् ।
शीतं पीत्वाथ पानीयं सर्वच्छर्दिनिवारणम् ॥ १,१८३.१० ॥

गडूचीपद्मकारिष्टधान्याकं रक्तचन्दनम् ।
पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत् ।
ओं हुं नम इति ॥ १,१८३.११ ॥

श्रोत्रे बद्ध्वा शङ्खपुष्पीं ज्वरं मन्त्रेण वै हरेत् ।
ओं जम्भिनी स्तम्भिनी मोहय सर्वव्याधीन्मे वज्रेण ठः ठः सर्वव्याधीन्मे वज्रेण फटिति ॥ १,१८३.१२ ॥

पुष्पमष्टशतं जप्त्वा हस्ते दत्त्वा नखं स्पृशेत् ।

चातुर्थिको ज्वरो रुद्र अन्ये चैव ज्वरास्तथा ॥ १,१८३.१३ ॥

ज्म्बूफलं हरिद्रा च सर्पस्यैव तु कञ्चुकम् ।
सर्वज्वराणां धूपोऽयं हरश्चातुर्थिकस्य च ॥ १,१८३.१४ ॥

करवीरं भृङ्गपत्रं लवणं कुष्ठकर्कटे ।
चतुर्गुणेन मूत्रेण पचेत्तैलं हरेच्च तत् ।
पामां विचर्चिकां कुष्ठमभ्यङ्गाद्धि व्रणानि वै ॥ १,१८३.१५ ॥

पिप्पलीमधुपानाच्च तथा मधुरभोजनात् ।
प्लीहा विनश्यते रुद्र तथा सूरणसेवनात् ॥ १,१८३.१६ ॥

पिप्पलीञ्च हरिद्राञ्च गोमूत्रेण समन्विताम् ।
प्रक्षिपेच्च गुदद्वारे अर्शांसि विनिवारयेत् ॥ १,१८३.१७ ॥

अजादुग्धमार्द्रकञ्च पीतं प्लीहादिनाशनम् ।
सैन्धवञ्च विडङ्गानि सोमराजी तु सर्षपाः ॥ १,१८३.१८ ॥

रजनी द्वे विषञ्चैव गोमूत्रेणैव पेषयेत् ।
कुष्ठनाशश्च तल्लेपान्निम्बपत्रादिना तथा ॥ १,१८३.१९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे त्र्यशीत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १८४
हरिरुवाच ।
रजनीकदलीक्षारलेपः सिध्मविनाशनः ।
कुष्ठस्य भागमेकन्तु पथ्याभागद्वयं तथा ।
उष्णोदकेन संपीय कटिशूलविनाशनम् ॥ १,१८४.१ ॥

अभया नवनीतञ्च शर्करापिप्पलीयुतम् ।
पानादर्शोहरं स्याच्च नात्र कार्या विचारणा ॥ १,१८४.२ ॥

आटरूषकपत्रेण घृतं मृद्वग्निना पचेत् ।
चूर्णं कृत्वा तु लेपोऽयं अर्शरोगहरः परः ॥ १,१८४.३ ॥

गुग्गुलुत्रिफलायुक्तं पीत्वा नश्येद्भगन्दरम् ।
अजाजीशृङ्गवेरञ्च दथा मण्डं विपाचयेत् ॥ १,१८४.४ ॥

लवणेन तु संयुक्तं मूत्रकृच्छ्रविनाशनम् ।
यवक्षारं शर्करा च मूत्रकृच्छ्रविनाशकृत् ॥ १,१८४.५ ॥

चिताग्निः खञ्जरीटस्य विष्ठा फेनो हयस्य च ।
सौभाञ्जनं वासनेत्रं नर एतैस्तु धूपितः ।
अदृश्यस्त्रिदशैः सर्वैः किं पुनर्मानवैः शिव ॥ १,१८४.६ ॥

तिलतैलं यवान्दग्ध्वा मषीं कृत्वा तु लेपयेत् ।
तेनैव सह तैलेन अग्निदग्धः सुखी भवेत् ॥ १,१८४.७ ॥

लज्जालोः शरपुङ्खाया लेपः साज्योऽग्निनाशनः ।
ओं नमो भगवते ठ ठ छिन्धि छिन्धि ज्वलनं प्रज्वलितं नाशय नाशय हुं फट् ॥ १,१८४.८ ॥

करे बद्धं तु निर्गुण्ड्या मूलं ज्वरहरं द्रुतम् ।
मूलञ्च श्वेतगुञ्जायाः कृत्वा तत्सप्तखण्डकम् ॥ १,१८४.९ ॥

हस्ते बध्वा नाशयेच्च अर्शांस्येव न संशयः ।
विष्णुक्रान्ताजमूत्रेण चौरव्याघ्नादिरक्षणम् ॥ १,१८४.१० ॥

ब्रह्मदण्ड्यास्तु मूलानि सर्वकर्माणि कारयेत् ।
त्रिफलायास्तु चूर्णं हि साज्यं कुष्ठविनाशनम् ॥ १,१८४.११ ॥

आज्यं पुनर्नवाबिल्वैः पिप्पलीभि साधितम् ।
हरेद्धक्कां श्वासकासौ पीतं स्त्रीणाञ्च गर्भकृत् ॥ १,१८४.१२ ॥

भक्षयेद्वा नरीबीजं पयसाज्येन पाचितम् ।
घृतशर्करया युक्तं शुक्रः स्यादक्षयस्ततः ॥ १,१८४.१३ ॥

विडङ्गं मधुकं पाठां मांसीं सर्जरसं तथा ।
रहिद्रां त्रिफलाञ्चैव मपामार्गं मनः शिलाम् ॥ १,१८४.१४ ॥

उदुम्बरं धातकीञ्च तिलतैलेन पषेयेत् ।
योनिं लिङ्गं च म्रक्षेत स्त्रीपुसोः स्यात्प्रियं मिथः ॥ १,१८४.१५ ॥

नमस्ते ईशवरदाय आकर्षिणि विकर्षिणि मुग्धे स्वाहा इति ।
योनिलङ्गस्य तैलेन शङ्कर म्लक्षणात्ततः ॥ १,१८४.१६ ॥

पुनर्नवामृता दूर्वा कनकञ्चैन्द्रवारुणी ।
बीजे नैषां जातिकाया रसेन रसमर्दनम् ॥ १,१८४.१७ ॥

मूषाय मध्यगं कृत्वा रसं मारणमीरितम् ।
मध्वाज्यसहितं दुग्धं वलीपलितनाशनम् ॥ १,१८४.१८ ॥

मध्वाज्यं गुडताम्रञ्च कारवेल्लरसस्तथा ।
दहनाच्च भवेद्रौप्यं सुवर्णकरणं शृणु ॥ १,१८४.१९ ॥

पीतं धरत्तूपुष्पञ्च सीसकञ्च पलं मतम् ।
लाङ्गलिकायाः शाखा च स्वर्णञ्च दहनाद्भवेत् ॥ १,१८४.२० ॥

धत्तूरबीजतैलेन दीपप्रज्वलनाद्धर ।
समाधावुपविष्टन्तु गगनस्थो न पश्यति ॥ १,१८४.२१ ॥

वृषस्य मृन्मयस्यैव युक्तो भेको निगृह्यते ।
शङ्करावयवैर्युक्तो धूपं घ्रात्वा च गर्जति ।
विस्मयं कुरुते चैव वृषवन्नात्र संशयः ॥ १,१८४.२२ ॥

रात्रौ च सार्षपं तैलं कीटं खद्यो तनामकम् ।
ताभ्यां दीपः प्रज्वलितो वाग्मिज्वालकलापवत् ॥ १,१८४.२३ ॥

चूर्णं छुच्छुन्दरीधं दग्ध्वा रुद्र प्रलेपयेत् ।
तप्यते तक्षणाद्दग्धो यदि सम्यक्प्रलेपयेत् ।
चन्दनेन भवेन्मोक्षः पानाल्लेपात्सुखी भवेत् ॥ १,१८४.२४ ॥

कुञ्जरस्य मदाक्तस्य स्वयं नेत्रे शिववाञ्जयेत् ।
युद्धे विजयते सोऽपि महाशूरश्च जायते ॥ १,१८४.२५ ॥

दन्तं डुण्डुभसर्पस्य मुखे संगृह्य वै क्षिपेत् ।
तिष्ठते च जलान्तस्तु निर्विकल्पं स्थले यथा ॥ १,१८४.२६ ॥

कुम्भीरनेत्रदंष्ट्राश्च अस्थीनि रुधिरं तथा ।
वसातैलसमायुक्तमेकत्र तन्नियोजयेत् ।
आत्मानं म्लक्षयेत्तेन जले तिष्ठेद्दिनत्रयम् ॥ १,१८४.२७ ॥

कुम्भीरकस्य नेत्राणि हृदयं कच्छपस्य च ।
मूषिकस्य वसास्थीनि शिशुमारवसा तथा ।
एतान्येकत्र संलेपाज्जले तिष्ठेद्यथा गृहे ॥ १,१८४.२८ ॥

लोहचूर्णं तक्रपीतं पाण्डुरोगहरं भवेत् ।
तण्डुलीय कगोक्षूरमूलं पीतं पयोन्वितम् ॥ १,१८४.२९ ॥

कमलादिहरंपितं मुखरोगहरं तथा ।
जातीमूलं तक्रपीतं कोलमूलं त्वजीर्णनुत् ॥ १,१८४.३० ॥

सतक्रं कुशमलं वा मर्कटी मूलमेव वा ।
काञ्जिकेन च वाकुच्या मूलं वै दन्तरोगनुत् ॥ १,१८४.३१ ॥

तथेन्द्रवारुणीमूलं वारिपीतं विषादिहृत् ।
सुरभिकामूलपा नाद्वा तन्नाशो भवेच्छिव ॥ १,१८४.३२ ॥

शिरोरोगहरं लेपाद्गुञ्जाचूर्णं सकाञ्जिकम् ।
बला चातिबला यष्टी शर्करा मधुसंयुता ॥ १,१८४.३३ ॥

वन्ध्यागर्भकरी पीता नात्र कार्या विचारणा ।
श्वेतापराजितामूलं पिप्पलीशुण्ठिकायुतम् ॥ १,१८४.३४ ॥

परिपिष्टं शिरोलेपाच्छिरः शूलविनाशनम् ।
निर्गुण्डिकाशिखां पीत्वा गण्डमालां विनाशयेत् ॥ १,१८४.३५ ॥

केतकीपत्रजं क्षारं गुडेन सह भक्षयेत् ।
तक्रेण शरपुङ्खां वा पीत्वा प्लीहां विनाशयेत् ॥ १,१८४.३६ ॥

मातुलङ्गस्य निर्यासं गुडाज्येन समन्वितम् ।
वातपित्तजशूलानि हन्ति वै पानयोगतः ।
शुण्ठी सौवर्चलं हिङ्गु पीतं हृदयरोगनुत् ॥ १,१८४.३७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वैद्यशास्त्रे चतुरशीत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १८५ ।

हरिरुवाच ।

आं गणपतये इति अयं गणपतेर्न्मन्त्रो धनविद्याप्रदायकः ॥ १,१८५.१ ॥

इममष्टसहस्रञ्च जप्त्वा बद्ध्वा शिखां ततः ।
व्यवहारे जयः स्याच्च शतं जापान्नृणां प्रियः ॥ १,१८५.२ ॥

तिलानां तु घृताक्तानां कृष्णानां रुद्र होमयेत् ।
अष्टोत्तरसहस्रन्तु राजा वश्यस्त्रिभिर्दिनैः ॥ १,१८५.३ ॥

अष्टम्याञ्च चतुर्दश्यामुपोष्याभ्यर्च्य विघ्नराट् ।
तिलाक्षतानां जुहुयादष्टोत्तरसहस्रकम् ।
अपाजितः स्याद्युद्धे च सर्वे तञ्च सिषेविरे ॥ १,१८५.४ ॥

जप्त्वा चाष्टसहस्रन्तु ततश्चाष्टशतेन हि ।
शिखां बद्ध्वा राजकुले व्यवहारे जयो भवेत् ॥ १,१८५.५ ॥

ह्रीङ्कारं सविसर्गञ्च प्रातः काले नरस्तु यः ।
स्त्रीणां ललाटे विन्यस्य वशतां नयति ध्रुवम् ॥ १,१८५.६ ॥

सुसमाहितचित्तेन विन्यस्य प्रमदालये ।
सोत्कामां कामिनीं कुर्यान्नात्र कार्या विचारणा ॥ १,१८५.७ ॥

जुहुयादयुतं यस्तु शुचिः प्रयतमानसः ।
दृष्टिमात्रे सदा तस्य वश्यमायान्ति योषितः ॥ १,१८५.८ ॥

मनः शिलापत्रकञ्च सगोरोचनकुङ्कुमम् ।
कृत एभिश्च तिलके वश्यमायान्ति योषितः ॥ १,१८५.९ ॥

भृङ्गराट्सहदेवा च वचा श्वेतापराजिता ।
तेनैव तिलकं कृत्वा त्रैलोक्यं वशतां नयेत् ॥ १,१८५.१० ॥

गोरोचना मीनपित्तमाभ्याञ्च कृतवर्तिकः ।
यः पुमांस्तिलकं कुर्याद्वामहस्तकनिष्ठया ।
स करोति वशे सर्वं त्रैलोक्यं नात्र संशयः ॥ १,१८५.११ ॥

गोरोचना महादेव ! धातुशोणितभाविता ।
एतैर्वैतिलकं कृत्वा सा नरं यं निरीक्षते ।
तत्क्षणात्तं वशे कुर्या न्नात्र कार्या विचारणा ॥ १,१८५.१२ ॥

नागेश्वरञ्च शैलेयं त्वक्पत्रञ्च हरीतकी ।
चन्दनं कुष्ठसूक्ष्मैलारक्तशालिसमन्विता ॥ १,१८५.१३ ॥

एतैर्धूपो वशकरः स्मरबाणैः स्मारार्दनः ।
रतिकाले महादेव पार्वतीप्रिय शङ्कर ॥ १,१८५.१४ ॥

निजशुक्रं गृही त्वा तु वामहस्तेन यः पुमान् ।
कामिनीचरणं वामं लिंपेत्स स्यात्स्त्रियाः प्रियः ॥ १,१८५.१५ ॥

सैन्धवञ्च महादेव पारावतमलं मधु ।
एभिर्लिप्ते तु लिङ्गे वै कामिनीवशकृद्भवेत् ॥ १,१८५.१६ ॥

पुष्पाणि पञ्चरक्तानि गृहीत्वा यानि कानि च ।
तत्तुल्यञ्च प्रियङ्गुञ्च पेषयेदेकयोगतः ।
अनेन लिप्तलिङ्गस्य कामिनीवशतामियात् ॥ १,१८५.१७ ॥

हयगन्धा च मञ्जिष्ठा मालतीकुसुमानि च ।
श्वेतसषर्प एतैश्च लिप्तलिङ्गः स्त्रियाः प्रियः ॥ १,१८५.१८ ॥

मूलन्तु काकजङ्घाया दुग्धपीतन्तु शोषनुत् ।
अश्वगन्धानागबलागुडमाषनिषेविणः ।
रूपं भवेद्यथा तद्वन्नवयौवनचारिणाम् ॥ १,१८५.१९ ॥

लौहचूर्णसमायुक्तं त्रिफलाचूर्णमेव वा ।
मधुना सेवितं रुद्र परिणामाख्यशूलनुत् ॥ १,१८५.२० ॥

क्वथितोदकपानन्तु शम्बूकक्षारकं तथा ।
मृगशृङ्गं ह्यग्निदग्धं गव्याज्येन समन्वितम् ।
पीत हृत्पृष्ठशूलानां भवेन्नाशकरं शिव ॥ १,१८५.२१ ॥

हिङ्गु सौवर्चलं शुण्ठी वृषध्वज महौषधम्? ।
एभिस्तु क्वथितं वारि पीतं वै सर्वशूलनुत् ॥ १,१८५.२२ ॥

अपामार्गस्य वै मूलं सामुद्रलवणान्वितम् ।
आस्वादि तमजीर्णस्य शूलस्य स्याद्विमर्दनम् ॥ १,१८५.२३ ॥

वटरोहाङ्कुरो रुद्र तण्डुलोदकघर्षितः ।
पीतः सतक्रोऽतीसारं क्षयं नयति शङ्कर ॥ १,१८५.२४ ॥

अङ्कोटमूलं कर्षार्धं पिष्टं तण्डुलवारिणा ।
सर्वातीसारग्रहणीं पीतं हरति भूतप ॥ १,१८५.२५ ॥

मरीचशुण्ठिकुटजत्वक्चूर्णञ्च गुडान्वितम् ।
क्रमात्तद्द्विगुणं पीतं ग्रहणीव्याधिनाशनम् ॥ १,१८५.२६ ॥

श्वेतापराजितामूलं हरिद्रासिक्थतण्डुलाः ।
अपामार्गत्रिकटुकमेषाञ्च वटिका शिव ।
विषूचिकामहाव्याधिं हरत्येव न संशयः ॥ १,१८५.२७ ॥

त्रिफलागुरु भूतेश शिलाजतु हरीतकी ।
एकैकमेषां चूर्णन्तु मधुना च विमिश्रितम् ।
पीतं सर्वञ्च मेहन्तु क्षयं नयति शङ्कर ॥ १,१८५.२८ ॥

अर्कक्षीरप्रस्थमेकं तिलतैलं तथैव च ।
मनः शिलामरीचानां सिन्दूरस्य पलं पलम् ॥ १,१८५.२९ ॥

चूर्णं कृत्वा ताम्रपात्रे त्वातपैः शोषयेत्ततः ।
पीतं स्नुहीगतं दुग्धं सैन्धवं शूलनुद्भवेत् ॥ १,१८५.३० ॥

त्रिकटुत्रिफलानक्तं तिलतैलं तथैव च ।
मनः शिला निम्बपत्रं जातीपुष्पमजापयः ॥ १,१८५.३१ ॥

तन्मूत्रं सङ्खनाभिश्च चन्दनं घर्षयेत्ततः ।
एभिश्च वर्तिकां कृत्वा त्वक्षिणी चाञ्जयेत्ततः ॥ १,१८५.३२ ॥

नश्यते पटलं काचं पुष्पञ्च तिमिरादिकम् ।
विभीतकस्य वै चूर्णं समधु श्वासनाशनम् ॥ १,१८५.३३ ॥

पिप्पलीत्रिफलाचूर्णं मधुसैन्धवसंयुतम् ।
सर्वरोगज्वरश्वासशोषपीनसहृद्भवेत् ॥ १,१८५.३४ ॥

देवदारोश्च वै चूर्णं अजामत्रेण भावयेत् ।
एकविंशतिवारंवैत्वक्षिणी तेन चाञ्जयेत् ।
रात्र्यन्धता पटलता नश्येन्निर्लोमता तथा ॥ १,१८५.३५ ॥

पिप्पलीकेतकं रुद्र हरिद्रामलकं वचा ।
सर्वाक्षिरोगा नश्येयुः सक्षीरादञ्जनात्ततः ॥ १,१८५.३६ ॥

काकजङ्घाशिग्रुमूले मुखेन विधृते शिव ।
चर्वित्वा दन्तकीटानां विनाशो हि भवेद्धर ॥ १,१८५.३७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे मन्त्रतन्त्रवैद्यप्रयोदपञ्चाशीत्यधिशततमोऽध्यायः

श्रीगरुडमहापुराणम् १८६
हरिरुवाच ।
पीतः सारो गुडूच्याश्च मधुना च प्रमेहनुत् ।
पीतं गोहालिकामूलं तिलदध्याज्यसंयुतम् ॥ १,१८६.१ ॥

निरुद्धमूत्रं क्वथितं निवर्तयति शङ्कर ।
तथा हिक्कां हरेत्पीतं सौवर्चलयुतञ्च वै ॥ १,१८६.२ ॥

गोरक्षकर्कटीमूलं पिष्टं शीतोदकेन च ।
पीतं दिनत्रयेणैव नाशयेद्रुद्र शर्कराम् ॥ १,१८६.३ ॥

पिष्ट्वा वै मालतीमूलं ग्रीष्मकाले समाहितम् ।
साधितं छागदुग्धेन पतिं शर्कस्यान्वितम् ।
हरेन्मूत्रनिरोधञ्च हरेद्वै पाण्डुशर्कराम् ॥ १,१८६.४ ॥

द्विजयष्ट्याश्च वै मूलं पिष्टं तण्डुलवारिणा ।
गण्डमालां हरेल्लेपादसाध्यं गलगण्डकम् ॥ १,१८६.५ ॥

रसाञ्जनं हरीतक्याश्चूर्णं तेनैव गुण्ठनात् ।
नाशयेत्पुरुषो व्याधीन्नात्र कार्या विचारणा ॥ १,१८६.६ ॥

करवीरमूललेपाद्वै लेपात्पूगफलस्य च ।
पुंव्याधिर्नश्यते रुद्र योगमन्यं वदाम्यहम् ॥ १,१८६.७ ॥

दन्तीमूलं हरिद्रा च चित्रकं तस्य लेपनात् ।
भगन्दरविनाशः स्यादन्यं योगं वदाम्यहम् ।
जलौकाजग्धरक्तञ्च भगन्दरमुमापते ॥ १,१८६.८ ॥

त्रिफलाजलघृष्टञ्च मार्जारास्थि विलेपितम् ।
ततो न प्रस्त्रवेद्रक्तं नात्र कार्या विचारणा ॥ १,१८६.९ ॥

हरिद्रानेकवारञ्च स्नुहीक्षीरेण भाविता ।
वटिकार्ऽशोविनाशाय तल्लेपाद्वृषभध्वज ।
घोषाफलं सैन्धवञ्च पिष्ट्वा चार्शोहरं परम् ॥ १,१८६.१० ॥

गव्याज्यं साधितं पीतं पलाशक्षारवारिणा ।
त्रिगुणेन त्रिकटुकं अर्शांसि क्षपयेच्छिव ॥ १,१८६.११ ॥

बिल्वस्य च फलं दग्धं रक्तार्शः प्रविनाशनम् ।
जग्धवा कृष्णतिलानेव नवनीतयुतानपि ॥ १,१८६.१२ ॥

शुण्ठीचूर्णं यवक्षारयुक्तं तुल्यगुडान्वितम् ।

अग्निवृद्धिं करोत्येव प्रत्यूषे वृषभध्वज ॥ १,१८६.१३ ॥

शुण्ठ्या च क्वथितं वारि पीतं चाग्निं करोति वै ।
हरीतकीं सैन्धवञ्च चित्रकं रुद्र पिप्पली ॥ १,१८६.१४ ॥

चूर्णमुष्णोदकेनैषां पीतं चातिक्षुधाकरम् ।
साज्यं सूकरमांसं वै पीतं चातिक्षुधाकरम् ॥ १,१८६.१५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे षडशीत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १८७
हरिरुवाच ।
हस्तिकर्णपलाशस्य पत्राणि? चूर्णयेद्धर ।
सर्वरोगविनिर्मुक्तं चूर्णं पलशतं शिव ॥ १,१८७.१ ॥

सक्षीरं भक्षीतं कुर्यात्सप्ताहेन वृषध्वज ।
नरं श्रुतिधरं रुद्र मृगेन्द्रगतिविक्रमम् ॥ १,१८७.२ ॥

पद्मरागप्रतीकाशंयुक्तं दशशतायुषा ।
षोडशाब्दाकृतिं रुद्र सततं दुग्धभोजनात् ॥ १,१८७.३ ॥

मधुसर्पिःसमायुक्तं दुग्धमायुष्करं भवेत् ।
तज्जग्धं मधुना सार्धं दशवर्ष सहस्रिणम् ॥ १,१८७.४ ॥

कुर्यान्नरं श्रुतिधरं प्रमदाजनवल्लभम् ।
दध्ना नित्यं भक्षितन्तु वज्रदेहकरं भवेत् ॥ १,१८७.५ ॥

केशराजिसमायुक्तं नरं वर्षसहस्रिणम् ।
तच्च काञ्जिकसंयुक्तं नरं कुर्याच्च भक्षितम् ॥ १,१८७.६ ॥

शतवर्षं दिव्यदेहं वलीपलितवर्जितम् ।
जग्धं त्रिफलया क्षौद्रं चक्षुष्मन्तं करोति वै ॥ १,१८७.७ ॥

अन्धः पश्येत्तु चूर्णस्य साज्यस्यैव तु भक्षणात् ।
महिषीक्षीरसंयुक्तस्तल्लेपः कृष्णकेशकृत् ॥ १,१८७.८ ॥

खल्वाटस्य च वै केशा भवन्ति वृषभध्वज ।
तैलयुक्तेन चूर्णेन वलीपलितनाशनम् ॥ १,१८७.९ ॥

तदुद्वर्तनमात्रेण सर्वरागः प्रमुच्यते ।
सच्छागक्षीरचूर्णेन दृष्टिः स्यान्मासतोऽञ्जनात् ॥ १,१८७.१० ॥

पलाशस्य च बीजानि श्रावणे वितुषाणि च ।
गृहीत्वा नवनीतेन तेषां चूर्णं च भक्षयेत् ॥ १,१८७.११ ॥

कर्षार्धमेकं सेवेत नत्वा नित्यं हरिं प्रभुम् ।
पुराणषष्टिधान्यस्य पथ्यमम्बु पिबन्हर ।
जीवेद्वर्षसहस्राणि वलीपलितवर्जितः ॥ १,१८७.१२ ॥

भृङ्गराजस्य वै मूलं पुष्यर्क्षे तु समाहृतम् ।
विधाय तस्य चूर्णं वै ससौवीरञ्च भक्षयेतं ॥ १,१८७.१३ ॥

मासमात्रप्रयोगेण वलीपलितवर्जितः ।
शतानि पञ्च जीवेच्च नरो नागबलो भवेत् ।
भवेच्छ्रुतिधरो रुद्र पुष्यर्क्षे चैव भक्षणात् ॥ १,१८७.१४ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे आयुष्करयोगोद्दसप्ताशीत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १८८
हरिरुवाच ।
निर्व्रणः स्यात्पूयंहीनो प्रहारो घृपूरितः ।
अपामार्गस्य वै मूलं हस्ताभ्याञ्च विमर्दितम् ।
तद्रसेन प्रहारस्य रक्तस्त्रावो न पूरणात् ॥ १,१८८.१ ॥

रुद्र लाङ्गलिकामूलं चेक्षुदर्भस्तथैव च ।
तेन व्रणमुखं लिप्तं शल्यं निः स रति व्रणात् ।
चिरकालप्रविष्टोऽपि तेन मार्गेण शङ्कर ॥ १,१८८.२ ॥

बालमूलं मेषशृङ्गीमूलं वा वारिघर्षितम् ।
तेन लिप्तं चिरं जातं व्रणं नाड्याः प्रशाम्यति ॥ १,१८८.३ ॥

जग्धं माहिषपध्ना च युक्तं कोद्रवभक्तकम् ।
हिङ्गुमूलस्य वै चूर्णं दत्तं नाडीव्रणापहम् ॥ १,१८८.४ ॥

ब्रह्मयष्टिफलं पिष्टं वारिणा तेनलेपितम् ।
तेन घृष्टं रक्तदोषः प्रणश्यति न संशयः ॥ १,१८८.५ ॥

यवभस्म विडङ्गञ्च गन्धपाषाणमेव च ।
शुण्ठिरेषाञ्चैव चूर्णं भ्वितं रुधिरेणवै ॥ १,१८८.६ ॥

कृकलासस्य तल्लिप्तं विद्रधिं नाशयेच्छिव ।
सौभाञ्जनस्य बीजानि त्वतसीमसिना सह ॥ १,१८८.७ ॥

सौरसर्षपयुक्तानि सर्वाण्येतानि शङ्कर ।
पिष्टान्यनम्लतक्रेण ग्रन्थिकं नाशयेद्धि वै ॥ १,१८८.८ ॥

श्वेतापराजितामूलं पिष्टं तण्डुलवारिणा ।
तेन नस्यप्रदानात्स्याद्भूतवृन्दस्य विद्रवः ॥ १,१८८.९ ॥

अगस्त्यपुष्पनस्यं वै समरीचं तु शूलहृत् ।
भुजङ्गचर्म वै हिङ्गु निम्बपत्रं तथा यवाः ।
गौरसर्षम एभिः स्याल्लेपो भूतहरः शिव ॥ १,१८८.१० ॥

गोरोचना मरीचानि पिप्पली सैन्धवं मधु ।
अञ्जनं कृतमेभिः स्याद्ग्रहभूतहरं शिव ॥ १,१८८.११ ॥

गुग्गुलूलूकपुच्छाभ्यां धूपो ग्रहहरो भवेत् ।
चातुर्थिकज्वरैर्मुक्तो कृष्णवस्त्रावगुण्ठितः ॥ १,१८८.१२ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे व्रणाचि द्दमाष्टाशीत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १८९
हरिरुवाच ।
श्वेतापराजितापुष्परसेनाक्ष्णोश्च पूरणे ।
पटलं नाशमायाति नात्र कार्या विचारणा ॥ १,१८९.१ ॥

मूलं गोक्षुरकस्यैव चर्वित्वा नीललोहित ।
दन्तकीटव्यथा नश्येत्सुरासुरविमर्दन् ॥ १,१८९.२ ॥

नारी पुष्पादिने पीत्वा गोक्षीरेणोपवासतः ।
श्वेतार्कस्य तु वै मूलं तस्यास्तद्गुल्मशूलनुत् ॥ १,१८९.३ ॥

श्वेतार्कपुष्पं विधिना गृहीतं पूर्वमन्त्रितम् ।
ऋतुशुद्धा च ललना कटौ बद्ध्वा प्रसूयते ॥ १,१८९.४ ॥

हस्तबद्धं पलाशस्य अपामार्गस्य वा हर ।
मूलं सर्वज्वरहरं भूतप्रेतादिनुद्भवेत् ॥ १,१८९.५ ॥

पीतं वृश्चिकमूलञ्च प्रातः पर्युषिताम्बुना ।
सार्धं विनाशयेद्दाहज्वरञ्च परमेश्वर ॥ १,१८९.६ ॥

शिखायाञ्चैव तद्बद्धं भवेदैकाहिकाहिनुत् ।
पीतं पर्युषिताद्भिश्च भवेत्सर्वविषापहृत् ॥ १,१८९.७ ॥

यस्य लज्जालुकामूलं दीयते च स्वरेतसा ।
सार्धं स वैरं संयाति पुमान्स्त्री वा न संशयः ॥ १,१८९.८ ॥

पिष्ट्वा गव्यघृतेनैव पाठामूलं पिबेत्तु यः ।
सर्वं विषं विनश्येच्च नात्र कार्या विचारणा ॥ १,१८९.९ ॥

मूलं पर्युषितोदेन शिरीषस्य यथा तथा ।
रक्तचित्रकमूलस्य रसस्य भरणाद्धर ।
कर्णयोः कामलाव्याधिनाशः स्यान्नात्र संशयः ॥ १,१८९.१० ॥

श्वेतकोकिलाक्षमूलं छागीक्षीरेण संयुतम् ।
त्रिसप्ताहेन वै पीतं क्षयरोगं क्षयं नयेत् ॥ १,१८९.११ ॥

नारिकेलस्य वै पुष्पं छागक्षीरेण संयुतम् ।
पिबेच्च त्रिविधस्तस्य रक्तवातो विनश्यति ॥ १,१८९.१२ ॥

कुर्यात्सुदर्शनामूलं माल्येन सुसमाहृतम् ।
कण्ठबद्ध त्र्याहिकादिग्रहभूतविनाशनम् ॥ १,१८९.१३ ॥

पुष्पं धवलगुञ्जाया गृहीतं मूलमेव च ।
मुखे तु निहितं रुद्र हरेन्नानाविषं बहु ॥ १,१८९.१४ ॥

हस्ते बद्धं काण्डयुक्तं कण्ठे बद्धं ग्रहादिहृत् ।
कृष्णायान्तु चतुर्दश्यां कटिबद्धं समाहृतम् ।
सिंहादिश्वापदाद्भीतिं हरेच्च नीललोहित ॥ १,१८९.१५ ॥

विष्णुक्रान्तामूलमीश कर्णबद्धन्तु धारयेत् ।
पट्टसूत्रेण भूतेश मकरादिभयं न वै ॥ १,१८९.१६ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकोननवत्यधिकशततमोऽध्यायः

हरिरुवाच ।
अपराजिताया मूलञ्च गोमूत्रेण समन्वितम् ।
पीतञ्चाशु हरत्येव गण्डमालां न संशयः ॥ १,१९०.१ ॥

अथेन्द्रवारुणीमूलं विधिना पीतमीश्वर ।
जिङ्गिण्यैरण्डकं रुद्र शूकशिम्ब्या समन्वितम् ।
शीतोदकञ्च तत्र्यस्तं बाहुग्रीवाव्यथां हरेत् ॥ १,१९०.२ ॥

माहिषं नवनीतञ्च अश्वगन्धा च पिप्पली ।
वचा कुष्ठद्वयं लेपो लिङ्गस्रोतस्तनार्तिहृत् ॥ १,१९०.३ ॥

कुष्ठनागबलाचूर्णं नवनीतसमन्वितम् ।
तल्लेपो युवतीनाञ्च कुर्याद्वृत्तोजकौ शुभौ ॥ १,१९०.४ ॥

इन्द्रवारुणिकामूलं यस्य नाम्ना सुदूरतः ।
निः क्षिप्यते समुत्पाट्य तस्य प्लीहा विनश्यति ॥ १,१९०.५ ॥

पुनर्नवायाः शुक्लाया मूलं तण्डुलवारिणा ।
पीतं विद्रधिनुत्स्याच्च नात्र कार्या विचारणा ॥ १,१९०.६ ॥

कदलीदलक्षारन्तु पानीयेन प्रसाधितम् ।
तस्यादनाद्विनश्यन्ति उदरव्याधयोऽखिलाः ॥ १,१९०.७ ॥

कदल्या मूलमादाय गुडाज्येन समन्वितम् ।
अग्निना साधितं जग्धमुदरस्थक्रिमीन्हरेत् ॥ १,१९०.८ ॥

नित्यं निम्बदलानाञ्च चूर्णमामलकस्य च ।
प्रत्यूषे भक्षयेच्चैव तस्य कुष्ठं विनश्यति ॥ १,१९०.९ ॥

हरीतकीविडङ्गञ्च हरिद्रा सितसर्षपाः ।
सोमराजस्य मूलानि करञ्जस्य च रौन्धवम् ।
गोमूत्रपिष्टान्येतानि कुष्ठरोगहराणि वै ॥ १,१९०.१० ॥

एकश्च त्रिफलाभागस्तथा भागद्वयं शिवा ।
सोमराजस्य बीजानां जग्धं पथ्येन दद्रुनुत् ॥ १,१९०.११ ॥

अम्लतक्रं सगोमूत्रं क्वथितं लवणान्वितम् ।
कांस्यघृष्टं खरं लेपात्कुष्ठदद्रुविनाशनम् ॥ १,१९०.१२ ॥

हरिद्रा हरितालश्च दूर्वागोमूत्रसैन्धवम् ।
अयं लेपो हन्ति दद्रुं पामानं च गरं तथा ॥ १,१९०.१३ ॥

सोम राजस्य बीजानि नवनीतयुतानि च ।
मधुनास्वादितानि स्युः शुक्लकुष्ठहराणि वै ।
तक्रान्नपानतो रुद्र नात्र कार्या विचारणा ॥ १,१९०.१४ ॥

श्वेतापरा जितामूलं वर्तितं चास्य वारिणा ।
तल्लेपो रुद्र मासेन शुक्लकुष्ठविनाशनः ॥ १,१९०.१५ ॥

माहिषं नवनीतञ्च सिन्दूरं समरीचकम् ।
पामा विलेपनान्नश्येद्दुर्नामा वृषभध्वज ॥ १,१९०.१६ ॥

विशुष्कगाम्भारीमूलं पक्वं क्षीरेण संयुतम् ।
भक्षितं शुक्लपित्तस्य विनाशकरमीश्वर ॥ १,१९०.१७ ॥

मूलकस्य तु बीजानि ह्यपा मार्गरसेन वै ।
पिष्टानि तेन लेपेन सिध्मकं रुद्र नश्यति ॥ १,१९०.१८ ॥

कदलीक्षारसंयुक्तहरिद्रा सिध्मकापहा ।
रम्भापामार्गयोः क्षार एरण्डेन विमिश्रितः ।
तदभ्यङ्गान्महादेव ! सद्यः सिध्म विनश्यति ॥ १,१९०.१९ ॥

कूष्माण्डनालक्षारश्च सगोमूत्रश्च तत्त्वतः ।
जलपिष्टा हरिद्रा च सिद्धा मन्दानलेनहि ॥ १,१९०.२० ॥

माहिषेण पुरीषेण वेष्टिता वृषभध्वज ।
अस्या उद्वर्तनं कुर्यादङ्गसौष्ठवमीश्वर ॥ १,१९०.२१ ॥

तिलसर्षपसंयुक्तं हरिद्राद्वयकुष्ठकम् ।
तेनोद्वर्तितदेहः स्याद्दुर्गन्धः सुरभिः पुमान् ॥ १,१९०.२२ ॥

मनोहरश्चानुदिनं दूर्वाणां काकजङ्घाया ।
अर्जुनस्य तु पुष्पाणि जम्बूपत्रयुतानि च ।
सलोध्राणि च तल्लेपो देहदुर्गन्धतां हरेत् ॥ १,१९०.२३ ॥

युक्तं लोध्रभवैर्नीरैश्चूर्णन्तु कनकस्य च ।
तेनोद्वर्तितदेहस्य न स्याद्ग्रीष्मप्रबाधिका ॥ १,१९०.२४ ॥

दुग्धेनोषसि सेकश्च घर्मदोषश्च नश्यति ।
काकजङ्घोद्वर्तनन्तु ह्यङ्गरागकरं भवेत् ॥ १,१९०.२५ ॥

मधुयष्टी शर्करा च वासकस्य रसो मधु ।
एतत्पीतं रक्तपित्तकामलापाण्डुरोगनुत् ॥ १,१९०.२६ ॥

रक्तपित्तं हरेत्पीतो वासकस्य रसो मधु ।
प्रातः काले तोयपानात्पीनसं दारुणं हरेत् ॥ १,१९०.२७ ॥

बिभीतकस्य वै चूर्णं पिप्पल्याः सैन्धवस्य च ।
पीतं सकाञ्जिकं हन्ति स्वरभेदं महेश्वर ॥ १,१९०.२८ ॥

चूर्णमामलकं सेव्यं पीतं गव्यपयोऽन्वितम् ।
मनः शिला बलामूलं कोलपण च गुग्गुलुः ॥ १,१९०.२९ ॥

जातिपत्रं कोलपत्रं तथा चैव मनः शिला ।
एभिश्चैव कृता वर्तिर्बदर्यग्नौ महेश्वर ।
धूमपानं कासहरं नात्र कार्या विचारणा ॥ १,१९०.३० ॥

त्रिफलापिप्पलीचूर्णं भक्षितं मधुनायुतम् ।
भोजनादौ हि समधु पिपासाज्व(त्व)रितं हरेत् ॥ १,१९०.३१ ॥

बिल्वमूलञ्च समधुगुडूचीक्वथितं जलम् ।
पीतं हरेच्च त्रिवधं छर्दिं नैवात्रसंशयः ।
पीता दूर्वा छर्दिनुत्स्यात्पिष्टातण्डुलवारिणा ॥ १,१९०.३२ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नवत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १९१
हरिरुवाच ।
पुनर्नवाया मूलञ्च श्वेतं पुष्ये समाहृतम् ।
वारि पीतं तस्य पार्श्वे भवनेषु न पन्नगाः ॥ १,१९१.१ ॥

तार्क्ष्यमूर्तिं वहेद्यो वै भल्लूकदन्तनिर्मिताम् ।
स पन्नगैर्न दृश्येत यावज्जीवं वृषध्वज ॥ १,१९१.२ ॥

पिबेच्छल्मलिमूलं यः पुष्यर्क्षे रुद्र वारिणा ।
तस्मिन्नपास्तदशना नागाः स्युर्नात्र संशयः ॥ १,१९१.३ ॥

पुष्ये लज्जालुकामूले हस्तबद्धे तु पन्नगान् ।
गृह्णीयाल्लेपतो वापि नात्र कार्या विचारणा ॥ १,१९१.४ ॥

पुष्येश्वेतार्कमूलन्तु पीतं शीतेन वारिणा ।
नश्येतु दंशकविषं करवीरादिजं विषम् ॥ १,१९१.५ ॥

महाकालस्य वै मूलं पिष्टं तत्काञ्जिकेन वै ।
वोड्राणां डुण्डुभानां च तल्लोपो हरते विषम् ॥ १,१९१.६ ॥

तण्डुलीयकमूलं च पिष्टं तण्डुलवारिणा ।
घृतेन सह पीतन्तु हरेत्सर्वाविषाणि च ॥ १,१९१.७ ॥

नीलीलज्जालुकामूलं पिष्टं तण्डुलवारिणा ।
पीतं तद्दंशकविषं नश्येदेकेन वोभयोः ॥ १,१९१.८ ॥

कूष्माण्डकस्य स्वरसः सगुडः सहशर्करः ।
पीतः सदुग्धो हन्याच्च दंशकस्यविषं च वै ॥ १,१९१.९ ॥

तथा कोद्रवमूलस्य मोहस्य हर एव च ।
यष्टीमधुसमायुक्ता तथा पीता च शर्करा ॥ १,१९१.१० ॥

सदुग्धा च त्रिरात्रेण मूषकानां विषं हरेत् ।
चुलुकत्रयपानाच्च वारिणः शीतलस्य वै ॥ १,१९१.११ ॥

ताम्बूलदग्धमुखस्य लालास्त्रावो विनश्यति ।
घृतं सशर्करं षीत्वा मद्यपानमदो न वै ॥ १,१९१.१२ ॥

कृष्णाङ्कोलस्य मूलेन पीतं सुक्वथितं जलम् ।
ततो नश्यद्गरविषं त्रिरात्रेण महेश्वर ॥ १,१९१.१३ ॥

उष्णं गव्यघृतं चैव सैन्धवेन समन्वितम् ।

नाशयेत्तन्महादेव वेदनां वृश्चिकोद्भवाम् ॥ १,१९१.१४ ॥

कुसुभं कङ्कुमञ्चैव हरितालं मनः शिला ।
करञ्जं पिषितं चैव ह्यर्कमूलं च शङ्कर ॥ १,१९१.१५ ॥

विषंनृणां विनश्येत्तु एतेषां भक्षणाच्छिव ।
दीपतैलप्रदानाच्च दंशैराकीटजैः शिव ।
खर्जूरकविषं नश्येत्तदा वै नात्र संशयः ॥ १,१९१.१६ ॥

दंशस्थानं वृश्चिकस्य शुण्ठी तगरसंयुता ।
नश्येन्मधुमक्षिकाया एतेषां लेपतो विषम् ॥ १,१९१.१७ ॥

शतपुष्पा सैन्धवञ्च साज्यं वा तेन लेपयेत् ।
शिरीषस्य तु बीजंवै सिद्ध क्षीरेण घर्षितम् ॥ १,१९१.१८ ॥

तल्लेपेन महादेव नश्येत्कुक्कुरजं विषम् ।
ज्वलिताग्निर्वारिसेको तथा दर्दुरजं विषम् ॥ १,१९१.१९ ॥

धत्तूरकरसोन्मिश्रं क्षीराद्यगुडपानतः ।
शूनां विषं विनश्येत्तु शशाङ्काङ्कितशेखर ॥ १,१९१.२० ॥

वटनिम्बशमीनाञ्च वल्कलैः क्वथितं जलम् ।
तत्सेकान्मुखदन्तानां नश्येद्वै विषवेदना ॥ १,१९१.२१ ॥

लेपनाद्देवदारोश्च गैरिकस्य च लेपनात् ।
नागेश्वरो दरिद्रे द्वे तथा मञ्जिष्ठका हर ।
एभिर्लेपाद्विनश्येत्तु लूताविषमुमापते ॥ १,१९१.२२ ॥

करञ्जस्य तु बीजानि वरुणच्छदमेव च ।
तिलाश्च सर्षपा हन्युर्विषं वै नात्र संशयः ॥ १,१९१.२३ ॥

घृतं कुमारीपत्रं वै दत्तं सलवणं हर ।
तुरङ्गमशरीराणां कण्डूर्नश्येद्दशाहतः ॥ १,१९१.२४ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकनवत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १९२
हरिरुवाच ।
चित्रकस्याष्टभागाश्च शूरणस्य च षोडश ।
शुण्ठ्या भागाश्च चत्वारो मरिचानां द्वयं तथा ॥ १,१९२.१ ॥

त्रितयं पिप्पलीमूलं विडङ्गानां चतुष्टयम् ।
अष्टौ मुशलिकाभागास्त्रिफलायाश्चतुष्टयम् ।
द्विगुणेन गुडेनैषां मोदकानिह कारयेत् ॥ १,१९२.२ ॥

तद्भक्षणमजीर्णं हि पाण्डुरोगञ्ज कामलम् ।
अतीसारांश्च मन्दाग्निं प्लीहाञ्चैव निवारयेत् ॥ १,१९२.३ ॥

बिल्वाग्निमन्थः श्योनाकपाटलापारिभद्रकम् ।
प्रसारण्यश्वगन्धा च बृहती कण्टकारिका ॥ १,१९२.४ ॥

बला चातिबला रास्ना श्वदंष्ट्रा च पुनर्नवा ।
एरण्डः शारिवा पर्णो गुडूची कपिकच्छुका ॥ १,१९२.५ ॥

एषां दशपलान्भागान्क्वाथयेत्सलिलेऽमले ।
तेन पादावशेषेण तैलपात्रे विपाचयेत् ॥ १,१९२.६ ॥

आजं वा यदि गव्यं क्षीरं दत्त्वा चतुर्गुणम् ।
शतावरीं सैन्धवञ्च तैलतुल्यं प्रदापयेत् ॥ १,१९२.७ ॥

द्रव्याणियानि पेष्याणि तानि वक्ष्यामि तच्छृणु ।
शतपुष्पा देवदारुर्बला पर्णो वचागुरु ॥ १,१९२.८ ॥

कुष्ठं मांसी सैन्धवञ्च पलमेकं पुनर्नवा ।
पाने नस्ये तथाभ्यङ्गे तैलमेतत्प्रदापयेत् ॥ १,१९२.९ ॥

हृच्छूलं पार्श्वशूलञ्च गण्डमालाञ्च नाशयेत् ।
अपस्मारं वातरक्तं वपुष्मांश्च पुमान्भवेत् ॥ १,१९२.१० ॥

गर्भमश्वतरी विन्द्यात्किं पुनर्मानुषी हर ।
अश्वानां वातभग्नानां कुञ्जराणां नृणां तथा ।
तैलमेतत्प्रयोक्तव्यं सर्ववातविकारिणाम् ॥ १,१९२.११ ॥

हिङ्गुतुम्बुरुशुण्ठीभिः सिद्धं तैलन्तु सार्षपम् ।
एतद्धि पुरणं श्रेष्ठं कर्णशूलापहं परम् ॥ १,१९२.१२ ॥

शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् ।
तक्रं चतुर्गुणं दद्यात्तैलमेतद्विपाचयेत् ॥ १,१९२.१३ ॥

बाधिर्यं कर्णशूलञ्च पूयस्त्रावञ्च कर्णयोः ।
क्रिमयश्च विनश्यन्ति तैलस्यास्य प्रपूरणात् ॥ १,१९२.१४ ॥

शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् ।
शतपुष्पा वचा कुष्ठं दारुशिग्रुरसाञ्जनम् ॥ १,१९२.१५ ॥

सौवर्चलं यवक्षारं सामुद्रं सैन्धवं तथा ।
ग्रन्थिकं विडमुस्तं च मधु शुक्तं चतुर्गुणम् ॥ १,१९२.१६ ॥

मातुलुङ्गरसश्चैव कदलीरस एव च ।
तैलमेभिर्विपक्तव्यं कर्णशूलापहं परम् ॥ १,१९२.१७ ॥

बाधिर्यं कर्णनादश्च पूयस्त्रावश्च दारुणम् ।
पूरणादस्य तैलस्य क्रिमयः कर्णयोर्हर ॥ १,१९२.१८ ॥

सद्यो विनाशमायान्ति शशाङ्ककृतशेखर ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तमलापहम् ॥ १,१९२.१९ ॥

चन्दनं कुङ्कुमं मांसी कर्पूरं जातिपत्रिका ।
जातीकङ्कोलपूगानां लवङ्गस्य फलानि च ॥ १,१९२.२० ॥

अगुरूणि च कस्तूरी कुष्ठं तगरपादिका ।
गोरोचना प्रियङ्गुश्च बला चैव तथा नखी ॥ १,१९२.२१ ॥

सरलं सप्तपर्णं च लाक्षा चामलकी तथा ।
तथा तु पद्मकं चैव ह्येतैस्तैलं प्रसाधयेत् ॥ १,१९२.२२ ॥

प्रस्वेदमलदुर्गन्धकण्डू कुष्ठहरं परम् ।
गच्छति स्त्रीशतं रुद्र बन्ध्यापि लभते सुतम् ॥ १,१९२.२३ ॥

यवानी चित्रकं धान्यं त्र्यूषणं जीरकं तथा ।
सौवर्चलं विडगञ्च पिप्पलीमूलराजिकम् ॥ १,१९२.२४ ॥

एभिः पचेद्रघृतप्रस्थं जलप्रस्थाष्टसंयुतम् ।
तथारऽशोगुल्मश्वयथुं हन्ति वह्निं करोति वै ॥ १,१९२.२५ ॥

मरिचं त्रिवृतं कुष्ठं हरितालं मनः शिला ।
देवदारु हरिद्रे द्वे कुष्ठं मांसी च चन्दनम् ॥ १,१९२.२६ ॥

विशाला करवीरञ्च अर्कक्षीरं शकृद्रसः ।
एषाञ्च कार्षिको भागो विषस्यार्धपलं भवेत्त् ॥ १,१९२.२७ ॥

प्रस्थं सटुकतैलस्य गोमूत्रेऽष्टगुणे पचेत् ।
मृत्पात्रे लोहपात्रे वा शनैर्मृद्वग्निना पचेत् ॥ १,१९२.२८ ॥

पामा विचर्चिका चैव दद्रुर्विस्फोचकानिच ।
अभ्यङ्गेन प्रणश्यन्ति कोमलत्वञ्च जायते ॥ १,१९२.२९ ॥

प्रभूतान्यपि श्वित्राणि तैलेनानेन मर्दयेत् ।
चिरोत्थितमपि श्वित्रं विनष्टं तत्क्षणाद्भवेत् ॥ १,१९२.३० ॥

पटोलपत्रं कटुका मञ्जिष्ठा शारिवा निशा ।
जातीशमीनिम्बपत्रं मधुकं क्वथितं घृतम् ॥ १,१९२.३१ ॥

एभिर्लेपात्सयुररुजो व्रणा विस्त्राविणः शिव ।
शङ्खपुष्पी वचा सोमो ब्राह्मी ब्रह्मसुवर्चलाः ॥ १,१९२.३२ ॥

अभया च गुडूची च आटरूषकवाकुची ।
एतैरक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ १,१९२.३३ ॥

कण्टकार्या रसप्रस्थं क्षीरप्रस्थसमन्वितम् ।
एतद्ब्राह्मीघृतं नाम स्मृतिमेधाकरं परम् ॥ १,१९२.३४ ॥

अग्निमन्थो वचा वासा पिप्पली मधु सैन्धवम् ।
सप्तरात्रप्रयोगेण किन्नरैरिव गीयते ॥ १,१९२.३५ ॥

अपामार्गः गुडूची च वचा कुष्ठं शतावरी ।
शङ्खपुष्पाभया साज्यं विडङ्गं भक्षितं समम् ।
त्रिभिर्दिनैर्नरं कुर्याद्ग्रन्थाष्टशतधारिणम् ॥ १,१९२.३६ ॥

अद्भिर्वा पयसाज्येन मासमेकन्तु सेविता ।
वचा कर्यान्नरं प्राज्ञं श्रुतिधारणसंयुतम् ॥ १,१९२.३७ ॥

चन्द्रसूर्यग्रहे पीतं पलमेकं पयोऽन्वितम् ।
वचायास्तत्क्षणं कुर्यान्महाप्रज्ञायुतं नरम् ॥ १,१९२.३८ ॥

भूनिम्बनिम्बत्रिफलापर्पटैश्च शृतं जलम् ।
पटोलीमुस्तकाभ्याञ्च वासकेन च नाशयेत् ॥ १,१९२.३९ ॥

विस्फोटकानि रक्तञ्च नात्र कार्या विचारणा ।
कतकस्य फलं शङ्खं सैन्धवं त्र्यूषणं वचा ॥ १,१९२.४० ॥

फेनी रसाञ्जनं क्षौद्रं विडङ्गानि मनः शिला ।
एषां वर्तिर्हन्ति काचं तिमिरं पटलं तथा ॥ १,१९२.४१ ॥

प्रस्थद्वयं माषकस्य क्वाथश्च द्रोणमम्भसाम् ।
चतुर्भागावशेषेण तैलप्रस्थं विपाचयेत् ॥ १,१९२.४२ ॥

काञ्जिकस्याढकं दत्त्वा पिष्टान्येतानि दापयेत् ।
पुनर्नवा गोक्षुरकं सैन्धवं त्र्यूषणं वचा ॥ १,१९२.४३ ॥

लवणं सुरदारुश्च मञ्जिष्ठा कण्टकारिका ।
नस्यात्पानाद्धरत्येव कर्णशूलं सुदारुणम् ॥ १,१९२.४४ ॥

बाधिर्यं सर्वरोगांश्च ह्यभ्यङ्गाच्च महेश्वर ।
पलद्वयं सैन्धवञ्च शुण्ठी चित्रकपञ्चकम् ॥ १,१९२.४५ ॥

सौवीरपञ्चप्रस्थं च तैलप्रस्थं पचेत्ततः ।
असृग्दरस्वरप्लीहासर्ववातविकारनुत् ॥ १,१९२.४६ ॥

उदुम्बरं वटं प्लक्षं जम्बूद्वयमथार्जुनम् ।
पिप्पली च कदम्बञ्च पलाशं लोध्रतिन्दुकम् ॥ १,१९२.४७ ॥

मधूकमाम्रसर्जञ्च बदरं पद्मकेशरम् ।
शिरीषबीजङ्कतकमेतत्क्वाथेन साधितम् ।
तैलं हन्ति व्रणांल्लेपाच्चिरकालभवानपि ॥ १,१९२.४८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे द्विनवत्यधिक शततमोऽध्यायः

श्रीगरुडमहापुराणम् १९३
हरिरुवाच ।
पलाण्डुजीरके कुष्ठमश्वगन्धाजमोदकम् ।
वचा त्रिकटुकञ्चैव लवणं चूर्णमुत्तमम् ॥ १,१९३.१ ॥

ब्राह्मीरसैर्भावितञ्च सर्पिर्मधुसमन्वितम् ।
सप्ताहं भक्षितं कुर्यान्निर्मलाञ्च मतिं पराम् ॥ १,१९३.२ ॥

सिद्धार्थकं वचा हिङ्गु करञ्जं देवदारु च ।
मञ्जिष्ठा त्रिफला विश्वं शिरीषो रजनीद्वयम् ॥ १,१९३.३ ॥

प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणैव घर्षितम् ।
नसयमालेपनञ्चैव तथा चोद्वर्तनं हितम् ॥ १,१९३.४ ॥

अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् ।
भूतेभ्यश्चभयं हन्ति राजद्वारेषु योजनात् ॥ १,१९३.५ ॥

निम्बं कुष्ठं हरिद्रे द्वे शिग्रु सर्षपजं तथा ।
देवदारु पटोलञ्च धान्यं तक्रेण घर्षितम् ॥ १,१९३.६ ॥

देहं तैलाक्त गात्रं वै नयेदुद्वर्तनेन च ।
पामाः कुष्ठानि नश्येयुः कण्डूं हन्ति च निश्चितम् ॥ १,१९३.७ ॥

सामुद्रं सैन्धवं क्षारो राजिका लवणं विडम् ।
कटुलोहरजश्चैवं त्रिवृत्सूरणकं समम् ।
दधिगोमूत्रपयसा मन्दपावकपाचितम् ॥ १,१९३.८ ॥

बलाग्निवर्धकं चूर्णं पिबेदुष्णेन वारिणा ।
जीर्णेऽजीर्णे तु भुञ्जति मांस्यादिघृतमुत्तमम् ॥ १,१९३.९ ॥

नाभिशूलं मूत्रशूलं गुल्मप्लीहभवञ्च यत् ।
सर्वशूलहरं चूर्णं जठरानलदीपनम् ।
परिणामसमुत्थस्य शूलस्य च हितं परम् ॥ १,१९३.१० ॥

अभयामलकं द्राक्षा पिप्पली कण्टकारिका ।
शृङ्गी पुनर्नवा शुण्ठी जग्धा कासं निहन्ति वै ॥ १,१९३.११ ॥

अभयामलकं द्राक्षा पाठा चैव विभीतकम् ।
शर्कराया समं चैव जग्धं ज्वरहरं भवेत् ॥ १,१९३.१२ ॥

त्रिफला बदरं द्राक्षा पिप्पली च विरेककृत् ।
हरीतकी सोष्णानीरलवणञ्च विरेककृत् ॥ १,१९३.१३ ॥

कूर्ममत्स्याश्वमहिषगोशृगालाश्च वानराः ।
विडालबर्हिकाकाश्च वराहोलूककुक्कुटाः ॥ १,१९३.१४ ॥

हंस एषाञ्च विण्मूत्रं मांसं वा रोम शोणितम् ।
धूपं दद्याज्ज्वरार्तेभ्य उन्मत्तेभ्यश्च शान्तये ॥ १,१९३.१५ ॥

एतान्यौषधजातानि कथितानि उमापते ।
निघ्नन्ति ताश्च रोगांश्च वृक्षमिन्द्राशनिर्यथा ॥ १,१९३.१६ ॥

औषधंभगवान्विष्णुः संस्मृतो रोगनुद्भवेत् ।
ध्यातोऽर्चितः स्तुतो वापि नात्र कार्या विचारणा ॥ १,१९३.१७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे त्रिनवत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् १९४
हरिरुवाच ।
सर्वव्याधिहरं वक्ष्ये वैष्णवं कवचं शुभम् ।
येन रक्षा कृता शम्भोर्दैत्यान्क्षपयतः पुरा ॥ १,१९४.१ ॥

प्रणम्य देवमीशानमजं नित्यमनामयम् ।
देवं सर्वेश्वरं विष्णुं सर्वव्यापिनमव्ययम् ॥ १,१९४.२ ॥

बध्नाम्यहं प्रतिसरं नमस्कृत्य जनार्दनम् ।
अमोघाप्रतिमं सर्वं सर्वदुः खनिवारणम् ॥ १,१९४.३ ॥

विष्णुर्मामग्रतः पातु कृष्णो रक्षतु पृष्ठतः ।
हरिर्मे रक्षतु शिरो हृदयञ्च जनार्दनः ॥ १,१९४.४ ॥

मनो मम हृषीकेशो जिह्वां रक्षतु केशवः ।
प्रातु नेत्रे वासुदेवः श्रोत्रे सङ्कर्षणो विभुः ॥ १,१९४.५ ॥

प्रद्युम्नः पातु मे घ्राणमनिरुद्धस्तु चर्म च ।
वनमाली गलस्यान्तं श्रीवत्सो रक्षतामधः ॥ १,१९४.६ ॥

पार्श्वं रक्षतु मे चक्रं वामं दैत्यनिवारणम् ।
दक्षिणन्तु गदा देवी सर्वासुरनिवारिणी ॥ १,१९४.७ ॥

उदरं मुसलं पातु पृष्ठं मे पातु लाङ्गलम् ।
ऊर्ध्वं रक्षतु मे शार्ङ्गं जङ्घे रक्षतु नन्दकः ॥ १,१९४.८ ॥

पार्ष्णी रक्षतु शङ्खश्च पद्मं मे चरणावुभौ ।
सर्वकार्यार्थसिद्ध्यर्थं पातु मां गरुडः सदा ॥ १,१९४.९ ॥

वराहो रक्षतु जले विषमेषु च वामनः ।
अटव्यां नरसिंहश्च सर्वतः पातु केशवः ॥ १,१९४.१० ॥

हिरण्यगर्भो भगवान्हिरण्यं मे प्रयच्छतु ।
सांख्याचार्यस्तु कपिलो धातुसाम्यं करोतु मे ॥ १,१९४.११ ॥

श्वेतद्वीपनिवासी च श्वेतद्वीपं नयत्वजः ।
सर्वान्सूदयतां शत्रून्मधुकैटभमर्दनः ॥ १,१९४.१२ ॥

सदाकर्षतु विष्णुश्च किल्बिषं मम विग्रहात् ।
हंसो मत्स्यस्तथा कूर्मः पातु मां सर्वतोदिशम् ॥ १,१९४.१३ ॥

त्रिविक्रमस्तु मे देवः सर्वपापानि कृन्ततु ।
तथा नारायणो देवो बुद्धिं पालयतां मम ॥ १,१९४.१४ ॥

शेषो मे निर्मलं ज्ञानं करोत्वज्ञाननाशनम् ।
वडवामुखो नाशयतां कल्मषं यत्कृतं मया ॥ १,१९४.१५ ॥

पद्भ्यां ददातु परमं सुखं मूर्ध्नि मम प्रभुः ।
दत्तात्रेयः प्रकुरुतां सपुत्रपशुबान्धवम् ॥ १,१९४.१६ ॥

सर्वानरीन्नाशयतु रामः परशुना मम ।
रक्षोघ्नस्तु दशरथिः पातु नित्यं महाभुजः ॥ १,१९४.१७ ॥

शत्रीन्हलेन मे हन्याद्रामो यादवनन्दनः ।
प्रलम्बकेशिचाणूरपूतनाकंसनाशनः ।

कृष्णस्य यो बालभावः स मे कामान्प्रयच्छतु ॥ १,१९४.१८ ॥

अन्धकारतमोघोरं पुरुषं कृष्णपिङ्गलम् ।
पश्यामि भयसन्त्रस्तः पाशहस्तमिवान्तकम् ॥ १,१९४.१९ ॥

ततोऽहं पुण्डरीकाक्षमच्युतं शरणं गतः ।
धन्योऽहं निर्भयो नित्यं यस्य मे भगवान्हरिः ॥ १,१९४.२० ॥

ध्यात्वा नारायणं देवं सर्वोपद्रवनाशनम् ।
वैष्णवं कवचं बद्ध्वा विचरामि महीतले ॥ १,१९४.२१ ॥

अप्रधृष्योऽस्मि भूतानां सर्वदेवमयो ह्यहम् ।
स्मरणाद्देवदेवस्य विष्णोरमिततेजसः ॥ १,१९४.२२ ॥

सिद्धिर्भवतु मे नित्यं यथामन्त्रमुदाहृतम् ।
यो मां पश्यति चक्षुर्भ्यां यञ्चः पश्यामि चक्षुषा ।
सर्वेषां पापदुष्टानां विष्णुर्बध्नातु चक्षुषी ॥ १,१९४.२३ ॥

वासुदेवस्य यच्चक्रं तस्य चक्रस्य ये त्वराः ।
ते हि च्छिन्दन्तु पापान्मे मम हिंसन्तु हिंसकान् ॥ १,१९४.२४ ॥

राक्षसेषु पिशाचेषु कान्तारेष्वटवीषु च ।
विवादे राजमार्गेषु द्यूतेषु कलहेषु च ॥ १,१९४.२५ ॥

नदीसन्तारणे घोरे संप्राप्ते प्राणसंशये ।
अग्निचौरनिपातेषु सर्वग्रहनिवारणे ॥ १,१९४.२६ ॥

विद्युत्सर्पविषोद्वेगे रोगे वै विघ्नसङ्कटे ।
जप्यमेतज्जपेन्नित्यं शरीरे भयमागते ॥ १,१९४.२७ ॥

अयं भगवतो मन्त्रो मन्त्राणां परमो महान् ।
विख्यातं कवचं गुह्यं सर्पपापप्रणाशनम् ।
स्वमायाकृतिनिर्माणं कल्पान्तगहनं महत् ॥ १,१९४.२८ ॥

अनाद्यन्त ! जगद्बीज ! पद्मनाभ ! नमोऽस्तु ते ।
ओं कालाय स्वाहा । ओं कालपुरुषाय स्वाहा । ओं कृष्णाय स्वाहा ।
ओं कृष्णरूपाय स्वाहा । ओं चण्डाय स्वाहा । ओं चण्डरूपाय स्वाहा ।
ओं प्रचण्डाय स्वाहा । ओं प्रचणरूपाय स्वाहा । ओं सर्वाय स्वाहा ।
ओं सर्वरूपाय स्वाहा । ओं नमो भुवनेशाय त्रिलोकधात्रे इह विटि सिविटि सिविटि स्वाहा। ओं नमः अयोखेतये ये ये संज्ञापय दैत्यदानवयक्षराक्षसभूतपिशाचकूष्माण्डान्तापस्मारकच्छर्दनदुर्द्धराणामेकाहिकद्व्याहिकत्र्याहिकचातुर्थिकमौहूर्तिकदिनज्वररात्रिज्वरसन्ध्याज्वरसर्वज्वरादीनां लूताकीटकण्टकपूतनाभुजङ्गस्थावरजङ्गमविषादी नामिदं शरीरं मम पथ्यं त्वं कुरु स्फुट स्फुट स्फुट प्रकोट लफट विकटदंष्ट्र पूर्वतो रक्षतु ओं है है है है दिनकरसहस्रकालसमाहतो जय पश्चिमतो रक्ष ओं निवि निवि प्रदीप्तज्वलनज्वालाकार महाकपिल उत्तरतो रक्ष ओं विलि विलि मिलि मिलि गरुडि गरुडि गौरीगान्धारीविषमोहविषमविषमां महोहयतु स्वाहा दक्षिणतो रक्ष मां पश्य सर्वभूतभयोपद्रवेभ्यो रक्ष रक्ष जय जय विजय तेन हीयते रिपुत्रासाहङ्कृतवाद्यतो भयनुदभयतोऽभयं दिशतुच्युतं ।
तदुदरमखिलं विशन्तु युगपरिवर्तसहस्रसंख्येयोऽस्तंहंसमिव प्रविशन्ति रश्मयः ।
वासुदेवसङ्कर्षणप्रद्युम्नाश्चानिरुद्धकः ।
सर्वज्वरान्ममघ्नन्तु विष्णुर्नारायणो हरिः ॥ १,१९४.२९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वैष्णवकवचकथनं नाम चतुर्नवत्युत्तरशततमोऽध्यायः

श्रीगरुडमहापुराणम् १९५
हरिरुवाच ।
सल्वकामप्रदां विद्यां सप्तरात्रेण तां शृणु ।
नमस्तुभ्यं भगवते वासुदेवाय धीमहि ॥ १,१९५.१ ॥

प्रद्युम्नायानिरुद्धाय नमः सङ्गर्षणाय च ।
नमो विज्ञानमात्राय परमानन्दमूर्तये ॥ १,१९५.२ ॥

आत्मारामाय शान्ताय निवृत्तद्वैतदृष्टये ।
त्वद्रूपाणि च सर्वाणि तस्मात्तुभ्यं नमो नमः ॥ १,१९५.३ ॥

हृषीकेशाय महते नमस्तेऽनन्तमूर्तये ।
यस्मिन्निदं यतश्चैतत्तिष्ठत्यग्रेऽपि जायते ॥ १,१९५.४ ॥

मृन्मयीं वहसि क्षोणीं तस्मै ते ब्रह्मणे नमः ।
यन्न स्पृशन्ति न विदुः मनोबुद्धीन्द्रियासवः ।
अन्तर्बहिस्त्वं चरसि व्योमतुल्यं नमाम्यहम् ॥ १,१९५.५ ॥

ओं नमो भगवते महापुराषाय महाभूतपतये सकलसत्त्वभाविव्रीडनिकरकमलरेणूत्पलनिभधर्माख्यविद्यया?
चरणारविन्दयुगल परमेष्ठिन्नमस्ते ।
अवाप विद्याधरतां चित्रकेतोश्च विद्यया ॥ १,१९५.६ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाक्ये आचारकाण्डे पञ्चनवत्यधिकशततमोऽध्यायः

हरिरुवाच ।
अवाप जप्त्वा चेन्द्रत्वं विष्णुधर्माख्यविद्यया ।
सर्वाञ्छत्रून्विनिर्जित्य ताञ्च वक्ष्ये महेश्वर ॥ १,१९६.१ ॥

पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ।
मुखे शिरस्यानुपूर्वमोङ्का रादीनि विन्यसेत् ॥ १,१९६.२ ॥

नमो नारायणायेति विपर्यासमथापि च ।
करन्यासं ततः कुर्याद्द्वादक्षरविद्यया ॥ १,१९६.३ ॥

प्रणवादियकारान्तमङ्गुल्यं गुष्ठपर्वसु ।
न्यसेद्धृदय ओङ्कारं मनुं मूर्ध्नि समस्तकम् ॥ १,१९६.४ ॥

ओङ्कारन्तु भ्रुवोर्मध्ये शिकानेत्रादिमूर्धतः ।
ओं विष्णवे इति इमं मन्त्रन्यासमुदीरयेत् ॥ १,१९६.५ ॥

आत्मानं परमं ध्यायेच्छेषं यच्छक्तिभिर्युतम् ।
मम रक्षां हरिः कुर्यान्मत्स्यमूर्तिर्जलेऽवतु ॥ १,१९६.६ ॥

त्रिविक्रमस्तथाकाशे स्थले रक्षतु वामनः ।
अटव्यां नरसिंहस्तु रामो रक्षतु पर्वते ॥ १,१९६.७ ॥

भूमौ रक्षतु वाराहौ व्योम्नि नारायणोऽवतु ।
कर्मबन्धाच्च कपिलो दत्तो रोगाच्च रक्षतु ॥ १,१९६.८ ॥

हयग्रीवो देवताभ्यः कुमारो मकरध्वजात् ।
नारदोऽन्यार्चनाद्देवः कूर्मो वै नैरृते सदा ॥ १,१९६.९ ॥

धन्वन्तीरश्चापथ्याच्च नागः क्रोधवशात्किल ।
यज्ञो रोगात्समस्ताच्च व्यासोऽज्ञानाच्च रक्षतु ॥ १,१९६.१० ॥

बुद्धः पाषण्डसंघातात्कल्की रक्षतु कल्मषात् ।
पायान्मध्यन्दिने विष्णुः प्रातर्नारायणोऽवतु ॥ १,१९६.११ ॥

मधुहा चापराह्ने च सायं रक्षतु माधवः ।
हृषीकेशः प्रदोषेऽव्यात्प्रत्यूषेऽव्याज्जनार्दनः ॥ १,१९६.१२ ॥

श्रीधरोऽव्यादर्धरात्रे पद्मनाभो निशीथके ।
चक्रकौमोदकीबाणा घ्नन्तु शत्रूंश्च राक्षसान् ॥ १,१९६.१३ ॥

शङ्खः पद्मं च शत्रुभ्यः शार्ङ्गं वै गरुडस्तथा ।

बुद्धीन्द्रियमनः प्राणान्पान्तु पार्श्वविभूषणः ॥ १,१९६.१४ ॥

शेषः सर्पस्वरूपश्च सदा सर्वत्र पातु माम् ।
विदिक्षु दिक्षु च सदा नारसिंहश्च रक्षतु ॥ १,१९६.१५ ॥

एतद्धारयमाणश्च यं यं पश्यति चक्षुषा ।
स वशी स्याद्विपाप्मा च रोगमुक्तो दिवं व्रजेत् ॥ १,१९६.१६ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे षण्णवत्यधिकशततमोऽध्यायः

धन्वन्तरिरुवाच ।

गारुडं संप्रवक्ष्यामि गरुडेन ह्युदीरितम् ।

कश्यपाय सुमित्रेण विषहृद्येन गारुडः ॥ १,१९७.१ ॥

पृथिव्यापस्तथा तेजो वायुराकाशमेवच ।

क्षित्यादिष्वेव वर्गाश्च ह्येते वै मण्डलाधिपाः ॥ १,१९७.२ ॥

पञ्चतत्त्वे स्थिता देवाः प्राप्यन्ते विष्णुसेवकैः ।

दीर्घस्वरविभिन्नाश्च नपुंसकविवर्जिताः ॥ १,१९७.३ ॥

सषडङ्गः शिवः प्रोक्तो हृच्छिरश्च शिखा क्रमात् ।

कवचं नेत्रमस्त्रं स्यान्न्यासः स्वस्थलसंस्थितिः ॥ १,१९७.४ ॥

सर्वसिद्धिप्रदस्यान्ते कालवह्निर धोऽनिलः ।

षष्ठस्वरसमायुक्तमर्धेन्दुसंयुतं परम् ॥ १,१९७.५ ॥

परापरविभिन्नाश्च शिवस्योर्ध्वाध ईरिताः ।

रेफेणाङ्गेषु सर्वत्र न्यासं कुर्याद्यथाविधि ॥ १,१९७.६ ॥

हृदि पाणितले देहे कर्णे नेत्रे करोति च ।

जपात्तु सर्वसिद्धिः स्याच्चतुर्वक्त्रसमायुताम् ॥ १,१९७.७ ॥

चतुरश्रां सुविस्तारं पीतवर्णान्तु चिन्तयेत् ।

पृथिवीं चेन्द्रदेवत्यां मध्ये वरुणमण्डलम् ॥ १,१९७.८ ॥

मध्ये पद्मं तथायुक्तमर्धचन्द्रं सुशीतलम् ।

इन्द्रनीलद्युतिं सौम्यमथवाग्नेयमण्डलम् ॥ १,१९७.९ ॥

त्रिकोणं स्वस्थिकैर्युक्तं ज्वालामा लानलं स्मरेत् ।

भिन्नाञ्जननिभाकारं स्ववृत्तं बिन्दुभूषितम् ॥ १,१९७.१० ॥

क्षीरोर्मिसदृशाकारं शुद्धस्फटिकवर्चसम् ।

प्लावयन्तं जगत्सर्वं व्योमामृतमनुंस्मरेत् ॥ १,१९७.११ ॥

वासुकिः शङ्खपालश्च स्थितौ पार्थिवमण्डले ।

कर्कोटः पद्मनाभश्च वारुणे तौ व्यवस्थितौ ॥ १,१९७.१२ ॥

आग्नेये चापि कुलिकस्तक्षश्चैव महाब्जकौ ।

वायुमण्डलसंस्थौ च पञ्च भूतानि विन्यसेत् ॥ १,१९७.१३ ॥

अङ्गुष्ठादिकनिष्ठान्तमनुलोमविलोमतः ।

पर्वसन्धिषु च न्यस्या जया च विजया तथा ॥ १,१९७.१४ ॥
आस्यादिस्वपुरस्थाने न्यस्याच्छिवपडङ्गकम् ।
कनिष्ठादौ हृदादौ च शिखायां करयोर्न्यसेत् ॥ १,१९७.१५ ॥
व्यापकन्तु तत्वपूर्वं क्रमादङ्गुलिपर्वसु ।
भूतानाञ्च पुनर्न्यासः शिवाङ्गानि तथैव च ॥ १,१९७.१६ ॥
प्रणवादिनमश्चान्ते नाम्नैव च समन्वितः ।
सर्वमन्त्रेषु कथितो विधिः स्थापनपूजने ॥ १,१९७.१७ ॥
आद्याक्षरं तन्नाम्नश्च मन्त्रोऽयं परिकीर्तितः ।
अष्टानां नागजातीनां मन्त्रः सान्निध्यकारकः ॥ १,१९७.१८ ॥
ओं स्वाहा क्रमशश्चैव पञ्चभूतपुरोगतम् ।
एष साक्षाद्भवेत्ताक्ष्र्यः सर्वकर्मप्रसाधकः ॥ १,१९७.१९ ॥
करन्यासं स्वरैः कृत्वा शरीरे तु पुनर्न्यसेत् ।
ज्वलन्तं चिन्तयेत्प्राणमात्मसंशुद्धिकारकम् ॥ १,१९७.२० ॥
बीजन्तु चिन्तयेत्पश्चाद्वर्षान्तममृतात्मकम् ।
एवञ्चाप्यायनं कृत्वा मूर्ध्नि सञ्चिन्त्य चात्मनः ॥ १,१९७.२१ ॥
पृथिवीं पादयोर्दद्यात्तप्तकाञ्चनसप्रभाम् ।
अशेषभुवनाकीर्णां लोकपालसमन्विताम् ॥ १,१९७.२२ ॥
एतां भगवतीं पृथ्वीं स्वदेहे विन्यसेद्बुधः ।
श्यामवर्णमयं ध्यायेत्पृथिवीद्विगुणं भवेत् ॥ १,१९७.२३ ॥
ज्वालामालाकुलं दीप्तमाब्रह्मभुवनान्तकम् ।
नाभिग्रीवान्तरे न्यस्य त्रिकोणं मण्डलं रवेः ॥ १,१९७.२४ ॥
भिन्नाञ्जननिभाकारं निखिलं व्याप्य संस्थितम् ।
आत्ममूर्तिस्थितं ध्यायेद्वायव्यं तीक्ष्णमण्डलम् ॥ १,१९७.२५ ॥
सिखोपरि स्थितं दिव्यं शुद्धस्फटिकवर्चसम् ।
अप्रमाणमहाव्योमव्यापकं चामृतोपमम् ॥ १,१९७.२६ ॥
भूतन्यासं पुरा कृत्वा नागानाञ्च यथाक्रमम् ।
लकारान्ता बिन्दुयुता मन्त्रा भूतक्रमेण तु ॥ १,१९७.२७ ॥
शिवबीजं ततो दद्यात्ततो ध्यायेच्च मण्डलम् ।

योयस्य क्रमाख्यातो मण्डलस्य विचक्षणः ।
तस्य तच्चिन्तयेद्वर्णं कर्मकाले विधानवित् ॥ १,१९७.२८ ॥
पादपक्षैस्तथा चञ्चत्कृष्णनागैर्विभूषितम् ।
तार्क्ष्यं ध्यायेत्ततो नित्यं विषे स्थावरजङ्गमे ॥ १,१९७.२९ ॥
ग्रहभूतपिशाचे च डाकिनीयक्षराक्षसे ।
नागैर्विवेष्टितं कृत्वा स्वदेहे विन्यसेच्छिवम् ॥ १,१९७.३० ॥
द्विधा न्यासः समाख्यातो नागानां चैव भूतयोः ।
एवं ध्यात्वा कर्म कुर्यादात्मतत्त्वादिकं क्रमात् ॥ १,१९७.३१ ॥
त्रितत्त्वं प्रथं दत्त्वा सिवतत्त्वं ततः परम् ।
यथा देहे तथा देवे अङ्गुलीनां च पर्वसु ॥ १,१९७.३२ ॥
देहे न्यासं पुरा कृत्वा ह्यनुलोमविलोमतः ।
कन्दं नालं तथा पद्मं धर्मं ज्ञानादिमेव च ॥ १,१९७.३३ ॥
द्वितीयस्वरसम्भिन्नं वर्गान्तेन तु पूजयेत् ।
शौमिति कर्णिकामध्ये मूर्ध्नि रेफेण संयुतम् ॥ १,१९७.३४ ॥
अकचटतपयशा वर्गाः पूर्वादिके न्यसेत् ।
पत्रान्तकेसरान्ते तु द्वौ द्वौ पूर्वादिकौ तथा ॥ १,१९७.३५ ॥
केशरे तु स्वरान्न्यस्यादीशान्तान्षोडशार्चयेत् ।
वामाद्याः शक्तयः प्रोक्तास्त्रितत्त्वन्तु ततो न्यसेत् ॥ १,१९७.३६ ॥
आवाहयेत्ततो मर्ध्नि शिवमङ्गं ततः परम् ।
कर्णिकायां न्यसेद्देवं सांगं तत्र पुरः सरम् ॥ १,१९७.३७ ॥
पृतिवी पश्चिमे पत्रे आपश्चोत्तरसंस्थिताः ।
तेजस्तु दक्षिणे पत्रे वायुं पूर्वेण पूजयेत् ॥ १,१९७.३८ ॥
स्वबीजं मूर्तिरूपन्तु प्रागुक्तं पारकल्पयेत् ।
यं वायुमूलं नैरृत्ये रेफस्त्वनलसंस्थितः ॥ १,१९७.३९ ॥
वं च त्वीशे सदा पूज्य औं हृदिस्थञ्च पूजयेत् ।
तन्मात्रान्भूतमात्रांस्तान्बहिरेव प्रपूजयेत् ॥ १,१९७.४० ॥
शिवाङ्गानि ततः पश्चाद्ध्यात्वा संपूजयेत्ततः ।
आग्नेय्यां हृदयं पूज्य शिर ईशानगोचरे ॥ १,१९७.४१ ॥

नैरृत्ये तु शिखां दद्याद्वायव्यां कवचं न्यसेत् ।
अस्त्रन्तु बाह्यतो दद्यान्नेत्रमुत्तरसंस्थितम् ॥ १,१९७.४२ ॥
पत्राग्रे कर्णिकग्रे तु बीजानि परिपूजयेत् ।
अनन्तादिकुलीरान्ता अष्टौ नागाः क्रमात्स्थिताः ॥ १,१९७.४३ ॥
पूर्वादिकक्रमेणैव त्वीशपर्यन्तमेव च ।
पूजयेच्च सदा मन्त्री विधानेन पृथक्पृथक् ॥ १,१९७.४४ ॥
हृदि पद्मे विधानेन शिलादौ दत्तमण्डले ।
एतत्कार्यं समुद्दिष्टं नित्यनैमित्तिकेऽपि च ॥ १,१९७.४५ ॥
आत्मानं चिन्तयेन्नित्यं कामरूपं मनोहरम् ।
प्लावयन्तं जगत्सर्वं सृष्टिसंहारकारकम् ॥ १,१९७.४६ ॥
ज्वालामालाभिरुद्दीप्तं आब्रह्मभुवनान्तकम् ।
दशबाहुं चतुर्वक्त्रं पिङ्गाक्षं शूलपाणिनम् ॥ १,१९७.४७ ॥
दंष्ट्राकरालमत्युग्रं त्रिनेत्रं शशिशेखरम् ।
भैरवन्तु स्मरेत्सिद्ध्यै गरुडं सर्वकर्मसु ॥ १,१९७.४८ ॥
नागानां नाशनार्थाय गरुडं भीमभीषणम् ।
पादौ पातालं संस्थौ च दिशः पक्षास्तु संश्रिताः ॥ १,१९७.४९ ॥
सप्त स्वर्गा उरसि च ब्रह्माण्डं कण्ठमाश्रितम् ।
पूर्वादीशानपर्यन्तं शिरस्तस्य विचिन्तयेत् ॥ १,१९७.५० ॥
सदाशिवशिखान्तस्थं शक्तित्रितयमेव च ।
परात्परं शिवं साक्षात्तार्क्ष्यं भुवननायकम् ॥ १,१९७.५१ ॥
त्रिनेत्रमुग्ररूपञ्च विषनागक्षयङ्करम् ।
ग्रसनं भीमवक्त्रं च गरुडं मन्त्रविग्रहम् ॥ १,१९७.५२ ॥
कालाग्निमिव दीप्तं च चिन्तयेत्सर्वकर्मसु ।
एवं न्यासविधिं कृत्वा यद्यन्मनसि चिन्तयेत् ॥ १,१९७.५३ ॥
तत्तदेव भवेत्साध्यं नरो वै गरुडायते ।
प्रेता भूतास्तथा यक्षा नागा गन्धर्वराक्षसाः ।
दर्शनात्तस्य नश्यन्ति ज्वराश्चातुर्थिकादयः ॥ १,१९७.५४ ॥
धन्वन्तरिरुवाच ।

एवं स गरुडं प्रोचे गरुडः कश्यपाय च ।

महेश्वरो यथा गौरीं प्राह विद्यां तथा शृणु ॥ १,१९७.५५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सप्तनवत्यधिकशततमोऽध्यायः

---

श्रीगरुडमहापुराणम् १९८
भैरव उवाच ।
नित्यक्लिन्नामथो वक्ष्ये त्रिपुरां भुक्तिमुक्तिदाम् ।
ओं ह्रीं आगच्छ देवि ऐं ह्रीं ह्रीं रेखाकारणम् ।
ओं ह्रीं क्लेदिनी भं नमः मदनक्षोभिणा तथा ।
ऐ यं यं क्रीं वा गुणरेखया ह्रीं मदनान्तरे च ।
ऐं ह्रीं ह्रीं च निरञ्जना वागति मदनान्तरेखे खनेत्रावलीति च ।
वेगवति महाप्रेतासनाय च पूजयेत् ।
ओं ह्रीं क्रैं नैं क्रैं नित्यं मदद्रवे क्रीं नमः ।
ऐं ह्रीं त्रिपुरायै नमः ।
ओं ह्रीं क्रीं पश्चिमवक्त्रं ओं ऐं ह्रीं ह्रीं च तथोत्तरम् ।
ऐं ह्रीं दक्षिणमूर्ध्वंवक्त्रं तु पश्चिमम् ।
ओं ह्रीं पाशाय क्रीं अङ्कुशाय ऐं कपालाय नमः ।
आद्यं भयं ऐं ह्रीं च तथा शिरः तथा शिखायै कवचे ।
ऐं ह्रीं क्रीं अस्त्रायफट् ॥ १,१९८.१ ॥

पूर्वे कामरूपाय असिताङ्गाय भैरवाय नमो ब्रह्माण्यै ।
दक्षिणे चैव कन्दाय वै नमः रुरुभैरवाय माहेश्वर्या वा आवाहयेत् ॥ १,१९८.२ ॥

तथा पश्चिमे चण्डाय वै नमः ।
कौमार्यै चोत्तरे चोल्काय क्रोधाय नमः वैष्णव्यै ॥ १,१९८.३ ॥

अग्निकोणे अघोरायोन्मत्तभैरवायेति वाराह्यै ।
रक्षः कोणे साराय कपालिने भैरवाय माहेन्द्र्यै ॥ १,१९८.४ ॥

वायुकोणे जालन्धराय भीषणाय भैरवाय चामुण्डायै ।
ईशकोणके वटुकाय संहारञ्चण्डिकाञ्च प्रपूजयेत् ॥ १,१९८.५ ॥

रतिप्रीतिकामदेवान्पञ्चबाणान्यजेदथ ।
ध्यानार्चनाज्जप्यहोमाद्देवी सिद्धा च सर्वदा ॥ १,१९८.६ ॥

नित्या च त्रिपुरा व्याधिं हन्याज्ज्वालामुखीक्रमात् ।
ज्वालामुखीक्रमं वक्ष्ये सा पूज्या मध्यतः शुभा ॥ १,१९८.७ ॥

नित्यारुणा मदनातुरा महामोहा प्रकृत्यपि ।
महेन्द्राणी च कलनाकर्षिणी भारती तथा ॥ १,१९८.८ ॥

ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ।
वाराही चैव माहेन्द्री चामुण्डा चापराजिता ॥ १,१९८.९ ॥

विजया चाजिता चैवमोहिनी त्वरिता तथा ।

स्तम्भिनी जृम्भिणी पूज्या कालिका पद्मबाह्यतः ।
ज्वालामुखीक्रमं चार्चेद्विषादिहरणं भवेत् ॥ १,१९८.१० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे अष्टनवत्यधिकशततमोध्यायः

श्रीगरुडमहापुराणम् १९९
भैरव उवाच ।
अथ चूडामणिं वक्ष्ये शुभाशुभविशुद्धये ।
सूर्यं देवीं गणं सोम स्मृत्वा तु विलिखेन्नरः ॥ १,१९९.१ ॥

त्रिरेखा गोमूर्त्रिकाभा अथवा प्रश्नवाक्यतः ।
दिशस्थानप्रसूतो वा ध्वजादीन्गणयेत्क्रमात् ॥ १,१९९.२ ॥

ध्वजो धूमोऽथ सिंहश्च श्वा वृषः खरदन्तिनौ ।
ध्वाङ्क्षश्च अष्टमो ज्ञेयो नाम मन्त्रैश्च तान्न्यसेत् ॥ १,१९९.३ ॥

ध्वजस्थाने ध्वजं दृष्ट्वा राज्यचिन्ताधनादिकम् ।
ध्वजस्थाने स्थितो धूम्रो धातुचिन्ता च लाभकृत् ॥ १,१९९.४ ॥

ध्वजस्थाने स्थिते सिंहे धनलाभादिकं भवेत् ।
स्थिते शुनिध्वजस्थाने दासीचिन्तासुखादिकम् ॥ १,१९९.५ ॥

ध्वजस्थाने वृषं दृष्ट्वा स्थानचिन्ता च लाभकम् ।
ध्वजस्थाने खरं दृष्ट्वा दुः खक्लेशादिकं भवेत् ॥ १,१९९.६ ॥

ध्वजस्थाने गजं दृष्ट्वा स्थानचिन्ताजयादिकम् ।
ध्वजस्थाने तथा ध्वाङ्क्षे क्लेशचिन्ता धनक्षयः ॥ १,१९९.७ ॥

धूम्रस्थाने ध्वजं दृष्ट्वा पूर्वं दुः खं ततो धनम् ।
धूम्रे धूम्रं तथा दृष्ट्वा कलिदुः खादिकं भवेत् ॥ १,१९९.८ ॥

धूम्रस्थाने स्थिते सिंहे मनश्चिन्ताधनादिकम् ।
धूम्रस्थाने शुनि स्थिते जयलाभादिकं भवेत् ॥ १,१९९.९ ॥

धूम्रस्थाने वृषं दृष्ट्वा नारीगोऽश्वधनादिकम् ।
धूम्रस्थाने खरं दृष्ट्वा व्याधिश्चापि धनक्षयः ॥ १,१९९.१० ॥

धूम्रस्थाने गजे दृष्टे राज्यलाभजयादिकम् ।
धूम्रस्थाने स्थिते ध्वाङ्क्षे धनराज्यविनाशनम् ॥ १,१९९.११ ॥

सिंहस्थाने ध्वजं दृष्ट्वा राज्यलाभादि निर्दिशेत् ।
सिंहस्थाने स्थिते धूम्रे कन्याप्राप्तिर्धनादिकम् ॥ १,१९९.१२ ॥

सिंहस्थाने स्थिते सिंहे जयो मित्रसमागमः ।
कौलेयके सिंहगते स्त्रीचिन्ता ग्रामलाभकम् ॥ १,१९९.१३ ॥

सिंह स्थाने वृषं दृष्ट्वा गृहक्षेत्रार्थलाभकम् ।

सिंहस्थाने गजं दृष्ट्वा ग्रामस्वामित्वमेव च ॥ १,१९९.१४ ॥

सिंहस्थाने गजं दृष्ट्वा आरोग्यायुः सुखादिकम् ।
सिंहस्थानेस्थिते ध्वाङ्क्षे कन्याधान्यगुणादिकम् ॥ १,१९९.१५ ॥

शुनः स्थाने ध्वजं दृष्ट्वा स्थानचिन्तासुखादिकम् ।
शुनः स्थाने स्थिते धूम्रे कलहं कार्यनाशनम् ॥ १,१९९.१६ ॥

शुनः स्थान स्थिते सिंहे कार्यासिद्धिर्भविष्यति ।
स्थिते शुनि शुनः स्थाने धननाशो भविष्यति ॥ १,१९९.१७ ॥

शुनः स्थाने वृषं दृष्ट्वा रोगी रोगाद्वि मुच्यते ।
शुनः स्थाने खरं दृष्ट्वा कलहस्य भयं भवेत् ॥ १,१९९.१८ ॥

शुनः स्थाने गजं दृष्ट्वा पुत्रभार्यासमागमः ।
श्वस्थाने च स्थिते ध्वाङ्क्षे पीडास्यात्कुलनाशनम् ॥ १,१९९.१९ ॥

वृषस्थाने ध्वजं दृष्ट्वा राजपूजासुखादिकम् ।
वृषस्थाने स्थिते धूम्रे राजपूजासुखादिकम् ॥ १,१९९.२० ॥

वृषस्थाने स्थिते सिंहे सौभाग्यञ्च धनादिकम् ।
स्थिते शुनि वृषस्थाने बलश्रीकाम ईरितः ॥ १,१९९.२१ ॥

वृषस्थाने वृषं दृष्ट्वा कीर्तितुष्टिसुखादिकम् ।
वृषस्थाने खरं दृष्ट्वा महालाभादिकं भवेत् ॥ १,१९९.२२ ॥

वृषस्थाने गजं दृष्ट्वा स्त्रीगजादिसमागमः ।
वृषस्थाने स्थिते ध्वाङ्क्षे स्थानमानसमागमः ॥ १,१९९.२३ ॥

खरस्थाने ध्वजं दृष्ट्वा रोगशोकादिकं भवेत् ।
खरस्थाने स्थिते धूम्रे तस्करादिभयं भवेत् ॥ १,१९९.२४ ॥

खरस्थाने स्थिते सिंहे पूजाश्रीविजयादिकम् ।
स्थिते शुनिखरस्थाने सन्तापधननाशनम् ॥ १,१९९.२५ ॥

खरस्थाने वृषं दृष्ट्वा सुखं प्रियसमागमः ।
खरस्थाने खरं दृष्ट्वा दुः खीपीडादि निर्दिशेत् ॥ १,१९९.२६ ॥

खरस्थाने गजं दृष्ट्वा सुखपुत्रादिकं भवेत् ।
खरस्थाने स्थिते ध्वाङ्क्षे कलहो व्याधिरेव च ॥ १,१९९.२७ ॥

गजस्थाने ध्वजं दृष्ट्वा स्त्रीजयश्रीसुखादिकम् ।

गजस्थानेस्थिते धूम्रे धनधान्यसमागमः ॥ १,१९९.२८ ॥

गजस्थाने स्थिते सिंहे जयसिद्धिसमागमः ।
स्थिते शुनि गजस्थाने आरोग्यं सुखसम्पदः ॥ १,१९९.२९ ॥

गजस्थाने वृषं दृष्ट्वा राजमानधनादिकम् ।
गजस्थाने खरं दृष्ट्वा पूर्वं दुः खं ततः सुखम् ॥ १,१९९.३० ॥

गजस्थाने गजं दृष्ट्वा क्षेत्रधान्यसुखादिकम् ।
गजस्थानेस्थिते ध्वाङ्क्षे धनधान्यसमागमः ॥ १,१९९.३१ ॥

ध्वाङ्क्षस्थाने ध्वजं दृष्ट्वा कार्यनाशो भविष्यति ।
ध्वाङ्क्षस्थाने स्थिते धूम्रे कलिदुः खं गमिष्यति ॥ १,१९९.३२ ॥

ध्वाङ्क्षस्थाने स्थिते सिंहे विग्रहो दुः खमेव च ।
ध्वाङ्क्षस्थाने स्थिते श्वाने गृहभङ्गभयादिकम् ॥ १,१९९.३३ ॥

ध्वाङ्क्षस्थाने वृषं दृष्ट्वा स्थानभ्रंशभयादिकम् ।
ध्वाङ्क्षस्थाने खरं दृष्ट्वा धननाशपराजयौ ॥ १,१९९.३४ ॥

ध्वाङ्क्षस्थाने गजं दृष्ट्वा धनकीर्त्यादिकं भवेत् ।
ध्वाङ्क्षस्थाने स्थिते ध्वाङ्क्षे विदेशगमनादिकम् ॥ १,१९९.३५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नवनवत्यधिकशततमोऽध्यायः

श्रीगरुडमहापुराणम् २००
भैरव उवाच ।
वक्ष्ये वायुजयं देवि जया जयविदेशकम् ।
वाय्वग्निजलशक्राख्यं मङ्गलानाञ्चतुष्टयम् ॥ १,२००.१ ॥

वामदक्षिणसंस्थश्च वायुश्च बहुलो भवेत् ।
ऊर्ध्ववाही भवेदग्निरधस्तु वरुणो भवेत् ॥ १,२००.२ ॥

महेन्द्रो मध्यसंस्थस्तु शुक्लपक्षे तु वामगः ।
कृष्णपक्षे दक्षिणग उदयस्य त्र्यहन्त्र्यहम् ॥ १,२००.३ ॥

वहेत्प्रतिपदाद्ये च विपरीते भवेन्नतिः ।
उदयः सूर्यमार्गेण चन्द्रेणास्तमयो यदि ॥ १,२००.४ ॥

वर्धन्ते गुणसंघाता अन्यथा विघ्नमौचितम् ।
संक्रान्त्यः षोडशप्रोक्ता दिवा रात्रौ वरानने ॥ १,२००.५ ॥

यदा च संक्रमेद्वायुरर्धार्धप्रहरे स्थितः ।
स्वास्थ्याहानिस्तदा ज्ञेया वायुर्भ्रमति देहिषु ॥ १,२००.६ ॥

दक्षिणे च पुटे वायुर्हितो भोजनमैथुने ।
खड्गहस्तो जयेद्युद्धे रिपून्कामसमन्वितः ॥ १,२००.७ ॥

वामेव गमनं श्रेष्ठं सर्वकार्येषु भूषितम् ।
वायुर्वहति तत्रस्थः प्रश्नो भूतस्य शोभनः ॥ १,२००.८ ॥

माहेन्द्रे वारुणे वाते कोऽपि दोषो न जायते ।
अनावृष्टिर्दक्षवाहे वृष्टिः स्याद्वामवाहके ॥ १,२००.९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे द्विशततमोऽध्यायः

धन्वन्तरिरुवाच ।
हयायुर्वेदमाख्यास्ये हयं सर्वार्थलक्षणम् ।
काकतुण्डः कृष्णजिह्वो वृक्षास्यश्चोष्णतालुकः ॥ १,२०१.१ ॥

करालो हीनदन्तश्च शृङ्गी विरलदन्तकः ।
एकाण्डश्चैव जाताण्डः कञ्चुकी द्विखुरी स्तनी ॥ १,२०१.२ ॥

मार्जारपादो व्याघ्राभः कुष्ठविद्रधिसन्निभः ।
यमजो वामनश्चैव मार्जारः कपिलोचनः ॥ १,२०१.३ ॥

एतद्दोषी हयस्त्याज्य उत्तमोऽश्वस्तुरुष्कजः ।
मध्यमः पञ्चहस्तश्च कनीयांश्च त्रिहस्तकः ॥ १,२०१.४ ॥

असंहता ये च वाहा ह्रस्वकर्णास्तथैव च ।
शबलाभाः प्रभावेषु न दीनाश्चिरजीविनः ॥ १,२०१.५ ॥

रेवन्तपूजनाद्धोमाद्रक्ष्याश्च द्विजभाजेनात् ।
सरलं निम्बपत्राणि गुग्गुलं सर्षपान्घृतम्? ॥ १,२०१.६ ॥

तिलञ्चैव वचां हिगुं बध्नीयाद्वाजिनो गले ।
आगन्तुजं दोषजन्तु व्रणं द्विविधमीरितम् ॥ १,२०१.७ ॥

चिरपाकं वातजन्तु श्लेष्मजं क्षिप्रपाककम्? ।
कण्ठदाहात्मकं पित्ताच्छोणितान्मन्दवेदनम् ॥ १,२०१.८ ॥

आगन्तुजन्तु शस्त्राद्यैर्दुष्टव्रणविशोधनम् ।
एरण्डमूलं द्विनिशं चित्रकं विश्वभेषजम् ॥ १,२०१.९ ॥

रसोनं सैन्धवं वापि तक्रकाञ्जिकपोषितम् ।
तिलसक्तुकपिण्डिका दधियुक्ता ससैन्धवा ।
निम्बपत्रयुतं पिण्डं व्रणशोधनरोपणम् ॥ १,२०१.१० ॥

पटोलं निम्बपत्रञ्च वचा चित्रकमेव च ।
पिप्पलीशृङ्गवेरञ्च चूर्णमेकत्र कारयेत् ॥ १,२०१.११ ॥

एतत्पानात्क्रिमिश्लेष्ममन्दानिलविनाशनम् ।
निम्बपत्रं पटो लञ्च त्रिफला खदिरं तथा ॥ १,२०१.१२ ॥

क्वाथयित्वा ततो वाहं सृतरक्तं विचक्षणः ।
त्र्यहमेव प्रिदातव्यं हयकुष्ठोपशान्तये ॥ १,२०१.१३ ॥

सव्रणेषु च कुष्ठेषु तैलं सर्षपजं हितम् ।
लशुनादिकषायश्च पानभुक्त्युपशान्तये ॥ १,२०१.१४ ॥

मातुलुङ्गरसोपेतं मांसीनां रसकेन वा ।
सद्यो दद्यात्तत्र नस्यमन्यैर्वातैः सुसंयुतैः ॥ १,२०१.१५ ॥

पलद्वयं प्रथमेऽह्नि एकैकपलवृद्धितः ।
यावद्दिनानि पूर्णानि पलान्यष्टादशोत्तमे ॥ १,२०१.१६ ॥

अधमेऽष्टपलानि स्युर्मध्यमे स्युश्चतुर्दश ।
शरन्निदाघयोर्नैवदेयं नैव तु दापयेत् ॥ १,२०१.१७ ॥

तैलेन वातिके रोगे शर्कराज्यपयोन्वितैः ।
कटुतैलैः कफे व्योषैः पित्ते चत्रिफलाम्बुभिः ॥ १,२०१.१८ ॥

शालिषष्टिकदुग्धाशी हयो हिन जुगुप्सितः ।
पक्वजम्बूनिभो हेमवर्णोऽश्वो न जुगुप्सितः ॥ १,२०१.१९ ॥

अर्धप्रहरणे धुर्ये गुग्गुलुं प्राशयेद्वयम् ।
भोजयेत्पायसं दुग्धं सत्वरं सुस्थिरो हयः ॥ १,२०१.२० ॥

विकारे भोजने दुग्धं शाल्यन्नं वातले ददेत् ।
कर्षमांसरसैः पित्ते मधुमुद्गरसाज्यकैः ॥ १,२०१.२१ ॥

कफे मुद्गान्कुलत्थान्वा कटुतिक्तान्कफे हये ।
बाधिर्ये व्याधिते ग्रासे त्रिदोषादौ तु गुग्गुलुः ॥ १,२०१.२२ ॥

घासैर्दूर्वा सर्वरोगे प्रथमेऽह्नि पलं ददेत् ।
विवर्धयेत्ततः कर्षमेकाह्नि पलपञ्चकम् ॥ १,२०१.२३ ॥

पाने च भोजने चैव अशीतिपलकं परम् ।
मध्ये षष्टिश्चाधमेषु चत्वारिंशच्च भोगिषु ॥ १,२०१.२४ ॥

व्रणे कुष्ठेषु खञ्जेषु त्रिफलाक्वाथसंयुतम् ।
मन्दाग्नौ शोथरोगे च गवां मूत्रेण योजितम् ॥ १,२०१.२५ ॥

वातपित्ते व्रणे व्याधौ गोक्षीरं घृतसंयुतम् ।
देयं कृशानां पुष्ट्यर्थं मांसैर्युक्तं च भोजनम् ॥ १,२०१.२६ ॥

सुपिष्टायाः प्रदातव्यं गुडूच्याः पलपञ्चकम् ।
प्रभाते घृतसंयुक्तं शरद्गीष्मे च वाजिनाम् ॥ १,२०१.२७ ॥

रोगघ्नं पुष्टिदं चापि बलतेजोविवर्धनम् ।
तदेवाश्वायदातव्यं क्षीरयुक्तमथापि वा ॥ १,२०१.२८ ॥

गुडूचीकल्पयोगेन शतावर्यश्वगन्धयोः ।
चत्वारि त्रीणि मध्यस्य जघन्यस्य पलानि हि ॥ १,२०१.२९ ॥

अकस्माद्यत्र वाहानामेकरूपं यदा भवेत् ।
म्रियते च यदा क्षिप्रमुपसर्गं तमादिशेत् ॥ १,२०१.३० ॥

होमाद्यै रक्षया विप्रभोजनैर्बलिकर्मणा ।
शान्त्योपसर्गशान्तिः स्याद्धरीतक्यादिकल्पतः ॥ १,२०१.३१ ॥

हरीतकी गवां मूत्रैस्तैलेन लवणान्विता ।
आदौ पञ्च ततः पञ्च वृद्ध्या पूर्णशतावधि ।
उत्तमा च शतं मात्रास्त्वशीतिः षष्टिरेव वा ॥ १,२०१.३२ ॥

गजायुर्वेदमाख्यास्ये उक्ताः कल्पा गजे हिताः ।
गजे चतुर्गुणा मात्रास्ताभिर्गजरुगर्दनः ॥ १,२०१.३३ ॥

गजो पसर्गव्याधीनां शमनं शान्तिकर्म च ।
पूजयित्वा सुरान्विप्रान्रत्नैर्गां कपिलां ददेत् ॥ १,२०१.३४ ॥

दन्तिदन्तद्वये मालां निबन्धीयादुपोषितः ।
मन्त्रेण मन्त्रितान्वैद्यैर्वचासिद्धार्थकांस्तथा ॥ १,२०१.३५ ॥

सूर्यादिशिवदुर्गाश्रीविष्ण्वर्चा रक्षयेद्गजम् ।
बलिं दद्याच्च भूतेभ्यः स्नापयेच्च चतुर्घटैः ॥ १,२०१.३६ ॥

भोजनं मन्त्रितं दद्याद्भस्मनोद्धूनयेद्गजमम् ।
भूतरक्षा शुभा मेध्या वारणं रक्षयेत्सदा ॥ १,२०१.३७ ॥

त्रिफलापञ्चकोले च दशमूलं विडङ्गकम् ।
शतावरीगुडूची च निम्बवासककिंशुकाः ॥ १,२०१.३८ ॥

गजरोगविनाशाय हितो रूक्षः कषायकः ।
आयुर्वेदद्वयोक्तानामुक्तं संक्षेपसारतः ॥ १,२०१.३९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गजाश्वायुर्वेदनिरूपणं नामैकाधिकद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २०२
हरिरुवाच ।
एकं पुनर्नवामूलमपामार्गस्य वा शिव ।
सरसं योनिनिः क्षिप्तं वराङ्गस्य व्यथां हरेत् ।
प्रसूतिवेदनाञ्चैव तरुणीनां व्यथां हरेत् ॥ १,२०२.१ ॥

भूमि कूष्माण्डमूलं वै शालिचूर्णमथापि वा ।
सप्ताहं दुग्धपीतं स्यात्स्त्रीणां बहुपयस्करम् ॥ १,२०२.२ ॥

रुद्रेन्द्रवारुणीमुलं लेपात्स्त्रीस्तनवेदना ।
नश्येत घृतपक्वा च कार्यावश्यन्तु पोलिका ॥ १,२०२.३ ॥

भक्षिता सा महेशान योनिशूलं विनाशयेत् ।
प्रलेपिता कारवेल्लमूलेनैव विनिर्गता ॥ १,२०२.४ ॥

योनिः प्रवेशमायाति नात्र कार्या विचारणा ।
नीलीपटोलमूलानि साज्यानि तिलवारिणा ॥ १,२०२.५ ॥

पिष्टान्येषां प्रलेपो वै ज्वालागर्दभरागनत् ।
पाठामूलं रुद्र पीतं पिष्टं तण्डुलवारिणा ॥ १,२०२.६ ॥

पापरोगहरं स्याच्च कुष्ठपानं तथैव च ।
वास्योदकञ्च समधु पीतमन्तर्गतस्य वै ॥ १,२०२.७ ॥

पापरोगस्य सन्तापनिवृक्तिं कुरुते शिव ।
घृततुल्या रुद्र लाक्षा पीता क्षीरेण वै सह ॥ १,२०२.८ ॥

प्रदरं हरते रोगं नात्र कार्या विचारणा ।
द्विजयष्टी त्रिकटुकं चूर्णं पीतं हरेच्छिव ॥ १,२०२.९ ॥

तिलक्वाथेन संयुक्तं रक्तगुल्मं स्त्रिया हर ।
कुसुमस्य निबद्धञ्च तरुणीनां महेश्वर ॥ १,२०२.१० ॥

रक्तोत्पलस्य वै कन्दंशर्करातिलसंयुतम् ।
पीतं सशर्करं स्त्रीणां धारयेद्गर्भपातनम् ॥ १,२०२.११ ॥

रक्तस्त्रावस्य नाशः स्याच्छीतोदकनिषेवणात् ।
पीतन्तु काञ्जिक रुद्र क्वथितं शरपुङ्खया ॥ १,२०२.१२ ॥

हिङ्गुस्त्रैन्धवसंयुक्तं शीघ्रं स्त्रीणां प्रसूतिकृत् ।
मातुलुङ्गस्य वै मूलं कटिबद्धं प्रसूतिकृत् ॥ १,२०२.१३ ॥

अपामार्गस्य वै मूले गर्भवत्यास्तु नामतः ।
उत्पाट्यमाने सकले पुत्रः स्यादान्यथा सुता ॥ १,२०२.१४ ॥

अपामार्गस्य वै मूले नारीणां शिरसि स्थिते ।
गर्भशूलं विनश्येत नात्र कार्या विचारणा ॥ १,२०२.१५ ॥

कर्पूरमदनफलमधुकैः पूरितः शिव ।
योनिः सुभा स्यादवृद्धाया युवत्याः किं पुनर्हर ॥ १,२०२.१६ ॥

यस्य बालस्य तिलकः कृतो गौरोचनाख्यया ।
शर्कराकुष्ठपानञ्च दत्तं स स्याच्च निर्भयः ।
विषभूतग्रहादिभ्यो व्याधिभ्यो बालकः शिव ॥ १,२०२.१७ ॥

शङ्खनाभिवचाकुष्ठलोहानां धारणं सदा ।
बालानामुपसर्गेभ्यो रुद्र रक्षाकरं भवेत् ॥ १,२०२.१८ ॥

पलाशचूर्णं समधु गव्याज्यामलकान्वितम् ।
सविडङ्गं पीतमात्रं नरं कुर्यान्महामतिम् ॥ १,२०२.१९ ॥

मासैकेन महादेव जरामरणवर्जितः ॥ १,२०२.२० ॥

पलाशबीजं सघृतं तिलमध्वन्वितं समम् ।
सप्ताहं भक्षितं रुद्र जरां नयति संक्षयम् ॥ १,२०२.२१ ॥

रुद्रामलकचूर्णं वै मधुतैल घृतान्वितम् ।
जग्ध्वा मासं युवा स्याच्च नरो वागीश्वरी भवेत् ॥ १,२०२.२२ ॥

शिवामलकचूर्णं वै मधुना उदकेन वा ।
बलानि कुर्यान्नासायाः प्रत्यूषे भक्षितं शिव ॥ १,२०२.२३ ॥

कुष्ठचूर्णं साज्यमधु प्रातर्जग्ध्वा भवेन्नरः ।
साक्षात्सुरभिदेहो वै जीवेद्वर्षसहस्रकम् ॥ १,२०२.२४ ॥

माषस्य विदलान्ये वितुषाणि महेश्वर ।
घृतभावितशुष्काणि पयसा साधितानि वै ॥ १,२०२.२५ ॥

समाध्वाज्यपयोभिश्च भक्षयित्वा च कामयेत् ।
स्त्रीणां शतं महादेव तत्क्षणान्नात्र संशयः ॥ १,२०२.२६ ॥

रसश्चैरण्डतैलेन गन्धकेन शुभो भवेत् ।
त्रिकालोदकसंघुष्टो बलकृद्भक्षणाद्भवेत् ॥ १,२०२.२७ ॥

दुग्धं वितुषमाषैश्च शिम्बाबीजैश्च साधितम् ।
अपामार्गस्य तैलेन पीतं स्त्रीशतकामकृत् ॥ १,२०२.२८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नानाविधोषधप्रयोगानिरूपणं नाम द्व्युत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २०३
हरिरुवाच ।
या गौर्द्वेष्टिं स्वकं वत्सं तस्या देयं स्वकं पयः ।
लवणेन समायुक्तं तस्या वत्सः प्रियो भवेत् ॥ १,२०३.१ ॥

शुनोऽस्थि कण्ठबद्धं हि महिषाणां गवा तथा ।
कृमिजालं पातयति सकलं नात्र संशयः ॥ १,२०३.२ ॥

गोजङ्गनाभिपातः स्याद्गुञ्जामूलस्य भक्षणात् ॥ १,२०३.३ ॥

वरुणफलस्यरसं करेण मथितं शिव ।
चतुष्पादद्विपदयोः कृमिजालं निपातयेत् ॥ १,२०३.४ ॥

व्रणञ्च शमयेद्रुद्र जयायाः पूरणात्तथा ।
गजमूत्रस्य वै पानं गोमहिष्युपसर्गनुत् ॥ १,२०३.५ ॥

समसूर शालिबीजं पीतं तक्रेण घर्षितम् ।
क्षीरे गोमहीषस्यैव गोः पुंसश्च हितं भवेत् ॥ १,२०३.६ ॥

पत्रञ्च शरपुङ्खाया दत्तं सलवणं शिव ।
वारिस्फोटं हयानाञ्च केसराणां विनाशयेत् ॥ १,२०३.७ ॥

घृतकुमारीपत्रमेव दत्तं सलक्षणं हर ।
तुरगमकेसराणां कण्डूनंश्येन्न संशयः ॥ १,२०३.८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नानौषधप्रयोगनिरूपणं नाम त्र्युत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २०४
सूत उवाच ।
एवं धन्वन्तरिः प्राह सुश्रुतायच वैद्यकम् ।
अत नामानि वक्ष्यामि ओषधीनां समासतः ॥ १,२०४.१ ॥

स्थिरा विदारिगन्धा च शालपण्यशुमत्यपि ।
लाङ्गली कलसी चैव क्रोष्टुपुच्छा गुहा मता ॥ १,२०४.२ ॥

पुनर्नवाथ पर्षाभूः कठिल्या कारुणा तथा ।
एरण्डश्चोरुवूकः स्यादामर्दो वर्धमानकः ॥ १,२०४.३ ॥

झषा नागबला ज़ेया श्वदंष्ट्रा गोक्षुरो मतः ।
शतावरी वरा भीरु पीवरीन्दीवरी वरी ॥ १,२०४.४ ॥

व्याघ्री तु बृहती कृष्णा हंसपादी मधुस्त्रवा ।
धामनी कण्टकारी स्यात्क्षुद्रा सिंही निदिग्धिका ॥ १,२०४.५ ॥

वृश्चिका त्र्यमृता काली विषघ्नी सर्पदंष्ट्रिका ।
मर्कटी चात्मगुप्ता स्यादार्षेयी कपिकच्छुका ॥ १,२०४.६ ॥

मुद्गपर्णो क्षुद्रसहा माषपर्णो महासहा ।
त्यजा परा च महा ज़ेया दण्डयोन्यङ्कसंज्ञया ।
न्यग्रोधस्तु वटो ज़ेयः अश्वत्थः कपिलो मतः ॥ १,२०४.७ ॥

प्लक्षोऽथ गर्दभाण्डः स्यात्पर्कटी च कपीतनः ।
पार्थस्तु ककुभो धन्वि विज़ेयोर्ऽजुननामभिः ॥ १,२०४.८ ॥

नन्दीवृक्षः प्ररोही स्यात्पुष्टिकारीति चोच्यते ।
वञ्जुलो वेतसो ज़ेयो भल्लातश्चाप्यरुष्करः ॥ १,२०४.९ ॥

लोध्रः सारवको धृष्टस्तिरीटश्चापि कीर्तितः ।
बृहत्फला महाजम्बूर्ज़ेया बालफला परा ॥ १,२०४.१० ॥

तृतीया जलजम्बूः स्यान्नादेयी सा च कीर्तिता ।
कणा कृष्णोपकुञ्ची च शौण्डी मागधिकेति च ॥ १,२०४.११ ॥

कथिता पिप्पली तज्ज़ैस्तन्मूलं ग्रन्थिकं स्मृतम् ।
ऊषणं मरिचं ज़ेयं शुण्ठी विश्वं महौषधम् ॥ १,२०४.१२ ॥

व्योषं कटुत्रयं विद्यात्त्र्यूषणं तच्च कीर्त्यते ।
लाङ्गली हलिनी च स्याच्छेयसी गज पिप्पली ॥ १,२०४.१३ ॥

त्रायन्ती त्रायमाणा स्यादुत्साया सुवहा स्मृता ।
चित्रकः स्याच्छिखी वह्निरग्निसंज्ञाभिरुच्यते ॥ १,२०४.१४ ॥

षड्ग्रन्थोग्रा वचा ज्ञेया श्वेता हैमवतीति च ।
कुटजो वृक्षकः शक्रो वत्सको गिरिमाल्लिका ॥ १,२०४.१५ ॥

कलिङ्गेन्द्रयवारिष्टं तस्य बीजानि लक्षयेत् ।
मुस्तक्तो मेघनामा स्यात्कौन्ती ज्ञेया हरेणुका ॥ १,२०४.१६ ॥

एला च बहुला प्रोक्ता सूक्ष्मैला च तथा त्रुटिः ।
पद्मा भार्ङ्गो तथा काञ्जी ज्ञेया ब्राह्मणयष्टिका ॥ १,२०४.१७ ॥

मूर्वा मधुरसा ज्ञेया तेजनी तिक्तवल्लिका ।
महानिम्बो बृहन्निम्बो दीप्यकः स्याद्यवानिका ॥ १,२०४.१८ ॥

विडङ्गं क्रिमशत्रुः स्याद्रामठं हिङ्गुरुच्यते ।
अजाजी जीरकं ज्ञेया कारवी चोपकुञ्चिका ॥ १,२०४.१९ ॥

विज्ञेया कटुका तिक्ता तथा कटुकरोहिणी ।
तगरं स्यान्नतं वक्रं चोचं त्वचवराङ्गकम् ॥ १,२०४.२० ॥

उदीच्यं बालकं प्रोक्तं ह्रीबेरं चाम्बुनामभिः ।
पत्रकं दलसंज्ञाभिश्चारकं तस्कराह्वयम् ॥ १,२०४.२१ ॥

हेमाभं नागसंज्ञाभिर्नागकेशर उच्यते ।
असृक्कुङ्कुममाख्यातं तथा काश्मीरबाह्लिकम् ॥ १,२०४.२२ ॥

अयो लोहं समुद्दिष्टं यौगिकैर्लोहनामभिः ।
पुरं कुटनटं विद्यान्महिषाक्षः पलङ्कषा ॥ १,२०४.२३ ॥

काश्मरी कट्फला ज्ञेया श्रीपर्णो चेति कीर्तिता ।
शल्लकी गजभक्ष्या च पत्री च सुरभी स्त्रवः ॥ १,२०४.२४ ॥

धात्रीमामलकीं विद्यादक्षश्चैव विभीतकः ।
पथ्याभया च विज्ञेया पूतना च हरीतकी ॥ १,२०४.२५ ॥

त्रिफला फलमेवोक्ता तच्च ज्ञेयं फलत्रिकम् ।
उदकीर्यो दीर्घवृन्तः करञ्जश्चेति कीर्तितः ॥ १,२०४.२६ ॥

यष्टी यष्ट्याह्वयं प्रोक्तं मदुकं मधुयष्टिका ।
धातकी ताम्रपर्णो स्यात्समङ्गा कुञ्जरा मता ॥ १,२०४.२७ ॥

सितं मलयजं शीतं गोशीर्षं सितचन्दनम् ।
विद्याद्रक्तं चन्दनं च द्वितीयं रक्तचन्दनम् ॥ १,२०४.२८ ॥

काकोली च स्मृता वीरा वयस्या चार्कपुष्पिका ।
शृङ्गी कर्कटशृङ्गी च महाघोषा च कीर्तिता ॥ १,२०४.२९ ॥

तुगाक्षीरी शुभा वांशी विज्ञेया वंशलोचना ।
मृद्विका च स्मृता द्राक्षा तथा गोस्तनिका मता ॥ १,२०४.३० ॥

स्यादुशीरं मृणालञ्च सेव्यं लामज्जकं तथा ।
सारञ्च गोपवल्ली च गोपी भद्रा च कथ्यते ॥ १,२०४.३१ ॥

दन्ती कटङ्कटेरी च ज्ञेया दारुनिशेति च ।
हरिद्रा रजनी प्रोक्ता पीतिका रात्रिनामिका ॥ १,२०४.३२ ॥

वृक्षादनी छिन्नरुहा नीलवल्ली रसामृता ।
वसुकोटश्च विज्ञेयो वाशिरः काम्पिल्लो मतः ॥ १,२०४.३३ ॥

पाषाणभेदकोऽरिष्टो ह्यस्मभित्कुट्टभेदकः ।
घण्टाकः शुष्कको ज्ञेयो वचोऽथ सूचको मतः ॥ १,२०४.३४ ॥

सुरसो बीजकश्चैव पीतशालोऽभिधीयेत ।
वज्रवृक्षो महावृक्षः स्नुही स्नुक्च सुधा गुडा ॥ १,२०४.३५ ॥

तुलसीं सुरसां विद्यादुपस्थेति च कथ्यते ।
कुठेरकोऽप्यर्जुनकः पर्णो सौगन्धिपर्णिक्रः ॥ १,२०४.३६ ॥

नीलश्च सिन्धुवारश्च निर्गुण्डीति सुगन्धिका ।
ज्ञेया सुगन्धिपर्णोति वासन्ती कुलजेति च ॥ १,२०४.३७ ॥

कालीयकं पीतकाष्ठं कतकाख्यः पुनः स्मृतः ।
गायत्रीखदिरो ज्ञेयस्तद्भेदः कन्दरो मतः ॥ १,२०४.३८ ॥

इन्दी वरं कुवलयं पद्मं नीलोत्पलं स्मृतम् ।
सौगन्धिकं शतदलमब्जं कमलमुच्यते ॥ १,२०४.३९ ॥

अजवर्णो भवेदूर्जो वाजिकर्णोऽश्वकर्णकः ।
श्लेष्मान्तकस्तथा शेलुर्बहुवारश्च कथ्यते ॥ १,२०४.४० ॥

सुनन्दकः ककुद्भद्रं छत्राकी छत्रसंज्ञका ।
कबरी कुम्भको धृष्टः क्षुद्विधो धनकृत्तथा ॥ १,२०४.४१ ॥

कृष्णार्जकः करालश्च कालमानः प्रकीर्तितः ।
प्राची बला नदीक्रान्ता काकजङ्घाथ वायसी ॥ १,२०४.४२ ॥

ज्ञेया मूषिकपर्णो तु भ्रमन्ती चाखुपर्णिका ।
विषमुष्टिर्द्रावणञ्च केशमुष्टिरुदाहृता ॥ १,२०४.४३ ॥

किंलिहीं कटुकीं विद्यादन्तकश्चाम्लवेतसः ।
अश्वत्था बहुपत्रा च विज्ञेया चामलक्यपि ॥ १,२०४.४४ ॥

अरूषक्रं पत्र शूकं क्षीरी राजादनं मतम् ।
महापत्रं दाडिमं च तमेव करकं वदेत् ॥ १,२०४.४५ ॥

मसूरी विदली शष्पा कालिन्दीति निरुच्यते ।
कण्टकाख्या महाश्यामा वृक्षपादीति वक्ष्यते ॥ १,२०४.४६ ॥

विद्या कुन्ती निकुम्भा च त्रिभङ्गी त्रिपुटी त्रिवृत् ।
सप्तला यवतिक्ता च चर्मा चर्मकसेति च ॥ १,२०४.४७ ॥

शङ्खिनी सुकुमारी च तिक्ताक्षी चाक्षिपीलुकम् ।
गवाक्षी चामृता श्वेता गिरिकर्णो गवादिनी ॥ १,२०४.४८ ॥

काम्पिल्लकोऽथ रक्ताङ्गो गुण्डा रोचनिकेति च ।
हेमक्षीरी स्मृता पीता गौरी वै कालदुग्धिका ॥ १,२०४.४९ ॥

गाङ्गेरुकी नागबला विशाला चेन्द्रवारुणी ।
ताक्ष्र्यं शैलं नीलवर्णमञ्जनञ्च रसाञ्जनम् ॥ १,२०४.५० ॥

निर्यासो यश्च शाल्मल्याः स मोचरससंज्ञकः ।
प्रत्यक्पुष्पी खरी ज्ञेया अपामार्गो मयूरकः ॥ १,२०४.५१ ॥

सिंहास्यवृषवासाकमाटरूषकमादिशेत् ।
जीवको जीवशाकश्च कर्बुरञ्च शटीं विदुः ॥ १,२०४.५२ ॥

कट्फलं सोमवृक्षः स्यादग्निगन्धा सुगन्धिका ।
शताङ्गं शतपुष्पा च मिंसिर्मधुरिकामता ॥ १,२०४.५३ ॥

ज्ञेयं पुष्करमूलञ्च पुष्करं पुष्कराह्वयम् ।
यासोऽथ धन्वयासश्च दुष्पर्शोऽथ दुरालभा ॥ १,२०४.५४ ॥

वाकुची सोमराजी च सोमवल्लीति कीर्तिता ।
मार्कवः केशराजश्च भृङ्गराजो निगद्यते ॥ १,२०४.५५ ॥

प्रोक्तस्त्वेडगजस्तज्ज्ञैश्चक्रमर्दकसंज्ञखः ।
सुरङ्गीतगरः स्नायुः कलनाशा तु वायसी ॥ १,२०४.५६ ॥

महाकालः स्मृतो बेलस्तण्डुलीयो घनस्तनः ।
इक्ष्वाकुस्तिक्ततुम्बी स्यात्तिक्तालबुर्निगद्यते ॥ १,२०४.५७ ॥

धामार्गवोऽथ कोषातक्यथ यामिनी ।
विद्यात्कोशतकीभेदं कृतभेदनसंज्ञका ॥ १,२०४.५८ ॥

तथा जीमूतकाख्या च खुड्डाको देवताडकः ।
गृध्रनखी गृध्रनखी हिङ्गुकाकादनी मता ॥ १,२०४.५९ ॥

अश्वारिश्चैव बोद्धव्यः करवीरोऽश्वमारकः ।
सिन्धुः सैन्धवसिन्धूत्थमणिमन्थमुदाहृतम् ॥ १,२०४.६० ॥

क्षारो यवाग्रजश्चैव यवक्षारोऽभिधीयते ।
सर्जिका सर्जिकाक्षारो द्वितीयः परिकीर्तितः ॥ १,२०४.६१ ॥

काशीशं पुष्पकाशीशं विज्ञेयं नेत्रभेषजम् ।
धातुकाशीशकाशी च संज्ञेयं तच्च कीर्तितम् ॥ १,२०४.६२ ॥

सौराष्ट्री मृत्तिकाक्षारं काक्षी वै पङ्कपर्पटी ।
विद्यात्समाक्षिकं धातु ताप्यं ताप्युत्थसम्भवम् ॥ १,२०४.६३ ॥

शिला मनः शिला ज्ञेया नेपाली कुलटीति च ।
आलं मनस्तालकं वा हरितालं विनिर्दिशेत् ॥ १,२०४.६४ ॥

गन्धको गन्धपाषाणो रसः पारद उच्यते ।
ताम्रमौदुम्बरं शुल्बं विद्यान्म्लेच्छमुखं तथा ॥ १,२०४.६५ ॥

अद्रिसारस्त्वयस्तीक्ष्णं लोहकञ्चापि कथ्यते ।
माक्षिकं मधु च क्षौद्रं तच्च पुष्परसं स्मृतम् ॥ १,२०४.६६ ॥

ज्येष्ठन्तु सोदकं तत्स्यात्काञ्जिकन्तु सुवीरकम् ।
सीता सितोपला चैव मत्स्यण्डीशर्करा स्मृता ॥ १,२०४.६७ ॥

त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् ।
नागकेशरसंयुक्तं तच्चतुर्जातमिष्यते ॥ १,२०४.६८ ॥

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरैः ।
कथितं पञ्चकोलञ्च कोलकं कोलसंज्ञया ॥ १,२०४.६९ ॥

प्रियङ्गुः कङ्गुका ज्ञेया कोरदूषश्च कोद्रवः ।
त्रिपुटः पुटसंज्ञश्च कलापो लङ्गको मतः ॥ १,२०४.७० ॥

सतीनो वर्तुलश्चैव वेणुश्चापि प्रकीर्तितः ।
पिचुकं पितलं चाक्षं बिडालपदकं तथा ॥ १,२०४.७१ ॥

विद्यात्कर्षं तथा चापि सुवर्णं कवलग्रहम् ।
पलार्धं शुक्तिमिच्छन्ति तथाष्टौमाषकास्त्विवति ॥ १,२०४.७२ ॥

पलं बिल्वञ्च मुष्टिः स्याद्द्वे पले प्रसृतिं वदेत् ।
अञ्जलिं कुडवञ्चैव विद्यात्पलचतुष्टयम् ॥ १,२०४.७३ ॥

अष्टमानं पलान्यष्टौ तच्च मानमिति स्मृतम् ।
चतुर्भिः कुडवैः प्रस्थ प्रस्थाश्चत्वार आढकः ॥ १,२०४.७४ ॥

काशपात्रञ्च संप्रोक्तो द्रोणश्चचतुराढके ।
तुला पलशतं प्रोक्तं भागो विंशत्पलः स्मृतः ॥ १,२०४.७५ ॥

मानमेवं विधं प्रोक्तं प्रस्थद्रव्येषु पण्डितैः ।
द्रवद्रव्येषु चोद्दिष्टं द्विगुणं परिकीर्तितम् ॥ १,२०४.७६ ॥

भद्रदारु देवकाष्ठं दारु स्याद्देवदारुकम् ।
कुष्ठमामयमाख्यातं मांसीञ्च नलदंशनम् ॥ १,२०४.७७ ॥

शङ्खः शुक्तिनखः शङ्खो व्याघ्रो व्याघ्रनखः स्मृतः ।
पुरं पलङ्कषं विद्यान्महिषाक्षञ्च गुग्गुलुः ॥ १,२०४.७८ ॥

रसो गन्धरसो बोले सर्जः सर्जरसो मतः ।
प्रियङ्गुः फलिनी श्यामा गौरी कान्तेति चोच्यते ॥ १,२०४.७९ ॥

करञ्जौ नक्तमालः स्यात्पूतिकश्चिरबिल्वकः ।
शिग्रुः शोभाञ्जनो नाम ज्ञानमानश्च कीर्तितः ॥ १,२०४.८० ॥

जया जयन्ती शरणी निर्गुण्डी सिन्धुवारकः ।
मोरटा पीलुपर्णो च तुण्डी स्यात्तुण्डिकेरिका ॥ १,२०४.८१ ॥

मदनो गालवो बोधो घोटा घोटी च कथ्यते ।
चतुरङ्गुल सम्पाको व्याधिघाताभिसंज्ञकः ॥ १,२०४.८२ ॥

विद्यादारग्वधं राजवृक्षं रैवतसंज्ञकम् ।
दन्ती काकेन्दुतिक्ता स्यात्कण्टकी च विकङ्कतः ॥ १,२०४.८३ ॥

निम्बोऽरिष्टः समाख्यातः पटोलं कोलकं विदुः ।
वयस्था च विशल्या च च्छिन्ना छिन्नरुहा मता ॥ १,२०४.८४ ॥

वशा दन्त्यमृता चेति गुडूचीनामसंग्रहः ।
किराततिक्तकश्चैव भूनिम्बः काण्डतिक्तकः ॥ १,२०४.८५ ॥

सूत उवाच ।
नामान्येतानि च हरे वन्यानां भेषजां तथा ।
अतो व्याकरणं वक्ष्ये कुमारोक्तञ्च शौनक ॥ १,२०४.८६ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे चतुरत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २०५
कुमार उवाच ।
अथ व्याकरणं वक्ष्ये कात्यायन समासतः ।
सिद्धशब्दविवेकाय बालव्युत्पत्तिहेतवे ॥ १,२०५.१ ॥

सुप्तिङन्तं पदं ख्यातं सुपः सप्त विभक्तयः ।
स्वौजसः प्रथमा प्रोक्ता सा प्रातिपदिकात्मके ॥ १,२०५.२ ॥

सम्बोधने च लिङ्गादावुक्ते कर्मणि कर्तरि ।
अर्थवत्प्रातिपदिकं धातुप्रत्ययवर्जितम् ॥ १,२०५.३ ॥

अमौशसो द्वितीया स्यात्तत्कर्म क्रियते च यत् ।
द्वितीया कर्मणि प्रोक्तान्तरान्तरेण संयुते ॥ १,२०५.४ ॥

टाभ्यांभिसस्तृतीया स्यात्करणे कर्तरीरिता ।
येन क्रियते करणं तत्कर्ता यः करोति सः ॥ १,२०५.५ ॥

ङेभ्यांभ्यसश्चतुर्थो स्यात्सम्प्रदाने च कारके ।
यस्मै दित्सा धारयते रोचते सम्प्रदानकम् ॥ १,२०५.६ ॥

पञ्चमी स्यान्ङसिभ्यांभ्योह्यपादाने च कारके ।
यतोऽपैति समादत्ते उपादत्ते भयं यतः ॥ १,२०५.७ ॥

ङसोसामश्च षष्ठी स्यात्स्वामिसम्बन्धमुख्यके ।
ङ्योः सुपो वै सप्तमी स्यात्सा चाधिकरणे भवेत् ॥ १,२०५.८ ॥

आधारश्चाधिकरणं रक्षार्थानां प्रयोगतः ।
ईप्सितं चानीप्सितं यत्तदपादानकं स्मृतम् ॥ १,२०५.९ ॥

पञ्चमी पर्युपाङ्योगे इतरर्तेऽन्यदिङ्मुखे ।
एनयोगे द्वितीया स्यात्कर्मप्रवचनीयकैः ॥ १,२०५.१० ॥

वीप्सेत्थम्भावचिह्नेऽभिर्भागेनैव परिप्रती ।
अनुरेषु सहार्थे च हीनेऽनूपश्च कथ्यते ॥ १,२०५.११ ॥

द्वितीया च चतुर्थो स्याच्चेष्टायां गतिकर्मणि ।
अप्राणे हि विभक्ती द्बे मन्यकर्मण्यनादरे ॥ १,२०५.१२ ॥

नमः स्वस्तिस्वधास्वाहालंवषड्योग ईरिता ।
चतुर्थो चैव तादर्थ्ये तुमर्थाद्भाववाचिनः ॥ १,२०५.१३ ॥

तृतीया सहयोगे स्यात्कुत्सितेङ्गे विशेषणे ।

काले भावे सप्तमी स्यादेतैर्योगेऽपिषष्ठ्यति ॥ १,२०५.१४ ॥

स्वामीश्वराधिपतिभिः साक्षिदायादप्रसूतैः ।
निर्धारणे द्वे विभक्तो षष्ठी हेतुप्रयोगके ॥ १,२०५.१५ ॥

स्मृत्यर्थकर्मणि तथा करोतेः प्रतियत्नके ।
हिंसार्थानां प्रयोगे च कृति कर्मणि कर्तरि ॥ १,२०५.१६ ॥

न कर्तृकर्मणोः षष्ठी निष्ठयोः प्रातिपदिके ।
द्विविधं प्रातिपदिकं नाम धातुस्तथैव च ॥ १,२०५.१७ ॥

भूवान्दिभ्यस्तिङो लः स्याल्लकारा दश वै स्मृताः ।
तिप्तसूझि प्रथमो मध्यः सिप्थस्थोत्तमपूरुषः ॥ १,२०५.१८ ॥

मिब्वस्मस्तु परस्मै हि पदानां चात्मनेपदम् ।
तातान्झ प्रथमो मध्य स्थासाथान्ध्वमथोत्तमः ॥ १,२०५.१९ ॥

आदेशा इड्बहिमहि धातुतोथ णिजादिवत् ।
नाम्नि प्रयुज्यमानेऽपि प्रथमः पुरुषो भवेत् ॥ १,२०५.२० ॥

मध्यमो युष्मदि प्रोक्त उत्तमः पुरुषोऽस्मदि ।
भूवाद्या धातवः प्रोक्ताः सनाद्यन्तास्तथा ततः ॥ १,२०५.२१ ॥

लडीरितो वर्तमाने स्मेनातीते च धातुतः ।
भूतेऽनद्यतने लङ्वा लोडाद्याशिषि धातुतः ॥ १,२०५.२२ ॥

विध्यादावेवानुमतो लोड्वाच्यो मन्त्रणे भवेत् ।
निमन्त्रणाधीष्टसंप्रश्रे प्रार्थनेषु तथाशिषि ॥ १,२०५.२३ ॥

लिङतीते परोक्षे स्याल्लिड्भूते ळड्भविष्यति ।
स्यादनद्यतने तद्वद्भविष्यति तु धातुतः ॥ १,२०५.२४ ॥

दातोरॢङ्क्रियातिपत्तौ लिङर्थे लेट्प्रकीर्तितः ।
कृतस्त्रिष्वपि वर्तन्ते भावे कर्मणि कर्तरि ॥ १,२०५.२५ ॥

सदृशास्तव्यता ण्यद्यदनीयाश्च तृजादयः ॥ १,२०५.२६ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे व्याकरणनिरूपणं नाम पञ्चोत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २०६
सूत उवाच ।
सिद्धोदाहरणं वक्ष्ये संहितादिपुरः सरम् ।
विप्राः स्वसागता वीदं सुत्तमं स्यात्पितृषभः ॥ १,२०६.१ ॥

ळकारो विश्रुता सेवं लाङ्गलीषा मनीपया ।
गङ्गोदकं तवल्कार ऋणार्णं प्रार्णमित्यपि ॥ १,२०६.२ ॥

शीतार्तश्च तवल्कारः सैन्द्री सौकार इत्यपि ।
वध्वासनञ्च पित्रर्थो लनुबन्धो नये जयेत् ॥ १,२०६.३ ॥

नायको लवणं गावस्त एते न त ईश्वराः ।
देवीगृहमथो अत्र अ अवेहि पटू इमौ ॥ १,२०६.४ ॥

अमी अश्वाः षडस्येति तन्न वाक्षड्दलानि च ।
तच्चरेत्तल्लु नातीति तज्जलं तच्छमशानकम् ॥ १,२०६.५ ॥

सुगन्नत्र पचन्नत्र भवांश्छादयतीति च ।
भवाज्झनत्करश्चैव भवांस्तरति संस्मृतम् ॥ १,२०६.६ ॥

भवांल्लिखति ताञ्चक्रे भवाञ्शेतेऽप्यनीदृशः ।
भवाण्डीनं त्वन्तरसि त्वङ्करोषि सदार्चनम् ॥ १,२०६.७ ॥

कश्चरेत्कष्टकारेण क कुर्यात्क फले स्थितः ।
कःशेते चैव कःषण्डः कस्को याति च गौरवम् ॥ १,२०६.८ ॥

क इहात्र क एवाहुर्देवा आहुश्च भो व्रज ।
स्वभूर्विष्णुर्व्रजति च गीष्पतिश्चैव धूर्पतिः ॥ १,२०६.९ ॥

अस्मानेष व्रजेत्सस्यादृक्साम स च गच्छति ।
कुटीच्छाया तथा छाया सन्धयोऽन्ये तथेदृशाः ॥ १,२०६.१० ॥

समासाः षट्समाख्याताः स द्विजः कर्मधारयः ।
द्विगुस्त्रिवेदी ग्रामश्च अयं तत्पुरुषः स्मृतः ॥ १,२०६.११ ॥

तत्कृतश्च तदर्थश्च वृकभीतिश्च यद्धनम् ।
ज्ञानदक्षेण तत्त्वज्ञो बहुव्रीहिरथाव्ययी ॥ १,२०६.१२ ॥

भावोऽधिस्त्रि यथोक्तं तु द्वन्द्वो देवर्षिमानवाः ।
तद्धिताः पाण्डवः शैवो ब्राहयं च ब्रह्मतादयः ॥ १,२०६.१३ ॥

देवाग्निसखिपत्यंशुक्रोष्टुस्वायम्भुवः पिता ।

ना प्रशस्ताश्चरा गौग्लौरबजन्ताश्च पुंस्यपि ॥ १,२०६.१४ ॥

हलन्तश्चाश्वयुक्क्ष्माभुङ्मरुत्क्रव्यान्मृगाविधः ।
आत्मा राजा युवा पन्थाः पूषब्रह्मह्णौ हली ॥ १,२०६.१५ ॥

विड्वे धा उशनानड्वान्मधुलिट्काष्ठतट्तथा ।
बनवार्यस्थिवस्तूनि जगत्सामाहनी तथा ॥ १,२०६.१६ ॥

कर्मसर्पिर्वपुस्तेज अज्झलन्ता नपुंसके ।
जाया जरा नदी लक्ष्मीः श्रीस्त्रीभूमिर्वधूरपि ॥ १,२०६.१७ ॥

भ्रूः पुनर्भूस्तथा धेनुः स्वसा माता च नौ स्त्रियः ।
वाक्स्रग्दिङ्मुत्क्रुधः प्रायो युवतिः कुकुभस्तथा ॥ १,२०६.१८ ॥

द्योदिवौ प्रावृषश्चैव सुमान उष्णिगस्त्रियाम् ।
गुणद्रव्यक्रियायोगात्स्त्रीलिङ्गांश्च वदामि ते ॥ १,२०६.१९ ॥

शुक्लकीलालपाश्चैव शुचिश्च ग्रामणीः सुधीः ।
पटुः कमलभूः कर्ता सुमतो बहवः सुनौः ॥ १,२०६.२० ॥

सत्या नाग्न्यस्तथा पुंसो ह्यभक्षयत दीर्घपात् ।
सर्वविश्वोभ ये चोभौ एकोन्यान्यतराणि च ॥ १,२०६.२१ ॥

डतरो डतमो नेमस्त्वः समोऽथ सिमेतरौ ।
पूर्वश्चैवाधरश्चैव दक्षिणश्चोत्तरावरौ ॥ १,२०६.२२ ॥

परश्चान्तरमप्येतद्यत्त्यत्किमदसस्त्विदम् ।
युष्मदस्मत्ततत्प्रथमचरमाल्पतयार्धकाः ॥ १,२०६.२३ ॥

तथा कतिपयो द्वौ चेत्येवं सर्वादयस्तथा ।
शृणोत्याद्या जुहोतिश्च जहातिश्च दधात्यपि ॥ १,२०६.२४ ॥

दीप्यतिः स्तूयतिश्चैव पुत्रीयति धनीयति ।
त्रुट्यति म्रियते चैव चिचीषति निनीषति ॥ १,२०६.२५ ॥

सर्वे तिष्ठन्ति सर्वस्मै सर्वस्मात्सर्वन्तो गतः ।
सर्वेषां चैव सर्वस्मिन्नेवं विश्वादयस्तथा ॥ १,२०६.२६ ॥

पूर्वे पूर्वाश्च पूर्वस्मात्पूर्वस्मिन्पूर्व ईरितः ।
सूत उवाच ।
सुप्तिङन्तुं सिद्धरूपं नाममात्रेण दर्शितम् ।
कात्यायनः कुमारात्तु श्रुत्वा विस्तरमब्रवीत् ॥ १,२०६.२७ ॥

सूत उवाच
वासुदेवं गुरुं नत्वा गणं शम्भुं सरस्वतीम्
मात्रावर्णप्रभेदेन च्छन्दो वक्ष्येऽल्पबुद्धये १
सर्वादिमध्यान्तगलौ म्नौ भ्यौ ज्रौ स्तौ त्रिका गणाः
आर्या चतुष्कलाद्यन्तसर्वमध्ये चतुर्गणाः २
व्यञ्जनान्तो विसर्गान्तौ दीर्घो युक्तपरो गुरुः
सानुस्वारश्च पादान्तो वा इत्युक्तो द्विमात्रकः ३
यदा नापि क्रमं योगे लघुतापि क्वचिद्गुरोः
श्लोकचार्यादिसंज्ञा स्याद्यतिर्विच्छेदसंज्ञिका ४
ज्ञेयः पादश्च तुर्यांशो युक् समं विषमन्त्वयुक्
सममर्धसमं वृत्तं विषमञ्च तृतीयकम् ५
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे छन्दः शास्त्रे छन्दःसंज्ञापरिभाषानिरूपणं नाम सप्तोत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २०८
सूत उवाच ।
आर्यालक्ष्म त्वष्ट गणाः सदा जो विषमे न हि ।
षष्ठे जो न्लौ वापि भवेत्पदं षष्ठे द्वितीयलात् ॥ १,२०८.१ ॥

आदितः सप्तमे ह्रस्वा द्वितीयार्धे शरे ततः ।
त्रिगणाङ्घ्रिश्च पथ्या स्याद्विपुला वह्निलङ्घनात् ॥ १,२०८.२ ॥

ग्मध्ये द्वितुर्यौ जौ चपला मुखपूर्वादिचापला ।
द्वितीयार्धे सजघना आर्याजातेश्च लक्षणम् ॥ १,२०८.३ ॥

आर्या प्रथमार्धलक्ष्म गीतिः स्याच्चेद्दलद्वये ।
उपगीतिर्द्वितीयार्धादुद्गीतिर्व्यत्ययाद्भवेत् ॥ १,२०८.४ ॥

आर्यागीतिश्चान्तगुरुर्गीतिजातेश्च लक्षणम् ।
षट्कला विषमे चेत्स्युः समेऽष्टौ न निरन्तराः ।
समा पराश्रिता न स्याद्वैतालीये रलौ गुरुः ॥ १,२०८.५ ॥

अन्तेर्यौ पूर्ववदिदमौपच्छन्दसिकं मतम् ॥ १,२०८.६ ॥

भाद्गौ स्यादापातलिका ज्ञेयाथो दक्षिणान्तिका ।
पराश्रितो द्वितीयो लः पादेषु निखिलेष्वपि ॥ १,२०८.७ ॥

उदीच्यवृत्तिरसमे प्राच्यवृत्तिस्तु युग्मके ।
सपञ्चमश्चतुर्थांशे युगपत्तौ प्रवृत्तकम् ॥ १,२०८.८ ॥

उदीच्याद्यङ्घ्रिसंयोगाद्युग्मपादैकपादिका ।
चारुहासिन्ययुग्माङ्घ्रौ वैतालीयस्य संग्रहः ॥ १,२०८.९ ॥

वक्त्रं नाद्यान्नसौ स्यातां चतुर्थाद्यगणो भवेत् ।
पथ्यावक्त्रं जेन समे विपरीतादिरन्यथा ॥ १,२०८.१० ॥

उसमे नश्च चपला विपुला लघुसप्तमा ।
निखिले वा सैतवस्य म्रौ न्तौ चाब्धेस्तत्पूर्वकौ ॥ १,२०८.११ ॥

षोडशलोऽचलधृतिर्मात्रासमकमुच्यते ॥ १,२०८.१२ ॥

नवमलस्तथा गोऽन्त्यः जो न्लौवाथाम्बुधेर्यथा ।
विश्लोकः स्यात्तच्चतुष्कद्विगुणाद्वानवासिका ॥ १,२०८.१३ ॥

बाणाष्टनवकेषु स्याल्लश्चित्रा षोडशात्मिका ।
सममात्रासमादिष्टं पदाकुलकमीरितम् ॥ १,२०८.१४ ॥

वृत्तमात्रा विना वर्णैर्ला वर्णा गुरुभिर्विना ।
गुरुवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥ १,२०८.१५ ॥

अष्टाविंशातिला गन्ता प्रथमार्धे द्वितीयके ।
त्रिंशदस्यां शिखा गन्ता खञ्जातद्व्यत्ययाद्भवेत् ॥ १,२०८.१६ ॥

षोडशानङ्गक्रीडा गा द्वात्रिंशच्चरमे च लाः ।
सप्तविंशातिला गन्ता दलयो रुचिरा द्वयोः ॥ १,२०८.१७ ॥

मात्रावृत्तानि चोक्तानि वर्णवृत्तानि वच्मि वै ॥ १,२०८.१८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे छन्दः शास्त्रे आर्यावृत्तादिछन्दोलक्षणनिरूपणं नामाष्टोत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २०९
सूत उवाच ।
श्रीरुक्था गेन सा ज्ञेया उत्युक्था स्त्री गुरुद्वयम् ।
मो नारी रो मृगी मध्या मगौ कन्या प्रतिष्ठया ॥ १,२०९.१ ॥

भो गौ पङ्क्तिः सुप्रातिष्ठा तनुमध्या तयौ स्मृता ।
नयाभ्यां बालललिता गायत्रीच्छन्द एव हि ॥ १,२०९.२ ॥

मसगैर्मदलेखा स्यादुष्णिक्छन्दः स्मृतं बुधैः ।
भौ गौ चित्रपदा ख्याता विद्युन्माला ममौ गगौ ॥ १,२०९.३ ॥

माणवकं भात्तलगा म्नौ गौ हंसरुतं स्मृतम् ।
समानिका रजगला जरला गः प्रमाणिका ।
आभ्यामन्यद्वितानं स्यादनुष्टुप्छन्द ईरितम् ॥ १,२०९.४ ॥

रनसैः स्याद्धलमुखी नौ मः शिशुभृता भवेत् ।
बृहतीछन्द इत्युक्तं स्मौ जगौ स विराजितम् ॥ १,२०९.५ ॥

पणवं स्यान्मनयगैर्मयूरसारिणी भवेत् ।
रजाभ्याञ्च रगाभ्याञ्च रुक्मवती भमौ सगौ ॥ १,२०९.६ ॥

मत्ता मभसगैर्युक्ता नरजा गो मनोरमा ।
पङ्क्तिच्छन्दः समाख्यातं जसता गावुपस्थितम् ॥ १,२०९.७ ॥

तौ जो गाविन्द्रवज्रा स्याज्जतज्गा गुपपूर्विका ॥ १,२०९.८ ॥

उपजातयोऽन्याद्यन्ताः सुमुखी नजजा लगौ ।
भभभा गौ दोधकं स्याच्छालिनी मतता गगौ ॥ १,२०९.९ ॥

अब्धिलोकैश्च विच्छेदो वातोर्म्मो ममता गगौ ।
श्रीर्भतौ ननगाः प्रोक्ता पञ्चभिः षड्भिरेव च ॥ १,२०९.१० ॥

मगना नो गो भ्रमरविलासितमुदाहृतम् ।
रथोद्धतार्नौ रलगाः स्वागता रनभा गगौ ॥ १,२०९.११ ॥

वृत्ता ननौ सगौ गः स्यान्नौ रलौ गः समद्रिका ।
रजरा ल्गौ श्येनिका स्याज्जसता गौ शिखण्डितम् ।
त्रिष्टुप्छन्दः समाख्यातं पिङ्गलेन महात्मना ॥ १,२०९.१२ ॥

रनौ भसौ चन्द्रवर्त्म वंशस्थं स्याज्जतौ जरौ ।
ततो जराविन्द्रवंशा वेदसैस्तोटकं स्मृतम् ।
न्भौ भ्रौ द्रुतविलम्बितं पुटश्च स्यान्ननौ मयौ ॥ १,२०९.१३ ॥

वसुवेदैश्च विरतिर्मुदितवदना त्वियम् ।
ननररैः समाख्याता नयना यस्तथा भवेत् ॥ १,२०९.१४ ॥

सा तु कुसुमविचित्रा जलोद्धतगती रसैः ।
जसौ जसौ च पादेषु चतूरैः स्त्रग्विणी मता ॥ १,२०९.१५ ॥

भुजङ्गप्रयातं वृत्तं चतुर्भिर्यैः प्रकीर्तितम् ।
प्रियंवदा नभज्रैश्च मणिमाला तयौ तयौ ॥ १,२०९.१६ ॥

गुहवक्त्रैश्च सन्निद्रा ललिता स्यात्तभौ जरौ ।
प्रमिताक्षरा सजससैरुज्ज्वला तु ननौ भरौ ॥ १,२०९.१७ ॥

ममौ ययौ वैश्वदेवी पञ्चाश्वैश्च यतिर्भवेत् ।
मभौ समौ जलधरमालाब्ध्यन्त्यैर्यतिभवेत् ॥ १,२०९.१८ ॥

नौ ततौ गः क्षमावृत्तं तुरगैश्च रसैर्यतिः ।
प्रहर्षिणी मनौ ज्रौ गा वह्निभिर्दशभिर्यतिः ॥ १,२०९.१९ ॥

जभौ सजौ गो रुचिरा चतुर्भिश्च ग्रहैर्यतिः ।
मत्तमयूरं मतयाः सगौ देवग्रहैर्यतिः ॥ १,२०९.२० ॥

मञ्जुभाषिणी सज्सा ज्गौ सुनन्दिनी सजसा मगौ ।
ननौ ततौ चन्द्रिका गः सप्तभिश्च रसैर्यतिः ॥ १,२०९.२१ ॥

असम्बाधा मतनसा गगौ बाणग्रहैर्यतिः ।
ननराः सो लधुगुरुः स्वरैः प्रोक्तापराजिता ॥ १,२०९.२२ ॥

ननौ भनौ प्रहरणकलिकेयं लगौ तथा ।
वसन्ततिलका सिंहोन्नता तभ्जा जगौ गुरुः ॥ १,२०९.२३ ॥

भजौ सनौ गगाविन्दुवदनाथ सुकेशरम् ।
नरना रलगाः पादे शर्करी प्रतिपादिता ॥ १,२०९.२४ ॥

चतुर्दशलघुः स्याच्च श्रेष्ठा शशिकला सगा ।
रसग्रहयतिः स्रक्स्रा वसुशैलयतिस्तथा ॥ १,२०९.२५ ॥

स्यान्मणिगुणनिकरो मालिनी ननमा ययौ ।
वसुस्वरयतिः स्याच्च नजौ भज्राः प्रभद्रकम् ॥ १,२०९.२६ ॥

एला सयौ ननौ यःस्याच्चित्रलेखास्वराष्टकैः ।
मरौ मयौ यश्च भवेदुक्तेयमति शर्करी ॥ १,२०९.२७ ॥

स्वरात्खं वृषभगजजृम्भितं भ्रनना नगौ ।
नजभजरा वाणिनी गः पिङ्गलेनाष्टिरीरिता ॥ १,२०९.२८ ॥

रसरुद्रैः शिखरिणी यमौ नसभला गुरुः ।
वसुग्रयतिः पृथ्वी जसौ जसयला गुरुः ॥ १,२०९.२९ ॥

दशस्वरैर्वंशपत्रपतितं भ्रौन्नभा लगौ ।
षड्वेदाश्वैश्च हरिणी नसमा रसला गुरुः ॥ १,२०९.३० ॥

मन्दाक्रान्तब्धिषड्नगैर्मभनास्ततगा गुरुः ।
नर्दटकं नजभजा जलौ गो यतिरेव च ॥ १,२०९.३१ ॥

सप्तर्त्वब्धिः कोकिलकमत्यष्टिः स्याच्च पूर्ववत् ।
भूतर्त्वश्वैः कुसुमितलता म्तौ न्यौ ययौ धृतिः ॥ १,२०९.३२ ॥

रसर्त्वश्वैर्यमौ न्सौ रौ मेघविस्फूर्जिता रगौ ।
शार्दूलविक्रीडितं मः सूर्यश्वैः सज्सतास्तगौ ॥ १,२०९.३३ ॥

छन्दो ह्यतिधृतिः प्रोक्तमत ऊर्ध्वं कृतिर्भवेत् ।
सप्ताश्वर्तुः सुवदना भ्रौ मनौ यभला गुरुः ॥ १,२०९.३४ ॥

वृत्तं रजौ रजौ पादे रजौ गो लः कृतिर्भवेत् ।
त्रिसप्तकैः स्नग्धरा स्यात्प्रकृतिर्म्नभनैस्त्रियैः ॥ १,२०९.३५ ॥

दिगर्कैर्भद्रकं भ्रौ न्रौ नरना गो यथाकृतिः ।
नजौ भश्वाश्वललितं जभौ जभलगा भवेत् ॥ १,२०९.३६ ॥

मत्ताक्रीडञ्चाष्टबाणदशकैर्मौ तनौ ननौ ।
नलौ गुरुश्च विकृतिश्छिन्ना संकृतिरुच्यते ॥ १,२०९.३७ ॥

पञ्चाश्वार्कैर्भतौ तन्वी नसभा भनया गणाः ।
क्रौञ्चपदा बाणशरवसुशैलैर्भमौ सभौ ॥ १,२०९.३८ ॥

नौ नौ गोऽतिकृतिः प्रोक्ता च्छन्दो ह्युत्कृतिरुच्यते ।
वस्वीशाश्वैर्ममतनैः स्याद्भुजङ्गविजृम्भितम् ॥ १,२०९.३९ ॥

ननरसैर्लगयुक्तैश्च अपवाहाख्यकं यतिः ।
गुहैः षड्भी रसैर्बाणैर्मोनाः षट्सगगा गणाः ॥ १,२०९.४० ॥

चण्डवृत्तिप्रपातोऽसौ दण्डको नौ ततोऽगरः ।
रफेवृद्धान्तकादस्य व्यालजीमूतकादयः ॥ १,२०९.४१ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे समवृत्तलक्षणादिनिरूपणं नाम नवोत्तरद्विशततमोऽध्यायः
श्रीगरुडमहापुराणम् २१०
सूत उवाच ।
सससलगाश्च विषमे पादे यद्युपचित्रकम् ।
समे भौ भगगाः स्युश्च द्रुतमध्या भभौ भगौ ॥ १,२१०.१ ॥

गः पादे विषमेऽन्यत्र नजौ ज्यौ च गणौ स्मृतौ ॥ १,२१०.२ ॥

विषमे वेगवती सा गः समे भौ भो गगौ गणाः ।
पादेऽसमे तजौ रो गः समे मसौ जगौ गरुः ।
भवेद्भद्रविराट्केतुमती तु विषमे सजौ ॥ १,२१०.३ ॥

सगौ समे भ्रौ नगगा आख्यानकी त्वथासमे ।
तौ जो गगौ समे पादे जतजा गुरुकद्वयम् ॥ १,२१०.४ ॥

विपरीताख्यानकं स्यादविषमे जस्तजौ गगौ ।
ततौ जगौ समे गः स्यात्पिङ्गलेन ह्युदाहृतम् ॥ १,२१०.५ ॥

पादेऽथ विषमे चैव पुष्पिताग्रा ननौ रयौ ।
समे नजौ जरौ गश्च वैतालीयं वदन्ति हि ।
वृत्तञ्चापरवक्त्राख्यमौपच्छन्दसिकं परम् ॥ १,२१०.६ ॥

वाङ्मती रजरा यः स्यादयुग्मे जरजा रगौ ॥ १,२१०.७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेर्ऽद्धसमवृत्तलक्षणादिनिरूपणं नाम दशोत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २१०
सूत उवाच ।
ससससलगाश्च विषमे पादे यद्युपचित्रकम् ।
समे भौ भगगाः स्युश्च द्रुतमध्या भभौ भगौ ॥ १,२१०.१ ॥

गः पादे विषमेऽन्यत्र नजौ ज्यौ च गणौ स्मृतौ ॥ १,२१०.२ ॥

विषमे वेगवती सा गः समे भौ भो गगौ गणाः ।
पादेऽसमे तजौ रो गः समे मसौ जगौ गरुः ।
भवेद्भद्रविराट्केतुमती तु विषमे सजौ ॥ १,२१०.३ ॥

सगौ समे भ्रौ नगगा आख्यानकी त्वथासमे ।
तौ जो गगौ समे पादे जतजा गुरुकद्वयम् ॥ १,२१०.४ ॥

विपरीताख्यानकं स्याद्विषमे जस्तजौ गगौ ।
ततौ जगौ समे गः स्यात्पिङ्गलेन ह्युदाहृतम् ॥ १,२१०.५ ॥

पादेऽथ विषमे चैव पुष्पिताग्रा ननौ रयौ ।
समे नजौ जरौ गश्च वैतालीयं वदन्ति हि ।
वृत्तञ्चापरवक्त्राख्यमौपच्छन्दसिकं परम् ॥ १,२१०.६ ॥

वाङ्मती रजरा यः स्यादयुग्मे जरजा रगौ ॥ १,२१०.७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेर्ऽद्धसमवृत्तलक्षणादिनिरूपणं नाम दशोत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २११
सूत उवाच ।
प्रथमोऽष्टाक्षरैः पादो द्वितीयो द्वादशाक्षरैः ।
तृतीयः षोडशार्णैश्च विंशद्वर्णैश्चतुर्थकः ॥ १,२११.१ ॥

सामान्यलक्षणं पदचतुरूर्ध्वाभिरधस्य हि ॥ १,२११.१ ॥

आपीडः सर्वलः प्रोक्तः पूर्वपादान्तगद्वयः ॥ १,२११.२ ॥

द्वितीयेऽष्टाक्षरैः पादे कलिका प्रथमेऽकजे ।
लवली स्यात्तृतीयेऽथ पूर्ववच्चाष्ट काक्षरे ।
प्रोक्ता चामृतधारेयं चतुरष्टाक्षरे सति ॥ १,२११.३ ॥

(इति पदचतुरूर्ध्वप्रकरणम्) ।
सजौ सलौ च प्रथमे नसजा गो द्वितीयके ।
तृतीये भनभा गश्च चतुर्थे सजसा जगौ ॥ १,२११.४ ॥

पूर्ववत्स्यात्सौरभकं तृतीयेऽघ्रौ रनौ भगौ ।
ललितञ्चाद्गतावत्स्यातृतीयेंऽघ्रौ ननौ ससौ ॥ १,२११.५ ॥

(इत्युद्गताप्रकरणम्) ।
उपस्थितप्रचुपितं प्रथमेऽघ्रौ मसौ जभौ ।
गौ द्वितीये सनजरा गस्तृतीये ननौ च सः ।
नौ नजौ यश्चतुर्थे स्याच्छेष पादाश्च पूर्ववत् ॥ १,२११.६ ॥

तृतीर्येऽघ्रौ विशेषश्च वृत्तं स्यान्नौ सनौ नसौ ॥ १,२११.७ ॥

आर्षभं तजराः पादे तृतीयेऽन्यच्च पूर्ववत् ।
पूर्ववत्प्रथमं शेषे तज्राः शुद्धविराड्भवेत् ॥ १,२११.८ ॥

(इत्युपस्थितप्रचुपितप्रकरणम्) ।
विषमाक्षरपादं वा पञ्चषट्कादि यावकम् ।
छन्दोऽत्र नोक्ता गाथेति दशधर्मादिवद्भवेत् ॥ १,२११.९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विषमवृत्तलक्षणादिनिरूपणं नामैकादशोत्तरद्विशशततमोऽध्यायः

श्रीगरुडमहापुराणम् २१२
सूत उवाच ।
प्रस्तार आद्यगोऽथो लः परतुल्योऽथ पूर्वगः ।
नष्टमध्ये समेंऽके लः समेऽर्धे विषमे गुरुः ॥ १,२१२.१ ॥

प्रतिलोमगुणं लाद्यं द्विरुद्दिष्टक एकनुत् ॥ १,२१२.२ ॥

संख्या द्विरर्धे रूपे तु शून्यं शून्ये द्विरीरितम् ।
तावदर्धे तद्गुणितं द्विर्द्व्यूनन्तु तदन्ततः ॥ १,२१२.३ ॥

परे पूर्णं परे पूर्णं मेरुः प्रस्तारतो भवेत् ॥ १,२१२.४ ॥

लगसंख्या वृत्तसंख्या चाद्याङ्गुलमथोर्ध्वतः ।
संख्यैव द्विगुणैकोनाच्छन्दः सारोऽयमीरितः ॥ १,२१२.५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमानाचा छन्दोलक्षणं नाम द्वादशोत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २१३

सूत उवाच ।

हरेः श्रुत्वाब्रवीद्ब्रह्मा यथा व्यासाय शौनक ।
ब्राह्मणादिसमाचारं सर्वदं ते तथा वदे ॥ १,२१३.१ ॥

श्रुतिस्मृती तु विज्ञाय श्रौतं कर्म समाचरेत् ।
श्रौतं कर्म न चेदुक्तं तदा स्मार्तं समाचरेत् ॥ १,२१३.२ ॥

तत्राप्यशक्तः करणे सदाचारं चरेद्वुधः ।
श्रुतिस्मृती ह विप्राणां लोचने कर्मदर्शने ॥ १,२१३.३ ॥

श्रुत्युक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः ।
सिष्टाचारेण संप्राप्तस्त्रयो धर्माः सनातनाः ॥ १,२१३.४ ॥

सत्यं दानं दयालोभो विद्येज्या पूजनं दमः ।
अष्टौ तानि पवित्राणि शिष्टाचारस्य लक्षणम् ॥ १,२१३.५ ॥

तेजोमयानि पूर्वेषां शरीराणीन्द्रियाणि च ।
न लिप्यते पातकेन पद्मपत्रमिवाम्भसा ॥ १,२१३.६ ॥

निवासमुख्या वर्णानां धर्माचाराः प्रकीर्तिताः ।
सत्यं यज्ञस्तपो दानमेतद्धर्मस्य लक्षणम् ॥ १,२१३.७ ॥

अदत्तस्यानुपादानं दानमध्ययनं जपः ।
विद्या वित्तं तपः शौचं कुले जन्म त्वरोगिता ॥ १,२१३.८ ॥

संसारोच्छित्तिहेतुश्च धर्मादेव प्रवर्तते ।
धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥ १,२१३.९ ॥

इज्याध्ययनदानानि यथाशास्त्रं सनातनः ।
ब्रह्मक्षत्त्रियवैश्यानां सामान्यो धर्म उच्यते ॥ १,२१३.१० ॥

याजनाध्ययने शुद्धे विशुद्धाच्च प्रतिग्रहः ।
वृत्तित्रयमिदं प्राहुर्मुनयः श्रेष्ठवर्णिनः ॥ १,२१३.११ ॥

शस्त्रेणाजीवनं राज्ञो भूतानाञ्चाभिरक्षणम् ।
पाशुपाल्यं कृषिः पण्यं वैश्यस्याजीवनं स्मृतम् ॥ १,२१३.१२ ॥

शूद्रस्य द्विजशुश्रूषा द्विजानामनुपूर्वशः ।
गुरौ वासोऽग्निशुश्रूषा स्वाध्यायो ब्रह्मचारिणः ॥ १,२१३.१३ ॥

त्रिः स्नाता स्नापिता भैक्ष्यं गुरौ प्राणान्तिकी स्थितिः ।

समेखलो जटी दण्डी मुण्डी वा गुरुसंश्रयः ॥ १,२१३.१४ ॥

अग्निहोत्रोपचरणं जीवनं च स्वकर्मभिः ।
धर्मदारेषु कल्पेत पर्ववर्जं रतिक्रियाः ॥ १,२१३.१५ ॥

देवपित्रतितिभ्यश्च पूजादिष्वनुकल्पनम् ।
श्रुतिस्मृत्यर्थसंस्थानं धर्मोऽयं गृहमेधिनः ॥ १,२१३.१६ ॥

जटित्वमग्निहोत्रत्वं भूशय्याजिनधारणम् ।
वने वासः पयोमूलनीवारफलवृत्तिता ॥ १,२१३.१७ ॥

प्रतिषिद्धान्निवृत्तिश्च त्रिः स्नानं व्रतधारिता ।
देवतातिथिपूजा च धर्मोऽयं वनवासिनः ॥ १,२१३.१८ ॥

सर्वारम्भपरित्यागो भिक्षान्नं वृक्षमूलता ।
निष्परिग्रहताद्रोहः समता सर्वजन्तुषु ॥ १,२१३.१९ ॥

प्रियाप्रियपरिष्वङ्गेसुखदुः खाधिकारिता ।
सबाह्याभ्यन्तरे शौचं वाग्यमो ध्यानचारिता ॥ १,२१३.२० ॥

सर्वैद्रियसमाहारो धारणाध्याननित्यता ।
भावसंशुद्धिरेत्येष परिव्राड्धर्म उच्यते ॥ १,२१३.२१ ॥

अहिंसा सूनृता वाणी सत्यशौचे क्षमा दया ।
वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते ॥ १,२१३.२२ ॥

यथोक्तकारिणः सर्वे प्रयान्ति परमां गतिम् ।
आ बोधात्स्वपनं यावत्गृहिधर्मं च वच्मि ते ॥ १,२१३.२३ ॥

ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥ १,२१३.२४ ॥

शर्वर्यन्ते समुत्थाय कृतशौचः समाहितः ।
स्नात्वा सन्ध्यामुपासीत सर्वकालमतन्द्रितः ॥ १,२१३.२५ ॥

प्रातः सन्ध्यामुपा सीत दन्तधावनपूर्विकाम् ।
उभे मूत्रपुरीषे च दिवा कुर्यादुदङ्मुखः ॥ १,२१३.२६ ॥

रात्रौ च दक्षिणे कुर्यादुभे सन्ध्ये यथा दिवा ।
छायायामन्धकारे वा रात्रौ वाहनि वा द्विजः ॥ १,२१३.२७ ॥

यथा तु समुखः कुर्यात्प्राणबाधाभयेषु च ।

गोमयाङ्गारवल्मीकफालाकृष्टे शुभे ॥ १,२१३.२८ ॥

मार्गोपजीव्यच्छायासु न मूत्रं च पुरीषकम् ।
अन्तर्जलाद्देवगृहाद्वल्मीकान्मूषिकस्थलात् ॥ १,२१३.२९ ॥

परेषां शौचशिष्टाच्च श्मशानाच्च मृदं त्यजेत् ।
एकां लिङ्गे मृदं दद्याद्वाम हस्ते मृदं द्विधा ॥ १,२१३.३० ॥

उभयोर्द्वे च दातव्ये मूत्रशौचं प्रचक्षते ।
एकां लिङ्गे गुदे तिस्त्रस्तथा वामकरे दश ॥ १,२१३.३१ ॥

पञ्च पादे दशैकस्मिन्करयोः सप्तमृत्तिकाः ।
अर्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ॥ १,२१३.३२ ॥

द्वितीया च तृतीया च तदर्धा परिकीर्तिता ।
उपविष्टस्तु विण्मूत्रं कर्तुं यस्तु न विन्दति ॥ १,२१३.३३ ॥

स कुर्यादर्धशौचं तु स्वस्य शौचस्य सर्वदा ।
दिवा शौचस्य रात्र्यर्धं यद्वा पादो विधीयते ॥ १,२१३.३४ ॥

स्वस्थस्य तु यथोद्दिष्टमार्तः कुर्याद्यथाबलम् ।
वसा शुक्रमसृङ्मज्जा लाला विण्मूत्रकर्णविट् ॥ १,२१३.३५ ॥

श्लेष्माश्रदूषिका स्वेदो द्वादशैते नृणां मलाः ।
मन्येत यावता शुद्धिं तावच्छौचं समाचरेत् ॥ १,२१३.३६ ॥

प्रमाणं शौचसंख्याया नादिष्टैरवशिष्यते ।
शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ॥ १,२१३.३७ ॥

मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिरथान्तरम् ।
त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम् ॥ १,२१३.३८ ॥

संमृज्याङ्गुष्ठमूलेन त्रिभिरास्यमुपस्पृशेत् ।
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ॥ १,२१३.३९ ॥

अङ्गुष्ठानामिकाभ्यां च चक्षुः श्रोत्रे पुनः पुनः ।
कनिष्ठाङ्गष्ठयोर्नाभिं हृदयं तु तलेन वै ॥ १,२१३.४० ॥

सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ।
ऋचो यजूंषि सामानि त्रिः पठन्प्रीणयेत्क्रमात् ॥ १,२१३.४१ ॥

अथर्वाङ्गिरसौ पूर्वं द्विः प्रमार्ष्ट्यथ तन्सुखम् ।

इतिहासपुराणानि वेदाङ्गानि वेदाङ्गानि यथाक्रमम् ॥ १,२१३.४२ ॥

खं मुखे नासिके वायुं नेत्रे सूर्यं श्रुती (तीर्दि) दिशः ।
प्राणग्रन्थिमथो नाभिं ब्रह्माणं हृदये स्पृशेत् ॥ १,२१३.४३ ॥

रुद्रं मूर्ध्ना समालभ्य प्रीणात्यथ शिखामृषीन् ।
बाहू यमेन्द्रवरुणकुबेरवसुधानलान् ॥ १,२१३.४४ ॥

अभ्युक्ष्य चरणौ विष्णुमिन्द्रं विष्णु करद्वयम् ।
अग्निर्वायुश्च सूर्येन्दुगिरयोऽङ्गुलिपर्वसु ॥ १,२१३.४५ ॥

गङ्गाद्याः सरितस्तासु या रेखाः करमध्यगाः ।
उषः काले तु संप्राप्ते शौचं कृत्वा यथार्थवत् ॥ १,२१३.४६ ॥

ततः स्नानरं प्कुर्वीत दन्तधावनपूर्वकम् ।
मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ॥ १,२१३.४७ ॥

तस्मात्सर्वप्रयत्नेन कुर्याद्वै दन्तघावनम् ।
कदम्बबिल्वखदिरकरवीरवटार्जुनाः ॥ १,२१३.४८ ॥

यूथी च बृहती जाती करञ्जार्कातिमुक्तकाः ।
जम्बूमधूका पामार्गशिरीषोदुम्बरासनाः ॥ १,२१३.४९ ॥

क्षीरिकण्टकिवृक्षाद्याः प्रशस्ता दन्तधावने ।
कटुतिक्तकषायाश्च धनारोग्यसुखप्रदाः ॥ १,२१३.५० ॥

प्रक्षाल्य भुक्त्वा च शुचौ देशे त्यक्त्वा तदाचामेत् ।
अमायां च तथा षष्ठ्यां नवम्यां प्रतिपद्यपि ॥ १,२१३.५१ ॥

वर्जयेद्दन्तकाष्ठन्तु तथैवार्कस्य वासरे ।
अभावे दन्त काष्ठस्य निषिद्धायां तथा तिथौ ॥ १,२१३.५२ ॥

अषां द्वादशगण्डूषैः कुर्वीत मुखशोधनम् ।
प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टकरं हितम् ॥ १,२१३.५३ ॥

सर्वमर्हति शुद्धात्मा प्रातः स्नायी जपादिकम् ।
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ॥ १,२१३.५४ ॥

स्त्रवत्येष दिवा रात्रौ प्रातः स्नानं विशोधनम् ।
मनः प्रसादजननं रूपसौभाग्यवर्धनम् ॥ १,२१३.५५ ॥

शोकदुः खप्रशमनं गङ्गास्नानवदाचरेत् ।

अद्य हस्ते तु नक्षत्रे दशम्यां ज्येष्ठके सिते ॥ १,२१३.५६ ॥

दशपाप हरायां च अदत्वा दानकल्मषम् ।
विरुद्धाचरणं हिंसा परदारोपसेवनम् ॥ १,२१३.५७ ॥

पारुष्यानृतपैशुन्यमसम्बद्धाभिभाषणम् ।
परद्रव्याभिधानं च मनसानिष्टचिन्तनम् ॥ १,२१३.५८ ॥

एतद्दशाघघातार्थं गङ्गास्नानं करोम्यहम् ।
प्रातः संक्षेपतः स्नानं वानप्रस्थगृहस्थयोः ॥ १,२१३.५९ ॥

यतेस्त्रिषवणं स्नानं सकृत्त ब्रह्मचारिणः ।
आचम्य तीर्थमावाह्य स्नायात्स्मृत्वाव्ययं हरिम् ॥ १,२१३.६० ॥

तिस्रः कोट्यस्तु विज्ञेया मन्देहा नाम राक्षसाः ।
उदयन्तं दुरात्मानः सूर्यमिच्छन्ति खादितुम् ॥ १,२१३.६१ ॥

स हन्ति सूर्यं सन्ध्यायां नोपास्तिं कुरुते तु यः ।
दहन्ति मन्त्रपूतेन तोयेनानलरूपिणा ॥ १,२१३.६२ ॥

अहोरात्रस्य यः सन्धिः सा सन्ध्या भवतीति ह ।
द्विनाडिका भवेत्सन्ध्या यावद्भवति दर्शनम् ॥ १,२१३.६३ ॥

गन्ध्याकर्मावसाने तु स्वयं होमो विधीयते ।
स्वयं होमफलं यत्तु तदन्येन न जायते ॥ १,२१३.६४ ॥

ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि ॥ १,२१३.६५ ॥

ब्रह्मा वै गार्हपत्याग्निर्दक्षणाग्निस्त्रिलोचनः ।
विष्णुराहवनीयाग्निः कुमारः सत्य उच्यते ॥ १,२१३.६६ ॥

कृत्वा होमं यथाकालं सौरान्मन्त्राञ्जपेत्ततः ।
समाहितात्मा सावित्रीं प्रणवं च यथोदितम् ॥ १,२१३.६७ ॥

प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु ।
त्रिपदायां च सावित्र्यां न भयं विद्यते क्वचित् ॥ १,२१३.६८ ॥

गायत्रीं यो जपेन्नित्यं कल्यमुत्थाय मानवः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १,२१३.६९ ॥

श्वेतवर्णा समुद्दिष्टा कौशैयवसना तथा ।

अक्षसूत्रधरा देवी पद्मासनगता शुभा ॥ १,२१३.७० ॥

आवाह्य यजुपानेन तेजोऽसीति विधानतः ।
एतद्यजुः पुरा दैवैर्दृष्टिदर्शनकाङ्क्षिभिः ॥ १,२१३.७१ ॥

आदित्यमण्डलान्तः स्थां ब्रह्मलोकस्थितामपि ।
तत्रावाह्य जपित्वातो नमस्काराद्विसर्जयेत् ॥ १,२१३.७२ ॥

पूर्वाह्न एव कुर्वीत देवतानां च पूजनम् ।
न विष्णोः परमो देवस्तस्मात्तं पूजयेत्सदा ॥ १,२१३.७३ ॥

ब्रह्मविष्णुशिवान्देवान्न पृथग्भावयेत्सुधीः ।
लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ॥ १,२१३.७४ ॥

हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ।
एतानि सततं पश्येदर्चयेच्च प्रदक्षिणम् ॥ १,२१३.७५ ॥

वेदस्याध्ययनं पूर्वं विचारोभ्यसनं जपः ।
तद्दानं चैव शिष्यभ्यो वेदाभ्यासो हि पञ्चधा ॥ १,२१३.७६ ॥

वेदार्थं यज्ञशास्त्राणि धर्मशास्त्राणि चैव हि ।
मूल्येन लेखयित्वा यो दद्याद्याति स वैदिकम् ॥ १,२१३.७७ ॥

इतिहा सपुराणानि लिखित्वायः प्रयच्छति ।
ब्रह्मदानसमं पुण्यं प्राप्नोति द्विगुणीकृतम् ॥ १,२१३.७८ ॥

मृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ।
माता पिता गुरुर्भ्राता प्रजा दीनाः समाश्रिताः ॥ १,२१३.७९ ॥

अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गा उदाहृतः ।
भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ॥ १,२१३.८० ॥

भरणं पोष्य वर्गस्य तस्माद्यत्नेन कारयेत् ।
स जीवति वरश्चैको बहुभिर्योपजीव्यति ॥ १,२१३.८१ ॥

जीवन्तो मृतकास्त्वन्ये पुरुषाः स्वोदरम्भराः ।
स्वकीयोदरपूर्तिश्च कुक्कुरस्यापि विद्यते ॥ १,२१३.८२ ॥

अर्थेभ्योऽपि विवृद्धेभ्यः सम्भूतेभ्यस्ततस्ततः ।
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ १,२१३.८३ ॥

सर्वरत्नाकरा भूमिर्धान्यानि पशवः स्त्रियः ।

अर्थस्य कार्ययोगित्वादर्थ इत्यभिधीयते ॥ १,२१३.८४ ॥

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥ १,२१३.८५ ॥

धनं तु त्रिविधं ज्ञेयं शुक्लं शबलमेव च ।
कृष्णं च तस्य विज्ञेयो विभागः सप्तधा पृथक् ॥ १,२१३.८६ ॥

क्रमायत्तं प्रीतिदत्तं प्राप्तं च सह भार्यया ।
अविशेषेण सर्वेषां वर्णानां त्रिविधं धनम् ॥ १,२१३.८७ ॥

वैशेषिकं धनं दृष्टं ब्राह्मणस्य त्रिलक्षणम् ।
याजनाध्यापने नित्यं विशुद्धश्च (द्धाच्च) प्रतिग्रहः ॥ १,२१३.८८ ॥

त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम् ।
शुद्धार्थं लब्धकरजं दण्डाप्तं जयजं तथा ॥ १,२१३.८९ ॥

वैशेषिकं धनं दृष्टं वैश्यस्यापि विलक्षणम् ।
कृषिगोरक्षवाणिज्यं शूद्रस्यैभ्यस्त्वनुग्रहात् ॥ १,२१३.९० ॥

कुसीदकृषिवाणिज्यं प्रकुर्वीत स्वयं परम् (कृतम्) ।
आपत्काले स्वयं कुर्वन्नैनसा युज्यते द्विजः ॥ १,२१३.९१ ॥

बहवो वर्तनोपाया ऋषिभिः परिकीर्तिताः ।
सर्वेषामपि चैवैषां कुसीदमधिकं विदुः ॥ १,२१३.९२ ॥

अनावृष्ट्या राजभयान्मूषिकाद्यैरुपद्रवैः ।
कृष्यादिके भवेद्बाधा सा कुसीदे न विद्यते ॥ १,२१३.९३ ॥

शुक्लपक्षे तथा कृष्णे रजन्यां दिवसेपि वा ।
उष्णे वर्षति शीते वा वर्धनं न निवर्तते ॥ १,२१३.९४ ॥

देशं गतानां या वृद्धिर्नानापण्योपजीविनाम् ।
कुसीदं कुर्वतः सम्यक्संस्थितस्यैव जायते ॥ १,२१३.९५ ॥

लब्धलाभः पितॄन्देवान्ब्राह्मणांश्चैव पूजयेत् ।
ते तृप्तास्तस्य तद्दोषं शमयन्ति न संशयः ॥ १,२१३.९६ ॥

वणिक्कुसीदं दद्याद्यो वस्त्रं गाङ्काञ्चनादिकम् ।
कृषीवलोऽन्नपानादियानशय्यासनानि च ॥ १,२१३.९७ ॥

राजभ्यो विंशतिं दत्त्वा पशुस्वर्णादिकं शतम् ।

पादेनास्य च यावक्यं कुर्यात्संचयमात्मवान् ॥ १,२१३.९८ ॥

अर्धेन चात्मभरणं नित्यनैमित्तिकांन्वितम् ।
पादं चेत्यर्थयामस्य मूलभूतं विवर्धयेत् ॥ १,२१३.९९ ॥

विद्या शिल्पं भूतिः सेवा गोरक्षा विपणिः कृषिः ।
वृत्तिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः ॥ १,२१३.१०० ॥

प्रतिग्रहार्जिता विप्रे क्षत्रिये शस्त्रनिर्जिता ।
वैश्ये न्यायार्जिताः स्वार्थाः शूद्रे शुश्रूषयार्जिताः ॥ १,२१३.१०१ ॥

नदी बहूदका शाकमृत्पर्णानि समित्कुशाः ।
आग्नेयो ब्रह्मघोषश्च विप्राणां धनमुत्तमम् ॥ १,२१३.१०२ ॥

अयाचितोपपन्ने तु नास्ति दोषः प्रतिग्रहे ।
अमृतं तद्विदुर्देवास्तस्मात्तन्नैव वर्जयेत् ॥ १,२१३.१०३ ॥

गुरुद्रव्यांश्चौज्जिहीर्षुरर्चिष्यन्दे वतातिथीन् ।
सर्वतः प्रतिगृह्णीयान्न तुष्येत्तु स्वयं ततः ॥ १,२१३.१०४ ॥

साधुतः प्रतिगृह्णीयादथ वासाधुतो द्विजः ।
गुणवानल्पदोषश्च निर्गुणो हि निमज्जति ॥ १,२१३.१०५ ॥

एवं त्वक्षवृत्त्या वा कृत्वा भरणमात्मनः ।
कुर्याद्विशुद्धिं परतः प्रायश्चित्तं द्विजोत्तमः ॥ १,२१३.१०६ ॥

चतुर्थे च तथा भागे स्नानार्थं मृद माहरेत् ।
तिलपुष्पकुशादीनि स्नानं चाकृत्रिमे जले ॥ १,२१३.१०७ ॥

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
मार्जनाचमावगाहाश्चाष्टस्नानं प्रकीर्तितम् ॥ १,२१३.१०८ ॥

अस्नातस्तु पुमान्नार्हे जपाग्निहवनादिषु ।
प्रातः स्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम् ॥ १,२१३.१०९ ॥

चाण्डालशवविष्ठाद्यान्स्पृष्ट्वा स्नानं रजस्वलाम् ।
स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत् ॥ १,२१३.११० ॥

पुष्यस्नानादिकं स्नानं दैवज्ञविधिचोदितम् ।
तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत् ॥ १,२१३.१११ ॥

जप्तुकामः पवित्राणि अर्चिष्यन्देवतातिथीन् ।

स्नानं समाचरेद्यस्तु क्रियाङ्गं तच्च कीर्तितम् ॥ १,२१३.११२ ॥

मलापकर्षणार्थाय प्रवृत्तिस्तत्र नान्यथा ।
सरः सुदेवखातेषु तीर्थेषु च नदीषु च ॥ १,२१३.११३ ॥

स्नानमेव क्रिया यस्मात्क्रियास्नानमतः परम् ।
अद्भिर्गात्राणि शुध्यन्ति तीर्थस्नानात्फलं लभेत् ॥ १,२१३.११४ ॥

मार्जनान्मज्जनैर्मन्त्रैः पापमाशु प्रणश्यति ।
नित्यं नैमित्तिकं चापि क्रियाङ्गं मलकर्षणम् ॥ १,२१३.११५ ॥

तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः ।
भूमिष्ठादुद्धृतं पुण्यं ततः प्रस्त्रवणोदकम् ॥ १,२१३.११६ ॥

ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते ।
तीर्थतोयं ततः पुण्यं गागं पुण्यं तु सर्वतः ॥ १,२१३.११७ ॥

गागं पयः पुनात्याशु पापमामरणान्तिकम् ।
गयायां च कुरुक्षेत्रे यत्तोयं समुपस्थितम् ॥ १,२१३.११८ ॥

तस्मात्तु गाङ्गमपरं जानीयात्तोयमुत्तमम् ।
पुत्रजन्मनि योगेषु तथा संक्रमणे रवेः ॥ १,२१३.११९ ॥

राहोश्च दर्शने स्नानं प्रशस्तं निशि नान्यथा ।
उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ ॥ १,२१३.१२० ॥

प्राजापत्येन तत्तुल्यं महापातकनाशनम् ।
यत्फलं द्वादशाब्दानि प्राजापत्ये कृते भवेत् ॥ १,२१३.१२१ ॥

प्रातः स्नायी तदाप्नोति वर्षेण श्रद्धयान्वितः ।
य इच्छेद्विपुलान् भोगांश्चन्द्रसूर्यग्रहोपमान् ॥ १,२१३.१२२ ॥

प्रातः स्नायी भवेन्नित्यं मासौ द्वौ माघफाल्गुनौ ।
यस्तु माघं समासाद्य प्रातः स्नायी हविष्यभुक् ॥ १,२१३.१२३ ॥

इतिपापं महाघोरं मासादेव व्यपोहति ।
मातरं पितरं वापि भ्रातरं सुहृदं गुरुम् ॥ १,२१३.१२४ ॥

यमुद्दिश्य निमज्जेत द्वादशांशं लभेत्तु सः ।
तुष्यत्यामलकैर्विष्णुरेकादश्या विशेषतः ॥ १,२१३.१२५ ॥

श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः ।

सन्तापः कीर्तिरल्पायुर्धनं निधनमेव च ॥ १,२१३.१२६ ॥

आरोग्यं सर्वकामाप्तिरभ्यङ्गाद्भास्करादिषु ।
उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः ॥ १,२१३.१२७ ॥

तावच्छ्रीस्तिष्ठति प्रीता यावत्तैलं न संस्पृशेत् ।
एवं स्नात्वा पितॄन्देवान्मनुष्यांस्तर्पयेन्नरः ॥ १,२१३.१२८ ॥

नाभिमात्रे जले स्थित्वा चिन्तयेदूर्जमानसः ।
आगच्छन्तु मे पितर इमं गृह्णन्त्वपोञ्जलिम् ॥ १,२१३.१२९ ॥

त्रींस्त्रीनेवाञ्जलीन्ददद्यादाकाशे दक्षिणे तथा ।
वसित्वा वसनं शुष्कं स्थलस्था स्तर्णबर्हिषि ॥ १,२१३.१३० ॥

विधिज्ञास्तर्पणं कुर्युर्न पात्रे तु कदाचन ।
यदपां क्रूरमांसात्तु यदमेध्यं तु किञ्चन ॥ १,२१३.१३१ ॥

अशान्तं मलिनं यच्च तत्सर्वमपगच्छतु ।
गृहीत्वानेन मन्त्रेण तोयं सव्येन पाणिना ॥ १,२१३.१३२ ॥

प्रक्षिपोद्दिशि नैरृत्यां रक्षोऽपहतये तु तत् ।
निषिद्धभक्षणाद्यत्तु पापाद्यच्च प्रतिग्रहात् ॥ १,२१३.१३३ ॥

दुष्कृतं यच्च मे किञ्चिद्बाङ्मनः कायकर्मभिः ।
पुनातु मे तदिन्द्रस्तु वरुणः सबृहस्पतिः ॥ १,२१३.१३४ ॥

सविता च भगश्चैव मुनयः सनकादयः ।
आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति ब्रुवन् ॥ १,२१३.१३५ ॥

क्षिपेदबञ्जलींस्त्रीस्तु कुर्वन्संक्षेपतर्पणम् ।
सुराणामर्चनं कुर्याद्ब्रह्मा दीनाममत्सरी ॥ १,२१३.१३६ ॥

ब्राह्मवैष्णवरौद्रैश्च सावित्रैर्मैत्रवारुणैः ।
तल्लिङ्गैरर्चयेन्मन्त्रैः सर्वदेवान्नमस्य च ॥ १,२१३.१३७ ॥

नमस्कारेण पुष्पाणि विन्यसेत्तु पृथक्पृथक् ।
सर्वदेवमयं विष्णुं भास्करं चाप्यथार्चयेत् ॥ १,२१३.१३८ ॥

दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्चितं स्याज्जगादिदं तेन सर्वं चराचरम् ॥ १,२१३.१३९ ॥

अन्यैश्च तान्त्रिकैर्मन्त्रैः पूजयेच्च जनार्दनम् ।

आदावर्घ्यं प्रदातव्यं ततः पश्चाद्विलेपनम् ॥ १,२१३.१४० ॥

ततः पुष्पाञ्जलिं धूपमु पहारफलानि च ।
स्नानमन्तर्जले चैव मार्जनाचमनं तथा ॥ १,२१३.१४१ ॥

जलाभिमन्त्रणं यच्च तीर्थस्य परिकल्पयेत् ।
अघमर्षणसूक्तेन त्रिवारं त्वेव नित्यशः ॥ १,२१३.१४२ ॥

स्नाने चरितमित्येतत्समुद्दिष्टं महात्मभिः ।
ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते ॥ १,२१३.१४३ ॥

तूष्णीमेव तु शूद्रस्य सनमस्कारकं स्मृतम् ।
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ॥ १,२१३.१४४ ॥

होमो दैवी बलिर्भौतो न यज्ञोऽतिथिपूजनम् ।
गवा गोष्ठे दशगुणं अग्न्यगारे शताधिकम् ॥ १,२१३.१४५ ॥

सिद्धक्षेत्रेषु तीर्थेषु देवतायतनेषु च ।
सहस्रशतकोटीनामनन्तं विष्णुसन्निधौ ॥ १,२१३.१४६ ॥

पञ्चमे च तथा भागे संविभागो यथार्थतः ।
पितृदे वमनुष्याणां कोटीनां चोपदिश्यते ॥ १,२१३.१४७ ॥

ब्राह्मणेभ्यः प्रदायाग्र यः सुहृद्भिः सहाश्नुते ।
स प्रेत्य लभते स्वर्गमन्नदानं समाचरन् ॥ १,२१३.१४८ ॥

पूर्वं मधुरमश्नीयाल्लवणाम्लौ च मध्यतः ।
कटुतिक्तकषायांश्च पयश्चैव तथान्ततः ॥ १,२१३.१४९ ॥

शाकं च रात्रौ भूमिष्ठमत्यन्तं च विवर्जयेत् ।
नचैकरससेवायां प्रसज्जेत कदाचन ॥ १,२१३.१५० ॥

समृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् ॥ १,२१३.१५१ ॥

अमावासी वसेदत्र एकहायनमेव वा ॥ १,२१३.१५२ ॥

तत्र श्रीश्चैव लक्ष्मीश्च वसते नात्र संशयः ।
उदरे गार्हपत्याग्निः पृष्ठदेशे तु दक्षिणः ॥ १,२१३.१५३ ॥

आस्ये चाहवनीयोऽग्निः सत्यः पर्व च मूर्धनि ।
यः पञ्चाग्नीनिमान्वेद आहिताग्निः स उच्यते ॥ १,२१३.१५४ ॥

शरिरमापः सोमं च विविधं चान्नमुच्यते ।
प्राणो ह्यग्निस्तथादित्यस्त्रिभोक्ता एक एव तु ॥ १,२१३.१५५ ॥

अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च ।
भवत्येतत्परिणतौ ममाप्यव्याहतं सुखम् ॥ १,२१३.१५६ ॥

हस्तेन परिमार्ज्याथ कुर्यात्ताम्बूलभक्षणम् ।
श्रवणं चेतिहासस्य तत्कुर्यात्सुसमाहितः ॥ १,२१३.१५७ ॥

इतिहासपुराणाद्यैः षष्ठसप्तमकेनयेत् ।
ततः सन्ध्यामुपासीत स्नात्वा वै पश्चिमां नरः ॥ १,२१३.१५८ ॥

एतद्वा दिवसे प्रोक्तमनुष्ठानं मया द्विज ।
आचारं यः पठेद्विद्वाञ्छृणुयात्स दिवंव्रजेत् ।
आचारादिर्धर्मकर्ता केशवो हि स्मृतो द्विज ॥ १,२१३.१५९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पञ्चोत्तरद्विशततमोऽध्यायः

ब्रह्मोवाच ।
अथ स्नानविधिं वक्ष्ये स्नानमूला क्रिया यतः ।
मृद्गोमयतिलान्दर्भान्पुष्पाणि सुरभीणि च ॥ १,२१४.१ ॥

आहरेत्स्नानकाले च स्नानार्थो प्रयतः शुचिः ।
गन्धोदकान्तं विविक्ते (धं) स्थापयेत्तान्यथ क्षितौ ॥ १,२१४.२ ॥

त्रिधा कृत्वा मृदं तां तु गोमयं च विचक्षणः ।
अद्भिर्मृद्भिश्च चरणौ प्रक्षाल्याथ करौ तथा ॥ १,२१४.३ ॥

उपवीती बद्धशिखः सम्यगाचम्य वाग्यतः ।
उरुं राजेत्यृचा तोयमुपस्थाय प्रदक्षिणम् ॥ १,२१४.४ ॥

आवर्तयेत्तदुदकं ये ते शतमितित्र्यृचा ॥ १,२१४.५ ॥

ओं उरुं हि राजा वरुणश्चकार सूर्याय पन्थानमन्वेत वा ।
प्रतिधाता च वक्तारस्ताहृदयाविपश्चित् ।
नमोऽग्न्यरुणाया भिष्टुतोवरुणस्य पाशः ।
वरुणाय नमः ॥ १,२१४.६ ॥

ओं ये ते शतं वरुणये सहस्रं यज्ञियाः पाशा वितता महान्तः ।
तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ।
सुमित्रियान इत्यबञ्जलिमाकृत्योत्तरेण तोयं पश्चाद्विराज्य चैव विनिः क्षिपेत् ।
ओं सुमित्रिया न आप ओषधयः सन्तु ।
दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः ॥ १,२१४.७ ॥

पादौ कटिं चैव पूर्वं मृद्भिस्त्रिभिस्त्रिभिः ।
प्रक्षाल्य हस्ता वाचम्य नमस्कृत्य जलं ततः ॥ १,२१४.८ ॥

ओं इदं विष्णुर्विचक्रमे त्रेधा निधे पदं समूढमस्य पांसुरे ।
महाव्याहृतिभिः पश्चादाचामेत्प्रयतोऽपि सन् ॥ १,२१४.९ ॥

मार्जयेद्वै मृदाङ्गानि इदं विष्णुरिति त्वृचा ।
भास्कराभिमुखो मज्जेदापो अस्मानितित्यृचा ॥ १,२१४.१० ॥

ओं आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतष्वः पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूत एमि ॥ १,२१४.११ ॥

ततोऽवघृष्य पात्राणि निमज्योन्मज्य वै शनैः ।
गोमयेन विलिप्याथ मानस्तोक इत्यृचा ॥ १,२१४.१२ ॥

ओं मानस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।
मा नो वीरान्रुद्रभामिनोऽबधीर्हविष्मन्तः सदमित्वा हवामहे ॥ १,२१४.१३ ॥

ततोऽभिषिञ्चेन्मन्त्रैस्तु वरुणैस्तु यथाक्रमम् ।
इमंमे वरुणे द्वाभ्यां त्वन्नः सत्वन्न इत्यपि ॥ १,२१४.१४ ॥

आपो त्वन्तुमसीति च मुञ्चन्त्ववभृतेति च ।
ओं इमंमे वरुण श्रुधीहवमद्या च मृडयत्वा मवस्युराचके ॥ १,२१४.१५ ॥

ओं तत्त्वयामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशं समान आयुः प्रमोषीः ।
ओं त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसिप्रमुमुग्ध्यस्मत्स्वाहा ।
ओं स त्वन्नो अग्नेवमो भवती नेदिष्ठो अस्या उषसोव्युष्टौ ।
अवयक्ष्वनो वरुणं रराणो वीहिमृडीकं सुहवो न एधि ।
ओं आपो नौषधि हिंसार्धम्नो राजस्ततो वरुणो नोमुञ्चा यदाहरघ्न्या इति वरुणेति शपार्महे ततो वरुण नो मुञ्च ।
ओं उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमंश्रथाय ।
अथावयमादित्यव्रते तवानागसो अदितये स्याम ।
मुञ्चन्तुमामप्यथाद्वरुणस्य त्वत् ।
अहो यमस्य पत्नीमानः सर्वस्मादेव किल्बिषात् ।
अवभृथनिचं पुनर्विचेरुसि नित्यं प्रन्नः ।
अवदेवैर्देवकृता मनोयासि समवत्यै कृतं पुष्पाच्छा देवधीमल्पाही ॥ १,२१४.१६ ॥

अभिषिच्य तथात्मानं निमज्याचम्य वै पुनः ।
दर्भेण पाययेन्मन्त्रैरलिङ्गैः पावनैरिमैः ॥ १,२१४.१७ ॥

आपोहिष्ठेति तिसृभिरिदमापो हविष्मतीः ।
देवीराप इति द्वाभ्यां आपोदेवा इति त्र्यृचा ॥ १,२१४.१८ ॥

द्रुपदादिव इति च शन्नो देवीरपां रसः ।
आपो देवो पावमान्यः पुनन्त्वाद्या ऋचो नव ॥ १,२१४.१९ ॥

चित्पतिर्मेति च शनैः प्लाव्यात्मनं समाहितः ।
हिरण्यवर्णा इति च पावमान्यस्तथा पराः ॥ १,२१४.२० ॥

तरत्सामा शुद्धवत्यः पवित्राणि च शक्तितः ।
वारुण्या बहवः पुण्याः शक्तितः संप्रयोजयेत् ॥ १,२१४.२१ ॥

ओं कारेण व्याहृतिभिर्गायत्र्या च समन्वितः ।
आदावन्ते च कुर्वीत अभिषेकं यथाक्रमम् ॥ १,२१४.२२ ॥

जलमध्यस्थितस्यैव मार्जनं तु विधीयते ।
अन्तर्जले जपेन्मन्त्रं त्रिः कृत्वा चाघमर्षणम् ॥ १,२१४.२३ ॥

द्रुपदाद्यास्त्रिरावर्तेदयं गौरिति च त्र्यृचम् ।
अन्यांश्चैव तु मन्त्रान्वा स्मृतिदृष्टान्समाहितः ॥ १,२१४.२४ ॥

सव्याहृतिं सप्रणवां गायत्रीं वा जपेद्बुधः आवर्तयेद्वा प्रणवं स्मरेद्वा विष्णमव्ययम् ॥ १,२१४.२५ ॥

विष्णोरायतनं त्वापः स एवाप्पतिरुच्यते ।
तस्यैवं तनवस्त्वेतास्तस्मात्तं ह्यप्सु संस्मरेत् ॥ १,२१४.२६ ॥

तद्विष्णोरिति मन्त्रेण निमज्याप्सु पुनः पुनः ।
गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै ॥ १,२१४.२७ ॥

ओं इदमापप्रवहता स्वं मलं क्षाललोहितम् ।
यथात्वहोत्रामृतं यच्च शोफे अभीषणम् ॥ १,२१४.२८ ॥

आपो मा तस्मादेनसः पावमानश्च मुञ्चतु इविष्मतो विमा आपोहविष्मानाविरासति ।
हविष्मान् देव असुरो हविष्मानस्तु सूर्यः ।
देवीरापो अपा पत्न्या यश्च ऊर्मिर्हविष्यः इन्द्रियवान्मादित्यन्तनः तं देवेभ्यो देवता दाभुशुक्रलेभ्यस्तेषां भागकर्षिवसिसमुद्रस्य दक्षिण्याग्रयासिमेनापोग्रभिरश्मतमोधोः ।
आपो देवी मधुमतीरगृहणन्तु ह्यन्नती राजस्वतिलाः ।
याभिर्मित्रावरुणस्य सिञ्चयाभिरिन्द्रमनयत्यन्न वाती वद्रुपदां शन्नो देवी अपामसृग्द्वयसंसूर्ये सन्तं समाहितं अपांरसस्य यो रस्य यो गृहणास्युत्तमम् ।
आपो देवीरुपसूर्य मधुमतीवयस्याय प्रजाभ्यः तासा मास्थानात्वर्जिहतामोषधयः सपिप्पलाः ।
पुनन्तु मा पितरः सौम्यासः पुनन्त्वनापि पिता सहसाः पवित्रेण गतायुषा ।
पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।
पवित्रेण गतायुषा विश्वमायुर्व्यश्नवैः ।
अग्न आयूंषि परसत्माचरोर्जमिषञ्च त्वचे वावस्वत्वच्छूनाम् ।
पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।
पुनन्तु विश्वा भूतानि जातवेदः ! पुनीहि मा ।
पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् ।
अग्ने क्रत्वा क्रतूंरनु ।
यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ब्रह्मा तेन पुनातु मा ।
पवमानः सुवर्जनः । पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ।
उभाभ्यां देव सवितः । पवित्रेण सवेन च । इदं ब्रह्मपुनीमहे ।
वैश्वदेवीः पुनती देव्या गृभ्नास्यामिसावक्ष्यस्तान्नोवीत पूज्याः ।
तयामदन्तः सधमादेषु वयं स्याम पतयो रयीणाम् ।
चित्प तिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।
तस्य ते पवित्रपूतस्य यत्कामः ।

प्रणितच्छकेयं देवो वाक्पतिर्मा सविता त्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।
तस्य ते पवित्रपते ! पवित्रपूतस्य चत्कामः ।
पुनस्तच्छकेयं द्युपतिं अयं गौः पृश्निरक्रमीसदशशतं मातरं पुनः पितरञ्च प्रयस्मः ।
देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।
तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनातच्छकेयम्? ।
ओं तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ १,२१४.२९ ॥

स्नात्वैवं वाससी धौते अच्छिन्ने परिधाय च ।
प्रक्षाल्य च मृदाद्भिश्च हस्तौ प्रक्षाल्य वै तदा ॥ १,२१४.३० ॥

आचान्ते पुनाराचामेन्मन्त्रेण स्नानभोजने ।
द्रुपदां च त्रिरावर्त्य तथा चैवाघमर्षणम् ॥ १,२१४.३१ ॥

आचम्याप्लाव्य चात्मानं त्रिराचम्यशनेरसून् ।
अथोपतिष्टेदादित्यं मूर्ध्नि पुष्पान्विताञ्जलिः ॥ १,२१४.३२ ॥

प्रक्षिप्योदकमद्धूय उदुत्यं चित्रमित्यपि ।
तच्चक्षुर्देव इति च हंसः शुचिषदित्यपि ॥ १,२१४.३३ ॥

एताञ्जपेदूर्ध्वबाहुः सूर्यमीक्ष्य समाहितः ।
गायत्रीं च तथा शक्त्या उपस्थाय दिवाकरम् ॥ १,२१४.३४ ॥

विभ्राडित्यनुवाकेन सूक्तेन पुरुषस्य च ।
शिवसङ्कल्पेन च तथा मण्डलब्राह्मणेन च ॥ १,२१४.३५ ॥

दिवाकीर्त्या तथा चान्यैः सौरैर्मन्त्रैश्च शक्तितः ।
जपयज्ञस्तु कर्तव्यः सर्वदेवप्रणीतकैः ॥ १,२१४.३६ ॥

अध्यात्मविद्यां विधिवज्जपेद्वा जपसिद्धये ।
सव्यं कृत्वा त्रिराचम्य श्रियं मेधां धृतिं क्षितिम् ॥ १,२१४.३७ ॥

वाचं वागीश्वरीं पुष्टिं तुष्टिञ्च परितर्पयेत् ।
उमामरुन्धतीं चैव शचीं मातरमेव च ॥ १,२१४.३८ ॥

जयां च विजयां चैव सावित्रीं शान्तिमेव च ।
स्वाहां स्वधां धृतिं चैव तथैवादितिमुत्तमाम् ॥ १,२१४.३९ ॥

ऋषिपत्नीश्च कन्याश्च तर्पयेत्काम्यदेवताः ।
सर्वमङ्गलकामस्तु तर्पयेत्सर्वमङ्गलाम् ॥ १,२१४.४० ॥

आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विदं ब्रुवन् ।

क्षिपेदपोऽञ्जलींस्त्रींश्च कुर्वन्काङ्क्षेत तर्पणम् ॥ १,२१४.४१ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे स्नानविधिविवरणं नाम चतुर्दशोत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २१५
ब्रह्मोवाच ।
तर्पणं सम्प्रवक्ष्यामि देवादिपितृतुष्टिदम् ॥ १,२१५.१ ॥

ओं मोदास्तृप्यन्ताम् ।
ओं प्रमोदास्तृप्यन्ताम् ।
ओं सुमुखास्तृप्यन्ताम् ।
ओं दुर्मुखास्तृप्यन्ताम् ।
ओं विघ्नास्तृप्यन्ताम् ।
ओं विघ्नकर्तारस्तृप्यन्ताम् ।
ओं छन्दांसि तृप्यन्ताम् ।
ओं वेदास्तृप्यन्ताम् ।
ओं ओषधयस्तृप्यन्ताम् ।
ओं सनातनस्तृप्यताम् ।
ओं इतराचार्यास्तृप्यन्ताम् ।
ओं संवत्सरःसावयवस्तृप्यताम् ।
ओं देवास्तृप्यन्ताम् ।
ओं अप्सरसस्तृप्यन्ताम् ।
ओं देवान्धकास्तृप्यन्ताम् ।
ओं सागरस्तृप्यन्ताम् ।
ओं नागास्तृप्यन्ताम् ।
ओं पर्वतास्तृप्यन्ताम् ।
ओं सरिन्मनुष्या यक्षास्तृप्यन्ताम् ।
ओं रक्षांसि तृप्यन्ताम् ।
ओं पिशाचास्तृप्यन्ताम् ।
ओं सुपर्णास्तृप्यन्ताम् ।
ओं भूतानि तृप्यन्ताम् ।
ओं भूतग्रामाश्चतुर्विधास्तृप्यन्ताम् ।
ओं दक्षस्तृप्यताम् ।
ओं प्रचेतास्तृप्यताम् ।
ओं मरीचिस्तृप्यताम् ।
ओं आत्रिस्तृप्यताम् ।
ओं अङ्गिरास्तृप्यताम् ।
ओं पुलस्त्यस्तृप्यताम् ।
ओं पुलहस्तृप्यताम् ।
ओं क्रतुस्तृप्यताम् ।
ओं नारदस्तृप्यताम् !
ओं भृगुस्तृप्यताम् ।

ओं विश्वामित्रस्तृप्यताम् ।
ओं रैवतस्तृप्यताम् ।
ओं चाक्षुषस्तृप्यताम् ।
ओं महातेजास्तृप्यताम् ।
ओं वैवस्वतस्तृप्यताम् ।
ओं ध्रुवस्तृप्यताम् ।
ओं धवस्तृप्यताम् ।
ओं अनिलस्तृप्यताम् ।
ओं प्रभासस्तृप्यताम् ॥ १,२१५.२ ॥

नीवीती ।
ओं सनकस्तृप्यताम् ।
ओं सनन्दनस्तृप्यताम् ।
ओं सनातनस्तृप्यताम् ।
ओं कपिलस्तृप्यताम् ।
ओं आसुरिस्तृप्यताम् ।
ओं वोढुस्तृप्यताम् ।
ओं पञ्चशिखस्तृप्यताम् ।
ओं मनुष्याणां कव्यवाहस्तृप्यताम् ।
ओं अनलस्तृप्यन्ताम् ।
ओं सोमस्तृताम् ।
ओं यमस्तृप्यताम् ।
ओं अर्यमातृप्यताम् ॥ १,२१५.३ ॥

प्राचीनावीती ।
ओं अग्निष्वात्ताः पितरस्तृप्यन्ताम् ।
ओं सोमपाः पितरस्तृप्यन्ताम् ।
ओं बर्हिषदः पितरस्तृप्यन्ताम् ।
यमाय नमः ।
धर्मराजाय नमः ।
मृत्यवे नमः ।
अन्तकाय नमः ।
वैवस्वताय नमः ।
कालाय नमः ।
सर्वभूतक्षयाय नमः ।
औदुम्बराय नमः! दध्नाय नमः ।
नीलाय नमः ।
परमेष्ठिने नमः ।
वृकोदराय नमः ।

चित्राय नमः ।
चित्रगुप्ताय नमः ॥ १,२१५.४ ॥

ब्रह्मादिस्तम्बपर्यन्तं जगत्तृप्यतु ।
ओं पितृभ्यः स्वधा नमः ।
ओं पितामहेभ्यः स्वधा नमः ।
ओं प्रपितामहेभ्यः स्वधा नमः ।
ओं मातृभ्यः स्वधानमः ।
ओं पितामहीभ्यः स्वधा नमः ।
ओं प्रपितामहीभ्यः स्वधा नमः ।
ओं मातामहेभ्यः स्वधा नमः ।
ओं प्रमातामहेभ्यः स्वधा नमः ।
ओं वृद्धप्रमातामहेभ्यः स्वधानमः तृप्यतामिति ।
उदीरतामवर उत्परासो उन्मध्यमाः पितरः सोम्यासः ।
असुंय ईयुरवृका ऋतज्ञास्तेनोऽवन्तुपितरोहवेषु ।
गोत्रोच्चारणेन प्रथमाञ्जलिः पितुः ।
ओं अङ्गिरसो नः पितरोद्द ।
अथर्वाणोभृगवःद्द ।
तेषां वयं सुमतौ यज्ञियानां अपि भद्रे सौमनसे स्याम ।
ओं आयन्तु नः पितरः सौम्यासोग्निष्वात्ताः पथिभिर्देवयानैः ।
अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ १,२१५.५ ॥

ओं ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्नुतं स्वधा स्थ तर्पयत मे पितॄन् ।
ओं पितृभ्यः स्वधा नमः ।
ओं पितामहेभ्यः स्वधा नमः ।
ओं प्रपितामहेभ्यः स्वधान नमः ।
ओं मातामहेभ्यः स्वधा नमः ।
ओं प्रमातामहेभ्यः स्वधा नमः ।
ओं वृद्धप्रमातामहेभ्यः स्वधा नमः ।
पितामहस्यद्द ।
ओं अक्षन्पितरो अमीमदन्त पितरो अमी तृप्यन्तः पितरः शुं(स्व) धध्वं पिबेह पितरोऽपि वानत्रयांश्च विश्रयांश्च भवनपवित्रत्वा रथपति ते जातवेदाः स्वधाभिर्यज्ञं सुकृतं जुपस्व? ।
ओं णदुवाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीर्मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः ।
मधु द्यौरस्तु नः पिता मधु मान्नो वनस्पतिर्मधुभामस्तु सूर्यो माध्वीर्गावो भवन्तु नः ॥ १,२१५.६ ॥

प्रपितामहस्याञ्जलिदानम् ।
ओं नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे ।

नमो वः पितरो गृहान्न पितरो दत्तः ।
नमो वः पितरो दध्मे तद्वः पितरो वासः ।
मातामहानां त्रिरञ्जलिद्द ।
ततो मात्रादीनान्द्द ॥ १,२१५.७ ॥

ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥ १,२१५.८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे देवादितर्पणनिरूपणं नाम पञ्जदशोत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २१६
ब्रह्मोवाच ।
वैश्वदेवं प्रवक्ष्यामि होमलक्षणमुत्तमम् ।
प्रज्वाल्य चाग्निं पर्युक्ष्यओं क्रष्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः ।
इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानत् ।
ओं पावक वैश्वानर इदमासनं अरणीगर्भसंस्कृततेजोरूप महाब्रह्मन्मुहूर्तास्त्रिषु वैश्वानरं प्रतिबोधयामि ।
ओं वैश्वानरे न उभयं आप्रयातु परावतः अग्निर्न स्वद्युतीरूपपृष्ठो दिवि पृष्ठोऽश्वि पृथिव्यां पृष्ठा विवेवा
ओषधीचाविवेश वैश्वानरः सहसा पृष्ठोऽग्निः नमो दिव्य स षष्ठां नक्तम् ॥ १,२१६.१ ॥

ओं प्रजापतये स्वाहा ।
ओं सोमाय स्वाहा ।
ओं बृहस्पतये स्वाहा ।
ओं अग्निषोमाभ्यां स्वाहा ।
ओं इन्द्राग्निभ्यां स्वाहा ।
ओं द्यावापृथिवीभ्यां स्वाहा ।
ओं इन्द्राय स्वाहा ।
ओं विश्वेभ्यो देवेभ्यः स्वाहा ।
ओं ब्रह्मणे स्वाहा ।
ओं अद्भ्यः स्वाहा ।
ओं ओषधिवनस्पतिभ्यः स्वाहा ।
ओं ग्रह्याय स्वाहा ।
ओं देवदेवताभ्यः स्वाहा ।
ओं इन्द्राय स्वाहा ।
ओं इन्द्रपुरुषेभ्यः स्वाहा ।
ओं यमाय स्वाहा ।
ओं यमपुरुषाय स्वाहा ।
ओं सर्वेभ्यो भूतेभ्यो दिवाचारिभ्यः स्वाहा ।
ओं वसुधापितृभ्यः स्वाहा ।
ओं ये भूता प्रचरन्ति दीनाच निमिहन्तो भुवनस्य मध्ये ।
तेभ्यो बलिं पुष्टिकामो ददामि मयि पुष्टिं पुष्टिपतिर्ददातु ।
ओं आचाण्डालपतिर्ददातु आचाण्डालपतितवायसेभ्यः ॥ १,२१६.२ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वैश्वदेवनिरूपणं नाम षोडशोत्तरद्विशततमोऽध्यायः

ब्रह्मोवाच ।
अथ सन्ध्याविधं वक्ष्ये द्विजातीनां समासतः ।
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ १,२१७.१ ॥

यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ १,२१७.२ ॥

गायत्रीच्छन्दो विश्वामित्र ऋषिस्त्रिपात् ।
समुद्राः कुक्षिश्चन्द्रादित्यौ लोचनौ ।
अग्निर्मुखम् ।
विष्णुर्हृदयम् ।
ब्रह्मरुद्रौ शिरः ।
रुद्रः शिखा ।
उपनय ने विनियोगः ।
ओं भूः पादे ।
भुवः जानुति ।
स्वः हृदये ।
महः शिरसि ।
जनः शिखायाम् ।
तपः कण्ठे ।
सत्यं ललाटे ।
ओं हृदयाय नमः ।
ओं भूः शिरसे स्वाहा ।
ओं भुवः शिखायै वौषट् ।
ओं स्वः कवचाय हुं ।
ओं भूर्भुवः स्वः अस्त्राय फट् ॥ १,२१७.३ ॥

ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यं तत्स्त्रिपदा ।
ओं आपो ज्योऽती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ।
ओं सूर्यश्चेत्यादि ।
ओं आपः पुनन्त्वित्यादि ।
ओं अग्निश्चेत्यादि ॥ १,२१७.४ ॥

ओं आयातु वरदे देवि ! पूर्वाह्ने ब्रह्मदेवता ।

गायत्री नाम या सन्ध्या रक्ताङ्गी रक्तवाससा ।
वरहंससमारूढा श्रीमत्पुष्करसंस्थिता ॥ १,२१७.५ ॥

कमण्डलुधरा शान्ता अक्षमालाविधारिणी ।
आयातु वरदा देवी मध्याह्ने श्वेतरूपिणी ॥ १,२१७.६ ॥

माहेश्वरी च सावित्री शुक्लवस्त्रादिमण्डिता ।
वृषस्कन्धसमारूढा त्रिशूलवरधारिणी ॥ १,२१७.७ ॥

आयातु वरदा देवी अपराह्ने सरस्वती ।
अतसीकुसुमप्रख्या वैष्णवी गरुडासना ॥ १,२१७.८ ॥

पीतवस्त्रा शङ्खचक्रगदापद्मसमन्विता ।
श्वेतवर्णा समुद्दिष्टा रविमण्डलसंस्थिता ॥ १,२१७.९ ॥

श्वेतपद्मसनासीना श्वेतपुष्पोपशोभिता ।
ओं आपो हिष्ठा मयो भुवस्ता न उर्जे दधात नः ॥ १,२१७.१० ॥

महेरणाय चक्षुसे ।
ओं यो वः शिवतमो रसः ।
तस्य भाजयेतेह नः ।
अशतीरिव मातरः ।
ओं तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जन यथा च नः ।
ओं सुमित्रिया न आप ओषधयः सन्तु ओं दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः ।
ओं द्रुपदादिवमुमुचानः स्विन्नः स्नातो मलादिव ।
पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ।
ओं ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ।
ततोरात्र्यजायत ।
ततः समुद्रोर्ऽणवः समुद्रादर्णवादधिसंवत्सरो अजायत ।
अहौरात्राणि विदधद्विश्वस्य मिषतो वशी ।
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥ १,२१७.११ ॥

गायत्र्या विश्वामित्र ऋषिर्गायत्रीछन्दः ।
सविता देवता जपे विनियोगः ।

ओं उदुत्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ।
ओं चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ।
ओं तच्चक्षर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ।
पश्येम शरदः शतं जीवेम शरदः शतम् ।
शृणुयाम शरदः शतम् ।
ओं विश्वतश्चक्षुरुत विश्वतोमुखोविश्वतो बाहुरुत विश्वतस्पात् ।
संबाहुभ्यां धमति संपत्रैद्यार्वाभूमी जनयन्देव एकः ।
देवा गातुविदो नाङ्गविद्वानाद्धमितमनसस्पत इमं देवयज्ञं स्वाहा वातेधाः जपेत् ॥ १,२१७.१२ ॥

उत्तरे शिखरे जाते भूम्यां पर्वतवासिनी ।
ब्रह्मणा समनुज्ञाता गच्छ देवि ! यथासुखम् ॥ १,२१७.१३ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सन्ध्याविधिनिरूपणं नाम सप्तदशोत्तरद्विशततमोऽध्यायः

ब्रह्मोवाच ।
व्यास ! श्राद्धमहं वक्ष्ये भुक्तिमुक्तिप्रदं नृणाम् ।
पूर्वं निमन्त्रयेद्विप्रान्विशेषाद्ब्रह्मचारिणः ॥ १,२१८.१ ॥

प्रदक्षिणोपवीतेन देवान्वामोपवीतिना ।
पितॄन्निमन्त्रयेत्पादौ क्षालयेद्वाक्यमन्त्रतः ॥ १,२१८.२ ॥

ओं स्वागतं भवद्भिरिति प्रश्नः ।
ओं सुस्वागतामिति तैरुक्ते ओं विश्वेभ्यो देवेभ्य एतत्पादोदकमर्घ्यं स्वाहेति
देवब्राह्मणपादयोर्देवतीर्थेनाभुग्नकुशसहितजलदानम् ॥ १,२१८.३ ॥

ततो दक्षिणा भिमुखेन वामोपवीतेनामुकगोत्रेभ्यो अस्मत्पितृपितामहप्रपितामहेभ्यो यथानामशर्मभ्य एतत्पादोदकमर्घ्यं स्वधेति पित्रादिब्राह्मणपादयोः पितृतीर्थेन आभुग्नकुशकुसुमसहितजलदानम् ॥ १,२१८.४ ॥

एवं मातामहादिभ्यः ।
एतदाचमनीयं स्वाहा स्वधेति ब्राह्मणहस्ते एषवोर्ऽघ्य इति ब्राह्मणहस्ते पुष्पदानम् ॥ १,२१८.५ ॥

ओं सिद्धमिदमासनमिह सिद्धमित्यभिधाय ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यमिति सप्तव्याहृतिभिः पूर्वमुखन्देवब्राह्मणोपवेशनम् ।
उत्तरदिङ्मुखंपितृब्राह्मयोणोपवेशनम् ।
ओं देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वधायै स्वाहायै नित्यमेव भवन्तुते इति त्रिर्जपेत् ॥ १,२१८.६ ॥

ओं अद्यास्मिन्देशे अमुकमासे अमुकराशिङ्गते
सवितर्यमुकतिथावमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानां यथानामशर्मणां
विश्वेदेवपूर्वकन्द्दश्राद्धं करिष्ये । ओं विश्वेभ्यो देवभ्यः स्वाहा ओं विश्वेदेवानावाहयिष्ये ।
आवाहयेत्युक्ते ओं विश्वेदेवाः स आगत शृणुतामिमं हवम् ।
एदं बर्हिर्निषीदत ओं विश्वेदेवाः शृणुतेमं इवं मे ये अन्तरिक्षे य उपद्यविष्ट ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् ।
ओं ओषधयः संवदन्ते सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तं राजन्पारयामसि ।
ओं आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते ।

ओं अपहतासुरा रक्षांसि वेदिषद इति त्रित्रिर्यवविकिरणम् ॥ १,२१८.७ ॥

ओं पात्रमहं करिष्ये ।
ओं करुष्वेत्यनुज्ञातः कृत्वा पात्रे पवित्रनिषेवणम् ॥ १,२१८.८ ॥

ओं शन्नो देवीरभिष्टय आपो भवन्तु पीतये ।
शंयोरभिस्त्रवन्तु न इति पात्रे जलदानम् ।
ओं यवोऽसि यवयास्मद्वेषो यवयारातीरिति यवदानम् ।
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां ता (त्वा) मिहोपह्वये श्रियमिति गन्धदानम् ।
ओं या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्षौत पार्थवीर्याः ।
हिरण्यवर्णा यज्ञियास्तान आपः शिवाः शं स्योना सुहवा भवन्तु ।
एषोर्ऽघो नम इति ब्राह्मणहस्ते जलं दत्त्वानेनैव पात्रेण पवित्रग्रहणं कृत्वा संस्त्रवं पवित्रं च ब्राह्मणपार्श्वे दद्यात् ।
ततः प्रथमपात्रे संस्त्रवजलं संस्थाप्य कुशोपरि ऊर्ध्वमुखं स्थापनं कुर्यत् ।
तदुपरि कुशदानम् ॥ १,२१८.९ ॥

विश्वेभ्यो देवेभ्यः एतानि गन्धपुष्पधूपदीपवासो युगयज्ञो पवीतानि नमः ।
गन्धादिदानमच्छिद्रमस्तु ।
अस्त्विति ब्राह्मणप्रतिवचनम् ॥ १,२१८.१० ॥

ततः पितृपितामहप्रपितामहानां मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां श्राद्धमहं करिष्ये इति अनुज्ञावचनम् ।
कुरुष्वेति ब्राह्मणैरुक्ते ।
ओं देवताभ्यः पितृभ्यश्च इतित्रिर्जपेत् ॥ १,२१८.११ ॥

ओं अमुकगोत्रेब्योऽस्मत्पितृपितामहेभ्यो यथानामशर्मभ्यः सपत्नीकेभ्यः इदमासनं स्वधा इति ब्राह्मणवामे आसनदानम् ।
ओं पितॄनावाहयिष्ये ।
ओं ।
आवाहयेत्युक्ते ओं उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ।
उशन्नु शत आवह पितॄन्हविषे उत्तवे ।
ओं आयन्तु नः पितरः सौम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।
अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेवन्त्वस्मानित्यावाहनम् ।
ओं अपहता सुरा रक्षांसि वेदिषदः इति तिलविकिरणम् ।

पूर्ववक्त्रमेण स्थापितपात्रेषूदकदानम् ।
ओं तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः ।
प्रत्नमद्भिः पृक्तः स्वधया पितॄंल्लोकान्प्रीणीहि नः स्वाहा इति तिलदानम् ॥ १,२१८.१२ ॥

गन्धपुष्पे हस्ताभ्यां दत्त्वा पितृपात्रमुत्थाप्य या दिव्येति पठित्वा अमुकगोत्रास्मत्पितः !
अमुकदेवशर्मन् ! सपत्नीक ! एष तेऽर्घ्यः स्वधा ।
अपवित्रं पात्रं गृहीत्वा वामपार्श्वे दक्षिणे कुशोपरि ओं पितृभ्यः स्थानमसीत्यधोमुखपात्रस्थापनम् ॥ १,२१८.१३ ॥

ओं शुन्धन्तां लोकाः पितृसदनाः पितृसदनमसि ।
अधोमुखपात्त्रस्पर्शनम् ।
अमुकगोत्रेभ्योऽस्मत्पितृपितामह प्रपितामहेभ्यः सपत्नीकेभ्य एतानि
गन्धपुष्पधूपदीपवासोगुणसोत्तरीययज्ञोपवीतानि वः स्वधा पितृतीर्थेन गन्धादिदानम् ।
गन्धादिदानमक्षय्यमस्तु ।
संकल्पसिद्धिरस्तु ।
ब्राह्मणवचनम् ।
एवं मातामहादीनामनुज्ञापनादिकर्म ।
ओं यादिव्येतिभूमिसंमार्जनम् ।
ततो घृताक्तमन्नं गृहीत्वा दक्षिणोपवीती पितृब्राह्मणमों अग्नौ करणमहं करिष्ये ।
ओं कुरुष्वेति तेनोक्ते ओं अग्नये कव्यवाहनाय स्वाहा इति आहुतिद्वयं देवब्राह्मणहस्ते दत्त्वा
अवशिष्टान्नं पिण्डार्थं स्थापयित्वा अपरमर्धं पित्रादिपात्रे मातामहादिपात्रे च निः क्षिपेत् ॥ १,२१८.१४ ॥

पात्रमुद्रादि निधाय कुशं दत्त्वा अधोमुखाभ्यां पाणिभ्यां पात्रं गृहीत्वा ओं पृथिवीते पात्रं द्यौरपिधानं
ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा पात्राभिमन्त्रणम् ।
इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पांसुरे ।
विष्णो हव्यंरक्षस्व इत्यन्नमध्ये अधोमुखद्विजाङ्गुष्ठनिवेशनम् ॥ १,२१८.१५ ॥

अपहतेति त्रिर्यवविकिरणम् ।
ओं निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वेऽसुरदानवा मया ।
रक्षांसि यक्षाः सपिशाचसङ्घा हता मया यातुधानाश्च सर्वे इति सिद्धार्थविकिरणम् ॥ १,२१८.१६ ॥

ततो धूरिलोचनसंज्ञकेभ्योदवेभ्य एतदन्नं सघृतं सपानीयं सव्यञ्जनं स्वाहेति
वारिकुशाद्यैरनुसङ्कल्पनम् ।
ओं अन्नमिदमक्षय्यमस्तु ओं संङ्कल्पसिद्धिरस्तु ॥ १,२१८.१७ ॥

ततो विपरीतोपवीतेन सव्यञ्जनं सघृतमन्नं पित्रादि ब्राह्मणपात्रे निधाय तदुपरि भूमिसंलग्नकुशं दत्त्वा ओं पृथिवी ते पात्रं इति मन्त्रेण उत्तानाभ्यां पात्रं गृहीत्वा ओं इदं विष्णोरित्यन्नोपरि उत्तानं द्विजाङ्गुष्ठं निवेशयेत् ।
ओं अपहतेति तिलविकिरणम् ।
भूमिपातितवामजानुः अमुकगोत्रेभ्यः अस्मत्पितृपितामहेभ्यः सपत्नीकेभ्यः एतदन्नं सघृतं सपानीयं सव्यञ्जनं प्रतिषिद्धवर्जितं स्वधा ।
अन्नं सङ्कल्प्य ओं ऊर्जं वहन्तीरमृतं घृत पयः कीलालं परिस्त्रुतं स्वधास्तु तर्पयत मे पितरम् ।
दक्षिणामुखवरिधारत्यागः ॥ १,२१८.१८ ॥

ओं श्राद्धमिदमच्छिद्रमस्तु ओं सङ्कल्पसिद्धरस्तु ।
ओं भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो यो नः प्रचोदयातिति विसजयित्वा ओं मधुवाता ऋतायते मधुक्षरन्तु सिन्धवः माध्वीर्नः सन्त्वोषधीर्मधुनक्तमुतोषसो मधुत्पार्थिवं रजः ।
मधुद्यौरस्तु नः पिता मधुमान्नो वनस्पतिः मधुमानस्तु सूर्यो माध्वीर्गावो भवन्तु नः ।
मधु मधु मधु इति जपः ॥ १,२१८.१९ ॥

यथासुखं वाग्यता जुषध्वमिति ब्रूयात् ।
बुक्तवत्सु सप्तव्याधादिकं पितृस्तोत्रं जपेत् ।
तच्चसप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ ।
चक्रवाकाः शराद्वीपे हंसाः सरसि मानसे ॥ १,२१८.२० ॥

तेऽभिजाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दूरमध्वानं यूयं किमवसीदथ ॥ १,२१८.२१ ॥

ततस्तृप्यस्व दक्षिणाभिमुखो वामोपवीती तदुत्सृष्टाग्रतः ।
ओं अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिम् ।
इति भूमौ कुशोपरि सघृतमन्नं जलप्लुतं विकिरेत् ॥ १,२१८.२२ ॥

ततो ब्राह्मणक्रमेण जलगण्डूषं दत्त्वा पूर्ववत्सव्याहृतिकां गायत्रीं मधुवातेतित्र्यृचं जप्त्वा ओं रुचितं भवद्भिरिति देवब्राह्मणप्रश्नः ।
सुरुचितमिति तेनोक्ते ओं शेषमन्नमिति प्रश्नः ।
इष्टैः सह भोजनम् ।
पित्रादिब्राह्मणं वामोपवीतेन ओं तृप्ताः स्थ इति प्रश्नः ।
ओं तृप्ताः स्म इति तेनोक्ते भूम्यभ्युक्षणं मण्डलचतुष्कोणं ति लविकिरणम् ॥ १,२१८.२३ ॥

ओं अमुकगोत्र ! अस्मत्पितः ! अमुकदेवदर्शन् ! सपत्नीक ! एतत्ते पिण्डासनं स्वधा ।
इत्थं रेखामध्ये पितामहाय खव्याहृतिकां गायत्रीं मधुवातेति त्रर्जपन्नन्नं साज्यं पिण्डं कृत्वा कुशोपरि
अमुकगोत्र अस्मत्पितः ! अमुकदेवश्रमन् ! सपत्नीक एष पिण्डस्ते स्वधा ।
इत्थं रेखामध्ये पितामहाय ।
ततः सव्याहृतिकां गायत्रीं मधुवातेति त्रिर्जपन्पिण्डविकिरणं पिण्डान्तिके ।
ओं लेपभुजः प्रीयन्तमिति स्तरण्कुशेषु हस्तमार्जनं प्रक्षालितपिण्डोदकेन ओं अमुकगोत्र ! अस्मत्पितः !
अमुकशर्मन् सपत्नीक एतत्ते जलमवनेक्ष्व ये चात्रत्वामनुजाश्च त्वामनु तस्मै तेस्वधेति
पितृपिण्डसेचनम् ।
पिण्डपात्रमधोमुखं कृत्वा बद्धाञ्जलिः ओं पितरो मादयध्वं यथाभागमावृषायध्वमिति जपेत् ।
अपः स्पृष्ट्वा वामेन परावृत्त्य उदङ्मुखः प्राणांस्त्रिः संयम्य षड्भ्य ऋतुभ्यो नमः इति जपः ॥
१,२१८.२४ ॥

वामेनैव परावृत्य पुष्पदानम् ।
अक्षतञ्चारिष्टञ्चास्तु मे पुण्यं शान्तिपुष्टिद्द ।
दक्षिणामुखः अमी मदन्तः पितरो यथाभागमावृषायिषत इति जपः ।
वासः शिथिलीकृत्वाञ्जलिं कृत्वा ओं नमो वः पितरो नमो वः इति जपः ।
गृहान्नः पितरो दत्त इति गृहवीक्षणम् ।
ततः सदा वः पितरो द्वेष्म इति वीक्ष्य एतद्वः पितरो वास इत्युच्चार्य अमुकगोत्र एतत्ते वासः स्वधा
इति सूत्रदानम् ।
वामेन पाणिना उदकपात्रं गृहीत्वा ऊर्जं वहन्तीरमृतं घृतं पयः इत्यादि पिण्डोपरि धारात्यागः ॥
१,२१८.२५ ॥

पूर्वस्थापितपात्रशेषोदकैः प्रत्येकं पिण्डसेचनंपिण्डमावाह्य गन्धादिदानंपिण्डोपरि कुशपत्रञ्च दत्त्वा
ओं अक्षन्नमीमदन्तह्य व प्रिया अधूषत अस्तोषतस्वभानवो विप्रा नविष्ठयामती ।
यो जान्विन्द्र ते हरीति त्रिर्जपः ॥ १,२१८.२६ ॥

ओं इत्थं मातामहादिब्राह्मणानामाचमनम् ।
ओं सुसुप्रोक्षितमस्त्विवति भूम्यभ्युक्षणं कृत्वा ।
ओं अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ।
ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु नः ।
शिवा आपः सन्त्विवति ब्राह्मणहस्ते जलदानम् ।
लक्ष्मीर्वसतिपुष्पेषु लक्ष्मीर्वसति पुष्करे ।
लक्ष्मीर्वसति गोष्ठेषु सौमनस्यं सदास्तु ते ।
सौमनस्यमस्त्विवति पुष्पदानम् ।

अक्षतं चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिश्च मे ।
यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ।
ओं अक्षतञ्चारिष्टञ्चास्तु इति यवतण्डुलदानम् ॥ १,२१८.२७ ॥

अमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानां सपत्नीकानामिदमन्नपानादिकमक्षय्यमस्त्विवति पित्रादिब्राह्मणहस्ते तिलजलदानम् ।
अस्त्विवति ब्राह्मणो वदेत् ।
एतन्मातामहादीनामक्षय्यमाशिषः ।
ओं अघोराः पितरः सन्तु गोत्रं नो वर्धतांदातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहुदेयञ्च नोऽस्त्विवति ।
अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ।
एताः सत्याशिषः सन्तु ॥ १,२१८.२८ ॥

सौमनस्यमस्तु ।
अस्त्विवत्युक्ते प्रदत्तपिण्डस्थाने अर्घ्यार्थपवित्रमोचनम् ।
कुशपवित्रं गृहीत्वातेन कुशेन पित्रादिब्राह्मणं स्पृष्ट्वा स्वधां वाचयिष्येओं वाच्यतांों पितृपितामहेभ्यो यथानामशर्मभ्यः सपत्नीकेभ्यः स्वधोच्यताम् ।
अस्तुस्वधा इत्युक्ते ऊर्जं वहन्तीरमृतं घृतमिति पिण्डोपरि वारिधारां दद्यात् ॥ १,२१८.२९ ॥

ततः ओं विश्वेदेवा अस्मिन्यज्ञे प्रीयन्तादेवब्राह्मणहस्ते यवोदकदानम् ।
ओं प्रीयन्तामिति तेनोक्ते ओं देवताभ्य इति त्रिर्जपेत् ॥ १,२१८.३० ॥

अधोमुखः पिण्डपात्राणि चालयित्वा आचम्य दक्षिणोपवीती पूर्वाभिमुखः ओं अमुकगोत्राय अमुकदेवशर्मणे ब्राह्मणाय सपत्नीकाय श्राद्धप्रतिष्ठार्थदक्षिणामेतद्रजतं तुभ्यमहं सम्प्रददे इति दक्षिणां दद्यात् ।
इति देवूब्राह्मणाय दक्षिणादानम् ॥ १,२१८.३१ ॥

ततः पितृब्राह्मणे पिण्डाः सम्पन्ना इति प्रश्नः ।
सुसम्पन्ना इति पिण्डे क्षीरधारां दत्त्वा पिण्डचालनं अतिथिब्राह्मणे पिण्डपात्रमुत्तानं कृत्वा ओं वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्यमध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैरिति पिण्डा दिविसर्जनंामावाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे आमागन्तां पितरा चामा सोमोऽमृतत्वेन गम्यात् ।
इति देवविसर्जनम् ।
ओं अभिगम्यतामिति पितृब्राह्मणविसर्जनम् ।

ब्राह्मणैरनुद्गतस्य निवर्तनम् ।
गवादिषु पिण्डप्रतिपादनमिति शेषः ॥ १,२१८.३२ ॥

अयं श्राद्धविधिः प्रोक्तः पठितः पापनाशनः ।
अनेन विधिना श्राद्धं कृतं वै यत्र कुत्रचित् ॥ १,२१८.३३ ॥

अक्षया स्यात्पितृणाञ्च स्वर्गप्राप्तिर्ध्रुवा तथा ।
इत्युक्तं पार्वणं श्राद्धं पितृणां ब्रह्मलोकदम् ॥ १,२१८.३४ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पार्वणश्राद्धकथनं नामाष्ट्रदशाधिकद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २१९
ब्रह्मोवाच ।
नित्यश्राद्धं प्रवक्ष्यामि पूर्ववत्तद्विशेषवत् ।
ओं अमुकगोत्राणामस्मत्पितृपितामहानां अमुकशर्मणां सपत्नीकानां श्राद्धं सिद्धान्नेन युष्मास्वहं करिष्ये ।
आसनादिकमत्र स्याद्विश्वेदेवाविवर्जितम् ॥ १,२१९.१ ॥

वृद्धिश्राद्धं प्रवक्ष्यामि पूर्ववत्तद्विशेषकम् ।
जातपुत्रमुखदर्शनादौ वृद्धि श्राद्धं पूर्वाभिमुखेषु दक्षिणोपवीतिषु सयवबदरकुशैर्देवतीर्थेन नमस्कारान्तेन दक्षिणोपचारेण कर्तव्यम् ॥ १,२१९.२ ॥

दक्षिणजानु गृहीत्वा अद्यास्मदीयामुकवृद्धौ अमुकगात्राणामस्मत्प्रपितामहीपितामहीमातृणाममुकदेवीनाममुकगोत्राणां श्राद्धे कर्तव्ये वसुसत्यसंज्ञकानां विश्वेषां देवानां श्राद्धं सिद्धान्नेनयुष्मासु मया कर्तव्यमिति देवब्राह्मणामन्त्रणम् ।
ओं करिष्यसीति तेनोक्त इत्थमेवापरदेवब्राह्मणामन्त्रणम् ॥ १,२१९.३ ॥

ततः अमुकवृद्धौ अमुकगोत्राया मत्प्रपितामह्या अमुकदेव्या नान्दीमुख्याः श्राद्धं सिद्धान्नेन युष्मासु मया कर्तव्यमिति प्रपितामहीब्राह्मणामन्त्रणम् ।
करिष्यामीति तेनोक्ते इत्थमेव प्रमातामह्यादिब्राह्माणमन्त्रणम् ॥ १,२१९.४ ॥

देवपितृसर्वदेवब्राह्मणं श्राद्धकरणानुज्ञापनम् ।
आसने ओं विश्वेदेवास आगत शृणुताम इमंठ इवम् ।
तं बर्हिर्निषीदत ।
ओं विश्वेदेवाः शृणुतेमं इवं ये मे अन्तरिक्षे य उदद्यविष्ट ।
पे अग्निजिह्वा उतवा यदत्रा आसाद्यास्मिन्बर्हिषि मादयध्वम् ।
ओं आगच्छन्तु इति विश्वेदेवावाहनंगन्धादिदानम् ।
अच्छिद्रावधारणवाचनम् ॥ १,२१९.५ ॥

ततः प्रपितामहीप्रभृतीनामनुज्ञापनमासनदानं गन्धादिदानञ्च अच्छिद्रावधारणवाचनम् ।
इत्थं पितामह्याः मातुः ।
ततः प्रपितामहादीनां अनुज्ञापनम् ।
आसनमावाहनङ्गन्धादिदानंवृद्धप्रमातामहादीनामनुज्ञापनादिकरणम् ।
ओं वसुसत्यसंज्ञकेभ्यो देवेभ्य एतदन्नं सघृतं सपानीयं सव्यञ्जनं सवदरं सदधि प्रतिषिद्धवर्जितं नम इति अन्नसङ्कल्पनम् ।
ओं अमुकगोत्रे ! मत्पितामहमुकदेवि नान्दीमुखि ! एतदन्नं सबदरं सदधि नमः ।
एवं मातामहप्रभातामहेभ्यः ॥ १,२१९.६ ॥

एकोद्दिष्टं पुरोऽवश्यं तद्विशेषं वदे शृणु ।
प्रथमं निमन्त्रणं पादप्रक्षालनमासनम् ।
अद्य अमुकगोत्रस्य मत्पितुरमुकदेवशर्मणः प्रतिसांवत्सरिकमेकोद्दिष्टश्राद्धं सिद्धान्नेन युष्मास्वहं करिष्ये ।
श्राद्धकरणानुज्ञापनमासनं गन्धादिदानमन्नानुकल्पनम् ।
जप्यं निवीती ।

उत्तराभिमुखीभूयातिथिश्राद्धं कुर्यात् ॥ १,२१९.७ ॥

ततस्मृप्तिं ज्ञात्वा दक्षिणाभिमुखीवामोपवीती उच्छिष्टसमीपे अग्निदग्धा इति अन्नविकिरणम् ।
अमुकगोत्रमत्पितरमुकदेवशर्मन्नेतत्ते जलमवनेनिक्ष्व ये चात्र त्वामनुयाश्च त्वामनुतस्मै ते स्वधा इति रेखोपरि वारिधारादानम् ।
शेषं पूर्ववत् ॥ १,२१९.८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकोनविंशाधिकद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २२०
ब्रह्मोवाच ।
सपिण्डीकरणं वक्ष्ये पूर्णेऽब्दे तत्क्षयेऽहनि ।
कृतं सम्यग्यथाकाले प्रेतादेः पितृलोकदम् ॥ १,२२०.१ ॥

सपिण्डीकरणं कुर्यादपराह्ने तु पूर्ववत् ।
पितामहादिब्राह्मणनिमन्त्रणम् ।
ओं पुरूरवार्द्रवसंज्ञकेभ्यो देवेभ्य एतदासनं नमः ।
वामपार्श्वे चासनदानम् ।
आवाहनम् ।
ततः पितामहप्रपितामहवृद्धप्रपितामहानां सपत्नीकानां श्राद्धमहं करिष्ये इत्यनुज्ञाग्रहणंपात्रत्रयकरणंपात्रोपरि कुशं दत्त्वा पात्रान्तरेण पिधाय अच्छिद्रावधारणान्तं परिसमाप्य तथैव पितुरपि सपत्नीकस्य प्रेतपदान्तनाम्ना श्राद्धकरणानुज्ञापनं देवपात्राच्छिद्रावधारणम् ॥ १,२२०.२ ॥

तत्परिसमाप्य पितामहप्रपितामहवृद्धप्रपितामहक्रमेण पात्राणां मनाक्चालनम् ।
उद्घाटनं कृत्वाओं ये समानाः समनसः पितरो यमराज्ये ।
तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ।
ओं ये समानाः समनसो जीवा जीवेषु मामकाः ।
तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः ।
एतन्मन्त्रद्वयेन पितृपात्रोदकं पितामहप्रपितामहपात्रे वृद्धप्रपितामहपात्रं परित्यज्य पितामहप्रपितामहयोरुदकं पवित्रञ्च पितृपात्रे क्षिपेत् ॥ १,२२०.३ ॥

ततः पितृब्राह्मणहस्ते पात्रस्थपवित्रदानम् ।
पात्रस्थपुष्पेण शिरसः करपादार्चनं ब्राह्मणहस्तेऽन्य जलदानंहस्ताभ्यां पात्रमुत्थाप्य ओं या दिव्येति पठित्वा ओं अमुकगोत्र मत्पितामह अमुकदेवशर्मन् सपत्नीक एष ते अर्घ्यः स्वधा ।
पितृपात्रेणैव पितामहब्राह्मणहस्ते स्तोकमर्घ्योदकं सपवित्रङ्गृहीत्वास्तोकमुदकं पिण्डसेचनार्थं पात्रान्तरेण पिधाय पितृब्राह्मणवामपार्श्वे दक्षिणाग्रकुशोपरि पितृभ्यः स्तानमसीति अधोमुखपात्रस्थपनम् ॥ १,२२०.४ ॥

पितामहप्रपितामहवृद्धप्रपितामहेभ्यो गन्धादिदानमग्नौकरणम् ।
अवशिष्टान्नं प्रपितामहादिपात्रे क्षिपेत् ।
पितामहपात्राभिमन्त्रणपर्यन्तक्रमेण समाप्यापि ब्राह्मणपात्राभिमन्त्रणम् ।
अङ्गुष्ठनिवेशनं तिलविकरणं कृत्वा अमुकगोत्र एतत्ते अन्नं सघृतं सपानीयं सव्यञ्जनं प्रतिषिद्धवर्जितं ये चात्र त्वा मनुयाश्च त्वामनु तस्मै ते स्वधा इति ॥ १,२२०.५ ॥

ततो देवप्रभृतिभ्य अपोशानं दद्यात् ।
अतिथिप्राप्तौ अतिथिश्राद्धं कुर्यात् ।
अस्मिन्नवसरे विकिरणम् ।
पितामाहदौ प्रश्नं कृत्वा पितृब्राह्मणमों स्वदितं भवद्भिरिति प्रश्नः ।
ओं अमुकगोत्र मत्पितः अमुकशर्मन् सपत्नीक एष ते पिण्डो ये चात्रत्वामनुयाश्च त्वामनु तस्मै स्वधेति

पिण्डपात्रमच्छिद्रमस्तु ।
ततः सङ्कल्प सिद्धिवाचनं समाप्य पिण्डं द्विधा कृत्वा ये समानाः सुमनस इति मन्त्रद्वयं पठित्वा
पितामहवृद्धप्रपितामहपात्रेषु क्षिपेत् ।
पिण्डेषु गन्धादिकं दत्त्वा पिण्डचालनम् ।
अतिथिब्राह्मणे स्वदितादिप्रश्नः ।
ब्राह्मणानामाचमनम् ।
भुक्तिक्रमेण ताम्बूलदानम् ।
सुप्रोक्षितमस्तु शिवा आपः सन्तुवृद्धप्रपितामहक्रमेण ब्राह्मणहस्ते जलदानम् ।
गोत्रस्याक्षय्यमस्तु पितृब्राह्मणहस्ते उपतिष्टतामिति सतिजलदानम् ॥ १,२२०.६ ॥

अघोराः पितरः सन्तु अस्त्विवत्युक्ते स्वधां वाचयिण्य इति पितामाहदिब्राह्मणानुज्ञापनम् ॥ १,२२०.७ ॥

ओं वाच्यतां इत्युक्ते ओं पितामहादिभ्यः स्वधोच्यताम् ।
अस्तु स्वधेत्युक्ते पितृब्राह्मण पितृभ्यः स्वधोच्यतामिति ।
अस्तु स्वधेत्युक्ते ओं ऊर्जं वहन्तीरिति दक्षिणाभिमुखवारिधारात्यागः ।
ओं विश्वेदेवा अस्मिन् यज्ञे प्रीयन्तामिति देवब्राह्मणहस्ते ओं यवोदकदानम् ।
ओं देवताभ्य इति त्रिर्जपः ॥ १,२२०.८ ॥

पिण्डपात्राणि चालयित्वा आचम्य पितामहादिभ्यो दक्षिणां दत्त्वा ततः पितृ ब्राह्मणाय आशिषो मे प्रदीयन्तामित्याशीः प्रार्थनम् ।
प्रतिगृह्यतामित्युक्ते दातारो नोऽभिवर्धन्तामिति पात्रमुत्तानं कृत्वा वाजे वाजेद्दविसर्जनम् ।
अभिरण्यतामिति पितृब्राह्मणविसर्जनम् ॥ १,२२०.९ ॥

सपिण्डीकरणश्राद्धं व्यासप्रोक्तं मया तव ।
श्राद्धं विष्णुः श्राद्धकर्ता फलं श्राद्धादिकं हरिः ॥ १,२२०.१० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्राद्धानुष्ठानं नामविंशाधिकद्विशततमोऽध्यायः

ब्रह्मोवाच ।
धर्मसारमहं वक्ष्ये संक्षेपाच्छ्रुणु शङ्कर ।
भुक्तिमुक्तिप्रदं सूक्ष्मं सर्वपापविनाशनम् ॥ १,२२१.१ ॥

श्रुतं धर्मं बलं धैर्यं सुखमुत्साहमेव च ।
शोको हरति वै नृणां तस्माच्छोकं परित्यजेत् ॥ १,२२१.२ ॥

कर्मदाराः कर्मलोकाः कर्मसम्बन्धिबान्धवाः ।
कर्माणि प्रेरयन्तीह पुरुषं सुखदुः खयोः ॥ १,२२१.३ ॥

दानमे परो धर्मो दानात्सर्वमवाप्यते ।
दानाःत्स्वर्गश्च राज्यञ्च दद्याद्दनं ततो नरः ॥ १,२२१.४ ॥

एकतो दानमेवाहुः समग्रवरदक्षिणम् ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥ १,२२१.५ ॥

तपसा ब्रह्मचर्येण यज्ञैः स्नानेन वा पुनः ।
धर्मस्य नाशका ये च ते वै निरयगामिनः ॥ १,२२१.६ ॥

ये च होमजपस्नानदेवतार्चनतत्पराः ।
सत्यक्षमादयायुक्तास्ते नराः स्वर्गगामिनः ॥ १,२२१.७ ॥

न दाता सुखदुः खानां न च हर्तास्ति कश्चन ।
भुञ्जते स्वकृतान्येव दुः खानि च सुखानि च ॥ १,२२१.८ ॥

धर्मार्थं जीवितं येषां दुर्गाण्यतितरन्ति ते ।
सन्तुष्टः को न शक्नोति फलमूलैश्च वर्तितुम् ॥ १,२२१.९ ॥

सर्व एव हि सौख्येन सङ्कटान्यवगाहते ।
इदमेव हि लोभस्य कार्यं स्या दतिदुष्करम् ॥ १,२२१.१० ॥

लोभात्क्रोधः प्रभवति लोभाद्द्रोहः प्रवर्तते ।
लोभान्मोहश्च माया च मानो मत्सर एव च ॥ १,२२१.११ ॥

रागद्वेषानृतक्रोधलोममोहमदोज्झितः ।
यः स शान्तः परं लोकं याति पापविवर्जितः ॥ १,२२१.१२ ॥

देवता मुनयो नागा गन्धर्वा गुह्यका हर ।
धार्मिकं पूजयन्तीह न धनाढ्यं न कामिनम् ॥ १,२२१.१३ ॥

अनन्तबलवीर्येण प्रज्ञया पौरुषेण वा ।

अलभ्यं लभते मर्त्यस्तत्र का परिवेदना ॥ १,२२१.१४ ॥

सर्वसत्त्वदयालुत्वं सर्वेन्द्रियविनिग्रहः ।
सर्वत्रानित्यबुद्धित्वं श्रेयः परमिदं स्मृतम् ॥ १,२२१.१५ ॥

पश्यन्निवाग्रतो मृत्युं यो धर्मं नाचरेन्नरः ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ १,२२१.१६ ॥

भ्रूणहा ब्रह्महा गोघ्नः पितृहा गुरुतल्पगः ।
भूमिं सर्वगुणोपेतां दत्त्वा पापैः प्रमुच्यते ॥ १,२२१.१७ ॥

न गोदानात्परं दानं किञ्चिदस्तीति मे मतिः ।
या गौर्न्यायार्जिता दत्ता कृत्स्नं तारयते कुलम् ॥ १,२२१.१८ ॥

नान्नदानात्परं दानं किञ्चिदस्ति वृषध्वज ! ।
अन्नेन धार्यते सर्वं चराचरमिदं जगत् ॥ १,२२१.१९ ॥

कन्यादानं वृषोत्सर्गस्तीर्थसेवा श्रुतं तथा ।
हस्त्यश्वरथदानानि मणिरत्नवसुन्धराः ॥ १,२२१.२० ॥

अन्नदानस्य सर्वाणि कलां नार्हन्ति षोडशीम् ।
अन्नात्प्राणा बलं तेजश्चान्नाद्वीर्यं धृतिः स्मृतिः ॥ १,२२१.२१ ॥

कूपवापीतडागादीनारामांश्चैव कारयेत् ।
त्रिसप्तकुलमुद्धृत्य विष्णुलोके महीयते ॥ १,२२१.२२ ॥

साधूनां दर्शनं पुण्यं तीर्थादपि विशिष्यते ।
कालेन तीर्थं फलति सद्यः साधुसमागमः ॥ १,२२१.२३ ॥

सत्यं दमस्तपः शौचं सन्तोषश्च क्षमार्जवम् ।
ज्ञानं शमो दया दानमेष धर्मः सनातनः ॥ १,२२१.२४ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे धर्मसारकथनं नामैकविंशाधिकद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २२२
ब्रह्मोवाच ।
प्रायश्चित्तादि वक्ष्येऽहं नरकौघविमर्दनम् ।
मक्षिका विप्रुषो नारी भुवि तोयं हुताशनः ।
मार्जारो नकुलश्चैव शुचीन्येतानि नित्यशः ॥ १,२२२.१ ॥

यः शूद्रोच्छिष्टसंस्पृष्टं प्रमादाद्भक्षयेद्द्विजः ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ १,२२२.२ ॥

विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कदाचन ।
स्नानं जप्यञ्च कर्तव्यं दिनस्यान्ते च भोजनम् ॥ १,२२२.३ ॥

अन्नं समक्षिकाकेशं शुध्येद्वान्तेन तत्क्षणात् ।
यश्च पाणितले भुङ्क्ते अङ्गुल्या बाहुना च यः ॥ १,२२२.४ ॥

अहोरात्रेण शुध्येत पिबेद्यदि न वार्युत ।
पीतशेषन्तु यत्तोयं वामहस्तेन मद्यवत् ॥ १,२२२.५ ॥

चर्ममध्यगतं तोयमशुचि स्यान्न तत्पिबेत् ।
अन्त्यजातिरविज्ञातो निवसेद्यस्य वेश्मनि ॥ १,२२२.६ ॥

चान्द्रायणं पराकं वा द्विजातीनां विशोधनम् ।
प्राजापत्यन्तु शूद्रस्य पश्चाज्ज्ञाते तथापरे ॥ १,२२२.७ ॥

यस्तत्र भुङ्क्ते पक्वान्नं कृच्छ्रार्धं तस्य दापयेत् ।
तेषामपि च यो भुङ्क्ते कृच्छ्रपादो विधीयते ॥ १,२२२.८ ॥

रजकानाञ्च शैलू षवेणुचर्मोपजीविनाम् ।
एतदन्नञ्च यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥ १,२२२.९ ॥

चाण्डालकूपभाण्डेषु अज्ञानाच्चेत्पिबेज्जलम् ।
कुर्यात्सान्तपनं विप्रस्तदर्धञ्च विशः स्मृतम् ॥ १,२२२.१० ॥

पादं शूद्रस्य दातव्यमज्ञानादन्त्यवेश्मनि ।
प्रायश्चित्तं त्रिकृच्छ्रं स्यात्पराकमन्त्यजागतौ ॥ १,२२२.११ ॥

अन्त्यजोच्छिष्टभुक्च्छुध्येद्द्विजश्चान्द्रायणेन च ।
चाण्डालन्नं यदा भुङ्क्ते प्रमादादैन्दवञ्चरेत् ॥ १,२२२.१२ ॥

क्षत्त्रजातिः सान्तपनं षड्द्विरात्रं परे तथा ।
एकवृक्ष तु चण्डालः प्रमादाद्ब्राह्मणो यदि ।
फलं भक्षयते तत्र अहोरात्रेण शुध्यति ॥ १,२२२.१३ ॥

भुक्त्वोपविष्टोऽनाचान्तश्चण्डालं यदि संस्पृशेत् ।
गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत् ॥ १,२२२.१४ ॥

चाण्डालश्वपचैर्वापि विण्मूत्रे तु कृते द्विजाः ।
प्रायश्चित्तं त्रिरात्रं स्यात्पराकश्चान्त्यजागतौ ॥ १,२२२.१५ ॥

अकामतः स्त्रियो गत्वा पराकस्तत्र साधकः ।
अन्त्यजातिप्रसूतस्य प्रायश्चित्तं न विद्यते ॥ १,२२२.१६ ॥

मद्यादिदुष्टभाण्डेषु यादपः पिबति द्विजः ।
कृच्छ्रपादेन शुध्येद्वै पुनः संस्कारकर्मणा ॥ १,२२२.१७ ॥

ये प्रत्यवसिता विप्रा वज्राग्निपवनादिषु ।
अन्नपानादि संगृह्य चिकीर्षन्ति गृहान्तरम् ॥ १,२२२.१८ ॥

चारयेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि वै ।
जातकर्मादिसंस्कारं वसिष्ठो मुनिरब्रवीत् ॥ १,२२२.१९ ॥

प्राजापत्यादिभिर्द्रष्टा स्त्री शुध्येत्तु द्विभोजनात् ।
उच्छिष्टोच्छिष्टसंस्पृष्टंशुना शूद्रेण वा द्विजः ॥ १,२२२.२० ॥

उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ।
वर्णबाह्येन संस्पृष्टः पञ्चरात्रेण वै तदा ॥ १,२२२.२१ ॥

अदुष्टाः सन्तता धाराः वातोद्धूताश्च रेणवः ।
स्त्रियो बालाश्च वृद्धाश्च न दुष्यन्ति कदाचन ॥ १,२२२.२२ ॥

नित्यमास्यं शुचि स्त्रीणां शकुन्तैः पातितं फलम् ।
प्रस्त्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥ १,२२२.२३ ॥

उदके चोदकस्थं तु स्थलेषु स्थलजं शुचि ।
पादौ स्थाप्यौ च तत्रैव आचान्तः शुचितामियात् ॥ १,२२२.२४ ॥

शुध्येत्तद्भस्मना कांस्यं सुरया यन्न लिप्यते ।
मूत्रेण सुरया मिश्रं तपनैः खलु शुध्यति ॥ १,२२२.२५ ॥

गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च ।
काकश्वापहतान्येव शुध्यन्ति दश भस्मना ॥ १,२२२.२६ ॥

शूद्रभाजनभोक्ता यः पञ्चगव्यं त्र्युपोषितः ।
उच्छिष्टं स्पृशते विप्रः श्वसूद्रश्चापराधिकः ॥ १,२२२.२७ ॥

उपोषितः पञ्चगव्याच्छुध्येत्स्पृष्ट्वा रजस्वलाम् ।
अनुदकेषु देशेषु चोरव्याघ्राकुले पथि ॥ १,२२२.२८ ॥

कृत्वा मूत्रपुरीषन्तु द्रव्यहस्तो न दुष्यति ।
भूमौनिः क्षैप्य तद्द्रव्यं शौचं कृत्वा समाहितः ॥ १,२२२.२९ ॥

आरनालं दधि क्षीरं तक्रन्तु कृसरञ्च यत् ।
शूद्रादपि च तद्गाह्यं मांसं मधु तथान्त्यजात् ॥ १,२२२.३० ॥

गौडीं पैष्टीञ्च माध्वीकं विप्रादिर्यः सुरां पिबेत् ।
सुरां पिबन्द्विजः शुध्येदग्निवर्णां सुरां पिबन् ॥ १,२२२.३१ ॥

विप्रः पञ्चशतं जप्यं गायत्र्याः क्षत्रियस्य च शतं विप्रश्च भुक्त्वान्नं पानपात्रेण सूतके ॥ १,२२२.३२ ॥

शुचिर्विप्रो दशाहेन क्षत्त्रियो द्वादशाहतः ।
वैश्यः पञ्चदशाहन शूद्रो मासेन शुध्यति ॥ १,२२२.३३ ॥

राज्ञां युद्धेषु यज्ञादौ देशान्तरगतेषु च ।
बाले प्रेते मासिके च सद्यः शौचं विधीयते ॥ १,२२२.३४ ॥

अविवाहा तथा कन्या द्विजो मौञ्जीविवर्जितः ।
जतदन्तश्च बालश्च कुमारी च त्रिवर्षिका ॥ १,२२२.३५ ॥

तेषां शुद्धिस्त्रिरात्रेण गर्भस्त्रावे त्रिरात्रिभिः ।
सूतायां मासतुल्याश्च चतुर्थेऽह्नि रजस्वला ॥ १,२२२.३६ ॥

दुर्भिक्षे राष्ट्रसंपते सूतके मृतकेपि वा ।
नियमाश्च न दुष्यन्ति दानधर्मपरास्तथा ॥ १,२२२.३७ ॥

दक्षिकाले विवाहादौ देवद्विजनिमन्त्रिते ।
पूर्वसंकल्पिते वापि नाशौचं मृतसूतके ॥ १,२२२.३८ ॥

प्रसूतपत्नीसंस्पर्शादशुचिः स्यात्तथा द्विजः ।
अग्नयो यत्र हूयन्ते वेदो वा यत्र पठ्यते ॥ १,२२२.३९ ॥

सततं वैश्वदेवा दि न तेषां सूतकं भवेत् ।
अशुद्धे च गृहे भुक्ते त्रिरात्राच्छुध्यति द्विजः ॥ १,२२२.४० ॥

ब्राह्मणी क्षत्रिया वैश्या शूद्रा चैव रजस्वला ।
अन्योन्यस्पर्शनात्तत्र ब्राह्मणी तु त्रिरात्रतः ॥ १,२२२.४१ ॥

द्विरात्रतः क्षत्रिया च शुद्धा वैश्या ह्युपोषिता ।

शूद्रा स्नानेन शुध्येत्तु द्रोणार्थं न विसर्जयेत् ॥ १,२२२.४२ ॥

काकश्वानोपनी तन्तु अन्नं बाह्यन्तु तत्त्यजेत् ।
सुवर्णाद्भैः समभ्युक्ष्य हुताशे च प्रतापयेत् ॥ १,२२२.४३ ॥

कूपे च पतितान्दृष्ट्वा श्वशृगालौ च मर्कटम् ।
तत्कूपस्योदकं पीत्वा शुध्येद्विप्रस्त्रिभिर्दिनैः ।
क्षत्रियोऽहर्द्वयेनैव वैश्यो वैकाहतः परम् ॥ १,२२२.४४ ॥

अस्थि चर्म मलं वापि मूषिकां यदि कूपतः ।
उद्धृत्य चोदकं पञ्च गव्याच्छुद्ध्येत्तु शोधितम् ॥ १,२२२.४५ ॥

तडागे पुष्करिण्यादौ भस्मादिं पातयेत्तथा ।
षट्कुम्भानप उत्द्धृय पञ्चगव्येन शुध्यति ॥ १,२२२.४६ ॥

स्त्रीरजः पतितं मध्ये त्रिंशत्कुम्भान्समुद्धरेत् ।
अगम्यागमनं कृत्वा मद्यगोमांसभक्षणम् ॥ १,२२२.४७ ॥

शुध्ये च्चान्द्रायणाद्विप्रः प्राजापत्येन भूमिपः ।
वैश्यः सान्तपनाच्छूद्रः पञ्चाहोभिर्विशुध्यति ॥ १,२२२.४८ ॥

प्रायश्चित्ते कृते दद्याद्गवां ब्राह्मणभोजनम् ।
क्रीडायां शयनीयादौ नीलीवस्त्रं न दुष्यति ॥ १,२२२.४९ ॥

नीलीवस्त्रं न स्पृशेच्च नीली च निरयं ब्रजेत् ।
व्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ॥ १,२२२.५० ॥

ऋक्षं दृष्ट्वा विशुध्यन्ते तत्संयोगी च पञ्चमः ।
ततो धेनुशतं दद्याद्ब्राह्मणानान्तु भोजनम् ॥ १,२२२.५१ ॥

ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् ।
न्यस्येदात्मानमग्नौ वा सुसमिद्धे सुरापकः ॥ १,२२२.५२ ॥

स्तेयी सर्वं वेदविदे ब्राह्मणायोपपादयेत् ।
वृषमेकं सहस्रं गां दद्याच्च गुरुतल्पगः ॥ १,२२२.५३ ॥

कृतपापश्चरेद्रोधे द्वौ पादौ बन्धयन्पशोः ।
सर्वकृच्छ्रं निपानेस्यात्कान्तारे गृहदाहतः ॥ १,२२२.५४ ॥

कण्ठाभरणदोषेण कृच्छ्रपादं मृते गवि ।
अस्थिभङ्गं गवां कृत्वा शृङ्गभङ्गमथापि वा ॥ १,२२२.५५ ॥

त्वग्भेदं पुच्छनाशे वा मासार्धं यावकं पिबेत् ।
सर्वं हस्त्यश्वशस्त्राद्यैर्निश्चयं कृच्छ्रमेव तु ॥ १,२२२.५६ ॥

अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ।
पुनः संस्कारमायान्ति त्रयो वर्णा द्विजातयः ॥ १,२२२.५७ ॥

वपनं मेखला दण्डो भैक्ष्यचर्याव्रतानि च ।
निवर्तन्ते द्विजातीनां पुनः संस्कारकर्मणि ॥ १,२२२.५८ ॥

आममांसं घृतं क्षौद्रं स्नेहश्च कालसम्भवाः ।
अन्त्यभाण्डस्थिताः सर्वे निष्क्रान्ताः शुचयः स्मृताः ॥ १,२२२.५९ ॥

तैलादिघृतमाध्वीकं पण्यद्रव्यं द्रवस्तथा ।
एकभक्तं क्रमान्नक्तं एकैकाहमयाचितम् ।
उपवासः पादकृच्छ्रं कृच्छार्धद्विगुणं हि यत् ॥ १,२२२.६० ॥

प्राजापत्यन्तु तत्स्याच्च सर्वपातकनाशनम् ।
कृच्छ्रं सप्तोपवासैश्च महासान्तपनं स्मृतम् ॥ १,२२२.६१ ॥

त्र्यहमुष्णं पिबेच्छापः त्र्यहमुष्णं पयः पिबेत् ।
त्र्यमुष्णं पिबेत्सर्पिस्तप्तकृच्छ्रमघापहम् ॥ १,२२२.६२ ॥

द्वादशाहोपवासेन पराकः सर्वपापहा ।
एकैकं वर्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत् ॥ १,२२२.६३ ॥

पयः काञ्चनवर्णायाः श्वेतवर्णं च गोमयम् ।
गोमूत्रं ताम्रवर्णाया नीलवर्णभवं घृतम् ॥ १,२२२.६४ ॥

दधि स्यात्कृष्णवर्णाया दर्भोदकसमायुतम् ।
गोमूत्रमाषकाण्यष्टौ गोमयस्य चतुष्टयम् ॥ १,२२२.६५ ॥

क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश उच्यते ।
घृतस्य माषकाः पञ्च पञ्चगव्यं मलापहम् ॥ १,२२२.६६ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे प्रायश्चितकथनं नाम द्वाविंशत्यधिकद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २२३
ब्रह्मोवाच मुनिभिश्चरिता धर्मा भक्त्या व्यास मयोदिताः ।
यैर्विष्णुस्तुष्यते चैव सूर्यादिपरिचारणात् ॥ १,२२३.१ ॥

तर्पणेन च होमेन सन्ध्याया वन्दनेन च ।
प्राप्यते भगवान् विष्णुर्धर्मकामार्थमोक्षदः ॥ १,२२३.२ ॥

धर्मो हि भगवान्विष्णुः पूजी विष्णोस्तु तर्पणम् ।
होमः सन्ध्या तथा ध्यानं धारणा सकलं हरिः ॥ १,२२३.३ ॥

सूच उवाच ।
प्रलयं जगतो वक्ष्ये तत्सर्वं शृणु शौनक ।
चतुर्युगसहस्रन्तु कल्पैकाब्जदिनं स्मृतम् ॥ १,२२३.४ ॥

कृतत्रेताद्वापरादियुगावस्था निबोधमे ।
कृते धर्मश्चतुष्पाच्च सत्यं दानं तपो दया ॥ १,२२३.५ ॥

धर्मपाता हरिश्चेति सन्तुष्टा ज्ञानिनो नराः ।
चतुर्वर्षसहस्राणि नरा जीवन्ति वै तदा ॥ १,२२३.६ ॥

कृतान्ते क्षत्त्रियैर्विप्रा विट्शूद्राश्च जिता द्विजैः ।
शूरश्चातिबलो विष्णू रक्षांसि च जघान ह ॥ १,२२३.७ ॥

त्रेतायुगे त्रिपाद्धर्मः सत्यदानदयात्मकः ।
नरा यज्ञपरास्तस्मिंस्तथा क्षत्रोद्भवं जगत् ॥ १,२२३.८ ॥

रक्तो हरिर्नरैः पूज्यो नरा दशशतायुषः ।
तत्र विष्णुर्भोमरथः क्षत्रिया राक्षसानहन् ॥ १,२२३.९ ॥

द्विपादविग्रहो धर्मः पीतताञ्चाच्युते गते ।
चतुः शतायुषो लोका द्विजक्षत्रोद्भवाः प्रजाः ॥ १,२२३.१० ॥

तत्र दृष्ट्वाल्पबुद्धींश्च विष्णुर्व्यासस्वरूपधृक् ।
तदेकन्तु यजुर्वेदं? चतुर्धा व्यभजत्पुनः ॥ १,२२३.११ ॥

शिष्यानध्यापयामास समस्तांस्तान्निबोध मे ।
ऋग्वेदमथ पैलन्त्सामवेदञ्च जैमिनिम् ॥ १,२२३.१२ ॥

अथर्वाणं सुमन्तुन्तु यजुर्वेदं महामुनिम् ।
वैशम्पायनमङ्गन्तु पुराणं सूतमेव च ।
अष्टादशपुराणानि यैर्वेद्यो हरिरेव हि ॥ १,२२३.१३ ॥

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितच्चैव पुराणं पञ्चलक्षणम् ॥ १,२२३.१४ ॥

ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतन्तथा ।
भविष्यन्नारदीयञ्चस्कान्दं लिङ्गं वराहकम् ॥ १,२२३.१५ ॥

मार्कण्डेयं तथाग्नेयं ब्रह्मवैवर्तमेव च ।
कौर्मं मात्स्यं गारुडञ्च वायवीयमनन्तरम् ।
अष्टादशसमुद्दिष्टं ब्रह्माण्डमिति संज्ञितम् ॥ १,२२३.१६ ॥

अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमथापरम् ॥ १,२२३.१७ ॥

तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ।
चतुर्थं शिवधर्माख्यं स्यान्नन्दीश्वरभाषितम् ॥ १,२२३.१८ ॥

दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ।
कापिलं वामनञ्चैव तथैवोशनसेरितम् ॥ १,२२३.१९ ॥

ब्रह्माण्डं वारुणञ्चाथ कालिकाह्वयमेव च ।
माहेश्वरं तथा साम्बमेवं सर्वार्थसञ्चयम् ।
पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥ १,२२३.२० ॥

पुराणं धर्मशास्त्रञ्च वेदास्त्वङ्गानि यन्मुने ।
न्यायः शौनक मीमांसा आयुर्वेदार्थशास्त्रकम् ।
गान्धर्वश्च धनुर्वेदो विद्या ह्यष्टादशस्मृताः ॥ १,२२३.२१ ॥

द्वापरान्तेन च हरिर्गुरुभारमपाहरत् ।
एकपादस्थिते धर्मे कृष्णत्वञ्चाच्युते गते ॥ १,२२३.२२ ॥

जनास्तदा दुराचारा भविष्यन्ति च निर्दयाः ।
सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।
कालसञ्चोदितास्तेऽपि परिवर्तन्त आत्मनि ॥ १,२२३.२३ ॥

प्रभूतञ्च यदा सत्त्वं मनो बुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रतिः ॥ १,२२३.२४ ॥

यदा कर्मसु काम्येषु शक्तिर्यशसि देहिनाम् ।
तदा त्रेता रजोभूतिरिति जानीहि शौनक ॥ १,२२३.२५ ॥

यदा लोभस्त्वसन्तोषो मानो दम्भश्च मत्सरः ।
कर्मणाञ्चापि काम्यानां द्वापरं तद्रजस्तमः ॥ १,२२३.२६ ॥

यदा सदानृतं तन्द्रा निद्रा हिंसादिसाधनम् ।
शोकमोहौ भयं दैन्यं स कलिस्तमसि स्मृतः ॥ १,२२३.२७ ॥

यस्मिञ्जनाः कामिनः स्युः शश्वत्कटुकभाषिणः ।
दस्यूत्कृष्टा जनपदा वेदाः पाषण्डदूषिताः ॥ १,२२३.२८ ॥

राजानश्च प्रजाभिक्षाः शिश्नोदरपराजिताः ।
अव्रता वटवोऽशौचा भिक्षवश्च कुटुम्बिनः ॥ १,२२३.२९ ॥

तपस्विनो ग्रामवासाः न्यासिनो ह्यर्थलोलुपाः ।
ह्रस्वकाया महाहाराश्चौरास्ते साधवः स्मृताः ॥ १,२२३.३० ॥

त्यक्ष्यन्ति भृत्याश्च पतिं तापसस्त्यक्ष्यति व्रतम् ।
शूद्राः प्रतिग्रहिष्यन्ति वैश्या व्रतपरायणः ॥ १,२२३.३१ ॥

उद्विग्नाः सन्ति च जनाः पिशाचसदृशाः प्रजाः ।
अन्यायभोजनेनाग्निदेवतातिथिपूजनम् ॥ १,२२३.३२ ॥

करिष्यन्ति कलौ प्राप्ते न च पित्र्योदकक्रियाम् ।
स्त्रीपराश्च जनाः सर्वे शूद्रप्रायाश्च शौनक ॥ १,२२३.३३ ॥

बहुप्रजाल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः ।
शिरः कण्डूयनपरा आज्ञां भेत्स्यन्ति भर्त्सिताः ॥ १,२२३.३४ ॥

विष्णुं न पूजयिष्यन्ति पाषण्डोपहता जनाः ।
कलेर्दोषनिधेर्विप्रा अस्ति ह्येको महागुणः ॥ १,२२३.३५ ॥

कीर्तनादेव कृष्णस्य महाबन्धं परित्यजेत् ।
कृते यद्ध्यायतो विष्णुं त्रेतायां जपतः फलम् ॥ १,२२३.३६ ॥

द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ।
तस्माद्ध्येयो हरिर्नित्यं गेयः पूज्यश्च शौनक ॥ १,२२३.३७ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे युगधर्मकथनं नाम त्रयोविंशत्यधिकद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २२४
सूत उवाच ।
चतुर्युगसहस्रान्ते ब्राह्मो नैमित्तिको लयः ।
अनावृष्टिश्च कल्पान्ते जायते शतवार्षिकी ॥ १,२२४.१ ॥

उतिष्ठन्ति तदा रौद्रा दिवि सप्त दिवाकराः ।
ते तु पीत्वा जलं सर्वं शोषयन्ति जगत्त्रयम् ॥ १,२२४.२ ॥

भूर्भुवः स्वर्महर्लोकं चराचरं जनस्तथा ।
विष्णुश्च रुद्रो भूत्वासौ पातालानि दहत्यधः ॥ १,२२४.३ ॥

विष्णुर्देहेत्त्रिलोकञ्चि मुखान्मेघान् सृजत्यलम् ।
वर्षन्ते वै वर्षशतं नानावर्णा महाघनाः ॥ १,२२४.४ ॥

विष्णुरूपःशतं वाति वर्षाणां वायुरूर्जितः ।
विष्णुरे कार्णवी भूते वर्षे ब्रह्मस्वरूपधृक् ।
शेतेऽनन्तासने विष्णुर्नष्टे स्थावरजङ्गमे ॥ १,२२४.५ ॥

सुप्त्वा वर्षसहस्रं स जगद्भूयोऽसृजद्धरिः ।
अथ प्राकृतिकं वक्ष्ये प्रलयं शृणु शौनक ॥ १,२२४.६ ॥

पूर्णे संवत्सरशते संहृत्य सकलं जगत् ।
ब्रह्माणं न्यस्य देहे हि मुक्तो योगबलैर्हरिः ॥ १,२२४.७ ॥

ये गता ब्रह्मणः स्थानं तेऽपि यान्ति परं पदम् ।
अनावृष्ट्यर्कसम्पन्ना आसन्मेघास्तथा द्विज ।
शतं वर्षाणि वर्षद्भिर्मेघैरण्डं प्रपूर्यते ॥ १,२२४.८ ॥

अन्तर्गतेन तोयेन भिन्नमण्डं जगत्पतेः ।
पूर्णे ब्रह्मायुषि गते भिद्यतेऽम्भसि लीयते ॥ १,२२४.९ ॥

एवं सा जगदाधारा तोये चोर्वो प्रलीयते ।
आपस्तेजसि लीयन्ते तेजो वायौ प्रलीयते ॥ १,२२४.१० ॥

वायुः खे खञ्च भूतादौ विशते च तदा महान् ।
महान्प्रपद्यतेऽव्यक्तं प्रकृतिः पुरुषे परे ॥ १,२२४.११ ॥

शतवर्षं हरिः शेते सृजत्यथ दिनगमे ।
अव्यक्तादिक्रमेणैव व्यक्तीभूतं चराचरम् ॥ १,२२४.१२ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नैमित्तिकप्रलयोनाम चतुर्विंशत्यधिकद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २२५
सूत उवाच ।
आध्यात्मिकादितापांस्त्रीञ्ज्ञात्व संस्राचक्रवित् ।
उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ॥ १,२२५.१ ॥
संसारचक्रं वक्ष्येऽहमादाबुत्क्रान्तिकालतः ।
यद्विना पुरुषार्थो न लीनः स्यात्परमात्मनि ॥ १,२२५.२ ॥
ऊर्ध्ववासी नरस्त्यक्त्वा देहमन्यत्प्रपद्यते ।
नीयतेद्वादशाहेन यमस्य यमपूरुषैः ॥ १,२२५.३ ॥
तत्र यद्वान्धवास्तोयं प्रयच्छन्ति तिलैः सह ।
यच्च पिण्डं प्रयच्छन्ति यमलोके तदश्नुते ॥ १,२२५.४ ॥
गतश्च नरकं पापात्स्वर्गं याति स्वपुण्यतः ।
पापकृद्याति नरकं पुण्यकृद्याति वै दिवम् ॥ १,२२५.५ ॥
स्वर्गाच्च नरकात्त्यक्तः स्त्रीणां गर्भे भवत्यपि ।
नाभिभूतञ्च तस्यैव याति बीजद्वयं हि तत् ॥ १,२२५.६ ॥
कललं बुद्ब्रुदमयं ततः शोणितमेव च ।
पेश्याः पलसमोऽण्डः स्यादङ्कुरं तत उच्यते ॥ १,२२५.७ ॥
उपाङ्गान्यङ्गुलीनेत्रनासास्यश्रवणानि च ।
आवहं याति चाङ्गेभ्यस्तत्परन्तु नखादिकम् ॥ १,२२५.८ ॥
त्वचो रोमाणि जायन्ते केशाश्चैव ततः परम् ।
नरश्चाधोमुखः स्थित्वा दशमे च सः जायते ॥ १,२२५.९ ॥
ततस्तु वैष्णवी माया वृणोत्यत्यन्तमोहिनी ।
बालत्वं त्वथ कौमारं यौवनं वृद्धतामपि ॥ १,२२५.१० ॥
ततश्च मरणं तत्तद्धर्मामाप्नोति मानवः ।
एवं संसारचक्रेऽस्मिन् भ्राम्यते घटीयन्त्रवत् ॥ १,२२५.११ ॥
नरकात्प्रतिमुक्तस्तु पापयोनिषु जायते ।
पतितात्प्रतिगृह्याथ अधोयोनिं व्रजेदबुधः ॥ १,२२५.१२ ॥
नरकात्प्रतिमुक्तस्तु कृमिर्भवति याचकः ।
उपाध्यायव्यलीकं तु कृत्वा श्वा भवति द्विज ॥ १,२२५.१३ ॥
तज्जायां मनसा वाञ्छंस्तदद्रव्यं वाप्यसंशयम् ।
गर्दभोजायते जन्तुर्मित्रस्यैवापमानकृत् ॥ १,२२५.१४ ॥
पितरौ पीडयित्वा तु कच्छपत्वञ्च जायते ।
भुर्तुः पिण्डमुपाश्वस्तो वञ्जयित्वा तमेव यः ॥ १,२२५.१५ ॥
सोऽपि मोहसमापन्नो जायते वानरो मृतः ।

न्यासापहर्ता नरकाद्विमुक्तो जायते कृमिः ॥ १,२२५.१६ ॥
असूयकश्च नरकान्मुक्तो भवति राक्षसः ।
विश्वासहर्ता च नरो मीनयोनौ प्रजायते ॥ १,२२५.१७ ॥
यवधान्यानि संहृत्य जायते मूषको मृतः ।
परदाराभिमर्शात्तु वृको घोरोऽभिजायते ॥ १,२२५.१८ ॥
भ्रातृभार्याप्रसंगेन कोकिलो जायते नरः ।
गुर्वादिभार्यागमनाच्छूकरो जायते नरः ॥ १,२२५.१९ ॥
यज्ञदानविवाहानां विघ्नकर्ता भवेत्कृमिः ।
देवतापितृविप्राणामदत्त्वा योऽन्नमश्नुते ॥ १,२२५.२० ॥
प्रमुक्तो नरकाद्वापि वायसः सन्प्रजायते ।
ज्येष्ठभ्रात्रपमानाच्च क्रौञ्चयोनौ प्रजायते ॥ १,२२५.२१ ॥
शूद्रस्तु ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ।
तस्यामपत्यमुत्पाद्य काष्ठान्तः कटीको भवेत् ॥ १,२२५.२२ ॥
कृतघ्नः कृमिकः कीटः पतङ्गो वृश्चिकस्तथा ।
अशस्त्रं पुरुषं हर्ता नरः सञ्जायते खरः ॥ १,२२५.२३ ॥
कृमिः स्त्रीवधकर्ता च बालहन्ता च जायते ।
भोजनञ्चोरयित्वा तु मक्षिका जायते नरः ॥ १,२२५.२४ ॥
हृत्वाज्यञ्चैव मार्जारस्तिलहृच्चैव मूषकः ।
घृतं हृत्वा च नकुलः काको मद्गुरमामिषम् ॥ १,२२५.२५ ॥
मधु हृत्वा नरो दंशपूपं हृत्वा पिपीलिकः ।
अपो हृत्वा तु पापात्मा वायसः सम्प्रजायते ॥ १,२२५.२६ ॥
हृते काष्ठे च हारीतः कपोतो वा प्रजायते ।
हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते ॥ १,२२५.२७ ॥
कार्पासिके हृते क्रौञ्चो वह्निहर्ता बकस्तथा ।
मयूरो वर्णकं हृत्वा शाकपत्रञ्च जायते ॥ १,२२५.२८ ॥
जीवञ्जीवकतां याति रक्तवस्त्वपहृन्नरः ।
छुछुन्दरिः शुभान्गन्धाञ्छशं हृत्वा शशो भवेत् ॥ १,२२५.२९ ॥
षण्डाः कलापहरणे काष्ठहृत्तृणकीटकः ।
पुष्पं हृत्वा दरिद्रस्तु पङ्गुर्याचकहृन्नरः ॥ १,२२५.३० ॥
शाकहर्ता च हारीतस्तोयहर्ता च चातकः ।
गृहहृन्नरकान्गत्वा रौरवादीन्सुदारुणान् ॥ १,२२५.३१ ॥
तृणगुल्मलतावल्लीत्वग्घारी तरुतां व्रजेत् ।
एष एव क्रमो दृष्टो गोसुवर्णादिहारिणाम् ॥ १,२२५.३२ ॥

विद्यापहारी मूकः स्याद्गत्वा च नरकान्बहन् ।
असमिद्धे हुते चाग्नौ मन्दाग्निः खलु जायते ॥ १,२२५.३३ ॥
परनिन्दा कृतघ्नत्वं परसीमाभिघातनम् ।
नैष्ठुर्यं निर्घृणत्वञ्च परदारोपसेवनम् ॥ १,२२५.३४ ॥
परस्वहरणाशौचं देवतानां च कुत्सनम् ।
निकृत्य बन्धनं नृणां कार्पण्यञ्च नृणां वधः ।
उपलक्षणाद्विजानीयान्मुक्तानां नरकादनु ॥ १,२२५.३५ ॥
दया भूतेषु संवादः परलोकं प्रति क्रिया ।
सत्यं हितार्थमुक्तिश्च वेदप्रामाण्यदर्शनम् ॥ १,२२५.३६ ॥
गुरुदेवर्षिसिद्धर्षिसेवनं साधुसंयमः ।
सत्क्रियाष्वसनं मैत्री स्वर्गस्य लक्षणं विदुः ।
अष्टाङ्गयोगविज्ञानात्प्राप्नोत्यात्यन्तिकं फलम् ॥ १,२२५.३७ ॥
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे कर्मविपाकादिकथनं नाम पञ्चविंशत्यधिकद्विशततमोऽध्यायः

सूत उवाच वक्ष्ये साङ्गं महायोगं भुक्तिमुक्तिकरं परम् ।
सर्वपापप्रशमनं भक्त्यानुपठितं शृणु ॥ १,२२६.१ ॥

ममेति मूलं दुः खस्य न ममेति निवर्तनम् ।
दत्तात्रेयो ह्यलर्काय इममाह महामतिः ॥ १,२२६.२ ॥

अहमित्यङ्कुरोत्पन्नो ममेति स्कन्धवान्महान् ।
गृहक्षेत्राणि शाखाश्च यत्र दाराभिपल्लवः ॥ १,२२६.३ ॥

धनधान्ये महापत्रे पापमूलोऽतिदुर्गमः ।
विधिवत्सुखशान्त्यर्थं जातोऽज्ञानमहातरुः ॥ १,२२६.४ ॥

छिन्नो विद्याकुठारेण ते गता लयमीश्वरे ।
प्राप्य ब्रह्मरसं पीतं नीरजस्कमकण्टकम् ॥ १,२२६.५ ॥

प्राप्नुवन्ति पराः प्राज्ञाः सुखनिर्वृतिमेव च ।
मूर्तेन्द्रियलयं नूनं न त्वं राजन्न चाप्यहम् ॥ १,२२६.६ ॥

न तन्मात्रादिकं वाचा नैवान्तः करणं तथा ।
कं वा पश्यसि राजेन्द्र प्रधानमिदमावयोः ॥ १,२२६.७ ॥

मृतः परेऽह्नि क्षेत्रज्ञः संजातोऽयं गुणात्मकः ।
एकत्वेऽपि पृथग्भावस्तथा क्षेत्रात्मनो नृप ॥ १,२२६.८ ॥

ज्ञानपूर्ववियोगोऽसौ ज्ञाने नष्टे च योगिनः ।
सा मुक्तिर्ब्रह्मणा चैक्य मनैक्यं प्राकृतैर्गुणैः ॥ १,२२६.९ ॥

तद्गृहं यत्र वसति तद्भोज्यं येन जीवति ।
यन्मुक्तये तदेवोक्तं ज्ञानाज्ञाने न चान्यथा ॥ १,२२६.१० ॥

उपभोगेन पुण्याना मपुण्यानाञ्च पार्थिव ।
कर्तव्यानाञ्च नित्यानां क्षयन्त्वकरणात्तथा ॥ १,२२६.११ ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमाः पञ्चाथ नियमाः शौचं द्विविधमीरितम् ॥ १,२२६.१२ ॥

सन्तोषस्तपसा शान्तिर्वासुदेवार्चनं दमः ।
आसन पद्मकाद्युक्तं प्राणायामो मरुज्जयः ॥ १,२२६.१३ ॥

प्रत्येकं त्रिविधः सोऽपि पूरकुम्भकरेचकैः ।
लघुर्यो दशमात्रस्तु द्विगुणः स तु मध्यमः ॥ १,२२६.१४ ॥

त्रिगुणाभिस्तु मात्राभिरुत्तमः स उदाहृतः ।
जपध्यानयुतौ गर्भो विपरीतस्त्वर्भकः ॥ १,२२६.१५ ॥

प्रथमे नजयेत्स्वप्नं मध्यमेन च वेपथुम् ।
विपाकं हि तृतीयेन जातान्दोषास्त्वनुक्रमात् ॥ १,२२६.१६ ॥

आसनस्थन्तुयुञ्जीत कृत्वा च प्रणवं हृदी ।
पार्ष्णिभ्यां लिङ्गवृषणौ स्पर्शन्नकाग्रमानसः ॥ १,२२६.१७ ॥

रजसा तमसो वृत्तिं सत्त्वेन रजसस्तथा ।
निरुध्य निश्चलो भूत्वा स्थितो युञ्जीत योगवित् ॥ १,२२६.१८ ॥

इन्द्रियाणीन्द्रियार्थेभ्यः प्राणादीनम्न एव च ।
निगृह्य समवायेन प्रत्याहार मुपक्रमेत् ॥ १,२२६.१९ ॥

प्राणायामा दशाष्टौ च धारणा सा विधीयते ।
द्वे धारणे स्मृतो योगो योगिभिस्तत्त्वदर्शिभिः ॥ १,२२६.२० ॥

प्राङ्नाड्यां हृदये चात्र तृतीया च तथोरसि ।
कण्ठे मुखे ना सिकाग्रे नेत्रे भ्रूमध्यमूर्धसु ॥ १,२२६.२१ ॥

किञ्चित्तस्मात्परस्मिंश्च धारणा दशधा स्मृता ।
दशैता धारणाः प्राप्य प्राप्नोत्यक्षररूपताम् ॥ १,२२६.२२ ॥

यथाग्निरग्नौ संक्षिप्तस्तथात्मा परमात्मनि ।
ब्रह्मरूपं महापुण्यमोमित्येकाक्षरं जपेत् ॥ १,२२६.२३ ॥

अकारश्च तथोकारो मकारश्चाक्षरत्रयम् ।
एतास्तिस्त्रस्ततो मात्राः सत्त्वराजसतामसाः ॥ १,२२६.२४ ॥

निर्गुणा योगिगम्याद्यार्धमात्रा परा स्थिता ।
गान्धारीति च विज्ञेया गान्धारस्वरसंश्रया ।
इत्येतदक्षरं ब्रह्म परमोङ्कारसंज्ञितम् ॥ १,२२६.२५ ॥

अहं ब्रह्म परं ज्योतिः स्थूलदेहविवर्जितम् ।
अहं ब्रह्म परं ज्योतिर्जरामरणवर्जितम् ॥ १,२२६.२६ ॥

अहं ब्रह्म परं ज्योतिः पृथिव्या मलवर्जितम् ।
अहं ब्रह्म परं ज्योतिर्वाय्वाकाशविवर्जितम् ॥ १,२२६.२७ ॥

अहं ब्रह्म परं ज्योतिः सूक्ष्मदेहविवर्जितम् ।

अहं ब्रह्मपरं ज्योतिः स्थानास्थानविवर्जितम् ॥ १,२२६.२८ ॥

अहं ब्रह्म परं ज्योतिर्गन्धमात्रविवर्जितम् ।
अहं ब्रह्म परं ज्योतिः श्रोत्रत्वक्परिवर्जितम् ॥ १,२२६.२९ ॥

अहं ब्रह्म परं ज्योतिर्जिह्वाघ्राणविवर्जितम् ।
अहं ब्रह्म परं ज्योतिः प्राणापानविवर्जितम् ॥ १,२२६.३० ॥

अहं ब्रह्म परं ज्योतिर्व्यानोदानविवर्जितम् ।
अहं ब्रह्म परं ज्योतिरज्ञानपरिवर्जितम् ॥ १,२२६.३१ ॥

अहं ब्रह्म परं ज्योतिस्तुरीयं परमं पदम् ।
देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितम् ॥ १,२२६.३२ ॥

नित्यशुद्धबुद्धंमुक्तमहामानन्दमद्वयम् ।
अहं ब्रह्म परं ज्योतिर्ज्ञानरूपो विमुक्तये ॥ १,२२६.३३ ॥

सूत उवाच ।
इत्यष्टाङ्गो मया योग उक्तः शौनक मुक्तिदः ।
नित्यनैमित्तिकं गत्वा लयं प्राकृतबन्धनाः ॥ १,२२६.३४ ॥

उत्पद्यन्ते हि संसारे नैकं यात्वा परात्मनाम् ।
विमुच्यते विमुक्तश्च ज्ञानादज्ञानमोहितः ॥ १,२२६.३५ ॥

ततो नं म्रियते दुः खी न रोगी न च वन्धवान् ।
न पापैर्युज्यते योगी नरके न विपच्यते ॥ १,२२६.३६ ॥

गर्भवासे स नो दुः खी स स्यान्नारायणोऽव्ययः ।
भक्त्या त्वनन्यया लभ्यो भगवान्भुक्तिमुक्तिदः ॥ १,२२६.३७ ॥

ध्यानेन पूजया जप्यैः सम्यक्स्तोत्रैर्यतव्रतैः ।
यज्ञैर्दानैश्चित्तशुद्धिस्तया ज्ञानञ्च लभ्यते ॥ १,२२६.३८ ॥

प्रणवादिकमन्त्रैश्च जप्यैर्मुक्तिं गता द्विजाः ।
इन्द्रोऽपि परमं स्थानं गन्धर्वाप्सरसो वराः ॥ १,२२६.३९ ॥

प्राप्ता देवाश्च देवत्वं मुनित्वं मुनयो गताः ।
गन्धर्वत्वञ्च गन्धर्वा राजत्वञ्च नृपादयः ॥ १,२२६.४० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेष्टाङ्गयोगकथनं नाम षड्विंशत्यधिकद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २२७
सूत उवाच ।
विष्णुभक्तिं प्रवक्ष्यामि यया सर्वमवाप्यते ।
यथा भक्त्या हरिस्तुष्येत्तथा नान्येन केनचित् ॥ १,२२७.१ ॥

महतः श्रेयसो मूलं प्रसवः पुण्यसन्ततेः ।
जीवितस्य फलं स्वादु नियतं स्मरणं हरेः ॥ १,२२७.२ ॥

तस्मात्सेवा बुधैः प्रोक्ता भक्तिसाधनभूयसी ।
ते भक्ता लोकनाथस्य नामकर्मादिकीर्तने ॥ १,२२७.३ ॥

मुञ्चन्त्यश्रूणि संहर्षाद्ये प्रहृष्टनूरुहाः ।
जगद्धातुर्महेशस्य दिव्याज्ञाचरणा वयम् ॥ १,२२७.४ ॥

इह नित्यक्रियाः कुर्युः स्निग्धा ये वैष्णवास्तु ते ।
ब्रह्माक्षरं न शृण्वन्वै तया भगवतेरितम् ॥ १,२२७.५ ॥

प्रणामपूर्वकं भक्त्या यो वदेद्वैष्णवो हि सः ।
तद्भक्तजनवात्सल्यं पूजनं चानुमोदनम् ॥ १,२२७.६ ॥

तत्कथाश्रवणे प्रीतिरश्रुनेत्राङ्गविक्रियाः ।
येन सर्वात्मना विष्णौ भक्त्या भावो निवेशितः ॥ १,२२७.७ ॥

विप्रेभ्यश्च कृतात्मत्वान्महाभागवतो हि सः ।
विश्वोपकरणं नित्यं तदर्थं सङ्गवर्जनम् ।
स्वयमभ्यर्चनञ्चैव यो विष्णुञ्चोपजीवति ॥ १,२२७.८ ॥

भक्तिरष्टविधा ह्येषा यस्मिन्म्लेच्छोऽपि वर्तते ।
स विप्रेन्द्रो मुनिः श्रीमान्स याति परमां गतिम् ॥ १,२२७.९ ॥

तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा हरिः ।
स्मृतः संभाषितो वापि पूजितो वा द्विजोत्तमः ।
पुनाति भगवद्भक्तश्चण्डालोऽपि यदृच्छया ॥ १,२२७.१० ॥

दयां कुरु प्रपन्नाय तवास्मीति च यो वदेत् ।
अभयं सर्वभूतेभ्यो दद्यादेतद्व्रतं हरेः ॥ १,२२७.११ ॥

मन्त्रजापिसहस्रेभ्यः सर्ववेदान्तपारगः ।
सर्ववेदान्तवित्कोट्यां विष्णुभक्तो विशिष्यते ॥ १,२२७.१२ ॥

एकान्तिनः स्ववपुषा गच्छन्ति परमं पदम् ।
एकान्तेन समो विष्णुस्तस्मादेषां परायणः ॥ १,२२७.१३ ॥

यस्मादेकान्तिनः प्रोक्तास्तद्भागवतचेतसः ।
प्रियाणामपि सर्वेषां देवदेवस्य सुप्रियः ॥ १,२२७.१४ ॥

आपत्स्वपि सदा भस्य भक्तिरव्यभिचारिणा ।
या प्रीतिरधिका विष्णोर्विषयेष्वनपायिनी ॥ १,२२७.१५ ॥

विष्णुं संस्मरतः सा मे हृदयान्नोपसर्पति ।
दृढभक्तोऽपि वेदादिसर्वशास्त्रार्थपारगः ॥ १,२२७.१६ ॥

यो न सर्वेश्वरे भक्तस्तं विद्यात्पुरुषाधमम् ।
नाधीतवेदशास्त्रोऽपि न कृतोऽध्वरसम्भवः ।
यो भक्तिं वहते विष्णौ तेन सर्वं कृतं भवेत् ॥ १,२२७.१७ ॥

यज्वानः क्रतुमुख्यानां वेदानां पारगा अपि ।
न तां यान्ति गतिं भक्ता यां यान्ति मुनिसत्तमाः ॥ १,२२७.१८ ॥

यः कश्चिद्वैष्णवो लोके मिथ्याचारोऽप्यनाश्रमी ।
पुनाति सकलांल्लोकान्सहस्रांशुरिवोदितः ॥ १,२२७.१९ ॥

ये नृशंसा दुरात्मानः पापाचररतास्तथा ।
तेऽपि यान्ति परं स्थानं नारायणपरायणाः ॥ १,२२७.२० ॥

दृढा जनार्दने भक्तिर्यदैवाव्यभिचारिणी ।
तदा कियत्स्वर्गसुखं सैव निर्वाणहेतुका ॥ १,२२७.२१ ॥

भ्राम्यतां तत्र संसारे नराणां कुर्मदुर्गमे ।
हस्तावलम्बने ह्येकं येन तुष्येज्जनार्दनः ।
न शृणोति गुणान्दिव्यान्देवदेवस्य चक्रिणः ।
स मरो बधिरो ज्ञेयः सर्वधर्मबहिष्कृतः ॥ १,२२७.२२ ॥

नाम्नि संकीर्तिते विष्णोर्यस्य पुंसो न जायते ।
शरीरं पुलकोद्भासि तद्भवेत्कुणपोपमम् ॥ १,२२७.२३ ॥

यस्मिन्भक्तिर्द्विजश्रेष्ठ मुक्तिरप्यचिराद्भवेत् ।
निविष्टमनसां पुंसां सर्वथा वृजिनक्षयः ॥ १,२२७.२४ ॥

स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रापन्नन्प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ १,२२७.२५ ॥

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यगव्यवसितो हि सः ॥ १,२२७.२६ ॥

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं स गच्छति ।
विप्रेन्द्र प्रतिजानीहि विष्णुभक्तो न नश्यति ॥ १,२२७.२७ ॥

धर्मार्थकामः किं तस्य मुक्तिस्तस्य करे स्थिता ।
समस्तजगतां मूलं यस्य भक्तिः स्थिरा हरौ ॥ १,२२७.२८ ॥

दैवी ह्येषा गुणमयी हरेर्माया दुरत्यया ।
तमेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १,२२७.२९ ॥

किं यज्ञाराधने पुंसा शिष्यते हरिमेधसाम् ।
भक्त्यैवाराध्यते विष्णुर्नान्यत्तत्रोपकारकम् ॥ १,२२७.३० ॥

न दानैर्विविधैर्दत्तैः पुष्पैर्नैवानुलेपनैः ।
तोषमेति महात्मासौ यथा भक्त्या जनार्दनः ॥ १,२२७.३१ ॥

संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे ।
कदाचित्केशवे भक्तिस्तद्भक्तैर्वा समागमः ॥ १,२२७.३२ ॥

पत्रेषु पुष्पेषु फलेषु तोयेष्वकष्टलभ्येषु सदैव सत्सु ।
भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यैकलाभे क्रियते प्रयत्नः ॥ १,२२७.३३ ॥

आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामाहः ।
वैष्णवोस्मत्कुले जातः स नः सन्तारयिष्यति ॥ १,२२७.३४ ॥

अज्ञानिनः सुखरे समधिक्षिपन्तो यत्पापिनोऽपि शिशुपालसुयोधनाद्याः ।
मुक्तिं गताः स्मरणमात्रविधूतपापाः कः संशयः परमभक्तिमतां जनानाम् ॥ १,२२७.३५ ॥

शरमं तं प्रपन्ना ये ध्यानयोगविवर्जिताः ।
तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥ १,२२७.३६ ॥

भवोद्भवक्लेशशतैर्हतस्तथा परिभ्रमन्निन्द्रियरन्ध्रकैर्हयैः ।
नियम्यतां माधव ! मे मनोहयस्त्वदङ्घ्रिशङ्कौ दृढभक्तिबन्धने ॥ १,२२७.३७ ॥

विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते ।
वेदसिद्धान्तमार्गेषु तन्न जानन्ति मोहिताः ॥ १,२२७.३८ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भगवद्भक्तिविवरणं नाम सप्तविंशत्यधिकद्विशततमोऽध्यायः

सूत उवाच ।

मुक्तिहेतुमनाद्यन्तमजमव्ययमक्षयम् ।

यो नमेत्सर्वलोकस्य नमस्यो जायते नरः ॥ १ ॥

विष्णुमानन्दमद्वैतं विज्ञानं सर्वगं प्रभुम् ।

प्रणमामि सदा भक्त्या चेतसा हृदयालयम् ॥ २ ॥

योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशः शुभाशुभम् ।

तं सर्वसाक्षिणं विष्णुं नमस्ये परमेश्वरम् ॥ ३ ॥

शक्तेनापि नमस्कारः प्रयुक्तश्चक्रपाणये ।

संसारतृणवर्गाणामुद्वेजनकरो हि सः ॥ ४ ॥

कृष्णे स्फुरज्जलधरोदरचारुकृष्णे लोकाधिकारपुरुषे परमप्रमेये ।

एको हि भावगुणमात्रदृढप्रणामः सद्यः श्वपाकमपि साधयितुं सशक्तः ॥ ५ ॥

प्रणम्य दण्डबद्भूमौ नमस्कारेण योर्ऽचयेत् ।

स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥ ६ ॥

दुर्गसंसारकान्ताराकूपारेऽपि प्रधावताम् ।

एकः कृष्णे नमस्कारो मुक्त्या तांस्तारयिष्यति ॥ ७ ॥

आसीनो वा शयानो वातिष्ठन् वा यत्र तत्र वा ।

नमो नारायणायेति मन्त्रैकशरणो भवेत् ॥ ८ ॥

नारायणेति शब्दोऽस्ति वागस्ति वशवर्तिनी ।

तथापि नरके मूढाः पतन्तीति किमद्भुतम् ॥ ९ ॥

चतुर्मुखो वा यदि कोटिवक्त्रो भवेन्नरः कोपि विशुद्धचेताः ।

स वै गुणानामयुतैकदेशं वदेन्न वा देववरस्य विष्णोः ॥ १० ॥

व्यासाद्या मुनयः सर्वे स्तुवन्तो मधुसूदनम् ।

मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् ॥ ११ ॥

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।

पुमान् विमुच्यते सद्यः सिंहत्रस्तो मृगा यथा ।

बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ १२ ॥

स्वप्नेऽपि नाम स्पृशतोऽपि पुंसः क्षयं करोत्यक्षयपापराशिम् ।
प्रत्यक्षतः किं पुनरत्र पुंसा प्रकीर्तिते नाम्नि जनार्दनस्य ॥ १३ ॥
नमः कृष्णाच्युतानन्तवासुदेवेत्युदीरितम् ।
यैर्भावभावितैर्विप्रन ते यमपुरं ययुः ॥ १४ ॥
क्षयो भवेद्यथा वह्नेस्तमसो भास्करोदये ।
तथैव कलुषौघस्य नामसंकीर्तनाद्धरेः ॥ १५ ॥
क्व नाकपृष्ठगमनं पुनरायाति न क्षयम् ।
गच्छतां दूरमध्वानं कृष्णमूर्छितचेतसाम् ॥ १६ ॥
पाथेयं पुण्डरीकाक्षनामसंकीर्तनं हरेः ।
संसारसर्पसंदष्टविषचेष्टैकभेषजम् ।
कृष्णेति वैष्णवं क्षान्तं जप्त्वा मुक्तो भवेन्नरः ॥ १७ ॥
ध्यायन् कृते जपेन्मन्त्रैस्त्रेतायां द्वापरेर्ऽचयन् ।
यदाप्नोति तदाप्नोति तदाप्नोति कलौ संस्मृत्यकेशवम् ॥ १८ ॥
जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम् ।
संसारसागरं तीर्त्वा स गच्छेद्वैष्णवं पदम् ॥ १९ ॥
विज्ञातदुष्कृतिसहस्रसमावृतोऽपिश्रेयः परन्तु परिशुद्धिम भीप्समानः ।
स्पप्नान्तरे न हि पुनश्च भवं स पश्येन्नारायणस्तुतिकथापरमो मनुष्यः ॥ २० ॥
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुभक्तिविवरणं नामाष्टाविंशत्युत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २२९
सूत उवाच ।
अशेषलोकनाथस्य सारमाराधनं हरेः ।
दद्यातु पुरुषसूक्तेण यः पुष्पाण्यप एव च ॥ १,२२९.१ ॥

अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ।
यो न पूजयते विष्णुं तं विद्याद्ब्रह्मघातकम् ॥ १,२२९.२ ॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
तं यो न ध्यायते विष्णुं स विष्ठायां क्रिमिर्भवेत् ॥ १,२२९.३ ॥

नरके पच्यमानस्तु यमेन परिभाषितः ।
किन्त्वया नार्चितो देवः केशवः क्लेशनाशनः ॥ १,२२९.४ ॥

उदकेनाप्यभावेन द्रव्याणामर्चितः प्रभुः ।
यो ददाति स्वकं लोकं स त्वया किं न चार्चितः ॥ १,२२९.५ ॥

न तत्करोति सा माता न पिता नापि बान्धवः ।
यत्करोति हृषीकेशः सन्तुष्टः श्रद्धयार्चितः ॥ १,२२९.६ ॥

वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥ १,२२९.७ ॥

न दानैर्विविधैर्दत्तैर्न पुष्पैर्नानुलेपनैः ।
तोषमेति महात्मासौ यथा भक्त्या जनार्दनः ॥ १,२२९.८ ॥

सम्पदैश्वर्यमाहात्म्यैः सन्तत्या न च कर्मणा ।
विमुक्तैश्चैकता लभ्या मूलमाराधनं हरेः ॥ १,२२९.९ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुपूजानिरूपणं नामैकोनत्रिशदुत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २३०
सूत उवाच ।
आलोक्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ १,२३०.१ ॥

किं तस्य दानैः किन्तीर्थैः किं तपोभिः किमध्वरैः ।
यो नित्यं ध्यायते देवं नारायणमनन्यधीः ॥ १,२३०.२ ॥

षष्टिस्तीर्थसहस्राणि षष्टिस्तीर्थशतानि च ।
नारायणप्रणामस्य कलां नार्हन्ति षोडशीम् ॥ १,२३०.३ ॥

प्रयश्चित्तान्यशेषाणि तपः कर्माणि यानि वै ।
विद्धि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ १,२३०.४ ॥

कृतपापेऽनुरक्तिश्च यस्य पुंसः प्रजायते ।
प्रायश्चित्तन्तु तस्यैकं हरेः संस्मरणं परम् ॥ १,२३०.५ ॥

मुहूर्तमपि यो ध्यायेन्नारायणमतन्द्रितः ।
सोऽपि स्वर्गतिमाप्नोति किं पुनस्तत्परायणः ॥ १,२३०.६ ॥

जाग्रत्स्वप्नसुषुप्तेषु योगस्थस्य च योगिनः ।
या काचिन्मनसो वृत्तिः सा भवत्यच्युताश्रयात् ॥ १,२३०.७ ॥

उत्तिष्ठन्निपतन्विष्णुं प्रलपन्विविशंस्तथा ।
भुञ्जञ्जाग्रच्च गोविन्दं माधवं यश्च संस्मरेत् ॥ १,२३०.८ ॥

स्वेस्वे कर्मण्यभिरतः कुर्याच्चित्तं जनार्दने ।
एषा शास्त्रानुसारोक्तिः किमन्यैर्बहुभाषितैः ॥ १,२३०.९ ॥

ध्यानमेव परो धर्मो ध्यानमेव परं तपः ।
ध्यानमेव परं शौचं तस्माद्ध्यानपरो भवेत् ॥ १,२३०.१० ॥

नास्ति विष्णोः परं ध्येयं तपो नानशनात्परम् ।
तस्मात्प्रधानमत्रोक्तं वासुदेवस्य चिन्तनम् ॥ १,२३०.११ ॥

यद्दुर्लभं परं प्राप्यं मनसो यन्न गोचरम् ।
तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः ॥ १,२३०.१२ ॥

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ १,२३०.१३ ॥

ध्यानेन सदृशो नास्ति शोधनं पापकर्मणाम् ।

आगामिदेहहेतूनां दाहको योगपावकः ॥ १,२३०.१४ ॥

विनिष्पन्नसमाधिस्तु मुक्तिमत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्मा च योऽचिरात् ॥ १,२३०.१५ ॥

यथाग्निरुद्यतशिखः कक्षं दहति वानिलः ।
तथा चित्तस्थिते विष्णौ योगिना सर्वकिल्बिषम् ॥ १,२३०.१६ ॥

यथाग्नियोगात्कनकममलं संप्रजायते ।
संप्लुष्टो वासुदेवेन मनुष्याणां सदा मलः ॥ १,२३०.१७ ॥

गङ्गास्नानसहस्रेषु पुष्करस्नानकोटिषु ।
यत्पापं निलययाति स्मृते नश्यति तद्धरौ ॥ १,२३०.१८ ॥

प्राणायामसहस्नैस्तु यत्पापं नश्यति ध्रुवम् ।
क्षणमात्रेण तत्पापं हरेर्ध्यानात्प्रणश्यति ॥ १,२३०.१९ ॥

कलिप्रभावाद्दुष्टोक्तिः पाषण्डानां तथोक्तयः ।
न क्रामेन्मानसं तस्य यस्य चेतसि केशवः ॥ १,२३०.२० ॥

सा तिथिस्तदहोरात्रं स योगः स च चन्द्रमाः ।
लग्नं तदेव विख्यातं यत्र संस्मर्यते हरिः ॥ १,२३०.२१ ॥

सा हानिस्तन्महच्छिद्रं सा चार्थजडमूकता ।
चन्मुहूर्तं क्षणो वापि वासुदेवो न चिन्त्यते ॥ १,२३०.२२ ॥

कलौ कृत युगं तस्य कलिस्तस्य कृते युगे ।
हृदि नो यस्य गोविन्दो यस्य चेतसि नाच्युतः ॥ १,२३०.२३ ॥

यस्याग्रतस्तथा पृष्ठे गच्छतस्तिष्ठतोऽपि वा ।
गोविन्दे नियतं चेतः कृतकृत्यः सदैव सः ॥ १,२३०.२४ ॥

वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय वेवेन्द्रत्वादिकं फलम् ॥ १,२३०.२५ ॥

असंत्यज्य च गार्हस्थयं स तप्त्वा च महत्तपः ।
छिनत्ति पौरुषीं मायां केशवार्पितमानसः ॥ १,२३०.२६ ॥

क्षमां कुर्वन्ति क्रुद्धेषु दयां मूर्खेषु मानवाः ।
मुदञ्च धर्मशीलेषु गोविन्दे हृदयस्थिते ॥ १,२३०.२७ ॥

ध्यायेन्नारायणं देवं स्नानदानादिकर्मसु ।

प्रायश्चितेतेषु सर्वेषु दुष्कृतेषु विशेषतः ॥ १,२३०.२८ ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ १,२३०.२९ ॥

कीटपक्षिगणानाञ्च हरौ संन्यस्तचेतसाम् ।
ऊर्ध्वा ह्येव गतिश्चास्ति किं पुनर्ज्ञानिनां नृणाम् ॥ १,२३०.३० ॥

वासुदेवतरुच्छाया नातिशीतातितापदा ।
नरकद्वारशमनी सा किमर्थं न सेव्यते ॥ १,२३०.३१ ॥

न च दुर्वाससः शापो राज्यञ्चापि शचीपतेः ।
हन्तुं समर्थं हि सखे हृत्कृते मधुसूदने ॥ १,२३०.३२ ॥

वदतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म कुर्वतः ।
नापयाति यदा चिन्ता सिद्धां मन्येत धारणाम् ॥ १,२३०.३३ ॥

ध्येयः सदा सवितृमण्डलमध्यवर्तो नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान्मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ १,२३०.३४ ॥

न हि ध्यानेन सदृशं पवित्रमिह विद्यते ।
श्वपचान्नानि भुञ्जानो पापी नैवात्र लिप्यते ॥ १,२३०.३५ ॥

सदा चित्तं समासक्तं जन्तोर्विषयगोचरे ।
यदि नारायणेऽप्येवं को न मुच्येत बन्धनात् ॥ १,२३०.३६ ॥

सूत उवाच ।
विष्णुभक्तिर्यस्य चित्ते कं वा जीवो नमेत्सदा ।
स तारयति चात्मानं तदैव दुरितार्णवात् ॥ १,२३०.३७ ॥

तञ्ज्ञानं यत्र गोविन्दः सा कथा यत्र काशवः ।
तत्कर्म यत्तदर्थाय किमन्यैर्बहुभाषितैः ॥ १,२३०.३८ ॥

सा जिह्वा या हरिं स्तौति तच्चित्तं यत्तदर्पितम् ।
तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥ १,२३०.३९ ॥

प्रणाममीशस्य शिरः फलं विदुस्तदर्चनं पाणिफलं दिवौकसः ।
मनः फलं तद्गुणकर्मचिन्तनं वचस्तु गोविन्दगुणस्तुतिः फलम् ॥ १,२३०.४० ॥

मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः ।
केशवस्मरणादेव तस्य सर्वं विनश्यति ॥ १,२३०.४१ ॥

यत्किञ्चित्कुरुते कर्म पुरुषः साध्वसाधु वा ।
सर्वं नारायणे न्यस्य कुर्वन्नपि न लिम्पति ॥ १,२३०.४२ ॥

तृणादिचतुरास्यान्तं भूतग्रामं चतुर्विधम् ।
चराचरं जगत्सर्वं प्रसुप्तं मायया तव ॥ १,२३०.४३ ॥

यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने विघ्नो यत्र नवा विशेत्कथमपि ब्राह्मोऽपिलोकोऽल्पकः ।
मुक्तिञ्चेतसि संस्थितो जडधियां पुंसां ददात्यव्ययः किञ्चित्रं यदयं प्रयाति विलयं तत्राच्युते कीर्तिते ॥ १,२३०.४४ ॥

अग्निकार्यं जपः स्नानं विष्णोर्ध्यानञ्च पूजनम् ।
गन्तुं दुः खोदधेः कुर्युर्ये च तत्र नरन्ति ते ॥ १,२३०.४५ ॥

राष्ट्रस्य शरणं राजा पितरो बालकस्य च ।
धर्मश्च सर्वमर्त्यानां सर्वस्य शरणं हरिः ॥ १,२३०.४६ ॥

ये नमन्ति जगद्योनिं वासुदेवं सनातनम् ।
न येभ्यो विद्यते तीर्थमधिकं मुनिसत्तम् ॥ १,२३०.४७ ॥

अनर्घरत्नपूजाञ्च कुर्यात्स्वाध्यायमेव च ।
तमेवोद्दिश्य गोविन्दं ध्यायन्नित्यमतन्द्रितः ॥ १,२३०.४८ ॥

शूद्रं वा भगवद्भक्तं निषादं श्वपचं तथा ।
द्विजजाति समंमन्यो न याति नरकं नरः ॥ १,२३०.४९ ॥

आदरेण सदा स्तौति धनवन्तं धनेच्छया ।
तथा विश्वस्य कर्तारं को न मुच्येत बन्धनात् ॥ १,२३०.५० ॥

यथा प्राप्तवनो वह्निर्दहत्यार्द्रमपीन्धनम् ।
तथाविधः स्थितो विष्णुर्योगिनां सर्वकिल्विषम् ॥ १,२३०.५१ ॥

आदीप्तं पर्वतं यद्वन्नाश्रयन्ति मृगादयः ।
तद्वत्पापनि सर्वाणि योगाभ्यासरतं नरम् ॥ १,२३०.५२ ॥

यस्य यावांश्च विश्वासस्तस्य सिद्धिस्तु तावती ।
एतवानेव कृष्णस्य प्रभावः परिमीयते ॥ १,२३०.५३ ॥

विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन् ।
शिशुपालो गतस्तत्त्वं किं पुनस्तत्परायणः ॥ १,२३०.५४ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुमहात्म्यवर्णनं नाम त्रिंशदुत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २३१
सूत उवाच ।
नारसिंहस्तुतिं वक्ष्ये शिवोक्तं शौनकाधुना ।
पूर्वं मातृगणाः सर्वे शङ्करं वाक्यमब्रुवन् ॥ १,२३१.१ ॥

भगवन् भक्षयिष्यामः सदेवासुरमानुषम् ।
त्वत्प्रसादाज्जगत्सर्वं तदनुज्ञातुमर्हसि ॥ १,२३१.२ ॥

शङ्करौवाच ।
भवतीभिः प्रजाः सर्वा रक्षणीया न संशयः ।
तस्माद्घोरतरप्रायं मनः शीघ्रं निवर्त्यताम् ॥ १,२३१.३ ॥

इत्येवं शङ्करेणोक्तमनादृत्य तु तद्वचः ।
भक्षयामासुरव्यग्रास्त्रैलोक्यं सचराचरम् ॥ १,२३१.४ ॥

त्रैलोक्ये भक्ष्यमाणे तु तदा मातृगणेन वै ।
नृसिंहरूपिणं देवं प्रदध्यौ भगवाञ्छिवः ॥ १,२३१.५ ॥

अनादिनिधनं देवं सर्वभूतभवोद्भवम् ।
विद्युज्जिह्वं महादंष्ट्रं स्फुरत्केसरमालिनम् ॥ १,२३१.६ ॥

रत्नाङ्गदं समुकुटं हेमकेसरभूषितम् ।
खोणिसूत्रेण महता काञ्चनेन विराजितम् ॥ १,२३१.७ ॥

नीलोत्पलदलश्यामं रत्ननूपुरभूषितम् ।
तेजसाक्रान्तसकलब्रह्माण्डोदरमण्डपम् ॥ १,२३१.८ ॥

आवर्तसदृशाकारैः संयुक्तं देहरोमभिः ।
सर्वपुष्पैर्योजिताञ्च धारयंश्च महास्त्रजम् ॥ १,२३१.९ ॥

स ध्यातमात्रो भगवान्प्रददौ तस्य दर्शनम् ।
यादृशेन रूपेण ध्यातो रुद्रैस्तु भक्तितः ॥ १,२३१.१० ॥

तादृशेनैव रूपेण दुर्निरीक्ष्येण दैवतैः ।
प्रणिपत्य तु देवेशं तदा तुष्टाव शङ्करः ॥ १,२३१.११ ॥

शङ्कर उवाच ।
नमस्तेऽस्त जगन्नाथ नरसिंहवपुर्धर ।
दैत्येश्वरेन्द्रसंहारिनखशुक्तिविराजित ॥ १,२३१.१२ ॥

नखमण्डलसभिन्नहेमपिङ्गलविग्रह ।
नमोऽस्तु पद्मनाभाय शोभनाय जगद्गुरो ।

कल्पान्ताम्भोदनिर्घोष सूर्यकोटिसमप्रभ ॥ १,२३१.१३ ॥

सहस्रयमसंत्रास सहस्रेन्द्रपराक्रम ।
हसस्त्रधनदस्फीत सहस्रचरणात्मक ॥ १,२३१.१४ ॥

सहस्रचन्दप्रतिम ! सहस्रांशुहरिक्रम ।
सहस्ररुद्रतेजस्क सहस्रब्रह्मसंस्तुत ॥ १,२३१.१५ ॥

सहस्ररुद्रसंजप्त सहस्राक्षनिरीक्षण ।
सहस्रजन्ममथन सहस्रबन्धनमोचन ॥ १,२३१.१६ ॥

सहस्रवायुवेगाक्ष सहस्राज्ञकृपाकर ।
स्तुत्वैवं देवदेवेशं नृसिंहवपुषं हरिम् ।
विज्ञापयामास पुनर्विनयावनतः शिवः ॥ १,२३१.१७ ॥

अन्धकस्य विनाशाय या सृष्टा मातरो मया ।
अनादृत्य तु मद्वाक्यं भक्ष्यन्त्वद्भुताः प्रजाः ॥ १,२३१.१८ ॥

सृष्ट्वा ताश्च न शक्तोऽहं संहर्तुमपराजितः ।
पूर्वं कृत्वा कथं तासां विनाशमभिरोचये ॥ १,२३१.१९ ॥

एवमुक्तः स रुद्रेण नरसिहवपुर्हरिः ।
सहस्रहेवीर्जिह्वाग्रात्तदा वागीश्वरो हरिः ॥ १,२३१.२० ॥

तथा सुरगणान्सर्वान्रौद्रान्मातृगणान्विभुः ।
संहृत्य जगतः शर्म कृत्वा चान्तर्दधे हरिः ॥ १,२३१.२१ ॥

नारसिंहमिदं स्तोत्रं यः पठेन्नियतेन्द्रियः ।
मनोरथप्रदस्तस्य रुद्रस्येव न संशयः ॥ १,२३१.२२ ॥

ध्यायेन्नृसिंहं तरुणार्कनेत्रं सिदाम्बुजातं ज्वलिताग्निवत्क्रम् ।
अनादिमध्यान्तमज पुराणं परापरेशं जगतां निधानम् ॥ १,२३१.२३ ॥

जपेदिदं सन्ततदुः खजालं जहाति नीहारमिवांशुमाली ।
समातृवर्गस्य करोति मूर्तिं यदा तदा तिष्ठति तत्समीपे ॥ १,२३१.२४ ॥

देवेश्वरस्यापि नृसिंहमूर्तेः पूजां विधातुं त्रिपुरान्तकारी ।
प्रसाद्य तं देववरं स लब्ध्वा अव्याज्जगन्मातृगणेभ्य एव च ॥ १,२३१.२५ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नृसिंहस्तोत्रं नामैकत्रिंशदुत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २३२
सूत उवाच ।
कुलामृतं प्रवक्ष्यामि स्तोत्रं यत्तु हरोऽब्रवीत् ।
पृष्टः श्रीनारदेनैव नारदाय तथा शृणु ॥ १,२३२.१ ॥

नारद उवाच ।
यः संकारे सदा द्वन्द्वैः कामक्रोधैः शुभाशुभैः ।
शब्दादिविषयैर्बद्धः पीड्यमानः स दुर्मतिः ॥ १,२३२.२ ॥

क्षणं विमुच्यते जन्तुर्मृत्युसंसारसागरात् ।
भगवञ्छ्रोतुमिच्छामि त्वत्तो हि त्रिपुरान्तक ॥ १,२३२.३ ॥

तस्य तद्वचनं श्रुत्वा नारदस्य त्रिलोचनः ।
उवाच तमृषिं शम्भुः प्रसन्नवदनो हरः ॥ १,२३२.४ ॥

महेश्वर उवाच ।
ज्ञानामृतं परं गुह्यं रहस्यमृषिसत्तम ।
वक्ष्यामि शृणु दुः खघ्नं भवबन्धभयामहम् ॥ १,२३२.५ ॥

तृणादि चतुरास्यान्तं भूतग्रामं चतुर्विधम् ।
चराचरं जगत्सर्वं प्रसुप्तं यस्य मायया ॥ १,२३२.६ ॥

तस्य विष्णो प्रिसादेन यदि कश्चित्प्रबुध्यते ।
स निस्तरति संसारं देवानामपि दुस्तरम् ॥ १,२३२.७ ॥

भोगैश्वर्यमदोन्मत्तस्तत्तत्त्वज्ञानपराङ्मुखः ।
पुत्रदारकुटुम्बेषु मत्ताः सीदन्तिजन्तवः ॥ १,२३२.८ ॥

सर्व एकार्णवे मग्ना जीर्णा वनगजा इव ।
यस्त्वाननं निबध्नाति दुर्मतिः कोशकारवत् ॥ १,२३२.९ ॥

तस्य मुक्तिं न पश्यामि जन्मकोटिशतैरपि ।
तस्मान्नारद सर्वेषां देवानां देवमव्ययम् ।
आराधयेत्सदा सम्यगध्यायेद्विष्णुं मुदान्वितः ॥ १,२३२.१० ॥

यस्तु विश्वमनाद्यन्तमजमात्मनि संस्थितम् ।
सर्वज्ञमचलं विष्णुं सदा ध्यायेत्समुच्यते ॥ १,२३२.११ ॥

देवं गर्भोचितं विष्णुं सदा ध्यायन्विमुच्यते ।
अशिरीरं विधातारं सर्वज्ञानमनोरतिम् ।
अचलं सर्वगं विष्णुं सदा ध्यायन्विमुच्यते ॥ १,२३२.१२ ॥

निर्विकल्पं निराभासं निष्प्रपञ्चं निरामयम् ।
वासुदेवं गुरुं विष्णुं सदा ध्यायन्विमुच्यते ॥ १,२३२.१३ ॥

सर्वात्मकञ्च वै यावदात्मचैतन्यरूपकम् ।
शुभमेकाक्षरं विष्णुं सदा ध्यायन्विमुच्यते ॥ १,२३२.१४ ॥

वाक्यातीतं त्रिकालज्ञं विश्वेशं लोकसाक्षिणम् ।
सर्वस्मादुत्तमं विष्णुं सदा ध्यायन्विमुच्यते ॥ १,२३२.१५ ॥

ब्रह्मादिदेवगन्धर्वैर्मुनिभिः सिद्धचारणैः ।
योगिभिः सेवितं विष्णुं सदा ध्यायन्विमुच्यते ॥ १,२३२.१६ ॥

संसारबन्धनामुक्तिमिच्छंल्लोको ह्यशेषतः ।
स्तुत्वैवं वरदं विष्णुं सदा ध्यायन्विमुच्यते ॥ १,२३२.१७ ॥

संसारबन्धनात्कोऽपि मुक्तिमिच्छन्समाहितः ।
अनन्तमव्ययं देवं विष्णं विश्वप्रतिष्ठितम् ।
विश्वेश्वरमजं विष्णुं संदा ध्यायन्विमुच्यते ॥ १,२३२.१८ ॥

सूत उवाच ।
नारदेन पुरा पृष्ट एवं स वृषभध्वजः ।
येत्तेन तस्मै व्याख्यातं तन्मया कथितं तव ॥ १,२३२.१९ ॥

तमेव सततन्ध्यायन्निर्व्ययं ब्रह्म निष्कलम् ।
अवाप्स्यसि ध्रुवं तात ! शाश्वतं पदमव्ययम् ॥ १,२३२.२० ॥

अश्वमेधसहस्राणि वाजपेयशतानि च ।
क्षणमेकाग्रचित्तस्य कलां नार्हन्ति षोडशीम् ॥ १,२३२.२१ ॥

श्रुत्वा सुरऋषिर्विष्णोः प्राधान्यमिदमीश्वरात् ।
स विष्णुं सम्यगाराध्य सिद्धः पदमवाप्तवान् ॥ १,२३२.२२ ॥

यः पठेच्छृणुयाद्वा पि नित्यमेव स्तवोत्तमम् ।
कोटिजन्मकृतं पापमपि तस्य प्रणश्यति ॥ १,२३२.२३ ॥

विष्णोः स्तवमिदं दिव्यं महादेवेन कीर्तितम् ।
प्रयत्नाद्यः पठेन्नित्य ममृतत्वं स गच्छति ॥ १,२३२.२४ ॥

इति श्रीगारुडे महापुराणे कुलामृतस्तोत्रं नाम द्वात्रिंशदुत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २३३
सूत उवाच ।
स्तोत्रं तत्सं प्रवक्ष्यामि मार्कण्डेयन भाषितम् ।
दामोदरं प्रपन्नोऽस्मि किन्नो मृत्युः करिष्यति ॥ १,२३३.१ ॥

शङ्खचक्रधरं देवं व्यक्तरूपिणमव्ययम् ।
अधोऽक्षजं प्रपन्नोस्मि किन्नो मृत्युः करिष्यति ॥ १,२३३.२ ॥

वराहं वामनं विष्णुं नारसिंहं जनार्दनम् ।
माधवं च प्रपन्नोऽस्मि किन्नो मृत्युः करिष्यति ॥ १,२३३.३ ॥

पुरुषं पुष्करक्षेत्रबीजं पुण्यं जगत्पतिम् ।
लोकनाथं प्रपन्नोऽस्मि किन्नो मृत्युः करिष्यति ॥ १,२३३.४ ॥

सहस्रशिरसं देवं व्यक्ताव्यक्तं सनातनम् ।
महायोगं प्रपन्नोऽस्मि किन्नो मृत्युः करिष्यति ॥ १,२३३.५ ॥

भूतात्मानं महात्मानं यज्ञयोनिमयोनिजम् ।
विश्वरूपं प्रपन्नोऽस्मि किन्नो मृत्युः करिष्यति ॥ १,२३३.६ ॥

इत्युदीरितमाकर्ण्य स्तोत्रं तस्य महात्मनुः ।
अपयातस्ततो मृत्युर्विष्णुदूतैः प्रपीडितः ॥ १,२३३.७ ॥

इति तेन जितो मृत्युर्मार्कण्डेयेन धीमता ।
प्रसन्ने पुण्डरीकाक्षे नृसिंहे नास्तिदुर्लभम् ॥ १,२३३.८ ॥

मृत्य्वष्टकमिदं पुण्यं मृत्युप्रशमनं शुभम् ।
मार्कण्डेयहितार्थाय स्वयं विष्णुरुवाच ह ॥ १,२३३.९ ॥

इदं यः पठते भक्त्या त्रिकालं नियतं शुचिः ।
नाकाले तस्य मृत्युः स्यान्नरस्याच्युतचेतसः ॥ १,२३३.१० ॥

हृत्पद्ममध्ये पुरुषं पुराणं नारायणं शाश्वतमप्रमेयम् ।
विचिन्त्य सूर्यादतिराजमानं मृत्युं स योगि जितवांस्तथैव ॥ १,२३३.११ ॥

इति श्रीगारुडे महापुराणे मार्कण्डेयकृतं मृत्य्वष्टकस्तोत्रं नाम त्रयस्त्रिंशदुत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २३४
सूत उवाच ।
वक्ष्येऽहमच्युतस्तोत्रं शृणु शौनक सर्वदम् ।
ब्रह्मा पृष्टो नारदाय यथोवाच तथा परम् ॥ १,२३४.१ ॥

नारद उवाच ।
यथाक्षयोऽव्ययो विष्णुः स्तोतव्यो वरदो मया ।
प्रत्यहं चार्चनाकाले तथा त्वं वक्तुमर्हसि ॥ १,२३४.२ ॥

ते धन्यास्ते सुजन्मानस्ते हि सर्वसुखप्रदाः ।
सफलं जीवितं तेषां ये स्तुवन्ति सदाच्युतम् ॥ १,२३४.३ ॥

ब्रह्मोवाच ।
मुने स्तोत्रं प्रवक्ष्यामिः वासुदेवस्य मुक्तिदम् ।
शृणु येन स्तुतः सम्यक्पूजाकाले प्रसीददति ॥ १,२३४.४ ॥

ओं नमो (भगवतेः वासुदेवाच नमः सर्वापहारिणे ।
नमो विशुद्धदेहाय नमो ज्ञानस्वरूपिणे ॥ १,२३४.५ ॥

नमः सर्वसुरेशाय नमः श्रीवत्सधारिणे ।
नमश्चर्मासिहस्ताय नमः पङ्कजमालिने ॥ १,२३४.६ ॥

नमो विश्वप्रतिष्ठाय नमः पीताम्बराय च ।
नमो नृसिंहरूपाय वैकुण्ठाय नमोनमः ॥ १,२३४.७ ॥

नमः पङ्कजनाभाय नमः क्षीरोदशायिने ।
नमः सहस्रशीर्षाय नमो नागाङ्गशायिने ॥ १,२३४.८ ॥

नमः परशुहस्ताय नमः क्षत्त्रान्तकारिणे ।
नमः सत्यप्रतिज्ञाय ह्यजिताय नमोनमः ॥ १,२३४.९ ॥

नमस्त्रै लोक्यनाथाय नमश्चक्रधारय च ।
नमः शिवाय सूक्ष्माय पुराणाय नमोनमः ॥ १,२३४.१० ॥

नमो वामनरूपाय बलिराज्यापहारिणे ।
नमो यज्ञवराहाय गोविन्दाय नमोनमः ॥ १,२३४.११ ॥

नमस्ते परमानन्द नमस्ते परमाक्षर ।
नमस्ते ज्ञानसद्भाव नमस्ते ज्ञानदायक ॥ १,२३४.१२ ॥

नमस्ते परमाद्वैत नमस्ते पुरुषोत्तम ।
नमस्ते विश्वकृद्देव नमस्ते विश्वभावन ॥ १,२३४.१३ ॥

नमस्ते स्ताद्विश्वनाथ नमस्तेः विश्वकारण ।
नमस्ते मधुदैत्यघ्न नमस्ते रावणान्तक ॥ १,२३४.१४ ॥

नमस्ते कंसकेशिघ्न नमस्ते कैटभार्दन ।
नमस्ते शतपत्राक्ष नमस्ते गरुडध्वज ॥ १,२३४.१५ ॥

नमस्ते कालनेमिघ्न नमस्ते गरुडासन ।
नमस्ते देवकीपुत्र नमस्ते वृष्णिनन्दन ॥ १,२३४.१६ ॥

नमस्ते रुक्मिणीकान्त नमस्ते दितिनन्दन ।
नमस्ते गोकुलावास नमस्ते गोकुलप्रिय ॥ १,२३४.१७ ॥

जय गोपवपुः कृष्ण जय गोपीजनप्रिय ।
जय गोवर्धनाधार जय गोकुलवर्धन ॥ १,२३४.१८ ॥

जय रावणवीरघ्न जय चाणूरनाशन ।
जय वृष्णिकुलोद्द्योत जय कालीयमर्दन ॥ १,२३४.१९ ॥

जय सत्य जगत्साक्षिन् जय सर्वार्थसाधक ।
जय वेदान्तविद्वेद्य जय सर्वद माधव ॥ १,२३४.२० ॥

जय सर्वाश्रयाव्यक्त जय सर्वग माधव ।
जय सूक्ष्म चिदान्दन जय चित्तनिरञ्जन ॥ १,२३४.२१ ॥

जयस्तेऽस्तु निरालम्ब जय शान्त सनातन ।
जय नाथ जगत्पुष्ट (त्पूज्य) जय विष्णो नमोऽस्तूते ॥ १,२३४.२२ ॥

त्वं गुरुस्त्वं हरे शिष्यस्त्वं दीक्षामन्त्रमण्डलम् ।
त्वं न्यासमुद्रासमयास्त्वं च पुष्पादिसाधनम् ॥ १,२३४.२३ ॥

त्वमाधारस्त्वं ह्यनन्तस्त्वं कूर्मःस्त्वं धराम्बुजम् ।
धर्मज्ञानादयस्त्वं हि वेदिमण्डलशक्तयः ॥ १,२३४.२४ ॥

त्वं प्रभो छलभृद्रामस्त्वं पुनः स खरान्तकः ।
त्वं ब्रह्मर्षिश्चदेवस्त्वं विष्णुः सत्यपराक्रमः ॥ १,२३४.२५ ॥

त्वं नृसिंहः परानन्दो वराहस्त्वं धराधरः ।
त्वं सुपर्णस्तथा चक्रं त्वं गदा शङ्ख एव च ॥ १,२३४.२६ ॥

त्वं श्रीः प्रभो त्वं मुष्टिसत्वं त्वं माला देव शावती ।
श्रीवत्सः कौस्तुभस्त्वं हि शार्ङ्गो त्वं च तथेषुधिः ॥ १,२३४.२७ ॥

त्वं खड्गचर्मणा सार्धं त्वं दिक्पालास्तथा प्रभो ।
त्वं वेधास्त्वं विधाता च त्वं यमस्त्वं हुताशनः ॥ १,२३४.२८ ॥

त्वं धनेशस्त्वमीशानस्त्वमिन्द्रस्त्वमपांपतिः ।
त्वं रक्षोऽधिपतिः साध्यस्त्वं वायुस्त्वं निशाकरः ॥ १,२३४.२९ ॥

आदित्या वसवो रुद्रा अश्विनौ त्वं मरुद्गणाः ।
त्वं दैत्या दानवा नागास्त्वं यक्षा राक्षसाः खगाः ॥ १,२३४.३० ॥

गन्धर्वाप्यरसः सिद्धाः पितरस्त्वं महामराः ।
भूतानि विषयस्त्वं हि त्वमव्यक्तेन्द्रियाणि च ॥ १,२३४.३१ ॥

मनोबुद्धिरहङ्कारः क्षेत्रज्ञस्त्वं हृदीश्वरः ।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः समित्कुशाः ॥ १,२३४.३२ ॥

त्वं वेदी त्वं हरे दीक्षा त्वं यूपस्त्वं हुताशनः ।
त्वं पत्नी त्वं पुरोडाशस्त्वं शाला स्त्रुक्च त्वं स्तुवः ॥ १,२३४.३३ ॥

ग्रावाणः सकलं त्वं हि सदस्यास्त्वं सदाक्षिणः ।
त्वं सूर्पादिस्त्वं च ब्रह्मा मुसलोलूखले ध्रुवम् ॥ १,२३४.३४ ॥

त्वं होता यजमानस्त्वं त्वं धान्यं पशुयाजकः ।
त्वमध्वर्युस्त्वमुद्गाता त्वं यज्ञः पुरुषोत्तमः ॥ १,२३४.३५ ॥

दिक्पातालमहि व्योम द्यौस्त्वं नक्षत्रकारकः ।
देवतिर्यङ्मनुष्येषु जगदेतच्चराचरम् ॥ १,२३४.३६ ॥

यत्किञ्चिद्दृश्यते देव ब्रह्माण्डमखिलं जगत् ।
तव रूपमिदं सर्वं दृष्ट्यर्थं संप्रकाशितम् ॥ १,२३४.३७ ॥

नाथयन्ते परं ब्रह्म दैवेरपि दुरासदम् ।
कस्तञ्जानाति विमलं योगगम्यमतीन्द्रियम् ॥ १,२३४.३८ ॥

अक्षयं पुरुषं नित्यमव्यक्तमजमव्ययम् ।
प्रलयोत्पत्तिरहितं सर्वव्यापिनमीश्वरम् ॥ १,२३४.३९ ॥

सर्वज्ञं निर्गुणं शुद्धमानन्दमजरं परम् ।
बोधरूपं ध्रुवं शान्तं पूर्णमद्वैतमक्षयम् ॥ १,२३४.४० ॥

अवतारेषु या मूर्तिर्विदूरे देव दृश्यते ।
परं भावमजानन्तस्त्वां भजन्ति दिवौकसः ॥ १,२३४.४१ ॥

कथं त्वामीदृशं सूक्ष्मं शक्नोमि पुरुषोत्तम ।
अराधयितुमीशान मनोगम्यमगोचरम् ॥ १,२३४.४२ ॥

इह यन्मण्डले नाथ पूज्यते विधिवत्क्रमैः ।
पुष्पधूपादिभिर्यत्र तत्र सर्वा विभूतयः ॥ १,२३४.४३ ॥

संकर्षणादिभेदेन तव यत्पूजिता मया ।
क्षन्तुमर्हसि तत्सर्वं यत्कृतं न कृतं मया ॥ १,२३४.४४ ॥

न शक्नोमि विभो सम्यक्कर्तुं पूजां यथोदिताम् ।
यत्कृतं जपहोमादि असाध्यं पुरुषोत्तम ॥ १,२३४.४५ ॥

विनिष्पादयितुं भक्त्या अत स्त्वां क्षमयाम्यहम् ।
दिवा रात्रौ च सन्ध्यायां सर्वावस्थासु चेष्टतः ॥ १,२३४.४६ ॥

अचला तु हरे ! भक्तिस्तवाङ्घ्रियुगले मम ।
शरिरे न (ण) तथा प्रीतिर्न च धर्मादिकेषु च ॥ १,२३४.४७ ॥

यथा त्वयि जगन्नाथ प्रीतिंरात्यन्तिकी मम ।
किं तेन न कृतं कर्म स्वर्गमोक्षादिसाधनम् ॥ १,२३४.४८ ॥

यस्य विष्णौ दृढा भक्तिः सर्वकामफलप्रदे ।
पूजां कर्तुं तथा स्तोत्रं कः शक्नोति तवाच्युत ॥ १,२३४.४९ ॥

स्तुतं तु पूजितं मेऽद्य तत्क्षमस्व नमोऽस्तु ते ।
इति चक्रधारस्तोत्रं मया सम्यगुदाहृतम् ।
स्तौहि विष्णुं मुने भक्त्या यदीच्छसि परं पदम् ॥ १,२३४.५० ॥

स्तोत्रेणानेन यः स्तौति पूजाकाले जगद्घुरुम् ॥ १,२३४.५१ ॥

अचिराल्लभते मोक्षं छित्वा संसारबन्धनम् ।
अन्योऽपि यो जपेद्भक्त्या त्रिसन्ध्यं नियतः शुचिः ॥ १,२३४.५२ ॥

इदं स्तोत्रं मुने सोऽपि सर्वकाममवाप्नुयात् ।
पुत्रार्थो लभते पुत्रान्बद्धो मुच्यते बन्धनात् ॥ १,२३४.५३ ॥

रोगाद्विमुच्यते रागी लभते निर्धनो धनम् ।
विद्यार्थो लभते विद्यां भग्यं कीर्तिं च विन्दति ॥ १,२३४.५४ ॥

जाति स्मरत्वं मेधावी यद्यदिच्छति चेतसा ।
स धन्यः सर्ववित्प्राज्ञःस साधुः सर्वकर्मकृत् ॥ १,२३४.५५ ॥

स सत्यवाक्छुचिर्दाता यः स्तौति पुरुषोत्तमम् ।
असंभाष्या हि ते सर्वे सर्वधर्मबहिष्कृताः ॥ १,२३४.५६ ॥

येषां प्रवर्तने नास्ति हरिमुद्दिश्य सत्क्रिया ।
न शुद्धं विद्यते तस्य मनो वाक्च दुरात्मनः ॥ १,२३४.५७ ॥

यस्य सर्वार्थदे विष्णौ भक्तिर्नाव्यभिचारिणी ।
आराध्य विधिवद्देवं हरिं सर्वसुखप्रदम् ॥ १,२३४.५८ ॥

प्राप्नोति पुरुषः सम्यग्यद्यत्प्रार्थयते फलम् ।
कर्म कामादिकं सर्वं श्रद्दधानः सुरोत्तमः ।
असुरादिवपुः सिद्धैर्देयते यस्य नान्तरम् ॥ १,२३४.५९ ॥

सकलमुनिभिराद्यश्चिन्त्यते यो हि शुद्धो निखिलहृदि निविष्टो वेत्ति यः सर्वसाक्षी ।
तमजममृतमीशं वासुदेवं नतोऽस्मि भयमरणविहीनं नित्यमानन्दरूपम् ॥ १,२३४.६० ॥

निखिलभुवन नाथं शाश्वतं सुप्रसन्नं त्वतिविमलविशुद्धं निर्गुणं भवपुष्पैः ।
सुखमुदितसमस्तं पूजयाम्यात्मभावं विशतु हृदयपद्मे सर्वसाक्षी चिदात्मा ॥ १,२३४.६१ ॥

एवं मयोक्तं परमप्रभावमाद्यन्तहीनस्य परस्य विष्णोः ।
तस्माद्विचिन्त्यः परमेश्वरोऽसौ विमुक्तिकामेन नरेण सम्यक् ॥ १,२३४.६२ ॥

बोधस्वरूपं पुरुषं पुराणमादित्यवर्णं विमलं विशुद्धम् ।
सञ्चिन्त्य विष्णुं परमद्वितीयं कस्तत्र योगी न लंय प्रयाति ॥ १,२३४.६३ ॥

इमं स्तवं यः सततं मनुष्यः पठेच्च तद्वत्प्रयतः प्रशान्तः ।
स धूतपाप्मा विततप्रभावः प्रयाति लोकं विततं मुरारेः ॥ १,२३४.६४ ॥

यः प्रार्थयत्यर्थमशेषसौख्यं धर्मं च कामं च तथैव मोक्षम् ।
स सर्वमुत्सृज्य परं पुराणं प्रयाति विष्णुं शरणं वरेण्यम् ॥ १,२३४.६५ ॥

विभुं प्रभुं विश्वधरं विशुद्धमशेषसंसारविनाशहेतुम् ।
यो वासुदेवं विमलं प्रपन्नः स मोक्षमाप्नोति विमुक्तसङ्गः ॥ १,२३४.६६ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेऽच्युतस्तोत्रं नाम चतुस्त्रिंशदुत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २३५
सूत उवाच वेदान्तसाङ्ख्यसिद्धान्तब्रह्मज्ञानं वदाम्यहम् ।
अहं ब्रह्म परं ज्योतिर्विष्णुरित्येव चिन्तयन् ॥ १,२३५.१ ॥

सूर्ये हृद्व्योम्नि वह्नौ च ज्योतिरेकं त्रिधा स्थितम् ।
यथा सर्पिः शीरस्थं गवां न कुरुते बलम् ॥ १,२३५.२ ॥

निर्गतं कर्मसंयुक्तं दत्तं तासां महा बलम् ।
तथा विष्णुः शरीरस्थो न करोति हितं नणाम् ॥ १,२३५.३ ॥

विनाराधनया देवः सर्वगः परमेश्वरः ।
आरुरुक्षुमतीनां तु कर्मज्ञानमुदाहृतम् ॥ १,२३५.४ ॥

आरूढयोगवृक्षाणां ज्ञानं त्यागं परं मतम् ।
ज्ञातुमिच्छति शब्दादीन्रागो द्वेषोऽथ जायते ॥ १,२३५.५ ॥

लोभो मोहः क्रोध एतैर्युक्तः पापं नरश्चरेत् ।
हस्तावुपस्थमुदरं वाक्चतुर्थो चतुष्टयम् ॥ १,२३५.६ ॥

एतत्सुसंयतं यस्य स विप्रः कथ्यते बुधैः (धः) ।
परवित्तं न गृहणाति न हिंसां कुरुते तथा ॥ १,२३५.७ ॥

नाक्षक्रीडारतो यस्तु हस्तौ तस्य सुसंयतौ ।
परस्त्रीवर्जनरतस्तस्योपस्थं सुसंयतम् ॥ १,२३५.८ ॥

अलोलुपमिदं भुङ्क्ते जठरं तस्य संयतम् ।
सत्यं हितं मितं ब्रूते यस्माद्वाक्तस्य संयता ॥ १,२३५.९ ॥

यस्य संयतान्येतानि तस्य किं तपसाध्वरैः ।
ऐक्यं यद्बुद्धिमनसोरिन्द्रियाणां च सर्वदा ॥ १,२३५.१० ॥

सबीजं वापि निर्बीजं ध्यानमेतत्प्रकीर्तितम् ।
भ्रुवोर्मध्ये स्थितां बुद्धिं विषयेषु युनक्ति यः ॥ १,२३५.११ ॥

हन्द्रियाणामुपरमे मनसि ह्यव्यवस्थिते ॥ १,२३५.१२ ॥

स्वप्नान्पश्यत्यसौ जीवो बाह्यानाभ्यन्तरानथ ।
जीवो जाग्रदवस्थायामेवमाहुर्विपाश्चितः ॥ १,२३५.१३ ॥

हृदि स्थितः स तमसा मोहितो न स्मरत्यपि ।
यदा तस्य कुतो वेति सुषुप्तिरिति कथ्यते ॥ १,२३५.१४ ॥

जाग्रतो यस्य नो तन्द्रा न मोहो न भ्रमस्तथा ।
उत्पद्यते न जानाति शब्दार्थविषयान्वशी ॥ १,२३५.१५ ॥

इन्द्रियाणि समाहृत्य विषयेभ्यो मनस्तथा ।
बुद्ध्याहङ्कारमपि च प्रकृत्या बुद्धिमेव च ॥ १,२३५.१६ ॥

संयम्य प्रकृतिं चापि चिच्छक्त्या केवले स्थितः ।
पश्यत्यात्मानि चात्मानमात्मनात्मप्रकाशकम् ॥ १,२३५.१७ ॥

चिद्रूपममृतं शुद्धं निष्क्रियं व्यापकं शिवम् ।
तुरीयायामवस्थायामास्थितोऽसौ न संशयः ॥ १,२३५.१८ ॥

शब्दादयो गुणाः पञ्च सत्त्वाद्याश्च गुणास्त्रयः ।
पुर्यष्टकस्य पद्मस्य पत्राण्यष्टौ च तानि हि ॥ १,२३५.१९ ॥

साम्यावस्था गुणकृता प्रकृतिस्तत्र कर्णिका ।
कर्णिकायां स्थितो देवो देही चिद्रूप एव हि ॥ १,२३५.२० ॥

पुर्यष्टकं परित्यज्य प्रकृतिञ्च गुणात्मिकाम् ।
यदा याति तदा जीवो याति मुक्तिं न संशयः ॥ १,२३५.२१ ॥

प्राणायामो जपश्चैव प्रत्याहारोऽथ धारणा ।
ध्यानं समाधिरित्येते षड्योगस्य प्रसाधकाः ॥ १,२३५.२२ ॥

पापक्षये देवतानां प्रीतिरिन्द्रियसंयमः ।
जपध्यानयुतो गर्भो विपरीतस्त्वगर्भकः ॥ १,२३५.२३ ॥

षट्त्रिंशन्मात्रकः श्रेष्ठश्चतुर्विंशतिमात्रकः ।
मध्यो द्वादशमात्रस्तु ओङ्कारं सततं जपेत् ॥ १,२३५.२४ ॥

वाचके प्रणवे ज्ञाते वाच्यं ब्रह्म प्रसीदति ।
(ओंनमो विष्णवे).षष्ठाक्षरश्च जप्तव्यो गायत्री द्वादशाक्षरी ॥ १,२३५.२५ ॥

सर्वेषामिन्द्रियाणां तु प्रवृतिर्विषयेषु च ।
निवृत्तिर्मनसस्तस्याः प्रत्याहारः प्रकीर्तितः ॥ १,२३५.२६ ॥

इन्द्रियाणीन्द्रियार्थेभ्यः समाहृत्य हितो हि सः ।
सहसा सह बुद्ध्या च प्रत्याहारेषु संस्थितः ॥ १,२३५.२७ ॥

प्राणायामैर्द्वादशभिर्यावत्कालःकृतो भवेत् ।
यस्तावत्कालपर्यन्तं मनो ब्रह्मणि धारयेत् ॥ १,२३५.२८ ॥

तस्यैव ब्रह्मणा प्रोक्तं ध्यानं द्वादश धारणाः ।
तुष्येत नियतो युक्तः समाधिः सोऽभीधीयते ॥ १,२३५.२८*१ ॥

ध्यायन्न चलते यस्य मनोभिध्यायतो भृशम् ॥ १,२३५.२९ ॥

प्राप्यावधिकृतं कालं यावत्सा धारणा स्मृता ।
ध्येये सक्तं मनो यस्य ध्येयमेवानुपश्यति ॥ १,२३५.३० ॥

नान्यं पदार्थं जानाति ध्यानमेतत्प्रकीर्तितम् ।
ध्येये मनो निश्चलतां याति ध्येयं विचिन्तयन् ॥ १,२३५.३१ ॥

यत्तद्ध्यानं परं प्रोक्तं मुनिभिर्ध्यानचिन्तकैः ।
ध्येयमेव हि सर्वत्र ध्याता तन्मयतां गतः ॥ १,२३५.३२ ॥

पश्यति द्वैतरहितं समाधिः सोऽभिधीयते ।
मनः सङ्कल्परहितमिन्द्रियार्थान्न चिन्तयेत् ॥ १,२३५.३३ ॥

यस्य ब्रह्मणि संलीनं समाधिस्थं तदोच्यते ।
ध्यायतः परमात्मानमात्मस्थं यस्य योगिनः ॥ १,२३५.३४ ॥

मनस्तन्मयतां याति समाधिस्थः स कीर्तितः ।
चित्तस्य स्थिरता भ्रान्तिर्दौर्मनस्यं प्रमादता ॥ १,२३५.३५ ॥

योगिनां कथिता दोषा योगविघ्नप्रवर्तकाः ।
स्थित्यर्थं मनसः सर्वं स्थूलरूपं विचिन्तयेत् ॥ १,२३५.३६ ॥

तद्व्रतं निश्चलीभूतं सूय्यस्थं स्थिरतां व्रजेत् ।
न विना परमात्मानं किञ्चिज्जगति विद्यते ॥ १,२३५.३७ ॥

विश्वरूपं तमेवैकमिति ज्ञात्वा विमुञ्चति ।
ओङ्कारं परमं ब्रह्म ध्यायेदब्जस्थितं विभुम् ॥ १,२३५.३८ ॥

क्षेत्रक्षेत्रज्ञरहितं जपेन्मात्रात्रयान्वितम् ।
हृदि सञ्चिन्तयेत्पूर्वं प्रधानं तस्य चोपरि ॥ १,२३५.३९ ॥

तमो रजस्तथा सत्त्वं मण्डलत्रितयं क्रमात् ।
कृष्णरक्तसितं तस्मिन्पुरुषं जीवसंज्ञितम् ॥ १,२३५.४० ॥

तस्योपरि गुणैश्वर्यमष्टपत्रं सरोरुहम् ।
ज्ञानं तु कर्णिका तत्र विज्ञानं केसराः स्मृताः ॥ १,२३५.४१ ॥

वैराग्यनालं तत्कन्दो वैष्णवो धर्म उत्तमः ।

कर्णिकायां स्थितं तत्र जीववन्निश्चलं विभु ॥ १,२३५.४२ ॥

ध्यायेदुरसि संयुक्तमोङ्कारं मुक्तिसाधकम् ।
ध्यायन्यदि त्यजेत्प्राणान्याति ब्रह्म स्वसन्निधिम् ॥ १,२३५.४३ ॥

हरिं संस्थाप्य देहाब्जे ध्यायन्यो गी च भक्तिभाक् ।
आत्मानमात्मना केचित्पश्यन्ति ध्यानचक्षुषः ॥ १,२३५.४४ ॥

सांख्यबुद्ध्या तथैवान्ये योगेनान्ये तु योगिनः ।
ब्रह्मप्रकाशकं ज्ञानं भवबन्धविभेदनम् ॥ १,२३५.४५ ॥

तत्रैकचित्ततायोगो मुक्तिदो नात्र संशयः ।
जितेन्द्रियात्मकरणो ज्ञानदृप्तो हि यो भवेत् ॥ १,२३५.४६ ॥

स मुक्तः कथ्यते योगी परमात्मन्यवस्थितः ।
आसनस्थानविधयो न योगस्य प्रसाधकाः ॥ १,२३५.४७ ॥

विलम्बजनकाः सर्वे विस्तराः परिकीर्तिताः ।
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात् ॥ १,२३५.४८ ॥

योगाभ्यासं प्रकुर्वन्तः पस्यन्त्यात्मानमात्मना ।
सर्वभूतेषु कारुण्यं विद्वेषं विषयेषु च ॥ १,२३५.४९ ॥

गुप्तशिश्नोदरादिश्च कुर्वन्योगी विमुच्यते ।
इन्द्रियैरिन्द्रियार्थांस्तु न जानाति नरो यदा ॥ १,२३५.५० ॥

काष्ठवद्ब्रह्मसंलीनो योगी मुक्तस्तदा भवेत् ।
सर्ववर्णाः श्रियः सर्वाः कृत्वा पापानि भस्मसात् ॥ १,२३५.५१ ॥

ध्यानाग्निना च मेधावी लभते परमां गतिम् ।
मन्थनाद्दृश्यते ह्यग्निस्तद्वद्ध्यानेन वै हरिः ॥ १,२३५.५२ ॥

ब्रह्मात्मनोर्यदैकत्वं स योगश्चोत्तमोत्तमः ।
बाह्यरूपैर्न मुक्तिस्तु चान्तस्थैः स्याद्यमादिभिः ॥ १,२३५.५३ ॥

साङ्ख्यज्ञानेन योगेन वेदान्तश्रवणेन च ।
प्रत्यक्षतात्मनो या हि सा मुक्तिरभिधीयते ।
अनात्मन्यात्मरूपत्वमसतः सत्स्वरूपता ॥ १,२३५.५४ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ब्रह्मविज्ञानस्वरूपणं नाम पञ्चत्रिंशदुत्तरद्विशततमोऽध्यायः

श्रीभगवानुवाच ।
आत्मज्ञानं प्रवक्ष्यामि शृणु नारद तत्त्वतः ।
अद्वैतं साङ्ख्यमित्याहुर्योगस्तत्रैकचित्तता ॥ १,२३६.१ ॥

अद्वैतयोगसम्पन्नास्ते मुच्यन्तेऽतिबन्धनात् ।
अतीतारब्धमागामि कर्म नश्यति बोधतः ॥ १,२३६.२ ॥

सद्विचारकुठारेण च्छिन्नसंसारपादपः ।
ज्ञानवैराग्यतीर्थेन लभते वैष्णवं पदम् ॥ १,२३६.३ ॥

जाग्रत्स्वप्नसुषुप्तं च माया त्रिपुरमुच्यते ।
अत्रैवान्तर्गतं सर्वं शाश्वते नाद्वये पदे ॥ १,२३६.४ ॥

नामरूपक्रियाहीनं सर्वं तत्परमं पदम् ।
जगत्कृत्वेश्वरोऽनन्तं स्वयमत्र प्रविष्टवान् ॥ १,२३६.५ ॥

वेदाहमेतं पुरुषं चिद्रूपं तमसः परम् ।
सोऽहमस्मीति मोक्षाय नान्यः पन्था विमुक्तये ॥ १,२३६.६ ॥

श्रवणं मननं ध्यानं ज्ञानानां चैव साधनम् ।
यज्ञदानतपस्तीर्थवेदैर्मुक्तिर्न लभ्यते ॥ १,२३६.७ ॥

त्यागेन केनचिद्ध्यानपूजाकर्मादिभिर्यथा ।
द्विविधं वेदवचनं कुरु कर्म त्यजेति च ॥ १,२३६.८ ॥

यज्ञादयो विमुक्तानां निष्कामानां विमुक्तये ।
अन्तः करणशुद्ध्यर्थमूचुरेवात्र केचन ॥ १,२३६.९ ॥

एकेन जन्मना ज्ञानन्मुक्तिर्न द्वैतभाविनाम् ।
योगभ्रष्टाः कुयोगाश्च विप्रा योगिकुलोद्भवाः ॥ १,२३६.१० ॥

कर्मणा बध्यते जन्तुर्ज्ञानान्मुक्तो भवाद्भवेत् ।
आत्मज्ञानन्त्वाश्रयेद्वै अज्ञानं यदतोऽन्यथा ॥ १,२३६.११ ॥

यदा सर्वे विमुच्यन्ते कामा येस्यहृदि स्थिताः ।
तदामृतत्वमाप्नोति जीवन्नेव न संशयः ॥ १,२३६.१२ ॥

व्यापकत्वात्कथं याति को याति क्व स याति च ।
अनन्तत्वान्नदेशोऽस्ति अमूर्तित्वाद्गतिः कुतः ॥ १,२३६.१३ ॥

अद्वयत्वान्न कोऽप्यस्ति बोधत्वाज्जडता कुतः ।

एकोद्दिष्टं यदन्यस्य मतिवाग्गतिसंस्थिति (म्) ॥ १,२३६.१४ ॥

कथमाकाशकल्पस्य गतिरागतिसंस्थिति ।
जाग्रत्स्वप्नसुषुप्तं च मायया परिकल्पितम् ॥ १,२३६.१५ ॥

वस्तु तैजसकं प्राज्ञे यत्तु पुण्यमखण्डकम् ।
यथा ते प्रियात्मा नः सर्वेषां च तथा प्रियः ॥ १,२३६.१६ ॥

बोधमार्गे यथा चित्तं सर्वेषां च तथा मते ।
सर्वदा सर्वभूतानां सर्वस्य च महामुने ॥ १,२३६.१७ ॥

नाहमत्रात्मविज्ञानं तस्मात्पूर्णं निरन्तरम् ।
जाग्रत्स्वप्नं तथा वृत्तं सौषुप्तसुखमेव च ॥ १,२३६.१८ ॥

स्मरणं विस्मृतार्थस्य नास्ति चेत्कस्य जायते ।
सत्यमस्तु तथा वाणु अशरीरं परं तथा ॥ १,२३६.१९ ॥

नास्ति चेत्सुखदुः खानां सर्वेषां वेदनं कथम् ।
सदा सर्वत्र सर्वज्ञः सर्वस्य हृदये न येत् ॥ १,२३६.२० ॥

साक्षिभूतः समाश्रित्य को जानाति विचेष्टितम् ।
सत्य ज्ञानानन्त भिन्नं स्यान्नसत्यं ज्ञानतः पृथक् ॥ १,२३६.२१ ॥

नानन्त्यात्पृथगानन्दं नाप्यमानन्दतः पृथक् ।
त्वमेव परमं ब्रह्म सत्यज्ञानादिलक्षणम् ॥ १,२३६.२२ ॥

अहं ब्रह्म परं तत्त्वं ज्ञात्वा त्वखिलविद्भवेत् ।
यथैकमृन्मये ज्ञाते सर्वमेतच्चराचरम् ॥ १,२३६.२३ ॥

यथैकहेममणिना सर्वं हेममयं भवेत् ।
ज्ञानं तथैवमीशेन ज्ञानिनाप्यखिलं जगत् ॥ १,२३६.२४ ॥

यथान्धकारदोषेण रज्जुः सम्यङ्नदृश्यते ।
यथा संमोहदोषेण चात्मा सम्यङ्नदृश्यते ॥ १,२३६.२५ ॥

सर्पधारादिभिर्भेदैरन्यथा वस्तुकल्पनम् ।
व्योमादिना सरूपाद्यैरन्यथात्मा प्रकल्प्यते ॥ १,२३६.२६ ॥

प्रत्यक्षमपि यद्द्रव्यन्दुर्दर्शमिति भाषते ।
व्योमादिना सरूपाद्यैरन्यथा कल्पितैस्तथा ॥ १,२३६.२७ ॥

तथा हि रज्जुरुरगः शुक्तिः कारजतं यथा ।

मृगतृष्णापथायाम्भस्तृप्तिं विष्णो तथा जगत् ॥ १,२३६.२८ ॥

हाहिष्णोद्विजा कथि द्धोहमितिद्द ।
ग्रहनाशात्पुनर्ध्यायन्ब्राहमण्यं मन्यते यथा ॥ १,२३६.२९ ॥

मायाविष्टस्तथा जीवो देहोहमिति मन्यते ।
मायानाशात्पुनः स्वीयरूपं ब्रह्मास्मि मन्यते ॥ १,२३६.३० ॥

ग्रहनाशाद्यथा मान्यजनोक्रूरमवेक्षते ।
स्वरूपदर्शनाच्चायं माया नाशन्तया विना ॥ १,२३६.३१ ॥

अनादित्वं समं द्वाभ्यां स्वरूपं तद्विलक्षणम् ।
एकः सत्यं तथा भागी विचारेण परं मृषा ॥ १,२३६.३२ ॥

अजोपि हि सकृत्प्रेत्य संभवाम्यात्ममायया ।
मायेच्छया द्विधा स स्यात्पतिः पत्नी सुखं जगत् ॥ १,२३६.३३ ॥

अष्टाविंशतिभेदैस्तु त्रैगुण्यं विद्यते पृथक् ।
चतुरशीतिर्लक्ष्यन्ते नरनार्याकृतीनि च ॥ १,२३६.३४ ॥

एषुविश्वं प्रभवति खण्डजं मायया यथा ।
आदावन्ते च सन्त्येते नामरूपक्रियादयः ॥ १,२३६.३५ ॥

सत्तावकल्पनं काले न सन्ति परमार्थतः ।
यथा रथादयः स्वप्ने सन्तो नैव च सत्यतः ॥ १,२३६.३६ ॥

तथा जाग्रदवस्थायां भूतानि न तु सन्निधौ ।
द्वैरूप्यं मायया याति जाग्रत्स्वप्नपदज्ञ (क्ष) योः ॥ १,२३६.३७ ॥

एवमेतत्परं ब्रह्म स्वप्नजाग्रत्पदद्वये ।
सुषुप्तमचलं रूपमद्वयं पदमुच्यते ॥ १,२३६.३८ ॥

मायाविचारसिद्धैव विचारेण विलीयते ।
आपातरहिता सापि कल्पना कालवर्तिनी ॥ १,२३६.३९ ॥

एवं तस्या (दात्या) त्मनादित्यं सिद्धमेकस्य सत्यजा ।
सतोस्तित्वं वसातित्वादस्तित्वासत्यतां ततः ॥ १,२३६.४० ॥

ज्ञानं ततोप्यनन्तो नः पूर्णोन्तः शुकमात्मना ।
न नित्यभावाज्जातोहमकृत्वादमृतोस्म्यहम् ।
दीपवद्धदये ज्योतिरहं ब्रह्मास्मि मुक्तये ॥ १,२३६.४१ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे आत्मज्ञानस्वरूपवर्णनं नाम षट्त्रिंशदुत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २३७

श्रीबगवानुवाच ।
गीतासारं प्रवक्ष्यामि अर्जुनायोदितं पुरा ।
अष्टाङ्गयोगयुक्तात्मा सर्ववेदान्तपारगः ॥ १,२३७.१ ॥

आत्मलाभः परो नान्य अत्मदेहादिवर्जितः ।
हीनरूपादिदेहान्तः करणत्वादिलोचनः ॥ १,२३७.२ ॥

बिज्ञानरहितः प्राणः सुषुप्तौ हि प्रतीयते ।
नाहमात्मा च दुः खादिसंसारादिसमन्वयात् ॥ १,२३७.३ ॥

विधूम इव दीप्तार्चिरादीप्त (दित्य) इव दीप्तिमान् ।
वैद्युतोऽग्निरिवाकाशे हृत्सङ्गे आत्मनात्मनि ॥ १,२३७.४ ॥

श्रोत्रादीनि न पश्यन्ति स्वंस्वमात्मानमात्मना ।
सर्वज्ञः सर्वदर्शो च क्षेत्रज्ञस्तानि पश्यन्ति ॥ १,२३७.५ ॥

यदा प्रकाशते ह्यात्मा पटे दीपो ज्वलन्निव ।
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ॥ १,२३७.६ ॥

यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ।
इन्द्रियाणीन्द्रियार्थांश्च महाभूतानि पञ्चकम् ॥ १,२३७.७ ॥

मनोबुद्धिरहङ्कारमव्यक्तं पुरुषं तथा ।
प्रसंख्याय परंव्याप्तो विमुक्तो बन्धवैर्भवेत् ॥ १,२३७.८ ॥

इन्द्रियग्राममखिलं मनसाभिनिवेश्य च ।
मनश्चैवाप्यहङ्कारे प्रतिष्ठाप्य च पाण्डव ॥ १,२३७.९ ॥

अहं कारं तथा बुद्धौ बुद्धिं च प्रकृतावपि ।
प्रकृतिं पुरुषे स्थाप्य पुरुषं ब्रह्मणि न्यसेत् ॥ १,२३७.१० ॥

अहं बह्म परं ज्योतिः प्रसंख्याय विमुच्यते ।
नवद्वारमिदं गेहं तिसृणां?पञ्चसाक्षिकम् ॥ १,२३७.११ ॥

क्षेत्रज्ञाधिष्ठितं विद्वान्यो वेद स वरः कविः ।
अश्वमेधसहस्राणि वाजपेयशतानि च ।
ज्ञानयज्ञस्य सर्वाणि कलां नार्हन्ति षोच्शीम् ॥ १,२३७.१२ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्रीमद्भगवद्गीतासारनिरूपणं नाम सप्तत्रिंशदुत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २३८
श्रीभगवानुवाच ।
यमश्च नियम.पार्थ आसनं प्राणसंयमः ।
प्रत्याहारस्तथा ध्यानं धारणार्जुन सप्तमी ॥ १,२३८.१ ॥

समाधिरिति चाष्टाङ्गो योग उक्तो विमुक्तये ।
कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ॥ १,२३८.२ ॥

हिंसाविरामको धर्मो ह्याहिंसा परमं सुखम् ।
विधिना या भवेद्धिंसा सा त्वहिंसा प्रकीर्तिता ॥ १,२३८.३ ॥

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥ १,२३८.४ ॥

यच्चद्रव्यापहरणं चौर्याद्वाथ बलेन वा ।
स्तेयं तस्यानाचरणमस्तेयं धर्मसाधनम् ॥ १,२३८.५ ॥

कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ।
सर्वत्र मैथुनत्यागं ब्रह्मचर्यं प्रचक्षते ॥ १,२३८.६ ॥

द्रव्याणामप्यनादानमापत्स्वपि तथेच्छया ।
अपरिग्रहमित्याहुस्तं प्रयत्नेन वर्जयेत् ॥ १,२३८.७ ॥

द्विधा शौचं मृज्जलाभ्यां बाह्य भावादथान्तरात् ।
यदृच्छालाभतस्तुष्टिः सन्तोषः सुखलक्षणम् ॥ १,२३८.८ ॥

मनसश्चैन्द्रियाणां च ऐकाग्र्यं परमं तपः ।
शरीरशोषणं वापि कृच्छ्रचान्द्रायणादिभिः ॥ १,२३८.९ ॥

वेदान्तशतरुद्रीयप्रणवादिजप बुधाः ।
सत्त्वशुद्धिकरं पुंसां स्वाध्यायं परिचक्षते ॥ १,२३८.१० ॥

स्तुतिस्मरणपूजादिवाङ्मनः कायकर्मभिः ।
अनिश्चला हरौ भक्तिरेतदीश्वरचिन्तनम् ।
आसनं स्वस्तिकं प्रोक्तं पद्ममर्धासनं तथा ॥ १,२३८.११ ॥

प्राणः स्वदेहजो वायुरायामस्तन्निरोधनम् ।
इन्द्रियाणां विचरतां विषयेषु त्वसत्स्विव ॥ १,२३८.१२ ॥
श्रीगरुडमहापुराणम् २३९
ब्रह्मोवाच ।
ब्रह्मगीतां प्रवक्ष्यामि यज्ज्ञात्वा मुच्यते भवान् ।
अहंब्रह्मास्मि वाक्योत्थज्ञानान्मोक्षो भवेन्नणाम् ॥ १,२३९.१ ॥

वाक्यज्ञानं भवेज्ज्ञानादहंब्रह्म पदार्थयोः ।
पदद्वयार्थौ द्विविधौ वाच्यौ लक्ष्यौ स्मतौ बुधैः ॥ १,२३९.२ ॥

वाक्यवाच्यश्च शबलो लक्ष्यः शुद्वः प्रकीर्तितः ।
प्राणपिण्डात्मकोः यनचेतसामतुलं न यतु? ॥ १,२३९.३ ॥

तथा वेदैरवाग्रूपमहंशब्देन सेव्यते ।
प्रत्यग्रूनं त्वद्वितीयमहंशब्देन मन्यते ॥ १,२३९.४ ॥

अव्ययानन्दचैतन्यं परोक्षसहितं परम् ।
प्राणपिण्डात्मको योथ स द्वितीयविभागकः ॥ १,२३९.५ ॥

पारोक्ष्येप्रेक्षणो ह्यत्र भागो लक्ष्येत वाह्मा ।
तथा ब्रह्मपदेनैव प्राणपिण्डात्मकारणाम् ॥ १,२३९.६ ॥

निष्ठा परोक्षता चेति परित्यागेन वक्ष्यते ।
अद्वयानन्दचैतन्यं प्रत्यग्ब्रह्मपदेन तु ॥ १,२३९.७ ॥

अद्वयानन्दचैतन्यं लक्षयित्वा स्थितस्य च ।
ब्रह्माहमस्म्यहं ब्रह्म चाहंब्रह्मपदार्थयोः ॥ १,२३९.८ ॥

अहंब्रह्मास्मिवाक्याच्च स्वनुभूतिफलार्थकम् ।
ऐक्यज्ञानं तु हि भवेद्वेदान्ताद्दूरतो ध्रुवम् ॥ १,२३९.९ ॥

ज्ञानादज्ञानकार्यस्य निवृत्त्या मुक्तिरैक्यतः ॥ १,२३९.१० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ब्रह्मगीतासारवर्णनं नामैकोनचत्वारिंशदुत्तरद्विशततमोऽध्यायः

श्रीगरुडमहापुराणम् २३९
श्रीभगवानुवाच ।
सन्नपि ब्रह्म तस्मात्खं मरुत्खाच्च ततोऽनलः ॥ १,२३९.१ ॥

अग्नेरापस्ततः पृथ्वी प्रपञ्चाकृतिसूतिका ।
ततः सप्तदशं लिङ्गं पञ्चकर्मेन्द्रियाणि च ॥ १,२३९.२ ॥

वाक्पाणिपादं पायुश्चाप्युपस्थमथ धीन्द्रियम् ।
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं स्यात्पञ्च वायवः ॥ १,२३९.३ ॥

प्राणोपानः समानश्च व्यानस्तूदान एव च ।
मनोन्तः करणं धीश्च स्यान्मनः संशयात्मकम् ॥ १,२३९.४ ॥

बुद्धिर्निश्चयरूपा तु एतत्सूक्ष्मस्वरूपकम् ।
हिरण्यगर्भमात्मीयसूत्रं तत्कार्यालिङ्गकम् ॥ १,२३९.५ ॥

पञ्चीकृतानि भूतानि ह्यपञ्चीकृतभूततः ।
पञ्चीकृतेभ्यो भूतेभ्यो ब्रह्माण्डं समजायत ॥ १,२३९.६ ॥

लोकप्रसिद्धं स्थूलाख्यं शरीरं चरणादिमत् ।
पञ्चीकृतानि भूतानि तत्कार्यं तत्स्थमेव च ॥ १,२३९.७ ॥

सर्वं शरीरजातं च प्राणिनां स्थूलमीरितम् ।
त्रिधाह्वि परमात्मस्थं शरीरं प्रोच्यते बुधैः ॥ १,२३९.८ ॥

देहद्वयाभिगामी च त्वमथो जीव एकतः ।
स्वभेदवाक्याद्ब्रह्मैव प्रविष्टं देहयोर्द्वयोः ॥ १,२३९.९ ॥

जलार्क्ववद्वदरवज्जीवः प्राणादिधारणः ।
जाग्रत्स्वप्नसुषुप्तीनां साक्षी जीवः स च स्मृतः ॥ १,२३९.१० ॥

जाग्रत्स्वप्नसुषुप्त्याख्यैर्व्यातिरिक्तश्च निर्गुणः ।
निर्गातावयवोसंगो नित्यशुद्धस्वभावकः ॥ १,२३९.११ ॥

परमात्मैव यज्जाग्रत्स्वप्नाद्यैर्यस्त्रिधा मतः ।
अन्तः करणराशेश्चैवान्तः करणःस्थितः ॥ १,२३९.१२ ॥

जाग्रत्स्वप्नसुषुप्तीश्च पश्यतो विकृतिः सदा ।
फलक्रियाकारकयोर्जाग्रदादीन्वदाम्यहम् ॥ १,२३९.१३ ॥

इन्द्रियैरथ विज्ञानं जाग्रत्स्थानमुदीरितम् ।
जाग्रत्संस्कारसंभूतप्रत्ययो विषयार्थिनः ॥ १,२३९.१४ ॥

स्वप्नं सुषुप्तिः करणोपसंघाते धियः (प) स्थित (ति) ।
ब्रह्मणः कारणावस्थायां स्थितिः कालकात्मना ॥ १,२३९.१५ ॥

क्रमतोक्रमतो जीवो जाग्रदादि स पश्यति ।
समाध्यारंभकाले तु पूर्वमेवावधारयेत् ॥ १,२३९.१६ ॥

मुमुक्षावथ संजाते अन्तः करणकेवले ।
विलापयेत्क्षेत्रजातं तत्क्षेत्रं परिशेषयेत् ॥ १,२३९.१७ ॥

पञ्चीकृतेभ्यो भूतेभ्यो भाण्डादि व्यतिरिक्तकम् ।
यथा मृदो घटो भिन्नो नास्ति तत्कार्यतस्तथा ॥ १,२३९.१८ ॥

पञ्चीकृतानि भूतानि अपञ्चीकृतभूततः ।
शंसंति व्यतिरेकेण शिष्टाः सूक्ष्मशरीरकम् ॥ १,२३९.१९ ॥

अपञ्चीकृतभूतेभ्यो न लिङ्गं व्यतिरिक्तकम् ।
पृथ्व्याधारं विना नास्ति विना नास्ति च तेन सा ॥ १,२३९.२० ॥

तेजश्च वायुना नास्ति वायुः खेन विना न हि ।
यद्ब्रह्मणा च खं नास्ति शुद्ध ब्रह्म विना च खम् ॥ १,२३९.२१ ॥

शुद्धभावस्तदा जाग्रत्स्वप्नादीनामसंभवः ।
जीवत्ववर्जितः प्राप्तात्मचैतन्यानुरूपतः ॥ १,२३९.२२ ॥

नित्यं शुद्धं बुद्धमुक्तं सत्यं ब्रह्माद्वितीयकम् ।
तत्त्वंपदान्तौ शिष्टौ च तत्कारो ब्रह्मवाचकः ॥ १,२३९.२३ ॥

उकारश्च अकारश्च मकारोयमृगद्वयः ।
ब्रह्माहमस्म्यहं ब्रह्मज्ञानमज्ञानवर्धनम् ॥ १,२३९.२४ ॥

अयमात्मा परं ज्योतिश्चिन्नामानन्दरूपकः ।
सत्यं ज्ञानमनतं हि त्वमसीति श्रुतीरितम् ॥ १,२३९.२५ ॥

अहं ब्रह्मास्मि निर्लेपमहं ब्रह्मास्मि सर्वगम् ।
योसावादित्यपुरुषसोसावहमनादिमत् ।
गीतासारोर्ऽजुनायोक्तो येन ब्रह्मणि वै लयः ॥ १,२३९.२६ ॥

इति श्रीगारुडे महापुराणे प्रथमांशे आचारकाण्डे ब्रह्मगीतासारो नामेकोनचत्वारिंशदुत्तरद्विशततमोऽध्यायः

हरिरुवाच ।
पुराणं गारुडं रुद्र प्रोक्तं सारं मयातव ।
ब्रह्मादीनां शृण्वतां च भुक्तिमुक्तिप्रदायकम् ॥ १,२४०.१ ॥

विद्याकीर्तिप्रभालक्ष्मीजयारोग्यादिकारकम् ।
यः पठेच्छृणुयाद्रुद्र सर्ववित्स दिवं व्रजेत् ॥ १,२४०.२ ॥

ब्रह्मोवाच ।
इति व्यास मया विष्णोः पुराणं मुक्तिदं श्रुतम् ।
व्यास उवाच ।
श्रुत्वैतद्गारुडं पुण्यं ब्रह्मास्मानित्युवाच ह ॥ १,२४०.३ ॥

दक्षनारद मुख्यादिन् ब्रह्म ध्यान्हरिं गतः ।
मयापि तुभ्यं सूतेन पुराणं कथितं परम् ॥ १,२४०.४ ॥

यच्छ्रुत्वा सर्ववित्प्राप्तकामो ब्रह्म फलं भवेत् ।
विष्णुः सारतमंप्राह गरुडं गारुडं ततः ॥ १,२४०.५ ॥

महासारं धर्मकामधनमोक्षादिदायकम् ।
सूत उवाच ।
शौनक प्रवरं प्रोक्तं पुराणं गारुडं तव ॥ १,२४०.६ ॥

यदब्रवीत्पुरा व्यासः सारं मां गारुडेरितम् ।
व्यासः श्रुत्वा ब्रह्मणश्च पुराणं गारुडं शुभम् ।
देवं ध्यायन्वेदमेकं चतुर्धा व्यभजद्धरिः ॥ १,२४०.७ ॥

अष्टादशपुराणानि तानि मां प्राह वै शुकः ।
इदं तु गारुडं श्रेष्ठं मया ते शौनकेरितम् ॥ १,२४०.८ ॥

मुनीनां शृण्वतां मध्ये पृच्छतः सर्ववाचकम् ।
यः पठेच्छ्रणुयाद्वापि श्रावयेद्वा समाहितः ॥ १,२४०.९ ॥

संलिखेल्लेखयेद्वापि धारयेत्पुस्तके ननु ।
धर्मार्थो प्राप्नुयाद्धर्मर्थार्थो चार्थमाप्नुयात् ॥ १,२४०.१० ॥

कामा नवाप्नुयात्कामी मोक्षार्थो मोक्षमाप्नुयात् ।
यद्यदिच्छति तत्सर्वं गारुडश्रवणाल्लभेत् ॥ १,२४०.११ ॥

ब्राह्मणो वेदपारस्य गन्ता स्यान्नात्र संशयः ।
क्षत्त्रियो क्षत्त्रियस्यापि रक्षिता भवतीह च ॥ १,२४०.१२ ॥

नान्यस्य श्रवणं हि स्यात्पुराणं वेदसंमितम् ।
वदेद्यदि स मूढात्मा कीर्तिहानिमवाप्नुयात् ॥ १,२४०.१३ ॥

अन्यस्मै च वदेद्विद्वान् ब्राह्मणोन्तरितो य दि ।
ब्राह्मणान्तरितै सर्वैः श्रोतव्यं गारुडं त्विदम ॥ १,२४०.१४ ॥

यथा विष्णुस्तथा तार्क्ष्यस्तार्क्ष्यस्तोत्राद्धरिः स्तुतः ।
गारुडं वसुराजश्च श्रुत्वा सर्वमवाप ह ॥ १,२४०.१५ ॥

वरुरुवाच ।
नमस्यामि महाबाहुं खगेद्र हरिवाहनम् ।
विष्णोर्ध्वसंस्थानं वित्रासितमहासुरम् ॥ १,२४०.१६ ॥

नमस्ते नागदर्पघ्न विनतानन्दवर्धन ।
सुपक्षपात निद्दभ दीनदैत्यनिरीक्षित ॥ १,२४०.१७ ॥

परस्परस्य शापेन सुप्रतीकविभावसू ।
गजकच्छपतां प्राप्तौ भ्रातरौचैव संयुतौ ॥ १,२४०.१८ ॥

यदुच्छ्रितौ योजनानि जस्तद्द्विगुणायतः ।
कूर्मस्त्रियोजनोत्सोधा शतयोजनवमडलः ॥ १,२४०.१९ ॥

न खाद्यौ तौ त्वयानीचौ चतुर्भुजौ च पक्षिप? ।
परस्परकृताच्छापदोषाच्च परिमोचितौ ॥ १,२४०.२० ॥

निषाददेशस्वादेन देवं ब्रूस्मानिदितम्? ।
विषादीशस्ततो मुक्तस्तत्रापि ब्राह्मणस्त्वया ॥ १,२४०.२१ ॥

वटारोहिणवृक्षस्य योजनानां शतायुता ।
शाखा भिन्ना त्वया यत्र वालखिल्याः समास्थिताः ॥ १,२४०.२२ ॥

त्वया यत्नकृता कृत्वानखस्थौ गजकच्छपौ ।
नभस्पपिनिरालंबे सर्वतः परिवारितौ ॥ १,२४०.२३ ॥

त्वया जिता रणे देवाः सर्वे शक्रपुरोगमाः ।
आहृतं तत्पुरा सोमं वाह्निं निर्वाप्य काश्यपे ॥ १,२४०.२४ ॥

नागौ दृष्टिविषौ कृत्वा रजसा तु विचक्षुषौ ।
तीक्ष्णाग्रेण न सा भङ्क्त्वाविक्रवेतौ मनोहतः? ॥ १,२४०.२५ ॥

आहृत्यापि त्वया सोमं नीतमेव न भक्तितः ।
तेन विष्णोर्ध्वजस्थानं वाहनत्वं गतो ह्यसि ॥ १,२४०.२६ ॥

त्वया निः क्षिप्य दर्भेषु सोमं नागाश्च वञ्चिताः ।
जहार चामृतं पात्रं शीघ्रं वै ब्रह्मसूदन ॥ १,२४०.२७ ॥

यत्र जिह्वाद्विधाभूताः पन्नगानां द्विजोत्तम ।
विनता मोचिता दास्यात्कद्वा पूर्वजिता रणे ॥ १,२४०.२८ ॥

उच्चैः श्रवाः स किंवर्णः शुक्ल इत्येव भाषते ।
कृष्णवर्णमहं मन्ये पूर्वदृष्टमुवाच ह ॥ १,२४०.२९ ॥

त्वया वज्रपहारेण पक्षमुक्तं पुरा स्वतः? ।
दधीचवज्रशक्राणां मातुरर्थाय नान्यथा ॥ १,२४०.३० ॥

तस्य पक्षस्य देवेन्द्रो यदानीतं हि दृष्टवान् ।
तदा तव सुपर्णोति नाम स्थानं जगत्त्रये ॥ १,२४०.३१ ॥

ध्यानमात्राद्विनश्येत्तु विषं स्थावरजङ्गमम् ।
पठेद्वा शृणुयाद्यश्च भुक्तिं मुक्तिमवाप्नुयात् ॥ १,२४०.३२ ॥

सूत उवाच ।
वसुराजो गारुडं वै श्रुत्वा सर्वमवाप्तवान् ।
गरुडो भगवान्विष्णुर्ध्यायन्सर्ववाप्तवान् ॥ १,२४०.३३ ॥

तदुक्तं गारुडं पुण्यं पुराणं यः पठेन्नरः ।
सर्वकाममवाप्याथ प्राप्नोति परमां गतिम् ॥ १,२४०.३४ ॥

श्लोकपादं पठित्वा च सर्वपापक्षयो भवेत् ।
यस्येदं वर्तते गेह तस्य सर्वं भवेदिह ॥ १,२४०.३५ ॥

गारुडं यस्य हस्ते तु तस्य हस्तगतो नयः ।
यः पठेच्छृणुयादेतद्भुक्तिं मुक्तिं समाप्नुयात् ॥ १,२४०.३६ ॥

धर्मार्थकाममोक्षांश्च प्राप्नुयाच्छ्रवणादितः ।
पुत्रार्थो लभते पुत्रान् कामार्थो काममाप्नुयात् ॥ १,२४०.३७ ॥

विद्यार्थो लभते विद्यां जयार्थो लभते जयम् ।
ब्रह्महत्यादिना पापी पापशुद्धिमवाप्नुयात् ॥ १,२४०.३८ ॥

वन्ध्यापि लभते पुत्रं कन्या विन्दति सत्पतिम् ।
क्षेमार्थो लभते क्षेमं बोगार्थो बोगमाप्नुयात् ॥ १,२४०.३९ ॥

मङ्गलार्थो मङ्गलानि गुणार्थो गुणमाप्नुयात् ।

काव्यार्थो च कवित्वं च सारार्थो सारमाप्नुयात् ॥ १,२४०.४० ॥

ज्ञानार्थो लभते ज्ञानं सर्वसंसारमर्दनम् ।
इदं स्वस्त्ययनं धन्यं गारुडं गरुडेरितम् ॥ १,२४०.४१ ॥

नाकाले मरणं तस्य श्लोकमेकं तु यः पठेत् ।
श्लोकार्धपठनादस्य दुष्टशत्रुक्षयो ध्रुवम् ॥ १,२४०.४२ ॥

सूताच्छ्रुत्वा शौनकस्तुनौमिषे मुनिभिः क्रतौ ।
अहं ब्रहेति संध्यायन्मुक्तोभूद्गरुडध्वजात् ॥ १,२४०.४३ ॥

ओं
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशे आचारकाण्डे गरुडपुराणमाहात्म्यं नाम चत्वारिंशदुत्तरद्विशततमोऽध्यायः
शुभं भूयात् ।
इति श्रीगारुडे प्रथमांश आचारकाण्डः समाप्तः ।

श्रीगरुडमहापुराणम्
श्रीगणेशाय नमः ।
तत्रादिमे द्वितीयांशे प्रेतकाण्डो धर्मकाण्डनामारभ्यते ।
ओं नमो भगवते वासुदेवाय ।
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ २,१.म ॥
धर्मन्दृढबद्धमूलो वेदस्कन्धः पुराणशाखाढ्यः ।
क्रतुकुसुमो मोक्षफलो मधुसूदनपादपो जयति ॥ २,१.१ ॥

नैमिषेऽनिमिषक्षेत्रे शौनकाद्या मुनीश्वराः ।
कर्मणामन्तरे सूतं स्वासीनमिदमब्रुवन् ॥ २,१.२ ॥

सूत जानासि सकलं वस्तु व्यासप्रसादतः ।
तेन नः सन्दिहानानां सन्देहं छेत्तुमर्हसि ॥ २,१.३ ॥

यथा तृणजलौकेति न्यायमा श्रित्य कञ्चन ।
देहिनोऽन्यतनुप्राप्तिं केचित्त्वेवं वदन्ति हि ॥ २,१.४ ॥

केचित्पुनर्यातनानां यामीनामुपभोगतः ।
पश्चाद्देहान्तरप्राप्तिं वदन्ति किमु तत्रसत् ॥ २,१.५ ॥

सूत उवाच ।
साधु पृष्टं महाभागाः शृणुध्वं भवतां पुनः ।
सन्देहो नोपपद्येत लोकार्थं किल पृच्छताम् ॥ २,१.६ ॥

तदहं कृष्णगरुडसंवादद्वारकं द्विजाः ।
अपाकरिष्ये सन्देहं भवतां भावितात्मनाम् ॥ २,१.७ ॥

नमः कृष्णाय मुनये य एनं समुपाश्रिताः ।
अञ्जस्तरन्ति संसारसागरं कुनदीमिव ॥ २,१.८ ॥

एकदा वैनतेयस्य लोकानां लोकनस्पृहा ।
बभूव सोऽथ बभ्राम तेषु नाम हरेर्गृणन् ॥ २,१.९ ॥

स पातालं भुवं स्वर्गं भ्रान्त्वालब्धशमाशयः ।
लोकदुः खेनातिदुः खी पुनर्वैकुण्ठमागमत् ॥ २,१.१० ॥

न रजो न तमश्चैव सत्त्वं ताभ्यां च मिश्रितम् ।
यत्र प्रवर्तते नैव सत्त्वमेव प्रवर्तते ॥ २,१.११ ॥

न यत्र माया नाशश्च न चै रागादयो मलाः ।

श्यामावदाताः सुरुचः शतपत्रविलोचनाः ॥ २,१.१२ ॥

सुरासुरार्चिता यत्र गणा विष्णोः सुपेशसः ।
पिशङ्गवस्त्राभारणा मणियुङ्निष्कभूषिताः ॥ २,१.१३ ॥

चतुर्भुजाः कुण्डलिनो मौलिनो मालिनस्तथा ।
भ्राजिष्णुभिर्विमानानां पङ्किभिर्ये महात्मनाम् ॥ २,१.१४ ॥

द्योतन्ते द्योतमानानां प्रमदानां च पङ्क्तिभिः ।
श्रीर्यत्र नानाविभवैर्हरेः पादौ मुदार्चति ॥ २,१.१५ ॥

हरिं गायति दोलास्थं गीयमानालिभिः स्वयम् ।
ददर्श श्रीहरिं तत्र श्रीपतिं सात्वतां पतिम् ॥ २,१.१६ ॥

जगत्पतिं यज्ञपतिं पार्षदैः परिषेवितम् ।
सुनन्दनन्दप्रबलार्हणमुख्यैर्निरन्तरम् ॥ २,१.१७ ॥

भृत्यप्रसादसुमुखमायतारुणलोचनम् ।
किरीटिनं कुण्डलिनं श्रिया वक्षसि लक्षितम् ॥ २,१.१८ ॥

पीतांशुकं चतुर्बाहुं प्रसन्नहसिताननम् ।
अभ्यर्हणासनासीनं ताभिः शक्तिभिरावृतम् ॥ २,१.१९ ॥

प्रधानपुरुषाभ्यां च महता चाहमा तथा ।
एकादशोन्द्रियैश्चैव पञ्चभूतैस्तथैव च ॥ २,१.२० ॥

स्वरूपेरममाणं तमीश्वरं विनतासुतः ।
तद्दर्शनाह्लादयुतस्वान्तो हृष्यत्तनूरुहः ॥ २,१.२१ ॥

लोचनाभ्यामश्रु मुञ्चन्प्रेममग्नो ननाम ह ।
नमागतं नतं स्वीय वाहनं विष्णुरब्रवीत् ।
भूमिः का लङ्घिता पक्षिंस्त्वयेयन्तमनेहसम् ॥ २,१.२२ ॥

गरुड उवाच ।
तव प्रसादाद्वैकुण्ठ त्रैलोक्यं सचराचरम् ॥ २,१.२३ ॥

मया विलोकितं सर्वं जगत्स्थावरजङ्गमम् ।
भूर्लोकात्सत्यपर्यन्तं पुरं याम्यं विना प्रभो ॥ २,१.२४ ॥

भूर्लोकः सर्वलोकानां प्रचुरः सर्वजन्तुषु ।
मानुष्यं सर्वभूतानां भुक्तिमुक्त्यालयं शुभम् ॥ २,१.२५ ॥

अतः सुकृतिनां लोको न भूतो न भविष्यति ॥ २,१.२६ ॥

गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे ।
स्वर्गापवर्गस्य फलार्जनाय भवन्ति भूयः पुरुषाः सुरत्वात् ॥ २,१.२७ ॥

प्रेतः कौक्षिप्यते कस्मात्पञ्चरत्नं मुखे कथम् ।
अधस्ताच्चालिता दर्भाः पादौ याम्यां व्यवस्थितौ ॥ २,१.२८ ॥

किमर्थं पुत्रपौत्राश्च तस्य तिष्ठन्ति चाग्रतः ।
किमर्थं दीयते दानं गोदानमपि केशव ॥ २,१.२९ ॥

बन्धुमित्राण्यमित्राश्च क्षमापयन्ति तत्कथम् ।
तिलालोहं हिरण्यं च कर्पासं लवणं तथा ॥ २,१.३० ॥

सप्तधान्यं क्षितिर्गावो दीयन्ते केनहेतुना ।
कथं हि म्रियते जन्तुर्मृतो वै कुत्र गच्छति ॥ २,१.३१ ॥

अतिवाहशरीरं च कथं हि श्रयते तदा ।
शवं स्कन्धे वहेत्पुत्रो अग्निदाता च पौत्रकः ॥ २,१.३२ ॥

आज्येनाभ्यञ्जनं कस्मात्कुत एकाहुतिक्रिया ।
वसुन्धरा किमर्थं च कुतः स्त्रीशब्दकीर्तनम् ॥ २,१.३३ ॥

यमसूक्तं किमर्थं च उदीच्या दिशमाहरेत् ।
पानीयमेकवस्त्रेण सूर्यबिम्बनिरीक्षणम् ॥ २,१.३४ ॥

यवसर्षपदूर्वास्तु पाषाणे निम्बपत्रकम् ।
वस्त्रं नरश्च नारी च विदध्यादधरोत्तरम् ॥ २,१.३५ ॥

अन्नाद्यं गृहमागत्य न भोक्तव्यं जनैः सह ।
नवकांश्चैव पिण्डांश्च किमर्थं ददते सुताः ॥ २,१.३६ ॥

किमर्थं चत्वरे दुग्धं यात्रे पक्वे च मृन्मये ।
काष्ठत्रयं गणाबद्धं कृत्वा रात्रौ चतुष्पथे ॥ २,१.३७ ॥

निशायां दीयते दीपो यावदब्दं दिनेदिन ।
दाहोदकं किमर्थं च किमर्थं च जनैः सह ॥ २,१.३८ ॥

भगवन्नाति वाहश्च नव पिण्डाः प्रदापयेत् ।
कथं देयं पितृभ्यश्च वाहस्यावाहनं कथम् ॥ २,१.३९ ॥

इदञ्चेत्क्रियते देव कस्मात्पिण्डं प्रदापयेत् ।

किं तत्प्रदीयते तस्य पिण्डदानाद्यनन्तरम् ॥ २,१.४० ॥

अस्थिसञ्चयनं चैव घटस्फोटं तथैव च ।
द्वितीयेऽह्नि कुतः स्नानं चतुर्थे साग्निके द्विजे ॥ २,१.४१ ॥

दशमे किं मलस्नानं कार्यं सर्वजनैः सह ।
कस्मात्तैलोद्वर्तनं च स्कन्धवाहगृहं नयेत् ॥ २,१.४२ ॥

तैलोद्वर्तनकं चापि दधुः स्थूलजलाशये ।
दशमेऽहनि यत्पिण्डं तद्दद्या दामिषेण तु ॥ २,१.४३ ॥

पिणाञ्चैकादशे कस्माद्वृषोत्सर्गादिपूर्वकम् ।
भाजनोपानहौ च्छत्रं वासांसि त्वङ्गुलीयकम् ॥ २,१.४४ ॥

त्रयोदशेऽह्नि देयं स्यात्पददानं किमर्थकम् ।
श्राद्धानि षोडशैतानि अब्दं यावत्कुतो घटः ॥ २,१.४५ ॥

अन्नाद्येनोदकेनैव षष्ट्याधिकशतत्रयम् ।
दिनेदिने च दातव्यं घटान्नं प्रेततृप्तये ॥ २,१.४६ ॥

प्राप्ते काले वै म्रियते अनित्या मानवाः प्रभो ॥ २,१.४७ ॥

छिद्रं तु नैव पश्यामि कुतो जीवः स निर्गतः ।
कुतो गच्छन्ति भूतानि पृथिव्यापो मनस्तथा ।
तेजो वदस्व मे नाथ वायुराकाशमेव च ॥ २,१.४८ ॥

कुतः कर्मेन्द्रियाणीह पञ्चबुद्धीन्द्रियाणि च ।
वायवश्चैव पञ्चैते कथं गच्छन्ति चात्ययम् ॥ २,१.४९ ॥

लोभमोहादयः पञ्च शरीरे चैव तस्कराः ।
तृष्णा कामो ह्यहङ्कारः कुतो यान्ति जनार्दना ॥ २,१.५० ॥

पुण्यं वाप्यथवापुण्यं यत्किञ्चित्सुकृतं तथा ।
नष्टे देहे कुतो यान्ति दानानि विविधानि च ॥ २,१.५१ ॥

सपिण्डनं किमर्थं च पूर्णे संवत्सरेऽपि वा ।
प्रेतस्य मेलनं केषां किंविधं तत्र कारयेत् ॥ २,१.५२ ॥

मूर्छनात्पननाद्वापि विपत्तिर्यदि जायते ।
ये दग्धा ये त्वदग्धाश्च पतिता ये नरा भुवि ॥ २,१.५३ ॥

यानि चान्यानि भूतानि तेषामन्ते भवेच्च किम् ।

पापिनो ये दुराचारा ये चान्ये गतबुद्धयः ॥ २,१.५४ ॥

आत्मघाती ब्रह्महा च स्तेयी विश्वासघातकः ।
कपिलायाः पिबेच्छूद्रो यः पठेदिदमक्षरम् ॥ २,१.५५ ॥

धारयेद्ब्रह्मसूत्रं वा का गतिस्तस्य माधव ।
शूद्रस्य ब्राह्मणी भार्या संगृहीता यदा भवेत् ॥ २,१.५६ ॥

भीतोऽहं पापिनस्तस्मात्तन्मे वद जगत्प्रभो ।
अन्यच्च शृणु विश्वात्मन्मया कौतुकिना रयात् ॥ २,१.५७ ॥

लोकांल्लोकयता लोके जगाहे विश्वमण्डलम् ।
तत्राजनि जनान्दृष्ट्वा दुः खेष्वेव निमज्जतः ॥ २,१.५८ ॥

स्वान्ते मे दुर्धरा पीडा तत्पीडातो गरीयसी ।
त्रिदिवे दितिजातेभ्यो भूमौ मृत्युरुगादिभिः ॥ २,१.५९ ॥

इष्टवस्तुवियो गैश्च पाताले मामकं भयम् ।
एवं न निर्भयं स्थानमन्यदीश भवत्पदात् ॥ २,१.६० ॥

असत्यं स्वप्नमायावत्कालेन कवलीकृतम् ।
तत्रापि भारते वर्षे बहुदुः खस्य भागिनः ॥ २,१.६१ ॥

जना दृष्टा मया रागद्वेषमोहादिविप्लुताः ।
केचिदन्धाः केकराक्षास्खलद्वाचस्तु पङ्गवः ॥ २,१.६२ ॥

खञ्जाः काणाश्च बधिरा मूकाः कुष्ठाश्च लोमशाः ।
नानारोगपरीताश्च खपुष्पाच्चाभिमानिनः ॥ २,१.६३ ॥

तेषां दोषस्य वैचित्र्यं मृत्योर्गोचरतामपि ।
दृष्ट्वा प्रसुमनाः प्राप्तः को मृत्युश्चित्रता कथम् ॥ २,१.६४ ॥

मृतिर्यस्य विधानेन मरणादप्यनन्तरम् ।
विधिनाब्दक्रिया यस्य न स दुर्गतिमाप्नुयात् ॥ २,१.६५ ॥

ऋषिभ्यस्तु मया पूर्वमिति सामान्यतः श्रुतम् ।
ज्ञानाय तद्विशेषस्य पृच्छामीदमिति प्रभो ॥ २,१.६६ ॥

म्रियमाणस्य किं कृत्यं किं दानं वासवानुज ।
वाहमृत्योरन्तराले को विधिर्दहनस्य च ॥ २,१.६७ ॥

सद्यो विलम्बतो वा किं देहमन्यं प्रपद्यते ।

संयमन्यां क्रम्यमाणमावर्षं का मृतिक्रिया ॥ २,१.६८ ॥

प्रायश्चित्तं दुर्मतेः किं पञ्चकादिमृतस्य च ।
प्रसादं कुरु मे मोहं छेत्तुमर्हस्यशेषतः ॥ २,१.६९ ॥

सर्वमन्तेमया पृष्टं ब्रूहि लोकहिताय वै ॥ २,१.७० ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशाख्ये धर्मकाण्डे (प्रेतखण्डे) श्रीकृष्णगरुडसंवादे प्रश्नप्रपञ्चो नाम प्रथमोऽध्यायः

श्रीकृष्ण उवाच ।
साधु पृष्टं त्वया भद्र मानुषाणां हिताय वै ।
शृणुष्वावहितो भूत्वा सर्वमेवौर्ध्वदैहिकम् ॥ २,२.१ ॥

सम्यग्विभेदरहितं श्रुतिस्मृतिसमुद्धृतम् ।
यन्न दृष्टं सुरैः सेन्द्रैर्योगिभिर्योगचिन्तकैः ॥ २,२.२ ॥

गुह्यद्गुह्यतरं तच्च नाख्यातं कस्यचित्क्वचित् ।
भक्तस्त्वं हि महाभाग वैनतेयं ब्रवीमि ते ॥ २,२.३ ॥

अपुत्रस्य गतिर्नास्तु स्वर्गो नैव च नैव च ।
येन केनाप्युपायेन कार्यं जन्म सुतस्य हि ॥ २,२.४ ॥

तारयेन्नरकात्पुत्रो यदि मोक्षो न विद्यते ।
स्कन्धः पुत्रेण कर्तव्यो ह्यग्निदाता च पौत्रकः ॥ २,२.५ ॥

तिलदर्भैश्च भूम्यां वै कुटी ऋतुमती भवेत् ।
पञ्च रत्नानि वक्त्रे तु येन जीवः प्ररोहति ॥ २,२.६ ॥

यदा पुष्पं प्रनष्टं हि क्व तदा गर्भधारणम् ।
आदराच्च ततो भूमौ येन गर्भं प्रधार्यते ॥ २,२.७ ॥

लेप्या तु गोमयैर्भूमिस्तिलान्दर्भान्विनिः क्षिपेत् ।
तस्यामेवातुरो मुक्तः सर्वं दहति किल्बिषम् ॥ २,२.८ ॥

दर्भतूली नयेत्स्वर्गमातुरस्य न संशयः ।
दर्भांस्तत्र क्षिपेद्वाथ तूलीगेन्दुकमध्यतः ॥ २,२.९ ॥

सर्वत्र वसुधापूता यत्र लेपो न विद्यते ।
यत्र लेपः स्थितस्तत्र पुनर्लेपेन शुध्यति ॥ २,२.१० ॥

यातुधानाः पिशाचाश्च राक्षसाः क्रूरकर्मिणः ।
अलेपं ह्यातुरं मुक्तं विशन्त्येते वियोनयः ॥ २,२.११ ॥

नित्यहोमस्तथा श्राद्धं पादशौचं द्विजे तथा ।
मण्डलेन विना भूम्यामातुरो मुच्यते न हि ॥ २,२.१२ ॥

ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशस्तथैव च ।
मण्डले चोपतिष्ठन्ति तस्मात्कुर्वीत मण्डलम् ॥ २,२.१३ ॥

अन्यथा म्रियते वालो वृद्धस्ताक्ष्र्ययुवाथवा ।
योन्यन्तरं न गच्छेत्स क्रीडते वायुना सह ॥ २,२.१४ ॥

मिश्रितं लोहितामिश्रं तदेवं जन्म जीयते ।
तस्यैव वायुभूतस्य न श्राद्धं नोदकक्रिया ॥ २,२.१५ ॥

मम स्वेदसमुद्भूतास्तिलास्ताक्ष्र्य पवित्रकाः ।
असुरा दानवा दैत्या विद्रवन्ति तिलैस्तथा ॥ २,२.१६ ॥

तिलाः श्वेतास्तिला कृष्णास्तिला गोमूत्रसंन्निभाः ।
दहन्तु ते मे पापानि शरीरेण कृतानि वै ॥ २,२.१७ ॥

एक एव तिलो दत्तो हेममद्रोणतिलैः समः ।

तर्पणे दानहोमेषु दत्तो भवति चाक्षयः ॥ २,२.१८ ॥

दर्भा रोमसमुद्भूतास्तिलाः स्वेदेषु नान्यथा ।
देवता दानवास्तृप्ताः श्राद्धेन पितरस्तथा ॥ २,२.१९ ॥

प्रयोगविधिना ब्रह्मा विश्वं चाप्युपजीवनाम् ।
अपसव्यादितो ब्रह्मा पितरो देवदेवताः ॥ २,२.२० ॥

तेन ते पितरस्तृप्ता अपसव्ये कृते सति ।
दर्भमूले स्थितो ब्रह्मा मध्ये देवो जनार्दनः ॥ २,२.२१ ॥

दर्भाग्रे शङ्करं विद्यात्त्रयो देवाः कुशे स्मृताः ।
विप्रा मन्त्राः कुशा वह्निस्तुलसी च खगेश्वर ॥ २,२.२२ ॥

नैते निर्माल्यतां यान्ति क्रियमाणाः पुनः पुनः ।
तुलसी ब्राह्मणा गावो विष्णुरेकादशी खग ॥ २,२.२३ ॥

पञ्च प्रवहणान्ये भवाब्धौ मज्जतां नृणाम् ।
विष्णुरेकादशी गीता तुलसी विप्रधेनवः ॥ २,२.२४ ॥

असारे दुर्गसंसारे षट्पदी मुक्तिदायिनी ।
तिलाः पवित्रमतुलं दर्भाश्चापि तुलस्यथ ॥ २,२.२५ ॥$

निवारयन्ति चैतानि दुर्गतिं यान्तमातुरम् ।
हस्ताभ्यामुद्धरेद्दर्भास्तोयेन प्रोक्षयेद्भुवि ॥ २,२.२६ ॥

मृत्युकाले क्षिपेद्दर्भान्करयोरातुरस्य च ।
दर्भैस्तु क्षिप्यते योऽसौ दर्भैस्तु परिवेष्टितः ॥ २,२.२७ ॥

विष्णुलोके स वै याति मन्त्रहीनोऽपि मानवः ।
तूलीं कृत्वा कृतौ पादौ संस्थितौ क्षितिपृष्ठतः ॥ २,२.२८ ॥

प्रायाश्चित्तं विशुद्धाग्नौ संसारेऽसारसागरे ।
गोमयेनोपलिम्पेत्तु दर्भास्तरणसंस्थिते ॥ २,२.२९ ॥

यने दत्तेन दानेन सर्वं पापं व्यपोहति ।
लवणं तद्रसं दिव्यं सर्वकामप्रदं नृणाम् ॥ २,२.३० ॥

यस्मादन्नरसाः सर्वे नोत्कटा लवणं विना ।
पितृणां च प्रियं भव्यं तस्मात्स्वर्गप्रदं भवेत् ॥ २,२.३१ ॥

विष्णुदेहसमुद्भूतो यतोऽयं लवणो रसः ।
एतत्सलवणं दानं तेन शंसन्ति योगिनः ॥ २,२.३२ ॥

ब्राह्मणक्षत्त्रियविशां स्त्रीणां शूद्रजनस्य च ।
आतुरस्य यदा प्राणा न यान्ति वसुधातले ॥ २,२.३३ ॥

लवणं तु तदा देयं द्वारस्योद्वाटनं दिवः ।
अन्यच्च शृणु पक्षीन्द्र मृत्यो रूपं प्रपञ्चतः ॥ २,२.३४ ॥

यस्य कालेन नो यायाद्वियोगः प्राणदेहयोः ।
प्राणिनश्च स्वसमये मृत्युरत्यन्तविस्मृतिः ॥ २,२.३५ ॥

यथा वायुर्जलधरान्विकर्षति यतस्ततः ।
तद्वज्जलदवत्ताक्ष्र्य कालस्यैव वशानुगाः ॥ २,२.३६ ॥

सात्त्विका राजसाश्चैव तामसा ये च केचन ।
भावाः कालात्मकाः सर्वे प्रवर्तन्ते हि जन्तुषु ॥ २,२.३७ ॥

आदित्यश्चन्द्रमाः शम्भुरापो वायुः शतक्रतुः ।
अग्निः खं पृथिवी मित्र ओषध्यो वसवस्तथा ॥ २,२.३८ ॥

सरितः सागराश्चैव भावाभावौ च सर्पहन् ।
सर्वे कालेन सृज्यन्ते संक्षिप्यन्ते यथा पुनः ॥ २,२.३९ ॥

कालेन संह्रियन्ते च नूनं मृत्यावुपस्थिते ।
दैवयोगात्तदा व्याधिः कश्चिदुत्पद्यते खग ॥ २,२.४० ॥

वैकल्यमिन्द्रियाणां च बलौ जोरंहसां भवेत् ।
युगपद्वश्चिककोटिशूकदंशो भवेद्यदि ॥ २,२.४१ ॥

तदानुमीयते तेन पीडा मृत्युभवा खग ।
ततः क्षणेन चैतन्ये विकले जडतां गते ॥ २,२.४२ ॥

प्रिचाल्यन्ते ततः प्राणा याम्यैर्निकटवर्तिभिः ।
बीभत्सं तु तदा रूपं प्राणैः कण्ठगतैर्भवेत् ॥ २,२.४३ ॥

फेमुद्गिरते सोऽथ मुखं लालाकुलं भवेत् ।
अङ्गुष्ठमात्रपुरुषो हाहा कुर्वंस्ततस्तनोः ॥ २,२.४४ ॥

तदैव नीयते द्वतैर्याम्यैर्वीक्षन्स्वकं गृहम् ।
भूय एव हिते तात मृत्युकालदशामिमाम् ॥ २,२.४५ ॥

अष्मा प्रकुपितः काये तीव्रवायुसमीरितः ।
भिनत्ति मर्मस्थानानि दीप्यमानो निरिन्धनः ॥ २,२.४६ ॥

उदानो नाम पवनस्ततश्चोर्ध्वं प्रवर्तते ।
भक्तानामबुभुक्षाणामधोगतिनिरोधकृत् ॥ २,२.४७ ॥

यैर्नानृतानि चोक्तानि प्रीतिभेदः कृतो न च ।
आस्तिकः श्रद्दधानश्च स सुखं मृत्युमृच्छति ॥ २,२.४८ ॥

यो न कामान्न संरंभान्न द्वेषाद्धर्ममुत्सृजेत् ।
यथोक्तकारी सौम्यश्च स सुखं मृत्युमृच्छति ॥ २,२.४९ ॥

मोहज्ञानप्रदातारः प्राप्नुवन्ति महत्तमः ।
कूटसाक्षी मृषावादी ये च विश्वासघातकाः ॥ २,२.५० ॥

ते मोहं मृत्युमृच्छन्ति तथा ये वेदनिन्दकाः ।
विभीषकाः पूतिगन्धा यष्टिमुद्गरपाणयः ॥ २,२.५१ ॥

आगच्छन्ति दुरात्मानो यमस्य पुरुषास्तदा ।
प्राप्ते त्वीदृक्पथे घोरे जायते तस्य वेपथुः ॥ २,२.५२ ॥

क्रन्दत्यविरतं सोऽपि पितृमातृसुतानपि ।
सास्य वागस्फुटा यत्नेनैकवर्णा विभासते ॥ २,२.५३ ॥

दृष्टिर्वै भ्राम्यते त्रासाच्छ्वासाच्छुष्यति चाननम् ।
स ततो वेदनाविष्टस्तच्छरीरं विमुञ्चति ॥ २,२.५४ ॥

अस्पृश्यं कुत्सनीयं च तत्क्षणादेव जायते ।
उक्तं मृत्योः स्वरूपं तु प्रसङ्गादन्यदप्यथ ॥ २,२.५५ ॥

वैचित्र्यस्योत्तरं प्रश्ने द्वितीयस्य वदामि ते ।
कर्मणां प्राक्तनानां तु तदसत्त्वेनं भदेतः ॥ २,२.५६ ॥

भवेद्भोगस्य वैचित्र्यं भ्राम्यतां प्राणिनामिह ।
देवत्वमसुरत्वं च यक्षत्वादिसुखप्रदम् ॥ २,२.५७ ॥

मानुषत्वं पशुत्वं च पक्षित्वाद्यतिदुः खदम् ।
कर्मणां तारतम्येन भवतीह खगेश्वर ॥ २,२.५८ ॥

अत्र ते कीर्तयिष्यामि विपाकं कर्मणामहम् ।
वैचित्र्यस्य स्पुटत्वाययैर्जोवः संसरत्ययम् ॥ २,२.५९ ॥

महापातकजान्घोरान्नरकान्प्राप्य दारुणान् ।
कर्मक्षयात्प्रजायन्ते महापातकिनः क्षितौ ॥ २,२.६० ॥

जायन्ते लक्षणैर्यैस्तुतानि मे शृणु सत्तम ।
मृगाश्वसूकरोष्ट्राणां ब्रह्महा योनिमृच्छति ॥ २,२.६१ ॥

कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात् ।
तृणगुल्मतात्वं च क्रमशो गुरुतल्पगः ॥ २,२.६२ ॥

ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः ।
हेमहारी तु कुनखी दुश्चर्मा गुरुतल्पगः ॥ २,२.६३ ॥

यो येन संवसत्येषां स तल्लिङ्गोऽभिजायते ।
संवत्सरेण पतति पतितेन सहाचरन् ॥ २,२.६४ ॥

संलापस्पर्शनिः श्वाससहयानाशनासनात् ।
याजनाध्यापनाद्यौनात्पापं संक्रमते नृणाम् ॥ २,२.६५ ॥

गत्वा दारान्परेषाञ्च ब्रह्मस्वमपहृत्य च ।
अरण्ये निर्जने देशे जायते ब्रह्मराक्षसः ॥ २,२.६६ ॥

हीनजातौ प्रजायेत रत्नानामपहारकः ।
पत्रं च शाखिनो हृत्वा गन्धांश्छुच्छुन्दरी पुमान् ॥ २,२.६७ ॥

मूषको धान्यहारी स्याद्यानमुष्ट्रः फलं कपिः ।
निर्मन्त्रभोजनात्काको गृध्रो हृत्वा ह्युपस्करम् ॥ २,२.६८ ॥

मधुदंशः फलं गृध्रो गां गोधाग्निं बकस्तथा ।
स्याच्छ्वेतकुष्ठी स्त्रीवस्त्र ह्यरुची रसहारकः ॥ २,२.६९ ॥

कांस्यहारी तु हंसः स्यात्परस्वस्य च हारकः ।
अपस्मारी गुरोर्हन्ता क्रूरकृद्वामनो भवेत् ॥ २,२.७० ॥

धर्मपत्नीं त्यजञ्छब्दवेधी प्राणी भवेत्क्षितौ ।
देवविप्रस्वापहारी पाण्डुरः परमांसभुक् ॥ २,२.७१ ॥

भक्ष्याभक्ष्यो गण्डमाली महारोगी प्रजायते ।
न्यासापहारी काणः स्यास्त्रीजीवः खञ्जको भवेत् ॥ २,२.७२ ॥

कौमारदारत्यागी च दुर्भगोऽथै कमिष्टभुक् ।

वातगुल्मी विप्रयोषिद्गामी वा जम्बुको भवेत् ॥ २,२.७३ ॥

शय्याहर्ता क्षपणकः पतङ्गो वस्त्रहारकः ।
मात्सर्यादपि जात्यन्धो कपाली दीपहारकः ॥ २,२.७४ ॥

कौशिको मित्रहन्ता च क्षयी पित्रादिनिन्दकः ।
स्खलद्वागनृतवादी कूटसाक्षी जलोदरी ॥ २,२.७५ ॥

मशकः सोऽथ चछिन्नोष्ठो विवाहे विघ्नकृद्भवेत् ।
स्याद्वाथ वृषलः सोऽयं चत्वरे वै विण्मूत्रकृत् ॥ २,२.७६ ॥

मूत्रकृच्छ्री दूषकस्तु कन्यायाः क्लीबतामियात् ।
द्वीपी स्याद्वेदविक्रेता वराहोऽयाज्ययाजकः ॥ २,२.७७ ॥

यतस्ततोऽश्नन्मार्जारो खद्योतो वहदाहकः ।
कृमिः पर्युषितादः स्यान्मत्सरी भ्रमरो भवेत् ॥ २,२.७८ ॥

अग्न्युत्सादी तु कुष्ठी स्याददत्ताऽदानतो वृषः ।
सर्पो गोहारकोऽन्नस्य हारकः स्यादजीर्णवान् ॥ २,२.७९ ॥

जलहारी तु मत्स्यः स्यात्क्षीरहारी बलाकिका ।
अन्नं पर्युषितं विप्रे प्रददत्कुब्जतां व्रजेत् ॥ २,२.८० ॥

फलानि हरते यस्तु सन्ततिर्म्रियते खग ।
अदत्त्वा भक्ष्यमश्नाति ह्यनपत्यो भवेन्नरः ॥ २,२.८१ ॥

प्रवज्यागमनाद्राजन् भवेन्मरुपिशाचकः ।
चातको जलहर्ता स्याज्जन्मान्धः पुंस्तकं हरन् ॥ २,२.८२ ॥

प्रतिश्रुत्य द्विजेभ्योर्ऽथमददज्जम्बुको भवेत् ।
परिवादादिजातीनां लभते काच्छपीं तनुम् ॥ २,२.८३ ॥

दुर्भगः फलविक्रेता वृकश्च वृषलीपतिः ।
मार्जारोऽग्निं पदा स्पृष्ट्वा रोगवान्परमांसभुक् ॥ २,२.८४ ॥

जलप्रस्त्रवणं यस्तु भिन्द्यान्मत्स्यो भवेन्नरः ।
हरेः कथां न शृण्वन्ति ये न साधुजनस्तवम् ॥ २,२.८५ ॥

तान्नरान्कर्णमूलोऽयं व्याप्नुयान्नेतराञ्जनान् ।
परस्याननसंस्थं यो ग्रासं हरि मन्दधीः ॥ २,२.८६ ॥

देवोपकरणान्येनं गण्डमालिनमीहते ।
दम्भेनाचरते धर्मं गजचर्मा भवेत्तु सः ॥ २,२.८७ ॥

शिरोऽर्तिप्रमुखा रोगा यान्ति विश्वासघातकम् ।
लिङ्गपीडी शिवस्वं च शिवनिर्माल्यमेव च ॥ २,२.८८ ॥

स्त्रियोऽप्यनेन मार्गेण हृत्वा दोषमवाप्नुयुः ।
एतेषामेव जन्तूनां भार्यात्वमुपजायते ॥ २,२.८९ ॥

भोगान्ते नरकस्यैतत्सर्वमित्यवधारय ।
खघ प्रदर्श्यमेतत्तु मयोक्तं ते समासतः ।
द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः ॥ २,२.९० ॥

एवं विचित्रैर्निजकर्मभिर्नृणां सुखस्य दुः खस्य च जन्मनामपि ।

वैचित्र्यमुक्तं शुभकर्मतः शुभं तथाशुभाच्चाशुभमीरयन्ति ॥ २,२.९१ ॥

एतत्ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया ॥ २,२.९२ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे प्रतका(ख)ण्डे श्रीकृष्णगरुडसंवादे और्ध्वदेहिकविधिकर्मविपाकयोर्वर्णनं नाम द्वितीयोऽध्यायः

---

श्रीगरुडमहापुराणम् ३
सूत उवाच ।
एवमुत्साहितः पक्षी स्वरूपं निरयस्य तु ।
पप्रच्छनरकाण्येवं श्रुत्वा चोत्कूलितान्तरः ॥ २,३.१ ॥

गरुड उवाच ।
नरकाणां स्वरूपं मे वद येषु विकर्मिणः ।
पात्यन्ते दुः खभूयिष्ठास्तेषां भेदांश्च कीर्तय ॥ २,३.२ ॥

श्रीभगवानुवाच ।
नरकाणां सहस्राणि वर्तन्ते ह्यरुणानुज ।
शक्यं विस्तरतो नैव वक्तुं प्राधान्यतो ब्रुवे ॥ २,३.३ ॥

रौरवं नाम नरकं मुख्यं तद्वैनिबोध मे ।
रौरवे कूटसाक्षी तु याति यश्चानृती नरः ॥ २,३.४ ॥

योजनानां सहस्रे द्वे रौरवो हि प्रमाणतः ।
जानुमात्रप्रमाणं तु तत्र गर्तं सुदुस्तरम् ॥ २,३.५ ॥

तत्राङ्गारचयौघेन कृतं तद्धरणीसमम् ।
तत्राग्निना सुतीव्रेण तापिताङ्गारभूमिना ॥ २,३.६ ॥

तन्मध्ये पापकर्माणं विमुञ्चन्ति यमानुगाः ।
स दह्यमानस्तीव्रेण वह्निना परिधावति ॥ २,३.७ ॥

पदेपदे च पादोऽस्य स्फुट्यते शीर्यते पुनः ।
अहोरात्रेणोद्धरणं पादन्यासेन गच्छति ॥ २,३.८ ॥

एवं सहस्रं विस्तीर्णं योजनानां विमुच्यते ।
ततोऽन्यत्पापशुद्ध्यर्थं तादृङ्निरयमृच्छति ॥ २,३.९ ॥

रौरवस्ते समाख्यातः प्रथमो नरको मया ।
महारौरवसंज्ञं तु शृणुष्व नरकं खग ॥ २,३.१० ॥

योजनानां सहस्राणि सन्ति पञ्च समन्ततः ।
तत्र ताम्रमयी भूमिरधस्तस्या हुताशनः ॥ २,३.११ ॥

तया तपन्त्या सा सर्वा प्रोद्यद्विद्युत्समप्रभा ।
विभाव्यते महारौद्रा पापिनां दर्शनादिषु ॥ २,३.१२ ॥

तस्यां बद्धकराभ्यां च पद्भ्यां चैव यमानुगैः ।
मुच्यते पापकृन्मध्ये लुण्ठमानः स गच्छति ॥ २,३.१३ ॥

काकैर्बकैर्वृकोलूकैर्मशकैर्वृश्चिकैस्तथा ।
भक्ष्यमाणैस्तथा रौद्रैर्गतो मार्गे विकृष्यते ॥ २,३.१४ ॥

दह्यमानो गतमतिर्भ्रान्तस्तातेति चाकुलः ।
वदत्यसकृदुद्विग्नो न शान्तिमधिगच्छति ॥ २,३.१५ ॥

एवं तस्मान्नरैर्मोक्षस्त्वतिक्रान्तैरवाप्यते ।
वर्षायुतायुतैः पापं यैः कृतं दुष्टबुद्धिभिः ॥ २,३.१६ ॥

तथान्यस्तु ततो नाम सोऽतिशीतः स्वभावतः ।
महारौरववद्दीर्घस्तथान्धतमसा वृतः ॥ २,३.१७ ॥

शीतार्तास्तत्र बध्यन्ते नरास्तमसि दारुणे ।
परस्परं समासाद्य परिरभ्याश्रयन्ति ते ॥ २,३.१८ ॥

दन्तास्तेषां च भज्यन्ते शीतार्तिपरिकम्पिताः ।
क्षुतृषातिबलाः पक्षिन्नथ तत्राप्युपदवाः ॥ २,३.१९ ॥

हिमखण्डवहो वायुर्भिनत्त्यस्थीनि दारुणः ।
मज्जासृगस्थिगलितमश्नन्त्यत्र क्षुधान्विताः ॥ २,३.२० ॥

आलिङ्ग्यमाना भ्राम्यन्ते परस्परसमागमे ।
एवं तत्रापि सुमहान्क्लेशस्तमसि मानवैः ॥ २,३.२१ ॥

प्राप्यते शकुनिश्रेष्ठ यो बहूकृतसञ्चयः ।
निकृन्तन इति ख्यातस्ततोऽन्यो नरकोत्तमः ॥ २,३.२२ ॥

कुलालचक्राणि तत्र भ्राम्यन्त्यविरतं खग ।
तेष्वापाष्ये निकृष्यन्ते कालसूत्रेण मानवाः ॥ २,३.२३ ॥

यमानुमाङ्गुलिस्थेन आपादतलमस्तकम् ।
न चैषां जीवितभ्रंशो जायते पक्षिसत्तम ॥ २,३.२४ ॥

छिन्नानि तेषां शतशः खण्डान्यैक्यं व्रजन्ति हि ।
एवं वर्षसहस्राणि भ्राम्यन्ते पापकर्मिणः ॥ २,३.२५ ॥

तावद्यावदशेषं च तत्पापं संक्षयं गतम् ।
अप्रातष्ठं च नरकं शृणुष्व गदतो मम ॥ २,३.२६ ॥

तत्रस्थैर्नारकैर्दुः खमसह्यमनुभूयते ।
तान्येव तत्र चक्राणि घटीयन्त्राणि चान्यतः ॥ २,३.२७ ॥

दुः खस्य हेतुभूतानि पापकर्मकृतां नृणाम् ।
चक्रेष्वारोपिताः केचिद्भ्राम्यन्ते तत्र मानवाः ॥ २,३.२८ ॥

यावद्वर्षसहस्राणि न तेषां स्थितिरन्तरा ।
घटीयन्त्रेषु बद्वा ये बद्धा तोयवटी यथा ॥ २,३.२९ ॥

भ्राम्यन्ते मानवा रक्तमुद्गिरन्तः पुनः पुनः ।
अन्त्रैर्मुखविनिष्क्रान्तैर्नेत्रैरन्त्रावलम्बिभैः ॥ २,३.३० ॥

दुः खानि प्राप्नुवन्तीह यान्यसह्यानि जन्तुभिः ।
असिपत्रवनं नाम नरकं शृणु चापरम् ॥ २,३.३१ ॥

योजनानां सहस्रं यो ज्वलत्यग्न्याशृतावनिः ।
सप्ततीव्रकराश्चैण्डर्यत्र तीव्र सुदारुणे ॥ २,३.३२ ॥

प्रतपन्ति सदा तत्र प्राणिनो नरकौकसः ।
तन्मध्ये चरणं शीतस्निग्धपत्रं विभाष्यते ॥ २,३.३३ ॥

पत्राणि यत्र खण्डानि फलानां पक्षिसत्तम ।
श्वानश्च तत्र सुबलाश्चरन्त्यामिषभोजनाः ॥ २,३.३४ ॥

महावक्त्रा महादंष्ट्रा व्याघ्रा इव महाबलाः ।
ततश्च वनमालोक्य शिशिरच्छायमग्रतः ॥ २,३.३५ ॥

प्रयान्ति प्राणिनस्तत्र क्षुत्तापपरिपीडिताः ।
मातर्भ्रातस्तात इति क्रन्दमानाः सुदुः खिताः ॥ २,३.३६ ॥

दह्यमानाङ्घ्रियुगला धरणिस्थेन वह्निना ।
तेषां गतानां तत्रापि अति शीतिः समीरणः ॥ २,३.३७ ॥

प्रवाति तेन पात्यन्ते तेषां खड्गास्तथोपरि ।
छिन्नाः पतन्ति ते भूमौ ज्वलत्पावकसंचये ॥ २,३.३८ ॥

लेलिह्यमाने चान्यत्र तप्ताशेषमहीतले ।
सारमेयाश्च ते शीघ्रं शातयन्ति शरीरतः ॥ २,३.३९ ॥

तेषां खण्डान्यनेकानि रुदतामतिभीषणे ।
असिपत्रवनं तात मयैतत्परिकीर्तितम् ॥ २,३.४० ॥

अतः परं भीमतरं तप्तकुंभं निबोध मे ।
समन्ततस्तप्तकुम्भा वह्निज्वालासमन्विताः ॥ २,३.४१ ॥

ज्वलदग्निचयास्तप्ततैलायश्चूर्णपूरिताः ।
एषु दुष्कृतकर्माणो याम्यैः क्षिप्ता ह्यधोमुखाः ॥ २,३.४२ ॥

क्वाथ्यन्ते विस्फुटद्गात्रा गलन्मज्जाजलान्विताः ।
स्फुटत्कपालेनत्रास्थिच्छिद्यमाना विभीषणैः ॥ २,३.४३ ॥

गृध्रैरुत्पाट्य मुच्यन्ते पुनस्तेष्वेव वेगितैः ।
पुनश्चिमचिमायन्ते तैलनैक्यं व्रजन्ति च ॥ २,३.४४ ॥

द्रवीभूतैः शिरोगात्रैः स्नायुमांसत्वगास्थिभिः ।
ततो याम्यैर्नरैराशु दर्व्याघट्टनघट्टिताः ॥ २,३.४५ ॥

कृतावर्ते महातैले क्वाथ्यन्ते पापकर्मिणः ।
एष ते विस्तरेणोक्तस्तप्तकुम्भो मया खग ॥ २,३.४६ ॥

आदिमो रौरवः प्रोक्तो महारौरवकोऽपरः ।
अतिशीतस्तृतीयस्तु चतुर्थो हि निकृन्तनः ॥ २,३.४७ ॥

अप्रतिष्ठः पञ्चमः स्यादसिपत्रवनोऽपरः ।
सप्तमस्तप्तकुम्भस्तु सप्तैते नरका मताः ॥ २,३.४८ ॥

श्रूयन्तेन्यान्यपि तथा नरकाणि नराधमाः ।
कर्मणां तारतम्येन तेषुतेषु पतन्ति हि ॥ २,३.४९ ॥

तथा हि नरको रोधः शूकरस्ताल एव च ।
तप्तकुम्भो महाज्वालः शबलोऽथ विमोहनः ॥ २,३.५० ॥

क्रिमिश्च क्रिमभक्षश्च लालाभक्षो विषञ्जनः ।
अधः शिराः पूयवहो रुधिरान्धश्च विड्भुजः ॥ २,३.५१ ॥

तथा वैतरणी सू (मू) मसिपत्रवनं तथा ।
अग्निज्वालो महाघोरः सन्दंशो वाप्यभोजनः ॥ २,३.५२ ॥

तमश्च कालसूत्रं च लोहश्चाप्यभिदस्तथा ।
अप्रतिष्ठोऽप्यवीचिश्च नरका एवमादयः ॥ २,३.५३ ॥

तामसा नरकाः सर्वे यमस्य विषये स्थिताः ।
येषु दुष्कृतकर्माणः पतन्ति हि पृथक्पृथक् ॥ २,३.५४ ॥

भूमेरधस्तात्ते सर्वे रौरवाद्याः प्रकीर्तिताः ।
रोघो गोघ्नो भ्रूणहा च अग्निदाता नरः पतेत् ॥ २,३.५५ ॥

सूकरे ब्रह्महा मज्जेत्सुरापः स्वर्णतस्करः ।
ताले पतेत्क्षत्त्रहन्ता हत्वा वैश्यं च दुर्गतिः ॥ २,३.५६ ॥

ब्रह्महत्यां च यः कुर्याद्यश्च स्याद्गुरुतल्पगः ।
स्वसृगामी तप्तकुम्भी तथा राजभटोऽनृती ॥ २,३.५७ ॥

तप्तलोहैश्च विक्रेता तथा बन्धनरक्षिता ।
माध्वी विक्रयकर्ता च यस्तु भक्तं परित्यजेत् ॥ २,३.५८ ॥

महाज्वाली दुहितरं स्नुषां गच्छति यस्तु वै ।
वेदो विक्रीयते यैश्च वेदं दूषयते तु यः ॥ २,३.५९ ॥

गुरुं चैवावमन्यन्ते वाक्शरैस्ताडयन्ति च ।
अगम्यागामी च नरो नरकं शबलं व्रजेत् ॥ २,३.६० ॥

विमोहे पतते शूरे मर्यादां यो भिनत्ति वै ।
दुरिष्टं कुरुते यस्तु कृमिभक्षं प्रपद्यते ॥ २,३.६१ ॥

देवब्राह्मणविद्वेष्टा लालाभक्षे पतत्यपि ।
कुण्डकर्ता कुलालश्च न्यासहर्ता चिकित्सकः ॥ २,३.६२ ॥

आरामेष्वग्निदाता च एते यान्ति विषञ्जने ।
असत्प्रतिग्रही यस्तु तथैवायाज्ययाजकः ॥ २,३.६३ ॥

न क्षत्त्रैर्जोवते यस्तु नरो गच्छेदधोमुखम् ।
क्षीरं सुरां च मासं लाक्षां गन्धं रसं तिलान् ॥ २,३.६४ ॥

एवमादीनि विक्रीणन् घोरे पूयवहे पतेत् ।
यः कुक्कुटान्निबध्नाति मार्जारान् सूकरांश्च तान् ।
पक्षिणश्च मृगांश्छा गान्सोऽप्येवं नरकं व्रजेत् ॥ २,३.६५ ॥

आजाविको माहिषिकस्तथा चक्री ध्वजी च यः ।
रङ्गोपजीविको विप्रः शाकुनिर्ग्रामयाजकः ॥ २,३.६६ ॥

अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
सुरापो मांसभक्षी च तथा च पशुघातकः ॥ २,३.६७ ॥

रुधिरान्धे पतन्त्येते पतन्त्येते एवमाहुर्मनीषिणः ।
उपविष्टन्त्वेकपङ्क्त्यां विषं सम्भोजयन्ति ये ॥ २,३.६८ ॥

पतन्ति निरये घोरे विड्भुजे नात्र संशयः ।
मधुग्राहो वैतरणीमाक्रोशी मूत्रसंज्ञके ॥ २,३.६९ ॥

असिपत्रवनेऽसौची क्रोधनश्च एतेदपि ।
अग्निज्वालां मृगव्याधो भोज्यते यत्र वायसैः ॥ २,३.७० ॥

इज्यायां व्रतलोपाच्च सन्दंशे नरके पतेत् ।
स्कन्दन्ते यदि वा स्वप्ने यतिनो ब्रह्मचारिणः ॥ २,३.७१ ॥

पुत्रैरध्यापिता ये च पुत्रैराज्ञापिताश्च ये ।
ते सर्वे नरकं यान्ति निरयं चाप्यभोजनम् ॥ २,३.७२ ॥

वर्णाश्रमविरुद्धानि क्रोधहर्षसमन्विताः ।
कर्माणि ये तु कुर्वन्ति सर्वे निरयवासिनः ॥ २,३.७३ ॥

उपरिष्टात्स्थितो घोर उष्णात्मा रौरवो महान् ।
सुदारुणः सुशीतात्मा तस्या धस्तामसः स्मृतः ॥ २,३.७४ ॥

एवमादिक्रमेणैव सर्वेऽधोऽधः परिस्थिताः ।
दुः खोत्कर्षश्च सर्वेषु कर्मस्वपि निमित्ततः ॥ २,३.७५ ॥

सुखोत्कर्षश्च सर्वत्र धर्मस्येहनिमितताः ।
पश्यन्तिनरकान्देवा ह्यधोवक्त्रान्सुदारुणान् ॥ २,३.७६ ॥

नारकाश्चापि ते देवान्सर्वान्पश्यन्ति ऊर्ध्वगान् ।
एतान्यान्यानि शतशो नरकाणि वियद्गते ॥ २,३.७७ ॥

दिनेदिने तु नरके पच्यते दह्यतेन्यतः ।
शीर्यते भिद्यतेऽन्यत्र चूर्यते क्लिद्यतेन्यतः ॥ २,३.७८ ॥

क्वथ्यते दीप्यतेऽन्यत्र तथा वातहतोऽन्यतः ।
एकं दिनं वर्षशतप्रमाणं नरके भवेत् ॥ २,३.७९ ॥

ततः सर्वेषु निस्तीर्णः पापी तिर्यक्त्वमश्नते ।
कृमिकीटपतङ्गेषु स्थावरैकशफेषु च ॥ २,३.८० ॥

गत्वा वनगजाढ्येषु गोष्वषु तथैव च ।
खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ॥ २,३.८१ ॥

एते चैकशफाः षट्च शृणु पञ्चनखानतः ।
अन्यासु बहुपापासु दुः खदासु च यो निषु ॥ २,३.८२ ॥

मानुष्यं प्राप्यते कुब्जो कुत्सितो वामनोऽपि वा ।
चण्डालपुक्कसाद्यासु नरयोनिषु जायते ॥ २,३.८३ ॥

मुहुर्गर्भे वसन्त्येव म्रियन्ते च मुहुर्मुहुः ।
अवशिष्टेन पापेन पुण्येन च समन्वितः ॥ २,३.८४ ॥

ततश्चारोहिणीं योनिं शूद्रवैश्यनृपादिकम् ।
विप्रदेवेन्द्रतां चापि कदाचिदधिरोहति ॥ २,३.८५ ॥

एवं तु पापकर्माणो निरयेषु पतन्त्यधः ।
यथा पुण्यकृतो यान्ति तन्मे निगदतः शृणु ॥ २,३.८६ ॥

ते यमेन विनिर्दिष्टां योनिं पुण्यगतिं नराः ।
प्रगीतगन्धर्वगणा नृत्योत्सवसमाकुलाः ॥ २,३.८७ ॥

हारनूपुरमाधुर्यैः शोभितान्यमलानि तु ।
प्रयान्त्याशु विमानानि दिव्यगन्धस्रगुज्ज्वलाः ॥ २,३.८८ ॥

तस्माच्च प्रच्युता राज्ञामन्येषां च महात्मनाम् ।
जायन्ते नीरुजां गेहे स द्वृत्तिपीरपालकाः ॥ २,३.८९ ॥

भोगान्सम्प्राप्नुवन्त्युग्रांस्ततो यान्त्यूर्ध्वमन्यथा ।
अवरोहिणीं सम्प्राप्य पूर्ववद्यन्ति मानवाः ॥ २,३.९० ॥

जातस्य मृत्युलोके वै प्राणिनो मरणं ध्रुवम् ।
पापिष्ठानामदोमार्गाज्जीवो निष्क्रमते ध्रुवम् ॥ २,३.९१ ॥

पृथिव्यां लीयते पृथ्वी आपश्चैव तथाप्सु च ।
तेजस्तेजसि लीयते समीरे च समीरणः ॥ २,३.९२ ॥

आकाशे च तथाकाशं सर्वव्यापि निशाकरे ।
तत्र कामस्तथा क्रोधः काये पञ्चेन्द्रियाणि च ॥ २,३.९३ ॥

एते तार्क्ष्य समाख्याता देहे तिष्ठन्ति तस्कराः ।
कामः क्रोधो ह्यहङ्कारो मनस्तत्रैव नायकः ॥ २,३.९४ ॥

संहारश्चैव कालोऽसौ पुण्यपापेन संयुतः ।
पञ्चेन्द्रियसमायुक्तः सकलैर्विबुधैः सह ॥ २,३.९५ ॥

प्रविशेत्स नवे देहे पृहे दग्धे गुही यथा ।
शरीरे ये समासीनाः सर्वे वै सप्त धातवः ॥ २,३.९६ ॥

षाट्कौशिको ह्ययं कायः सर्वे वाताश्च देहिनाम् ।
मूत्रं पुरीषं तद्योगाद्ये चान्ये व्याधयस्तथा ॥ २,३.९७ ॥

पित्तं श्लेष्मा तथा मज्जा मांसं वै मेद एव च ।
अस्थि शुक्रं तथा स्नायुर्देहेन सह दह्यति ॥ २,३.९८ ॥

एष ते कथितस्ताक्ष्र्य विनासः सर्वदेहिनम् ।
कथयामि पुनस्तेषां शरीरं च यथा भवेत् ॥ २,३.९९ ॥

एकस्तम्बंस्नायुबद्धं स्थूणात्रयविभूषणम् ।
इन्द्रियैश्च समायुक्तं नवद्वारं शरीरकम् ॥ २,३.१०० ॥

विषयैश्च समाक्रान्तं कामक्रोधसमाकुलम् ।
रागद्वेषसमाकीर्णं तृष्णादुर्गमतस्करम् ॥ २,३.१०१ ॥

लोभजालपरिच्छिन्नं मोहवस्त्रेण वेष्टितम् ।
सुबद्धं मायया चैतल्लोभेनाधिष्ठितं पुरम् ॥ २,३.१०२ ॥

एतद्गुणसमाकीर्णं शरीरं सर्वदेहिनाम् ।
आत्मानं ये न जानन्ति ते नराः पशवः स्मृताः ॥ २,३.१०३ ॥

एवमेव समाख्यातं शरीरं ते चतुर्विधम् ।
चतुरशीतिलक्षाणि निर्मिता योनयः पुरा ॥ २,३.१०४ ॥

उद्भिज्जाः स्वेदजाश्चैव अण्डजाश्च जरायुजाः ।
एतत्ते सर्वमाख्यातं निरयस्य प्रपञ्चतः ॥ २,३.१०५ ॥

अथयामि क्रमप्राप्तं प्रष्टु वा वर्तते स्पृहा ॥ २,३.१०६ ॥

इति श्रीगारुडे महापुराणे धर्मकाण्डे द्वितीयांशे प्रेतकल्पे श्रीकृष्णगरुडसंवादे नरकतत्प्रवेशनिर्गमनादिवर्णनं नाम तृतीयोऽध्यायः

श्रीगरुडमहापुराणम् ४
श्रीकृष्ण उवाच ।
ज्ञानतोऽज्ञानतो वापियन्नरैः कलुषं कृतम् ।
तस्य पापस्य शुद्ध्यर्थं विधेया निष्कृतिर्नरैः ॥ १ ॥
भस्मादिस्नानदशकमादौ कुर्याद्विचक्षणः ।
यथाशक्ति षडब्दादिप्रत्याम्नायाच्चरेदपि ॥ २ ॥
तदर्धं वा तदर्धं वा तदर्धार्धमथापि वा ।
यथाशक्त्या ततः कुर्याद्दश दानानि वै शृणु ॥ ३ ॥
गोभूतिलहिरण्याज्यवासोधन्यगुडास्तथा ।
रजतं लवणं चैव दानानि दश वै विदुः ॥ ४ ॥
प्रायश्चित्ते त्वागता ये तेभ्यो दद्यान्नरो दश ।
ततो यमद्वारपथे पूयशोणितसंकुले ॥ ५ ॥
नदीं वैतरणीं तर्तुं दद्याद्वैतरणीं च गाम् ।
कृष्णस्तनी सकृष्णाङ्गी सा वै वैतरणी स्मृता ॥ ६ ॥
तिला लोहं हिरण्यं च कर्पासं लवणं तथा ।
सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ॥ ७ ॥
एतान्यष्टौ महादानान्युत्तमाय द्विजातये ।
आतुरेण तु देयानि पदरूपाणि मे शृणु ॥ ८ ॥
छत्रो पानहवस्त्राणि मुद्रिका च कमण्डलुः ।
आसनं भाजनं पदं चाष्टविधं स्मृतम् ॥ ९ ॥
तिलापात्रं सर्पिः पात्रं शय्या सोपस्करा तथा ।
एतत्सर्वं प्रदातव्यं यदिष्टं चात्मनोऽपि तत् ॥ १० ॥
अश्वो रथश्च महीषी व्यञ्जनं वस्त्रमेव च ।
ब्राह्मणेभ्यः प्रदातव्यं ब्रह्मपूर्वमपि स्वयम् ॥ ११ ॥
दाना न्यन्यान्यपि खग तर्पयेत्स्वीयशक्तितः ।
प्रायाश्चित्तं कृतं येन दश दानान्यपि क्षितौ ॥ १२ ॥
दानं गोर्वैतरण्याश्च दानान्यष्टौ तथापि वा ।
तिलपात्रं सर्पिः पात्रं शय्यादानं तथैव च ॥ १३ ॥
पददानं च विधिवन्नासौ निरयगर्भगः ।
स्वातन्त्र्येणापि लवणदानमिच्छन्ति सूरयः ॥ १४ ॥
विष्णुदेहसमुत्पन्नो यतोऽयं लवणो रसः ।
आतुरस्य यदा प्राणा न यान्ति वसुधातले ॥ १५ ॥
लवणं च तदा देयं द्वारस्योद्वाटनं दिवः ।

यानिकानि च दानानि स्वयं दत्तानि मानवैः ॥ १६ ॥
तानितानि च सर्वाणि उपतिष्ठन्ति चाग्रतः ।
प्रायश्चित्तं कृतं येन साङ्गं खग स वै पुमान् ॥ १७ ॥
पापानि भस्मसात्कृत्वा स्वर्गलोके महीयते ।
अमृतं तु गवां क्षीरं यतः पतगसत्तम् ॥ १८ ॥
तस्माद्ददाति यो धेनुममृतत्वं स गच्छति ।
दानान्यष्टौ तु दत्त्वा वै गन्धर्वनिलये वसेत् ॥ १९ ॥
आलयस्तत्र रौद्रे हि दह्यते येन मानवः ।
छत्रदानेन सुच्छाया जायते पथि तुष्टिदा ॥ २० ॥
असिपत्रवनं धारमतिक्रामति वै सुखम् ।
अश्वारूढश्च व्रजति ददते यद्युपानहौ ॥ २१ ॥
भोजनासनदानेन सुखं मार्गे भुनक्ति वै ।
प्रदेशे निर्जले दाता सुखी स्याद्वै कमण्डलोः ॥ २२ ॥
यमदूता महारौद्राः करालाः कृष्णपिङ्गलाः ।
न पीडयन्ति दाक्षिण्याद्वस्त्राभरणदानतः ॥ २३ ॥
तिलपात्रं तु विप्राय दत्तं पत्ररथ ध्रुवम् ।
नाशयेत्त्रिविधं षापं वाङ्मनः कायसम्भवम् ॥ २४ ॥
घृतपात्रप्रदाने रुद्रलोके वसेन्नरः ।
सर्वोपस्करसंयुक्तां शय्यां दत्त्वा द्विजातये ॥ २५ ॥
नानाप्सरोभिराकीर्णं विमानमधिरोहति ।
षष्टिवर्षसहस्राणि क्रीडित्वा शक्रमन्दिरे ॥ २६ ॥
इन्द्रलोकात्परिभ्रष्ट इह लोके नृपो भवेत् ।
सर्वोपस्करणोपेतं युवानं दोषवर्जितम् ॥ २७ ॥
योऽश्वं ददाति विप्राय स्वर्गलोके च तिष्ठति ।
यावन्ति रोमाणि हये भवन्ति हि खगेश्वर ॥ २८ ॥
तावतो राजितांल्लोकानाप्नुवन्ति हि पुष्कलान् ।
चतुर्भिस्तुरगैर्युक्तं सर्वोपकरणैर्युतम् ॥ २९ ॥
रथं द्विजातये दत्त्वा राजसूयफलं लभ्त् ॥ ३० ॥
दुग्धाधिकां च महिषीं नवमेघवर्णां सन्तुष्टतर्णकवलीं जघनाभिरामाम् ।
दत्त्वा सुवर्णतिलकां द्विजपुङ्गवाय लोकोदयं स जयतीति किमत्र चित्रम् ॥ ३१ ॥
तालवृन्तस्य दानेन वायुना वीज्यते पथि ।
कान्तियुक्सुभगः श्रीमान् भवत्यम्बरदानतः ॥ ३२ ॥
रसान्नोपस्करयुतं गृहं विप्राय योर्ऽपयेत् ।

न हीयते तस्य वंशः स्वर्गं प्राप्नोत्यनुत्तमम् ॥ ३३ ॥
भवत्यत्र खगश्रेष्ठ फलगौखलाघवम् ।
श्रद्धाश्रद्धाविभेदेन दानगौरवलाघवात् ॥ ३४ ॥
ततो येनाम्बुदानानि कृतान्यत्र रसास्तथा ।
तदा खग तथाह्लादमापदि प्रतिपद्यते ॥ ३५ ॥
अन्नानि येन दत्तानि श्रद्धापूतेन चेतसा ।
सोऽपि तृप्तिमवाप्नोति विनाप्यन्नेन वै तदा ॥ ३६ ॥
आसन्ने मरणे कुर्यात्संन्यासं चेद्विधानतः ।
आवर्तेत पुनर्नासौ ब्रह्मभूयाय कल्पते ॥ ३७ ॥
आसन्नमरणो मत्यश्चेत्तीर्थं प्रतिनयिते ।
तीर्थप्राप्तौ भवेन्मुक्तिर्म्रियते यदि मार्गगः ।
पदेपदे क्रतुसमं भवेत्तस्य न संशयः ॥ ३८ ॥
गृह्णीयाच्चेदनशनं व्रतं विधिवदागते ।
मृत्यौ न सोऽपि संसारे भूयः पर्यटति द्विज ॥ ३९ ॥
किं दानमिति तुर्यस्य प्रश्नस्योत्तरमीरितम् ।
दाहमृत्योरन्तरे किमितिप्रश्नोत्तरं शृणु ॥ ४० ॥
गतप्राणं ततो ज्ञात्वा स्नात्वा पुत्रादिराशु तम् ।
शवं जलेन शुद्धेन क्षालयेदविचारयन् ॥ ४१ ॥
परिधाप्याहते वस्त्रे चन्दनैः प्रोक्षयेत्तनुम् ।
ततो मृतस्य स्थाने वै एकोद्दिष्टं समाचरेत् ॥ ४२ ॥
प्रयोगपूर्वं दाहस्य योग्यतादिर्यथा भवेत् ।
आंसनं प्राक्षण च स्यान्न स्यादेतच्चतुष्टयम् ॥ ४३ ॥
आवाहनार्चन चैव पान्त्रालम्भावगाहने ।
भवेद्दानान्नसङ्कल्पः पिण्डदानं सदा भवेत् ॥ ४४ ॥
पदार्थपञ्चकं न स्याद्रेखा प्रत्यवनेजनम् ।
दद्यादक्षय्यमुदकं न स्यादेतत्त्रयं पुनः ॥ ४५ ॥
स्वधावाचनमाशीश्च तिलकं च खगोत्तम ।
घटं दद्यात्समाषान्नं दद्याल्लोहस्य दक्षिणाम् ॥ ४६ ॥
पिण्डस्य चालनं प्रोक्तं नैव प्रोक्तमिदं त्रिकम् ।
प्रच्छादनविसर्गौ च स्वस्तिवाचनकं तथा ॥ ४७ ॥
एषु षट्सु विधिः प्रोक्तः श्राद्धेषु मलिनेषु ते ।
षडेव मरणस्थाने द्वारि चात्वरिके तथा ॥ ४८ ॥
विश्रामे काष्ठचयने तथा सञ्चयने खग ।

मृतिस्थाने शवो नाम भूमिस्तुष्यति देवता ॥ ४९ ॥
पान्थो द्वारि भवेत्तेन प्रीता स्याद्वास्तुदेवता ।
चत्वरे खेचरस्तेन तुष्येद्भूतादिदेवता ॥ ५० ॥
विश्रामे भूतसंज्ञोऽयं तुष्टस्तेन दिशो दश ।
चितायां साधक इति सञ्चितौ प्रेत उच्यते ॥ ५१ ॥
तिलदर्भघृतेधांसि गृहीत्वा तु सुतादयः ।
गाथां यमस्य सूक्तं वाप्यधीयाना व्रजन्ति हि ॥ ५२ ॥
अहरहर्नीयमानो गामश्वं पुरुषं वृषम् ।
वैवस्वतो न तृप्येत सुरया त्विव दुर्मतिः ॥ ५३ ॥
इमां गाथमपेतेति सूक्तं वा पथि संपठेत् ।
दक्षिणस्यां दिश्यरण्यं व्रजेयुः सर्वबान्धवाः ॥ ५४ ॥
पथि श्राद्धद्वयं कुर्यात्पूर्वोक्तविधिना खग ।
ततः शनैर्भूतले वै दक्षिणाशिरसं शवम् ॥ ५५ ॥
स्थापयित्वा चिताभूमौ पूर्वोक्तं श्राद्धमाचरेत् ।
तृणकाष्ठतिलाज्यादि स्वयं निन्युः सुतादयः ॥ ५६ ॥
शूद्रानीतैः कृतं कर्म सर्वं भवति निष्फलम् ।
प्राचीनावीतिना भाव्यं दक्षिणाभिमुकेन च ॥ ५७ ॥
वेदी तत्र प्रकर्तव्या यथाशास्त्रमथाण्डज ।
प्रतेवस्त्रं द्विधा कृत्वार्धेन तं छादयेत्ततः ॥ ५८ ॥
अर्धं श्मशानवासार्थं भूमावेव विनिः क्षिपेत् ।
ततः पूर्वोक्तविधिना पिण्डं प्रेतकरे न्यसेत् ॥ ५९ ॥
आज्येनाभ्यञ्जनं कार्यं सर्वाङ्गेषु शवस्य च ।
दाहमृत्योरन्तराले विधिः पिण्डस्य तं शृणु ॥ ६० ॥
पूर्वोक्तैः पञ्चभिः पिण्डैः शवस्याहुतियोग्यता ।
अन्यथा चोपघाताच्च राक्षसाद्या भवन्ति हि ॥ ६१ ॥
संमृज्य चोपलिप्याथ उल्लिख्योद्धृत्य वेदिकाम् ।
अभ्युक्ष्योपसमाधाय वह्निं तत्र विधानतः ॥ ६२ ॥
पुष्पाक्षतैश्च संपूज्य देवं क्रव्यादसंज्ञकम् ।
श्रौतेन तु विधानेन ह्याहिताग्निं दहेद्वुधः ॥ ६३ ॥
चण्डालाग्निं चिताग्निं च पतिताग्निं परित्यजेत् ।
त्वं भूतकृज्जगद्योनिस्त्वं लोकपरिपालकः ॥ ६४ ॥
उपसंहर तस्मात्त्वमेनं स्वर्गं नयामृतम् ।
इति क्रव्यादमभ्यर्च्य शरीराहुतिमाचरेत् ॥ ६५ ॥

अर्धदग्धे तथा देहे दद्यादाज्याहुतिं ततः ।
अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ॥ ६६ ॥
असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा तु नामतः ।
एवमाज्याहुतिं दत्त्वा तिलमिश्रां समन्त्रकम् ॥ ६७ ॥
रोदितव्यं ततो गाढमेवं तस्य सुखं भवेत् ।
दाहस्यानन्तरं तत्र कृत्वा सञ्चयनिक्रियाम् ॥ ६८ ॥
प्रेतपिण्डं प्रदद्याच्च दाहार्तिशमनं खग ।
ततः प्रदक्षिणं कृक्त्वा चिताप्रस्थानवीक्षकाः ॥ ६९ ॥
कनिष्ठपूर्वाः स्नानार्थं गच्छेयुः सूक्तजापकाः ।
ततो जालसमीपे तु गत्वा प्रक्षाल्य चांशुकम् ॥ ७० ॥
परिधाय पुनस्तच्च ब्रूयुस्तं पुरुषं प्रति ।
उदकं तु करिष्यामः सचैलं पुरुषास्ततः ॥ ७१ ॥
कुरुध्वमित्येव वदेच्छतवर्षावरे मृते ।
पुत्राद्या वृद्धपूर्वास्ते एकवस्त्राः शिखां विना ॥ ७२ ॥
प्राचीनावीतिनः सर्वे विशेयुर्मौनिनो जलम् ।
अपनः शोशुचदघमनेन पितृदिङ्मुखाः ॥ ७३ ॥
जलावघट्टनं चव न कुर्युः स्नानकारकाः ।
ततस्तटे समागत्य शिखां बद्ध्वा ऋजून् कुशान् ॥ ७४ ॥
दक्षिणाग्रहस्तयोस्तु कृत्वाथ सतिलं जलम् ।
आदायाञ्जलिना याम्यां दुः खी पैतृकतीर्थतः ॥ ७५ ॥
एकवारं त्रिवारं वा दशवारमथापि वा ।
भूमावश्मनि वा सर्वे क्षिपेयुर्वाग्यताः खग ॥ ७६ ॥
तृप्यन्तु तृप्यतां वापि तर्पयाम्युपतिष्ठताम् ।
प्रेतैतदमुकगोत्रेत्युक्तेष्वेवं समुच्चरेत् ॥ ७७ ॥
जलाञ्जलौ कृते पश्चाद्विधेयं दन्तधावनम् ।
त्यजन्ति गोत्रिणः सर्वे दिनानि नव काश्यप ॥ ७८ ॥
तत उत्तीर्योदकाद्वै वस्त्राणि परिधाय च ।
स्नानवस्त्रं सकृत्पीड्य विशेयुः शुचिभूतले ॥ ७९ ॥
अश्रुपातं न कुर्वीत दत्त्वा दाहजलाञ्जलिम् ।
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ॥ ८० ॥
अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ।
ततस्तेषूपविष्टेषु पुराणज्ञः सुकृत्स्वकः ॥ ८१ ॥
शोकापनोदं कुर्वीत संसारानित्यतां ब्रुवन् ।

मानुष्ये कदलीस्तन्भे असारे सारमार्गणम् ॥ ८२ ॥
करोति यः स संमूढो जलबुद्वद्रसन्निभे ।
पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ॥ ८३ ॥
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ।
गन्त्री वसुमती नाशमुदधिर्दैवतानि च ॥ ८४ ॥
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ।
एवं संश्रावयेत्तत्र मृदुशाद्वलसंस्थितान् ॥ ८५ ॥
तेऽयि संश्रुत्य गच्छेयुर्गृहं बालपुरः सराः ।
विदश्य र्निबपत्राणि नियता द्वारि वेश्मनः ॥ ८६ ॥
आचम्य वह्निसलिलं गोमयं गौरसर्षपान् ।
दूर्वाप्रवालं वृषभमन्यदप्यथ मङ्गलम् ॥ ८७ ॥
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ।
श्रौतेन तु विधानेन आहिताग्निं देहद्वधः ॥ ८८ ॥
ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः ।
योषित्पतिव्रता या स्याद्भर्तारं यानुगच्छति ॥ ८९ ॥
प्रयोग पूर्वं भर्तारं नमस्कृत्यारुहेच्चितिम् ।
चितिभ्रष्टा तु या मोहात्सा प्राजापत्यमाचरेत् ॥ ९० ॥
तिस्रः कोट्योर्धकोटी य यानि लोमानि मानुषे ।
तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति ॥ ९१ ॥
व्यालग्राही यथा व्यालं बिलादुद्धरते बलात् ।
तद्वदुद्धृत्य सा नारी तेनैव सह मोदते ॥ ९२ ॥
तत्र सा भर्तृपरमा स्तूयमानाप्सरोगणैः ।
क्रीडते पतिना सार्धं यावदिन्द्राश्चतुर्दश ॥ ९३ ॥
ब्रह्मघ्नो वा कृघ्नो वा मित्त्रिघ्नो वा भवेत्पतिः ।
पुनात्यविधवा नारी तमादाय मृता तु या ॥ ९४ ॥
मृते भर्तरि या नारी समारोहेद्धुताशनम् ।
सारन्धतीसमाचारा स्वर्गलोके महीयते ॥ ९५ ॥
यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत् ।
तावन्न मुच्यते सा हि स्त्रीशरीरात्कथञ्चन ॥ ९६ ॥
मातृकं पैतृकं चैव यत्र चैव प्रदीयते ।
कुलत्रयं पुनात्येषा भर्तारं यानुगच्छति ॥ ९७ ॥
आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥ ९८ ॥

पृथक्चितां समारुह्य न प्रिया गन्तुमर्हति ।
क्षत्त्रियाद्याः सवर्णाश्च आरोहेयुरपीह ताः ॥ ९९ ॥
चाण्डालीमवधिं कृत्वा ब्राह्मणीतः समो विधिः ।
अगर्भिणीनां सर्वासामबालताक्मे(का)नामपि ॥ १०० ॥
दहनस्य विधिः प्रोक्तः सामान्येन मया खग ।
विशेषमपि तस्यास्य कञ्चित्किं श्रोतुमिच्छति ॥ १०१ ॥
गरुड उवाच ।
प्रोषिते तु मृते स्वामिन्यस्थिनाशमुपेयुषि ।
कथं दाहः प्रकर्तव्यस्तन्मे वद जगत्पते ॥ १०२ ॥
श्रीकृष्ण उवाच ।
अस्थीनि चेन्न लभ्यन्ते प्रोषितस्य नरस्य च ।
तेषाञ्च हि गतिस्थानं विधानं कथयाम्यहम् ॥ १०३ ॥
शृणु तार्क्ष्य परं गोप्यं पत्युर्दुर्मरणेषु यत् ।
लङ्घनैर्ये मृता जीवां दंष्ट्रिभिश्चाभिघातिताः ॥ १०४ ॥
कण्ठग्रहे विलग्नानां क्षीणानां तुण्डघातिनाम् ।
विषाग्निवृषविप्रेभ्यो विषूच्या चात्मघातकाः ॥ १०५ ॥
पतनोद्बन्धनजलैर्मृतानां शृणु संस्थितिम् ।
सर्पव्याघ्रैः शृङ्गिभिश्च उपसर्गोपलोदकैः ॥ १०६ ॥
ब्राह्मणैः श्वापदैश्चैव पतनैर्वृक्षवैद्युतैः ।
नखैर्लोहैर्गिरेः पातैर्भित्तिपातैर्भृगोस्तथा ॥ १०७ ॥
कट्वायामन्तरिक्षे च चौरचाण्डालतस्तथा ।
उदक्याशुनकीशूद्ररजकादिविभूषिताः ॥ १०८ ॥
ऊर्ध्वोचछिष्टाधरोच्छिष्टोभयोच्छिष्टास्तु ये मृताः ।
शस्त्रघातैर्मृता ये चास्यश्वस्पृष्टास्तथैव च ॥ १०९ ॥
तत्तु दुर्मरणं ज्ञेयं यच्च जातं विधैं विना ।
तेन पापेन नरकान् भुक्त्वा प्रेतत्वभागिनः ॥ ११० ॥
न तेषां कारयेद्दाहं सूतकं नोदकक्रियाम् ।
न विधानं मृताद्यञ्च न कुर्या दौर्ध्वदैहिकम् ॥ १११ ॥
न पिण्डदानं कर्तव्यं प्रमादाच्चेत्करोति हि ।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ॥ ११२ ॥
अतस्तस्य सुतैः पौत्त्रैः सपिण्डैः शुभमिच्छुभिः ।
नारायणबलिः कार्यो लोकगर्हाभिया खग ॥ ११३ ॥
तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ।

कृते नारायणबलावौर्ध्वदेहिकयोग्यता ॥ ११४ ॥
तस्य सुद्धिकरं कर्म तद्भवेन्न तदन्यथा ।
नारायणबलिं सम्यक्तीर्थे सर्वं प्रक्पयेत् ॥ ११५ ॥
कृष्णाग्रे कारयेद्बिप्रैर्येन पूतो भवेन्नरः ।
पूर्वन्तु तर्पणं कार्यं विप्रैः पौराणवैदिकैः ॥ ११६ ॥
सर्वौषध्यक्षतैर्मिश्रैर्विष्णुमुद्दिश्य तर्पयेत् ।
कार्यं पुरुषसूक्तेन मन्त्रैर्वा वैष्णवैरपि ॥ ११७ ॥
दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुमिति स्मरन् ।
अनादिनिधनो देवः शङ्खचक्रगदाधरः ॥ ११८ ॥
अक्षयः पुण्डरीकाक्षः प्रेतमोक्षप्रदो भव ।
तर्पणस्यावसाने स्याद्वीतरागो विमत्सरः ॥ ११९ ॥
जितेन्द्रियमना भूत्वा शुचिष्मान्धर्मतत्परः ।
भक्त्या तत्र प्रकुर्वीत श्राद्धान्येकादशैव तु ॥ १२० ॥
सर्वकर्मविधाने एकैकाग्रे समाहितः ।
तोयव्रीहियवान्दद्याद्गोधूमांश्च प्रियङ्गवः ॥ १२१ ॥
हविष्यान्नं शुभं मुद्रां छत्रोष्णीषे च दापयेत् ।
दापयेत्सर्वसंस्यानि क्षीरं क्षौद्रसमान्वितम् ॥ १२२ ॥
वस्त्रोपानहसंयुक्तं दद्यादष्टविधं पदम् ।
द्पयेत्सर्वपापेभ्यो न कुर्यात्पङ्क्तिवञ्चनम् ॥ १२३ ॥
भूमौ स्थितेषु पिण्डेषु गन्धपुष्पाक्षतान्वितम् ।
दातव्यं सर्वविप्रेभ्यो वेदशास्त्रविधानतः ॥ १२४ ॥
शङ्खे खड्गेऽथ वा ताम्रे तर्पणञ्च पृथक्पृथक् ।
ध्यानधारणसंयुक्तो जानुभ्यामवनीं गतः ॥ १२५ ॥
ऋचा वै दापयेदर्घमर्घोद्दिष्टं पृथक्पृथक् ।
ब्रह्मा विष्णुश्च रुद्रश्च यमः प्रेतश्च पञ्चमः ॥ १२६ ॥
पृथक्कुम्भे ततः स्थाप्याः पञ्चरत्नसमन्विताः ।
वस्त्रयज्ञोपवीतानि पृथङ्मुद्गाः पदानि च ॥ १२७ ॥
पञ्च श्राद्धानि कुर्वीत देवतानां यथाविधि ।
जलधारां ततः कुर्यात्पिण्डेपिण्डे पृथक्पृथक् ॥ १२८ ॥
शङ्खे वा ताम्रपात्रे वा अलाभे मृन्मये पि वा ।
तिलोदकं समादाय सर्वोषधिमसन्वितम् ॥ १२९ ॥
ताम्रपात्रं तिलैः पूर्णं सहिरण्यं सदक्षिणम् ।
दद्याद्ब्राह्मणमुख्याय पददानं तथैच ॥ १३० ॥

यमोद्देशेतिलांल्लौहं ततो दद्याच्च दक्षिणाम् ।
एवं विष्णुबलिं दत्त्वा यथाशक्त्या विधानतः ॥ १३१ ॥
समुद्धरति तत्क्षिप्रं नात्र कार्या विचारण नागदंशान्मृतो यस्तु विशेषस्तन्तु मे शृणु ॥ १३२ ॥
सुवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम् ।
विप्राय दत्त्वा विधिवत्पितुरानृण्यमाप्नुयात् ॥ १३३ ॥
एवं सर्पबलिं दत्त्वा सर्पदोषाद्विमुच्यते ।
पश्चात्पुत्तलकं कार्यं सर्वौषधिसमन्वितम् ॥ १३४ ॥
पलाशस्य च वृन्तानां विभागं शृणु काश्यप ।
कृष्णाजिनं समास्तीर्य कुशैश्च पुरुषाकृतिम् ॥ १३५ ॥
शतत्रयेण षष्ट्या च वृन्तैः प्रोक्तोऽस्थिसञ्चयः ।
विन्यस्य तानि वृन्तानि अङ्गेष्वेषु पृथक्पृथक् ॥ १३६ ॥
चत्वारिंशच्छिरोभागे ग्रीवायां दश विन्यसेत् ।
विंशत्युरः स्थले दद्याद्विंशतिञ्जठरे तथा ॥ १३७ ॥
बाहुद्वये शतं दद्यात्कटिदेशे च विंशतिम् ।
ऊरुद्वये शतञ्चापि त्रिंशज्जङ्घाद्वये न्यसेत् ॥ १३८ ॥
दद्याच्चतुष्टयं शिश्ने षड्दद्याद्वृषाणद्वये ।
दश पादाङ्गुलीभागे एवमस्थीनि विन्यसेत् ॥ १३९ ॥
नारिकेलं शिरः स्थानें तुम्बं दद्याच्च तालुके ।
पञ्चरत्नं मुखे दद्याज्जिह्वायां कदलीफलम् ॥ १४० ॥
अन्त्रेषु नालिकं तद्याद्वालुकाङ्घ्राणे एव च ।
वसायां मृत्तिकां दद्याद्धरितालमनः शिलाः ॥ १४१ ॥
पारदं रेतसः स्थाने पुरीषे पित्तलं तथा ।
मनः शिला तथा गात्रे तिलपक्वन्तु सन्धिषु ॥ १४२ ॥
यवपिष्टं यथा मांसे मधु शोणितमेव च ।
केशेषु च जटाजूटं त्वचायाञ्च मृगत्वचम् ॥ १४३ ॥
कर्णयोस्तालपत्रञ्च स्तनयोश्चैव गुञ्जिकाः ।
नासायां शतपत्रञ्च कमलं नाभिमण्डले ॥ १४४ ॥
वृन्ताकं वृषणद्वन्द्वे लिङ्गे स्याद्गृञ्जनं शुभम् ।
घृतं नाभ्यां प्रदेयं स्यात्कौ पीने च त्रपुस्मृतम् ॥ १४५ ॥
मौक्तिकं स्तनयोर्मूर्ध्नि कुङ्कुमेव विलेपनम् ।
कर्पूरागुरुधूपैश्च शुभैर्माल्यैः सुगन्धिभिः ॥ १४६ ॥
परिधानं पट्टसूत्रंहृदये चैव विन्यसेत् ।
ऋद्धिवृद्धी भुजौ द्वौ च चक्षुर्भ्याञ्च कपर्दकम् ॥ १४७ ॥

दन्तेषु दाडिमीबीजान्यङ्गुलीषु च चम्पकम् ।
सिन्दूरं नेत्रकोणे च ताम्बूलाद्युपहारकम् ॥ १४८ ॥
सर्वौषदियुतं प्रेतं कृत्वा पूजां यथोदिताम् ।
साग्निके चापि विधिना यज्ञपात्रं न्यस्येत्क्रमात् ॥ १४९ ॥
स्त्रियः पुनन्तु म शिर इमं मे वरुणेन च ।
प्रेतस्य पावनं कृत्वा शालग्रामशिलोदकैः ॥ १५० ॥
विष्णुमुद्दिश्य दातव्या सुशीला गौः पयस्विनी ।
तिला लौहं हिरण्यञ्च कर्पासं लवणं तथा ॥ १५१ ॥
सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ।
तिलपात्रं ततो दद्यात्पददानं तथैव च ॥ १५२ ॥
कर्तव्यं वैष्णवं श्राद्धं प्रेतमुक्त्यर्थमात्मनः ।
प्रेतमोक्षं ततः कुर्याद्धृदि विष्णुं प्रकल्प्यच ॥ १५३ ॥
एवं पुत्तलकं कृत्वा दाहयेद्विधिपूर्वकम् ।
तच्छुद्धये तु संस्कर्ता पुत्रादिर्निष्कृतिं चरेत् ॥ १५४ ॥
त्रीन्कृच्छ्रान्षड्द्वादश च तथा पञ्चदशापि च ।
प्रायश्चित्तनिमित्तानुसारेण विप्रवत्स्मृतः ॥ १५५ ॥
अशक्तौ गोहिरण्यादि प्रत्याम्नायं चरेदपि ।
आत्मनोऽनधिकारित्वे शुद्धिमेवं चरेद्वुन्धः ॥ १५६ ॥
अशुद्धेन तु यद्दत्तमुद्दिश्याशुद्धिमेव च ।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ॥ १५७ ॥
शुद्धिं सम्पाद्य कर्तव्यं दहनाद्यौर्ध्वदेहिकम् ।
अकृत्वा निष्कृतिं यस्तु कुरुते दहनादिकम् ॥ १५८ ॥
मतिपूर्वममत्या च क्रमात्तनिष्कृतिं शृणु ।
कृत्वाग्निमुदकं स्नानं स्पर्शनं वहनं कथाम् ॥ १५९ ॥
रज्जुच्छेदाश्रुपातञ्च तप्तकृच्छ्रेण शुध्यति ।
एषामन्यतमं प्रेतं यो वहेत्तु देहत वा ॥ १६० ॥
कटोदकक्रियां कृत्वा कृच्छ्र सान्तपनं चरेत् ।
निमित्ते लघुनि स्वल्पं महन्महति कल्पयेत् ॥ १६१ ॥
गरुड उवाच ।
कृच्छ्रस्य तप्तकृच्छ्रस्य तथा सान्तपनस्य च ।
लक्षणं ब्रूहि मे स्वामिंस्त्रयाणामपि सुव्रत ॥ १६२ ॥
श्रीकृष्ण उवाच ।
त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।

उपवासस्त्र्यहञ्चैव एष कृच्छ्र उदाहृतः ॥ १६३ ॥
तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥ १६४ ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
जग्ध्वा परेऽहन्युपवसेत्कृच्छ्रं सान्तपनञ्चरन् ॥ १६५ ॥
मया तेऽयं समाख्यातो दुर्मृतस्य विधिः खग ।
तदा मृतं विजानीयाद्दीपनिर्वाणमागतः ॥ १६६ ॥
अग्निदाहं ततः कुर्यात्सूतकञ्च दिनत्रयम् ।
दशाहं गर्तपिणाडञ्च कर्तव्यं प्रेतपूर्वकम् ॥ १६७ ॥
एवं विधिं ततः कुर्यात्ततः प्रेतश्च मुक्तिभाक् ।
मृतभ्रान्त्या प्रतिकृतेः कृते दाहे स वै यदि ॥ १६८ ॥
आयाति तेन कर्तव्यं मज्जनं घृकुण्डके ।
जातकर्मादिसंस्काराः कर्तव्याः पुनरेव तु ॥ १६९ ॥
ऊढामेव स्वकां भार्यामुद्वहेद्विधिवत्पुमान् ।
वर्षे पञ्चदशे पक्षिन् द्वादशे वा गते सति ॥ १७० ॥
अज्ञातस्य प्रोषितस्य कृत्वा प्रतिकृतिं दहेत् ।
रजस्वलासूतिकयोर्विशेषं मरणे शृणु ॥ १७१ ॥
सूतिकायां मृतायान्तु एवं कुर्वन्ति याज्ञिकाः ।
कुम्भे सलिलमादाय पञ्चगव्यं तथैव च ॥ १७२ ॥
पुण्याभिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः ।
शतसूर्पोदकेनादौ स्नापयित्वा यथाविधि ॥ १७३ ॥
तेनैव स्नापयित्वा तु दाहं कुर्यात्स्वगेश्वर ।
पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् ॥ १७४ ॥
वस्त्रान्तराकृतिं कृत्वा दाहयेद्विधिपूर्वकम् ।
मृतस्य पञ्चके दाहविधिं वच्मि शृणुष्व मे ॥ १७५ ॥
आदौ कृत्वा धनिष्ठार्धमेतन्नक्षत्रपञ्चकम् ।
रेवत्यन्तं सदा दूष्यमशुभं सर्वदा भवेत् ॥ १७६ ॥
दाहस्तत्र न कर्तव्यो विषादः सर्वजन्तुषु ।
न जलं दीयते तेषु अशुभं सर्वदा भवेत् ॥ १७७ ॥
पञ्चकानन्तरं सर्वं कार्यं कर्तव्यमन्यथा ।
पुत्राणां गोत्रिणां तस्य सन्तापोऽप्युपजायते ॥ १७८ ॥
गृहे हानिर्भवत्येव ऋक्षेष्वेषु मृतस्य च ।
अथ वा ऋक्षमद्ये च दाहस्तु विधिपूर्वकः ॥ १७९ ॥

क्रियते मानुषाणान्तु स वा आहुतिपूर्वकः ।
विप्रैर्विधिरतः कार्यो मन्त्रैस्तु विधिपूर्वकम् ॥ १८० ॥
शवस्थानसमीपे तु क्षेप्तव्याः पुत्तलास्ततः ।
दर्भक्लृप्तास्तु चत्वार ऋक्षमन्त्राभिमन्त्रिताः ॥ १८१ ॥
ततो दाहः प्रकर्तव्यस्तैश्च पुत्तलकैः सह ।
सूतकान्ते तदा पुत्रैः कार्यं शान्तिकपौष्टिकम् ॥ १८२ ॥
पञ्चकेषु मृतो योऽसौ न सतिं लभते नरः ।
तिलान् गाञ्च सुवर्णञ्च तमुद्दिश्य घृतं ददेत् ॥ १८३ ॥
विप्राणां दापयेद्दानं सर्वविघ्नविनाशनम् ।
भोजनोपानहौच्छत्त्रं हेममुद्रा च वाससी ॥ १८४ ॥
दक्षिणा दीयते विप्रे पातकस्य प्रमोचनः ।
मयातेऽयं समाख्यातो विधिः पञ्चहरः स्थितः ।
संयमिन्यां यथायानं यथावर्षं मृतक्रिया ॥ १८५ ॥
इति श्रीगारुडे महापुराणे उत्तरखण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे
दहनविधिकृच्छ्रलक्षणदग्धागमनरजस्वलामरणविधिपञ्चकमरणप्रायश्चित्तनिरूपणं नाम
चतुर्थोऽध्यायः

श्रीगरुडमहापुराणम् ५
श्रीकृष्ण उवाच ।
एवं दग्ध्वा नरं प्रेतं स्नात्वा कृत्वा तिलोदकम् ।
अग्रतः स्त्रीजनो गच्छेद्व्रजेयुः पृष्ठतो नराः ॥ २,५.१ ॥

प्राशयेन्निम्बपत्राणि रुदन्तो नामपूर्वकम् ।
विधातव्यं चाचमनं पाषाणोपरि संस्थिते ॥ २,५.२ ॥

ते प्रविश्य गृहं सर्वे सुताद्याश्च सपिण्डकाः ।
भवेयुर्दशरात्रं वै यत आशौचकं खग ॥ २,५.३ ॥

क्रीतलब्धाशनाः सर्वे स्वपेयुस्ते पृथक्पृथक् ।
अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् ॥ २,५.४ ॥

अमांसभोजनाश्चाधः शयीरन्ब्रह्मचारिणः ।
परस्परं न संस्पृष्टा दानाध्ययनवर्जिताः ॥ २,५.५ ॥

मलिनाश्चाधोमुखाश्च दीना भोगविवर्जिताः ।
अङ्गसंवाहनं केशमार्जनं वर्जयन्ति ते ॥ २,५.६ ॥

मृन्मये पत्रजे वापि भुञ्जीरंस्ते च भाजने ।
उवासन्तु ते कुर्युरेकाहमथ वा त्र्यहम् ॥ २,५.७ ॥

गरुड उवाच ।
आशौचिन इति प्रोक्तमाशौचस्य च वै प्रभो ।
लक्षणं किं कियत्कालं भाव्यं वा तद्युतैर्नरैः ॥ २,५.८ ॥

शृकृष्ण उवाच ।
अपनोद्यन्त्विदं कालादिभिराशु निषेधकृत् ।
पिण्डाध्ययनदानादेः पुङ्गतोऽतिशयो हि तत् ॥ २,५.९ ॥

दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
जननेऽप्येवमेव स्यान्निपुणं शुद्धिमिच्छताम् ॥ २,५.१० ॥

जन्मन्येकोदकानान्तुत्रिरात्राच्छुद्धिरिष्यते ।
शावस्य शेषाच्छुध्यन्ति त्र्यहादुदकदायिनः ॥ २,५.११ ॥

आदन्तजननत्सद्य आ चौलान्नैशिकी स्मृता ।
त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम् ॥ २,५.१२ ॥

आशौचं ते समाख्यातं संक्षेपात्प्रकृतं ब्रुवे ।
जलं त्रिदिवमाकाशे स्थाप्यं क्षीरञ्च मृन्मये ॥ २,५.१३ ॥

अत्र स्नाहि पिबात्रेति मन्त्रेणानेन काश्यप ।
काष्ठत्रये गुणैर्बद्धे प्रीत्यै रात्रौ चतुष्पथे ॥ २,५.१४ ॥

प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा ।
अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह ॥ २,५.१५ ॥

तदूर्ध्वमङ्गसंस्पर्शः सपिण्डानां विधीयते ।
योग्याः सर्वक्रियाणां च समानसलिलास्तथा ॥ २,५.१६ ॥

प्रेतपिण्डं बहिर्दद्याद्दर्भमात्रविवर्जितम् ।
प्रागुदीच्यां चरुं कृत्वा स्नात्वा प्रयतमानसः ॥ २,५.१७ ॥

भूमावसंस्कृतानां च संस्कृतानां कुशेषु च ।
नवभिर्दिवसैः पिण्डान्नव दद्यात्समाहितः ॥ २,५.१८ ॥

दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत् ।
असगोत्रः सगोत्रो वा यदि स्त्री यति वा पुमान् ॥ २,५.१९ ॥

प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ।
शालिना सक्तुभिर्वापि शाकैर्वाप्यथ निर्वपेत् ॥ २,५.२० ॥

प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम् ।
यावदाशौचमेकैकस्याञ्जलेर्दानमुच्यते ॥ २,५.२१ ॥

यद्वा यस्मिन्दिने दानं तस्मिंस्तद्दिनसंख्यया ।
दशाहेऽञ्जलयः पक्षिन्पञ्चाशदन्तिमे ॥ २,५.२२ ॥

द्विवृद्ध्या वा भवेत्पक्षिन्नञ्जलीनां शतं पुनः ।
यदाहि त्र्यहमाशौचं तदा वाञ्जलयो दश ॥ २,५.२३ ॥

त्रयोऽञ्जलय एवं तु प्रथमेऽहनिवै तदा ।
चत्वारस्तु द्वितीयेऽह्नि तृतीये स्युस्त्रयस्तथा ॥ २,५.२४ ॥

शताञ्जलि यदा पक्षिन्नाद्ये त्रिंशत्तदाहनि ।
चत्वारिंशद्द्वितीयेऽह्नि त्रिंशदह्नि तृतीयके ॥ २,५.२५ ॥

एवं जलस्याञ्जलयो विभाज्याः पक्षयोर्द्वयोः ।
सर्वेषु पितृकार्येषु पुत्रो मुक्योऽधिकारवान् ॥ २,५.२६ ॥

पिण्डप्रसेकस्तूष्णीञ्च पुष्पधूपादिकं तथा ।
दशमेऽहनि सम्प्राप्ते स्नानं ग्रामाद्वहिश्चरेत् ॥ २,५.२७ ॥

तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च ।
विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्त्रियो वाहनं तथा ॥ २,५.२८ ॥

वैश्यः प्रतोदं रश्मीन्वा शूद्रो यष्टिं कृतक्रियः ।
मृतादल्पवयोभिश्च सपिण्डैः परिवापनम् ॥ २,५.२९ ॥

कार्यन्तु षोडशी षड्भिः पिण्डैर्दशभिरैव च ।
प्रथमा मलिना ह्येतैरादशाहं मृतेर्भवेत् ॥ २,५.३० ॥

दिनानि दश यान्पिण्डान्कुर्वन्त्यत्र सुतादयः ।
प्रत्यहं ते विभज्यन्ते चतुर्भागैः खगोत्तम ॥ २,५.३१ ॥

भागद्वयेन देहः स्यात्तृतीयेन यमानुगाः ।
तृप्यन्ति हि चतुर्थेन स्वयमप्युपजीवति ॥ २,५.३२ ॥

अहोरात्रैस्तु नवभिर्देहो निष्पत्तिमाप्नुयात् ।
शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते तथा ॥ २,५.३३ ॥

द्वितीयेन तु कर्णाक्षिनासिकं तु समासतः ।
गलांसभुजवक्षश्च तृतीयेन तथा क्रमात् ॥ २,५.३४ ॥

चतुर्थेन च पिण्डेन नाभिलिङ्गगुदं तथा ।
जानुजङ्घं तथा पादौ पञ्चमेन तु सर्वदा ॥ २,५.३५ ॥

सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः ।
दन्तलोमान्यष्टमेन वीर्यन्तु नवमेन च ॥ २,५.३६ ॥

दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः ।
मध्यमां षोडशीं वच्मि वैनतेय शृणुष्व मे ॥ २,५.३७ ॥

विष्णवादिविष्णुपर्यन्तान्येकादश तथा खग ।
श्राद्धानि पञ्च देवानामित्येषां मध्यषीडशी ॥ २,५.३८ ॥

निमित्तं दुर्मतिं कृत्वा यदि नारायणो बलिः ।
एकादशाहे कर्तव्यो वृषोत्सर्गोऽपि तत्र वै ॥ २,५.३९ ॥

एकादशाहे प्रेतस्य यस्योत्सृज्येत नो वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ २,५.४० ॥

अकृत्वा यद्वृषोत्सर्गं कृतं वै पिण्डपातनम् ।
निष्फलं सकलं विद्यात्प्रमीताय न तद्भवेत् ॥ २,५.४१ ॥

वृषोत्सर्गादृते नान्यत्किञ्चिदस्ति महीतले ।
पुत्रः पत्न्यथ दौहित्रः पिता वा दुहिताथ वा ॥ २,५.४२ ॥

मृतादनन्तरं तस्य ध्रुवं कार्यो वृषोत्सवः ।
चतुर्वत्सतरीयुक्तो यस्योत्सृज्येत वा वृषः ॥ २,५.४३ ॥

अलङ्कृतो विधानेन प्रेतत्वं तस्य नो भवेत् ।
एकादशेऽह्नि सम्प्राप्ते वृषालाभो भवेद्यदि ॥ २,५.४४ ॥

दर्भैः पिष्टैस्तु सम्पाद्य तं वृषं मोचयेद्वुधः ।
वृषोत्सर्जनवेलायां वृषाभाव (लाभ) कथञ्चन ॥ २,५.४५ ॥

मृत्तिकाभिस्तु दर्भैर्वा वृषं कृत्वा विमोचयेत् ।
यदिष्टं जीवतस्तस्य दद्यादेकादशेऽहनि ॥ २,५.४६ ॥

मृतमुद्दिश्य दातव्यं शय्याधेन्वादिकं तथा ।
विप्रान्बहून् भोजयीत प्रेतस्य क्षुद्विशान्तये ॥ २,५.४७ ॥

तृतीयां षोडशीं वच्मि वैनतेय शृणुष्व ताम् ।
द्वादश प्रतिमास्यानि आद्यं षाण्मासिकं तथा ॥ २,५.४८ ॥

सपिण्डीकरणं चैव तृतीया षोडशी मता ।
द्वादशाहे त्रिपक्षे च षण्मासे मासिकेऽब्दिके ॥ २,५.४९ ॥

तृतीयां षोडशीमेनां वदन्ति मतभेदतः ।
यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश ॥ २,५.५० ॥

पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ।
एकादशे द्वादशे वा दिने आद्यं प्रकीर्तितम् ॥ २,५.५१ ॥

मासादौ प्रतिमासञ्च शुद्धं मृततिथौ खग ।
एकेनाह्ना त्रिभिर्वापि हीनेषु विनतासुत ॥ २,५.५२ ॥

मासषण्मासवर्षेषु त्रिपक्षेषु भवन्ति हि ।
श्राद्धान्यथस्यात्सापिण्ड्यं पूर्णे वर्षे तदर्धके ॥ २,५.५३ ॥

त्रिपक्षेऽभ्युदये वापि द्वादशाहेऽथ वा नृणाम् ।
आनन्त्यात्कुलधर्माणां पुंसाञ्चैवायुषः क्षयात् ॥ २,५.५४ ॥

अस्थिरत्वाच्छरीरस्य द्वादशाहे प्रशस्यते ।
सपिण्डीकरणेष्वेवं विधिं पक्षीन्द्र मे शृणु ॥ २,५.५५ ॥

एकोद्दिष्टविधानेन कार्यं तदपि काश्यप ।
तिलगन्धोदकैर्युक्तं कुर्यात्पात्रचतुष्टयम् ॥ २,५.५६ ॥

पात्रं प्रेतस्य तत्रैकं पित्र्यं पात्रत्रयं तथा ।
सेचयेत्पितृपात्रेषु प्रेतपात्रं खग त्रिषु ॥ २,५.५७ ॥

चतुरो निर्वपेत्पिण्डान्पूर्वन्तेषु समापयेत् ।
ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते ॥ २,५.५८ ॥

ततः पितृत्वमापन्ने तस्मिन्प्रेते खगेश्वर ।
श्राद्धधर्मैरशेषैस्तु तत्पूर्वानर्चयेत्पितॄन् ॥ २,५.५९ ॥

एकचित्यारोहणे च एकाह्नि मरणे तथा ।
सापिण्ड्यन्तु स्त्रिया नास्ति मृते भर्तुः स्त्रियो भवेत् ॥ २,५.६० ॥

पाकैक्यमथ कालैक्यं कर्त्रैक्यञ्च भवेत्खग ।
श्राद्धादौ सह दाहे च पतिपत्न्योर्न संशयः ॥ २,५.६१ ॥

भर्तुर्मृततिथेरन्यतिथौ चितिमथारुहेत् ।
तांमृताहनि तु सम्प्राप्ते पृथक्पिण्डेन योजयेत् ॥ २,५.६२ ॥

प्रत्यब्दञ्च युगपत्तु समापयेत् ॥ २,५.६३ ॥

यस्य संवत्सरादर्वाक्सपिण्डीकरणं भवेत् ।
मासिकञ्चोदकुम्भञ्च देयं तस्यापि वत्सरम् ॥ २,५.६४ ॥

नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश ।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि ॥ २,५.६५ ॥

पितामहीभिः सापिण्ड्यं तथा मातामहैः सह ।
उक्तं भर्त्रापि सापिण्ड्यं स्त्रिया वेषयभेदतः ॥ २,५.६६ ॥

नवश्राद्धस्य ते कालं वक्ष्यामि शृणु काश्यप ।
मरणाह्नि मृतिस्थाने श्राद्धं पक्षिन्प्रकल्पयेत् ॥ २,५.६७ ॥

द्वितीयञ्च ततो मार्गे विश्रामो यत्र कारितः ।
ततः सञ्चयनस्थाने तृतीयं श्राद्धमुच्यते ॥ २,५.६८ ॥

पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा ।
दशमैकादशे चैव नव श्राद्धानि वै खग ॥ २,५.६९ ॥

श्राद्धानि नव चैतानि तृतीया षोडशी स्मृता ।

एकोद्दिष्टविधानेन कार्याणि मनुजैस्तथा ॥ २,५.७० ॥

प्रथमेऽह्नि तृतीये वा पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव नवश्राद्धं प्रकीर्तितम् ॥ २,५.७१ ॥

उच्यन्ते षडिमानीह नव स्युरपि यागेतः ।
उक्तानि ते मया तानि ऋषीणां मतभेदतः ॥ २,५.७२ ॥

रूढिपक्षो ममाभीष्टो योगः कैश्चिदिहेष्यते ।
आद्ये द्वितीये दातव्यस्तथैवैकं पवित्रकम् ॥ २,५.७३ ॥

प्रेताय पिण्डो दातव्यो भुक्तवत्सु द्विजातिषु ।
प्रश्नस्तत्राभिरण्येति यजमानद्विजन्मना ॥ २,५.७४ ॥

अक्षय्यममुकस्येति वक्तव्यं विरतौ तथा ।
एकोद्दिष्टं मे निबोध चेत्थमावत्सरं स्मृतम् ॥ २,५.७५ ॥

सपिण्डीकरणादूर्ध्वं यानि श्राद्धानि षोडश ।
एकोद्दिष्टविधानेन चरेद्वा पार्वणादृते ॥ २,५.७६ ॥

प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि ।
एकादशे द्वादशेऽह्नि प्रेतो भुङ्क्ते दिनद्वयम् ॥ २,५.७७ ॥

योषितः पुरुषस्यापि पिण्डं प्रेतेति निर्वपेत् ।
सापिण्ड्ये तु कृते तस्य प्रेतशब्दो निवर्तते ॥ २,५.७८ ॥

दीपदानं प्रकर्तव्यमावर्षन्तु गृहाद्बहिः ।
अन्नं दीपो जलं वस्त्रमन्यद्वादीयते च यत् ॥ २,५.७९ ॥

तृप्तिदं प्रेतशब्देन सपिण्डीकरणावधि ।
अब्दकृत्यं मयोक्तन्ते समासाद्विनतासुत ॥ २,५.८० ॥

वैवस्वतगृहे यानं यथा तत्तु निबोधमेः ।
त्रयोदशेऽह्नि श्रवणाकर्मणोनन्तरन्तु सः ॥ २,५.८१ ॥

त्वग्गृहीताहिवत्ताक्ष्र्य गृहीतो यमकिङ्करैः ।
तस्मिन्मार्गे व्रजत्येको गृहीत इव मर्कटः ॥ २,५.८२ ॥

वाय्वग्रसारिवद्रूपं देहमन्यत्प्रपद्यते ।
तत्पिण्डजं पातनार्थमन्यत्तु पितृसम्भवम् ॥ २,५.८३ ॥

तत्प्रमाणवयोऽवस्थासंस्थानां प्रग्भवो यथा ।

षडशीति सहस्राणि योजनानां प्रमाणतः ॥ २,५.८४ ॥

अध्वान्तरालिको ज्ञेयो यममानुषलोकयोः ।
साधिकार्धक्रोशयुतं योजनानां शतद्वयम् ॥ २,५.८५ ॥

चत्वारिं शत्तथा सप्त प्रत्यहं याति तत्र सः ।
अष्टाचत्वारिंशता च त्रैंशता दिवसैरिति ॥ २,५.८६ ॥

वैवस्वतपुरं याति कृष्यमाणो यमानुगैः ।
एवं क्रमेण यातब्ये मार्गे पापरतैस्तु यत् ॥ २,५.८७ ॥

जायते सप्रपञ्चं तच्छृणु त्वमरुणानुज ।
त्रयोदशदिने दत्तः पाशैर्बद्ध्वातिदारुणैः ॥ २,५.८८ ॥

यमस्याङ्कुशहस्तो वै भृकुटीकुटिलाननः ।
दण्डप्रहारसम्भ्रान्तः कृष्यते दक्षिणां दिशम् ॥ २,५.८९ ॥

कुशकण्टकवल्मीकशङ्कुपाषाणकर्कशे ।
तथा प्रदीप्तज्वलने क्वचिच्छ्वभ्रशतोत्कटे ॥ २,५.९० ॥

प्रदीप्तादित्यतप्ते च दह्यमानः सदंशके ।
कृष्यते यमदूतैश्च शिवावन्नादभीषणैः ॥ २,५.९१ ॥

प्रयातिः दारुणे मार्गे पापकर्मा यमालये ।
कलेवरे दह्यमाने महान्तं क्षयमृच्छति ॥ २,५.९२ ॥

भक्ष्यमाणे तथैवाङ्गे भिद्यमाने च दारुणम् ।
छिद्यमाने चिरतरं जन्तुर्दुः खमवाप्नुते ॥ २,५.९३ ॥

स्वेन कर्मवि पाकेन देहान्तरगतोऽपि सन् ।
पुराणि षोडशामुष्मन्मार्गे तानि च मे शृणु ॥ २,५.९४ ॥

याम्यं सौरिपुरं नगेद्वभवनं गन्धर्वशैलागमौ क्रौञ्चं क्रूरपुरं विचित्रभवनं बह्वापदं दुः खदम् ।
नानाक्रन्दपुरं सुतप्तभवनं रौद्रं पयोवर्षणं शीताढ्यं बहुभीतिषोडशपुराण्येतान्यदृष्टनि ते ॥ २,५.९५ ॥

तत्र याम्य पुरं गच्छन्पुत्रपुत्रेति च ब्रुवन् ।
हाहेति क्रन्दते नित्यं स्वकृतं दुष्कृतं स्मरन् ॥ २,५.९६ ॥

अष्टादशोदिने ताक्ष्र्य तत्पुर प्राप्नुयादसौ ।
पुष्पभद्रा नदी यत्र न्यग्रोधः प्रियदर्शनः ॥ २,५.९७ ॥

विश्रामेच्छां करोत्यत्र कारयन्ति न ते भटाः ।

क्षितौ दत्तं सुतैस्तस्य स्नेहाद्वा कृपया तथा ॥ २,५.९८ ॥

मासिकं पिण्डमश्नाति ततः सौरिपुरं व्रजेत् ।
व्रजन्नेवं प्रलपते मुद्गराहतिपीडितः ॥ २,५.९९ ॥

जलाशयो नैव कृतो मया तदा मनुष्यतृप्त्यै पशुपक्षितृप्तय ।
गोतृप्तिहेतोर्न च गोचरः कृतः शरीर हे निस्तर यत्त्वया कृतम् ॥ २,५.१०० ॥

तत्र नाम्ना तु राजासौ जङ्गमः कामरूपधृक् ।
भयात्तद्दर्शनाज्जाताद्भुङ्क्ते पिण्डं स शङ्कितः ॥ २,५.१०१ ॥

त्रिपक्षे जलसंयुक्तं क्षितौ दत्तं ततो व्रजेत् ।
व्रजन्नेवं प्रलपते खड्गाघातप्रपीडितः ॥ २,५.१०२ ॥

न नित्यदानं न गवाह्निकं कृतं पुस्तं च दत्तं न हि वेदशास्त्रयोः ।
पुराणदृष्टो न हि सेवितोऽध्वा शरीर हे निस्तर यत्त्वया कृतम् ॥ २,५.१०३ ॥

नगेन्द्रनगरं गत्वा भुक्त्वा चान्नं तथाविधम् ।
मासि द्वितीये यद्दत्तं बान्धवैस्तु ततो व्रजेत् ॥ २,५.१०४ ॥

व्रजन्नेवं प्रलपते कृपाणत्सरुताडितः ।
पराधानमभूत्सर्वंमम मूर्खशिरोमणेः ॥ २,५.१०५ ॥

महता पुण्ययोगेन मानुष्यं लब्धवानहम् ।
तृतीये मासि सम्प्राप्ते गन्धर्वनगरे शुभम् ॥ २,५.१०६ ॥

तृतीयमासिकं पिण्डं तत्र भुक्त्वा ब्रजत्यसौ ।
व्रजन्नेवं विलपते तदग्रेणाहतः पथि ॥ २,५.१०७ ॥

मया न दत्तं न हुतं हुताशने तपो न तप्तं हिमशैलगह्वरे ।
न सेवितं गाङ्गमहो महाजलं शरीर हे निस्तर यत्त्वया कृतम् ॥ २,५.१०८ ॥

तुर्ये शैलागमं मासि प्राप्नुयात्तत्र वर्षणम् ।
तस्योपरि भवेत्पक्षिन्पाषाणानां निरन्तरम् ॥ २,५.१०९ ॥

चतुर्थमासिकं श्राद्धं भुक्त्वा तत्र प्रसर्पति ।
स पतन्नेव विलपन्पाषाणाद्यतिपीडितः ॥ २,५.११० ॥

न ज्ञानमार्गो न च योगमार्गो न कर्ममार्गो न च भक्तिमार्गः ।
न साधुसङ्गात्किमपि श्रुतं मया शरीर हे निस्तर यत्त्वया कृतम् ॥ २,५.१११ ॥

ततः क्रूरपुर मासि पञ्चमे याति काश्यप ।

भुवि दत्तं पिण्डजलं भुक्त्वा क्रूरपुरं व्रजेत् ॥ २,५.११२ ॥

व्रजन्नेवं विलपते पट्टिशैः पातितः पथि ।
हा मातर्हापितर्भ्रातः सुता हा हा मम स्त्रियः ॥ २,५.११३ ॥

युष्माभिर्नोपदिष्टोऽहमवस्थां प्राप्त ईदृशीम् ।
एवं लालप्यमानं ते यमदूता वदन्तिहि ॥ २,५.११४ ॥

क्व माता क्व पिता मूढ क्व जाया क्व सुतः सुहृत् ।
स्वकर्मोपार्जिते भुङ्क्ष्वं मूर्ख याताश्चिरं पथि ॥ २,५.११५ ॥

जानासि शम्बलमलं बलमध्वगानां नोऽशम्बलः प्रयतते परलोकगत्यै ।
गन्तव्यमस्ति तव निश्चितमेव तेन मार्गेण येन न भवेत्क्रयविक्रयोऽपि ॥ २,५.११६ ॥

ऊनषाण्मासिके क्रौञ्चे भुक्त्वा पिण्डन्तु सोदकम् ।
घटीमात्रन्तु विश्रम्य विचित्रनगरं व्रजेत् ॥ २,५.११७ ॥

व्रजन्नेवं विलपते शूलाग्रेण विदारितः ॥ २,५.११८ ॥

कुत्र यामि न हि गामि जीवितं हा मृतस्य मरणं पुनर्न वै ।
इत्थमेव विलपन् प्रयात्यसौ यातनार्हधृतविग्रहः पति ॥ २,५.११९ ॥

विचित्रनगरे तत्र विचित्रो नाम पारिथिवः ।
तत्र षण्मासपिण्डेन तृप्तः सन् व्रजते पुरः ॥ २,५.१२० ॥

व्रजन्नेवं विलपते प्रासाग्रेण प्रपीडितः ॥ २,५.१२१ ॥

माता भ्राता पिता पुत्रः कोऽपि मे वर्तते न वा ।
यो मामुद्धरते पापं पतन्तं दुः खसागरे ॥ २,५.१२२ ॥

व्रजतस्तत्र मार्गे तु तत्र वैतरणी शुभा ।
शतयोजनविस्तीर्णा पूयशोणितसंकुला ॥ २,५.१२३ ॥

आयाति तत्र दृश्यन्ते नाविका धीवरादयः ।
ते वदन्ति प्रदत्ता गौर्यदि वैतरणी त्वया ।
नावमेनां समारोह सुकेनोत्तर वै नदीम् ॥ २,५.१२४ ॥

तत्र येन प्रदत्ता गौः स सुखेनैव तां तरेत् ।
अदायी तत्र घृष्येत करग्राहन्तु नाविकैः ॥ २,५.१२५ ॥

उखैः काकैर्बकोलूकैस्तीक्ष्णतुण्डैर्वितुद्यते ।
मनुजानां हितं दानमन्ते वैतरणी खग ॥ २,५.१२६ ॥

दत्ता पापं दहेत्सर्वं मम लोकन्तु सा नयेत् ।
मप्तमे मासि सम्प्राप्ते पुरं बह्वापदं मृतः ॥ २,५.१२७ ॥

व्रजेत्तु सोदकं भुक्त्वा पिण्डं वै सप्तमासिकम् ।
व्रजन्नेवं विलपते परिघाहतिपीडितः ॥ २,५.१२८ ॥

न दत्तं न हुतं तप्तं न स्नातं न कृतं हितम् ।
यादृशं चरितं कर्म मूढात्मन् भुङ्क्ष्व तादृशम् ॥ २,५.१२९ ॥

मास्यष्टमे दुः खदे तु परे भुक्त्वाथ सोदकम् ।
पिण्डं प्रयात्सयौ तार्क्ष्य नानाक्रन्दपुरं ततः ॥ २,५.१३० ॥

प्रयाणे च प्रवदते मुसलाघातपीडितः ।
क्व जायाचटुलैश्चाटुपटुभिर्वचनैर्मम ॥ २,५.१३१ ॥

भोजनं भल्लभल्लीभिर्मुसलैश्च क्व मारणम् ।
नवमे मासि दत्तं वै नानाक्रन्दपुरे ततः ॥ २,५.१३२ ॥

पिण्डमश्नाति करुणं नानाक्रन्दान् करोत्यपि ।
दशमे मासि दत्तं वै सुतप्तभवनं ततः ॥ २,५.१३३ ॥

सरन्नेवं विलपते हलाहतिहतः पथि ।
क्व सूनुपेशलकरैः पादसंवाहनं मम ॥ २,५.१३४ ॥

क्व दूतवज्रप्रतिमकैर्मत्पदकर्षणम् ।
दशमे मासि पिण्डादि तत्र भुक्त्वा प्रसर्पति ॥ २,५.१३५ ॥

मासे चैकादशे पूर्णे पुरं रौद्रं स गच्छति ।
गच्छन्नेव विलपते यथा पृष्ठे प्रपीडितः ॥ २,५.१३६ ॥

क्वाहं सतूलीशयने परिवर्तन् क्षणे क्षणे ।
भटहस्तभ्रष्टयष्टिकृष्टपृष्ठः क्व वा पुनः ॥ २,५.१३७ ॥

क्षितौ दत्तञ्च पिण्डादि भुक्त्वा तत्र ततो व्रजेत् ।
पयोवर्षणमित्येतन्नामकं पुरमण्डज ॥ २,५.१३८ ॥

व्रजन्नेवं विलपते कुठारैर्मूर्ध्नि ताडितः ।
क्व भृत्यकोमलकरैर्गन्धतैलावसेचनम् ॥ २,५.१३९ ॥

क्व कीनाशानुगैः क्रोधात्कुठारैः शिरसि व्यथा ।
ऊनाब्दिकञ्च यच्छ्राद्धं तत्र भुङ्क्ते सुदुः खितः ॥ २,५.१४० ॥

संपूर्णे तु ततो वर्षे शीताढ्यं नगरं व्रजेत् ।
गच्छन्नेवं छुरिकया च्छिन्नजिह्वस्तु रोदिति ॥ २,५.१४१ ॥

प्रियालापैः क्व च ससमधुरत्वस्य वर्णनम् ।
उक्तमात्रेऽसिपत्रादिजिह्वाच्छेदः क्व चैव हि ॥ २,५.१४२ ॥

वार्षिकं पिण्डदानादि भुक्त्वा तत्र प्रसर्पति ।
बहुभीतिकरं तत्तत्पिण्डजं देवमास्थितः ॥ २,५.१४३ ॥

प्रकाशयति पाप्पानमात्मानञ्च विनिन्दति ।
योषिदप्येवमेतस्मिन्मार्गे वै परिदेवति ॥ २,५.१४४ ॥

ततो याम्यं नातिदूरे नगरं स हि गच्छति ।
चत्वारिंशद्योजनानि चतुर्युक्तानिविस्तृतम् ॥ २,५.१४५ ॥

त्रयोदश प्रतीहाराः श्रवणा नाम तत्र वै ।
श्रवणाकर्मतस्तुष्यन्त्यन्यथा क्रोधमाप्नुयुः ॥ २,५.१४६ ॥

ततस्तत्राशु रक्ताक्षं भिन्नाञ्जनचयोपमम् ।
मृत्युकालान्तकादीनां मध्ये पश्यति वै यमम् ॥ २,५.१४७ ॥

दंष्ट्राकरालवदनं भृकुटीदारुणाकृतिम् ।
विरूपैर्भीषणैर्वक्त्रैर्वृतं व्याधिशतैः प्रभुम् ॥ २,५.१४८ ॥

दण्डासक्तमहाबाहुं पाशहस्तं सुभैरवम् ।
तन्निर्दिष्टां ततो जन्तुर्गतिं याति शुभाशुभाम् ॥ २,५.१४९ ॥

पापी पापां गतिं याति यथा ते कथितं पुरा ।
छत्रोपानहदातारो ये च वेश्मप्रदायकाः ॥ २,५.१५० ॥

ये तु पुण्यकृतस्तत्र ते पश्यन्ति यमं तदा ।
सौम्याकृतिं कुण्डलिनं मौलिमन्तं धृतश्रियम् ॥ २,५.१५१ ॥

एकादशे द्वादशे हि षण्मासे आब्दिके तथा ।
विप्रान् बहून् भोजयेत्तत्र यन्महती क्षुधा ॥ २,५.१५२ ॥

जीवन् पुत्रकलत्रादिप्रदिष्टमितरैः खग ।
यो न साधयति स्वार्थमेवं पश्चाद्धिखिद्यते ॥ २,५.१५३ ॥

एतत्ते सर्वमाख्यातं संयमिन्यां यथागति ।
प्रोक्तमावर्षकृत्यं ते किमन्यच्छ्रोतुमिच्छसि ॥ २,५.१५४ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे वर्षकृत्ययमलोकमार्गयातनादिनिरूपणं नाम पञ्चमोऽध्यायः

श्रीगरुडमहापुराणम् ६
गरुड उवाच ।
अपि साधनयुक्तस्य तीर्थदानरतस्य च ।
अकृते तु वृषोत्सर्गे परलोकगतिर्न हि ॥ २,६.१ ॥

तस्मात्कृष्ण वृषोत्सर्गः कर्तव्य इति मे श्रुतम् ।
किं फलं वृषयज्ञस्य पुरा केन कृतो हरे ॥ २,६.२ ॥

अनड्वान् कीदृशः प्रोक्तः कस्मिन् काले विशेषतः ।
को विधिस्तस्य निर्दिष्टः सर्वं मे कृपया वद ॥ २,६.३ ॥

श्रीकृष्ण उवाच ।
इतिहासं महापुण्यं प्रवक्ष्यामि खगेश्वर ।
ब्रह्मपुत्रेण यत्प्रोक्तं राजानं वीरवाहनम् ॥ २,६.४ ॥

विराधनगरे राजा वीरवाहननामकः ।
धर्मात्मा सत्यसन्धश्च वदान्यो विप्रतुष्टिकृत् ॥ २,६.५ ॥

स कदाचिद्वनं वीरो महात्माखेटकं गतः ।
किञ्चित्प्रष्टुमनास्ताक्ष्र्य वसिष्ठस्याश्रमं ययौ ॥ २,६.६ ॥

नमस्कृत्य मुनिं तत्र कृतासनपरिग्रहः ।
पश्रयावनतो राजा पप्रच्छ ऋषिसंसदि ॥ २,६.७ ॥

राजोवाच ।
मुने मया कृतो धर्मो यथाशक्ति प्रयत्नतः ।
यमस्य शासनं श्रुत्वा बिभेमि नितरां हृदि ॥ २,६.८ ॥

यमञ्च यमदूतांश्च निरयान् घोरदर्शनान् ।
न पश्यामि महाभाग तथा वद दयानिधे ॥ २,६.९ ॥

वसिष्ठ उवाच ।
धर्मा बहुविधा राजन् वर्ण्यन्ते शास्त्रकोविदैः ।
सूक्ष्मत्वान्न विजानन्ति कर्ममार्गविमोहिताः ॥ २,६.१० ॥

दानं तीर्थं तपो यज्ञाः संन्यासः पैतृको महः ।
धर्मेषु गृह्यमाणेषु वृषोत्सर्गो विशेषितः ॥ २,६.११ ॥

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ २,६.१२ ॥

ब्रह्महत्यादिपापानि ज्ञानाज्ञानकृतानि च ।

नीलोद्वाहेन शुध्येत्तु समुद्रप्लवनेन वा ॥ २,६.१३ ॥

एकादशाहे राजेन्द्र यस्य नोत्सृज्यते वृषः ।
प्रेतत्वं निश्चलं तस्य कृतैः श्राद्धैस्तु किं भवेत् ॥ २,६.१४ ॥

यथाकथञ्चित्कर्तव्यस्तीर्थे वा पत्तनेऽथ वा ।
वृषयज्ञैः प्रमुच्यते नान्यथा साधनैः खग ॥ २,६.१५ ॥

वृषभं पञ्चकल्याणं युवानं कृष्णकंबलम् ।
गोयूथमध्ये नितरां विचरन्तं विधानतः ॥ २,६.१६ ॥

चतसृभिर्वत्सकाभिर्द्वाभ्याञ्चैवैकया खग ।
विवाह्य मङ्गलद्रव्यैर्मन्त्रवत्तं समुत्सृजेत् ॥ २,६.१७ ॥

इह रतीति षड्ढग्भिर्हेमं कुर्याद्विभावसोः ।
कार्तिक्यां माघवैशाख्यां संक्रमे पातपर्वसु ॥ २,६.१८ ॥

तीर्थे पित्र्येक्षयाहे च विशेषेण प्रशस्यते ।
लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ॥ २,६.१९ ॥

पीतः खुरविषाणेषु स नीलो वृष उच्यते ।
श्वेतवर्णो भवेद्विप्रो लोहितः क्षत्त्र उच्यते ॥ २,६.२० ॥

पीतवर्णो भवेद्वैश्यः शूद्रः कृष्णः स्मृतो बुधैः ।
यथावर्णं समुद्दिष्टो वर्णेषु ब्राह्मणादिषु ॥ २,६.२१ ॥

अथ वा रक्तवर्णस्तु सर्वेषामेव शस्यते ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥ २,६.२२ ॥

आशासते सुतं जातं वृषोत्सर्गं करिष्यति ।
धर्मस्त्वं वृषरूपेण जगदानन्ददायकः ॥ २,६.२३ ॥

अष्टमूर्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ।
गङ्गायमुनयोः पेयमन्तर्वेदि तृणं चर ॥ २,६.२४ ॥

धर्मराजस्य पुरतो वाच्यं मे सुकृतं वृष ।
दक्षिणांसे त्रिशूलाङ्कं वामोरौ चक्रचिह्नितम् ॥ २,६.२५ ॥

इति संप्रार्थ्य वृषभं गन्धपुष्पाक्षतादिभिः ।
वृषं तत्सतरीयुक्तं पूजयित्वा समुत्सृजेत् ॥ २,६.२६ ॥

तस्माद्राजन् विधानेन वृषोत्सर्गं समाचर ।

बहुसाधनयुक्तस्य नान्यथा सद्गतिस्तव ॥ २,६.२७ ॥

आसीत्त्रेतायुगे पूर्वं विदेहनगरे नृप ।
ब्राह्मणो धर्मवत्सेति स्वकर्मनिरतः सुधीः ॥ २,६.२८ ॥

विष्णुभक्तोऽतितेजस्वी यथालाभेन तुष्टिकृत् ।
पितृपर्वणि संप्राप्ते कुशार्यो काननं ययौ ॥ २,६.२९ ॥

अटन्नितस्ततस्तत्र चिन्वन् कुशपलाशकम् ।
सहसोपेत्य पुरुषाश्चात्वारश्चारुदर्शनाः ॥ २,६.३० ॥

विभ्रान्तमनसं गृह्य प्रत्यग्जग्मुर्विहायसा ।
बहुवृक्षसमाकीर्णं गिरिदुर्गभयानकम् ॥ २,६.३१ ॥

वनाद्वनान्तरं निन्युर्नदीनदसमाकुलम् ।
स तत्र नगरं राजन् ददर्श बहुविस्तरम् ॥ २,६.३२ ॥

गोपुरद्वाररचितं सौधप्रासादमण्डितम् ।
चत्वरापणपण्यादिनरनारीसमाकुलम् ॥ २,६.३३ ॥

तूर्यद्वन्द्वाभिनिर्घोषवीणापटहनादितम् ।
कांश्चित्क्षुधार्दितान्दीनान्मलिनान्विगतौजसः ॥ २,६.३४ ॥

ततोऽतितुष्टान्मलिनान्वस्त्रखण्डसमावृतान् ।
अग्रतो हृष्टपुष्टांश्च स्वर्णवस्त्रोपशोभितान् ॥ २,६.३५ ॥

ततोऽपि सुरसंकाशान्स दृष्ट्वा विस्मितोऽभवत् ।
किं स्वप्न उत माया वै मदीयो मानसो भ्रमः ॥ २,६.३६ ॥

सन्दिहानं द्विजं निन्युः पुरुषा राजसन्निधिम् ।
सतद्ददर्श विप्रस्तु स्वर्णप्रासादमन्दिरे ॥ २,६.३७ ॥

सिंहासनंमहादिव्यं छत्रचामरवीजितम् ।
तत्रोप विष्टं राजानं किरीटकनकोज्ज्वलम् ॥ २,६.३८ ॥

महत्या च श्रिया युक्तं स्तूयमानं सुवन्दिभिः ।
राजापि दृष्ट्वा तं विप्रं प्रत्युत्थाय कृताञ्जलिः ॥ २,६.३९ ॥

पूजयामास विधिवन्मधुपर्कास नादिभिः ।
सन्तुष्टमनसं देवमस्तौषीत्परया मुदा ॥ २,६.४० ॥

अद्य मे सफलं जन्म पावितञ्च कुलं प्रभो ।

विष्णुभक्तस्य धर्मस्य यत्ते दृग्गोचरं गतः ॥ २,६.४१ ॥

नत्वा स्तुत्वा बहुविधमुवाचानुवसन्नृपः ।
यतः समागतो देवः पुनस्तत्रैव नीयताम् ॥ २,६.४२ ॥

इति श्रुत्वा वचो राज्ञः पप्रच्छ द्विजपुङ्गवः ।
ब्राह्मण उवाच ।
कोऽयं देश कुतो लोका उत्तमा मध्यमाधमाः ॥ २,६.४३ ॥

केन पुण्येन तु भवान्पारमेष्ट्यविभूषितः ।
किमर्थमहमानीतः पुनस्तत्रैव नीयते ॥ २,६.४४ ॥

अपूर्वमिव पश्यामि सर्वं स्वप्नगतो यथा ।
राजोवाच ।
स्वधर्मनिरतो यस्तु हरिभक्तिरतः सदा ॥ २,६.४५ ॥

विरक्त इन्द्रियार्थेभ्यः स मे पूज्यो न संशयः ।
तीर्थयात्रापरो नित्यं वृषोत्सर्गविशेषवित् ॥ २,६.४६ ॥

सत्यदानपरो यस्तु स नमस्यो दिवौकसाम् ।
दर्शनार्थमिहानीतः पूजार्हश्च परन्तप ॥ २,६.४७ ॥

अनुगृहाण मां देव क्षमस्व मम साहसम् ।
इत्युक्त्वा दर्शयामास मन्त्रिणां संज्ञया भ्रुवः ॥ २,६.४८ ॥

वदिष्यति समग्रं ते स्वयं वक्तुं न साम्प्रतम् ।
सामन्तः सर्ववेदज्ञो ज्ञात्वा हार्दं नृपस्य च ॥ २,६.४९ ॥

विपश्चिदुवाच ।
पूर्वजन्मनि वैश्योऽयं विश्वम्भर इति श्रुतः ।
विराधनगरे विप्र द्विजदेवविभूषिते ॥ २,६.५० ॥

वैश्यवृत्त्या सदा जीवन्कुटुम्बपरिपालकः ।
गवां शुश्रूषको नित्यं ब्राह्मणानाञ्च पूजकः ॥ २,६.५१ ॥

पात्रदानपरो नित्यमातिथेयाग्निसेवकः ।
गार्हस्थ्यं विधिवच्चक्रे भार्यया सत्यमेधया ॥ २,६.५२ ॥

स्मार्तेन लोकानजयच्छ्रौतेन त हविर्भुजः ।
कदाचिद्बन्धुभिः साकं कृत्वा तीर्थानि भूरिशः ॥ २,६.५३ ॥

यावदायाति सदनं दृष्टवाल्लोंमशं पथि ।

दण्डवत्प्रणिपत्याशु कृताञ्जलिपुटं स्थितम् ॥ २,६.५४ ॥

पप्रच्छ विनयोपेतं करुणावारिवारिधिः ।
ऋषिरुवाच ।
कुत आगम्यते साधो ब्राहमणैर्बन्धुभिर्युतः ॥ २,६.५५ ॥

दृष्ट्वा त्वां धर्मनिलयं प्रक्लिन्नं मानसं मम ।
विश्वम्भर उवाच ।
शीर्यमाणं शरीरं हि ज्ञात्वा मृत्युं पुरः स्थितम् ॥ २,६.५६ ॥

भर्यया धर्मचारिण्या तीर्थयात्रां विनिर्गतः ।
कृत्वा तीर्थानि विधिवद्विश्राण्य विपुलं वसु ॥ २,६.५७ ॥

यावद्व्रजाम्यहं वेश्म भवान् दृष्टिपथं गतः ।
लोमश उवाच ।
तीर्थानि सन्ति भूरीणि वर्षैऽस्मिन् भारते शुभे ॥ २,६.५८ ॥

यत्त्वया ह्युपचीर्णानि तानि सर्वाणि मे वद ।
वैश्य उवाच ।
गङ्गा च सूर्य तनया महापुण्या सरस्वती ॥ २,६.५९ ॥

दशाश्वमेधैरयजद्यत्र ब्रह्मा सुरेश्वरः ।
तीर्थराजस्ततः काशी महादेवो दयानिधिः ॥ २,६.६० ॥

मृतानां यत्र जन्तूनां कर्णे जपति तारकम् ।
पुलहस्याश्रमं पुण्यं फल्गुतीर्थञ्च गण्डकी ॥ २,६.६१ ॥

चक्रतीर्थं नैमिषञ्च शिवतीर्थमनन्तकम् ।
गोप्रतारकनागेशमयोध्याबिन्दुसंज्ञितम् ॥ २,६.६२ ॥

यत्रास्त मुक्तिदः साक्षाद्रामो राजीवलोचनः ।
आग्नेयं वायुकौबेरं कौमारं भूरुहां पुनः ॥ २,६.६३ ॥

सौकरं मथुरा यत्र नित्यं सन्निहतो हरिः ।
पुष्करं सत्यतीर्थञ्च ज्वालतीर्थं दिनेश्वरम् ॥ २,६.६४ ॥

इन्द्रतीर्थं कुरुक्षेत्रं यत्र प्राची सरस्वती ।
तापी पयोष्णी निर्विन्ध्या मलयः कृष्णवेणिका ॥ २,६.६५ ॥

गोदावरी दण्डकञ्च ताम्रचूडं सदोदकम् ।
द्यावाभूमीश्वरं दृष्ट्वा श्रीशैलः पर्वतेश्वरः ॥ २,६.६६ ॥

असंख्यलिङ्गतीर्थानि यत्र सन्ति सदा मुने ।
वेङ्कटाद्रौ महातेजाः श्रीरङ्गाख्यः स्वयं हरिः ॥ २,६.६७ ॥

वेङ्कटी नाम तत्रैव देवी महिषमर्दिनी ।
चन्द्रतीर्थं भद्रवटः कावेरीकुटिलाचलौ ॥ २,६.६८ ॥

अवटोदा ताम्रपर्णो त्रिकूटः कोल्लको गिरिः ।
वासिष्ठं ब्रह्मतीर्थञ्च ज्ञानतीर्थं महोदधिः ॥ २,६.६९ ॥

हृषीकेशं विराजञ्च विशालं नीलपर्वतः ।
भीमकूटः श्वेतगिरी रुद्रतीर्थमुमावनम् ॥ २,६.७० ॥

अवाप गिरिजा देवी तपसा यत्र शङ्करम् ।
वारुणं सूर्यतीर्थञ्च हंसतीर्थं महोदयम् ॥ २,६.७१ ॥

निमज्ज्य यत्र काकोला राजहंसत्वमाययुः ।
असुरो यत्र देवत्वमवाप स्नानमात्रतः ॥ २,६.७२ ॥

विश्वरूपं वन्दितीर्थं रत्नेशः कुहकाचलः ।
नरनारायणं दृष्ट्वा मुच्यते पापकोटिभिः ॥ २,६.७३ ॥

सरस्वतीदृषद्वत्यौ नर्मदा शर्मदा नृणाम् ।
नीलकण्ठं महाकालं पुण्यं चामरकण्टकम् ॥ २,६.७४ ॥

चन्द्रभागा वेत्रवती वीरभद्रं गणेश्वरम् ।
गोकर्णं बिल्वतीर्थञ्च कर्मकुण्डं सतारकम् ॥ २,६.७५ ॥

स्नानमात्रेण यत्राशु मुच्यते कर्मबन्धनात् ।
अन्यान्यपि च तीर्थानि कृतानि कृपया तव ॥ २,६.७६ ॥

उत्पद्यते शुभा बुद्धिः साधूनां यदनुग्रहः ।
एकतः सर्वतीर्थानि करुणाः साधवोऽन्यतः ॥ २,६.७७ ॥

अनुग्रहाय भूतानां चरन्ति चरितव्रताः ।
त्वं गुरुः सर्वर्णानां विद्यया वयसाधिकः ॥ २,६.७८ ॥

अतः पृच्छाम्यहं किञ्चिदाधिभूतं चिरन्तनम् ।
किं कुर्यां कं नु पृच्छेऽहं मनो मेऽतिचलं मुने ॥ २,६.७९ ॥

निः स्पृहं ब्रह्मविषये विषयेष्वतिलालसम् ।
मनागपि न सहते विरहं तिमिरं ब्रुवत् ॥ २,६.८० ॥

मोहितं विविधैर्भावैः कर्मणां क्षेत्रमुत्तमम् ।
शान्तिं यथा समायाति सम्पन्नमिव भूसुर ॥ २,६.८१ ॥

विवेकप्रवणं शुद्धं यथा स्यात्कृपया वद ।
ऋषिरुवाच ।
मनस्तु प्रबलं नित्यं सविकारं स्वभावतः ॥ २,६.८२ ॥

वशं नयन्ति करिणं प्रमत्तमपि हस्तिपाः ।
तथापि साधुसङ्गत्या साधनैरप्यतन्द्रितः ॥ २,६.८३ ॥

तीव्रेण भक्तियोगेन विचारेण वशं नयेत् ।
इतिहासं प्रवक्ष्यामि तव प्रत्ययकारकम् ॥ २,६.८४ ॥

नारदोऽकथयन्मह्यं स्ववृत्तगतजन्मनः ।
नारद उवाच ।
कस्यचिद्द्विजमुख्यस्य दासीपुत्त्रः पुरा मुने ॥ २,६.८५ ॥

शिक्षितो बालभावेऽपि पाठितो नितरामहम् ।
तत्रापि सङ्गतिर्जाता महतां पुण्यकर्मणाम् ॥ २,६.८६ ॥

प्रावृट्काले मम गृहे स्थितानां भाग्ययोगतः ।
शुश्रूषणानुवृत्त्या च प्रश्रयेण दमेन च ॥ २,६.८७ ॥

सन्तोषं परमं प्राप्य कृपया त्विदमब्रुवन् ।
मनीषा निर्मला येन जाता मम शुभार्थिनी ॥ २,६.८८ ॥

यया विष्णुमयं सर्वम्त्मन्येव ददृशिवान् ।
मुनय ऊचुः ।
शृणु वत्स प्रवक्ष्या मो हिताय तव बालक ॥ २,६.८९ ॥

येन वै ध्रियमाणेन इहामुत्र सुखं भवेत् ।
देवतिर्यङ्मनुष्याश्च संसारे विविधा जनाः ॥ २,६.९० ॥

निबद्धाः कर्मपशैस्ते भुञ्जन् भोगान् पृथग्विधान् ।
देवत्वं याति सत्त्वेन रजसा च मनुष्यताम् ॥ २,६.९१ ॥

तिर्यक्त्वं तमसा जन्तुर्वासनानुगतोऽबुधः ।
मातुर्लब्ध्वा पुनर्जन्म म्रियते च पुनः पुनः ॥ २,६.९२ ॥

एवं गत्वा ह्यसंख्याता योनीस्ताः कर्मभूरपि ।
मानुष्यं दुर्लभं लब्ध्वा कदाचिद्दैवयोगतः ॥ २,६.९३ ॥

अनुग्रहेण महतां हरिं ज्ञात्वा विमुच्यते ।
रोगग्राहं मोहजालमपारं भवसागरम् ॥ २,६.९४ ॥

न पश्यामि तितीर्षोरन्यद्रामस्मरणं विना ।
नवनीयं यथा दध्नो ज्योतिः काष्ठादपि क्वचित् ॥ २,६.९५ ॥

मन्थनैः साधनैरेवं परं ज्ञात्वा सुखी भवेत् ।
आत्मा नित्योऽव्ययः सत्यः सर्वगः सर्वभृन्महान् ॥ २,६.९६ ॥

अप्रमेयः स्वयञ्ज्योतिरग्राह्यो मनसापि यः ।
सच्चिदानन्दरूपोऽसौ सर्वप्राणिहृदि स्थितः ॥ २,६.९७ ॥

विनश्यत्स्वपि भावेषु न विनश्यति कर्हिचित् ।
आकाशः सर्वभूतेषु स्थितस्तेजोजले तथा ॥ २,६.९८ ॥

आत्मा सर्वत्र निर्लेपः पार्थिवेषु यथानिलः ।
भक्तानुकम्पी भगवान् साधूनां रक्षणाय च ॥ २,६.९९ ॥

आविर्भवति लोकेषुगुणीवाज्ञैः प्रतीयते ।
एवंविवेकत्वया यो बुद्ध्या संशीलयेद्धृदि ॥ २,६.१०० ॥

भक्तियोगेन सन्तुष्ट आत्मानं दर्शयेदजः ।
ततः कृतार्थो भवति सदा सर्वत्र निः स्पृहः ॥ २,६.१०१ ॥

अतोऽहङ्कारमुत्सृज्य सानुबन्धे कलेवरे ।
चरेदसंगो लोकेषु स्वप्नप्रायेषु निर्ममः ॥ २,६.१०२ ॥

क्व स्वप्ने नियतं धैर्यमिन्द्रजाले क्व सत्यता ।
क्व नित्यता शरन्मेघे क्व वा सत्यं कलेवरे ॥ २,६.१०३ ॥

अविद्याकर्मजनितं दृश्यमानं चरा चरम् ।
ज्ञात्वाचारवशी योगी ततः सिद्धिमवाप्स्यसि ॥ २,६.१०४ ॥

इत्युक्त्वा ते गताः सर्वे साधवो दीनवत्सलाः ।
सोऽहं तदुक्तमार्गेण तथैवाचरमन्वहम् ॥ २,६.१०५ ॥

ततोऽचिरेणात्मनीदं दृष्टवानहमद्भुतम् ।
ज्योतिर्मयं सदानन्दं शरच्छीतांशुनिर्मलम् ॥ २,६.१०६ ॥

निषिच्य सुखसन्दोहैर्मां कृत्वाधिकसस्पृहम् ।
अन्तर्हितं महतेजो यथा सौदामिनी दिवि ॥ २,६.१०७ ॥

भक्त्या तदेव मनसि भावयन्नहमद्भुतम् ।
काले कलेवरं त्यक्त्वा गतवान् हरिमव्ययम् ॥ २,६.१०८ ॥

तस्येच्छया पुनर्ब्रह्मन् ब्रह्मणो मेऽभवज्जनिः ।
अनुग्रहाद्भगवतस्त्रिषु लोकेषु निः स्पृहः ॥ २,६.१०९ ॥

आपीडयन्मुहुर्वीणां गायमानश्चराम्यहम् ।
इत्युक्त्वा मे स्वानुभवं ययौ यादृच्छिको मुनिः ॥ २,६.११० ॥

ममापि परमाश्चर्यं सन्तोषश्च महानभूत् ।
अतस्ते साधुसङ्गत्या भक्त्या च परमात्मनः ॥ २,६.१११ ॥

विशुद्धं निर्मलं शान्तं मनो निर्वृतिमेष्यति ।
अनेकजन्मजनितं पातकं साधुसंगमे ॥ २,६.११२ ॥

क्षिप्रं नश्यति धर्मज्ञ जलानां शरदो यथा ।
वैश्य उवाच ।
पीत्वा ते वाक्यपीयूषं स्वान्तं मे शान्तिमागमत् ॥ २,६.११३ ॥

सर्वतीर्थफलं मेऽध्य सञ्जातं तव दर्शनात् ।
इति श्रुत्वा वचस्तस्य प्रोवाच ऋपिसत्तमः ॥ २,६.११४ ॥

लोमश उवाच ।
हिताय तव राजेन्द्र त्रिवर्गफलमिच्छतः ।
यत्त्वया सुकृतं भूरिवृषोत्सर्गं विना कृतम् ॥ २,६.११५ ॥

मन्येऽकिञ्चत्करं सर्वं नीहारसलिलं यथा ।
वृषोत्सर्गसमं किञ्चित्साधनं न महीतले ॥ २,६.११६ ॥

अनायासेन गच्छन्ति गतिं ते पुण्यकर्मणाम् ।
वृषोत्सर्गः कृतो येन अश्वमेधस्य याजकः ॥ २,६.११७ ॥

उभौ समौ मया दृष्टौ दिव्यौ तौ शक्रसन्निधौ ।
अतस्त्वं पुष्करं गत्वा वृषोत्सर्गं विधाय च ॥ २,६.११८ ॥

ततो याहि गृहं साधो येन सर्वं कृतं भवेत् ।
विपश्चिदुवाच ।
ततः स पुनरागत्य कार्तिक्यां पुष्करे वरे ॥ २,६.११९ ॥

वराहरूपी भगवान् यत्रास्ते यज्ञपूरकः ।
चकार विधिवत्सर्वं युद्कमृषिसत्तमैः ॥ २,६.१२० ॥

गतानि बहुतीर्थानि ततो लोमशसंगतिः ।
ततोऽधिकतरं जातं पुण्यं नीलविवाहजम् ॥ २,६.१२१ ॥

सभुक्त्वा विषयान् दिव्यान् विमानवरमाश्रितः ।
तेन राजकुले जन्म वीरसेनस्य धर्मतः ॥ २,६.१२२ ॥

वीरपञ्चाननाख्यातञ्चतुर्वर्गैकसाधकम् ।
प्रकुर्वतो वृषोत्सर्गं तत्र ये परिचारकाः ॥ २,६.१२३ ॥

दिव्यरूपाभवन् स्पृष्टा गोपुच्छोदकशीकरैः ।
सुरूपाः पुष्टवपुषः पश्यन्तो दूरसंस्थिताः ॥ २,६.१२४ ॥

ततो दूरतरा ये च दृश्यन्ते मलिना जनाः ।
दुर्भगा मलिना रूक्षाः कृशा विगतवाससः ॥ २,६.१२५ ॥

वृषयज्ञमपश्यन्तो ये चासूयां प्रकुर्वते ।
सर्वं निवेदितं राज्ञश्चरितं पूर्वजन्मनः ॥ २,६.१२६ ॥

धर्म्यं विचित्रमाख्यानं श्रुतं मे यत्पराशरात् ।
अतस्त्वं स्वगृहं गच्छ कृपां कृत्वा ममोपरि ॥ २,६.१२७ ॥

श्रुत्वा विपश्चिद्वाक्यं स विस्मयं परमं गतः ।
गृहं जगाम विप्रोऽसौ प्रापितो राजसेवकैः ॥ २,६.१२८ ॥

वसिष्ठ उवाच ।
तस्माद्राजन् वृषोत्सर्गं वरिष्ठं सर्वकर्मणाम् ।
समाचर विधानेन यदि भीतो यमादपि ॥ २,६.१२९ ॥

वृषोत्सर्गसमं किञ्चित्साधनं नदिवः परम् ।
मया धर्मरहस्यं ते कथितं राजसत्तम ॥ २,६.१३० ॥

पतिपुत्रवती नारी भर्तुरग्रे मृता यदि ।
वृषोत्सर्गं न कुर्वीत गां दद्याच्च पयस्विः नीम् ॥ २,६.१३१ ॥

श्रीकृष्ण उवाच ।
श्रुत्वा वाक्यं वसिष्ठस्य राजा मधुपुरीं गतः ।
चकार विधिवत्सर्वं वृषोत्सर्गमहं खग ॥ २,६.१३२ ॥

गृहं गत्वा स आत्मानं कृतकृत्यममन्यत ।
कालेन निधनं प्राप्तो नीतो वैवस्वतानुगैः ॥ २,६.१३३ ॥

स कालनगरं हित्वा गतो दूरतरं पथि ।

श्राद्धदेवपुरं कुत्रेत्येवं दूतानपृच्छत ॥ २,६.१३४ ॥

पापिनो यत्र पात्यन्ते याम्यै पापविशुद्धये ।
यत्र देवः स धर्माधर्मविचेतनः ॥ २,६.१३५ ॥

गतं पापपुरं तत्तु न द्रष्टव्यं भवादृशैः ।
अग्रे दृष्ट्वा धर्मराजमूचुस्ते परमादरात् ॥ २,६.१३६ ॥

दिव्यरूपस्तदा देवो देवगन्धर्वसंयुतः ।
आत्मानं दर्शया मास तस्य राज्ञो महात्मनः ॥ २,६.१३७ ॥

प्रणम्य दण्डवद्राजा कृताञ्जलिः पुरः स्थितः ।
तुष्टाव बहुधा देवं हर्षपुरितमानसः ॥ २,६.१३८ ॥

धर्मराजोऽपि राजानं प्रशस्येदमुवाच ह ।
नीयतां देवलोकाय यत्र भोगाः सुपुष्कलाः ॥ २,६.१३९ ॥

तद्वीरवाहनः श्रुत्वा पप्रच्छसमवर्तिनम् ।
न जाने केन पुण्येन स्वर्गं नयसि मां विभो ॥ २,६.१४० ॥

धर्मराज उवाच ।
त्वया कृतानि पुण्यानि दानं यज्ञाः सविस्तराः ।
मथुरायां वृषोत्सर्गो वसिष्ठवचनात्किल ॥ २,६.१४१ ॥

धर्मः स्वल्पोऽपि नृपते यदि सम्यगुपासितः ।
द्विजदेवप्रसादेन स याति बहुविस्तरम् ॥ २,६.१४२ ॥

इत्युक्त्वा यमुनाभ्राता क्षणादन्तर्धिमाययौ ।
वीरबाहुर्दिवं गत्वा देवैः सह मुमोद ह ॥ २,६.१४३ ॥

श्रीकृष्ण उवाच ।
मया ते कथितं पक्षिन् वृषयज्ञः सुविस्तरः ।
प्राणिनां कर्मनिर्हारं श्रुत्वा पापैः प्रमुच्यते ॥ २,६.१४४ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्विदृ धदृप्रेतकल्पे श्रीकृष्णगरुडसंवादे वृषोत्सर्गमाहात्म्यनिरूपणं नाम षष्ठोऽध्यायः

श्रीगरुडमहापुराणम् ७
गरुड उवाच ।
श्रुतं मे महादाख्यानं वृषोत्सर्गफलं हरे ।
पुनरन्यां कथां ब्रूहि यत्र ते महिमाद्भुतः ॥ २,७.१ ॥

श्रीकृष्ण उवाच ।
अहं ते कथयाम्यद्य संवादं परमाद्भुतम् ।
सन्तप्तकस्य च प्रेतैस्तद्रूपज्ञापनाय वै ॥ २,७.२ ॥

विप्रः सन्तप्तकः कश्चित्तपसादग्धकिल्बिषः ।
संसारासारतां ज्ञात्वारण्यष्वेव चचार ह ॥ २,७.३ ॥

वैखानसमुनिव्रातैः प्राणिपातकृतेक्षणः ।
स कदाचित्तीर्थयात्रामुद्दिश्य स्माटतिद्विजः ॥ २,७.४ ॥

प्रत्याकृष्टेन्द्रियत्वाच्च बहिर्वृत्तिनिरोधकः ।
संस्कारमात्रगमनो मार्गभ्रष्टो बभूव ह ॥ २,७.५ ॥

चलन्नेवं स्नानकाले मध्याह्नेऽथाभिलाषुकः ।
जलस्योन्मील्य नयने दिशः सर्वा न्यभीलयत् ॥ २,७.६ ॥

स ददर्श तदा गुल्मैर्वीरुद्वृक्षशतैश्चितम् ।
त्वक्सारैः शाखिशाखाभिः संकुलं गहनंवनम् ॥ २,७.७ ॥

तत्र तालास्तमालाश्च प्रियालाः पनसास्तथा ।
श्रीपर्णो शालशाखोटस्यन्दनास्तिन्दुकास्तथा ॥ २,७.८ ॥

सर्जार्जुनाम्रातकाश्च श्लेष्मा तकभिभीतकौ ।
पिचुमर्दश्चिञ्चिणी च कर्कन्धूकर्णिकारकाः ॥ २,७.९ ॥

एते चान्ये च बहवो वृक्षास्तेषु न दृश्यते ।
पक्षिणामपि वै पन्था मनुष्यस्य कुतः पुनः ॥ २,७.१० ॥

तस्मिन् वने महाघोरे सिंहव्याघ्रसमाकुले ।
तरक्षुगवयैरृक्षैर्महिषैश्च निषेविते ॥ २,७.११ ॥

कुञ्ज रैरुरुभिर्नागैर्मर्कटैश्च तथामृगैः ।
श्वापदैश्च तथा चान्यैः पिशाचै राक्षसैर्वृते ॥ २,७.१२ ॥

सन्तप्तको द्विजः किञ्चिद्भयसन्त्रस्तमानसः ।
कान्दिशीकः समभवद्धयद्भविष्यो ययौ पुनः ॥ २,७.१३ ॥

झङ्कारेषु च झिल्लीनां घूकानां घूत्कृतेष्वपि ।
दत्तकर्णः कुनीलाङ्गश्चचाल पदपञ्चकम् ॥ २,७.१४ ॥

स तत्र वटवृक्षाग्रे स्नायुबद्धं शवं तथा ।
ददर्श तद्भुजश्चैव पञ्च प्रेतान् सुदारुणान् ॥ २,७.१५ ॥

शिरास्थिचर्मशेषाङ्गान् पृष्ठलग्नोदरान् खग ।
त्यक्तान्नासिकया नेत्रकूपपातभयादिव ॥ २,७.१६ ॥

सूचीक्रककचकव्रातघातपातितकीकसान् ।
वसाक्तनवमस्तिष्कस्वादनित्यमहोत्सवान् ॥ २,७.१७ ॥

रणत्कोटिमहादंष्ट्रानस्थिग्रन्थ्यवघट्टितान् ।
तान्दृष्ट्वा त्रस्तहृदयो गतिमाकुञ्च्य संस्थितः ॥ २,७.१८ ॥

ते विलोक्यागतं विप्रमटवीं जनवर्जिताम् ।
अहं पूर्वमहं पूर्वं यामीत्याक्त्वा प्रदुद्रुवुः ॥ २,७.१९ ॥

तेषु द्वौद्वावगृह्णीतामस्य हस्तावथापरे ।
द्वौद्वौ पादावगृह्णीतां मूर्धानं पञ्चमोऽग्रहीत् ॥ २,७.२० ॥

स्वजात्युचितवाक्येन स्फुटवर्णवताब्रुवन् ।
अहं जक्षाम्यहं भक्षामीति कर्षणतत्पराः ॥ २,७.२१ ॥

सहसैव सहैवामुं गृहीत्वा व्यगमन्वियत् ।
कियत्स्थितं वटौ मांसं क्रियन्नेति न्यभालयन् ॥ २,७.२२ ॥

तेऽपश्यन्निजदंष्ट्रायः पाटितान्त्रमिमं शवम् ।
अवतीर्य ततो व्योम्नो गृहीत्वा चरणैः शवम् ॥ २,७.२३ ॥

स्वखण्डितशरीरन्तु पुनर्व्योमैव चक्रमुः ।
स नीयमानमात्मानं विलोक्य वियति द्विजः ॥ २,७.२४ ॥

जगाम मनसा मां स शरणं भयविह्वलः ।
नमश्चक्रे चक्रधरं चेतसा चिन्मयं समम् ॥ २,७.२५ ॥

वक्रं नक्रं चक्रपातेन दूरे कृत्वा हृत्वा तस्य दुःखं मुकुन्दः ।
मातङ्गं योऽमूमुचन्नक्रवक्त्रात्पाशं सोऽसौ कर्मणां मे लुनातु ॥ २,७.२६ ॥

रुद्धाञ्शुद्धान् भूपतीन्मागधेन भीमेनैनं घातयित्वा मुरारिः ।
निर्बद्धान्यो भर्गयज्ञाय मुक्तश्चक्रो मेऽसौ कर्मपाशं लुनातु ॥ २,७.२७ ॥

मनसैवैह मामस्तौत्स्तूयमानोऽहमुत्थितः ।
अगच्छं सहसा तत्र यत्र प्रेतैः स नीयते ॥ २,७.२८ ॥

दृष्ट्वा तैर्नीयमानन्तु कौतुकं मेऽभवत्खग ।
पप्रच्छ न कियन्तं वै कालं तान्पृष्ठतोऽन्वगाम् ॥ २,७.२९ ॥

मम सन्निधिमात्रेण द्विजातिं तञ्च सर्पहन् ।
तत्कालं शिविकासुप्तभूपालसुखमाविशत् ॥ २,७.३० ॥

मणिभद्रस्ततो मेरुं गच्छन्दृष्टो मया पथि ।
निकोच्याक्षि स्वपार्श्वं स नीतो वै यक्षराण्मया ॥ २,७.३१ ॥

तमवोचं महायक्षं त्वं हि प्रतिभटो भव ।
प्रेतान्नाशय तद्रूयः शवञ्च हर तद्गतम् ॥ २,७.३२ ॥

इत्युक्तः स महाघोरं कृत्वा रोषं सुदुःसहम् ।
जग्राह प्रेतरूपं तत्प्रेतानामपि दुःखदम् ॥ २,७.३३ ॥

स विवृत्य स्वकौ बाहू सृक्किणी परिलेलिहन् ।
भेदयन्नुरुवातेन प्रेतांस्तान्संमुखो ययौ ॥ २,७.३४ ॥

बाहुभ्यां द्वौ द्वौ च पद्भ्यां मूर्ध्नैकं च समाहरत् ।
प्रेतानथापि सहसा जघान दृढमुष्टिना ॥ २,७.३५ ॥

ते विवर्णमुखाः सर्वे तं द्विजञ्च शवं तथा ।
एकैकं हस्तपादैश्च गृहीत्वा युद्धमारभन् ॥ २,७.३६ ॥

ते नखैस्तलघातैश्च पादघातैस्तथैव च ।
दंष्ट्राघातैश्च सर्वे तमेकं प्रेतं व्यदारयन् ॥ २,७.३७ ॥

तेषां प्रहारान्विफलान्कृत्वा संप्रति तानथ ।
जीवं न तु शवं तेषां जह्रे प्राणमिवान्तकः ॥ २,७.३८ ॥

हृतमात्रे शवे ते तु पारियात्रे गिरौ द्विजम् ।
मुक्त्वाधावन् प्रमुदिता एकं प्रेतं सुदारुणाः ॥ २,७.३९ ॥

स वायुगमनः प्रेतः प्राप्तस्तैः क्षणमात्रतः ।
अदृश्यतां ययौ तेऽथ हताशा विप्रमागमन् ॥ २,७.४० ॥

प्रारब्धमात्रे विप्रस्य पाटने तत्र पर्वते ।
मम स्थानस्य विप्रस्य महिम्नेव च तत्क्षणे ॥ २,७.४१ ॥

सद्यः स्मृतिः समुत्पन्ना तेषां पूर्वस्य जन्मनः ।
विप्रं प्रदक्षिणीकृत्य द्विजर्षभमथाब्रुवन् ॥ २,७.४२ ॥

अद्य नः क्षन्तुमर्होऽसीत्युक्त्वा ते सुरदाम्भिकाः ।
गिरेरिव परावर्तं समुद्रस्येव शोषणम् ॥ २,७.४३ ॥

तेषां तद्वचनं श्रुत्वापृच्छत्के यूयमित्यथ ।
किं माया किमु वा स्वप्न उताहो चित्तविभ्रमः ॥ २,७.४४ ॥

प्रेता ऊचुः ।
अवेहि तत्त्वमेवैतत्प्रेता वै कर्मजा वयम् ।
ब्राह्मण उवाच ।
किंनामानः किमाचाराः कथञ्चेमां दशां गताः ॥ २,७.४५ ॥

अविनीताः कथं पूर्वं विनीताः साम्प्रतं कथम् ।
प्रेता ऊचुः ।
शृणु विप्रेन्द्र वक्ष्यामः प्रश्नानामनुपूर्वशः ॥ २,७.४६ ॥

उत्तराणि महायोगिंस्त्वद्दर्शनगतांहसः ।
अहं पर्युषितो नाम्ना एष सूचीमुखः स्मृतः ॥ २,७.४७ ॥

तृतीयः शीघ्रगस्तुर्यो रोधको लेखकः परः ।
ब्राह्मण उवाच ।
प्रेतानां कर्मजातानां कुतो नाम निरर्थकम् ॥ २,७.४८ ॥

निरुक्तिमेषां नाम्नां वै प्रेता वदत मा चिरम् ।
श्रीकृष्ण उवाच ।
एवमुक्तास्तु विप्रेण पृथगुत्तरमब्रुवन् ॥ २,७.४९ ॥

पर्युषित उवाच ।
कदाचिच्छ्राद्धकाले वै मया विप्रो निमन्त्रितः ॥ २,७.५० ॥

स च कृत्वा विलम्बेन वृद्धो मद्गृहमागतः ।
अकृतश्राद्धकर्माहं तं पाकं भुक्तवान् क्षुधा ॥ २,७.५१ ॥

अददामन्नमाकृष्य विप्रे पर्युषितं कियत् ।
तस्मात्पापान्मृतः पापो योनिं वै कुत्सितां गतः ॥ २,७.५२ ॥

यतः पर्युषितं दत्तं ततः पर्युषितः स्मृतः ।
सूचीमुख उवाच ।
कदाचिद्ब्राह्मणी काचित्तीर्थं भद्रवटं ययौ ॥ २,७.५३ ॥

पञ्चवर्षसुता वृद्धा पुत्रमात्रैकजीविता ।
अहं क्षत्त्रियदायादस्तस्या रोधमकारिषम् ॥ २,७.५४ ॥

वने तु विजने तत्र पापाध्वगगतिं गतः ।
तस्याः सवस्त्रं पाथेयं तत्सूनोर्वसनानि च ॥ २,७.५५ ॥

गृहीतानि मया विप्र शिरस्यापीड्य मुष्टिना ।
तृषार्तस्तत्क्षणं बालः पात्रसंस्थं जलं पिबन् ॥ २,७.५६ ॥

तावन्मात्रोदके देशे मया हुङ्कृत्य वारितः ।
मयाथ सकलं पीतं जलं पात्रात्तृषावता ॥ २,७.५७ ॥

बालोऽपि भयसन्त्रस्तः पिपासुर्व्यसुरापतत् ।
पुत्रशोकान्मृता माता कूपे प्रास्य निजं वपुः ॥ २,७.५८ ॥

एतस्मात्पातकाद्विप्र प्रेतत्वं प्राप्तवानहम् ।
सूच्यग्रप्रायविवरमुखः पर्वतदेहवान् ॥ २,७.५९ ॥

यद्यपि प्राप्नुयां भक्ष्यं भक्षितुन्तु न शक्यते ।
मया क्षुधानलेनापि ज्वलतास्यं निकोचितम् ॥ २,७.६० ॥

अत आस्ये तु विवरं सूच्यग्रेण समं मम ।
एतस्मात्कारणाद्विप्र नाम्ना सूचीमुखोऽस्म्यहम् ॥ २,७.६१ ॥

शीघ्रग उवाच ।
पुराहं वैश्यजातीयः साकं सख्या च केनचित् ।
वाणिज्यं कर्तुमगमं देशमन्यं महाधनः ॥ २,७.६२ ॥

मित्रं च मे बहुधनं तस्य लोभो महांस्ततः ।
जातोऽप्यदृष्टवैमुख्यान्मे नष्टं मूलमप्युत ॥ २,७.६३ ॥

ततस्तस्मात्तु निष्क्रान्तावावां नावाथ निम्नगाम् ।
मार्गगां तर्तुमारब्धौ लोहितायति भास्करे ॥ २,७.६४ ॥

सखा स च मदुत्सङ्गे सुष्वापाध्वक्लमाकुलः ।
अभूत्तदाति पापस्य क्रूरा मतिरतीव मे ॥ २,७.६५ ॥

तमुत्सङ्गगतं सूरे नष्टे पूरेऽक्षिपं तदा ।
तत्कृत्यं कुर्वतो नावि लोकैस्तु ज्ञातमेव न ॥ २,७.६६ ॥

तस्य यद्वस्तु तत्सर्वं मणिमुक्तादिकाञ्चनम् ।
आदाय शीघ्रगस्तस्माद्देशात्स्वगृहमागतः ॥ २,७.६७ ॥

तत्सर्वं स्वगृहे मुक्त्वा तस्य पत्न्यै न्यवेदयम् ।
दस्युभिर्मे हतो भ्राता धनमाच्छिद्य वै पथि ॥ २,७.६८ ॥

प्रजावति प्रद्रुतोऽहं मा रोदीत्येवमब्रवम् ।
शोकार्ता सापि तत्कालं ममत्वं गृहबन्धुषु ॥ २,७.६९ ॥

त्यक्त्वा चाति प्रियान्प्राणाञ्जुहावाग्नौ यथाविधि ।
ततो निष्कण्टकं तद्धि वीक्ष्य हृष्टो गतो गृहम् ॥ २,७.७० ॥

अभुञ्जं सर्वमागत्य यावज्जीवं तु तद्धनम् ।
मित्रं पूरे हि निःक्षिप्य यदहं शीघ्रमागतः ॥ २,७.७१ ॥

एतस्मात्कारणात्प्रेतः शीघ्रगोऽहं तु नामतः ।
रोधक उवाच ।
अहन्तु शूद्रजातीयः पुराभूवं मुनीश्वर ॥ २,७.७२ ॥

राजप्रसादाप्तमहाशतग्रामाधिकारवान् ।
वृद्धौ मे पितरावास्तां लघुरेकः सहोदरः ॥ २,७.७३ ॥

शीघ्रं स च मया भ्राता लुब्धेनैकः पृथक्कृतः ।
आप्तवान्परमं दुःखं सोन्नवस्त्रविवर्जितः ॥ २,७.७४ ॥

अदत्तां पितरौ च्छन्नं किञ्चित्किञ्चित्तु तस्य च ।
तस्मै पितृभ्यां यद्दत्तमाप्तेभ्यस्तन्मया श्रुतम् ॥ २,७.७५ ॥

तत्सर्वं तत्त्वतो ज्ञात्वा पित्रो रोधमकारयम् ।
शून्यमन्दिर एकस्मिन्बद्ध्वा तु निगडैर्दृढैः ॥ २,७.७६ ॥

ततस्तौ जहतुः प्राणान्दुःखितौ विषपानतः ।
सोसौ बालोऽपि बभ्राम पितृभ्यां रहितो द्विज ॥ २,७.७७ ॥

पुरः पत्तनखर्वाटान् खेटानपि मृतः क्षुधा ।
एतस्मात्पातकाद्विप्र मृतः प्रेतत्वमागतः ॥ २,७.७८ ॥

रुद्धौ तु पितरौ यस्मान्नाम्नाहं रोधकस्ततः ।
लेखक उवाच ।
अहं विप्र पुराभूवमवन्त्यां द्विजसत्तमः ॥ २,७.७९ ॥

भद्रस्य राज्ञो देवानां पूजनेऽधिकृतो ह्यहम् ।
बह्व्यस्तु प्रतिमास्तत्र बभूवुर्बहुनामिकाः ॥ २,७.८० ॥

हेम्नस्तदङ्गेषु बहु रत्नजातं बभूव ह ।
तासां मे कुर्वतः पूजां पापा मतिरजायत ॥ २,७.८१ ॥

अखिलं तीक्ष्णलोहेन तासामङ्गं विशीर्य च ।
उल्लेखनञ्च रत्नानां नेत्रादिभ्यः कृतं मया ॥ २,७.८२ ॥

तथाकृतान्यथाङ्गानि प्रतिमानां निरीक्ष्य च ।
नेत्राणि च विरत्नानि नृपश्चुक्रोध वह्निवत् ॥ २,७.८३ ॥

प्रतिजज्ञे नृपः पश्चादेष ब्राह्मणपुङ्गवः ।
आभ्यो रत्नं सुवर्णञ्च हृतं येन भविष्यति ॥ २,७.८४ ॥

ज्ञातश्च स हि मे वध्यो भविष्यति न संशयः ।
अहं तत्सकलं ज्ञात्वा रात्रावसिधरो गृहम् ॥ २,७.८५ ॥

राज्ञः प्रविश्य राजानं पशुमारममारयम् ।
गृहीत्वाथ मणीन् स्वर्णं निशीथेऽहं गतोऽन्यतः ॥ २,७.८६ ॥

व्याघ्रेण महातारण्ये नखटङ्कैर्विटङ्कितः ।
लेखनात्प्रतिमाया यन्मया लोहेन कर्तितम् ॥ २,७.८७ ॥

एतस्मात्पातकात्प्रेतो लेखको नामतोऽस्म्यहम् ।
आसीन्नरकभोगान्ते नः प्रेतत्वमिदं द्विज ॥ २,७.८८ ॥

ब्राह्मण उवाच ।
संज्ञास्तादृश्य आख्याता यथैता भवता दशाः ।
वदन्त्वाचारमात्रं मे प्रेता आहारमप्युत ॥ २,७.८९ ॥

प्रेता ऊचुः ।
वेदमार्गानुसरणं लज्जा धर्मो दमः क्षमा ।
धृतिर्ज्ञानं नैव यत्र वयं तत्र वसामहे ॥ २,७.९० ॥

तस्य पीडां वपं कुर्मो नैव श्राद्धं न तर्पणम् ।
यस्य गेहे तदङ्गात्तु मांसञ्च रुधिरं क्रमात् ॥ २,७.९१ ॥

जक्षामश्च पिबामश्च उक्त आचार एष नः ।
शृणु चाहारमस्माकं सर्वलोकविगर्हितम् ॥ २,७.९२ ॥

दृष्टस्त्वया च किञ्चिद्वै ब्रूमोज्ञातं त्वयानघ ।
वमनं विड् दूषिका च श्लेष्मा मूत्राश्रुणी तथा ॥ २,७.९३ ॥

एतद्भक्ष्यञ्च पानञ्च मा पृच्छातः परं द्विज ।

लज्जा नो जायते स्वामिन्नाहारं वदतां स्वकम् ॥ २,७.९४ ॥

अज्ञानास्तामसा मन्दा कान्दिशीका वयं विभो ।
अकस्माज्जन्मनां विप्र स्मृतिः प्राप्ता तु पौर्विकी ॥ २,७.९५ ॥

विनीतत्वाविनीतत्वे जानीमो नैव नः प्रभो ।
श्रीकृष्ण उवाच ।
एवं वदत्सु प्रेतेषु तथा श्रुतवति द्विजे ॥ २,७.९६ ॥

अदर्शयमहं रूपं तदा ताक्ष्र्येदमेव वै ।
स तु दृष्ट्वा द्विजश्रेष्ठो हृद्गतं पुरुषं पुरः ॥ २,७.९७ ॥

स्तोत्रैस्तुष्टाव पक्षीश दण्डवत्प्रणनाम माम् ।
तेऽपि तेपुस्ततः प्रेता आश्चर्योत्फुल्लचक्षुषः ॥ २,७.९८ ॥

प्रणयेन स्खलद्वाचः खग नोचुः किमप्युत ।
रजसा गोरचित्तानां तमसा मूढचेतसाम् ।
कृपया यः समुद्धारं कुरुषे वै नमोऽस्त ते ॥ २,७.९९ ॥

एवं द्विजातौ ब्रुवति प्रभू तत्प्रभैश्च मुख्यांबरचारियुक्तैः ।
तदा मदिच्छाप्रभवैर्विमानैः षड्भिः समन्ताद्रुरुचे गिरिः सः ॥ २,७.१०० ॥

इत्थं विमानेन मदीयलोकं गतो द्विजरसोऽप्यथ पञ्चमिस्तैः ।
प्रेता ययुः स्वर्गमगण्यपुण्यं सत्सङ्गसंसर्गवशात्सुपर्णम् ॥ २,७.१०१ ॥

प्रेताः संगवशेन नाकमवन्सन्तप्तको ब्राह्मणो विष्वक्सन इति प्रसिद्धविभवो नाम्ना गणे मेऽभवत् ।
एतत्ते सकलं मया निगादितं यश्चैतदुत्कीर्तयेद्यश्चेदं शृणुयान्न सोऽपि पुरुषः प्रेतत्वमाप्नोति हि ॥ २,७.१०२ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे श्रीकृष्णगरुडसंवादे प्रेतकल्पे पञ्चप्रेतोपाख्यानं नाम सप्तमोऽद्यायः

श्रीगरुडमहापुराणम् ८
गरुड उवाच ।
स्वामिन्कस्याधिकारोऽत्र सर्व एवौर्ध्वदेहिके ।
क्रियाः कतिविधाः प्रोक्ता वदैतत्सर्वमेव मे ॥ २,८.१ ॥

श्रीकृष्ण उवाच ।
पुत्रः पौत्रः प्रपौत्रो वा तद्भ्राता भ्रातृसन्ततिः ।
सपिण्डसन्ततिर्वापि क्रियार्हाः खग ज्ञातयः ॥ २,८.२ ॥

तेषामभावे सर्वेषां समानोदकसन्ततिः ।
कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्याः क्रियाः खग ॥ २,८.३ ॥

इच्छयोच्छिन्नबन्धश्च कारयेदवनीपतिः ।
पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ॥ २,८.४ ॥

प्रतिसंवत्सरं पक्षिन्नेकोद्दिष्टविधानतः ।
श्राद्धं तत्र प्रकर्तव्यं फलं तस्य शृणुष्व मे ॥ २,८.५ ॥

ब्रह्मेन्द्ररुद्रनासत्यसूर्याग्निवसुमारुतान् ।
विश्वेदेवान्पितृ गणान्वयांसि मनुजान्पशून् ॥ २,८.६ ॥

सरीसृपान्मातृगणान्यच्चान्यद्भूतसंज्ञितम् ।
श्राद्धं श्रद्धान्वितः कुर्वन्प्रीणयत्यखिलं जगत् ॥ २,८.७ ॥

ते तृप्तास्तर्पयन्त्येनं पुत्रदारधनैस्तथा ।
अधिकारः क्रियाभेदः समासात्ते निरूपितः ॥ २,८.८ ॥

गरुड उवाच ।
उक्तेष्वेकोऽपि चेन्न स्यादधिकारी सुरोत्तम ।
कर्तव्यं किं तदा विष्णो पुरुषेण विजानता ॥ २,८.९ ॥

श्रीकृष्ण उवाच ।
अधिकारो यदा नास्ति यदि नास्ति च निश्चयः ।
जीविते सति जीवाय दद्याच्छ्राद्धंस्वयं नरः ॥ २,८.१० ॥

कृतोपवासः सुस्नातः कृष्णासङ्गः समाहितः ।
कर्तारमथ भोक्तारं विष्णुं सर्वेश्वरं यजेत् ॥ २,८.११ ॥

सदक्षिणाश्च सतिलास्तिस्त्रश्च जलधेनवः ।
निवेदयेत्पितृभ्यश्च स्वधेति सुसमाहितः ॥ २,८.१२ ॥

अग्नये कव्यवाहनाय स्वधा नम इति स्मरन् ।

सोमायत्वा पितृमते स्वधा नम इति स्मरन् ॥ २,८.१३ ॥

दक्षिणेन तु दद्याच्च तृतीयां दक्षिणायुताम् ।
यमायाङ्गिरसे चाथ स्वधा नम इति स्मरन् ॥ २,८.१४ ॥

तयोर्मध्ये तु निः क्षिप्य विप्रान्संमन्त्र्य भो जयेत् ।
प्रथमामुत्तरे न्यस्य द्वितीयां दक्षिणे न्यसेत् ॥ २,८.१५ ॥

मध्ये तृतीयां विन्यस्य पश्चादावाहनादिकम् ।
आवाहनादिना पूर्वं विश्वेदेवान्प्रपूज्यच ॥ २,८.१६ ॥

वसुभ्यस्त्वामहं विप्र रुद्रेभ्यस्त्वामहं ततः ।
सूर्येभ्यस्त्वामहं विप्र भोजयामीति तान्वदेत् ॥ २,८.१७ ॥

आवाहनादिकं शेषं कुर्याच्च पितृशेषवत् ।
साम्यां धेनुं ततो दद्याद्वसूद्देशं द्विजाय तु ॥ २,८.१८ ॥

आग्नेय्यां चाथ रौद्राय याम्यां सूर्यद्विजाय तु ।
विश्वेभ्यश्चाथ देवेभ्यस्तिलपात्रं निवेदयेत् ॥ २,८.१९ ॥

स्वस्तीत्येव तथाक्षय्यं जलं दत्त्वाथ तान्द्विजान् ।
विसर्जयेत्स्मरन्विष्णुं देवमष्टाक्षरं विभुम् ॥ २,८.२० ॥

ततः कामं कुलेशानीं शिवं नारायणं स्मरेत् ।
चतुर्दश्यां ततो गच्छेद्यथाप्राप्तां सरिद्वराम् ॥ २,८.२१ ॥

वस्त्राणि लोहखण्डानि जितं त इति संजपन् ।
दक्षिणाभिमुखो वह्निं ज्वालयेत्तत्र च स्वयम् ॥ २,८.२२ ॥

पञ्चाशता कुशैर्ब्राह्मीं कृत्वा प्रतिकृतिं दहेत् ।
हुत्वा श्माशानिकं होमं पूर्णाहुत्यन्तमेव हि ॥ २,८.२३ ॥

निरग्निमथ वा भूमिं यमं रुद्रञ्च संस्मरेत् ।
हुत्वा प्राधानिके स्थाने पश्चादावाहयेच्च तम् ॥ २,८.२४ ॥

श्रपयेच्चापरं वह्नौ मुद्गमिश्रं चरुं ततः ।
तिलतण्डुलमिश्रञ्च द्वितीयं सपवित्रकम् ॥ २,८.२५ ॥

ओं पृथिव्यै नमस्तुभ्यमिति चैकं निवेदयेत् ।
ओं यमाय नमश्चेति द्वितीयं तदनन्तरम् ॥ २,८.२६ ॥

ओं नमश्चाथ रुद्राय श्माशानपतये नमः ।

ततो दीप्ते समिद्धेऽग्नौ भूमौ प्रकृतिदारुणे ॥ २,८.२७ ॥

सप्तभ्यो यमसंज्ञेभ्यो दद्यात्सप्त जलाञ्जलीन् ।
यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥ २,८.२८ ॥

वैवस्वताय कालाय सर्वप्राणहराय च ।
स्वधाकारनमस्कारप्रणवैः सह सप्तधा ॥ २,८.२९ ॥

अमुकामुकगौत्रैतत्तुभ्यमस्तु तिलोदकम् ।
प्रदद्याद्दश पिण्डांस्तु अर्घपुष्पसमन्वितान् ॥ २,८.३० ॥

धूपो दीपो बलिर्गन्धः सर्वेषामस्तु चाक्षयः ।
दश पिण्डांस्तु दान्दत्त्वा विष्णोः सौम्यं मुखं स्मरेत् ॥ २,८.३१ ॥

कुर्याच्च मासिकं मासि सपिण्डीकरणं ततः ।
आशौचान्ते ततः कुर्यादात्मनो वा मरस्य तु ॥ २,८.३२ ॥

कुर्यादस्थिरतां ज्ञात्वा शक्त्यारोग्यधनायुषम् ।
एतत्ते सर्वमाख्यातं जीवच्छ्राद्धं मया खग ॥ २,८.३३ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्ण गरुडसंवादे श्राद्धकर्त्रात्मश्राद्धयोर्निरूपणं नामाष्टमोऽध्यायः

श्रीगरुडमहापुराणम् ९
गरुड उवाच ।
उक्तमाद्यां क्रियां यावन्नृपोऽपीतित्वयानघ ।
कस्यचित्केनचिद्राज्ञा किमाद्या सा कृता पुरा ॥ २,९.१ ॥

श्रीकृष्ण उवाच ।
सुपर्ण शृणु वक्ष्यामि यथा राज्ञा क्रिया कृता ।
आसीत्कृतयुगे राजा वाङ्गो वै बभ्रुवाहनः ॥ २,९.२ ॥

पृथिव्याश्चतुरन्ताया गोप्ता पक्षीन्द्र धर्मतः ।
चतुर्भागां भुवं कृत्स्नां स भुङ्क्ते वसुधाधिपः ॥ २,९.३ ॥

न पापकृत्कश्चिदासीत्तस्मिन्नाज्यं प्रशासति ।
नासीच्चौरभयं तार्क्ष्य न क्षुद्रभयमेव हि ॥ २,९.४ ॥

नासीद्व्याधिभयञ्चापि तस्मिञ्जनपदेश्वरे ।
स्वधर्मे रेमिरे चासीत्तेजसा भास्करोपमः ॥ २,९.५ ॥

अक्षुब्धत्वेऽचलसमः सहिष्णुत्वे धरासमः ।
स कदाचिन्महाबाहुः प्रभूतबलवाहनः ॥ २,९.६ ॥

वनं जगाम गहनं हयानाञ्च शतैर्वृतः ।
सिंहनादैश्च योधानां शङ्खदुन्दुभिनिः स्वनैः ॥ २,९.७ ॥

आसीत्किलकिलाशब्दस्तस्मिन् गच्छती पार्थिवे ।
तत्रतत्र च विप्रेन्द्रैः स्तूयमानः समन्ततः ॥ २,९.८ ॥

निर्ययौ परया प्रीत्या वनं मृगजिघांसया ।
स गच्छन्ददृशे धीमान्नन्दनप्रतिमं वनम् ॥ २,९.९ ॥

बिल्वार्कखदिराकीर्णं कपित्थध्वजसंयुतम् ।
विषमैः पर्वतैश्चैव सर्वतश्च समन्वितम् ॥ २,९.१० ॥

निर्जलं निर्मनुष्यञ्च बहुयोजनमायतम् ।
मृगसिंहैर्महाघोरैन्यैश्चापि वनेचरैः ॥ २,९.११ ॥

तद्वनं मनुज व्याघ्रः सभृत्यबलवाहनः ।
लीलया लोडयामास सूदयन्विविधान्मृगान् ॥ २,९.१२ ॥

मृगस्य कस्यचित्कुक्षिं ततो विव्याध भूमिपः ।
राजा मृगप्रसङ्गेन तमनु प्राविशद्वनम् ॥ २,९.१३ ॥

एकाकी वै हृतबलः क्षुत्प्रिपासासमन्वितः ।
स वनस्यान्तमासाद्य महच्चारण्यमासदत् ॥ २,९.१४ ॥

तृषया परयाविष्टोऽन्विष्यज्जलमितस्ततः ।
स दूरात्पूरचक्राह्वं हंससारसनादितैः ॥ २,९.१५ ॥

सूचितं सर आगत्य साश्व एव व्यगाहत ।
पद्मानाञ्च परागेण उत्पलानां रजेन च ॥ २,९.१६ ॥

सुगन्धममलं शीतं पीत्वाम्भो निर्जगाम ह ।
मार्गश्रमपरिश्रान्तस्तडागतटमण्डपम् ॥ २,९.१७ ॥

न्यग्रोधं वीक्ष्य तस्याशु जटास्वश्वं बबन्ध ह ।
स तत्रास्तरमास्तीर्य खेटकानुपधाय च ॥ २,९.१८ ॥

सूष्वाप वायुना तत्र सेव्यामातस्तदा क्षणम् ।
क्षणं सुप्ते नृपे तत्र प्रेतो वै प्रेतवाहनः ॥ २,९.१९ ॥

कश्चिदत्राजगामाथ युक्तः प्रेतशतेन च ।
अस्थिचर्मशिराशेषशरीरः परिविभ्रमन् ॥ २,९.२० ॥

भक्ष्यंपेयं मार्गमाणो न बध्नाति धृतिं क्वचित् ।
तमपूर्वं नृपो दृष्ट्वाकरोदस्त्रं शरासने ॥ २,९.२१ ॥

दृष्ट्वा सोऽपि चिरं भूपं तस्थौ स्थाणुपिवाग्रतः ।
तमवस्थितमालोक्य राजा प्राप्तकुतूहलः ॥ २,९.२२ ॥

पप्रच्छ तञ्च कोऽसीति कुतो वा विकृतिं गतः ।
प्रेत उवाच ।
प्रेतभावो मया त्यक्तो गतिं प्राप्तोऽस्म्यहं पराम् ॥ २,९.२३ ॥

त्वत्संयोगान्महाबाहो नास्ति धन्यतरो मया ।
बभ्रुवाहन उवाच ।
किमेतद्विपिने घोरे सर्वत्रातिभयानके ॥ २,९.२४ ॥

दोधूयमाने वातेन वात्यारूपेण कोणप ।
पतङ्गा मशकाः क्षुद्राः कवन्धाश्च शिरांसि च ॥ २,९.२५ ॥

मत्स्याः कूर्माः कृकलासा वृश्चिका भ्रमराहयः ।
अधोमुखोर्ध्वपादास्ते क्रन्दमानाः सुदारुणम् ॥ २,९.२६ ॥

प्रवान्ति वायवो रूक्षा ज्वलन्तो विद्युदग्नयः ।

इतस्ततो भ्रमन्तीव वायुना तृणसन्ततिः ॥ २,९.२७ ॥

दृश्यन्ते विविधा जीवा नागाश्च शलभव्रजाः ।
श्रूयन्ते बहुधा रावा न दृश्यन्ते क्वचित्क्वचित् ॥ २,९.२८ ॥

दृष्ट्वेदं विकृतं सर्वं वेपते हृदयंमम ।
प्रते उवाच ।
येषां नैवाग्निसंस्कारो न श्राद्धं नोदकक्रियाः ॥ २,९.२९ ॥

षट्पिण्डा दश गात्राणि सपिण्डीकरणं न हि ।
विश्वासघातिनो ये च सुरापाः स्वर्णहारिणः ॥ २,९.३० ॥

मृता दुर्मरणाद्ये च ये चासूयापरा जनाः ।
प्रायश्चित्तविहीना ये अगम्यागमने रताः ॥ २,९.३१ ॥

कर्मभिर्भ्राम्यमाणास्ते प्राणिनः स्वकृतैरिह ।
दुर्लभाहारपानीया दृश्यन्ते पीडिता भृशम् ॥ २,९.३२ ॥

एतेषां कृपया राजंस्त्वं कुरुष्वौर्ध्वदेहिकम् ।
येषां न माता न पिता न पुत्रो न च बान्धवाः ॥ २,९.३३ ॥

तेषा राजा स्वयं कुर्यात्कर्माणि तु यतो नृपः ।
आत्मनश्च शुभं कर्म कर्तव्यं पारलौकिकम् ॥ २,९.३४ ॥

विमुक्तः सर्वदुः खेभ्यो येनाञ्जो दुर्गातिं तरेत् ।
भ्रातरः कस्य के पुत्रास्त्रियोऽपि स्वार्थकोविदाः ॥ २,९.३५ ॥

न कार्यस्तेषु विश्रम्भ स्वकृतं भुज्यतेयतः ।
गृहेष्वर्था निवन्र्त्तन्ते श्मशाने चैव बान्धवाः ॥ २,९.३६ ॥

शरीरं काष्ठामादत्ते पापं पुण्यं सह व्रजेत् ।
तस्मादाशु त्वया सम्यगात्मनः श्रेय इच्छता ॥ २,९.३७ ॥

अस्थिरेण शरीरेण कर्तव्यञ्चौर्ध्वदोहिकम् ।
राजोवाच ।
कृशरूपः करालाक्षस्त्वं प्रेत इव लक्ष्यसे ॥ २,९.३८ ॥

कथयस्वः मम प्रीत्या प्रेतराज यथातथम् ।
तथा पृष्टः स वै राज्ञा उवाच सकलं स्वकम् ॥ २,९.३९ ॥

प्रेत उवाच ।
कथयामि नृपश्रेष्ठ सर्वमेवादितस्तव ।

प्रेतत्वे कारणं श्रुत्वा दयां कर्तुमिहार्हसि ॥ २,९.४० ॥

वैदिशं नाम नगरं सर्वसम्पत्सुखावहम् ।
नानाजनपदाकीर्णं नानारत्नसमाकुलम् ॥ २,९.४१ ॥

नानापुष्पवनाकीर्णं नानापुण्यजनावृतम् ।
तत्राहं न्यवसं भूप देवार्चनरतः सदा ॥ २,९.४२ ॥

वैश्यजातिः सुदेवोऽहं नाम्ना विदितमस्तु ते ।
हव्येन तर्पिता देवाः कव्येन पितरो मया ॥ २,९.४३ ॥

विविधैर्दानयोगैश्च विप्राः सन्तर्पिता मया ।
आहारश्च विहारश्च मया वै सुनिवेशितः ॥ २,९.४४ ॥

दीनानाथविशिष्टेभ्यो मया दत्तमनेकधा ।
तत्सर्वं निष्फलं जातं मम दैवादुपागतम् ॥ २,९.४५ ॥

न मेऽस्ति सन्ततिस्तात न सुहृन्न च बान्धवाः ।
न च मित्रं हितस्तादृग्यः कुर्यादौर्ध्वदैहिकम् ॥ २,९.४६ ॥

प्रेतत्वं सुस्थिरं तेन मम जातं नृपोत्तम ।
एकादशं त्रिपक्षञ्च षाण्मासिकमथाब्दिकम् ॥ २,९.४७ ॥

प्रतिमास्यानि चान्या नि ह्येवं श्राद्धानि षोडश ।
यस्यैतानि न दीयन्ते प्रेतश्राद्धानि भूपते ॥ २,९.४८ ॥

प्रेतत्वं सुस्थिरं तस्यः दत्तैः श्राद्धशतैरपि ।
एवं ज्ञात्वा महाराज प्रेतत्वादुद्धरस्व माम् ॥ २,९.४९ ॥

वर्णानाञ्चैव सर्वेषां राजा बन्धुरिहोच्यते ।
तन्मां तारय राजेन्द्र मणिरत्नं ददामि ते ॥ २,९.५० ॥

यथा मम शुभावाप्तिर्भवेन्नृपवरोत्तम ।
तथा कार्यं महीपाल दयां कृत्वा मयि प्रभो ॥ २,९.५१ ॥

सपिण्डैर्वा सगोत्रैर्वा निष्टुरैर्न कृतो हिमे ।
वृषोत्सर्गस्ततो दुष्टं प्रेतत्वं प्राप्तवानहम् ॥ २,९.५२ ॥

क्षुत्तृषाविष्टदेहश्च भक्ष्यं पानं न चाप्नुयाम् ।
अतो विकृतिरेषा वै कृशात्वादिरमांसका ॥ २,९.५३ ॥

क्षुत्तृड्जन्यं महादुः खमनुभवामि पुनः पुनः ।

अकल्याणं हि प्रेतत्वं वृषोत्सर्गं विना कृतम् ॥ २,९.५४ ॥

तस्माद्राजन्दयासिन्धो प्रार्थयामि तवाग्रतः ।
राजोवाच ।
वर्तते मत्कुले प्रेत इति ज्ञेयं कथं नरैः ॥ २,९.५५ ॥

तन्ममाचक्ष्व हि प्रेत प्रेतत्वान्मुच्यते कथम् ।
प्रेत उवाच ।
लिङ्गेन पीडया प्रेतोऽनुमातव्यो नरैः सदा ॥ २,९.५६ ॥

वक्ष्यामि पीडास्ता राजन्या वै प्रेतकृता भुवि ।
ऋतुः स्यादफलः स्त्रीणां यदा वंशो न वर्धते ॥ २,९.५७ ॥

म्रियन्ते चाल्पवयसः सा पीडा प्रेतसम्भवा ।
अकस्माद्वृत्तिहरणमप्रतिष्ठा जनेषु वै ॥ २,९.५८ ॥

अकस्माद्गृहदाहः स्यात्सा पीडा प्रेतसम्भवा ।
स्वगेहे कलहो नित्यं स्याच्च मिथ्याभिशंसनम् ॥ २,९.५९ ॥

राजयक्ष्मादिसम्भूतिः सा पीडा प्रेतसम्भवा ।
अपि स्वयं धनं मुक्तं प्रयत्नादनवे पथि ॥ २,९.६० ॥

नैव लभ्येत नश्येतः सा पीडा प्रेतसंमवा ।
सुवृष्टौ कृषिनाशः स्याद्वाणिज्याद्वृत्तिनाशनम् ॥ २,९.६१ ॥

कलत्रं प्रतिकूलं स्यात्सा पीडा प्रेतसम्भवा ।
एवन्तु पीडया राजन्प्रेतज्ञानं भवेन्नृणाम् ॥ २,९.६२ ॥

वृषोत्सर्गो यदि भवेत्प्रेतत्वान्मुच्यते तदा ।
तस्मान्नृप त्वमप्येवं वृषोत्सर्गं कुरु प्रभो ॥ २,९.६३ ॥

मामुद्दिश्य नृपेऽप्यत्राधिकारोऽत्यनुकम्पया ।
राजपुत्रो हतः कश्चिन्मयैवाप्तस्ततो मया ॥ २,९.६४ ॥

कुरुष्व त्वं गृहीत्वा मे तद्धनेन वृषोत्सवम् ।
कार्तिक्यां पौर्णमास्यां वाऽश्वयुङ्मध्येऽथवा नृप ॥ २,९.६५ ॥

रेवतीयुक्तदिवसे कृषीष्ठा मे वृषोत्सवम् ।
पुण्यान्विप्रान्समाहूय वह्निं स्थाप्य विधानतः ॥ २,९.६६ ॥

मन्त्रैर्होमस्तथा कार्यः षड्भिर्नृप विधानतः ।
बहून्विप्रान् भोजयेथास्तद्रत्नाप्तधनेन वै ।

एवं कृते महीपाल मम मुक्तिर्भविष्यति ॥ २,९.६७ ॥

श्रीकृष्ण उवाच ।
तथेति प्रतिजग्राह मणिं राजा ततः खग ॥ २,९.६८ ॥

क्रियाधिकारस्तस्यैव यो धनग्राहको भवेत् ।
कुर्वतोस्तु तयोर्वार्तामेवं प्रेतमहीक्षितोः ॥ २,९.६९ ॥

झणत्कारस्तु घण्टानां भेरीणां भाङ्कृतिस्तथा ।
जातस्तदा राजसेना चतुरङ्गा समापतत् ॥ २,९.७० ॥

तस्यामागतमात्रायां प्रेतश्चादृश्यतां गतः ।
तस्माद्वनाद्विनिःसृत्य राजापि पुरमागमत् ॥ २,९.७१ ॥

स कार्तिक्यां पूर्णिमायां प्रेतमुद्दिश्य संव्यधात् ।
वृषोत्सर्गं विधानेन तन्मण्याप्तधनेन च ॥ २,९.७२ ॥

प्रेतोऽप्ययं सपदिलब्धसुवर्णदेहः कर्मान्त आगत इति प्रणनाम भूपम् ।
देव त्वदीयमहिमायमिति स्तुवन् स यातो दिवं गरुड भूपतिना कृतज्ञः ॥ २,९.७३ ॥

एतत्ते सर्वमाख्यातं यथा भूपतिनापि सः ।
उद्धृतः प्रेतभावाद्वै किमन्यच्छ्रोतुमिच्छसि ॥ २,९.७४ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे राजकृतवृषोत्सर्गक्रियादिनिरूपणं नाम नवमोऽध्यायः

श्रीगरुडमहापुराणम् १०

गरुड उवाच ।
सपिण्डीकरण जाते आब्दिके च स्वकर्मभिः ।
देवत्वं वा मनुष्यत्वं पक्षित्वं वाप्नुयुर्नराः ॥ २,१०.१ ॥

तेषां विभिन्नाहाराणां श्राद्धं वै तृप्तिदं कथम् ।
यदप्यन्यैर्द्विजैर्भुक्तं हूयते यदि वानले ॥ २,१०.२ ॥

शुभाशुभात्मकैः प्रेतस्तद्दत्तं भुज्यते कथम् ।
श्राद्धस्यावश्यकत्वन्तु आमावास्यादिषु श्रुतम् ॥ २,१०.३ ॥

श्रीभगवानुवाच ।
प्रेतानां शृणु पक्षीन्द्र यथा श्राद्धन्तु तृप्तिदम् ।
देवो यदपि जातोऽयं मनुष्यः कर्मयोगतः ॥ २,१०.४ ॥

तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुयाति च ।
गान्धर्व्ये भोगरूपेण पशुत्वे च तृणं भवेत् ॥ २,१०.५ ॥

श्राद्धं हि वायुरूपेण नागत्वेऽप्यनुगच्छति ।
फलं भवति पक्षित्वे राक्षसेषु तथामिषम् ॥ २,१०.६ ॥

दानवत्वे तथा मांसं प्रेतत्वे रुधिरं तथा ।
मनुष्यत्वेऽन्नपानादि बाल्ये भोगरसो भवेत् ॥ २,१०.७ ॥

गरुड उवाच ।
कथं कव्यानि दत्तानि हव्यानि च जनैरिह ।
गच्छन्ति पितृलोकं वा प्रापकः कोऽत्र गद्यते ॥ २,१०.८ ॥

मृतानामपि जन्तूनां श्राद्धमाप्यायनं यदि ।
निर्वाणस्य प्रदीपस्य तैलं संवर्धयेच्छिखाम् ॥ २,१०.९ ॥

मृताश्च पुरुषाः स्वामिन् स्वकर्मजनितां गतिम् ।
गाहन्तः के कथं स्वस्य सुतस्य श्रेय आप्नुयुः ॥ २,१०.१० ॥

श्रीभगवानुवाच ।
श्रुतेः प्रत्यक्षतस्ताक्ष्र्य प्रामाण्यं बलवत्तरम् ।
श्रुत्या तुः बोधितार्थस्य पीयूषत्वादिरूपता ॥ २,१०.११ ॥

नामगोत्रं पितृणां वै प्रापकं हव्यकव्ययोः ।
श्राद्धस्य मन्त्रास्तद्वत्तु प्रापकाश्चैव भक्तितः ॥ २,१०.१२ ॥

अचेतनानि चैतानि प्रापयन्ति कथन्त्विति ।

सुपर्ण नावगन्तव्यं प्रापकं वच्मि तेऽपरम् ॥ २,१०.१३ ॥

अग्निष्वात्तादयस्तेषा माधिपत्ये व्यवस्थिताः ।
काले न्यायागतं पात्रे विधिना प्रतिपादितम् ॥ २,१०.१४ ॥

अन्नं नयन्ति तत्रैते जन्तुर्यत्रावतिष्ठते ।
नाम गोत्रञ्च मन्त्राश्च दत्तमन्नं नयन्ति ते ॥ २,१०.१५ ॥

अपि योनिशतं प्राप्तांस्तांस्तृप्तिरुपतिष्ठति ।
तेषां लोकान्तरस्थानां विविधैर्नामगोत्रकैः ॥ २,१०.१६ ॥

अपसव्यं क्षितौ दर्भे दत्ताः पिण्डास्त्रयस्तु वै ।
यान्ति तांस्तर्पयन्त्येवं प्रेतस्थानस्थितान्पितॄन् ॥ २,१०.१७ ॥

अप्राप्तयातनास्थानाः श्रेष्ठा ये भुवि पञ्चधा ।
नानारूपास्तु जाता ये तिर्यग्योन्यादिजातिषु ॥ २,१०.१८ ॥

यदाहारा भवन्त्येते पितरो यत्र योनिषु ।
तासुतासु तदाहारः श्राद्धा अवतिष्ठति ॥ २,१०.१९ ॥

यथा गोषु प्रनष्टासु वत्सो विन्दति मातरम् ।
तथान्नं नयते विप्र जन्तुर्यत्रावतिष्ठते ॥ २,१०.२० ॥

पितरः श्राद्धमोक्तारो विश्वेर्देवैः सदा सह ।
एते श्राद्धं सदा भुक्त्वा पितॄन्सन्तर्पयन्त्यतः ॥ २,१०.२१ ॥

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।
प्रीणयाते मनुष्याणां पितॄञ्श्राद्धेषु तर्पिताः ॥ २,१०.२२ ॥

आत्मानं गुर्विणी गर्भमपि प्रीणाति वै यथा ।
दोहदेन तथा देवाः श्राद्धैः स्वांश्च पितॄन्नृणाम् ॥ २,१०.२३ ॥

हृष्यन्ति पितरः श्रुत्वा श्राद्धकालमुपस्थितम् ।
अन्योन्यं मनसा ध्यात्वा सम्पतन्ति मनोजवम् ॥ २,१०.२४ ॥

ब्राह्मणैः सह चाश्नन्ति पितरो ह्यन्तरिक्षगाः ।
वायुभूताश्च तिष्ठन्ति भुक्त्वा यान्ति परां गतिम् ॥ २,१०.२५ ॥

निमन्त्रितास्तु ये विप्राः श्राद्धपूर्वदिनेः खग ।
प्रविश्य पितरस्तेषु भुक्त्वा यान्ति स्वमालयम् ॥ २,१०.२६ ॥

श्राद्धकर्त्रा तु यद्येकः श्राद्धे विप्रो निमन्त्रितः ।

उदरस्थः पिता तस्य वामपार्श्वे पितामहः ॥ २,१०.२७ ॥

प्रपितामहो दक्षिणतः पृष्ठतः पिण्डभक्षकः ।
श्राद्धकाले यमः प्रेतान्पितॄंश्चापि यमालयात् ॥ २,१०.२८ ॥

विसर्जयति मानुष्ये निरयस्थांश्च काश्यप ।
क्षुधार्ताः कीर्तयन्तश्च दुष्कृतञ्च स्वयङ्कृतम् ॥ २,१०.२९ ॥

काङ्क्षन्ति पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् ।
तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन तु ॥ २,१०.३० ॥

गरुड उवाच ।
स्वामिन्केनापि ते दृष्टा आगताः पितरो द्विज ।
लोकादमुष्मादागत्य भुञ्जन्तो भुवि मानद ॥ २,१०.३१ ॥

श्रीभगवानुवाच ।
गरुत्मञ्छृणु वक्ष्यामि यथा दृष्टास्तु सीतया ।
पितरो विप्रदेहे वै श्वशुराद्यास्त्रयः क्वचित् ॥ २,१०.३२ ॥

गृहीत्वा पितुराज्ञां वै रामो वनमुपागमत् ।
ततः पुष्करयात्रार्थं रामोऽयात्सीतया सह ॥ २,१०.३३ ॥

तीर्थं चापि समागत्य श्राद्धं प्रारब्धवांस्तु सः ।
फलं पक्वन्तु जानक्या सिद्धं रामे निवेदितम् ॥ २,१०.३४ ॥

स्नातप्रियोक्तवाक्यात्तु सुस्नाता नमपालयत् ।
नभोमध्यगते सूर्ये काले कुतुप आगते ॥ २,१०.३५ ॥

अयाता ऋःषयः सर्वे ये रामेण निमन्त्रिताः ।
तान्मुनीनागतान्दृष्ट्वा वैदेही जनकात्मका ॥ २,१०.३६ ॥

रामाज्ञयान्नमादाय परिवेष्टुमुपागता ।
अपासर्पत्ततो दूरे विप्रमध्ये तु संस्थिता ॥ २,१०.३७ ॥

गुल्मैराच्छाद्य चात्मानं निगूढं सा स्थिता तदा ।
एकान्ते तु तदा सीतां ज्ञात्वा राघवनन्दनः ॥ २,१०.३८ ॥

विमृश्य सुचिरं कालमिदं किमिति सत्वरम् ।
किञ्चित्क्वचिद्गता साध्वी त्रपायाः कारणेन हि ॥ २,१०.३९ ॥

किं वा न भोजयन्विप्रान्सी तामन्वेषयाम्यहम् ।
विमृशन्नेवमेवं स स्वयं विप्रानभोजयत् ॥ २,१०.४० ॥

गतेषु द्विजमुख्येषु प्रियां रामोऽब्रवीदिदम् ।
कथं तलासु लीना त्वं मुनीन्दृष्ट्वा समागतान् ॥ २,१०.४१ ॥

तत्सर्वं मम तन्वङ्गि कारणं वद मा चिरम् ।
एवमुक्ता तदा भर्त्रा सीता साधोमुखी स्थिता ।
मुञ्चन्ती चाश्रुसंघातं राघवं वाक्यमब्रवीत् ॥ २,१०.४२ ॥

सीतोवाच ।
शृणु त्वं नाथ यद्दृष्टमाश्चर्यमिह यादृशम् ॥ २,१०.४३ ॥

पिता तव मया दृष्टो ब्राह्मणाग्रे तु राघवः ।
सर्वाभरणसंयुक्तोद्वौ चान्यौ च तथाविधौ ॥ २,१०.४४ ॥

दृष्ट्वा त्वत्पितरञ्चाहमपक्रान्ता तवान्तिकात् ।
वल्कलाजिनसंवीता कथं राज्ञः पुरः प्रभो ॥ २,१०.४५ ॥

भवामि रिपुवीरघ्न सत्यमेतदुदाहृतम् ।
स्वहस्तेन कथं देयं राज्ञे वा भोजनं मया ॥ २,१०.४६ ॥

दासानामपि ये दासा नोपभुञ्जन्ति कर्हिचित् ।
तृणपात्रे कथं तस्मै अन्नं दातुं हि शक्नुयाम् ॥ २,१०.४७ ॥

याहं राज्ञा पुरा दृष्टा सर्वाभरणभूषिता ।
सा स्वेदमलदिग्धाङ्गी कथं यास्यामि भूपतिम् ।
अपकृष्टास्मि तेनाहं त्रपया रघुनन्दन ।
श्रीभागवानुवाच ॥ २,१०.४८ ॥

इति श्रुत्वा प्रियावाक्यं रामो विस्मितमानसः ॥ २,१०.४९ ॥

आश्चर्यमिति तज्ज्ञात्वा तदा स्वस्थानमागमत् ।
सीतया पितरो दृष्टा यथा तत्ते निवेदितम् ॥ २,१०.५० ॥

अपरं श्राद्धमाहात्म्यं किञ्चिच्छृणु समासतः ।
अमावस्यादिने प्राप्ते गृहद्वारे समास्थिताः ॥ २,१०.५१ ॥

वायुभूताः प्रवाञ्छन्ति श्राद्धं पितृगणा नृणाम् ।
यावदस्तमयं भानोः क्षुत्पिपासासमाकुलाः ॥ २,१०.५२ ॥

ततश्चास्तं गते सूर्ये निराशा दुःखसंयुताः ।
निःश्वसन्तश्चिरं यान्ति गर्हयन्तस्तु वंशजम् ॥ २,१०.५३ ॥

तस्माच्छ्राद्धं प्रयत्नेन अमायां कर्तुमर्हति ।
यदि श्राद्धं प्रकुर्वन्ति पुत्राद्यास्तस्य बान्धवाः ॥ २,१०.५४ ॥

उद्धृता ये गयाश्राद्धे ब्रह्मलोकञ्च तैः सह ।
भजन्ते क्षुत्पिपासा वा न तेषां जायते क्वचित् ॥ २,१०.५५ ॥

तस्माच्छ्राद्धं प्रयत्नेन सम्यक्कुर्याद्विचक्षणः ।
तस्माच्छ्राद्धं चरेद्भक्त्या शाकैरपि यथाविधि ॥ २,१०.५६ ॥

कुर्वीत समये श्राद्धं कुले कश्चिन्न सीदति ।
आयुः पुत्रान्यशः स्वर्गं कीर्तिं पुष्टिं बलं श्रियम् ॥ २,१०.५७ ॥

पशून्सौख्यं धनं धान्यं प्राप्नुयात्पितृपूजनात् ।
देवकार्यादपि सदा पितृकार्यं विशिष्यते ॥ २,१०.५८ ॥

देवताभ्यः पितृणां हि पूर्वमाप्यायनं शुभम् ।
ये यजन्ति पितृन्देवान्ब्राह्मणांश्च हुताशनम् ॥ २,१०.५९ ॥

सर्वभूतान्तरात्मानं मामेव हि यजन्ति ते ।
स्मार्तेन विधिना श्राद्धं कृत्वा स्वविभवोचितम् ॥ २,१०.६० ॥

आब्राह्मस्तम्बपर्यन्तं जगत्प्रीणाति मानवः ।
अन्नप्रकिरणं यत्तु मनुष्यैः क्रियते भुवि ॥ २,१०.६१ ॥

तेन तृप्तिमुपायान्ति ये पिशाचत्वमागताः ।
यच्चाम्बुः स्नानवस्त्रेभ्यो भूमौ पतति खेचर ॥ २,१०.६२ ॥

तेन ये तरुतां प्राप्तास्तेषां तृप्तिः प्रजायते ।
यानि गन्धाम्बूनि चैव पतन्ति धरणीतले ॥ २,१०.६३ ॥

तेन चाप्यायनं तेषां ये देवत्वमुपागताः ।
ये चापि स्वकुलाद्बाह्याः क्रियायोग्या ह्यसंस्कृताः ॥ २,१०.६४ ॥

विपन्नास्ते तु विकिरसंमार्जनजलाशिनः ।
भुक्त्वा चाचमनं यच्च जलं यच्चाह्नि सेवितम् ॥ २,१०.६५ ॥

ब्राह्मणानां तथैवान्यत्तेन तृप्तिं प्रयान्ति वै ।
पिशाचत्वमनुप्राप्ताः कृमिकीटत्वमेव ये ॥ २,१०.६६ ॥

उद्धृतेष्वन्नपिण्डेषु भुवि ये चान्नकाङ्क्षिणः ।
तैरेवाप्यायनं तेषां ये मनुष्यत्वमागताः ॥ २,१०.६७ ॥

एवं वै क्रियमाणानां तेषां चैव द्विजन्मनाम् ।
कश्चिज्जलान्नविक्षेपः शुचिरुच्छिष्ट एव वा ॥ २,१०.६८ ॥

तेनान्नेन कुले तेषां ये वै जात्यन्तरं गताः ।
भवत्याप्यायनं तेषां सम्यक्श्राद्धे कृते सति ॥ २,१०.६९ ॥

अन्यायोपार्जितैर्द्रव्यैर्यच्छ्राद्धं क्रियते नरैः ।
तकृप्यन्ति तेन चण्डालाः पुक्कसाद्युपयोनिषु ॥ २,१०.७० ॥

एवं संप्राप्यते पक्षिन् यद्दत्तमिह बान्धवैः ।
श्राद्धं कुर्वद्भिरन्नाम्वुशाकैस्तृप्तिर्हि जायते ॥ २,१०.७१ ॥

एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
सद्यो देहान्तरप्राप्तिर्विलंबेनावनीतले ॥ २,१०.७२ ॥

पृष्टवानसि तत्तेऽहं प्रवक्ष्यामि समासतः ।
सद्यो विलम्बतञ्चैवोभयथापि कलेवरम् ॥ २,१०.७३ ॥

यतो हि मर्त्यः प्राप्नोति तद्विशेषञ्च मे शृणु ।
अधूमकज्योतिरिवाङ्गुष्ठमात्रः पुमांस्ततः ॥ २,१०.७४ ॥

देहमेकं सद्य एव वायवीयं प्रपद्यते ।
यथा नृणजलौका हि पश्चत्पादं तदोद्धरेत् ॥ २,१०.७५ ॥

स्थितिरग्र्यस्य पादस्य यदा जाता दृढा भवेत् ।
एवं देही पूर्वदेहं समुत्सृजति तं यदा ॥ २,१०.७६ ॥

भोगार्थमग्रे स्याद्देहो वायवीय उपस्थितः ।
विषयग्राहकं यद्वन्म्रियमाणस्य चेन्द्रियम् ॥ २,१०.७७ ॥

निर्व्यापारं तच्च देहे वायुनैव स गच्छति ।
शरीरं यदवाप्नोति तच्चाप्युत्क्वम्यति स्वयम् ॥ २,१०.७८ ॥

गृहीत्वा स्वं विनिर्याति जीवो गर्भ ईवाशयात् ।
उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ॥ २,१०.७९ ॥

विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ।
आतिवाहिकमित्येवं वायवीयं वदन्ति हि ॥ २,१०.८० ॥

एवं तु यातुधानानां तमेव च वदन्ति हि ।
सुपर्ण ईदृशो देहो नृणां भवति पिण्डजः ॥ २,१०.८१ ॥

पुत्रादिभिः कृताश्चेत्स्युः पिण्डा दश दशाहिकाः ।
पिण्डजेन तु देहेन वायुजश्चैकतां व्रजेत् ॥ २,१०.८२ ॥

पिण्डजो यदि नैव स्याद्वायुजोर्ऽहति यातनाम् ।
देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिः पक्षीन्द्रेत्यवधारय ॥ २,१०.८३ ॥

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २,१०.८४ ॥

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २,१०.८५ ॥

वायवीयां तनुं याति सद्य इत्युक्तमेव ते ।
प्राप्तिर्विलंबतो यस्य तं देहं खलु मे शृणु ॥ २,१०.८६ ॥

क्वचिद्विलंबतो देहं पिण्डजं स समाप्नुयात् ।
अथो गतो याम्यलोकं स्वीयकर्मानुसारतः ॥ २,१०.८७ ॥

चित्रगुप्तस्यवाक्येन निरयाणि भुनक्ति सः ।
यातनाःसमवाप्याथ पशुपक्ष्यादिकीं तनुम् ॥ २,१०.८८ ॥

या गृह्णाति नरः सा स्यान्मोहेन ममतास्पदम् ।
शुभाशुभं कर्मफलं भुक्त्वा मुच्यते मानवः ॥ २,१०.८९ ॥

गरुड उवाच ।
तीर्त्वा दुः खभवाम्भोधिं भवन्तं कथमाप्नुयात् ।
बहुपातकयुक्तोऽपि तद्वदस्व दयानिधे ॥ २,१०.९० ॥

भूयो दुः खस्य संसर्गो नरस्य न भवेद्यथा ।
ब्रूहि शुश्रूषमाणस्य पृच्छतो मे रमापते ॥ २,१०.९१ ॥

श्रीकृष्ण उवाच ।
स्वेस्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ २,१०.९२ ॥

कर्मविभ्रष्टकालुष्यो वासुदेवानुचिन्तया ।
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ॥ २,१०.९३ ॥

शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ।
विरक्तसेवी लब्ध्वाशी यतवाक्कायमानसः ॥ २,१०.९४ ॥

ध्यानयोगपरो नित्यं वैरग्यं समुपाश्रितः ।
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥ २,१०.९५ ॥

विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ।
अतः परं नृणां कृत्यं नास्ति कश्यपनन्दन ॥ २,१०.९६ ॥

इति श्रीगारुडे महापु उत्तरखण्डे द्वितीदृधर्मदृप्रेतकल्पे श्रीकृष्णगरुडसंवादे श्राद्धस्य तृप्तिदत्वादिनिरूपणं नाम दशमोऽध्यायः

श्रीगरुडमहापुराणम् ११
गरुड उवाच ।
मानुषत्वं लभेत्कस्मान्मृत्युमाप्नोति तत्कथम् ।
म्रियते कः सुरश्रेष्ठ देहमाश्रित्य कुत्रचित् ॥ २,११.१ ॥

इन्द्रियाणि कुतो यान्ति ह्यस्पृश्यः स कथं भवेत् ।
क्व कर्माणि कृतानीह कथं भुङ्क्ते प्रसर्पति ॥ २,११.२ ॥

प्रसादं कुरु मे मोहं छेत्तुमर्हस्यशेषतः ।
काश्यपोऽहं सुरश्रेष्ठ विनतागर्भ संभवः ।
यमलोकं कथं यान्ति विष्णुलोकं च मानवाः ॥ २,११.३ ॥

श्रीकृष्ण उवाच ।
परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ॥ २,११.४ ॥

अरण्ये निर्जने देशे जायते ब्रह्मराक्षसः ।
हीनजातौ प्रजायेत रत्नानामपहारकः ॥ २,११.५ ॥

यंयं काममभिध्यायेत्स तल्लिङ्गोऽभिजायते ।
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ॥ २,११.६ ॥

न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ।
वाक्चक्षुर्नासिका कर्णौ गुदं मूत्रस्य सञ्चरः ॥ २,११.७ ॥

अण्डजादिकजन्तूनां छिद्राण्येतानि सर्वशः ।
आनाभेर्मूर्धपर्यन्तमूर्ध्वच्छिद्राणि चाष्ट वै ॥ २,११.८ ॥

सन्तः सुकृतिनो मर्त्या ऊर्ध्वच्छिद्रेण यान्ति वै ।
मृताहे वार्षिकं यावद्यथोक्तविधिना खग ॥ २,११.९ ॥

कुर्यात्सर्वाणि कर्माणि निर्धनोऽपि हि मानवः ।
देहे यत्र वसेज्जन्तुस्तत्र भुङ्क्ते शुभाशुभम् ॥ २,११.१० ॥

मनोवाक्कायजान्दोषांस्तथां भुङ्क्ते खगेश्वर ।
मृतः स सुखमाप्नोति मायापाशैर्न बध्यते ।
पाशबद्धो नरो यस्तु विकर्मनिरतो भवेत् ॥ २,११.११ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवाहे ऊर्ध्वाधोगतिज्ञापकोत्क्रमणद्वारनिरूपणं नामैकादशोऽध्य्याः

---

श्रीगरुडमहापुराणम् १२
श्रीकृष्ण उवाच ।
एवं ते कथितस्ताक्ष्य जीवितस्य विनर्णयः ।
मानुषाणां हितार्थाय प्रेतत्वविनिवृत्तये ॥ २,१२.१ ॥

चतुरशीतिलक्षाणि चतुर्भेदाश्च जन्तवः ।
अण्डजाः स्वेदजाश्चैव उद्भिज्जाश्च जारायुजाः ॥ २,१२.२ ॥

एकविंशतिलक्षाणि अण्डजाः परिकीर्तिताः ।
स्वेदजाश्च तथा प्रोक्ता उद्भिज्जाश्च क्रमेण तु ॥ २,१२.३ ॥

जरायुजास्तथा प्रोक्ता मनुष्याद्यास्तथा परे ।
सर्वेषामेव जन्तूनां मानुषत्वं हि दुर्लभम् ॥ २,१२.४ ॥

पञ्चेन्द्रियनिधानत्वं महापुण्यैरवाप्यते ।
ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्रास्तत्परजातयः ॥ २,१२.५ ॥

रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तमेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः ॥ २,१२.६ ॥

म्लेच्छतुम्बविभेदेन जातिभेदास्त्वनेकशः ।
जन्तूनामेव सर्वेषां जातिभेदाः सहस्रशः ॥ २,१२.७ ॥

जन्तूनामेव सर्वेषां भेदाश्चैव सहस्रशः ।
आहारो मैथुनं निद्रा भयं क्रोधस्तथैव च ॥ २,१२.८ ॥

सर्वेषा मेव जन्तूनां विवेको दुर्लभः परः ।
एकपादादिरूपेण देहभेदास्त्वनेकशः ॥ २,१२.९ ॥

कृष्णसारो मृगो यत्र धर्मदशः स उच्यते ।
ब्रह्माद्या देवताः सर्वास्तत्र तिष्ठन्ति सर्वशः ॥ २,१२.१० ॥

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां मतिजीविनः ।
मतिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥ २,१२.११ ॥

मानुष्यं यः समासाद्य स्वर्गमेक्षैकसाधकम् ।
तयोर्न साधयेदेकं तेनात्मा वञ्चितो ध्रुवम् ॥ २,१२.१२ ॥

इच्छति शती सहस्रं सहस्री लक्षमीहते कर्तुम् ।
लक्षाधिपती राज्यं राजापि सकलां धरां लब्धुम् ॥ २,१२.१३ ॥

चक्रधरोऽपि सुरत्वं सुरभावे सकलसुरपतिर्भवितुम् ।

सुरपतिरूर्ध्वगतित्वं तथापि ननिवर्तते तृष्णा ॥ २,१२.१४ ॥

तृष्णया चाभिभूतस्तु नरकं प्रतिपद्यते ।
तृष्णामुक्तास्तु ये केचित्स्वर्गवासं लभन्ति ते ॥ २,१२.१५ ॥

आत्माधीनः पुमांल्लोके सुखी भवति निश्चितम् ।
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ॥ २,१२.१६ ॥

तथा च विषयाधीनो दुः खी भवति निश्चितम् ॥ २,१२.१७ ॥

कुरङ्गमताङ्गपतङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ।
एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च ॥ २,१२.१८ ॥

पितृमातृमयो बाल्ये यौवने दयितामयः ।
पुत्रपौत्रमयश्चान्ते मूढो नात्ममयः क्वचित् ॥ २,१२.१९ ॥

लोहदारुमयैः पाशैः पुमान्बद्धो विमुच्यते ।
पुत्रदारमयैः पाशैर्नैव बद्धो विमुच्यते ॥ २,१२.२० ॥

एकः करोति पापानि फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रयुज्यन्ते कर्ता दोषेण लिप्यते ॥ २,१२.२१ ॥

कोऽपि मृत्युं न जयति बालो वृद्धो युवापि वा ।
सुखदुः खादिको वापि पुनरायाति याति च ॥ २,१२.२२ ॥

सर्वेषां पश्यतामेव मृतः सर्वं परित्यजेत् ।
एकः प्रजायते जन्तुरेक एव प्रलीयते ॥ २,१२.२३ ॥

एकोऽपि भुङ्क्ते सुकृतमेक एव च दुष्कृतम् ।
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमङ्क्षितौ ॥ २,१२.२४ ॥

बान्धवा विमुखा यान्ति धर्मस्तमनुगच्छति ।
गृहेष्वर्था निवर्तन्ते श्मशानान्मित्रबान्धवाः ॥ २,१२.२५ ॥

शरीरं वह्निरादत्ते सुकृतं दुष्कृतं व्रजेत् ।
शरीरं वह्निना दग्धं पुण्यं पापं सह स्थितम् ॥ २,१२.२६ ॥

शुभं वा यदि वा पापं भुङ्क्ते सर्वत्र मानवः ।
यदनस्तमिते सूर्ये न दत्तं धनमर्थिनाम् ॥ २,१२.२७ ॥

न जाने तस्य तद्वित्तं प्रातः कस्य भविष्यति ।
रारटीति धनं तस्य को मे भर्ता भविष्यति ॥ २,१२.२८ ॥

न दत्तं द्विजमुख्येभ्यः परोपकृतये तथा ।
पूर्वजन्मकृतात्पुण्याद्यल्लब्धं बहु चाल्पकम् ॥ २,१२.२९ ॥

तदीदृशं परिज्ञाय धर्मार्थे दीयते धनम् ।
धनेन धार्यते धर्मः श्रद्धापूतेन चेतसा ॥ २,१२.३० ॥

श्रद्धाविरहितो धर्मो नेहामुत्र च तत्फलम् ।
धर्माच्च जायते ह्यर्थो धर्मात्कामोऽपि जायते ॥ २,१२.३१ ॥

धर्म एवापवर्गाय तस्माद्धर्मं समाचरेत् ।
श्रद्धया साध्यते धर्मो बहुभिर्नार्थराशिभिः ॥ २,१२.३२ ॥

अकिञ्चना हि मुनयः श्रद्धावन्तो दिवं गताः ।
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पक्षिन्प्रेत्य चेह न तत्फलम् ॥ २,१२.३३ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाद्दप्रेतकल्पे श्रीकृष्णगरुडसंवादे मृतस्य धर्ममात्रानुयायित्वनिरूपणं नाम द्वादशोऽध्यायः

गरुड उवाच ।
कर्मणा केन देवेश प्रेतत्वं नैव जायते ।
पृथिव्यां सर्वजन्तूनां तद्ब्रूहि परमेश्वर ॥ २,१३.१ ॥

श्रीकृष्ण उवाच ।
अथ वक्ष्यामि संक्षेपात्क्षयाहादौर्ध्वदैहिकम् ।
क्वहस्तेनैव कर्तव्यं मोक्षकामैस्तु मानवैः ॥ २,१३.२ ॥

स्त्रीणामपि विशेषेण पञ्चवर्षाधिके शिशौ ।
वृषोत्सर्गादिकं कर्म प्रेतत्वविनिवृत्तये ।
वृषोत्सर्गादृते नान्यत्किञ्चिदस्ति महीतले ॥ २,१३.३ ॥

जीवन्वापि मृतो वापि वृषोत्सर्गं करोति यः ।
प्रेतत्वं न भवेत्तस्य विना दानमखव्रतैः ॥ २,१३.४ ॥

गरुड उवाच ।
कस्मिन्काले वृषोत्सर्गं जीवन्वापि मृतोऽपि वा ।
कुर्यात्सुरवरश्रेष्ठ ब्रूहि मे मधुसूदन ॥ २,१३.५ ॥

किं फलं तु भवेदन्ते कृतैः श्राद्धैस्तु षोडशैः ॥ २,१३.६ ॥

श्रीकृष्ण उवाच ।
अकृत्वा तु वृषोत्सर्गं कुरुते पिण्डपातनम् ।
नोपतिष्ठति तच्छ्रेयो दातुः प्रेतस्य निष्फलम् ॥ २,१३.७ ॥

एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ २,१३.८ ॥

गरुड उवाच ।
सर्पाद्धि प्राप्तमृत्यूनामग्निदाहादि न क्रिया ।
जलेन शृङ्गिणा वापि शस्त्राद्यैर्म्रियते यदि ॥ २,१३.९ ॥

असन्मृत्युमृतानां च कथं शुद्धिर्भवत्प्रभो ।
एतन्मे संशयं देव च्छेत्तुमर्हस्यशेषतः ॥ २,१३.१० ॥

श्रीकृष्ण उवाच ।

षण्मासैर्ब्राह्मणः शुध्येद्युग्मे सार्धे तु बाहुजः ।
सार्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति ॥ २,१३.११ ॥

दत्त्वा दानान्यशेषाणि सुतीर्थे म्रियते यदि ।
ब्रह्मचारी शुचिर्भूत्वा न स यातीह दुर्गतिम् ॥ २,१३.१२ ॥

वृषोत्सर्गादिकं कृत्वा यतिधर्मं समाचरेत् ।
यतित्वे मृत्युमाप्नोति स गच्छेद्ब्रह्मशाख्वतम् ॥ २,१३.१३ ॥

विकर्म कुरुते यस्तु शिष्टाचारविवर्जितः ।
वृषोत्सर्गादिकं कृत्वा न गच्छेद्यमशासनम् ॥ २,१३.१४ ॥

पुत्रो वा सोदरो वापि पौत्रो बन्धुजनस्तथा ।
गोत्रिणश्चार्थभागी च मृते कुर्याद्वृषोत्सवम् ॥ २,१३.१५ ॥

पुत्राभावे तु पत्नी स्याद्दौहित्त्रो दुहीतापि वा ।
पुत्त्रेषु विद्यमानेषु वृषं नान्येन कारयेत् ॥ २,१३.१६ ॥

गरुड उवाच ।
पुत्रा यस्य न विद्यन्ते नरा नार्यः सुरेश्वर ।
एतन्मे संशयं देव च्छेतुमर्हस्यशेषतः ॥ २,१३.१७ ॥

श्रीकृष्ण उवाच ।
अपुत्त्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ।
तस्मात्केनाप्युपायेन पुत्त्रस्य जननं चरेत् ॥ २,१३.१८ ॥

यानि कानि च दानानि स्वयं दत्तानि मानवैः ।
तानितानि च सर्वाणि तूपतिष्ठन्ति चाग्रतः ॥ २,१३.१९ ॥

व्यञ्जनानि विचित्राणि भक्ष्यभोज्यानि यानि च ।
स्वहस्तेन प्रदत्तानि देहान्ते चाक्षयं फलम् ॥ २,१३.२० ॥

गोभूहिरण्यवासांसि भोजनानि पादनि च ।
यत्रयत्र वसेज्जन्तुस्तत्रतत्रोपतिष्ठति ॥ २,१३.२१ ॥

यावत्स्वस्थं शरीरं हि तावद्धर्मं समाचरेत् ।
अस्वस्थः प्रेरितश्चान्यैर्नाकिञ्चित्कर्तुमर्हति ॥ २,१३.२२ ॥

जीवतोऽपि मृतस्येह न भूतं चौर्ध्वदैहिकम् ।
वायुभूतः क्षुधाविष्टो भ्रमते च दिवानिशम् ॥ २,१३.२३ ॥

कृमिः कीटः पतङ्गो वा जायते म्रियते पुनः ।
असद्गर्भे भवेत्सोऽपि जातः सद्यो विनश्यति ॥ २,१३.२४ ॥

यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ २,१३.२५ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे वृषोत्सर्गदानधर्मपुत्रादिप्रशंसनं नाम त्रयोदशोऽध्यायः/font>

श्रीगरुडमहापुराणम् १४
गरुड उवाच ।
आर्तेन म्रियमाणेन यद्दत्तं तत्फलं वद ।
स्वस्थावस्थेन दत्तेन विधिहीनेन वा विभो ॥ २,१४.१ ॥

श्रीकृष्ण उवाच ।
एका गौः स्वस्थचित्तस्य ह्यातुरस्य च गोशतम् ।
सहस्रं म्रियमाणस्य दत्तं वित्तविवर्जितम् ॥ २,१४.२ ॥

मृतस्यैव पुनर्लक्षं विधिपूतं च तत्समम् ।
तीर्थपात्रसमायोगादेका गौर्लक्षपुण्यदा ॥ २,१४.३ ॥

पात्रे दत्ते खगश्रेष्ठ अहन्यहनि वर्धते ।
दातुर्दानमपापाय ज्ञानिनां च प्रतिग्रहः ॥ २,१४.४ ॥

विषशीतापहो मन्त्रवह्निः किं दोषभाजनम् ।
दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ॥ २,१४.५ ॥

नापात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता ।
अपात्रे जातु गौर्दत्ता दातारं नरकं नयेत् ॥ २,१४.६ ॥

कुलैकविंशतियुतं ग्रहीतारं च पातयेत् ।
देहान्तरं परिप्राप्य स्वहस्तेन कृतं च यत् ॥ २,१४.७ ॥

धनं भूमिगतं यद्वत्स्वहस्तेन निवेशितम् ।
तद्वत्फलमवाप्नोति ह्यहं वच्मि खगेश्वर ॥ २,१४.८ ॥

अपुत्रोऽपि विशेषेण क्रियां चैवान्ध्वदौहिकीम् ।
प्रकुर्यान्मोक्षकामश्च निर्धनश्च विशेषतः ॥ २,१४.९ ॥

स्वल्पेनापि हि वित्तेन स्वयं हस्तेन यत्कृतम् ।
अक्षयं याति तत्सर्वं यथाज्यं च हुताशने ॥ २,१४.१० ॥

एका चैकस्य दातव्या शय्या कन्या पयस्विनी ।
सा विक्रीता वा दहत्यासप्तमं कुलम् ॥ २,१४.११ ॥

तस्मात्सर्वं प्रकुर्वीत चञ्चले जीविते सति ।
गृहीतदानपाथेयः सुखं याति महाध्वनि ॥ २,१४.१२ ॥

अन्यथा क्लिश्यते जन्तुः पाथेयरहितः पथि ।
एवं ज्ञात्वा खगश्रेष्ठ वृषयज्ञं समाचरेत् ॥ २,१४.१३ ॥

अकृत्वा म्रियते यस्तु अपुत्रो नैव मुक्तिभाक् ।
अपुत्रोऽपि हि यः कुर्यात्सुखं याति महापथे ॥ २,१४.१४ ॥

अग्निहोत्राधिभिर्यज्ञैर्दानैश्च विविधैरपि ।
न तां गतिमवाप्नोति वृषोत्सर्गेण या गतिः ॥ २,१४.१५ ॥

यज्ञानां चैव सर्वेषां वृषयज्ञस्तथोत्तमः ।
तस्मात्सर्वप्रयत्नेन वृषयज्ञं समाचरेत् ॥ २,१४.१६ ॥

गरुड उवाच ।
कथयस्व प्रसादेन क्षयाहं चौर्ध्वदैहिकम् ।
कस्मिन्काले तिथौ कस्यां विधिना केन तद्भवेत् ॥ २,१४.१७ ॥

कृत्वा किं फलमाप्नोति एतन्मे वद साम्प्रतम् ।
त्वत्प्रसादेन गोविन्द मुक्ते भवति मानवः ॥ २,१४.१८ ॥

श्रीकृष्ण उवाच ।
कार्तिकादिषु मासेषु याम्यायतगते रवौ ।
शुक्लपक्षे तथा पक्षिन्द्वादश्यादितिथौ शुभे ॥ २,१४.१९ ॥

शुभे लग्ने मुहूर्ते वा शुचौ देशे समाहितः ।
ब्राह्मणं तु समाहूय विधिज्ञं शुभलक्षणम् ॥ २,१४.२० ॥

जपहोमैस्तथा दानैः कुर्याद्देहस्य शोधनम् ।
पुण्येऽभिजित्सुनक्षत्रे ग्रहान्देवान्समर्चयेत् ॥ २,१४.२१ ॥

होमं कुर्याद्यथाशक्ति मन्त्रैश्च विविधैरपि ।
ग्रहाणां स्थापनं कुर्यात्पूर्वं चैव खगेश्वर ॥ २,१४.२२ ॥

मातृणां पूजनं कार्यं वसोर्धारां च पातयेत् ।
वह्निं संस्थाप्य तत्रैव पूर्णं होमं तु कारयेत् ॥ २,१४.२३ ॥

शालग्रामं च संस्थाप्य वैष्णवं श्राद्धमाचरेत् ।
वृषं सम्पूज्य तत्रैव वस्त्रालङ्कारभूषणैः ॥ २,१४.२४ ॥

चतस्रो वत्सतर्यश्च पूर्वं समधिवासयेत् ।
प्रदक्षिणं ततः कुर्याद्धोमान्ते च विसर्जनम् ॥ २,१४.२५ ॥

इमं मन्त्रं समुच्चार्य उत्तराभिमुखः स्थितः ।
धर्म त्वं वृषरूपेण ब्रह्मणा निर्मितः पुरा ॥ २,१४.२६ ॥

तवोत्सर्गप्रभावान्मामुद्धरस्वभवार्णावात् ।

अबिषिच्य शुभैर्मन्त्रैः पावनैर्विधिपूर्वकम् ॥ २,१४.२७ ॥

तनक्रीडन्तिमन्त्रेण वृषोत्सर्गं तु कारयेत् ।
अभिषिञ्चेत्ततो नीलं रुद्रकुम्भो दकेन तु ॥ २,१४.२८ ॥

नाभिमूले समास्थाय तदम्बु मूर्धनि न्यसेत् ।
अन्न (आत्म) श्राद्धं ततः कुर्याद्दद्याद्दानं द्विजोत्तमे ॥ २,१४.२९ ॥

उदकेचैव गन्तव्यं जलं तत्र प्रदापयेत् ।
यदिष्टं जीवतस्त्वासीत्तच्च दद्यात्स्वशक्तितः ॥ २,१४.३० ॥

न्यूनं संपूर्णतां याति वृषोत्सर्गे कृते सति ।
सुतृप्तो दुस्तरे मार्गे मृतो याति न संशयः ॥ २,१४.३१ ॥

यमलोकं न पश्यन्ति सदा दानरता नराः ।
यावन्न दीयते जन्तोः श्राद्धं चैकादशाहिकम् ॥ २,१४.३२ ॥

स्वदत्तं परदत्तं वा नेहामुत्रोपतिष्ठति ।
त्रयोदशा तथा सप्त पञ्च त्रीणी क्रमेण तु ॥ २,१४.३३ ॥

पददानानि कुर्वीत श्रद्धाभक्तिसमन्वितः ।
तिलपात्राणि कुर्वीत सप्त पञ्च यथाक्रमम् ॥ २,१४.३४ ॥

ब्राह्मणान् भोजयेत्पश्चादेकां गां च प्रदापयेत् ।
वृषं हि शन्नोदेवीति वेदोक्तविधिना ततः ॥ २,१४.३५ ॥

चतसृभिर्वत्सतरीभिः परिणयनमाचरेत् ।
वामे चक्रं प्रदातव्यं त्रिशूलं दक्षिणे तथा ॥ २,१४.३६ ॥

मूल्यं दद्याद्वृषस्यापि तं वृषं च विसर्जयेत् ।
एकोद्दिष्टविधानेन स्वाहाकारेण वुद्धिमान् ॥ २,१४.३७ ॥

कुर्यादेकादशाहं च द्वादशाहं च यत्नतः ।
सपिण्डीकरणादर्वाक्कुर्याच्छ्राद्धानि षोडश ॥ २,१४.३८ ॥

ब्राह्मणान् भोजयित्वा तु पददानानि दापयेत् ।
कापोसोपरि संस्थाप्य ताम्रपात्रे तथाच्युतम् ॥ २,१४.३९ ॥

वस्त्रेणाच्छाद्य तत्रस्थमर्घं दद्याच्छुभैः फलैः ।
नावमिक्षुमयीं कृत्वा पट्टसूत्रेण वेष्टयेत् ॥ २,१४.४० ॥

कांस्यपात्रे घृतं स्थाप्य वैतरण्या निमित्ततः ।

नावारोहणं कुर्यात्पूजयेद्गरुडध्वजम् ॥ २,१४.४१ ॥

आत्मवित्तानुसारेण तच्च दानमनन्तकम् ।
भवसागरमग्नानां शोकतापार्तिदुः खिनाम् ॥ २,१४.४२ ॥

धर्मप्लवविहीनानां तारको हि जनार्दनः ।
तिला लोहं हिरण्यं च कार्पासं लवणं तथा ॥ २,१४.४३ ॥

सप्तधान्यं क्षितिर्गावो ह्येकैकं पावनं स्मृतम् ।
तिलपात्राणि कुर्वीत शय्यादानं च दापयेत् ॥ २,१४.४४ ॥

दीनानाथविशिष्टेभ्यो दद्याच्छक्त्या च दक्षिणाम् ।
एवं यः कुरुते तार्क्ष्य पुत्रवानप्यपुत्रवान् ॥ २,१४.४५ ॥

स सिद्धिं समवाप्नोति यथा ते ब्रह्मचारिणः ।
नित्यं नैमित्तिकं कुर्याद्यावज्जीवति मानवः ॥ २,१४.४६ ॥

यः कश्चित्क्रियते धर्मस्तत्फलं चाक्षयं भवेत् ।
तीर्थयात्राव्रतादीनां श्राद्धं संवत्सरस्य हि ॥ २,१४.४७ ॥

देवतानां गुरूणां च मातापित्रोस्तथैव च ।
पुण्यं देयं प्रयत्नेन प्रत्यहं वर्धते खग ॥ २,१४.४८ ॥

अस्मिन्यज्ञेः हियः कश्चिद्भूरिदानं प्रयच्छति ।
तत्तस्य चाक्षयं सर्वं वेदिकायां यथा किल ॥ २,१४.४९ ॥

यथा पूज्यतमा लोके यतयो ब्रह्मचारिणः ।
तथैव प्रतिपूज्यन्ते लोके सर्वे च नित्यशः ॥ २,१४.५० ॥

वरदोऽहं सदा तस्य चतुर्वक्त्रस्तथा हरः ।
ते यान्ति परमांल्लोकानिति सत्यं वचो मम ॥ २,१४.५१ ॥

उत्सृष्टो वृषभो यत्र पिबत्यपो जलाशये ।
शृङ्गेणालिखते वापि भूमिं नित्यं प्रहर्षितः ॥ २,१४.५२ ॥

पितृणामन्नपानं च प्रभूतमुपतिष्ठति ।
पौर्णमास्याममायां वा तिलपात्राणि दापयेत् ॥ २,१४.५३ ॥

संक्रान्तीनां सहस्राणि सूर्यपर्वशतानि च ।
दत्त्वा यत्फलमाप्नोति तद्वै नीलविसर्जने ॥ २,१४.५४ ॥

वत्सतर्यः प्रदातव्या ब्राह्मणेभ्यः पदानि च ।

तिलपात्राणि देयानि शिवभक्तद्विजेषु च ॥ २,१४.७५ ॥

उमामहेश्वरं चैकं परिधाप्य प्रदापयेत् ।
अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ॥ २,१४.७६ ॥

ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ।
प्रेतत्वान्मोक्षमिच्छन्तो ये करिष्यन्ति सत्क्रियाम् ॥ २,१४.७७ ॥

यास्यन्ति ते परांल्लोकानिति सत्यं वचो मम ।
एतत्ते सर्वमाख्यातं मया चैवोर्ध्वदैहिकम् ॥ २,१४.७८ ॥

यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।
श्रुत्वा महात्म्यमतुलं गरुडो हर्षमागतः ।
मानुषाणां हितार्थाय पुनः प्रपच्छकेशवम् ॥ २,१४.७९ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे गोदानवृषोत्सर्गदशदानभूरिदानादिनिरूपणं नाम चतुर्दशोऽध्यायः

श्रीगरुडमहापुराणम् १५
गरुड उवाच ।
बगवन्ब्रूहि मे सर्वं यमलोकस्य निर्णयम् ।
जन्तोः प्रयाणमारभ्य माहात्म्यं वर्त्मविस्तरम् ॥ २,१५.१ ॥

श्रीभगवानुवाच ।
शृणु तार्क्ष्य प्रवक्ष्यामि यममार्गस्य निर्णयम् ।
प्रयाणकानि सर्वाणि नगराणि च षोडश ॥ २,१५.२ ॥

षाडशीतिसहस्राणि योजनानां प्रमाणतः ।
यमलोकस्य चोर्ध्वं वै अन्तरा मानुषस्य च ॥ २,१५.३ ॥

कुकृतं दुष्कृतं वापि भुक्त्वा लोके यथार्जितम् ।
कर्मयोगाद्यदा कश्चिद्व्याधिरुत्पद्यते खग ॥ २,१५.४ ॥

निमित्तमात्रं सर्वेषां कृतकर्मानुसारतः ।
यस्य यो विहितो मृत्युः स तं ध्रुवमवाप्नुयात् ॥ २,१५.५ ॥

कर्मयोगाद्यदा देही मुञ्चत्यत्र निजं वपुः ।
तदा भूमिगतं कुर्याद्गोमयेनोपलिप्य च ॥ २,१५.६ ॥

तिलान्दर्भान्विकीर्याथ मुखे स्वर्णं विनिः क्षिपेत् ।
तुलसींसन्निधौ कृत्वा शालग्रामशिलां तथा ॥ २,१५.७ ॥

सेतु (एवं) सामादिसूक्तैस्तु मरणं मुक्तिदायकम् ।
शलाकास्वर्णविक्षपैः प्रतप्राणिगृहेषुच ॥ २,१५.८ ॥

एका वक्त्रे तु दातव्या घ्राणयुग्मे तथा पुनः ।
अक्ष्णोश्च कर्णयोश्चैव द्वेद्वे देये यथाक्रमम् ॥ २,१५.९ ॥

अथ लिङ्गे तथा चैका त्वेकां ब्रह्माण्डकेक्षिपेत् ।
करयुग्मे च कण्ठे च तुलसीं च प्रदापयेत् ॥ २,१५.१० ॥

वस्त्रयुग्मं च दातव्यं कङ्कुमैश्चाक्षतैर्यजेत् ।
पुष्पमालायुतं कुर्यादन्यद्वारेण सन्नयेत् ॥ २,१५.११ ॥

पुत्रस्तु बान्धवैः सार्धं विप्रस्तु पुरवासिभिः ।
पितुः प्रेतं स्वयं पुत्रः स्कन्धमारोप्य बान्धवैः ॥ २,१५.१२ ॥

गत्वा श्मशानदेशे तु प्राङ्मुखश्चोत्तरामुखम् ।
अदग्धपूर्वा या भूमिश्चितां तत्रैव कारयेत् ॥ २,१५.१३ ॥

श्रीखण्डतुलसीकाष्ठसमित्पालाशसंभृताम् ।
विकलेन्द्रियसङ्घाते चैतन्ये जडतां गते ॥ २,१५.१४ ॥

प्रचलन्ति ततः प्राणा याम्यैर्निकटवर्तिभिः ।
एकीभूतं जगत्पश्येद्दैवी दृष्टिः प्रजायते ॥ २,१५.१५ ॥

बीभत्सं दारुणं रूपं प्रणैः कण्ठं समाश्रितैः ।
फेनमुद्गिरते कोपि मुखं लालाकुलं भवेत् ॥ २,१५.१६ ॥

दुरात्मानश्च ताड्यन्ते किङ्करैः पाशबन्धनैः ।
सुखेन कृतिनस्तत्र नीयन्ते नाकनायकैः ॥ २,१५.१७ ॥

दुः खेन पापिनो यान्ति यममार्गे च दुर्गमे ।
यमश्चतुर्भुजो भूत्वा शङ्खचक्रगदादिभृत् ॥ २,१५.१८ ॥

पुण्यकर्मरतान्सम्यक्शुभान्मित्रवदाचरेत् ।
आहूय पापिनः सर्वान्यमो दण्डेन रज्जयेत् ॥ २,१५.१९ ॥

प्रलयाम्बुदनिर्घोषस्त्वञ्जनाद्रिसमप्रभः ।
महिषस्थो दुराराध्यो विद्युत्तेजः समद्युतिः ॥ २,१५.२० ॥

योजनत्रयविस्तारदेहो रौद्रोऽतिभीषणः ।
लोहदण्डधरो भीमः पाशपाणिर्दुराकृतिः ॥ २,१५.२१ ॥

वक्रनेत्रोऽतिभयदो दर्शनं याति पापिनाम् ।
अङ्गुष्ठमात्रः पुरुषो हाहा कुर्वन् कलेवरात् ॥ २,१५.२२ ॥

तदैव नीयते दूतैर्याम्यैर्वीक्षन्स्वकं गृहम् ।
निर्विचेष्टं शरीरं तु प्राणैर्मुक्तं जुगुप्सितम् ॥ २,१५.२३ ॥

अस्पृश्यं जायते तूर्णं दुर्गन्धं सर्वनिन्दितम् ।
त्रिधावस्था हि देहस्य कृमिविड्भस्मसंज्ञिता ॥ २,१५.२४ ॥

को गर्वः क्रियते तार्क्ष्य क्षणविध्वंसिभिर्नरैः ।
दानं वित्तादृता वाचः कीर्तिधर्मौ तथायुषः ॥ २,१५.२५ ॥

परोपकरणं कायादसतः सारमुद्धृतम् ।
तस्यैवं नीयमानस्य दूताः सन्तर्जयन्ति हि ॥ २,१५.२६ ॥

दर्शयन्तो भयं तीव्रं नरकाय पुनः पुनः ।
शीघ्रं प्रचल दुष्टात्मन् गतोऽसित्वं यमालये ॥ २,१५.२७ ॥

कुंभीपाकादिनरकांस्त्वां नेष्यामश्च मा चिरम् ।
एवं वाचस्तदा शृण्वन्बन्धूनां रुदितं तथा ॥ २,१५.२८ ॥

उच्चैर्हाहेति विलपन्नीयते यमकिङ्करैः ।
स्थाने श्राद्धं प्रकुर्वीत तथा चेकादशेऽहनि ॥ २,१५.२९ ॥

मृस्योत्क्रान्तिसमयात्षट्पिण्डान्क्रमशो ददेत् ।
मृतस्थाने तथा द्वारे चत्वरे ताक्ष्र्य कारणात् ॥ २,१५.३० ॥

विश्रामे काष्ठचयने तथा सञ्चयने च षट् ।
शृणु तत्कारणं ताक्ष्र्य षट्पिण्डपरिकल्पने ॥ २,१५.३१ ॥

मृतस्थाने शवो नाम तेन नाम्ना प्रदीयते ।
तेन दत्तेन तृप्यन्ति गृहवास्त्वधिदेवताः ॥ २,१५.३२ ॥

तेन भूमिर्भवेत्तुष्टातदधिष्ठातृदेवता ।
द्वारे तु पिण्डं देयं च पान्थमित्यभिधाय तु ॥ २,१५.३३ ॥

दत्तेन तेन प्रीणन्ति द्वारस्था गृहदेवताः ।
चत्वरे खेचरो नाम तमुद्दिश्य प्रदापयेत् ॥ २,१५.३४ ॥

न चोपघातं कुर्वन्ति भूताद्या देवयोनयः ।
विश्रामे भूतसंज्ञोऽयं तेन तत्र प्रदापयेत् ॥ २,१५.३५ ॥

पिशाचा राक्षसा यक्षा ये चान्ये दिशि वासिनः ।
तस्य होतव्यदेहस्यनैवायोग्यत्वकारकाः ॥ २,१५.३६ ॥

चितापिण्ढप्रभृतितः प्रेतत्वमुपजायते ।
चितायां साधकं नाम वदन्त्येके खगेश्वर ॥ २,१५.३७ ॥

केचित्तं प्रेतमेवाहुर्यथा कल्पविदो बुधाः ।
तदादि तत्रतत्रापि प्रेतनाम्ना प्रदीयते ॥ २,१५.३८ ॥

इत्येवं पञ्चभिः पिण्डैः शवस्याहुतियोग्यता ।
अन्यथा चोपघाताय पूर्वोक्तास्ते भवन्ति हि ॥ २,१५.३९ ॥

उत्क्रामे प्रथमं पिण्डं तथा चार्धपयेपि च ।
चितायां तु तृतीयं स्यात्त्रयः पिण्डाश्च कल्पिताः ॥ २,१५.४० ॥

विधाता प्रथमे पिण्डे द्वितीये गरुडध्वजः ।
तृतीये यमदूताश्च प्रयोगः परिकीर्तितः ॥ २,१५.४१ ॥

दत्ते तृतीये पिण्डेऽस्मिन्देहदोषैः प्रमुच्यते ।
आधारभूतजीवश्चज्वलनैर्ज्वालयेच्चिताम् ॥ २,१५.४२ ॥

संमृज्य चोपलिप्याथ उल्लिख्योद्धृत्य वेदिकाम् ।
अभ्युक्ष्योपसमाधाय वह्निं तत्रः विधानतः ॥ २,१५.४३ ॥

पुष्पाक्षतैश्च सम्पूज्य देवं क्रव्यादसंज्ञकम् ।
त्वं भूतकृज्जगद्योने त्वं लोकपरिपालकः ॥ २,१५.४४ ॥

उपसंहारकस्तस्मादेनं स्वर्गं मृतं नय ।
इति क्रव्यादमभ्यर्च्य शरीराहुतिमाचरेत् ॥ २,१५.४५ ॥

अर्धदग्धे तथा देहे दद्यादाज्याहुतिं ततः ।
लोमभ्यः स्वोतिवाक्येन कुर्याद्धोमं यथाविधि ॥ २,१५.४६ ॥

चितामारोप्य तं प्रेतं हुनेदाज्याहुतिं ततः ।
यमाय चान्तकायेति मृत्यवे ब्रह्मणे तथा ॥ २,१५.४७ ॥

जातवेदोमुके देया एका प्रेतमुखे तथा ।
ऊर्ध्वं तु ज्वालयेद्वह्निं पूर्वभागे चितां पुनः ॥ २,१५.४८ ॥

अस्मात्त्वमधिजातोसि त्वदयं जायतां पुनः ।
असौ स्वर्गाय लोकाय स्वाहा ज्वलति पावकः ॥ २,१५.४९ ॥

एवमाज्याहुतिं दत्त्वा तिलमिश्रां समन्त्रकाम् ।
ततो दाहः प्रकर्तव्यः पुत्रेण किल निश्चितम् ॥ २,१५.५० ॥

रोदितव्यं ततो गाढमेवं तस्य सुखं भवेत् ।
दाहस्यानन्तरं तत्र कृत्वा सञ्चयनक्रियाम् ॥ २,१५.५१ ॥

प्रेतपिण्डं प्रदद्याच्च दाहार्तिशमनं खग ।
तावद्भूताः प्रतीक्षन्ते तं प्रेतं बान्धवार्थिनम् ॥ २,१५.५२ ॥

दाहस्यानन्तरं कार्यं पुत्रैः स्नानं सचैलकम् ।
तिलोदकं ततो दद्यान्नामगोत्रेण तिष्ठतु ॥ २,१५.५३ ॥

ततो जनपदैः सर्वैर्दातव्या करतालिका ।
विष्णुर्विष्णुरिति ब्रूयाद्गुणैः प्रेतमुदीरयेत् ॥ २,१५.५४ ॥

जनाः सर्वे समास्तस्य गृहमागत्य सर्वशः ।
द्वारस्य दक्षिणे भागे गोमयं गौरसर्षपान् ॥ २,१५.५५ ॥

निधाय वरुणं देवमन्तर्धाय स्ववेश्मनि ।
भक्षयेन्निम्बपत्राणि घृतं प्राश्य गृहं व्रजेत् ॥ २,१५.५६ ॥

केचिद्दुग्धेन सिञ्चन्ति चितास्थानं खगेश्वर ।
अश्रुपातं न कुर्वीत दद्यादस्मै जलाञ्जलीन् ॥ २,१५.५७ ॥

श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥ २,१५.५८ ॥

दुग्धं च मृन्मये पात्रे तोयं दद्याद्दिनत्रयम् ।
सूर्ये चास्तं गते तार्क्ष्य वलभ्यां चत्वरेऽपि वा ॥ २,१५.५९ ॥

बद्धः संमूढहृदयो देहमिच्छन्कृतानुगः ।
श्मशानं चत्वरं गेहं वीक्षन्याम्यैः स नीयते ॥ २,१५.६० ॥

गर्ते पिण्डा दशाहं च दातव्याश्च दिनेदिने ।
जलाञ्जलीः प्रदातव्याः प्रेतमुद्दिश्य नित्यशः ॥ २,१५.६१ ॥

तावद्वृद्धिश्च कर्तव्या यावत्पिण्डं दशाहिकम् ।
पुत्रेण हि क्रिया कार्या भार्यया तदभावतः ॥ २,१५.६२ ॥

तदभावे च शिष्येण तदभावे सहोदरः ।
श्मशाने चान्यतीर्थे वा जलं पिण्डं च दापयेत् ॥ २,१५.६३ ॥

ओदनानि च सक्तूंश्च शाकमूलफलादिना ।
प्रथमेऽहनि यद्दद्यात्तद्दद्यादुत्तरेऽहनि ॥ २,१५.६४ ॥

दिनानि दश पिण्डांश्च कुर्वन्त्यत्र सुतादयः ।
प्रत्यहं ते विभज्यन्ते चतुर्भागाः खगेश्वर ॥ २,१५.६५ ॥

भागद्वयं तु देहार्थं प्रीतिदं भूतपञ्चके ।
तृतीयं यमदूतानां चतुर्थं चोपजीव्यति ॥ २,१५.६६ ॥

अहोरात्रैस्तु नवभिः प्रेतो निष्पत्तिमाप्नुयात् ।
जन्तोर्निष्पन्नदेहस्य दशमे वलवत्क्षुधा ॥ २,१५.६७ ॥

न विधिर्नैव मन्त्रश्च न स्वधावाहनाशिषः ।
नाम गोत्रं समुच्चार्य यद्दत्तं तद्दशाहिकम् ॥ २,१५.६८ ॥

दग्धे देहे पुनर्देहमेवमुत्पद्यते खग ।
प्रथमेऽहनि यः पिण्डस्तेन मूर्धा प्रजायते ॥ २,१५.६९ ॥

ग्रीवा स्कन्धौ द्वितीये च तृतीये हृदयं भवेत् ।
चतुर्थेन भवेत्पृष्ठं पञ्चमे नाभिरेव च ॥ २,१५.७० ॥

षट्सप्तमे कटी गुह्यमूरू चाप्यष्टमे तथा ।
तालू पादौ च नवमे दशमेऽह्नि क्षुधा भवेत् ॥ २,१५.७१ ॥

देहं प्राप्तः क्षुधाविष्टो गृहे द्वारे च तिष्ठति ।
दशमेऽहनि यः पिण्डस्तं दद्यादामिषेण तु ॥ २,१५.७२ ॥

यतो देहे समुत्पन्ने प्रेतोऽतीव क्षुधान्वितः ।
अतस्त्वामिषबाह्येन क्षुधा तस्य न नश्यति ॥ २,१५.७३ ॥

एकादशे द्वादशाहे प्रेतो भुङ्क्ते दिनद्वयम् ।
योषितः पुरुषास्यापि प्रेतशब्दं समुच्चरेत् ॥ २,१५.७४ ॥

दीपमन्नं जलं वस्त्रं यत्किञ्चिद्वस्तु दीयते ।
प्रेतशब्देन तद्देयं मृस्यानन्ददायकम् ॥ २,१५.७५ ॥

त्रयोदशेऽह्नि स प्रेतो नीयते च महापथे ।
पिण्डजं देहमाश्रित्य दिवा नक्तं बुभुक्षितः ॥ २,१५.७६ ॥

शीतोष्णशङ्कुक्रव्यादवह्निमार्गस्तु पापिनाम् ।
क्षुधा तृष्णात्मिका चैव सव्व सौम्यं कृतात्मनाम् ॥ २,१५.७७ ॥

मार्गे चैतानि दुः खानि असिपत्रवनान्विते ।
क्षुत्पिपासार्दितो नित्यं यमदूतैः प्रपीडितः ॥ २,१५.७८ ॥

अहन्यहनि वै प्रेतो योजनानां शतद्वयम् ।
चत्वारिंशत्तथा सप्त अहोरात्रेण गच्छति ॥ २,१५.७९ ॥

गृहीतो यमपाशैश्च हाहेति रुदिते तु सः ।
स्वगृहं तु परित्यज्य याम्यं पुरमनुव्रजेत् ॥ २,१५.८० ॥

क्रमेण याति स प्रेतः पुरं याम्यं शुभाशुभम् ।
अतीत्य तानितान्येव मार्गे पुरवराणि च ॥ २,१५.८१ ॥

याम्यं सौरिपुरं नगेन्द्रभवनं गन्धर्वशैलागमौ ।
क्रोञ्चं क्रूरपुरं विचित्रभवनं बह्वापदं दुः खदम् ॥ २,१५.८२ ॥

नानाक्रन्दपुरं सुतप्रभवनं रौद्रं पयोवर्षणं शीताढ्यं बहुधर्मभीतभवनं याम्यं पुरं चाग्रतः ॥ २,१५.८३ ॥

त्रयोदशेऽह्नि स प्रेतो गृहीतो यमकिङ्करैः ।

तस्मिन्मार्गे ब्रजत्येको गृहीत इव मर्कटः ॥ २,१५.८४ ॥

तथव स व्रजन्मार्गे पुत्रपुत्रेति च ब्रुवन् ।
हाहेति क्रन्दते नित्यं कीदृशं तु मया कृतम् ॥ २,१५.८५ ॥

मानुष्यं लभ्यते कस्मादिति ब्रूते प्रसर्पति ।
महता पुण्ययोगेन मानुष्यं जन्म लभ्यते ॥ २,१५.८६ ॥

न तत्प्राप्य प्रदत्तं हि याचकेभ्यः स्वकं धनम् ।
पराधीनं तदभवदिति ब्रूते (रौति) सगद्गदः ॥ २,१५.८७ ॥

किङ्करैः पीड्यतेऽत्यर्थं स्मरते पूर्वदैहिकम् ॥ २,१५.८८ ॥

सुखस्य दुः खस्य न कोपि दाता परो ददातीति कुबुद्धिरेषा ।
पुरा कृतं कर्म सदैव भुज्यते देहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ २,१५.८९ ॥

मया न दत्तं न हुतं हुताशने तपो न तप्तं हिमशैलगह्वरे ।
न सेवितं गाङ्गमहो महाजलं देहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ २,१५.९० ॥

न नित्यदानं न गावाह्निकं कृतं न वेददानं न च शास्त्रपुस्तकम् ।
पुरा नदृष्टं न च सेवितोऽध्वा देहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ २,१५.९१ ॥

जलाशयो नैव कृतो हि निर्जले मनुष्यहेतोः पशुपक्षिहेतवे ।
गोतृप्तिहेतोर्न कृतं हि गोचरं देहिन्क्वचिन्नस्तर यत्त्वया कृतम् ॥ २,१५.९२ ॥

मया न भुक्तं पतिसङ्गसौख्यं वह्निप्रवेशो न कृतो मृते सति ।
तस्मिन्मृते तद्व्रतपालनं वा देहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ २,१५.९३ ॥

मासोपवासैर्न विशोषितं वपुश्चान्द्रायणैर्वा नियमैश्च संहतैः ।
नारीशरीरं बहुदुः खभाजनं लब्धं मया पूर्वकृतैर्विकर्मभिः ॥ २,१५.९४ ॥

उक्तानि वाच्यानि मया नराणामतः शृणुष्वावहितोऽपि पक्षिन् ।
स्त्रीणां शरीरं प्रतिलभ्य देही ब्रवीति कर्माणि कृतानि पूर्वम् ॥ २,१५.९५ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मदृप्रेतकल्पे श्रीकृष्णगरुडसंवादे यमलोकविस्तारतन्माहात्म्यतद्यानिरूपणं नाम पञ्चदशोऽध्यायः

श्रीगरुडमहापुराणम् १६
श्रीभगवानुवाच ।
एवं विलपतस्तस्य प्रेतस्यैवं खगेश्वर ।
क्रन्दमानस्य नितरां पीडितस्य च किङ्करैः ॥ २,१६.१ ॥

सप्तदश दिनान्येको वायुमार्गे विकृष्यते ।
अष्टादशे त्वहोरात्रे पूर्वं याम्यपुरं व्रजेत् ॥ २,१६.२ ॥

तस्मिन्पुरवरे रम्ये प्रेतानां च गणो महान् ।
पुष्पभद्रा नदी तत्रन्यग्रोधः प्रियदर्शनः ॥ २,१६.३ ॥

पुरे स तत्र विश्रामं प्राप्यते यमकिङ्करैः ।
जायापुत्रादिकं सौख्यं स्मरेत्तत्र सुदुः खितः ॥ २,१६.४ ॥

रुदते करुणैर्वाक्यै स्तृषार्तः श्रमपीडितः ।
स्वधनं स्वकलत्राणि गृहं पुत्राः सुखानि च ॥ २,१६.५ ॥

भृत्यमित्राणि चान्यच्च सर्वं शोचति वै तदा ।
क्षुधार्तस्य पुरे तस्मिन्किङ्करैस्तस्य चोच्यते ॥ २,१६.६ ॥

किङ्करा ऊचुः ।
क्व धनं क्व सुता जाया क्व गृहं क्व त्वमीदृशः ।
स्वकर्मोपार्जितं भुङ्क्ष्व चिरं गच्छ महापथे ॥ २,१६.७ ॥

जानासि शंबलवशं बलमध्वगानां नो शंबलः प्रयतते परलोकपान्थ ।
गन्तव्यमस्ति तव निश्चितमेव तेन मार्गेण यत्र भवतः क्रयविक्रयौ न ॥ २,१६.८ ॥

यमदूतोदितं वाक्यं पक्षिन्नैवं त्वया श्रुतम् ।
एवमुक्तस्ततः सर्वैर्हन्यमानः स मुद्गरैः ॥ २,१६.९ ॥

अत्र दत्तं सुतैः पात्रे (त्रैः) स्नेहाद्वा कृपयाथ वा ।
मासिकं पिण्डमश्नाति ततः सौरिपुरं व्रजेत् ॥ २,१६.१० ॥

तत्र नाम्ना तु राजा वै जङ्गमः कालरूपधृक् ।
तं दृष्ट्वा भयभीतस्तु विश्रामे कुरुते मतिम् ॥ २,१६.११ ॥

उदकं चान्नसंयुक्तं भुङ्क्ते तस्मिन्पुरे गतः ।
त्रैपक्षिके तु यद्दत्तं तत्पुरं स व्यतिक्रमेत् ॥ २,१६.१२ ॥

नगेन्द्रनगरे रम्ये प्रेतो याति दिवानिशम् ।
गच्छन्वनानि रौद्राणि दृष्ट्वा क्रन्दति तत्र सः ॥ २,१६.१३ ॥

भीषणैः क्लिश्यमानस्तु रुदते च पुनः पुनः ।
मासद्वयावसाने तु तत्पुरं सोऽतिगच्छति ॥ २,१६.१४ ॥

भुक्त्वा चान्नं जलं पीत्वा यद्दत्तं वान्धवैरिह ।
क्लिश्यमानस्ततः पाशैर्नीयते यमकिङ्करैः ॥ २,१६.१५ ॥

तृतीये मासि सम्प्राप्ते गन्धर्वनगरं शुभम् ।
तृतीयं मासिकं भुक्त्वा तत्र गच्छत्यसौ पुरः ॥ २,१६.१६ ॥

शैलागमं चतुर्थे स मासे प्राप्नोति वै पुरम् ।
पाषाणास्तत्र वर्षन्ति प्रेतस्योपरि संस्थिताः ॥ २,१६.१७ ॥

चतुर्थमासिके श्राद्धं भुक्ते तत्र सुखी भवेत् ॥ २,१६.१८ ॥

ततो याति पुरं प्रेतः क्रूरं मासे तु पञ्चमे ।
इह दत्तं सुतैर्भुङ्क्ते प्रेतो वै तत्पुरे स्थितः ।
षष्ठे मासि ततः प्रेतो याति क्रौञ्चाबिधं पुरम् ॥ २,१६.१९ ॥

तत्र दत्तेन पिण्डेन श्राद्धेनाप्यायितः पुरे ।
मुहूर्तार्धं तु विश्रम्य कम्पमानः सुदुः खितः ॥ २,१६.२० ॥

तत्पुरं स व्यतिक्रम्य तर्जितो यमकिङ्करैः ।
प्रयाति चित्रनगरं विचित्रो यत्र पार्थिवः ॥ २,१६.२१ ॥

यमस्यैवानुजः सौरिर्यत्र राज्यं प्रशास्ति हि ।
मासैस्तु पञ्चभिः सार्धैरूपषाण्मासिकं भवेत् ॥ २,१६.२२ ॥

ऊनषाण्मासिकं तत्र भुङ्क्ते याम्यसमाहतः ।
मार्गे पुनः पुनस्तस्य बुभुक्षा पीडयत्यलम् ॥ २,१६.२३ ॥

सन्तिष्ठते मृते कोऽपि मदीयः सुतबान्धवः ।
सौख्यं यो मे जनयति पततः शोकसागरे ॥ २,१६.२४ ॥

एवं मार्गे विलपति वार्यमाणश्च किङ्करैः ।
आयान्ति संमुखास्तत्र कैवर्तास्तु सहस्रशः ॥ २,१६.२५ ॥

वयं ते तर्तुकामाय महावैतरणीं नदीम् ।
शतयोजनविस्तीर्णां पूयशोणितसंकुलाम् ॥ २,१६.२६ ॥

नानाझषसमाकीर्णां नानापक्षिगणैर्वृताम् ।
वयं त्वां तारयिष्यामः सुखेनेति वदन्ति ते ॥ २,१६.२७ ॥

अन्तरं देहि भो पान्थ बहुला चेद्रुचिस्तव ।
तेन तत्र प्रदत्ता गौस्तया नावा प्रसर्पति ।
मनुजानां हितं दानमन्ते वैतरणी स्मृता ॥ २,१६.२८ ॥

परापापं दहेत्सर्वं विष्णुलोकं च सा नयेत् ।
न दत्ता चेत्खगश्रेष्ठ तां समेत्य समज्जति ॥ २,१६.२९ ॥

स्वस्थावस्थे शरीरेऽत्र वैतरण्या व्रतं चरेत् ।
देया च विदुषे धेनुस्तां नदीं तर्तुमिच्छता ॥ २,१६.३० ॥

अवदन्मज्जमानस्तु निन्दत्यात्मानमात्मना ।
पाथेयार्थं मया किञ्चिन्न प्रदत्तं द्विजायच ॥ २,१६.३१ ॥

न दत्तं न हुतं जप्तं न स्नातं न कृतं स्तुतम् ।
यादृशं कर्म चरितं मूढ भुङ्क्ष्वेति तादृशम् ॥ २,१६.३२ ॥

तदैव हृदि संमूढस्ताडितो भाषते भटैः ।
वैतरण्याः परतटे भुङ्क्ते दत्तं घटादिकम् ॥ २,१६.३३ ॥

ऊनषाण्मासिकश्राद्धं भुक्त्वा गच्छति चाग्रतः ।
ताक्ष्र्य तत्र विशेषेण भोजयीत द्विजाञ्छुभान् ॥ २,१६.३४ ॥

चत्वारिंशत्तथा सप्त योजनानि शतद्वयम् ।
प्रयाति प्रत्यहं ताक्ष्र्य अहोरात्रेण कर्शितः ॥ २,१६.३५ ॥

सप्तमे मासि सम्प्राप्ते पुरं बह्वापदं व्रजेत् ।
तत्र भुक्त्व प्रदत्तं यच्छ्राद्धं सप्तममासिकम् ॥ २,१६.३६ ॥

अष्टमे मासि सम्प्राप्ते नानाक्रन्दपुरं व्रजेत् ।
नानाक्रन्दगणान्दृष्ट्वा क्रन्दमानान्सुदारुणम् ॥ २,१६.३७ ॥

स्वयं च शून्यहृदयः समाक्रन्दति दुः खितः ।
तन्मासिकं च यच्छ्राद्धं भुक्त्वा तत्र सुखी भवेत् ॥ २,१६.३८ ॥

विहाय तत्पुरं प्रेतो याति तप्तपुरं प्रति ।
सुतप्तनगरं प्राप्य नवमे मासि सोऽश्नुते ।
द्विजभोज्यं पिण्डदानं कृतं श्राद्धं सुतेन यत् ॥ २,१६.३९ ॥

मासि वै दशमे प्राप्ते रौद्रं स्थानं स गच्छति ।
दशमे मासि यद्दत्तं तद्भुक्त्वा च प्रयाति सः ॥ २,१६.४० ॥

दशैकमासिकं भुक्त्वा पयोवर्षणमृच्छति ।

मेघास्तत्र प्रवर्षन्ति प्रेतानां दुः खदायकाः ॥ २,१६.४१ ॥

(ततः प्रचलितो पोतो बहुर्घमतृषार्दितः) ।
द्वादशे मासि यच्छ्राद्धं तत्र भुङ्क्ते सुदुः शितः ॥ २,१६.४२ ॥

किञ्चिन्न्यूने ततो वर्षे सार्धे चैकादशेऽथ वा ।
याति शीतपुरं तत्र शीतं यत्रातिदुः खदम् ॥ २,१६.४३ ॥

शीतार्तः क्षुधितः सोऽथ वीक्षते हि दिशो दश ।
तिष्ठेत्तु बान्धवः कोऽपि यो मे दुःखं व्यपोहति ॥ २,१६.४४ ॥

किङ्करास्तं वदन्त्येवं क्व ते पुण्यं हि तादृशम् ।
श्रुत्वा तेषां तु तद्वाक्यं हा दैव इति भाषते ॥ २,१६.४५ ॥

दैवं हि पूर्वसुकृतं तन्मया नैव सञ्चितम् ।
एवं सञ्चिन्त्य बहुशो धैर्यमालम्बते पुनः ॥ २,१६.४६ ॥

चत्वारिंशद्योजनानि चतुर्युक्तानि वै ततः ।
धर्मराजपुरं रम्यं गन्धर्वाप्सराकुलम् ॥ २,१६.४७ ॥

चतुरशीतिलक्षैश्च मूर्तामूर्तैरधिष्ठितम् ।
त्रयोदश प्रतीहारा धर्मराजपुरे स्थिताः ॥ २,१६.४८ ॥

शुभाशुभं तु यत्कर्म ते विचार्य पुनः पुनः ।
श्रवणा ब्रह्मणः पुत्रा मनुष्याणां च चेष्टितम् ।
कथयन्ति तदा लोके पूजिताः पूजिताः स्वयम् ॥ २,१६.४९ ॥

नरैस्तुष्टैश्च पुष्टैश्च यत्प्रोक्तं च कृतं च यत् ।
सर्वमावेदयन्ति स्म चित्रगुप्ते यमे च तत् ॥ २,१६.५० ॥

दूराच्छ्रवणविज्ञाना दूराद्दर्शनगोचराः ।
एवञ्चेष्टास्तु ते ह्यष्टौ स्वर्भूपातालचारिणः ॥ २,१६.५१ ॥

तेषां पत्न्यस्तथै वोग्रा श्रवण्यः पृथगाह्वयाः ।
एवं तेषां शक्तिरस्ति यत्र्यै मर्त्याधिकारिणः ॥ २,१६.५२ ॥

व्रतैर्दानैस्तवैर्यश्च पूजयेदिह मानवः ।
जायन्ते तस्य ते सौम्याः सुखमृत्युप्रदायिनः ॥ २,१६.५३ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे प्रेतयात्रादिनिरूपणं नाम षोडशोऽध्यायः

गरुड उवाच ।

एको मे संशयो देव हृदये सम्प्रबाधते ।

श्रमणाः कस्य पुत्राश्च कथं यमपुरे स्थिताः ॥ २,१७.१ ॥

मानुषैश्च कृतं कर्म कस्माज्जानन्ति ते प्रभो ।

कथं शृण्वन्ति ते सर्वे कस्माज्ज्ञानं समागतम् ॥ २,१७.२ ॥

कुत्र भुञ्जन्ति देवेश क्रथयस्व प्रसादतः ।

पक्षिराजवचः श्रुत्वा भगवान्वाक्यमब्रवीत् ॥ २,१७.३ ॥

श्रीकृष्ण उवाच ।

शृणुष्व वचनं सत्यं सर्वेषां सौख्यदायकम् ।

तदहं कथयिष्यामि श्रवणानां विचेष्टितम् ॥ २,१७.४ ॥

एकीभूतं यदा सर्वं जगत्स्थावरजङ्गमम् ।

क्षीरोदसागरे पूर्वं मयि सुप्ते जगत्पतौ ॥ २,१७.५ ॥

नाभिस्थोजस्तपस्तेपे वर्षाणि सुबहून्यपि ।

एकीभूतं जगत्सृष्टं भूतग्रामचतुर्विधम् ॥ २,१७.६ ॥

ब्रह्मणा निर्मितं पूर्वं विष्णुना पालितं तदा ।

रुद्रः संहारमूर्तिश्च निर्मितो ब्रह्मणा ततः ॥ २,१७.७ ॥

वायुः सर्वगतः सृष्टः सूर्यस्तेजोभिवृद्धिमान् ।

धर्मराजस्ततः सृष्टश्चित्रगुप्तेन संयुत) ॥ २,१७.८ ॥

सृष्ट्वैतदादिकं सर्वं तपस्तेपे तु पद्मजः ।

गतानि बहुवर्षाणि ब्रह्मणो नाभिपङ्कजे ॥ २,१७.९ ॥

योयो हि निर्मितः पूर्वं तत्तत्कर्म समाचरेत् ।

कस्मिंश्चित्समये तत्र ब्रह्मा लोकसमन्वितः ॥ २,१७.१० ॥

रुद्रो विष्णुस्तथा धर्मः शासयन्ति वसुन्धराम् ।

न जानीमो वयं किञ्चिल्लोककृत्यमिहोच्यताम् ॥ २,१७.११ ॥

इति चिन्तापराः सर्वे देवा विममृशुस्तदा ।

संचिन्त्य ब्रह्मणो मन्त्रं विबुधैः प्रेरितस्तदा ॥ २,१७.१२ ॥

गृहीत्वा पुष्पपत्राणि सोसृजद्द्वादशात्मजान् ।
तेजोराशीन्विशालाक्षान्ब्रह्मणो वचनात्तु ते ॥ २,१७.१३ ॥
योयं वदति लोकेस्मिञ्छुभं वा यदि वाशुभम् ।
प्रापयन्ति ततः शीघ्रं ब्रह्मणः कर्णगोचरम् ॥ २,१७.१४ ॥
दूराच्छ्रवणविज्ञानं दूराद्दर्शनगोचरम् ।
सर्वे शृण्वन्ति यत्पक्षिंस्तेनैव श्रवणा मताः ॥ २,१७.१५ ॥
स्थित्वा चैव तथाकाशे जन्तूनां चेष्टितं च यत् ।
तज्ज्ञात्वा धर्मराजाग्रे मृत्युकाले वदन्ति च ॥ २,१७.१६ ॥
धर्मं चार्थं च कामं च मोक्षं च कथयन्ति ते ।
एको हि धर्ममार्गश्च द्वितीयश्चार्थमार्गकः ॥ २,१७.१७ ॥
अपरः काममार्गश्च मोक्षमार्गश्चतुर्थकः ।
उत्तमा धममार्गेण वैनतेय प्रयान्ति हि ॥ २,१७.१८ ॥
अर्थदाता विमानैस्तु अश्वैः कामप्रदायकः ।
हंसयुक्तविमानैश्च मोक्षाकाङ्क्षी विसर्पति ॥ २,१७.१९ ॥
इतरः पादचारेण त्वसिपत्रवनानि च ।
पाषाणैः कण्टकैः क्लिष्टः पाशबद्धोऽथ याति वै ॥ २,१७.२० ॥
यः कश्चिन्मानुषे लोके श्रवणान्पूजयेदिह ।
वर्धन्या जलपात्रेम पक्वान्नपरिपूर्णया ॥ २,१७.२१ ॥
श्रवणान्पूजयेत्तत्र मया सह खगेश्वर ।
तस्याहं तत्प्रदास्यामि यत्सुरैरपि दुर्लभम् ॥ २,१७.२२ ॥
संभोज्य ब्राह्मणान् भक्त्या त्वेकादश शुभाञ्छुचीन् ।
द्वादशं सकलत्रं च मम प्रीत्यै प्रपूजयेत् ॥ २,१७.२३ ॥
देवैः सर्वैश्च संपूज्य स्वर्गं यान्ति सुखेप्सया ।
तैः पूजितैरह तुष्टश्चित्रगुप्तेन धर्मराट् ॥ २,१७.२४ ॥
तैस्तुष्टैर्मत्पुरं यान्ति लोका धर्मपारायणाः ।
श्रवणानां च माहात्म्यमुत्पत्तिं चेष्टितं शुभम् ॥ २,१७.२५ ॥
शृणोति पक्षिशार्दूल स च पापैर्न लिप्यते ।

इह लोके सुखं भुक्त्वा स्वर्गलोके महीयते ॥ २,१७.२६ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रवणमहात्म्यनिरूपणं नाम सप्तदशोऽध्यायः

श्रीगरुडमहापुराणम् १८

श्रीकृष्ण उवाच ।

श्रवणानां वचः श्रुत्वा क्षणं ध्यात्वा पुनस्ततः ।
यत्कृतं तु मनुष्यैश्चपुण्यं पापमहर्निशम् ॥ २,१८.१ ॥

तत्सर्वं च परिज्ञाय चित्रगुप्तो निवेदयेत् ।
चित्रगुप्तस्ततः सर्वं कर्म तस्मै वदत्यथ ॥ २,१८.२ ॥

वाचैव यत्कृतं कर्म कृतं चैव तु कायिकम् ।
मानसं च तथा कर्म कृतं भुङ्क्ते शुभाशुभम् ॥ २,१८.३ ॥

एवं ते कथितस्ताक्ष्र्य प्रेतमार्गस्य निर्णयः ।
विश्रान्ति दानि सर्वाणि स्थानानि कथितानि ते ॥ २,१८.४ ॥

तमुद्दिश्य ददात्यन्नं सुखं याति महाध्वनि ।
दिवा रात्रौ तमुद्दिश्य स्थाने दीपप्रदो भवेत् ॥ २,१८.५ ॥

अन्धकारे महाघोरे श्वपूर्णे लक्ष्यवर्जिते ।
दीप्तेऽध्वनि च ते यान्ति दीपो दत्तश्च यैर्नरैः ॥ २,१८.६ ॥

कार्तिके च चतुर्दश्यां दीपदानं सुखाय वै ।
अथ वक्ष्यामि संक्षेपाद्यममार्गस्य निष्कृतिम् ॥ २,१८.७ ॥

वृषोत्सर्गस्य पुण्येन पितृलोकं स गच्छति ।
एकादशाहपिण्डेन शुद्धदेहो भवेत्ततः ॥ २,१८.८ ॥

उदकुम्भप्रदानेन किङ्करास्तृप्तिमाप्नुयुः ॥ २,१८.९ ॥

शय्यादानाद्बिमानस्थो याति स्वर्गेषु मानवः ।
तदह्नि दीयते सर्वं द्वादशाहे विशेषतः ॥ २,१८.१० ॥

पदानि सर्ववस्तूनि वरिष्ठानि त्रयोदशे ।
यो ददाति मृतस्येह जीवन्नप्यात्महेतवे ॥ २,१८.११ ॥

तदाश्रितो महामार्गे वैनतेय स गच्छति ।
एक एवास्ति सर्वत्रे व्यवहारः खगाधिप ॥ २,१८.१२ ॥

उत्तमाधममध्यानां तत्तदावर्जनं भवेत् ।
यावद्भाग्यं भवेद्यस्य तावन्मार्गेऽतिरिच्यते ॥ २,१८.१३ ॥

स्वयं स्वस्येन यद्दत्तं तत्तत्राधिकरोति तम् ।
मृते यद्बान्धवैर्दत्तं तदाश्रित्य सुखी भवेत् ॥ २,१८.१४ ॥

गरुड उवाच ।
कस्मात्पदानि देयानि किंविधानि त्रयोदश ।
दीयते कस्य देवेश तद्वदस्व यथातथम् ॥ २,१८.१५ ॥

श्रीभगवानुवाच ।
छत्त्रोपानहवस्त्राणि मुद्रिका च कमण्डलुः ।
आसनं भाजनं चैव पदं सप्तविधं स्मृतम् ॥ २,१८.१६ ॥

आतपस्तत्र यो रौद्रो दह्यते येन मानवः ।
छत्रदानेन सुच्छाया जायते प्रेततुष्टिदा ॥ २,१८.१७ ॥

असिपत्रवनं घोरं सोऽतिक्रामति वै ध्रुवम् ।
अश्वारूढाश्च गच्छन्ति ददते य उपानहौ ॥ २,१८.१८ ॥

आसने स्वागते (भोजने) चैव दत्तं तस्मै द्विजायते ।
सुखेन भुङ्क्ते स प्रेतः पथि गच्छञ्छनैः शनैः ॥ २,१८.१९ ॥

बहुधर्मसमाकीर्णे निर्वाते तोयवर्जिते ।
कमण्डलुप्रदानेन सुखी भवति निश्चितम् ॥ २,१८.२० ॥

मृतोद्देशेन यो दद्यादुदपात्रं तु ताम्रजम् ।
प्रपादानसहस्रस्य तत्फलं सोऽश्नुते ध्रुवम् ॥ २,१८.२१ ॥

यमदूता महारौद्राः करालाः कृष्णपिङ्गलाः ।
न पीडयन्ति दाक्षिण्याद्वस्त्राभारणदानतः ॥ २,१८.२२ ॥

सायुधा धावमानाश्च न मार्गे दृष्टिगोचराः ।
प्रयान्ति यमदूतास्ते मुद्रिकायाः प्रदानतः ॥ २,१८.२३ ॥

भाजनासनदानेन आमान्नभोजनेन च ।
आज्ययज्ञोपवीताभ्यां पदं सम्पूर्णतां व्रजेत् ॥ २,१८.२४ ॥

एवं मार्गे गच्छमानस्तृषार्तः श्रमपीडितः ।
महिषीरथ (दुग्ध) दानाच्च सुखी भवति निश्चितम् ॥ २,१८.२५ ॥

गरुड उवाच ।
मृतोद्देशेन यत्किञ्चिद्दीयते स्वगृहे विभो ।
स गच्छति महामार्गे तद्दत्तं केन गृह्यते ॥ २,१८.२६ ॥

श्रीभगवानुवाच ।
गृह्णाति वरुणो दानं मम हस्ते प्रयच्छति ।

अहं च भास्करे देवे भास्करात्सोऽश्नुते सुखम् ॥ २,१८.२७ ॥

विकर्मणः प्रभावेण वंशच्छेदे क्षिताविह ।
सर्वे ते नरकं यान्ति यावत्पापस्य संक्षयः ॥ २,१८.२८ ॥

कस्मिंश्चित्समये पूर्णे महिषासनसंस्थितः ।
नरकान्वीक्ष्य धर्मात्मा नानाक्रन्दसमाकुलान् ॥ २,१८.२९ ॥

चतुरशीतिलक्षाणां नरकाणां स ईश्वरः ।
तेषां मध्ये श्रेष्ठतमा घोरा या एकविंशतिः ॥ २,१८.३० ॥

तामिस्त्रं लोहशङ्कुश्च महारौरवशाल्मली ।
रौरवं कुड्वलं कालसूत्रकं पूतिमृतिका ॥ २,१८.३१ ॥

सङ्घातं लोहतोदं च सविषं सम्प्रतापनम् ।
महानरककालोलः सजीवनमहापथः ॥ २,१८.३२ ॥

अवीचिरन्धता मिस्त्रः कुम्भोपाकस्तथैव च ।
असिपत्रवनं चैव पतनश्चैकविंशतिः ॥ २,१८.३३ ॥

येषां तु नरके घोरे बह्वब्दानि गतानि वै ।
सन्तातनैव विद्यते दूतत्वं ते तु (प्रेत्य) यान्ति हि ॥ २,१८.३४ ॥

यमेन प्रेषितास्ते वै मानुषस्य मृतस्य तु ।
दिनेदिने प्रगृह्णन्ति दत्तमन्नाद्यपानकम् ॥ २,१८.३५ ॥

प्रेतस्यैव विलुण्ठन्ति मध्ये मार्गे बुभुक्षिताः ।
मासान्ते भोजनं पिण्डमेके यच्छन्ति तत्र वै ॥ २,१८.३६ ॥

तृप्तिं प्रयान्ति ते सर्वे प्रत्यहं चैव वत्सरम् ।
एवमादिकृतैः पुण्यैः क्रमात्सौरिपुरं व्रजेत् ॥ २,१८.३७ ॥

ततः संवत्सरस्यान्ते प्रत्यासन्ने यमालये ।
बहुभीतकरे प्रेतो हस्तमात्रं समुत्सृजेत् ॥ २,१८.३८ ॥

दिवसैर्दशभिर्जातं तं देहं दशपिण्डजम् ।
जामदग्न्यस्येव रामं दृष्ट्वा तेजः प्रसर्पति ॥ २,१८.३९ ॥

कर्मजं देहमाश्रित्य पूर्वदेहं समुत्सजेत् ।
अङ्गुष्ठमात्रो वायुश्च शमीपत्रंसमारुहेत् ॥ २,१८.४० ॥

व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति ।

यथा तृणजलौकेव देही कर्मानुगोऽवशः ॥ २,१८.४१ ॥

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २,१८.४२ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मद्दप्रेतद्दश्रीकृष्णगरुड संवादे
वृषोत्सर्गनानादानफलयमलोकगमनकर्मजदेहप्राप्तिनिरूपणं नामाष्टादशोऽध्यायः

श्रीगरुडमहापुराणम् १९
श्रीभगवानुवाच ।
वायुभूतः क्षधाविष्टः कर्मजं देहमाश्रितः ।
ते देहं स समासाद्य यमेन सह गच्छति ॥ २,१९.१ ॥

चित्रगुप्तपुरं तत्र योजनानां तु विंशतिः ।
कायस्थास्तत्र पश्यन्ति पापपुण्यानि सर्वशः ॥ २,१९.२ ॥

महादानेषुदत्तेषु गतस्तत्र सुखी भवेत् ।
योजनानां चतुर्विंशत्पुरं वैवस्वतं शुभम् ॥ २,१९.३ ॥

लोहं लवणकार्पासं तिलपात्रं च यैर्नरैः ।
दत्तं तेनैव तृप्यन्ति यमस्य पुरचारिणः ॥ २,१९.४ ॥

गत्वा च तत्र ते सर्वे प्रतीहारं वदन्ति हि ।
धर्मध्वजप्रतीहारस्तत्र तिष्ठति सर्वदा ॥ २,१९.५ ॥

सप्तधान्यस्य दानेन प्रीतो धर्मध्वजो भवेत् ।
तत्र गत्वा प्रतीहारो ब्रूते तस्य शुभाशुभम् ॥ २,१९.६ ॥

धर्मराजस्य यद्रूपं सन्तः सुकृतिनो जनाः ।
पश्यन्ति च दुरात्मानो यमरूपं सुभीषणम् ॥ २,१९.७ ॥

तं दृष्ट्वा भयभीतस्तु हाहेति वदते जनः ।
कृतं दानं च यैर्मर्त्यैस्तेषां नास्ति भयं क्वचित् ॥ २,१९.८ ॥

प्राप्तं सुकृतिनं दृष्ट्वा स्थानाच्च लति सूर्यजः ।
एष मे मण्डलं भित्त्वा ब्रह्मलोकं प्रयास्यति ॥ २,१९.९ ॥

दानेन सुलभो धर्मो यममार्गः सुखावहः ।
एष मार्गो विशालोऽत्र न केनाप्य नुगम्यते ।
दानपुण्यं विना वत्स न गच्छेद्धर्ममन्दिरम् ॥ २,१९.१० ॥

तस्मिन्मार्गे तु रौद्रे वै भीषणा यमकिङ्कराः ।
एकैकस्य पुरस्याग्रे तिष्ठत्येकसहस्रकम् ॥ २,१९.११ ॥

पचन्ति पापिनं प्राप्य उदके यातनाकराः ।
गृह्णन्ति मासमासान्ते पादशेषं तु तद्भवेत् ॥ २,१९.१२ ॥

और्ध्वदैहिकदानानि यैर्न दत्तानि काश्यप ।
महाकष्टेन ते यान्ति तस्माद्देयानि शक्तितः ।
अदत्त्वा पशुवद्यान्ति गृहीतो वन्धबन्धनैः ॥ २,१९.१३ ॥

एवं कृतेन सम्पश्येत्स नरः भूतकर्मणा ।
दैविकीं पैतृकीं योनिं मानुषीं वाथ नारकीम् ॥ २,१९.१४ ॥

धर्मराजस्य वचनान्मुक्तिर्भवति वा ततः ।
मानुष्यं तत्त्वतः प्राप्य स पुत्रः पुत्रतां व्रजेत् ॥ २,१९.१५ ॥

यथायथा कृतं कर्म तान्तां योनिं व्रजेन्नरः ।
तत्तथैव च भुञ्जानो विचरेत्सर्वलोकगः ॥ २,१९.१६ ॥

अशाश्वतं परिज्ञाय सर्वलोकोत्तरं सुखम् ।
यदा भवति मानुष्यं तदा धर्मं समाचरेत् ॥ २,१९.१७ ॥

कृमयो भस्म विष्ठा वा देहानां प्रकृतिः सदा ।
अन्धकूपे महारौद्रे दीपहस्तः पातेत्तु वै ॥ २,१९.१८ ॥

महापुण्यप्रभावेण मानुष्यं जन्म लभ्यते ।
यस्तत्प्राप्य चरेद्धर्मं स गच्छेत्परमां गतिम् ॥ २,१९.१९ ॥

अपि जानन्वृथा धर्मं दुः खमायाति याति च ॥ २,१९.२० ॥

जातीशतेन लभते किल मानुषत्वं तत्रापि दुर्लभतरं खग भो द्विजत्वम् ।
यस्तत्र पालयति लालयति व्रतानि तस्यामृतं भवति हस्तगतं प्रसादात् ॥ २,१९.२१ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे यममन्दिरप्रवेशतदाज्ञालब्धमनुष्यादि देहान्तरप्राप्तिनिरूपणं नामैकोनविंशोऽध्यायः

श्रीगरुडमहापुराणम् २०
गरुड उवाच ।
ये केचित्प्रेतरूपेण कुत्र वासं लभन्ति ते ।
प्रेतलोकाद्विनिर्मुक्ताः कथं कुत्र व्रजन्ति ते ॥ २,२०.१ ॥

चतुर्युक्ताशीति लक्षैर्नरकैः पर्युपासिताः ।
यमेन रक्षितास्तत्र भूतैश्चैव सहस्रशः ॥ २,२०.२ ॥

विचरन्ति कथं लोके नरकाच्च विनिर्गताः ।
गरुडोदीरितं श्रुत्वा लक्ष्मीनाथोऽब्रवीदिदम् ॥ २,२०.३ ॥

श्रीकृष्ण उवाच ।
पक्षिराज शृणुष्व त्वं यत्र प्रेताश्चरन्ति वै ।
परार्थदारग्रहणाच्छ (ब) लादद्रोहान्निशाचराः ॥ २,२०.४ ॥

तथैव सर्वपापिष्ठः स्वात्मजान्वेषणे रताः ।
विचरन्त्यशरीरास्ते क्षुप्तिपासार्दिता भृशम् ॥ २,२०.५ ॥

बन्दीगृहवि निर्मुक्ता येभ्यो नश्यन्ति जन्तवः ।
ते व्यवस्यन्ति च प्रेता वधोपायं च बन्धुषु ॥ २,२०.६ ॥

पितृद्वदाराणि रुन्धन्ति तन्मार्गोच्छेदकास्तथा ।
पितृभा गान्विगृह्णन्ति पान्थेभ्यस्तस्करा इव ॥ २,२०.७ ॥

स्वं वेश्म पुनरागत्य मित्रस्थाने विशन्ति ते ।
तत्र स्थिता निरीक्षन्ते रोगशोकादिबन्धनाः ॥ २,२०.८ ॥

पीडयन्ति ज्वरीभूय एकान्तरमिषेण तु ।
तृतीयकज्वरा भूत्वा शीतवातादिपीडया ॥ २,२०.९ ॥

अन्यांश्च विविधान्रोगाञ्छिरोऽर्तिं च विषूचिकाम् ।
चिन्त यन्ति सदा तेषामुच्छिष्टादिस्थलस्थिताः ॥ २,२०.१० ॥

आत्मजानां छलाल्लोका भूतसङ्घैश्च रक्षिताः ।
पिबन्ति ते च पानीयं भोजनोच्छिष्टयोजितम् ॥ २,२०.११ ॥

एवं प्रेताः प्रवर्तन्ते नानादोषैर्विकर्मिणः ॥ २,२०.१२ ॥

गरुड उवाच ।
कथं कुर्वन्ति ते प्रेताः केन रूपेण कस्य किम् ।
ज्ञायते केन विधिना जल्पन्ति न वदन्ति वा ॥ २,२०.१३ ॥

एनं छिन्धि मनोमोहं मम चेदिच्छसि प्रियम् ।
कलिकाले हृषीकेश प्रेतत्वं जायते बहु ॥ २,२०.१४ ॥

श्रीविष्णुरुवाच ।
स्वकुलं पीडयेत्पेतः परच्छिद्रेण पीडयेत् ।
जीवन्स दृश्यते स्नेही मृतो दुष्टत्वमाप्नुयात् ॥ २,२०.१५ ॥

रुद्रजापी धर्मरतो देवतातिथिपूजकः ।
सत्यवाक्प्रियवादी च न प्रेतैः स हि पीड्यते ॥ २,२०.१६ ॥

सर्वक्रियापरिभ्रष्टो नास्तिको धर्मनिन्दकः ।
असत्यवादनिरतो नरः प्रेतैः स पीड्यते ।
कलौ प्रेतत्वमाप्नोति तार्क्ष्याशुद्धक्रियापरः ॥ २,२०.१७ ॥

कृतादौ द्वापरान्ते च न प्रेतो नैव पीडनम् ।
बहूनामेकजातानामेकः सौख्यं समश्नुते ॥ २,२०.१८ ॥

एको दुष्कृतकर्मा च एकः सन्ततिमाञ्जनः ।
एकः सम्पीड्यते प्रेतैरेकः सुतधनान्वितः ॥ २,२०.१९ ॥

एकस्य पुत्रनाशः स्यादेको दुहितृमान् भवेत् ।
विरोधो बन्धुभिः सार्धं प्रेतदोषेण काश्यप ॥ २,२०.२० ॥

सन्ततिर्दृश्यते नैव समुत्पन्ना विनश्यति ।
पशुद्रव्यविनाशश्च सा पीडा प्रेतसम्भवा ॥ २,२०.२१ ॥

प्रकृतेः परिवर्तः स्याद्विद्वेषः सह बन्धुभिः ।
अकस्माद्व्यसनप्राप्तिः सा पीडा प्रेतसम्भवा ॥ २,२०.२२ ॥

नास्तिक्यं वृत्तिलोपश्च महालोभस्तथैव च ।
स्याद्धन्तकलहो नित्यं सा पीडा प्रेतसम्भवा ॥ २,२०.२३ ॥

पितृमातृनिहन्ता च देवब्राह्मणनिन्दकः ।
इत्यादोषमवाप्नोति सा पीडा प्रेतसम्भवा ॥ २,२०.२४ ॥

नित्यकर्मविनिंमुक्तो जपहोमविवर्जितः ।
परद्रव्याणां च हर्ता सा पीडा प्रेतसम्भवा ॥ २,२०.२५ ॥

सुवृष्टौ कृषिनाशश्च व्यवहारो विनश्यति ।
लोके कलहकारी च सा पीडा प्रेतसम्भवा ॥ २,२०.२६ ॥

मार्गे जङ्गम्यमानं तं पीडयेद्वातमण्डली ।

प्रेतपीडा तु सा ज्ञेया सत्यंसत्यं खगेश्वर ॥ २,२०.२७ ॥

हीनजात्या च सम्बन्धो हीनकर्म करोति यः ।
अधर्मे रमते नित्यं सा पीडा प्रेतसम्भवा ॥ २,२०.२८ ॥

व्यसनैर्द्रव्यनाशः स्यादुपक्रान्तं विनश्यति ।
चौराग्निराजभिर्हानिः सा पीडा प्रेतसम्भवा ॥ २,२०.२९ ॥

महारोगोपलब्धिश्च बालकानां च पीडनम् ।
जाया संपीढ्यते यच्च सा पीडा प्रेतसम्भवा ॥ २,२०.३० ॥

श्रुतिस्मृतिपुराणेषु धर्मशास्त्रसमुद्भवे ।
अभावो जायते धर्मे सा पीडा प्रेतसम्भवा ॥ २,२०.३१ ॥

देवतीर्थद्विजानां तु निन्दांयः कुरुते नरः ।
प्रत्यक्षं वा परोक्षं वा सा पीडा प्रेतसम्भवा ॥ २,२०.३२ ॥

स्ववृत्तिहरणं यच्च स्वप्रतिष्ठाहतिस्तथा ।
वंशच्छेदः नदृश्येत प्रेतदोषाद्विनान्यथा ॥ २,२०.३३ ॥

स्त्रीणां गर्भविनाशः स्यान्न पुष्पं दृश्यते तथा ।
बालानां मरणं यत्र सा पीडा प्रेतसम्भवा ॥ २,२०.३४ ॥

भावशुद्ध्या न कुरुते श्राद्धं सांवत्सरादिकम् ।
स्वयमेव न कुर्वीत सा पीडा प्रेतसम्भवा ॥ २,२०.३५ ॥

तीर्थे गत्त्वा परासक्तः स्वकृत्यं च परित्यजेत् ।
धर्मकार्ये न सम्पत्तिः सा पीडा प्रेतसम्भवा ॥ २,२०.३६ ॥

दम्पत्योः कलहश्चैव भोजने कोपसंयुतः ।
परद्रोहे मतिश्चैव सा पीडा प्रेतसंभवा ॥ २,२०.३७ ॥

पुष्पं यत्र न दृश्येन फलं तथा ।
विरहो भार्यया यत्र सा पीडा प्रेतसग्भवा ॥ २,२०.३८ ॥

येषां वै जायते चिह्नं सदोच्चाटपरं नृणाम् ।
स्वक्षेत्रे निष्फलं तेजः सा पीडा प्रेतसम्भवा ॥ २,२०.३९ ॥

स्वगोत्रघातकश्चैव हन्ति शत्रुमिवात्मजम् ।
न प्रीतिर्नापि सौख्यं च सा पीडा प्रेतसम्भवा ॥ २,२०.४० ॥

पितृवाक्यं न कुरुते स्वपत्नीं च न सेवते ।

सदा क्रूरमतिर्व्यग्रः सा पीडा प्रेतसम्भवा ॥ २,२०.४१ ॥

विकर्मा जायते प्रेतो ह्यविधिक्रियया तथा ।
तत्कालदुष्टसंसर्गाद्वृषोत्सर्गादृते तथा ॥ २,२०.४२ ॥

दृष्टगृत्युवशाद्वापि अदग्धवपुषस्तथा ।
प्रेतत्वं जायते ताक्ष्र्य पीड्यन्ते येन जन्तवः ॥ २,२०.४३ ॥

एवं ज्ञात्वा खगश्रेष्ठ प्रेतमुक्तिं समाचरेत् ।
यो वै न मन्यते प्रेतान्मृतः प्रेतत्वमाप्नुयात् ॥ २,२०.४४ ॥

प्रेतदोषः कुले यस्य सुखं तस्य न विद्यते ।
मतिः प्रीती रतिर्बुद्धिर्लक्ष्मीः पञ्चविनाशनम् ॥ २,२०.४५ ॥

तृतीये पञ्चमे पुंसि वंशच्छेदो हि जायते ।
दरिद्रो निर्धनश्चैव पापकर्मा भवेभवे ॥ २,२०.४६ ॥

ये केचित्पेतरूपा विकृतमुखदृशो रौद्ररूपाः कराला मन्यन्ते नैव गोत्रं सुतदुहितृपितॄन् भ्रातृजायां वधूं वा ।
कृत्वा काम्यं च रूपं सुखगतिरहिता भाषमाणा यथेष्टं हा कष्टं भोक्तुकामा विधिवशपतिताः संस्मरन्ति स्वपाकम् ॥
२,२०.४७ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रतकल्पे श्रीकृष्णगरुडसंवादे प्रेतावासतद्बाधाप्रकारनिरूपणं नाम विंशोऽध्यायः

श्रीगरुडमहापुराणम् २१
गरुड उवाच ।
मुक्तिं यान्ति कथं प्रेतास्तदहं प्रष्टुमुत्सुकः ।
यन्मुक्तौ च मनुष्याणां न पीडा जायते पुनः ॥ २,२१.१ ॥

एतैश्च लक्षणैर्देव पीडोक्ता प्रेतजा त्वया ।
तेषां कदा भवेन्मुक्तिः प्रेतत्वं न कथं भवेत् ॥ २,२१.२ ॥

प्रेतत्वे हि प्रमाणं च कति वर्षाणि संख्यया ।
चिरं प्रेतत्वमापन्नः कथं मुक्तिमवाप्नुयात् ॥ २,२१.३ ॥

श्रीकृष्ण उवाच ।
मुक्तिं प्रायन्ति ते प्रेतास्तदहं कथयामि ते ।
यदैव मनुजोऽवैति मम पीडा कृता त्वियम् ॥ २,२१.४ ॥

पृच्छार्थं हितमन्विच्छन्दै वज्ञे विनिवदयेत् ।
स्वप्ने दृष्टः शुभो वृक्षः फलितश्चूतचम्पकः ॥ २,२१.५ ॥

विप्रो वा वृषभो देवो भ्रमते तीर्थगो यदि ।
एवं दृष्टो यदा स्वप्नो मृतः कोऽपिस्वगोत्रजः ॥ २,२१.६ ॥

स्वप्ने सत्यं परिज्ञाय दृष्टं प्रेतप्रभावतः ।
अद्भुतानि प्रदृश्यन्ते प्रेतदोषाद्विनिश्चितम् ॥ २,२१.७ ॥

तीर्थस्नाने मतिर्यावच्चित्तं धर्मपरायणम् ।
धर्मापायं प्रकुरुते प्रेतपीडा तदा व्रजेत् ॥ २,२१.८ ॥

तदा तत्र विनाशाय चित्तभङ्गं करोति सा ।
श्रेयांसि बहुविघ्नानि सम्भवन्ति पदेपदे ॥ २,२१.९ ॥

अश्रेयसि प्रवृत्ति च प्रेरयन्ति पुनः पुनः ।
उच्चाटनं च क्रूरत्वं सर्वं प्रेतकृतं खग ॥ २,२१.१० ॥

सर्वविघ्नानि सन्त्यज्य मुक्त्युपायं करोति यः ।
तस्य कर्मफलं साधु प्रेतवृत्तिश्च शाश्वती ॥ २,२१.११ ॥

स भवेत्तेन मुक्तस्तु दत्तं श्रेयस्करं परम् ।
स्वयं तृप्यति भोः पक्षिन्यस्योद्देशेन दीयते ॥ २,२१.१२ ॥

शृणु सत्यमिदं ताक्ष्र्य यद्ददाति भुनक्ति सः ।
आत्मानं श्रेयसा युञ्ज्यात्प्रेतस्तृप्तिं चिरं व्रजेत् ॥ २,२१.१३ ॥

ते तृप्ताः शुभमिच्छन्ति निजबन्धुषु सर्वदा ।
अज्ञातयस्तु ये दुष्टाः पीडयन्ति स्ववंशजान् ॥ २,२१.१४ ॥

निवारयन्ति तृप्तास्ते जायमानानुकम्पकाः ।
पश्चात्ते मुक्तिमायन्ति काले प्राप्ते स्वपुत्रतः ।
सदा बन्धुषु यच्छन्ति वृद्धिमृद्धिं खगाधिप ॥ २,२१.१५ ॥

दर्शनाद्भाषणाद्यस्तु चेष्टातः पीडनाद्गतिम् ।
न प्रापयति मूढात्मा प्रेतशापैः स लिप्यते ॥ २,२१.१६ ॥

अपुत्रकोऽपशुश्चैव दरिद्रो व्याधितस्तथा ।
वृत्तिहीनश्च हीनश्च भवेज्जन्मनिजन्मनि ॥ २,२१.१७ ॥

एवं ब्रुवन्ति ते प्रेताः पुनर्याभ्यं समाश्रिताः ।
तत्रस्थानां भवेन्मुक्तिः स्वकाले कर्मसंक्षये ॥ २,२१.१८ ॥

गरुड उवाच ।
नाम गोत्रं न दृश्येत प्रतीतिर्नैव जायते ।
केचिद्वदन्ति दैवज्ञाः पीडां प्रेतसमुद्भवाम् ॥ २,२१.१९ ॥

न स्वप्नश्चैष्टितं नैव दर्शनं न कदाचन ।
किं कर्तव्यं सुरश्रेष्ठ तत्र मे ब्रूहि निश्चितम् ॥ २,२१.२० ॥

श्रीभगवानुवाच ।
सत्यं वाप्यनृतं वापि वदन्ति क्षितिदेवताः ।
तदा सञ्चिन्त्य हृदये सत्यमेतद्द्विजेरितम् ॥ २,२१.२१ ॥

भावभक्तिं पुरस्कृत्य पितृभक्तिपरायणः ।
कृत्वा कृष्णबलिं चैव पुरश्चरण पूर्वकम् ॥ २,२१.२२ ॥

जपहोमैस्तथा दानैः प्रकुर्याद्देहसोधनम् ।
कृतेन तेन विघ्नानि विनश्यन्ति खगेश्वर ॥ २,२१.२३ ॥

भूतप्रेतपिशाचैर्वा स चेदन्यैः प्रपीड्यते ।
पित्रुद्देशेन वै कुर्यान्नारायणबलिं तदा ।
विमुक्तः सर्वपीडाभ्य इति सत्यं वचो मम ॥ २,२१.२४ ॥

पितृपीडा भवेद्यत्र कृत्यैरन्यैर्न मुच्यते ।
तस्मात्सर्वप्रयत्नेन पितृभक्तिपरो भवेत् ॥ २,२१.२५ ॥

नवमे दशमे वर्षे पिक्षुद्देशेन वै पुमान् ।
गायत्रीमयुतं जप्त्वा दशांशेन च होमयेत् ॥ २,२१.२६ ॥

कृत्वा कृष्णबलिं पूर्वं वृषोत्सर्गादिकाः क्रियाः ।
सर्वोपद्रवहीनस्तु सर्वसौख्यमवाप्नुयात् ।
उत्तमं लोकमाप्नोति ज्ञातिप्राधान्यमेव च ॥ २,२१.२७ ॥

पितृमा तृसमं लोके नास्त्यन्यद्दैवतं परम् ।
तस्मात्सर्वप्रयत्नेन पूजयेत्पितरौ सदा ॥ २,२१.२८ ॥

हितानामुपदेष्टा हि प्रत्यक्षं दैवतं पिता ।
अन्या या देवता लोके न देहप्रभवो हि ताः ॥ २,२१.२९ ॥

शरीरमेव जन्तूनां स्वर्गमोक्षैकसाधनम् ।
देहो दत्तो हि येनैवं कोऽन्यः पूज्यतमस्ततः ॥ २,२१.३० ॥

इति सञ्चिन्त्यहृदये पक्षिन्यद्यत्प्रयच्छति ।
तत्सर्वमात्मना भुङ्क्ते दानं वेदविदो विदुः ॥ २,२१.३१ ॥

पुन्नामनरकाद्यस्मात्पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्त इह चापि परत्र च ॥ २,२१.३२ ॥

अपमृत्युमृतौ स्यातां पितरौ कस्यचित्खग ।
व्रततीर्थाविवाहादिश्राद्धं संवत्सरं त्यजेत् ॥ २,२१.३३ ॥

स्वप्नाध्यायमिमं यस्तु प्रेत लिङ्गनिदर्शकम् ।
यः पठेच्छृणुयाद्वापि प्रेतचिह्नं न पश्यति ॥ २,२१.३४ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाद्दप्रेतकल्पे श्रीकृष्णगरुडसंवादे स्वप्नाध्यायो नामैकविंशोऽध्यायः

श्रीगरुडमहापुराणम् २२
गरुड उवाच ।
सम्भवन्ति कथं प्रेताः केन तेषां गतिर्भवेत् ।
कीदृक्तेषां भवेद्रूपं भोजनं किं भवेत्प्रभो ॥ २,२२.१ ॥

सुप्रीतास्ते कथं प्रेताः क्व तिष्ठन्ति सुरेश्वर ।
प्रसन्नः कृपया देव प्रश्नमेनं वदस्व मे ॥ २,२२.२ ॥

श्रीभगवानुवाच ।
पापकर्मरता ये वै पूर्वकर्मवशानुगाः ।
जायन्ते ते मृताः प्रेतास्ताञ्छृणुष्व वदाम्यहम् ॥ २,२२.३ ॥

वापीकूपतडागांश्च आरामं सुरमन्दिरम् ।
प्रपां सद्म सुवृक्षांश्च तथा भोजनशालिकाः ॥ २,२२.४ ॥

पितृपैतामहं धर्मं किक्रीणाति स पापभाक् ।
मृतः प्रेतत्वमाप्नोति यावदाभूतसंप्लवम् ॥ २,२२.५ ॥

गोचरं ग्रामसीमां तडागाराममगह्वरम् ।
कर्षयन्ति च ये लोभात्प्रेतास्ते वै भवन्ति हि ॥ २,२२.६ ॥

चण्डालादुदकात्सर्पाद्ब्राह्मणाद्बैद्युताग्नितः ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणाम् ॥ २,२२.७ ॥

उद्बन्धनमृता ये च विषशस्त्रहताश्च ये ।
आत्मोपघातिनो ये च विषूच्यादिहतास्तथा ॥ २,२२.८ ॥

महारोगैर्मृता ये च पापरोगैश्च दस्युभिः ।
असंस्कृतप्रमीता ये विहिताचारवर्जिताः ॥ २,२२.९ ॥

वृषोत्सर्गादिलुप्ताश्चलुप्तमासिकपिण्डकाः ।
यस्यानयति शूद्रोग्निं तृणकाष्ठहवींषि सः ॥ २,२२.१० ॥

पतनात्पर्वतानां च भित्तिपातेन ये मृताः ।
रजस्वलादिदोषैश्च न च भूमौ मताश्च ये ॥ २,२२.११ ॥

अन्तरिक्षे मृता ये च विष्णुस्मरणवर्जिताः ।

सूतकैः श्वादिसंपर्कैः प्रेतभावा इह क्षितौ ॥ २,२२.१२ ॥

एवमादिभिरन्यैश्च कुमृत्युवशगाश्च ये ।
ते सर्वे प्रेतयोनिस्था विचरन्ति मरुस्थले ॥ २,२२.१३ ॥

मातरं भगिनीं भार्यां स्नुषां दुहितरं तथा ।
अदृष्टदोषां त्यजति स प्रेतो जायतेध्रुवम् ॥ २,२२.१४ ॥

भ्रातृध्रुग्ब्रह्महा गोघ्नः सुरापो गुरुतल्पगः ।
हेमक्षौमहरस्ताक्ष्र्य स वै प्रेतत्वमाप्नुयात् ॥ २,२२.१५ ॥

न्यासापहर्ता मित्रध्रुक्परदाररतस्तथा ।
विश्वासघाती क्रूरस्तु स प्रेतो जायते ध्रुवम् ॥ २,२२.१६ ॥

कुलमार्गांश्च सन्त्यज्य परधर्मरतस्तथा ।
विद्यावृत्तविहीनश्च स प्रेतो जायतेध्रुवम् ॥ २,२२.१७ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
युधिष्ठिरस्य संवादं भीष्मेण सह सुव्रत ।
तदहं कथयिष्यामि यच्छ्रुत्वा सौख्यमाप्नुयात् ॥ २,२२.१८ ॥

युधिष्ठिर उवाच ।
केन कर्मविपाकेन प्रेतत्वमुपजायते ।
केन वा मुच्यते कस्मात्तन्मे ब्रूहि पितामह ।
यच्छ्रुत्वा न पुनर्मोहमेवं यास्या मि सुव्रत ॥ २,२२.१९ ॥

भीष्म उवाच ।
येनैव जायते प्रेतो येनैव स विमुच्यते ।
प्राप्नोति नरकं घोरं दुस्तरं दैवतैरपि ॥ २,२२.२० ॥

सततं श्रवणाद्यस्य पुण्यश्रवणकीर्तनात् ।
मानवा विप्रमुच्यन्ते आपन्नाः प्रेतयोनिषु ॥ २,२२.२१ ॥

श्रूयते हि पुरा वत्स ब्राह्मणः शंसितव्रतः ।
नाम्ना सन्तप्तकः ख्यात स्तपोर्ऽथे वनमाश्रितः ॥ २,२२.२२ ॥

स्वाध्याययुक्तो होमेन यो (या) गयुक्तो दयान्वितः ।

यजन्स सकलान्यज्ञान्युक्त्या कालं च विक्षिपन् ॥ २,२२.२३ ॥

ब्रहामचर्यसमायुक्तो युक्तस्तपसि मार्दवे ।
परलोकभयोपेतः सत्यशौचैश्च निर्मलः ॥ २,२२.२४ ॥

युक्तोऽहि गुरुवाक्येन युक्तश्चातिथिपूजने ।
आत्मयोगे सदोद्युक्तः सर्वद्वन्द्वविवर्जितः ॥ २,२२.२५ ॥

योगाभ्यासे सदा युक्तः संसारविजिगीषया ।
एवंवृत्तः सदाचारो मोक्षकाङ्क्षी जितेन्द्रियः ॥ २,२२.२६ ॥

बहून्यब्दानि विजने वने तस्य गतानि वै ।
तस्य बुद्धिस्ततो जाता तीर्थानुगमनं प्रति ॥ २,२२.२७ ॥

पुण्यैस्तीर्थजलैरेव शोषयिष्ये कलेवरम् ।
स तीर्थेत्वरितं स्नात्वा तपस्वी भास्करोदये ।
कृतजाप्यनमस्कारो ह्यध्वानं प्रत्यपद्यत ॥ २,२२.२८ ॥

एकस्मिन्दिवसे विप्रो मार्गभ्रष्टो महातपाः ।
ददर्शाध्वनि गच्छन्स पञ्च प्रेतान् सुदारुणान् ॥ २,२२.२९ ॥

अरण्ये निर्जने देशे संकटे वृक्षवर्जिते ।
पञ्चैतान्विकृताकारान्दृष्ट्वा वै घोरदर्शनान् ।
ईषत्सन्त्रस्तहृदयोऽतिष्ठदुन्मील्य लोचने ॥ २,२२.३० ॥

अवलम्ब्य ततो धैर्यं भयमुत्सृज्य दूरतः ।
पप्रच्छ मधुराभाषी के यूयं विकृताननाः ॥ २,२२.३१ ॥

किञ्चाशुभं कृतं कर्म येन प्राप्ताः स्थ वैकृतम् ।
कथं वा चैकतः कर्म प्रस्थिताः कुत्र निश्चितम् ॥ २,२२.३२ ॥

प्रेतराज उवाच ।
स्वैः स्वैस्तु कर्मभिः प्राप्तं प्रेतत्वं हि द्विजोत्तम ।
परद्रोहरताः सर्वे पापमृत्युवशं गताः ॥ २,२२.३३ ॥

क्षुत्पिपासार्दिता नित्यं प्रेतत्वं समुपागताः ।
हतवाक्या हतश्रीका हत संज्ञा विचेतसः ॥ २,२२.३४ ॥

न जानीमो दिशं तात विदिशं चातिदुः खिताः ।
क्व नु गच्छामहे मूढाः पिशाचाः कर्मजा वयम् ॥ २,२२.३५ ॥

न माता न पितास्माकं प्रेतत्वं कर्मभिः स्वकैः ।
प्राप्ताः स्म सहसा जातदुः खोद्वेगसमाकुलम् ॥ २,२२.३६ ॥

दर्शनेन च ते ब्रह्मन्मुदिताप्यायिता वयम् ।
मुहूर्तन्तिष्ठ वक्ष्यामि वृत्तान्तं सर्वमादितः ॥ २,२२.३७ ॥

अहं पर्युषितो नाम एष सूचीमुखस्तथा ।
शीघ्रगो रोघ (ह) कश्चैव पञ्चमो लेखकः स्मतृतः ॥ २,२२.३८ ॥

एवं नाम्ना च सर्वे वै संप्राप्ताः प्रेततां वयम् ।
ब्राह्मण उवाच ।
प्रेतानां कर्मजातानां कथं वै नामसम्भवः ।
किञ्चित्कारणमुदिश्य येन ब्रूयाः स्वनामकान् ॥ २,२२.३९ ॥

प्रेतराज उवाच ।
मया स्वादु सदा भुक्तं दत्तं पर्युषितं द्विज ॥ २,२२.४० ॥

शीघ्रं गच्छति विप्रेण याचितः क्षुधितेन वै ।
एतत्कारणमुद्दिश्य नाम पर्युषितं मम ॥ २,२२.४१ ॥

शीघ्रं गच्छति विप्रेण याचितः क्षुधितेन वै ।
एतत्कारणमुद्दिश्य शीघ्रगोऽयं द्विजोत्तम ॥ २,२२.४२ ॥

सूचिता बहवोऽनेन विप्रा अन्नाधिकाङ्क्षया ।
एतत्कारणमुद्दिश्य एष सूचिमुखः स्मृतः ॥ २,२२.४३ ॥

एकाकी मिष्टमश्नाति पोष्यवर्गमृते सदा ।
ब्राह्मणानामभावेन रोध (ह) कस्तेन चोच्यते ॥ २,२२.४४ ॥

पुरायं मौनमास्थाय याचितो विलिखेद्भुवम् ।
तेन कर्मविपाकेन लेखको नाम चोच्यते ॥ २,२२.४५ ॥

प्रेतत्वं कर्मभावेन प्राप्तं नामानि च द्विज ।

मेषाननो लेखकोऽयं रोध (ह) कः पर्वताननः ॥ २,२२.४६ ॥

शीघ्रगः पुशुवक्त्रश्च सूचकः सूचिवक्त्रवान् ।
दुःखिता नितरां स्वमिन्पश्य रूपविपर्ययम् ॥ २,२२.४७ ॥

कृत्वा मायामयं रूपं विचरामो महीतले ।
सर्वे च विकृताकारा लम्बोष्ठा विकृताननाः ॥ २,२२.४८ ॥

बृहच्छरीरिणो रौद्रा जाताः स्वेनैव कर्मणा ।
एतत्ते सर्वमाख्यातं प्रेतत्वे कारणं मया ॥ २,२२.४९ ॥

ज्ञानिनोऽपि वयं सर्वे जाताः स्म तव दर्शनात् ।
यत्र ते श्रवणे श्रद्धा तत्पृच्छ कथयामि ते ॥ २,२२.५० ॥

ब्राह्मण उवाच ।
ये जीवा भुवि जीवन्ति सर्वेऽप्याहारमूलकाः ।
युष्माकमपिचाहारं श्रोतुमिच्छामि तत्त्वतः ॥ २,२२.५१ ॥

प्रेता ऊचुः ।
यदि ते श्रवणे श्रद्धा आहाराणां द्विजोत्तम ।
अस्माकं तु महीभाग शृणुत्वं सुसमाहितः ॥ २,२२.५२ ॥

ब्राह्मण उवाच ।
कथयन्तु महाप्रेता आहारं च पृथक्पृथक् ।
इत्युक्तां ब्राह्मणेनेममूचुः प्रेताः पृथकपृथक् ॥ २,२२.५३ ॥

प्रेता ऊचुः ।
शृणु चाहारमस्माकं सर्वसत्त्वविगर्हितम् ।
यच्छ्रुत्वा गर्हसे ब्रह्मन् भूयोभूयश्च गर्हितम् ॥ २,२२.५४ ॥

श्लेष्ममूत्रपुरीषोत्थं शरीराणां मलैः सह ।
उच्छिष्टैश्चैव चान्यैश्च प्रेतानां भोजनं भवेत् ॥ २,२२.५५ ॥

गृहाणि चाप्यशौचानि प्रकीर्णोपस्कराणि च ।
मलिनानि प्रसूतानि प्रेता भुञ्जन्ति तत्र वै ॥ २,२२.५६ ॥

नास्ति सत्यं गृहे यत्र न शौचं न च संयमः ।

पतितैर्दस्युभिः सङ्गः प्रेता भुञ्जन्ति तत्र वै ॥ २,२२.५७ ॥

बलिमन्त्रविहीनानि होमहीनानि यानि च ।
स्वाध्याय व्रतहीनानि प्रेता भुञ्जन्ति तत्र वै ॥ २,२२.५८ ॥

न लज्जा न च मर्यादा यदात्र स्त्रीजितो गृही ।
गुरवो यत्र पूज्या न प्रेता भुञ्जन्ति तत्र वै ॥ २,२२.५९ ॥

यत्र लोभस्तथा क्रोधो निद्रा शोको भयं मदः ।
आलस्यं कलहो नित्यं प्रेता भुञ्जन्ति तत्र वै ॥ २,२२.६० ॥

भर्तृहीना च या नारी परवीर्यं निषेवते ।
बीजं मूत्रसमायुक्तं प्रेता भुञ्जन्ति तत्तु वै ॥ २,२२.६१ ॥

लज्जा मे जायते तात वदतो भोजनं स्वकम् ।
यत्स्त्रीरजो योनिगतं प्रेता भुञ्जन्ति तत्तु वै ॥ २,२२.६२ ॥

निर्विण्णाः प्रेतभावेन पृच्छामि त्वां दृढव्रत ।
यथा न भविता प्रेतस्तन्मे वद तपोधन ।
नित्यं मृत्युर्वरं जन्तोः प्रेतत्वं मा भवेत्क्वचित् ॥ २,२२.६३ ॥

ब्राह्मण उवाच ।
उपवासपरो नित्यं कृच्छ्रचान्द्रायणे रतः ।
व्रतैश्च विविधैः पूतो न प्रेतो जायते नरः ॥ २,२२.६४ ॥

एकादश्यां व्रतं कुर्वञ्जागरेण समन्वितम् ।
अपरैः सुकृतैः पूतो न प्रेतो न प्रेतो जायते नरः ॥ २,२२.६५ ॥

इष्ट्वा वै वाश्वमेधादीन्ददद्याद्दानानि यो नरः ।
आरामोद्यानवाप्यादेः प्रपायाश्चैव कारकः ॥ २,२२.६६ ॥

कुमारीं ब्राह्मणानां तु विवाहयति शक्तितः ।
विद्यादोऽभयदश्चैव न प्रेतो जायते नरः ॥ २,२२.६७ ॥

शूद्रान्नेन तु भुक्तेन जठरस्थेन यो मृतः ।
दुर्मृत्युना मृतो यश्च स प्रेतो जायते नरः ॥ २,२२.६८ ॥

अयाज्ययाजकश्चैव याज्यानां च विवर्जकः ।
कारुभिश्च रतो नित्यं स प्रेतो जायते नरः ॥ २,२२.६९ ॥

कृत्वा मद्यपसम्पर्कं मद्यपस्त्रीनिषेवणम् ।
अज्ञानाद्भक्षयन्मांसं स प्रेतो जायते नरः ॥ २,२२.७० ॥

देवद्रव्यं च ब्रह्मस्वं गुरुद्रव्यं तथैव च ।
कन्यां ददाति शुल्केन स प्रेतो जायते नरः ॥ २,२२.७१ ॥

मातरं भगिनीं भार्यां स्नुषां दुहितरं तथाः ।
अदृष्टदोषास्त्यजति स प्रेतो जाद्द ॥ २,२२.७२ ॥

न्यासापहर्ता मित्रध्रुक्परदाररतः सदा ।
विश्वासघाती कूटश्च स प्रेद्द ॥ २,२२.७३ ॥

भ्रातृध्रुग्ब्रह्महा गोघ्नः सुरापो गुरुतल्पगः ।
कुलमार्गं परित्यज्य ह्यनृतोक्तौ सदा रतः ।
हर्ता हेम्नश्च भूमेश्च स प्रेद्द ॥ २,२२.७४ ॥

भीष्म उवाच ।
एवं ब्रुवति वै विप्रे आकाशे दुन्दुभिस्वनः ।
अपतत्पुष्पवर्षं च देवर्मुक्तं द्विजोपरि ॥ २,२२.७५ ॥

पञ्च देवविमानानि प्रेतानामागतानि वै ।
स्वर्गं गता विमानैस्ते दिव्यैः संपृच्छ्य तं मुनिम् ॥ २,२२.७६ ॥

ज्ञानं विप्रस्य सम्भाषात्पुण्यसंकीर्तनेन च ।
प्रेताः पापविनिर्मुक्ताः परं पदमवाप्नुयुः ॥ २,२२.७७ ॥

सूत उवाच ।
इदमाख्यानकं श्रुत्वा कम्पितोऽश्वत्थपत्रवत् ।
मानुषाणां हितार्थाय गरुडः पृष्टवान्पुनः ॥ २,२२.७८ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे भीष्म युधिष्ठिरसंवादे प्रेतत्वोत्पत्तितन्मुक्तिपेञ्चप्रेतोपाख्यान निरूपणं नाम द्वाविंशोऽध्यायः

श्रीगरुडमहापुराणम् २३
गरुड उवाच ।
किङ्किं कुर्वन्ति वै प्रेताः पिशाचत्वेव्यवस्थिताः ।
वदन्ति वा कदाचित्किं तद्वदस्व सुरेश्वर ॥ २,२३.१ ॥

श्रीभगवानुवाच ।
तेषां स्वरूपं वक्ष्यामि चिह्नं स्वप्नं यथातथम् ।
क्षुत्पिपासार्दितास्ते वै प्रविशेयुः स्ववेश्मनि ॥ २,२३.२ ॥

प्रतिष्ठा वायुदेहेषु शयानांस्तु स्ववंशजान् ।
तत्र यच्छन्ति लिङ्गानि दर्शयन्ति खगेश्वर ॥ २,२३.३ ॥

स्वपुत्रस्वकलत्राणि स्वबन्धुन्तत्र गच्छति ।
हयो गजो वृषो मर्त्योदृश्यते विकृताननः ॥ २,२३.४ ॥

शयानं विपरीतं तु आत्मानं च विपर्ययम् ।
उत्थितः पश्यति यस्तु तद्विन्द्यात्प्रेतनिर्मितम् ॥ २,२३.५ ॥

स्वप्ने नरौ हि निगडैर्बध्यते बहुधा यदि ।
अन्नं च याचते स्वप्ने कुवेषः पूर्वजो मृतः ॥ २,२३.६ ॥

स्वप्ने यो भुज्यमानस्य गृहीत्वान्नं पलायते ।
आत्मनस्तु परो वापि तृषार्तस्तु जलं पिबेत् ॥ २,२३.७ ॥

वृषभारोहणं स्वप्ने वृषभैः सह गच्छति ।
उत्पत्य गगनं याति तीर्थे याति क्षुधातुरः ॥ २,२३.८ ॥

स्ववाचा वदते यस्तु गोवृषद्विजावाजिषु ।
लिङ्गे गजे तथा देवे भूते प्रेते निशाचरे ॥ २,२३.९ ॥

स्वप्नमध्ये तु पक्षीन्द्र प्रेतलिङ्गान्यनेकधा ।
स्वकलत्रं स्वबन्धुं वा स्वसुतं स्वपतिं विभुम् ।
विद्यमानं मृतं पश्येत्प्रेतदोषेण निश्चितम् ॥ २,२३.१० ॥

याचते यः परं स्वप्ने क्षुत्तृड्भ्यां च परिप्लुतः ।
तीर्थे गत्वा दहेत्पिण्डान्प्रेतदौषैर्न संशयः ॥ २,२३.११ ॥

निर्गच्छेद्वा गृहाद्वापि स्वप्ने पुत्रस्तथा पशुः ।
पिता भ्राता कलत्रं च प्रेतदोषैस्तु पश्यति ॥ २,२३.१२ ॥

चिह्नान्येतानि पक्षीन्द्र प्रायश्चित्तं निवेदयेत् ।
कृत्वा स्नानं गृहे तीर्थे श्रीवृक्षे तर्पणं जलैः ॥ २,२३.१३ ॥

कृष्णधान्यानि पूजां च प्रदद्याद्वेदपारगे ।
होमं कुर्याद्यथाशक्ति सम्पूर्णं वाचयेत्सुधीः ॥ २,२३.१४ ॥

एतद्धि श्रद्धया यस्तु प्रेतलिङ्गनिदर्शनम् ।
पठते शृणुते वापि प्रेतचिह्नं विनश्यति ॥ २,२३.१५ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे प्रेतकृतितदुक्तितच्चिह्नतद्विमुक्त्युपायनिरूपणं नाम त्रयोविंशोऽध्यायः

श्रीगरुडमहापुराणम् २४
गरुड उवाच ।
नाकाले म्रियते कश्चिदिति वेदानुशासनम् ।
कस्मान्मृत्युमवाप्नोति राजा वा श्रोत्रियोपि वा ॥ २,२४.१ ॥

यदुक्तं ब्राह्मणा पूर्वमनृतं तद्धि दृश्यते ।
वेदैरुक्तं तु यद्वाक्यं शतं जीवति मानुषे ॥ २,२४.२ ॥

जीवन्ति मानुषे लोके सर्वे वर्णा द्विजातयः ।
अन्त्यजाम्लेच्छजाश्चैव खण्डे भारतसंज्ञके ॥ २,२४.३ ॥

न दृश्यते कलौ तच्च कस्माद्देव समादिश ।
(आधानान्मृत्युमाप्नोति बालो वा स्थविरो युबा ॥ २,२४.४ ॥

सधनो निर्धनो वापि सुकुमारः सुरूपवान् ।
अविद्वांश्चैव विद्वांश्च ब्राह्मणस्त्वितरो जनः ॥ २,२४.५ ॥

तपोरतो योगशीलो महाज्ञानी च यो नरः ।
सर्वज्ञानरतः श्रीमान्धर्मात्मातुलविक्रमः ॥ २,२४.६ ॥
)
सर्वमेतदशषेण जायते वसुधातले ।
कस्मान्मृत्युमवाप्नोति राजा वा श्रोत्रियोऽपि वा ॥ २,२४.७ ॥

श्रीभगवानुवाच ।
साधुसाधु महाप्राज्ञ यस्त्वं भक्तोऽसि मे प्रियः ।
श्रूयतां वचनं गुह्यं नानादेशविनाशनम् ॥ २,२४.८ ॥

विधातृविहितो मृत्युः शीघ्रमादाय गच्छति ।
ततो वक्ष्यामि पक्षीन्द्र काश्यपेय महाद्युते ॥ २,२४.९ ॥

मानुषः शतजीवीति पुरा वेदेन भाषितम् ।
विकर्मणः प्रभावेण शीघ्रं चापि विनश्यति ॥ २,२४.१० ॥

वेदानभ्यसनेनैव कुलाचारं न सेवते ।
आलस्यात्कर्मणां त्यागो निषिद्धेऽप्यादरः सदा ॥ २,२४.११ ॥

यत्र तत्र गृहेऽश्नाति परक्षेत्ररतस्तथा ।
एतैरन्यैर्महादोषैर्जायते चायुषः क्षयः ॥ २,२४.१२ ॥

अश्रद्दधानमशुचिं नास्तिकं त्यक्तमङ्गलम् ।
परद्रोहानृतरं ब्राह्मणं यत (म) मन्दिरम् ॥ २,२४.१३ ॥

अरक्षितारं राजानं नित्यं धर्मविवर्जितम् ।
क्रूरं व्यसनिनं मूर्खं वेदवादबहिष्कृतम् ।
प्रजापीडनकर्तारं राजानं यमशासनम् ॥ २,२४.१४ ॥

प्रापयन्ति वशं मृत्योस्ततो याति च यातनाम् ।
स्वकर्माणि परित्यज्य मुख्यवृत्तानि यानि च ॥ २,२४.१५ ॥

परकर्मरतो नित्यं यमलोकं स गच्छति ।
शूद्रः करोतिः यत्किञ्चिद्विजशुश्रूषणं विना ॥ २,२४.१६ ॥

उत्तमाधममध्ये वा यमलोके स पच्यते ।
स्नानं दानं जपो होमो स्वाध्यायो दवर्ताच्चनम् ॥ २,२४.१७ ॥

यस्मिन्दिने न सेव्यन्ते स वृथा दिवसो नृणाम् ।
अनित्यमध्रुवं देहमनाधारं रसोद्भवम् ॥ २,२४.१८ ॥

अन्नोदकमये देहे गुणानेतान्वदाम्यहम् ।
यत्प्रातः संस्कृतं सायं नूनमन्नं विनश्यति ॥ २,२४.१९ ॥

तदीयरससम्पुष्टकाये का बत नित्यता ।
गतं ज्ञात्वा तु पक्षीन्द्र वपुरर्धं स्वकर्मभिः ॥ २,२४.२० ॥

नरः पापविनाशाय कुर्वीत परमौषधम् ।
देहः किमन्नदातुः स्विन्निषेक्तुर्मातुरेव वा ॥ २,२४.२१ ॥

उभयोर्वा प्रभोर्वापि बालनोग्नेः शुनोऽपि वा ।
कस्तत्र परमो यज्ञः कृमिविड्भस्मसंज्ञके ॥ २,२४.२२ ॥

कर्तव्यः परमो यत्नः पातकस्य विनाशने ।
अनेकभवसम्भूतं पातकं तु त्रिधा कृतम् ॥ २,२४.२३ ॥

यदा प्राप्नोति मानुष्यं तदा सर्वं तपत्यपि ।
सर्वजन्मानि संस्मृत्य विषादी कृतचेतनः ॥ २,२४.२४ ॥

अवेक्ष्य गर्भवासांश्च कर्मजा गतयस्तथा ।
मानुषोदरवासी चेत्तदा भवति पातकी ॥ २,२४.२५ ॥

अण्डजादिषु भूतेषु यत्रयत्र प्रसर्पति ।
आधयो व्याधयः क्लेशा जरारूपविपर्ययः ॥ २,२४.२६ ॥

गर्भवासाद्विनिर्मुक्तस्त्वज्ञानतिमिरावृतः ।
न जानातिः खगश्रेष्ठ बालभावं समाश्रितः ॥ २,२४.२७ ॥

यौवने तिमिरान्धश्च यः पश्यति स मुक्तिभाक् ।
आधानान्मृत्युमाप्नोति बालो वा स्थविरो युवा ॥ २,२४.२८ ॥

सधनो निर्धनश्चैव सुकुमारः कुरूपवान् ।
अविद्वांश्चैव विद्वांश्च ब्राह्मणास्त्वितरो जनः ॥ २,२४.२९ ॥

तपोरतो योगशीलो महाज्ञानी च यो नरः ।
महादानरतः श्रीमान्धर्मात्मातुलविक्रमः ।
विना मानुपदेहं तु सुखं दुः खं न विन्दति ॥ २,२४.३० ॥

प्राकृतैः कर्मपाशैस्तु मृत्युमाप्नोति मानवः ।
आधानात्पञ्च वर्षाणि स्वल्पपापैर्विपच्यते ॥ २,२४.३१ ॥

पञ्चवर्षाधिको भूत्वा महापापैर्विपच्यते ।
योनिं पूरयते यस्मान्मृतोऽप्यायाति याति च ॥ २,२४.३२ ॥

मृतो दानप्रभावेण जीवन्मर्त्यश्चिरं भुवि ।
सूत उवाच ।
इति कृष्णवचः श्रुत्वा गरुडो वाक्यमब्रवीत् ॥ २,२४.३३ ॥

गरुड उवाच ।
मृते बाले कथं कुर्यात्पिण्डदानादिकाः क्रियाः ।
गर्भेषु च विपन्नानामाचूडाकरणाच्छिशोः ॥ २,२४.३४ ॥

कथं किं केन दातव्यं मृतान्ते को विधिः स्मृतः ।
गरुडोक्तमिति श्रुत्वा विष्णुर्वाक्यमथाब्रवीत् ॥ २,२४.३५ ॥

श्रीविष्णुरुवाच ।
यदि गर्भो विपद्यते स्त्रवते वापि योषितः ।
यावन्मासं स्थितो गर्भस्तावद्दिनमशौचकम् ॥ २,२४.३६ ॥

तस्य किञ्चिन्न कर्तव्यमात्मनः श्रेय इच्छता ।
ततो जाते विपन्ने तु आ चूडाकरणाच्छिशोः ॥ २,२४.३७ ॥

दुग्धं भोज्यं ताशक्ति बालानां च प्रदीयते ।
आ चूडात्पञ्चवर्षे तु देहदाहो विधीयते ॥ २,२४.३८ ॥

दुग्धं तस्य प्रदेयं स्याद्बालानां भोजनं शुभम् ।
पञ्चवर्षाधिके प्रेते स्वजातिविहितानि च ॥ २,२४.३९ ॥

कुर्यात्कर्माणि सर्वाणि चोदकुम्भादि पायसम् ।

दातव्यं तु खगश्रेष्ठ ऋणसम्बन्धकस्तु सः ॥ २,२४.४० ॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
कर्तव्यं पक्षिशार्दूल पुनर्देहक्षयाय वै ॥ २,२४.४१ ॥

तस्मै यद्रोचते देयमदत्त्वा निर्धने कुले ।
स्वल्पायुर्निर्धनो भूत्वा रतिभक्तिविवर्जितः ॥ २,२४.४२ ॥

पुनर्जन्माप्नुयान्मर्त्यस्तस्माद्देयमृते शिशोः ।
पुराणे गीयते गाथा सर्वथा प्रतिभाति मे ॥ २,२४.४३ ॥

मिष्टान्नं भोजनं देयं दाने शक्तिस्तु दुर्लभा ।
भोज्ये भोजनशक्तिश्च रतिशक्तिर्वरस्त्रियः ॥ २,२४.४४ ॥

विभवे दानशक्तिश्च नाल्पस्य तपसः फलम् ।
दानाद्भोगानवाप्नोति सौख्यं तीर्थस्य सेवनात् ।
सुभाषणान्मृतो यस्तु स विद्वान्धर्मवित्तमः ॥ २,२४.४५ ॥

अदत्तदानाच्च भवेद्दरिद्रो दरिद्रभावाच्च करोतिपापम् ।
पापप्रभावान्नरकं प्रयाति पुनर्दरिद्रः पुनरेव पापी ॥ २,२४.४६ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशाख्ये धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादेऽल्पायुर्मरणहेतुबालान्त्येष्ट्योर्निरूपणं नाम चतुर्विशोऽध्यायः

श्रीगरुडमहापुराणम् २५
श्रीविष्णुरुवाच ।
अतः परं प्रवक्ष्यामि पुरुषस्त्री विनिर्णयम् ।
जीवन्वापि मृतो वापि पञ्चवर्षाधिकोऽपि वा ॥ २,२५.१ ॥

पूर्णे तु पञ्चमे वर्षे पुमांश्चैव प्रतिष्ठितः ।
सर्वैन्द्रियाणि जानाति रूपारूपविपर्ययौ ॥ २,२५.२ ॥

पूर्वकर्मविपाकेन प्राणिनां वधबन्धनम् ।
विप्रादीनन्त्यजान्सर्वान्पापं मारयति ध्रुवम् ॥ २,२५.३ ॥

गर्भे नष्टे क्रिया नास्ति दुग्धं देयं मृते शिशौ ।
परं च पायसं क्षीरं दद्याद्वलविपत्तितः ॥ २,२५.४ ॥

एकादशाहं द्वादशाहं वृषं वृषविधिं विना ।
महादानविहीनं च कुमारे कृत्यमादिशेत् ॥ २,२५.५ ॥

कुमाराणां चैव बालानां भोजनं वस्त्रवेष्टनम् ।
बाले वा तरुणे वृद्धे घटो भवति वै मृते ॥ २,२५.६ ॥

भूमौ विनिः क्षिपेद्बालं द्विमासोनं द्विवार्षिकम् ।
ततः परं खगश्रेष्ठ देहदाहो विधोयते ॥ २,२५.७ ॥

शिशुरा दन्तजननाद्बालः स्याद्यावदाशिखम् ।
कथ्यते सर्वशास्त्रेषु कुमारो मौञ्जिबन्धनात् ॥ २,२५.८ ॥

शूद्रादीनां कथं कुर्यात्संशयो मौञ्जिवर्जनात् ।
गर्भाच्च नवमं हित्वा शिशुरामासषोडशम् ॥ २,२५.९ ॥

बालश्चाथ परञ्ज्ञेय आमाससप्तविंशति ।
आ पञ्च वर्षात्कौमारः पौगण्डो नवहांयनः ॥ २,२५.१० ॥

किशोरः षोडशाब्दः स्यात्ततो यौवनमादिशेत् ।
मृतोऽपि पञ्चमे वर्षे अवृतः सवृतोऽपि वा ॥ २,२५.११ ॥

पूर्वोक्तमेव कर्तव्यमीहते दशपिण्डकम् ।
स्वल्पकर्मप्रसङ्गाच्च स्वल्पाद्विषयबन्धनात् ॥ २,२५.१२ ॥

स्वल्षाद्वपुषि वस्त्राच्च क्रियां स्वल्पामपीच्छति ।
यावदुपचयो जन्तुर्यावद्विषयवेष्टितः ॥ २,२५.१३ ॥

यद्यद्यस्योपजीव्यं स्यात्तत्तद्देयमिहेच्छति ।

ब्रह्मबीजोद्भवाः पुत्रा देवर्षीणां च वल्लभाः ॥ २,२५.१४ ॥

यमेन यमदूतैश्च शास्यन्ते निश्चितं खग ।
बालो वृद्धो युबा वापि घटमिच्छन्ति देहिनः ॥ २,२५.१५ ॥

सुखं दुः खं सदा वेत्ति देही वै सर्वगस्त्विह ।
परित्यज्य तदात्मानं जीर्णां त्वचमिवोरगः ॥ २,२५.१६ ॥

अङ्गुष्ठमात्रः पुरुषो वायुभूतः क्षुधान्वितः ।
तस्माद्देयानि दानानि मृते बाले सुनिश्चितम् ॥ २,२५.१७ ॥

जन्मतः पञ्च वर्षाणि भुङ्क्ते दत्तमसंस्कृतम् ।
पञ्चवर्षाधिके बाले विपत्तिर्यदि जायते ॥ २,२५.१८ ॥

वृषोत्सर्गादिकं कर्म सपिण्डीकरणं विना ।
द्वादशे हनि सम्प्राप्ते कुर्याच्छ्राद्धानि षोडश ॥ २,२५.१९ ॥

पायसेन गुडेनापि पिण्डान्दद्याद्यथाक्रमम् ।
उदकुम्भप्रदानं च पद (उप) दानानि यानि च ॥ २,२५.२० ॥

भोजनानि द्विजे दद्यान्महादानादि शक्तितः ।
दीपदानादि यत्किञ्चित्पञ्चवर्षाधिके सदा ॥ २,२५.२१ ॥

कर्तव्यं च खगश्रेष्ठ व्रतात्प्राक्प्रेततृप्तये ।
यदा नक्रियते सर्वं मुद्गलत्वं स गच्छति ॥ २,२५.२२ ॥

व्रतात्प्राङ्गेव देयं तु ततः पितृगणस्य च ।
स्वाहाकारेण वै कुर्यादेकोद्दिष्टानि षोडश ॥ २,२५.२३ ॥

ऋजुदर्भैस्तिलैः शुक्लैः प्राचीनावीति निश्चितम् ।
अपसव्यं च कर्तव्यं कृते यान्ति परां गतिम् ॥ २,२५.२४ ॥

पुनश्चिरायुषो भूत्वा जायन्ते स्वकुले ध्रुवम् ।
सर्वसौख्यप्रदः पुत्रः पित्रोः प्रीतिविवर्धनः ॥ २,२५.२५ ॥

आकाशमेकं हि यथा चन्द्रादित्यौ यथैकतः ।
घटादिषु पृथक्सर्वं पश्य रूपं च तत्समम् ॥ २,२५.२६ ॥

आत्मा तथैव सर्वेषु पुत्त्रेषु विचरेत्सदा ।
या यस्य प्रकृतिः पूर्वं शुक्रशोणितसङ्गमे ॥ २,२५.२७ ॥

सा (स) तेन भावयोगेन पुत्त्रास्तत्कर्मकारिणः ।

पितृरूपं समादाय कस्यचिज्जायते सुतः ॥ २,२५.२८ ॥

पितृतः कोऽपि रूपाढ्यो गुणज्ञो दानतत्परः ।
सदृशः कोऽपि लोकेऽस्मिन्न भूतो न भविष्यति ॥ २,२५.२९ ॥

अन्धादन्धो न भवति मूकान्मूको न जायते ।
बधिराद्बधिरो नैव विद्यावान्विदुषो न हि ।
अनुरूपा न दृश्यन्ते मदीयं वचनं शृणु ॥ २,२५.३० ॥

गरुड उवाच ।
औरसक्षेत्रजाद्याश्च पुत्रा दशविधाः स्मृताः ।
संगृहीतः सुतो यस्तु दासीपुत्रश्च तेन किम् ॥ २,२५.३१ ॥

काङ्कां गतिमवाप्नोति जायो मृत्युवशं गतः ।
भवेन्न दुहिता यस्य न दौहित्रो न वा सुतः ॥ २,२५.३२ ॥

श्राद्धं तस्य कथं कार्यं विधिना केन तद्भवेत् ।
श्रीभगवानुवाच ।
मुखं दृष्ट्वा तु पुत्रस्य मुच्यते पैतृकादृणात् ॥ २,२५.३३ ॥

पौत्रस्य दर्शनाज्जन्तुर्मुच्यते चः ऋणत्रयात् ।
लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्र प्रपौत्रकैः ॥ २,२५.३४ ॥

अन्यक्षेत्रोद्भवाद्या ये भुक्तिमात्रप्रदाः सुताः ।
कुर्वीत पार्वणं श्राद्धमारैसो विधिवत्सुतः ॥ २,२५.३५ ॥

कुर्वन्त्यन्ये सुताः श्राद्धमे कोद्दिष्टं न पार्वणम् ।
ब्राह्मोढाजस्तून्नयति संगृहीतस्त्वधो नयेत् ।
श्राद्धं सांवत्सरं कुर्वञ्जायते नरकाय वै ॥ २,२५.३६ ॥

सर्वदानानि देयानि ह्यन्न दानादृते खग ।
संगृहीतः सुतः कुर्यादेकोद्दिष्टं न पार्वणम् ॥ २,२५.३७ ॥

प्रत्यब्दं पितृमातृभ्यां श्राद्धं दत्त्वा न लिप्यते ।
एकोद्दिष्टं परित्यज्य पार्वणं कुरुते यदि ॥ २,२५.३८ ॥

आत्मानं च पितॄंश्चैव स नयेद्यममन्दिरम् ।
संगृहीतस्तु यः केचिद्दासीपुत्रादयश्च ये ॥ २,२५.३९ ॥

तीर्थे कुर्युः पितृश्राद्धं दानं (मासं) दद्युर्द्विजन्मने ।
संगृहीतसुतो भूत्वा पाकं वा यः प्रयच्छति ॥ २,२५.४० ॥

वृथा श्राद्धं विजानीयाच्छूद्रान्नेन यथा द्विजः ।
न प्रीणयति तच्छ्राद्धं पितामहमुखान्पितॄन् ।
एवं ज्ञात्वा स्वगश्रेष्ठ हीनजातीन्सुतांस्त्यजेत् ॥ २,२५.४१ ॥

(ब्राह्मण्यां ब्राह्मणाज्जातश्चाण्डालादधमः स्मृतः ) ।
यस्तु प्रव्रजिताज्जातो ब्राह्मण्यां शूद्रतश्च यः ॥ २,२५.४२ ॥

द्वावेतौ विद्धि चाण्डालौ सगोत्राद्यस्तु जायते ।
स्वर्यातिविहितान्पुत्रः समुत्पाद्य खगेश्वर ॥ २,२५.४३ ॥

तैः सुवृत्तैः सुखं प्राप्यं कुवृत्तैर्नरकं व्रजेत् ।
हीनजातिसमुद्भूतैः सुवृत्तैः सुखमेधते ॥ २,२५.४४ ॥

कलिकलुषविमुक्तः पूजितः सिद्धसङ्घैरमरचमरमालावीज्यमानोऽप्सरोभिः ।
पितृशतमपि बन्धून्पुत्त्रपौत्त्रप्रपौत्त्रानपि नरकनिमग्नानुद्धरेदेक एव ॥ २,२५.४५ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धमकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसवादे मृतबालान्त्येष्टिभिन्नाभिन्नसुतकृतान्त्येष्ट्योर्वर्णनं नाम पञ्चविंशोऽध्यायः

श्रीगरुडमाहपुराणम् २६
गरुड उवाच ।
सत्यं ब्रूहि सुरश्रेष्ठ कृपां कृत्वा मयि प्रभो ।
मृतानां चैव जन्तूनां कदा कुर्यात्सपिण्डनम् ॥ २,२६.१ ॥

सपिण्डत्वे कुतो यान्ति असपिण्डे कुतो गतिः ।
केनैव सहपिण्डत्वं स्त्रीपुसोर्वक्तुमर्हसि ॥ २,२६.२ ॥

स्त्रीपुमांशौ सहैकत्वं पाप्नुतः कथमुत्तमम् ।
जीवेद्भर्तरि नारीणां सपिण्डीकरणं कुतः ॥ २,२६.३ ॥

भर्तृलोकं कथं यान्ति स्वर्गलोकं सुरेश्वर ।
अग्न्यारोहे कथं श्राद्धं वृषोत्सर्गः कथं भवेत् ॥ २,२६.४ ॥

घटदानं कथं कार्यं सपिण्डीकरणे कृते ।
कथयस्व प्रसादेन हीताय जगतां प्रभो ॥ २,२६.५ ॥

श्रीभगवानुवाच ।
यथावत्कथयिष्यामि सपिण्डीकरणं खग ।
वर्षं यावत्खगश्रेष्ठ यदाचरति मानवः ॥ २,२६.६ ॥

सपिण्डने ततो वृत्ते पितृलोकं स गच्छति ।
तस्मात्पुत्रेण कर्तव्यं सपिण्डीकरणं पितुः ॥ २,२६.७ ॥

संवत्सरे तु सम्पूर्णे कुर्यात्पिण्ड प्रवेशनम् ।
पिण्डप्रवेशविधना तस्य नित्यं मृताह्निकम् ॥ २,२६.८ ॥

निश्चितं पक्षिशार्दूल वर्षान्ते पिण्डमेलनम् ।
सहपिण्डे कृते प्रेतस्ततो याति परां गतिम् ।
तन्नाम सम्परित्यज्य ततः पितृगणो भवेत् ॥ २,२६.९ ॥

त्रिपक्षे वापि षण्मासे मेलयेत्प्रपितामहैः ।
ज्ञात्वा वृद्धिविवाहादि स्वगोत्रविहितानि च ॥ २,२६.१० ॥

विवाहं नैव कुर्वीत मृते च गृहमेधिनि ।
भिक्षुर्भिक्षां न गृह्णाति यावत्कुर्यात्सपिण्डनम् ॥ २,२६.११ ॥

स्वगोत्रेऽप्यशुचिस्तावद्यावत्पिण्डं न मेलयेत् ।
मेलनात्प्रेतशब्दस्तु निवर्तेत खगेश्वर ॥ २,२६.१२ ॥

आनन्त्यात्कुलधर्माणां पुंसाञ्चैवायुषः क्षयात् ।
अस्थिरत्वाच्छरीरस्य द्वादशाहः प्रशस्यते ॥ २,२६.१३ ॥

निरग्निकः साग्निको वा द्वादशाहे सपिण्डयेत् ॥ २,२६.१४ ॥

द्वादशाहे त्रिपक्षे वा षण्मासे वत्सरेऽपि वा ।
सपिण्डीकरणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ २,२६.१५ ॥

सपुत्रस्य न कर्तव्यमेकोद्दिष्टं कदाचन ।
सपिण्डीकरणादूर्ध्वं यत्रयत्र प्रदीयते ॥ २,२६.१६ ॥

तत्रतत्र त्रयं कार्यमन्यथा पितृघातकः ।
त्रिभिः कुर्यादशक्तश्च पार्वणं मुनिनोदितम् ॥ २,२६.१७ ॥

तद्दिने तद्दिने कुर्यात्पितामहमुखान्यतः ।
अज्ञानाद्दिनमासानां तस्मात्पार्वणमिष्यते ॥ २,२६.१८ ॥

अनुत्पन्नशरीरस्य न दानं पितृभिः सह ।
एतैः षोडशभिः श्राद्धैः प्रेतो मुक्तस्तु जायते ॥ २,२६.१९ ॥

अपुत्रस्य सपिण्डत्वं नैव कुर्यात्स्त्रियोऽपि वा ।
यावज्जीव च सद्भत्र्या न कुर्यात्सहपिण्डताम् ॥ २,२६.२० ॥

ब्राह्मादिषु विवाहेषु या वधूरिह संस्कृता ।
भर्तृगोत्रेण कर्तव्यास्तस्याः पिण्डोदकक्रियाः ॥ २,२६.२१ ॥

आसुरादिविवा हेषु या व्यूढा कन्यका भवेत् ।
तस्यास्तु पितृगोत्रेण कुर्यात्पिण्डोदकक्रियाः ॥ २,२६.२२ ॥

पितुः पुत्रेण कर्तव्यं सपिण्डीकरणं सदा ।
पुत्राभावे तु पत्नी स्यात्पत्न्यभावे सहोदरः ॥ २,२६.२३ ॥

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सपिण्डनक्रियां कृत्वा कुर्यान्नान्दीमुखं ततः ॥ २,२६.२४ ॥

ज्येष्ठस्यैव कनिष्ठेन भ्रातृपुत्रेण भार्यया ।
सपिण्डीकरणं कार्यं पुत्रहीने नरे खग ॥ २,२६.२५ ॥

भ्रातृणामेकजातानामेकश्चेत्पुत्रवान् भवेत् ।
सर्वेते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ २,२६.२६ ॥

सर्वेषां पुत्रहीनानां पत्नी कुर्यात्सपिण्डनम् ।
ऋत्विजा कारयेद्वापि पुरोहितमथापि वा ॥ २,२६.२७ ॥

कृतचूडोपनीतश्च पितुः श्राद्धं समाचरेत् ।

उच्चारयेत्स्वधाकारं न तु वेदाक्षराण्यसौ ॥ २,२६.२८ ॥

भर्त्रादिभिस्त्रिभिः कार्यं सपिण्डीकरणं स्त्रियाः ।
पितृव्यभ्रातृपुत्रेण सोदरेण कनीयसा ॥ २,२६.२९ ॥

अर्वाक्संवत्सरात्सन्धौ पूर्णे संवत्सरेऽपि वा ।
ये सपिण्डीकृताः प्रेतास्तेषां न स्यात्पृथक्क्रिया ॥ २,२६.३० ॥

सपिण्डने कृते वत्स पृथक्त्वं तु विगर्हितम् ।
यस्तु कुर्यात्पृथक्पिण्डं पितृहा सोऽभिजायते ॥ २,२६.३१ ॥

सपिण्डीकरणे वृत्ते पृथक्त्वं नोपपद्यते ।
पृथक्पिण्डे कृते पश्चात्पुनः कुर्यात्सपिण्डनम् ॥ २,२६.३२ ॥

सपिण्डीकरणं कृत्वा एकोद्दिष्टं करोति यः ।
आत्मानं च तथा प्रेतं स नयेद्यमशासनम् ॥ २,२६.३३ ॥

वर्षं यावत्क्रिया कार्या नामगोत्रेण धीमता ।
घटादि भोजनं नित्यं पददानानि यानि च ।
सपिण्डीकरणे वृत्ते एकस्यैव तु दापयेत् ॥ २,२६.३४ ॥

अन्नं पानीयसहितं संख्यां कृत्वाब्दिकस्य च ।
दातव्यं ब्राह्मणे पक्षिञ्जलपूर्णघटादिकम् ॥ २,२६.३५ ॥

पिण्डान्ते तस्य सकला वर्षवृत्तिः स्वशक्तितः ।
दिव्यदेहो विमानस्थः सुखं याति यमालयम् ॥ २,२६.३६ ॥

जीवमाने च पितरि न हि पुत्रे सपिण्डता ।
स्त्रीणां सपिण्डनं नास्ति तथा भर्तरि जीवति ॥ २,२६.३७ ॥

हुताशं या समारूढा चतुर्थेऽह्नि पतिव्रता ।
तस्या भर्तृदिने कार्यं वृषोत्सर्गादिकं च यत् ॥ २,२६.३८ ॥

पुत्रिका पतिगोत्रा स्यादधस्तात्पुत्रजन्मनः ।
पुत्रोत्पत्तेः परस्तात्सा पितृगोत्रं व्रजेत्पुनः ॥ २,२६.३९ ॥

पतिपत्न्योः सदैकत्वं हुताशं याधिरोहति ।
पुत्रेणैव पृथक्श्राद्धं क्षयाख्ये तस्य वासरे ॥ २,२६.४० ॥

अपुत्रौ चेन्मृतौ स्यातामेकचित्यां समेऽहनि ।
पृथक्श्राद्धानि कुर्वीत सापिड्यं पतिना सह ॥ २,२६.४१ ॥

पृथक्पृथक्च पिण्डेन दम्पती पतिना सह ।
न लिप्यते महादोषैरेतत्सत्यं वचो मम ॥ २,२६.४२ ॥

एकचित्यां समारूढौ दम्पती निधनं गतौ ।
एकपाकं प्रकुर्वीत पिण्डान्दद्यात्पृथक्पृथक् ॥ २,२६.४३ ॥

एकादशे वृषोत्सर्गं प्रेतश्राद्धानि षोडश ।
घटादिपददानानि महादानानि यानि च ।
वर्षं यावत्पृथक्कुर्यात्प्रेतस्तृप्तिं व्रजेच्चिरम् ॥ २,२६.४४ ॥

एकगोत्रे मृतानां तु स्त्रिया वा पुरुषस्य वा ।
स्थण्डिलं चैकतः कुर्याद्धोमं कुर्यात्पृथक्पृथक् ॥ २,२६.४५ ॥

एकादशेऽह्नि यच्छ्राद्धं पृथक्पिण्डाश्च भोजनम् ।
पाकैरेन पतिस्त्रीणामन्येषां च विगर्हितम् ॥ २,२६.४६ ॥

एकेनैव तु पाकेन श्राद्धानि कुरुते सुतः ।
एकं तु विकिरं कुर्यात्पिण्डान्दद्यद्बहूनपि ।
तीर्थे चापरपक्षे वा चन्द्रसूर्यग्रहेऽपि वा ॥ २,२६.४७ ॥

नारी भर्तारमासाद्य कुणपं दहते यदा ।
अग्निर्दहति गात्राणि आत्मानं नैव पीडयेत् ॥ २,२६.४८ ॥

दह्यते ध्मायमानानां धातूनां हि यथा मलम् ।
तथा नारी दहेद्देहं हुताशे ह्यमृतोपमे ॥ २,२६.४९ ॥

दिव्यादौ दिव्यदेहस्तु शुद्धो भवति पूरुषः ।
तप्ततैलेन लोहेन वह्निना नैव दह्यते ॥ २,२६.५० ॥

तथा सा पतिसंयुक्ता दह्यते न कदाचन ।
अन्तरात्मा मृते तस्मिन्मृतोऽप्येकत्वमागतः ॥ २,२६.५१ ॥

भर्तृसंगं परित्यज्य अन्यत्र म्रियते यदि ।
भर्तृलोकं न सा याति यावदाभूतसंप्लवम् ॥ २,२६.५२ ॥

लक्ष्मीयुतान्परित्यज्य मातरं पितरं तथा ।
मृतं पतिमनुव्रज्य सा चिरं सुखमेधते ॥ २,२६.५३ ॥

दिव्यवर्षप्रमाणेन तिस्रः कोट्योर्ऽद्धकोटयः ।
तावत्कालं वसेत्स्वर्गे नक्षत्रैः सह सर्वदा ॥ २,२६.५४ ॥

तदन्ते चरते लोके कुले भवति भोगिनाम् ।

सा हि लब्धमहाप्रीतिर्भर्त्रा सह पतिव्रता ॥ २,२६.५५ ॥

एवं न कुरुते नारी धर्मोढा पतिसंगमम् ।
जन्मजन्मनि दुः खार्तादुः शीलाप्रियवादिनी ॥ २,२६.५६ ॥

वल्गुली गृहसोधा वा गोधा वा द्विमुखी भवेत् ।
स्वभर्तारं परित्यज्य परपुंसोनुवर्तिनी ॥ २,२६.५७ ॥

तस्मात्सर्वप्रयत्नेन स्वपतिं स्त्री निषेवते ।
मनसा कर्मणा वाचा मृतं जीवन्तमेव वा ॥ २,२६.५८ ॥

जीवमाने मृते वापि किल्बिषं कुरुते तु या ।
स च वैधव्यमाप्नोति जन्मजन्मनि दुर्भगा ॥ २,२६.५९ ॥

यद्देवेभ्यो यत्पितृभ्यः श्रद्धयैव प्रदीयते ।
तत्फलं भर्तृपूजातः कुर्याद्भर्त्रर्चनं ततः ॥ २,२६.६० ॥

एवं कृते खगश्रेष्ठ पितृलोके चिरं वसेत् ।
यावदादित्यचन्द्रौ च तावद्देवसमा दिवि ॥ २,२६.६१ ॥

पुनश्चिरायुषो भूत्वा जायन्ते विपुले कुले ।
पतिव्रता यथा नारी भर्तृदुःखं न विन्दति ॥ २,२६.६२ ॥

सर्वमेतद्धि कथितं मया तव खगेश्वर ।
विशेषं कथयिष्यामि मृतस्यैव सुखप्रदम् ॥ २,२६.६३ ॥

द्वादशाहे कृतं सर्वं वर्षं यावत्सपिण्डनम् ।
पुनः कुर्यात्सदा नित्यं घटान्नं प्रतिमासिकम् ॥ २,२६.६४ ॥

कृतस्य करणं नास्ति प्रेतकार्यादृते खग ।
यः करोति नरः कश्चित्कृत्पूर्वं विनश्यति ॥ २,२६.६५ ॥

मृतस्यैव पुनः कुर्यात्प्रेतोऽक्षय्यमवाप्नुयात् ।
प्रतिमासं घटा देया सोदना जलपूरिताः ॥ २,२६.६६ ॥

अर्वाक्च वृद्धेः करणाच्च तार्क्ष्य सपिण्डनं यः कुरुते हि पुत्रः ।
तथापि मासं प्रतिपिण्डमेकमन्नं च कुम्भं सजलं च दद्यात् ॥ २,२६.६७ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डेद्वितीयांशे धर्मकाण्डे श्रीकृष्णगरुडसंवादे प्रेतकल्पे सपिण्डननिरूपणं नाम षड्विंशोऽध्यायः

ताक्ष्र्य उवाच ।

कथं प्रेता वसन्त्यत्र कीदृग्रूपा भवन्ति ते ।

महाप्रेताः पिशाचाश्च कैःकैः कर्मफलैर्विभो ।

सर्वेषामनुकम्पार्थं ब्रूहि मे मधुसूदन ॥ २,२७.१ ॥

प्रेतत्वान्मुच्यते येन दानेन च शुभे न च ।

तन्मे कथय देवेश मम चेदिच्छसि प्रियम् ॥ २,२७.२ ॥

श्रीकृष्ण उवाच ।

साधु पृष्टं त्वया ताक्ष्र्य मानुषाणां हिताय वै ।

शृणुचावहितो भूत्वा यद्वच्मि प्रेतलक्षणम् ॥ २,२७.३ ॥

गुह्याद्गुह्यतरं ह्येतन्नाख्येयं यस्य कस्यचित् ।

भक्तस्त्वं हि महाबाहो तेन ते कथयाम्यहम् ॥ २,२७.४ ॥

पुरा त्रेतायुगे तात राजासीद्बभ्रुवाहनः ।

महोदयपुरे रम्ये धर्मनिष्ठो महाबलः ॥ २,२७.५ ॥

यज्वा दानपतिः श्रीमान्ब्रह्मण्यः साधुसंमतः ।

शीलाचारगुणोपेतो दयादाक्षिण्यसंयुतः ॥ २,२७.६ ॥

प्रजाः पालयते नित्यं पुत्रानिव महाबलः ।

क्षत्त्रधर्मरतो नित्यं स दण्ड्यान्दण्डयन्नृपः ॥ २,२७.७ ॥

स कदाचिन्महाबाहुः ससैन्योमृगयां गतः ।

वनं विवेश गहनं नानावृक्षसमन्वितम् ॥ २,२७.८ ॥

शार्दूलशतसंजुष्टं नानापक्षिनिनादितम् ।

वनमध्ये तदा राजा मृगं दूरादपश्यत ॥ २,२७.९ ॥

तेन विद्धो मृगोऽतीव बाणेन सुदृढेन च ।

बाणमादाय तं तस्य स वनेऽदर्शनं ययौ ॥ २,२७.१० ॥

कक्षे तच्छोणितस्त्रावात्स राजानुजगाम तम् ।

ततो मृगप्रसङ्गेन वनमन्यद्विवेश सः ॥ २,२७.११ ॥

क्षुत्क्षामकण्ठो नृपतिः श्रमसन्तापमूर्छितः ।

जलस्थानं समासाद्य साश्व एवावगाहत ॥ २,२७.१२ ॥
पीत्वा तदु दकं शीतं पद्मगन्धाधिवासितम् ।
तत उत्तीर्य सलिलाद्विमलाद्वभ्रुवाहनः ॥ २,२७.१३ ॥
न्यग्रोधवृक्षमासाद्य शीतच्छायं मनोहरम् ।
महाविटपिनं हृद्यं पक्षिसङ्घातनादितम् ॥ २,२७.१४ ॥
वनस्य तस्य सर्वस्य केतुभूतमिवोच्छ्रितम् ।
तं महातरुमासाद्य निषसाद महीपतिः ॥ २,२७.१५ ॥
अथ प्रेतं ददर्शासौ क्षुत्तृष्णाव्याकुलेन्द्रियम् ।
उत्कचं मलिनं कुब्जं (रूक्षं) निर्मांसं भीमदर्शनम् ॥ २,२७.१६ ॥
स्नायुबद्धास्थिचरणं धावमानमितस्ततः ।
अन्यैश्च बहुभिः प्रेतैः समन्तात्परिवारितम् ॥ २,२७.१७ ॥
तं दृष्ट्वा विकृतं घोरं विस्मितो बभ्रुवाहनः ।
प्रेतोऽपि दृष्ट्वा तां घोरामटवीमागतं नृपम् ॥ २,२७.१८ ॥
तदा हृष्टमना भूत्वा तस्यान्तिकमुपागतः ।
अब्रवीत्स तदा तार्क्ष्य प्रेतराजो नृपं वचः ॥ २,२७.१९ ॥
प्रेतभावो मया त्यक्तः प्राप्तोऽस्मि परमां गतिम् ।
त्वत्संयोगान्महाबाहो नास्तिधन्यतरो मम ॥ २,२७.२० ॥
नृपतिरुवाच ।
कृष्णवर्णः करालास्यस्त्वं प्रेत इव लक्ष्यसे ।
कथयस्व मम प्रीत्या यथैवं चासि तत्त्वतः ॥ २,२७.२१ ॥
तथा पृष्टः स वै राज्ञा प्रोवाच सकलं स्वकम् ॥ २,२७.२२ ॥
प्रेत उवाच ।
कथयामि नृपश्रेष्ठ सर्वमेवादितस्तव ।
प्रेतत्वे कारणं श्रुत्वा दयां कर्तुं ममार्हसि ॥ २,२७.२३ ॥
वैदिशं नाम नगरं सर्वसम्पत्समन्वितम् ।
नानाजनपदाकीर्णं नानारत्नसमाकुलम् ।
नानापुण्यसमायुक्तं नानावृक्षसमाकुलम् ॥ २,२७.२४ ॥
तत्राहं न्यवसं भूयो देवार्चनरतः सदा ।

वैश्यो जात्या सुदेवोऽहं नाम्ना विदितमस्तु ते ॥ २,२७.२५ ॥
हव्येन तर्पिता देवाः कव्येन पितरस्तथा ।
विविधैर्दानयोगैश्च विप्राः सन्तर्पिता मया ॥ २,२७.२६ ॥
आवाहाश्च विवाहाश्च मया वै सुनिवेशिताः ।
दीनानाथविशिष्टेभ्यो मया दत्तमनेकधा ॥ २,२७.२७ ॥
तत्सर्वं विफलं तात मम दैवादुपागतम् ।
यथा मे निष्फलं जातं सुकृतं तद्वदामि ते ॥ २,२७.२८ ॥
न मेऽस्ति सन्ततिस्तात न सुहृन्न च बान्धवः ।
न च मित्रं हि मे तादृग्यः कुर्यादौर्ध्वदैहिकम् ॥ २,२७.२९ ॥
प्रेतत्वं सुस्थिरं तेन मम जातं नृपोत्तम ।
एकादशं त्रिपक्षं च षाण्मासिकमथाब्दिकम् ।
प्रतिमास्यानि चान्यानि एवं श्राद्धानि षोडश ॥ २,२७.३० ॥
यस्यैतानि न दीयन्ते प्रेतश्राद्धानि भूपते ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ २,२७.३१ ॥
एवं ज्ञात्वा महाराज प्रेतत्वादुद्धरस्व माम् ।
वर्णानां चापि सर्वेषां राजा बन्धुरिहोच्यते ॥ २,२७.३२ ॥
तन्मां तारय राजेन्द्र मणिरत्नं ददामि ते ।
यथा मम शुभावाप्तिर्भवेन्नृपवरोत्तम ॥ २,२७.३३ ॥
तथा कार्यं महाबाहो कृपा यदि मयीष्यते ।
आत्मनश्च कुरु क्षिप्रं सर्वमेवौर्ध्वदैहिकम् ॥ २,२७.३४ ॥
नृपतिरुवाच ।
कथं प्रेता भवन्तीह कृतैरप्यौर्ध्वदैहिकैः ।
पिशाचाश्च भवन्तीह कर्मभिः कैश्च तद्वद ॥ २,२७.३५ ॥
प्रेत उवाच ।
देवद्रव्यं च ब्रह्मस्वं स्त्रीबालधनसञ्चयम् ।
ये हरन्ति नृपश्रेष्ठ प्रेतयोनिं व्रजन्ति ते ॥ २,२७.३६ ॥
तापसीं च सगोत्रां च अगम्यां ये भजन्ति हि ।
भवन्ति ते महाप्रेता अम्बुजानि हरन्ति ये ॥ २,२७.३७ ॥

प्रवालवज्रहर्तारो ये च वस्त्रापहारकाः ।

तथा हिरण्यहर्तारः संयुगेऽसन्मुखागताः ॥ २,२७.३८ ॥

कृतघ्ना नास्तिका रौद्रास्तथा साहसिका नराः ।

पञ्चयज्ञविनिर्मुक्ता महादानरताश्च ये ॥ २,२७.३९ ॥

स्वामिद्रोहकरा मित्रब्राह्मद्रोहकराश्च ये ।

तीर्थपापकरा राजञ्जायन्ते प्रेतयोनयः ।

एवमाद्या महाराज जायन्ते प्रेतयोनयः ॥ २,२७.४० ॥

राजोवाच ।

कथं मुक्ता भवन्तीह प्रेतत्वात्त्वं च तेऽपि च ।

कथं चापि मया कार्यमौर्ध्वदैहिकमात्मनः ।

विधिना केन तत्कार्यं सर्वमेतद्वदस्व मे ॥ २,२७.४१ ॥

प्रेत उवाच ।

शृणु राजेन्द्र संक्षेपाद्विधिं नारायणात्मकम् ।

सच्छास्त्रश्रवणं विष्णोः पूजा सज्जनसंगतिः ॥ २,२७.४२ ॥

प्रेतयोनिविनाशाय भवन्तीति मया श्रुतम् ।

अतो वक्ष्यामि ते विष्णुपूजां प्रेतत्वनाशिनीम् ॥ २,२७.४३ ॥

सुवर्णद्वयमाहृत्य मूर्तिं भूप प्रकल्पयेत् ।

नारायणस्य देवस्य सर्वाभरणभूषिताम् ॥ २,२७.४४ ॥

पीतवस्त्रयुगाच्छन्नां चन्दनागुरुचर्चिताम् ।

स्नापयेद्विविधैस्तोयैरधिवास्य यजेत्ततः ॥ २,२७.४५ ॥

पूर्वे तु श्रीधरं देवं दक्षिणे मधुसूदनम् ।

पश्चिमे वानमं देवमुत्तरे च गदाधरम् ॥ २,२७.४६ ॥

मध्ये पितामहं पूज्य तथा देवं महेश्वरम् ।

पूजयेच्च विधानेन गन्धपुष्पादिभिः पृथक् ॥ २,२७.४७ ॥

ततः प्रदक्षिणीकृत्य अग्नौ सन्तर्प्य देवताः ।

घृतेन दध्ना क्षीरेण विश्वान्देवांस्तथा नृप ॥ २,२७.४८ ॥

ततः स्नातो विनीतात्मा यजमानः समाहितः ।

नारायणाग्रे विधिवत्स्वक्रियामौर्ध्वदैहिकीम् ॥ २,२७.४९ ॥

आरभेत विनीतात्मा क्रोधलोभविवर्जितः ।

श्राद्धानि कुर्यात्सर्वाणि वृषस्योत्सर्जनं तथा ॥ २,२७.५० ॥

त्रयोदशानां विप्राणां वस्त्रच्छत्राण्युपानहौ ।

अङ्गुलीयकमुक्तानि भाजनासनभोजनैः ॥ २,२७.५१ ॥

सान्नाश्च सोदका देया घटाः प्रेतहिताय वै ।

शय्यादानमथो दत्त्वा घटं प्रेतस्य निर्वपेत् ॥ २,२७.५२ ॥

नारायणेति सन्नाम संपुटस्थं समर्चयेत् ।

एवं कृत्वाथ विधिवच्छुभाशुभफलं लभेत् ॥ २,२७.५३ ॥

राजोवाच ।

कथं प्रेतघटं कुर्याद्दद्यात्केन विधानतः ।

ब्रूहि सर्वानुकम्पार्थं घटं प्रेतविमुक्तिदम् ॥ २,२७.५४ ॥

प्रेत उवाच ।

साधु पृष्टं महाराज कथयामि निबोध ते ।

प्रेतत्वं न भवेद्येन दानेन सुदृढेन च ॥ २,२७.५५ ॥

दानं प्रेतघटं नाम सर्वाशुभविनाशनम् ।

दुर्लभं सर्वलोकानां दुर्गतिक्षयकारकम् ॥ २,२७.५६ ॥

सन्तप्तहाटकमयं तु घटं विधाय ब्रह्मेशकेशवयुतं सह लोकपालैः ।

क्षीराज्यपूर्णविवरं प्रणिपत्य भक्त्या विप्राय देहि तव दानशतैः किमन्यैः ॥ २,२७.५७ ॥

ब्रह्मा मध्ये तथा विष्णुः शङ्करः शङ्करोऽव्ययः ।

प्राच्यादिषु च तत्कण्ठे लोकपालान्क्रमेण तु ॥ २,२७.५८ ॥

सम्पूज्य विधिवद्राजन्धूपैः कुसुमचन्दनैः ।

ततो दुग्धाज्यसहितं घटं देयं हिरण्मयम् ॥ २,२७.५९ ॥

सर्वदानाधिकञ्चैतन्महापातकनाशनम् ।

कर्तव्यं श्रद्धया राजन्प्रेतत्वविनिवृत्तये ॥ २,२७.६० ॥

श्रीभागवानुवाच ।

एवं संजल्पतस्तस्य प्रेतेन नियतात्मनः ।

सेनाजगामानुपदं हस्त्यश्वरथसंकुला ॥ २,२७.६१ ॥

ततो बले समायाते दत्त्वा राज्ञे महामणिम् ।

नमस्कृत्य पुनः प्राथ्यर्य प्रेतोऽदर्शनमीयिवान् ॥ २,२७.६२ ॥

तस्माद्वनाद्विनिष्क्रम्य राजापि स्वपुरं ययौ ।

स्वपुरं स समासाद्य सर्वं तत्प्रेतभाषितम् ॥ २,२७.६३ ॥

चकार विधिवत्पक्षिन्नौर्ध्वदेहादिकं विधिम् ।

तस्य पुण्यप्रदानेन प्रेतो मुक्तो दिवं ययौ ॥ २,२७.६४ ॥

श्राद्धेन परदत्तेन गतः प्रेतोऽपि सद्गतिम् ।

किं पुनः पुत्रदत्तेन पिता यातीति चात्भुतम् ॥ २,२७.६५ ॥

इतिहासमिमं पुण्यं शृणोति श्रावयेच्च यः ।

न तौ प्रेतत्वमायातः पापाचारयुतावपि ॥ २,२७.६६ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे बभ्रुवाहनप्रेतसंवादे प्रेतत्वहेतुतन्निवृत्त्युपायनिरूपणं नाम सप्तविंशोऽध्यायः

---

श्रीगरुडमहापुराणम् २८
गरुड उवाच ।
सर्वेपामनुकम्पार्थं ब्रूहि मे मधुसूदन ।
प्रेतत्वान्मुच्यते येन दानेन सुकृतेन वा ॥ २,२८.१ ॥

शृकृष्ण उवाच ।
शृणु दानं प्रवक्ष्यामि सर्वाशु भविनाशनम् ।
सन्तप्तहाटकमयं घटकं विधाय ब्रह्मेशकेशवयुतं सह लोकपालैः ।
क्षीराज्यपूर्णविविरं प्रणिपत्य भक्त्या विप्राय देहि तव दानशतैः किमन्यैः ॥ २,२८.२ ॥

गरुड उवाच ।
किमेत्कथितं देव विस्तरेण वदस्व मे ।
आमुष्मिकीं क्रीयां देव उत्क्रान्तिसमयादनु ॥ २,२८.३ ॥

संसारे साधु मे नाथ ब्रूहि कृत्यं जनार्दन ।
यथा कार्या नरैः सम्यक्क्रिया चैवौर्ध्वदैहिकी ॥ २,२८.४ ॥

कथं प्रेता महाकाया रौद्ररूपा भयानकाः ।
कम्भवन्ति सुरश्रेष्ठ कर्मभिः कैः शुभाशुभैः ॥ २,२८.५ ॥

पिशाचाः सम्भवन्तीह कस्येदं कर्मणः फलम् ।
तन्मे कथय देवेश अहमिच्छामि वेदितुम् ॥ २,२८.६ ॥

भूम्यां प्रक्षिप्यते कस्मात्पञ्चरत्नं कुतो मुखे ।
अधस्ताच्च तिला दर्भाः पादौ याम्यां व्यवस्थिताः ॥ २,२८.७ ॥

किमर्थं मण्डलं भूमौ गोमयेनोपलिप्यते ।
किमर्थं स्मर्यते विष्णुः विष्णुसूक्तञ्च पठ्यते ॥ २,२८.८ ॥

किमर्थं पुत्रपुत्राश्च तस्य तिष्ठन्ति चाग्रतः ।
किमर्थं दीपदानञ्च किमर्थं विष्णुपूजनम् ॥ २,२८.९ ॥

किमर्थमातुरो दानं ददाति द्विजपुङ्गवे ।
बन्धून्मित्राण्यमित्रांश्च क्षमापयति तत्कथम् ॥ २,२८.१० ॥

तिला लोहं हिरण्यं च कार्पासं लवणं तथा ।
सप्तधान्यं क्षितिर्गावो दीयते केन हे तुना ॥ २,२८.११ ॥

कथं च म्रियते जन्तुर्मृतस्य च कुतो गतिः ।
अतिवाहशरीरं च कथं विश्रमते तदा ॥ २,२८.१२ ॥

शंव स्कन्धे वहेत्पुत्रो वह्निदाता च पौत्रकः ।

किमर्थं देव देवेश आज्येनाभ्यञ्जनं कुतः ॥ २,२८.१३ ॥

यमसूक्तं किमर्थं च उदीचीं दिशमाहरेत् ।
पानीयमेकवस्त्रेण सूर्यबिम्बनिरीक्षणम् ॥ २,२८.१४ ॥

यवसर्षपदूर्वाश्चपाषाणे निम्बचर्वणम् ।
वस्त्रं नरश्च नारी च विदध्यादधरोत्तरम् ॥ २,२८.१५ ॥

अन्नाद्यं गृहमागत्य भोक्तव्यं गोत्रिभिः सह ।
नवकानि च पिण्डानि किमर्थं वितरेत्सुतः ॥ २,२८.१६ ॥

किमर्थं चत्वरे दुग्धं पात्रे पक्वे च मृन्मये ।
काष्ठत्रयं गुणे बद्ध्वा कृत्वा रात्रौ चतुष्पथे ॥ २,२८.१७ ॥

निशायां दीयते दीपो यावदब्दं दिनेदिने ।
दाहोदकं किमर्थं च संवादः स्वजनैः सह ॥ २,२८.१८ ॥

भगवन्नतिवाहस्य नवपिण्डैस्तु किं भवेत् ।
कथं देवपितृभ्यश्च वाहस्यावाहनं कथम् ।
इदं च क्रियते देव कस्मात्पिण्डं प्रदापयेत् ॥ २,२८.१९ ॥

किं तत्प्रदीयते तस्य पिण्डदानादनन्तरम् ।
अस्थिसञ्चयनं चैव शय्यादानं किमर्थकम् ॥ २,२८.२० ॥

द्वितीयेऽह्नि कुतः स्नानं चतुर्थे साग्निके द्विजे ।
दशमे किं मलस्नानं कार्यं सर्वजनैः सह ॥ २,२८.२१ ॥

कस्मात्तैलोद्वर्तनं च स्कन्धवाहान् गृहं नयेत् ।
तैः समुद्वर्तनं चापि दद्युः स्थलजलाश्रये ॥ २,२८.२२ ॥

देशमेऽहनि यः पिण्डस्तं दद्यादामिषेण तु ।
पिण्डं चैकादशे कस्माद्वृषोत्सर्गः कथं भवेत् ॥ २,२८.२३ ॥

श्राद्धानि षोडशैतानि अब्दं यावत्कुतो वद ।
अन्नादिचोदकेनैव षष्ट्यधिकशतत्रयम् ॥ २,२८.२४ ॥

दिनेदिने च दातव्यं घटान्नं प्रेततृप्तये ।
प्राप्ते काले च म्रियते अनित्यो मानवः प्रभो ॥ २,२८.२५ ॥

छिद्रं तु नैव पश्यामि कुतो जीवः स निर्गतः ।
कुतो गच्छन्ति भूतानि पृथिव्यापो मनस्तथा ॥ २,२८.२६ ॥

तेजो वदस्व मे नाथ वायुराकाशमेव च ।
वायवश्चैव पञ्चैते कथं गच्छन्ति चाप्तये ॥ २,२८.२७ ॥

लोभमोहादयः पञ्च शरीरे चैव तस्कराः ।
तृष्णा कामोऽप्यहङ्कारः कुतो यान्ति जनार्दन ॥ २,२८.२८ ॥

पुण्यं वाप्यथ वापुण्यं यत्किञ्चित्सुकृतं तथा ।
नष्टे देहे कुतो यान्ति दानानि विविधानि च ॥ २,२८.२९ ॥

सपिण्डनं किमर्थं च पूर्णे संवत्सरेऽपि वा ।
प्रेतस्य मेलनं सार्धं कैः समं तत्र को विधिः ॥ २,२८.३० ॥

ये दग्धा ये त्वदग्धाश्च पतिता ये नराभुवि ।
यानि चान्यानि भूतानि तेषामन्ते भवेच्च किम् ॥ २,२८.३१ ॥

पापिनो ये दुराचारा मुद्गलत्वं च ये गताः ।
आत्मघाती ब्रह्महा च स्तेयी विश्वासघातकः ॥ २,२८.३२ ॥

कपिलां यः पिबेच्छूद्रो यः पठेद्वैदिकाक्षरम् ।
धारयेद्वा ब्रह्मसूत्रं का गतिस्तस्य माधव ॥ २,२८.३३ ॥

विप्रस्य ब्राह्मणी भार्या संगृही ता यदा भवेत् ।
तस्मात्पापाच्च भीतोऽहं तन्मे वद जगत्पते ।
सर्वमेतन्मया पृष्टो वद लोकहिताय वै ॥ २,२८.३४ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे और्ध्वदहिककर्मकालक्रियमाणनानादानादिफलप्रश्ननिरूपणं नामाष्टाविंशोऽध्यायः

श्रीगरुडमहापुराणम् २९
श्रीकृष्ण उवाच ।
साधु पृष्टं त्वया भद्र मानुषाणां हिताय वै ।
शृणुष्वावहितो भूत्वा सर्वमेवौर्ध्वदैहिकम् ॥ २,२९.१ ॥

कम्यग्विभेदरहितं श्रुतिस्मृतिसमुद्धृतम् ।
यन्न दृष्टं सुरैः सेन्द्रैर्योगिभिर्योगचिन्तकैः ॥ २,२९.२ ॥

गुह्याद्गुह्यतरं वत्स नाख्यातं कस्यचित्क्वचित् ।
भक्तस्त्वं हि महाभाग सर्वं ते कथयाम्यहम् ॥ २,२९.३ ॥

अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ।
येन केनाप्युपायेन कार्यं जन्म सुतस्य च ॥ २,२९.४ ॥

तारयेन्नरकात्पुत्रो यदि मोक्षो न विद्यते ।
दाहः पुत्रेण कर्तव्यो देयः पौत्रेण पावकः ॥ २,२९.५ ॥

तिलैर्दर्भैश्च भूम्यां वै कुटी धातुमती भवेत् ।
पञ्चरत्नानि वक्त्रे तु येन जीवः प्ररोहति ॥ २,२९.६ ॥

लिप्यात्तु गोमयैर्भूमिं तिलान्दर्भांश्च निः क्षिपेत् ।
तस्यामेवातुरो मुक्तः सर्वं दहति पातकम् ॥ २,२९.७ ॥

दर्भमूलीनयेत्स्वर्गं संस्थितं नात्र संशयः ।
दर्भास्तत्र हि ये भूम्यां तिलयुक्तान संशयः ॥ २,२९.८ ॥

सर्वत्र वसुधा पूता यत्र लेपो न विद्यते ।
यत्र लेपः स्थितस्तत्र पुनर्लेपेन शुध्यति ॥ २,२९.९ ॥

यातुधानाः पिशाचाश्च राक्षसाः क्रूरकर्मिणः ।
अलिप्ते आतुरं मुक्तं विशन्त्येते न संशयः ॥ २,२९.१० ॥

नित्यहोमं तथा श्राद्धं विप्राणां पादशोधनम् ।
मण्डलेन विना भूम्यां कुर्वन्त्येतच्च निष्फलम् ॥ २,२९.११ ॥

आतुरो मुच्यते नैव मण्डलेन विना भुवि ।
ब्रह्मा रुद्रश्च विष्णुश्च श्रीर्हुताशन एव च ।
मण्डले चोपतिष्ठन्तस्तस्मात्कुर्वीत मण्डलम् ॥ २,२९.१२ ॥

अन्यथा म्रियते यस्तु बालो वृद्धो युवापि वा ।
योन्यन्तरं स वै गच्छेत्क्रीडते वायुना सह ॥ २,२९.१३ ॥

मिश्रितं लोहताम्रं तु तथैव जन्म जायते ।
तस्मैवं वायुभूतस्य न श्राद्धं नोदक क्रिया ॥ २,२९.१४ ॥

मम स्वेदसमुद्भूतास्तिलास्ताक्ष्र्य पवित्रकाः ।
असुरा दानवा दैत्यास्तृप्यन्ति तिलदानतः ॥ २,२९.१५ ॥

तिलाः श्वेतास्तिलाः कृष्णास्तिला गोमूत्रसन्निभाः ।
ते मे दहन्तु पाषानि शरीरेण कृतानि च ॥ २,२९.१६ ॥

एक एव तिलद्रोणो हेमद्रोणतिलैः समः ।
तर्पणे दानहोमे च दत्तो भवति चाक्षयः ॥ २,२९.१७ ॥

दर्भा मल्लोमसम्भूतास्तिलाः स्वेदसमुद्भवाः ।
तृप्ताः स्युर्देवता दानैः श्राद्धेन पितरस्तथा ।
प्रयोगविधिना ब्रह्मा विश्वञ्चाप्युपजीवनात् ॥ २,२९.१८ ॥

सव्ययज्ञोपवीतेन ब्रह्माद्यास्तृप्तिमान्पुयुः ।
अपसव्येन तृप्यन्ति पितरो दिविदेवताः ॥ २,२९.१९ ॥

अपसव्यादितो ब्रह्मा दर्भमध्ये तु केशवः ।
दर्भाग्रे शङ्करं विद्यात्त्रयो देवाः कुशे स्थिताः ॥ २,२९.२० ॥

विप्रा मन्त्राः कुशा वह्निस्तुलसी च खगेश्वर ।
नैते निर्माल्यतां यान्ति क्रियमाणाः पुनः पुनः ॥ २,२९.२१ ॥

कुशाः पिण्डेषु निर्माल्याः ब्राह्मणाः प्रेतभोजने ।
मन्त्राः शूद्रेषु पतिताश्चितायाश्च हुताशनः ॥ २,२९.२२ ॥

तुलसी ब्राह्मणा गावो विष्णुरेकादशी खग ।
पञ्च प्रवहणान्येव भवाब्धौ मज्जतां सताम् ॥ २,२९.२३ ॥

विष्णुरेकादशी गीता तुलसीविप्रधेनवः ।
अपारे दुर्गसंकारे षट्पदी मुक्तिदायिनी ॥ २,२९.२४ ॥$

तिलाः पवित्रास्त्रिविधा दर्भाश्च तुलसीदालम् ।
निवारयन्ति चैतानि दुर्गतिं यान्तमातुरम् ॥ २,२९.२५ ॥

हस्ताभ्यामुद्धृतैर्दर्भैस्तोयेन प्रोक्षयेद्भुवम् ।
मृत्युकाले क्षिपेद्दर्भानातुरस्य करद्वये ॥ २,२९.२६ ॥

दर्भेषु क्षिप्यते योऽसौ दभस्तु परिवेष्टितः ।
विष्णुलोकं स वै याति मन्त्रहीनोऽपि मानवः ॥ २,२९.२७ ॥

दर्भमूलीगतो भूमौ दर्भपाणिस्तु यो मृतः ।
प्रायश्चित्तविशुद्धोऽसौ संसारेपारसागरे ॥ २,२९.२८ ॥

गोमयेनोपलिप्ते तु दर्भस्यास्तरणे स्थितः ।
तत्र दत्तेन दानेन सर्वं पापं व्यपोहति ॥ २,२९.२९ ॥

लवणं तद्रसं दिव्यं सर्वकामप्रदं नृणाम् ।
यस्मादन्नरसाः सर्वे नोत्कटा लवणं विना ॥ २,२९.३० ॥

पितॄणां च प्रियं भव्यं तस्मात्स्वर्गप्रदं भवेत् ।
विष्णुदेहसमुद्भूतो यतोऽयं लवणो रसः ॥ २,२९.३१ ॥

विशेषाल्लवणं दानं तेन शंसन्ति योगिनः ।
ब्राह्मण क्षत्त्रियविशां स्त्रीणां शूद्रजनस्य च ॥ २,२९.३२ ॥

आतुराणां यदा प्राणाः प्रयान्ति वसुधातले ।
लवणं तु तदा देयं द्बारस्योद्घाटनं दिवः ॥ २,२९.३३ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे प्रेतकल्पे धर्मकाण्डे श्रीकृष्णगरुडसंवादे और्ध्वदेहिककर्मणि पुत्रदर्भतिलतुलसीगोभूलेपताम्रपात्रदाना दीनामावश्यकत्वनिरूपणं नामैकोनत्रिंशोऽध्यायः

श्रीगरुडमहापुराणम् ३०
श्रीकृष्ण उवाच ।
शृणु ताक्ष्र्य परं गुह्यं दानानां दानमुत्तमम् ।
परमं सर्वदानानां परं गोप्यं दिवौकसाम् ॥ २,३०.१ ॥

देयमेकं महादानं कार्पासं चोत्तमोत्तमम् ।
येन दत्तेन प्रीयन्ते भूर्भुवः स्वरिति क्रमात् ॥ २,३०.२ ॥

ब्रह्माद्या देवताः सर्वाः कार्याच्च प्रीतिमाप्नुयुः ।
देयमेतन्महादानं प्रेतोद्धरणहेतवे ॥ २,३०.३ ॥

चिरं वसेद्रुद्रलोके ततो राजा भवेदिह ।
रूपवान्सुभगो वाग्मी श्रीमानतुल विक्रमः ।
यमलोकं विनिर्जित्य स्वर्गं ताक्ष्य स गच्छति ॥ २,३०.४ ॥

गां तिलांश्च क्षितं हेम यो ददाति द्विजन्मने ।
तस्य जन्मार्जित पापं तत्क्षणादेवनश्यति ॥ २,३०.५ ॥

तिला गावो महादानं महापातकनाशनम् ।
तद्द्वयं दीयते विप्रे नान्यवर्णे कदाचन ॥ २,३०.६ ॥

कल्पितं दीयते दानं तिला गावश्चमेदिनी ।
अन्येषु नैव वर्णेषु पोष्यवर्गे कदाचन ॥ २,३०.७ ॥

पोष्यवर्गे तथा स्त्रीषु दानं देयमकल्पितम् ।
आतुरे वोपरागे च द्वयं दानं विशिष्यते ।
आतुरे दीयते दानं तत्काले चोपतिष्ठति ॥ २,३०.८ ॥

जीवतस्तु पुनर्दत्तमुपतिष्ठत्यसंस्कृतम् ।
सत्यंसत्यं पुनः सत्यं यद्दत्तं विकलेन्द्रिये ॥ २,३०.९ ॥

यच्चानु मोदते पुत्रस्तच्च दानमनन्तकम् ।
अतो दद्यात्स पुत्रो वा यावज्जीवत्ससौ चिरम् ।
अतिवाहस्तथा प्रेतो भोगांश्च लभते यतः ॥ २,३०.१० ॥

अस्वस्था तुरकाले तु देहपाते क्षितिस्थिते ।
देहे तथातिवाहस्य परतः प्रीणनं भवेत् ॥ २,३०.११ ॥

पङ्गावन्धे च काणे च ह्यर्धोन्मीलितलोचने ।
तिलेषु दर्भान्संस्तीर्य दानमुक्तं तदक्षयम् ॥ २,३०.१२ ॥

तिला लौहं हिरण्यञ्च कार्पासं लवणं तथा ।

सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ॥ २,३०.१३ ॥

लोहदानाद्यमस्तुष्येद्धर्म राजस्तिलार्पणात् ।
लवणे दीयमाने तु न भयं विद्यते यमात् ॥ २,३०.१४ ॥

कर्पासस्य तु दानेन न भूतेभ्यो भयं भवेत् ।
तारयन्ति नरं गावस्त्रिविधाश्चैव पातकात् ॥ २,३०.१५ ॥

हेमदानात्सुखं स्वर्गे भूमिदानान्नृपो भवेत् ।
हेमभूमिप्रदानाच्च न पीडा नरके भवेत् ॥ २,३०.१६ ॥

सर्वेऽपि यमदूताश्च यमरूपा विभीषणाः ।
सर्वे ते वरदा यान्ति सप्तधान्येन प्रीणिताः ॥ २,३०.१७ ॥

विष्णोः स्मरणमात्रेण प्राप्यते परमा गतिः ।
एतत्ते सर्वमाख्यातं मर्त्यैर्या गतिराप्यते ॥ २,३०.१८ ॥

तस्मात्पुत्रं प्रशंसन्ति ददाति पितुराज्ञया ।
भूमिष्ठं पितरं दृष्ट्वा ह्यर्धोन्मीलितलोचनम् ॥ २,३०.१९ ॥

तस्मिन् काले सुतो यस्तु सर्वदानानि दापयेत् ।
गयाश्राद्धाद्विशिष्येत स पुत्रः कुलनन्दनः ॥ २,३०.२० ॥

स्वस्थानाच्चलितश्चासौ विकलस्य पितुस्तदा ।
पुत्रैर्यत्नेन कर्तव्या पितरं तारयन्ति ते ॥ २,३०.२१ ॥

किं दत्तैर्बहुभिर्दानैः पितुरन्त्येष्टिमाचरेत् ।
अश्वमेधो महायज्ञः कलां नार्हति षोडशीम् ॥ २,३०.२२ ॥

धर्मात्मा स नु पुत्रो वैदेवैरपि सुपूज्यते ।
दापयेद्यस्तु दानानि ह्यातुरं पितरं भुवि ॥ २,३०.२३ ॥

लोहदानञ्च दातव्यं भूमियुक्तेन पाणिना ।
यमं भीमञ्च नाप्नोति न गच्छेत्तस्य वेश्मनि ॥ २,३०.२४ ॥

कुठारो मुसलो दण्डः खड्गश्च च्छुरिका तथा ।
एतानि यमहस्तेषु दृश्यानि पापकर्मिणाम् ॥ २,३०.२५ ॥

तस्माल्लोहस्य दानन्तु ब्राह्मणायातुरो ददेत् ।
यमायुधानां सन्तुष्ट्यै दानमेतदुदाहृतम् ॥ २,३०.२६ ॥

गर्भस्थाः शिशवो ये च युवानः स्थविरास्तथा ।

एभिर्दानविशेषैस्तु निर्दहेयुः स्वपातकम् ॥ २,३०.२७ ॥

छुरिणः श्यामशबलौ षण्डामर्का उदुम्बराः ।
शबला श्यामदूता ये लोहदानेन प्रीणिताः ॥ २,३०.२८ ॥

पुत्राः पौत्रास्तथा बन्धुः सगोत्राः सुहृद्दस्तथा ।
ददते नातुरे दानं ब्रह्मघ्नैस्तु समा हि ते ॥ २,३०.२९ ॥

पञ्चत्वे भूमियुक्तस्य शृणु तस्य च या गतिः ।
अतिवाहः पुनः प्रेतोवर्षोर्ध्वं सुकृतं लभेत् ॥ २,३०.३० ॥

अग्नित्रयं त्रयो लोकास्त्रयो वेदास्त्रयोऽमराः ।
कालत्रयं त्रिसन्ध्यं च त्रयो वर्णास्त्रिशक्तयः ॥ २,३०.३१ ॥

पादादूर्ध्वं कटिं यावत्तावद्ब्रह्याधितिष्ठति ।
ग्रीवां यावद्धरिर्नाभेः शरीरे मनुजस्य च ॥ २,३०.३२ ॥

मस्तके तिष्ठतीशानो व्यक्ताव्यक्तो महेश्वरः ।
एकमूर्तेस्त्रयो भागा ब्रह्मा विष्णुहेश्वराः ॥ २,३०.३३ ॥

अहं प्राणः शरीरस्थो भूतग्रामचतुष्टये ।
धर्माधर्मे मतिं दद्यात्सुखदुःखे कृताकृते ॥ २,३०.३४ ॥

जन्तोर्वुद्धिं समास्थाय पूर्वमर्माधिवासिताम् ।
अहमेव तथा जीवान्प्रेरयामि च कर्मसु ।
स्वर्गं च नरकं मोक्षं प्रयान्ति प्राणिनो ध्रुवम् ॥ २,३०.३५ ॥

स्वर्गस्थं नरकस्थं वा श्राद्धे वाप्यायनं भवेत् ।
तस्माच्छ्राद्धानि कुर्वीत त्रिविधानि विचक्षणः ॥ २,३०.३६ ॥

मत्स्यं कर्मं च वाराहं नारसिंहञ्च वामनम् ।
रामं रामं च कृष्णं च बुद्धं चैव सकल्किनम् ।
एतानि दश नामानि स्मर्तव्यानि सदा बुधैः ॥ २,३०.३७ ॥

स्वर्गं जीवाः सुखं यान्ति च्युताः स्वर्गाच्च मानवाः ।
लब्ध्वा सुखं च वित्तं च दयादाक्षिण्यसंयुताः ।
पुत्रपौत्रैर्धनैराढ्या जीवेयुः शरदां शतम् ॥ २,३०.३८ ॥

आतुरे च ददेद्दानं विष्णुपूजाञ्च कारयेत् ।
अष्टाक्षरं तथा मन्त्रं जपेद्वा द्वादशाक्षरम् ॥ २,३०.३९ ॥

पूजयेच्छुक्लपुष्पैश्च नैवेद्यैर्घृतपाचितैः ।

तथा गन्धैश्च धूपैश्च श्रुतिस्मृतिमनूदितैः ॥ २,३०.४० ॥

विष्णुर्माता पिता विष्णुर्विष्णुः स्वजनबान्धवाः ।
यत्र विष्णुं न पश्यामि तेन वासेन किं मम ॥ २,३०.४१ ॥

जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके ।
ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत् ॥ २,३०.४२ ॥

वयमापो वयं पृथ्वी वयं दर्भा वयं तिलाः ।
वयं गावो वयं राजा वयं वायुर्वयं प्रजाः ॥ २,३०.४३ ॥

वयं हेम वयं धान्यं वयं मधु वयं घृतम् ।
वयं विप्रा वयं देवा वयं शम्भुश्च भूर्भुवः ॥ २,३०.४४ ॥

अहं दाता अहं ग्राही अहं यज्वा अहं क्रतुः ।
अहं हर्ता अहं धर्मो अहं पृथ्वी ह्यहं जलम् ॥ २,३०.४५ ॥

धर्माधर्मे मतिं दद्यां कर्मभिस्तु शुभाशुभैः ।
यत्कर्म क्रियते क्वापि पूर्वजन्मार्जितं खग ॥ २,३०.४६ ॥

धर्मे मतिमहं दद्यामधर्मेऽप्यहमेव च ।
यातनां कुरुते सोऽपि धर्मे मुक्तिं ददाम्यहम् ॥ २,३०.४७ ॥

मनुजानां हिता तार्क्ष्य अन्ते वैतरणी स्मृता ।
तयावमत्य पापौघं विष्णुलोकं स गच्छति ॥ २,३०.४८ ॥

बालत्वे यच्च कौमारे यच्च परिणतौ च यत् ।
सर्वावम्थाकृतं पापं यच्च जन्मान्तरेष्वपि ॥ २,३०.४९ ॥

यन्निशायां तथा प्रातर्यन्मध्याह्नापराह्नयोः ।
सन्ध्ययोर्यत्कृतं कर्म कर्मणा मनसा गिरा ॥ २,३०.५० ॥

दत्त्वा वरां सकृदपि कपिलां सर्वकामिकाम् ।
उद्धरेदन्तकाले स आत्मानं पापसञ्चयात् ॥ २,३०.५१ ॥

गावो ममाग्रतः सन्तु पृष्ठतः पार्श्वतस्तथा ।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥ २,३०.५२ ॥

या लक्ष्मीः सर्वभूतानां या च देवे व्यवस्थिता ।
धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ २,३०.५३ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे नानादाननिरूपणं नाम त्रिंसोऽध्यायः

श्रीगरुडमहापुराणम् ३१

श्रीविष्णुरुवाच ।
ये नराः पापसंयुक्तास्ते गच्छन्ति यमालयम् ।
नृणां मत्साक्षिकं दत्तमनन्तफलदं भवेत् ॥ २,३१.१ ॥

यावद्रजः प्रमाणाब्दंस्वर्गे तिष्ठति भूमिदः ।
अश्वारूढाश्च ते यान्ति ददते ये ह्युपानहौ ॥ २,३१.२ ॥

आतपे श्रमयोगेन न दह्यन्ते च कुत्रचित् ।
छत्त्रदानेन वै प्रेता विचरन्ति सुखं पथि ॥ २,३१.३ ॥

यमुद्दिश्य ददात्यन्नं तेन चाप्यायितो भवेत् ॥ २,३१.४ ॥

अन्धकारे महाघोरे अमूर्ते लक्ष्यवर्जिते ।
उद्द्योतेनैव ते यान्ति दीपदानेन मानवाः ॥ २,३१.५ ॥

आश्विने कर्तिके वापि माघे मृततिथावपि ।
चतुर्दश्याञ्च दीयेत दीपदानं सुखाय वै ॥ २,३१.६ ॥

प्रत्यहञ्च प्रदातव्यं मार्गे सुविषमे नरैः ।
यावत्संवत्सरं वापि प्रेतस्य सुखलिप्सया ॥ २,३१.७ ॥

कुले द्योतति शुद्धात्मा प्रकाशत्वं स गच्छति ।
ज्योतिर्मयोऽसौ पूज्योऽसौ दीपदानप्रदो नरः ॥ २,३१.८ ॥

प्राङ्मुखोदङ्मुखं दीपं देवागारे द्विजातये ।
कुर्याद्याम्यमुखं पित्रे अद्भिः सङ्कल्प्य सुस्थिरम् ॥ २,३१.९ ॥

सर्वोपहारयुक्तानि पदान्यत्र त्रयोदश ।
यो ददाति मृतस्येह जीवन्नप्यात्महेतवे ।
स गच्छति महामार्गे महाकष्टविवर्जितः ॥ २,३१.१० ॥

आसनं भाजनं भोज्यं दीयते यद्द्विजायते ।
सुखे न भुञ्जमानस्तु देन गच्छत्यलं पथि ॥ २,३१.११ ॥

कमण्डलुप्रदानेन तृषितः पिबते जलम् ॥ २,३१.१२ ॥

भाजनं वस्त्रदानञ्च कुसुमञ्चाङ्गुलीयकम् ।
एकादशा हे दातव्यं प्रेतोद्धरणहेतवे ॥ २,३१.१३ ॥

त्रयोदश पदानीत्थं प्रेतस्य शुभमिच्छता ।
दातव्यानि यथाशक्त्या प्रेतोऽसौ प्रीणितो भवेत् ॥ २,३१.१४ ॥

भोजना नि तिलांश्चैव उदकुम्भांस्त्रयोदश ।
मुद्रिकां वस्त्रयुग्मञ्च तया याति परां गतिम् ॥ २,३१.१५ ॥

योऽश्वं नावं गजं वापि ब्राह्मणे प्रतिपादयेत् ।
स महिम्नोऽनुसारेण तत्तत्सुखमुपाश्नुते ॥ २,३१.१६ ॥

नानालोकान् विचरति महिषीञ्च ददाति यः ।
यमपुत्रस्य या माता महिषी सुगतिप्रदा ॥ २,३१.१७ ॥

ताम्बूलं कुसुमं देयं याम्यानां हर्षवर्धनम् ।
तेन सम्प्रीणिताः सर्वे तस्मिन् क्लेशं न कुर्वते ॥ २,३१.१८ ॥

गोभूतिलहिरण्यानि दानान्याहुः स्वशक्तितः ॥ २,३१.१९ ॥

मृतोद्देशेन यो यद्याज्जलपात्रञ्च मृन्मयम् ।
उदपात्रसहस्रस्य फलमाप्नोति मानवः ॥ २,३१.२० ॥

यमदूता महारौद्राः करालाः कृष्णपिङ्गलाः ।
न भीषयन्ति तं याम्या वस्त्रदाने कृते सति ॥ २,३१.२१ ॥

मार्गे हि गच्छमानस्तु तृष्णार्तः श्रमपीडितः ।
घटान्नदानयोगेन सुखी भवति निश्चितम् ॥ २,३१.२२ ॥

शय्या दक्षिणया युक्ता आयुधाम्बरसंयुता ।
हैमश्रीपतिना युक्ता देया विप्राय शर्मणे ।
तथा प्रेतत्वमुक्तोऽसौ मोदते सह दैवतैः ॥ २,३१.२३ ॥

एतत्ते कथितं तार्क्ष्य दानमन्त्येष्टिकर्मजम् ।
अधुना कथयिष्येऽहमन्यदेहप्रवेशनम् ॥ २,३१.२४ ॥

जातस्य मृत्युलोके वै प्राणिनो मरणं ध्रुवम् ।
मृतिः कुर्यात्स्वधर्मेण यास्यतश्च परन्तप ॥ २,३१.२५ ॥

पूर्वकाले मृतानाञ्च प्राणिनाञ्च खगेश्वर ।
सूक्ष्मोभूत्वा त्वसौ वायुर्निर्गच्छत्यास्यमण्डलात् ॥ २,३१.२६ ॥

नवद्वारै रोमभिश्च जनानां तालुरन्ध्रके ।
पापिष्ठानामपानेन जीवो निष्क्रामति ध्रुवम् ॥ २,३१.२७ ॥

शरीरञ्च पतेत्पश्चान्निर्गते मरुतीश्वरे ।
वाताहतः पतत्येव निराधारो यथा द्रुमः ॥ २,३१.२८ ॥

पृथिव्यां लीयते पृथ्वी आपश्चैव तथाप्सु च ।
तेजस्तेजसि लीयते समीरणः समीरणे ।
आकाशे च तथा काशः सर्वव्यापी च शङ्करे ॥ २,३१.२९ ॥

तत्र कामस्तथा क्रोधः काये पञ्चेन्द्रियाणि च ।
एते तार्क्ष्य समाख्याता देहे तिष्ठन्ति तस्कराः ॥ २,३१.३० ॥

कामः क्रोधो ह्यहङ्कारो मनस्तत्रैव नायकः ।
संहारकश्च कालोऽयं पुण्यपापसमन्वितः ॥ २,३१.३१ ॥

जगतश्च स्वरूपन्तु निर्मितं स्वेन कर्मणा ।
पुनर्देहान्तरं याति सुकृतैर्दुष्कृतैर्नरः ॥ २,३१.३२ ॥

पञ्चेन्द्रियसमायुक्तं सकलैर्विष्यैः सह ।
प्रविशेत्स नवं देहं गृहे दग्धे यथा गृही ॥ २,३१.३३ ॥

शरीरे ये समासीना सम्भवेत्सर्वधातवः ।
षाट्कौशिको ह्ययं कायो माता पित्रोश्च धातवः ॥ २,३१.३४ ॥

सम्भवेयुस्तथा तार्क्ष्य सर्वे वाताश्च देहिनाम् ।
मूत्रं पुरीषं तद्योगा ये चान्ये व्याधयस्तथा ॥ २,३१.३५ ॥

अस्थि शुक्रं तथा स्नायुः देहेन सह दह्यते ।
एष ते कथितस्तार्क्ष्य विनाशः सर्वदेहिनाम् ॥ २,३१.३६ ॥

कथयामि पुनस्तेषां शरीरञ्च यथा भवेत् ।
एकस्तम्भं स्नायुबद्धं स्थूणाद्वयसमुद्धृतम् ॥ २,३१.३७ ॥

इन्द्रियैश्च समायुक्तं नवद्वारं शरीरकम् ।
विषयैश्च समाक्रान्तं कामक्रोधसमाकुलम् ॥ २,३१.३८ ॥

रागद्वेषसमाकीर्णं तृष्णादुर्गसुदुस्तरम् ।
लोभजालसमायुक्तं पुरं पुरुषसंज्ञितम् ॥ २,३१.३९ ॥

एतद्गुणसमायुक्तं शरीरं सर्वदेहिनाम् ।
तिष्ठन्ति देवताः सर्वा भुवनानि चतुर्दश ॥ २,३१.४० ॥

आत्मानं ये न जानन्ति ते नराः पशवः स्मृताः ।
एवमेतन्मयाख्यातं शरीरं ते चतुर्विधम् ॥ २,३१.४१ ॥

चतुरशीतिलक्षाणि निर्मिता योनयः पुरा ।
उद्भिज्जाः स्वेदजाश्चैव अण्डजाश्च जरायुजाः ॥ २,३१.४२ ॥

एतत्ते सर्वमाख्यातं यत्पृष्टोहं त्वयानघ ॥ २,३१.४३ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे प्रेतकल्पे श्रीकृष्णगरुडसंवादे दानफ लान्यदेहप्रवेशादिनिरूपणं नामैकत्रिंशोऽध्यायः

ताक्ष्र्य उवाच ।

कथमुत्पद्यते जन्तुर्भूतग्रामे चतुर्विधे ।

त्वचा रक्तं तथा मांसं मेदो मज्जास्थि जीवितम् ॥ २,३२.१ ॥

पादौ पाणी तथा गुह्यं जिह्वाकेशनखाः शिरः ।

सन्धिमार्गाश्च बहुशो रेखा नैकविधास्तथा ॥ २,३२.२ ॥

कामः क्रोधो भयं लज्जा मनो हर्षः सुखासुखम् ।

चित्रितं छिद्रितञ्चापि नानाजालेन वेष्टितम् ॥ २,३२.३ ॥

इन्द्रजालमिदं मन्ये संसारेऽसारसागरे ।

कर्ता कोऽत्र हृषीकेश संसारे दुः खसंकुले ॥ २,३२.४ ॥

श्रीविष्णुरुवाच ।

कथयामि परं गोप्यं कोशस्यास्य विनिर्णयम् ।

यस्य विज्ञानमात्रेण सर्वज्ञत्वं प्रज्यते ॥ २,३२.५ ॥

साधु पृष्टं त्वया लोके सदयं जीवकारणम् ।

वैनतेय शृणुष्व त्वमेकाग्रकृतमानसः ॥ २,३२.६ ॥

ऋतुकाले च नारीणां वर्ज्यं दिनचतुष्टयम् ।

यतस्तस्मिन् ब्रह्महत्यां पुरा वृत्रसमुत्थिताम् ॥ २,३२.७ ॥

ब्रह्मा शक्रात्समुत्तार्य चतुर्थांशेन दत्तवान् ।

तावन्नालोक्यते वक्त्रं पापं यावद्वपुः स्थितम् ॥ २,३२.८ ॥

प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ।

तृतीये रजकी ज्ञेया चतुर्थेऽहनि शुध्यति ॥ २,३२.९ ॥

सप्ताहात्पितृदेवानां भवेद्योग्या कृतार्चने ।

सप्ताहमध्ये यो गर्भस्तत्संम्भूतिर्मलिम्लुचा ॥ २,३२.१० ॥

निषकसमये पित्रोर्यादृक्चित्तविकल्पना ।

तादृग्गर्भसमुत्पत्तिर्जायते नात्र संशयः ॥ २,३२.११ ॥

युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।

पूर्वसप्तममुत्सृज्य तस्माद्युग्मासु संविशेत् ॥ २,३२.१२ ॥

षोडशर्तुर्निशाः स्त्रीणां सामान्यात्समुदाहृतः ।
या चतुर्दशमी रात्रिर्गर्भस्तिष्ठति तत्र चेत् ॥ २,३२.१३ ॥
गुणभाग्यनिधिः पुत्रस्तत्र जायेत धार्मिकः ।
सा निशा तत्र सामान्यैर्न लभ्येत खगाधिप ॥ २,३२.१४ ॥
प्रायशः सम्भवत्यत्र गर्भस्त्वष्टाहमध्यतः ।
पञ्चमेऽहनि नारीणां कार्यं माधुर्यभोजनम् ॥ २,३२.१५ ॥
कटुक्षारञ्च तीक्ष्णञ्च त्याज्यमुष्णञ्च दूरतः ।
तत्क्षेत्रमोषधीपात्रं बीजञ्चाप्यमृतायितम् ॥ २,३२.१६ ॥
तस्मिन्नुप्त्वा नरः स्वामी सम्यक्फलमवाप्नुयात् ।
तस्याश्चैवातपो वर्ज्य शीतलं केवलं चरेत् ॥ २,३२.१७ ॥
ताम्बूलपुष्पश्रीखण्डैः संयुक्तः शुचिवस्त्रभृत् ।
धर्ममादाय मनसि सुतल्पं संविशेत्पुमान् ॥ २,३२.१८ ॥
निषेकसमये यादृङ्नरचित्तविकल्पना ।
तादृक्स्वभावसम्भूतिर्जन्तुर्विशति कुक्षिगः ॥ २,३२.१९ ॥
शुक्रसोणितसंयोगे पिण्डोत्पत्तिः प्रजायते ।
वर्धते जठरे जन्तुस्तारापतिरिवाम्बरे ॥ २,३२.२० ॥
चैतन्यं बीजरूपं हि शुक्रे नित्यं व्यवस्थितम् ।
कामश्चित्तञ्च शुक्रञ्च यदा ह्येकत्वमाप्नुयुः ॥ २,३२.२१ ॥
तदा द्रावमवाप्नोति योषागर्भाशये नरः ।
रक्ताधिक्ये भवेन्नारी शुक्राधिक्ये भवेत्पुमान् ॥ २,३२.२२ ॥
शुक्रसोणितयो साम्ये गर्भाः षण्डत्वमाप्नुयुः ।
अहोरात्रेण कलिलं बुद्वदं पञ्चभिदिनैः ॥ २,३२.२३ ॥
चतुर्दशे भवेन्मांसं मिश्रधातुसमन्वितम् ।
घनं मांसञ्च विंशाहे गर्भस्थो वर्धते क्रमात् ॥ २,३२.२४ ॥
पञ्चविंशतिमे चाह्नि बलं पुष्टिश्च जायते ।
तथा मासे तु सम्पूर्णे पञ्चतत्त्वं निधारयेत् ॥ २,३२.२५ ॥
मासद्वये तु सञ्जाते त्वचा मेदश्च जायते ।
मज्जास्थीनि त्रिभिर्मासैः केशाङ्गुल्यश्चतुर्थके ॥ २,३२.२६ ॥

कर्णौ च नासिके वक्षो जायेरन्मासि पञ्चमे ।
कण्ठरन्ध्रोदरं षष्ठे गुह्यादिर्मासि सप्तमे ॥ २,३२.२७ ॥
अङ्गप्रत्यङ्गसम्पूर्णो गर्भो मासैरथाष्टभिः ।
अष्टमे चलते जीवो धात्रीगर्भे पुनः पुनः ।
नवमेमासि सम्प्राप्ते गर्भस्थौजौ दृढं भवेत् ॥ २,३२.२८ ॥
चिकित्सा जायते तस्य गर्भवासपरिक्षये ।
नारी वाथ नरो वाथ नपुंस्त्वं वाभिजायते ॥ २,३२.२९ ॥
शक्तित्रयं विशालाक्षं षाट्कौशिकसमायुतम् ।
पञ्चेन्द्रियसमोपेतं दशनाडीविभूषितम् ॥ २,३२.३० ॥
दशप्राणगुणोपेतं यो जानाति स योगवित् ।
मज्जास्थिशुक्रमांसानि रोम रक्तं बलं तथा ॥ २,३२.३१ ॥
षाट्कौशिकमिदं पिण्डं स्याज्जन्तोः पाञ्चभौतिकम् ।
नवमे दशमे मासि जायते पाञ्चभौतिकः ॥ २,३२.३२ ॥
सूतिवातैः समाकृष्टः पीडया विह्वलीकृतः ।
पुष्टो नाड्याः सुषुम्णाया योषिद्गर्भस्थितस्त्वरन् ॥ २,३२.३३ ॥

क्षितिर्वारि हविर्भोक्ता पवनाकाशमेव च ।
एभिर्भूतैः पीडितस्तु निबद्धः स्नायुबन्धनैः ॥ २,३२.३४ ॥
मूलभूता इमे प्रोक्ताः सप्त नाड्यन्तरे स्थिताः ।
त्वचास्थिनाड्यो रोमाणि मांसञ्चैवात्र पञ्चमम् ॥ २,३२.३५ ॥
एते पञ्च गुणाः प्रोक्ता मया भूमेः खगेश्वर ।
यथा पञ्च गुणाश्चापस्तथा तच्छृणु काश्यप ॥ २,३२.३६ ॥
लाला मूत्रं तथा शुक्रं मज्जार रक्तञ्च पञ्चमम् ।
आपः पञ्चगुणाः प्रोक्ता ज्ञातव्यास्ते प्रयत्नतः ॥ २,३२.३७ ॥
क्षुधा तृषा तथा निद्रा आलस्यं कान्तिरेव च ।
तेजः पञ्चगुणं प्रोक्तं ताक्ष्र्य सर्वत्रयोगिभिः ॥ २,३२.३८ ॥
रागद्वेषौ तथा लज्जा भयं मोहस्तथैव च ।
इत्येतत्कथितं ताक्ष्र्य वायुजं गुणपञ्चकम् ॥ २,३२.३९ ॥
आकुञ्चनं धावनञ्च लङ्घनञ्च प्रसारणम् ।
निरोधः पञ्चमः प्रोक्तो वायोः पञ्च गुणाः स्मृताः ॥ २,३२.४० ॥
घोषश्चिन्ता च गाम्भीर्यं श्रवणं सत्यसंक्रमः ।
आकाशस्य गुणाः पञ्च ज्ञात व्यास्ताक्ष्र्य यत्नतः ॥ २,३२.४१ ॥
श्रोत्रं त्वक्चक्षुषी जिह्वा नासा बुद्धीन्द्रियाणि च ।
पाणी पादौ गुदं प्राक्च गुह्यं कर्मेन्द्रियाणि च ॥ २,३२.४२ ॥
इडाच पिङ्गला चैव सुषुम्णा च तृतीयका ।
गान्धारी गजजिह्वा च पूषा चैव यसा तथा ॥ २,३२.४३ ॥
अलम्वुशा कुहूश्चैव शङ्खिनी दशमी स्मृता ।
पिण्ड मध्ये स्थिता ह्येताः प्रधाना दश नाडयः ॥ २,३२.४४ ॥
प्राणापानौ समानश्च उदानो व्यान एव च ।
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ॥ २,३२.४५ ॥
इत्येते वायवः प्रोक्ता दश देहेषु सुस्थिताः ।
केवलं भुक्तमन्नञ्च पुष्टिदं सर्वदेहिनाम् ॥ २,३२.४६ ॥
नयते प्राणदो वायुः शरीरे सर्वसन्धिषु ।
आहारो भुक्तमात्रस्तु वायुना क्रियते द्विधा ॥ २,३२.४७ ॥
स प्रविश्य गुहे सम्यक्पृथगन्नं पृथग्जलम् ।
ऊर्ध्वमग्नेर्जलं कृत्वा तदन्नञ्च जलोपरि ॥ २,३२.४८ ॥
अग्नेश्चाधः स्वयं प्राणस्तमग्निञ्च धमेच्छनैः ।
वायुना धम्यमानोऽग्निः पृथक्किट्टं पृथग्रसम् ॥ २,३२.४९ ॥
मलैर्द्वादशभिः किट्टं भिन्नं देहात्पृथग्भवेत् ।

कर्णाक्षिनासिका जिह्वा दन्तनाभिवपुर्गुदम् ॥ २,३२.५० ॥
नखा मलाश्रया ह्येते विण्मूत्रञ्चेत्यनन्तकम् ।
शुक्रशोणितसंयोगादेतत्षाट्कौशिकं स्मृतम् ॥ २,३२.५१ ॥
रोम्णां कोट्यस्तथा तिस्रोऽप्यर्धकोटि समन्विताः ।
द्वात्रिंशद्दशनाः प्रोक्ताः सामान्याद्विनतासुत ॥ २,३२.५२ ॥
सप्त लक्षाणि केशाः स्युर्नखाः प्रोक्तास्तु विंशतिः ।
मांसं पलसहस्रैकं सामान्याद्देहसंस्थितम् ॥ २,३२.५३ ॥
रक्तं पलशतं तार्क्ष्यं बुद्धमेव पुरातनैः ।
पलानि दश मेदश्च त्वचा चैव तु तत्समा ॥ २,३२.५४ ॥
पलद्वादशकं मज्जा महारक्तं पलत्रयम् ।
शुक्रं द्विकुडवं ज्ञेयं शोणितं कुडवं स्मृतम् ॥ २,३२.५५ ॥
श्लेष्माणश्च षडूर्ध्वञ्च विण्मूत्रं तत्प्रमाणतः ।
अस्थ्नां हि ह्यधिकं प्रोक्तं षष्ट्युत्तरशतत्रयात् ॥ २,३२.५६ ॥
एवं पिण्डः समाख्यातो वैभवं सम्प्रचक्ष्महे ।
सुखं दुः खं भयं क्षेमं कर्मणैव हि प्राप्यते ॥ २,३२.५७ ॥
अधोमुखं चोर्ध्वपादं गर्भाद्वायुः प्रकर्षति ।
तले तु करयोर्न्यस्य वर्धते जानुपार्श्वयोः ॥ २,३२.५८ ॥
अङ्गुष्ठौ चोपरि न्यस्तौ जान्वारेथ कराङ्गुली ।
जानुपृष्ठे तथा नेत्रे जानुमध्ये च नासिका ॥ २,३२.५९ ॥
एवं वृद्धिं क्रमाद्याति जन्तुः स्त्रीगर्भसंस्थितः ।
काठिन्यमस्थीन्यायान्ति भुक्तपीतेन जीवति ॥ २,३२.६० ॥
नाडी वाप्यायनी नाम नाभ्यां तत्र निबध्यते ।
स्त्रीणां तथान्त्रसुषिरे स निबद्धः प्रजायते ॥ २,३२.६१ ॥
क्रामन्ति भुक्तपीतानि स्त्रीणां गर्भोदरे तथा ।
तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति च ॥ २,३२.६२ ॥
स्मृत्यस्तत्र प्रयान्त्यस्य बह्व्यः संसारभूतयः ।
ततो निर्वेदमायाति पीड्यमान इतस्ततः ॥ २,३२.६३ ॥
पुनर्नैवं करिष्यामि भुक्तमात्र इहोदरात् ।
तथातथा यतिष्यामि गर्भं नाप्नोम्यहं यथा ॥ २,३२.६४ ॥
इति सञ्चिन्तयञ्जीवो स्मृत्वा जन्मशतानि वै ।
यानि पूर्वानुभूतानि देवभूतात्मजानि वै ॥ २,३२.६५ ॥
ततः कालक्रमाज्जन्तुः परिवर्त्यत्वधोमुखः ।
नवमे दशमे वापि मासि संजायते ततः ॥ २,३२.६६ ॥

निष्क्रम्यमाणो वातेन प्राजापत्येन पीड्यते ।
निष्क्रमते च विलपंस्तदा दुःखनिपीडितः ॥ २,३२.६७ ॥
निष्क्रामंश्चोदरान्मूर्छामसह्यां प्रतिपद्यते ।
प्राप्नोति चेतनां चासौ वायुस्पर्शसुखान्वितः ॥ २,३२.६८ ॥
ततस्तं वैष्णवी माया समास्कन्दति मोहिनी ।
तया विमोहितात्मासौ ज्ञानभ्रंशमवाप्नुते ॥ २,३२.६९ ॥
भ्रष्टज्ञानं बालभावे ततो जन्तुः प्रपद्यते ।
ततः कौमारकावस्थां यौवनं वृद्धतामपि ॥ २,३२.७० ॥
पुनश्च तद्वन्मरणं जन्म प्राप्नोति मानवः ।
ततः संसारचक्रेऽस्मिन् भ्राम्यते घटयन्त्रवत् ॥ २,३२.७१ ॥
कदाचित्स्वर्गमाप्नोति कदाचिन्निरयं नरः ।
स्वर्गं च निरयं चैव स्वकर्मफलमश्नुते ॥ २,३२.७२ ॥
कदाचिद्भुक्तकर्मा च भुवं स्वल्पेन गच्छति ।
स्वर्लोके नरके चैव भुक्तप्राये द्विजोत्तमाः ॥ २,३२.७३ ॥
नरकेषु महद्दुःखमेतद्यत्स्वर्गवासिनः ।
दृश्यते नात्र मोदन्ते पात्यमानास्तु नारकैः ॥ २,३२.७४ ॥
स्वर्गेऽपि दुः खमतुलं यदारोहणकालतः ।
प्रभृत्यहं पतिष्यामीत्येतन्मनसि वर्तते ॥ २,३२.७५ ॥
नार कांश्चैव सम्प्रेक्ष्य महद्दुः खमवाप्यते ।
एवं गतिमहं गन्तेत्यहर्निशमनिर्वृतः ॥ २,३२.७६ ॥
गर्भवासे महद्दुः खं जायमानस्य योनिजम् ।
जातस्य बालभावेऽपि वृद्धत्वे दुःखमेव च ॥ २,३२.७७ ॥
कामेर्ष्याक्रोधसम्बन्धाद्यौवनेऽपि च दुः सहम् ।
दुःस्वप्नं या वृद्धता च मरणे दुः खमुत्कटम् ॥ २,३२.७८ ॥
कृष्यमाणश्च याम्यैः स नरकेऽपि च यात्यधः ।
पुनश्च गर्भाज्जन्म स्यान्मरणं दुष्करं तथा ॥ २,३२.७९ ॥
एवं संसारचक्रेऽस्मिज्जन्तवो घटयन्त्रवत् ।
भ्राम्यन्ते प्राक्तनैर्बधैर्बद्धा विध्यन्ति चासकृत् ॥ २,३२.८० ॥
नास्ति पक्षिन्सुखं किञ्चित्क्षेत्रे दुः खशताकुले ।
विनतासुत मोक्षाय यतितव्यं ततो नरैः ॥ २,३२.८१ ॥
एतत्ते सर्वमाख्यातं यथा गर्भस्य संस्थितिः ।
कथयामि क्रमप्रश्नं पृष्टं वा वर्तते स्पृहा ॥ २,३२.८२ ॥
गरुड उवाच ।

मध्ये कृतमहाप्रश्नद्वयस्याप्तं मयोत्तरम् ।
प्रश्नस्यापि तृतीयस्य उत्तरं च विधीयताम् ॥ २,३२.८३ ॥
श्रीकृष्ण उवाच ।
म्रियमाणस्य किं कृत्यमिति त्वं पृष्टवानसि ।
शृणु तत्रोत्तरं तूक्तं कथयामि समासतः ॥ २,३२.८४ ॥
आसन्नमरणं ज्ञात्वा पुरुषं स्नापयेत्ततः ।
गोमूत्रगोमयसुमृत्तीर्थोदककुशोदकैः ॥ २,३२.८५ ॥
वाससी परिधार्याथ धौते तु शुचि नी शुभे ।
दर्भाण्यादौ समास्तीर्य दक्षिणाग्रान्विकीर्य च ॥ २,३२.८६ ॥
तिलान् गोमयलिप्तायां भूमौ तत्र निवेशयेत् ॥ २,३२.८७ ॥
प्रागुदक्शिरसं वापि मुखे स्वर्णं विनिः क्षेपेत् ।
शालग्रामशिला तत्र तुलसी च खगेश्वर ॥ २,३२.८८ ॥
विधेया सन्निधौ सर्पिर्दीपं प्रज्वालयेत्पुनः ।
नमो भगवते वासुदेवायेति जपस्तथा ॥ २,३२.८९ ॥
आदौ तु प्रणवं कृत्वा पूजादाने ततः स्मृते ।
समभ्यर्च्य हृषीकेशं पुष्पधूपादिभिस्ततः ॥ २,३२.९० ॥
प्रणिपातैः स्तवैः पुण्यैर्ध्या नयोगेन पूजयेत् ।
दत्त्वा दानं च विप्रेभ्यो दीनानाथेभ्य एव च ॥ २,३२.९१ ॥
पुत्रे मित्रे कलत्रे च क्षेत्रधान्यधनादिषु ।
निवर्तयेन्ममत्वं च विष्णोः पादौ हृदि स्मरन् ॥ २,३२.९२ ॥
उच्चैः पुरुषसूक्तं च यदि श्रेष्ठापदस्तदा ।
पुत्राद्याः प्रपठेयुस्ते म्रियमाणे निजे जने ॥ २,३२.९३ ॥
एतत्ते सर्वमाख्यातं कृत्यं मृत्यावुपस्थिते ।
फलमप्यस्य कृत्स्नस्य समासात्ते वदाम्यहम् ॥ २,३२.९४ ॥
स्नानेन शुचिताप्राप्तिरपावित्र्यहृतिस्ततः ।
ततो विष्णोः स्मृतिस्तस्य ज्ञानात्सर्वफलप्रदा ॥ २,३२.९५ ॥
दर्भतूली नयेत्स्वर्गमातुरं तु न संशयः ।
तिलैर्दर्भैश्च निः क्षिप्तैः स्नानं क्रतुमयं भवेत् ॥ २,३२.९६ ॥
ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशस्तथैव च ।
मण्डले चोपतिष्ठन्ति तस्मात्कुर्वीत मण्डलम् ॥ २,३२.९७ ॥
प्रागुदग्वा कृतेनेह शिरसा लोकमुत्तमम् ।
व्रजते यदि पापस्याल्पत्वं पुंसो भवेत्खग ॥ २,३२.९८ ॥
पञ्चरत्ने मुखे मुक्ते जिवे ज्ञानं प्ररोहति ।

तुलसी ब्राह्मणा गावो विष्णुरेकादशी खग ॥ २,३२.९९ ॥
पञ्च प्रवहणान्येव भवाब्धौ मज्जतां नृणाम् ।
विष्णुरेकादशी गीता तुलसी विप्रधेनवः ॥ २,३२.१०० ॥
असारे दुर्गसंसारे षट्पदी भक्तिदायिनी ।
नमो भगवते वासुदेवायेति जपन्नरः ॥ २,३२.१०१ ॥
ओङ्कारपूर्वं सायुज्यं प्राप्नुयान्नात्र संशयः ।
पूजयापि च मल्लोकप्राप्तिराराद्दिवं व्रजेत् ॥ २,३२.१०२ ॥
बन्धाभावे ममत्वेतु ज्ञानं पुरुषसूक्ततः ।
यस्ययस्याधिकत्वं तु साधनेष्वेषु काश्यप ॥ २,३२.१०३ ॥
तत्तत्फलस्याप्याधिक्यं भवतीत्यवधारय ।
दातव्यानि यथाशक्त्या प्रीतोऽसौ सर्वदा भवेत् ॥ २,३२.१०४ ॥
एतत्ते सर्वमाख्यातं स्नानादिषु फलं मया ।
ब्रह्माण्डे ये गुणाः सन्ति शरीरे ते व्यवस्थिताः ॥ २,३२.१०५ ॥
पातालभूधरा लोकास्तथान्ये द्वीपसागराः ।
आदित्यादिग्रहाः सर्वे पिण्डमध्ये व्यवस्थिताः ॥ २,३२.१०६ ॥
पादाधस्तु तलं ज्ञेयं पादोर्ध्वं वितलं तथा ।
जानुभ्यां सुतलं विद्धि सक्थिदेशे महातलम् ॥ २,३२.१०७ ॥
तथा तलातलञ्चोरौ गुह्यदेशे रसातलम् ।
पातालं कटिसंस्थन्तु पादादौ लक्षयेद्बुधः ॥ २,३२.१०८ ॥
भूर्लोकं नाभिमध्ये तु भुवर्लोकं तदूर्ध्वतः ।
स्वर्गलोकं हृदये विद्यात्कण्ठदेशे महस्तथा ॥ २,३२.१०९ ॥
जनलोकं वक्त्रदेशे तपोलोकं ललाटके ।
सत्यलोकं महारन्ध्रे भुवनानि चतुर्दश ॥ २,३२.११० ॥
त्रिकोणे संस्थितो मेरुरधः कोणे च मन्दरः ।
दक्षिणे चेव कैलासो वामभागे हिमाचलः ॥ २,३२.१११ ॥
निषधश्चोर्ध्वभागे च दक्षिणे गन्धमादनः ।
मलयो (रमणो) वामरेखायां सप्तैते कुलपर्वताः ॥ २,३२.११२ ॥
अस्थिस्थाने स्थितो जम्बूः शाको मज्जासु संस्थितः ।
कुशद्वीपः स्थितो मांसे क्रौञ्चद्वीपः शिरास्थितः ॥ २,३२.११३ ॥
त्वचायां शाल्मलिद्वापो प्लक्षः रोम्णां च सञ्चये ।
नखस्थः पुष्करद्वीपः सागरास्तदनन्तरम् ॥ २,३२.११४ ॥
क्षारोदश्च तथा मूत्रे क्षारे क्षीरोदसागरः ।
सुरोदधिश्च श्लेष्मस्थः मज्जायां घृतसागरः ॥ २,३२.११५ ॥

रसोदधिं रसे विद्याच्छोणिते दधिसागरम् ।
स्वादुलं लम्बिकास्थाने गर्भोदं शुक्रसंस्थितम् ॥ २,३२.११६ ॥
नादचक्रे स्थितः सूर्यो बिन्दुचक्रे च चन्द्रमाः ।
लोचनस्थः कुजो ज्ञेयो हृदये च बुधः स्मृतः ॥ २,३२.११७ ॥
विष्णुस्थाने गुरुं विद्याच्छुक्रे शुक्रो व्यवस्थितः ।
नाभिस्थाने स्थितो मन्दो मुखे राहुः स्थितः सदा ॥ २,३२.११८ ॥
पायु (द) स्थाने स्थितः केतुः शरीरे ग्रहमण्डलम् ।
विभक्तञ्च समाख्यातमापादतलमस्तकम् ॥ २,३२.११९ ॥
उत्पन्ना ये हि संसारे म्रियन्ते ते न संशयः ।
बुभुक्षा च तृषा रौद्रा दाहोद्भूता च मूर्छना ॥ २,३२.१२० ॥
यत्र पीडास्त्विमा रौद्रास्ता वै वृश्चिकदंशजाः ।
विनाशः पूर्णकाले च जायते सर्वदेहिनाम् ॥ २,३२.१२१ ॥
अग्रे अग्रे हि धावन्ति यमलोकगतस्यवै ।
तप्तवालुकमध्येन प्रज्वलद्वह्निमध्यतः ॥ २,३२.१२२ ॥
केशग्राहैः समाक्रान्ता नीयन्ते यमकिङ्करैः ।
पापिष्ठास्त्वधमास्ताक्ष्र्य दयाधर्मविवर्जिताः ॥ २,३२.१२३ ॥
यमलोके वसन्त्येते कुट्यां जन्म न विद्यते ।
एवं सञ्जायते ताक्ष्र्य मर्त्ये जन्तुः स्वकर्मभिः ॥ २,३२.१२४ ॥
उत्पन्ना ये हि संसारे म्रियन्ते ते न संशयः ।
आयुः कर्म च वित्तञ्च विद्या निधनमेव च ॥ २,३२.१२५ ॥
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ।
कर्मणा जायते जन्तुः कर्मणैव प्रलीयते ॥ २,३२.१२६ ॥
सुखं दुः खं भयं क्षेमं कर्मणैवाभिपद्यते ।
अधोमुखं चोर्ध्वपादं गर्भाद्वायुः प्रकर्षति ॥ २,३२.१२७ ॥
जन्मतो वैष्णवी माया संमोहयति सत्वरम् ।
स्वकर्मकृतसम्बन्धो जन्तुर्जन्म प्रपद्यते ॥ २,३२.१२८ ॥
सुकृतादुत्तमो भोगभोग्यवान् सुकुले भवेत् ।
यथायथा दुष्कृतं तत्कुले हीने प्रजायते ॥ २,३२.१२९ ॥
दरिद्रो व्याधितो मूर्खः पापकृद्दुः खभाजनम् ।
अतः परं किमर्थं ते कथयामि खगेश्वर ॥ २,३२.१३० ॥
इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीदृ धर्मदृप्रेतदृश्रीकृष्णगरुडसंवादे
जन्तूत्पत्तितद्गधात्वादिविभागभुवनादिविभागवर्णनं नाम द्वात्रिंशोऽध्यायः

श्रीगरुडमहापुराणम् ३३
गरुड उवाच ।
उत्पत्तिलक्षणं जन्तोः कथितं मयि पुत्रके ।
यमलोकः कियन्मात्रस्त्रैलोक्ये सचराचरे ।
विस्तरं तस्य मे ब्रूहि अध्वा चैव कियान् स्मृतः ॥ २,३३.१ ॥

कैश्च पापैः कृतैर्देव केन वा शुभकर्मणा ।
गच्छन्ति मानवास्तत्र कथयस्व विशेषतः ॥ २,३३.२ ॥

श्रीभगवानुवाच ।
षटशीतिसहस्राणि योजनानां प्रमाणतः ।
यमलोकस्य चाध्वानमन्तरा मानुषस्य च ॥ २,३३.३ ॥

ध्मातताम्रमिवातप्तो ज्वलद्दुर्गो महापथः ।
तत्र गच्छन्ति पापिष्ठा मानवा मूढचेतसः ॥ २,३३.४ ॥

कण्टकाश्च सुतीक्ष्णा वै विविधा घोरदर्शनाः ।
तैस्तुवालुक्षितिर्व्याप्ता हुताशश्च तथोल्बणः ॥ २,३३.५ ॥

वृक्षच्छाया न तत्रास्ति यत्र विश्रमते नरः ।
गृहीतः कालपाशैश्च कृतैः कर्मभिरुल्बणैः ॥ २,३३.६ ॥

तस्मिन्मार्गे न चान्नाद्यं येन प्राणान् प्रपोषयेत् ।
न जलं दृश्यते तत्र तृषा येन विलीयते ॥ २,३३.७ ॥

क्षुधया पीडितो याति तृष्णया च महापथे ।
शीतेन कम्पते क्वापि यममार्गेऽतिदुर्गमे ॥ २,३३.८ ॥

यद्यस्य यादृशं पापं स पन्थास्तस्य तादृशः ।
सुदीनाः कृपणा मूढा दुः खैर्व्याप्तास्तरन्ति तम् ॥ २,३३.९ ॥

रुदन्ति दारुणं केचित्केचिदद्रोहं वदन्ति च ।
आत्मकर्मकृतैर्दोषैः पच्यमाना मुहुर्मुहुः ॥ २,३३.१० ॥

ईदृग्विधः स वै पन्था विज्ञेयो दारुणः खग ।
वितृष्णा ये नरा लोके सुखं तस्मिन् व्रजन्ति ते ॥ २,३३.११ ॥

यानियानि च दानानि दत्तानि भुवि मानवैः ।
तानितान्युपतिष्ठन्ति यमलोके पुरः पथि ॥ २,३३.१२ ॥

पापिनो नोपतिष्ठन्ति दाहश्राद्धजलाञ्जलि ।
भ्रमन्ति वायुभूतास्ते ये क्षुद्राः पापकर्मिणः ॥ २,३३.१३ ॥

ईदृशं वर्त्म तद्रौद्रं कथितं तव सुव्रत ।
पुनश्च कथयिष्यामि यममार्गस्य या स्थितिः ॥ २,३३.१४ ॥

याम्यनैरृतयोर्मध्ये पुरं वैवस्वतस्य तु ।
सर्वं वज्रमयं दिव्यमभेद्यं तत्सुरासुरैः ॥ २,३३.१५ ॥

चतुरश्रं चतुर्द्वारं सप्तप्राकारतोरणम् ।
स्वयं तिष्ठति वै यस्यां यमो दूतैः समन्वितः ॥ २,३३.१६ ॥

योजनानां सहस्रं वै प्रमाणेन तदुच्यते ।
सर्वरत्नमयं दिव्यं विद्युज्ज्वालार्कतैजसम् ॥ २,३३.१७ ॥

तद्गुहं धर्मराजस्य विस्तीर्णं काञ्चनप्रभम् ।
योजनानां पञ्चशतप्रमाणेन समुच्छ्रितम् ॥ २,३३.१८ ॥

वृतं स्तम्भसहस्रैस्तु वैदूर्यमणिमण्डितम् ।
मुक्ताजालगवाक्षं च पताकाशतभूषितम् ॥ २,३३.१९ ॥

घण्टाशतनिनादाढ्यं तोरणानां शतैर्वृतम् ।
एवमादिभिरन्यैश्च भूषणैर्भूषितं सदा ॥ २,३३.२० ॥

तत्रस्थो भगवान् धर्म आसने तु समे शुभे ।
दशयो जनविस्तीर्णे नीलजीमूतसन्निभे ॥ २,३३.२१ ॥

धर्मज्ञो धर्मशीलश्च धर्मयुक्तो हितो यमः ।
भयदः पापयुक्तानां धार्मिकाणां सुखप्रदः ॥ २,३३.२२ ॥

मन्दमारु तसंयोगैरुत्सवैर्विविधैस्तथा ।
व्याख्यानैर्विविधैर्युक्तः शङ्खवादित्रनिः स्वनैः ॥ २,३३.२३ ॥

पुरमध्यप्रवेशे तु चित्रगुप्तस्य वै गृहम् ।
पञ्चविंशतिसंख्यानां योजनानां सुविस्तरम् ॥ २,३३.२४ ॥

दशोच्छ्रितं महादिव्यं लोहप्राकारवोष्टितम् ।
प्रतोलीशतसंचारं पतताकाशतशोभितम् ॥ २,३३.२५ ॥

दीपिकाशतसङ्कीर्णं गीतध्वनिसमाकुलम् ।
विचित्रचित्रकुशलैश्चित्रगुप्तस्य वै गृहम् ॥ २,३३.२६ ॥

मणिमुक्तामये दिव्ये आसने परमाद्भुते ।
तत्रस्थो गणयत्यायुर्मानुषेष्वितरेषु च ॥ २,३३.२७ ॥

न मुह्यति कदाचित्स सुकृते दुष्कृतेऽपि वा ।
यद्येनोपार्जितं यावत्तावद्वै वेत्ति तस्य तत् ॥ २,३३.२८ ॥

दशाष्टदोषरहितं कृत कर्म लिखत्यसौ ।
चित्रगुप्तालयाताच्यां ज्वरस्यास्ति महागृहम् ॥ २,३३.२९ ॥

दक्षिणे चापि शूलस्य लताविस्फोटकस्य च ।
पश्चिमे काल पाशस्य अजीर्णस्यारुचेस्तथा ॥ २,३३.३० ॥

मध्यपीठोत्तरे ज्ञेयो तथा चान्या विषचिका ।
ऐशन्यां वै शिरोऽर्तिश्च आग्नेय्याञ्चैव मृकता ॥ २,३३.३१ ॥

अतिसारश्च नैरृत्यां वायव्यां दाहसंज्ञकः ।
एभिः परिवृतो नित्यं चित्रगुप्तः स तिष्ठति ॥ २,३३.३२ ॥

यत्कर्म कुरुते कश्चित्ततत्सर्वं विलखत्यसौ ।
धर्मराजगृहद्वारि दूतास्ताक्ष्र्य तथा निशि ।
तिष्ठन्ति पापकर्माणः पच्यमाना नराधमाः ॥ २,३३.३३ ॥

यमदूतैर्महापाशैर्हन्यमानाश्च मुद्गरैः ।
वध्यन्ते विविधैः पापैः पूर्वकर्मकृतैर्नराः ॥ २,३३.३४ ॥

नानाप्रहारणाग्रैश्च नानायन्त्रैस्तथा परे ।
छिद्यन्ते पापकर्माणः क्रकचैः काष्ठवद्द्विधा ॥ २,३३.३५ ॥

अन्ये ज्वलद्भिरङ्गारैर्वेष्टिताः परितो भृशम् ।
पूर्वकर्मविपाकेन ध्मायन्ते लोहपिण्डवत् ॥ २,३३.३६ ॥

क्षिप्त्वान्ये च धरापृष्ठे कुठारेणावकर्तिताः ।
क्रन्दमानाश्च दृश्यन्ते पूर्वकर्मविपाकतः ॥ २,३३.३७ ॥

केचिद्गुडमयैः पाकैस्तैलपाकैस्तथा परे ।
पीड्यन्ते यमदूतैश्च पापिष्ठाः सुभृशं नराः ॥ २,३३.३८ ॥

क्षणाह्नि प्रार्थयन्त्यन्ये देहिदेहीति कोटिशः ।
यमलोके मया दृष्टा ममस्वं भक्षितं त्वया ॥ २,३३.३९ ॥

इत्येवं बहुशस्ताक्ष्र्य नरकाः पापिनां स्मृताः ।
कर्मभिर्बहुभिः प्रोक्तैः सर्वशास्त्रेषु भाषितैः ।
दानोपकारं वक्ष्यामि यथा तत्र सुखं भवेत् ॥ २,३३.४० ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे यमलोकविस्तृतिद्दवर्णनं नाम त्रयस्त्रिंशोऽध्यायः

श्रीगरुडमहापुराणम् ३४
श्रीकृष्ण उवाच ।
शृणु तार्क्ष्य यथान्यायं धर्माधर्म्स्य लक्षणम् ।
सुकृतं दुष्कृतं नृणामग्रे धावति धावताम् ॥ २,३४.१ ॥

कृते तपः प्रशंसन्ति त्रेतायां ज्ञानसाधनम् ।
द्वापरे यज्ञदाने च दानमेकं कलौ युगे ॥ २,३४.२ ॥

गृहस्थानां स्मृतो धर्म उत्तमानां विचक्षणैः ।
इष्टापूर्ते स्वशक्त्या हि कुर्वतां नास्ति पातकम् ॥ २,३४.३ ॥

वृक्षस्तु रोपितो येन खनिकूपजलाशयाः ।
यममार्गे सुखं तस्य व्रजतो नितरां भवेत् ॥ २,३४.४ ॥

अग्नितापप्रदातारे यैः शीतपीडिते द्विजे ।
तप्यमानाः सुखं यान्ति सर्व कामैः प्रपूरिताः ॥ २,३४.५ ॥

सुवर्णमणिमुक्तादि वस्त्राण्याभरणानि च ।
तेन सर्वमिदं दत्तं येन दत्ता वसुन्धरा ॥ २,३४.६ ॥

यानियानि च भूतानि दत्तानि भुवि मानवैः ।
यमलोकपथे तानि तिष्ठन्त्येषां समीपतः ॥ २,३४.७ ॥

व्यञ्जनानि विचित्राणि भक्ष्यभोज्यानि यानि च ।
ददाति विधिना पुत्र प्रेते तदु पतिष्ठति ॥ २,३४.८ ॥

आत्मा वै पुत्रनामास्ति पुत्रस्त्राता यमालये ।
तारयेत्पितरं घोरात्तेन पुत्त्रः प्रवक्ष्यते ॥ २,३४.९ ॥

अतो देयञ्च पुत्रेण श्राद्धमाजी वितावधि ।
अतिवाहस्तदा प्रेतो भोगान् वै लभते हि सः ॥ २,३४.१० ॥

दह्यमानस्य प्रेतस्य स्वजनैर्यो जलाञ्जलिः ।
दीयते प्रेतरूपोऽसौ प्रीतो याति यमालये ॥ २,३४.११ ॥

अपक्वे मृन्मये पात्रे दुग्धं दत्तं दिनत्रयम् ।
काष्ठत्रयं गुणैर्बद्ध्वा प्रीत्यै रात्रौ चतुष्पथे ॥ २,३४.१२ ॥

प्रथमेऽह्नि द्वितीये च तृतीये च तथा खग ।
आकाशस्थं पिबेद्दुग्धं प्रेतो वायुवपुर्धरः ॥ २,३४.१३ ॥

चतुर्थे सञ्चयः कार्यः चतुर्थे?वापि साग्निके ।

अस्थिसञ्चयनं कार्यं दद्यादापाञ्जलिं ततः ॥ २,३४.१४ ॥

न पूर्वाह्ने न मध्याह्ने नापराह्ने न सन्धिषु ।
याते प्रथमयामे तु दद्यादापजलाञ्जंलीन् ॥ २,३४.१५ ॥

पुत्त्रेण दत्ते ते सर्वे गोत्रिणो हितबान्धवाः ।
स्वजात्यैः परजात्यैश्च देयो नद्यां जलाञ्जलिः ॥ २,३४.१६ ॥

गन्तव्यं नैव विप्रेण दातुं शीघ्रं जलाञ्जलिम् ।
निवृत्ताश्च यदा नार्यो लोकाचारः सदाभवेत् ॥ २,३४.१७ ॥

पञ्चत्वञ्च गते शूद्रे यः काष्ठं नयते चिताम् ।
अनुव्रजेद्यदा विप्रस्त्रिरात्रमशुचिर्भवेत् ॥ २,३४.१८ ॥

त्रिरात्रे च ततः पूर्णे नदीं गच्छेत्समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥ २,३४.१९ ॥

शूद्रो गच्छति सर्वत्र वैश्यस्त्रिषु द्वयोः परः ।
गच्छति स्वीयवर्णेषु दातुं प्रेते जलाञ्जलिम् ॥ २,३४.२० ॥

दत्ते जलाञ्जलौ पश्चाद्विदध्याद्दन्तधावनम् ।
त्यजन्ति गोत्रिणः सर्वे दिनानि नव काश्यप ॥ २,३४.२१ ॥

जलाञ्जलिं तथा दातुं गच्छन्ति द्विजसत्तमाः ।
यत्र स्थाने मृतो यस्तु अध्वन्यपि गृहेऽपि वा ।
विश्लेषस्तु ततः स्थानान्न क्वचिद्विहितो बुधैः ॥ २,३४.२२ ॥

स्त्रीजनश्चाग्रतो गच्छेत्पृष्ठतो नवसञ्चयः ।
आचमनं विधातव्यं पाषाणोपरि संस्थितैः ॥ २,३४.२३ ॥

यवांश्च सर्षपान् दूर्वाः पूर्णपात्रे विलोकयेत् ।
प्राशयेन्निम्बपत्राणि स्नेहस्नानं समाचरेत् ॥ २,३४.२४ ॥

गोत्रिभिर्न च कर्तव्यं गृहान्नञ्च न भोजयेत् ।
भुञ्जीत मृन्मये पात्रे उत्तानञ्च विवर्जयेत् ॥ २,३४.२५ ॥

मृतकस्य गुणा ग्राह्या यमगाथां समुद्गिरेत् ।
शुभाशुभे च ध्यातव्ये पूर्वकर्मोपसञ्चिते ॥ २,३४.२६ ॥

लब्धेनैव च देहेन भुङ्क्ते सुकृतदुष्कृते ।
वायुरूपो भ्रमत्येव वायुरूर्ध्वं स गच्छति ॥ २,३४.२७ ॥

दशाहकर्मक्रियया कुटी निष्पाद्यते ध्रुवम् ।
नवकैः षोडशश्राद्धैः प्रयाति हि कुटीं नरः ॥ २,३४.२८ ॥

तिलैर्दर्भैश्च भूम्यां वै कुटी धातुमयी भवेत् ।
पञ्च रत्नानि वक्त्रे तु येन जीवः प्ररोहति ॥ २,३४.२९ ॥

यदा पुष्पं प्रनष्टं हि तदा गर्भं न धारयेत् ।
आदराच्च ततो भूमौ तिलदर्भान्विनिः क्षिपेत् ॥ २,३४.३० ॥

पशुत्वे स्थावरत्वे च यत्र क्वापि स जायते ।
तत्रैव जन्तुरुत्पन्नः श्राद्धं तत्रोपतिष्ठति ॥ २,३४.३१ ॥

धन्विना लक्ष्यमुद्दिश्य मुक्तो बाणस्तदाप्नुयात् ।
यथा श्राद्धं यमुद्दिश्य कृतं तस्योपतिष्ठति ॥ २,३४.३२ ॥

यावन्नोत्पादितो देहस्तावच्छ्राद्धैर्न प्रीणनम् ।
क्षुधाविभ्रममापन्नो दशाहेन च तर्पितः ॥ २,३४.३३ ॥

पिण्डदानं न यस्याभूदाकाशे भ्रमते तु सः ।
दिनत्रयं वसंस्तोये अग्नावपि दिनत्रयम् ।
आकाशे वसते त्रीणि दिनमेकन्तु वासके ॥ २,३४.३४ ॥

दग्धे देहे च वह्नौ च जलेनैव तु तर्पितः ।
स्नेहस्नानं जलेनैव पूपकैः कृशरैर्गृहे ॥ २,३४.३५ ॥

प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमेऽपि वा ।
नवमैकादशे चैव श्राद्धं नवकमुच्यते ॥ २,३४.३६ ॥

गृहद्वारे श्मशाने वा तीर्थे देवालयेऽपि वा ।
यत्राद्यो दीयते पिण्डस्तत्र सर्वान् समापयेत् ॥ २,३४.३७ ॥

एकादशाहे यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
चतुर्णामेकवर्णानां शुद्ध्यर्थं स्नानमुच्यते ॥ २,३४.३८ ॥

कृत्वा चैकादशाहञ्च पुनः स्नात्वा शुचिर्भवेत् ।
दद्याद्विप्राय यः शय्यां यथोक्तं प्रेतमोक्षदाम् ॥ २,३४.३९ ॥

न भवेत्यदा स गोत्रो परोऽपि विधिमाचरेत् ।
भार्या वा पुरुषः कश्चित्तुष्टश्च कुरुते स्त्रियः ॥ २,३४.४० ॥

प्रथमेऽहनि यः पिण्डो दीयते विधिपूर्वकम् ।
अन्नाद्येन च तेनैव सर्वश्राद्धानि कारयेत् ॥ २,३४.४१ ॥

अमन्त्रं कारयेच्छ्राद्धं दशाहं नामगोत्रतः ।
श्राद्धं कृतन्तु यैर्वस्त्रैस्तानि त्यक्त्वा गृहं विशेत् ॥ २,३४.४२ ॥

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेऽहनि यः कुर्यात्स दशाहं समापयेत् ॥ २,३४.४३ ॥

जीवस्य दशभिः पिण्डैर्देहो निष्पाद्यते ध्रुवम् ।
वृद्धिश्च दशभिर्मासैर्गर्भस्थस्य यथा भवेत् ॥ २,३४.४४ ॥

आशौचं यावदेतस्य तावत्पिण्डोदकक्रिया ।
चतुर्णामपि वर्णानामेष एव विधिः स्मृतः ॥ २,३४.४५ ॥

यत्र त्रिरात्रमाशौचं तत्रादौ त्रीन् प्रदापयेत् ।
चतुरस्तु द्वितीयेऽह्नि तृतीये त्रींश्तथैव च ॥ २,३४.४६ ॥

पृथक्शरावयोर्दद्यादेकाहं क्षीरमम्बु च ।
एकोद्दिष्टन्तु वै श्राद्धं चतुर्थेऽहनि कारयेत् ॥ २,३४.४७ ॥

प्रथमेऽहनि यः पिण्डस्तेन मूर्धा प्रजायते ।
चक्षुः श्रोत्रञ्च नासा च द्वितीयेऽह्नि प्रजायते ॥ २,३४.४८ ॥

गण्डौ वक्त्रं तथा ग्रीवा तृतीयेऽहनि जायते ।
हृदयं कुक्षिरुदरं चतुर्थे तद्वदेव हि ॥ २,३४.४९ ॥

कटिपृष्ठं गुदञ्चापि पञ्चमेऽहनि जायते ।
षष्ठे ऊरू च विज्ञेये सप्तमे गुल्फसम्भवः ॥ २,३४.५० ॥

अष्टमे दिवसे प्राप्ते जङ्घे च भवतोऽण्डज ।
पादौ च नवमे ज्ञेयौ दशमे बलवत्क्षुधा ॥ २,३४.५१ ॥

एकादशाहे यः पिण्डस्तं दद्यादामिषेण तु ।
सिद्धान्नं तस्य दातव्यं कृशराः पूपकाः पयः ।
प्रक्षाल्य विप्रचरणावर्घ्यं धूपञ्च दीपक्रम् ॥ २,३४.५२ ॥

द्वादश प्रतिमास्यानि श्राद्धान्यैकादशे तथा ।
त्रिपक्षञ्चापि षण्मासे द्वे श्राद्धानि च षोडश ॥ २,३४.५३ ॥

प्रति मासं प्रदातव्यं मृताहे या तिथिर्भवेत् ।
स मासः प्रथमो ज्ञेय इति वेदविदो विदुः ॥ २,३४.५४ ॥

शवहस्ते च यच्छ्राद्धं मृतिस्थाने द्विजासने ।

तदेव प्रथमं श्राद्धं तत्स्यादेकादशेऽहनि ॥ २,३४.५५ ॥

सा तिथिर्मासिके श्राद्धे मृतो यस्मिन् दिने नरः ।
रिक्तयोश्च त्रिपक्षे च सा तिथिर्नाद्रियेत वै ॥ २,३४.५६ ॥

पौर्णमास्यां मृतो योऽसौ चतुर्थी तस्य चोनका ।
चतुर्थ्यान्तु मृतो यस्तु नवमी तस्य चोनका ॥ २,३४.५७ ॥

नवम्याञ्च मृतो यश्च रिक्ता तस्य चतुर्दशी ।
एता रिक्ताश्च विज्ञेया अन्त्येष्टौ कुशलेन च ॥ २,३४.५८ ॥

एकादशाहे यच्छ्राद्धं नवकं तत्प्रकीर्तितम् ।
चतुष्पथे त्यजेदन्नं पुनः स्नानं समाचरेत् ॥ २,३४.५९ ॥

एकादशाहादारभ्य घटस्यान्नं जलान्वितम् ।
दिनेदिने च दातव्यमब्दं यावद्द्विजोत्तमे ॥ २,३४.६० ॥

मानुषस्य शरीरे तु विद्यते ह्यस्थिसञ्चयः ।
तत्संख्यः सर्वदेहेषु षष्ट्यधिकशतत्रयम् ॥ २,३४.६१ ॥

उदकुम्भेन पुष्टानि तान्यस्थीनि भवन्ति हि ।
एतस्माद्दीयते कुम्भः प्रीतिः प्रेतस्य जायते ॥ २,३४.६२ ॥

यस्मिन् दिने मृतो जन्तुरटव्यां विषमेऽपि वा ।
यदा तदा भवेद्दाहः सूतकं मृतवासरात् ॥ २,३४.६३ ॥

तिलपात्रं तथान्नाद्यं गन्धधपादिकञ्च यत् ।
एकादशाहे दातव्यं तेन शूद्रो द्विजो भवेत् ॥ २,३४.६४ ॥

क्षत्त्रियो द्वादशाहे तु वैश्यः पञ्चदशे तथा ।
शुद्धिः शूद्रस्य मासेन मृतके जातसूतके ॥ २,३४.६५ ॥

मासत्रये त्रिरात्रं स्यात्षण्मासेन तु पक्षिणी ।
अहः संवत्सरादर्ब्वाक्पूर्णे दत्त्वोदकं शुचिः ।
अनेनैवा नुसारेण शुद्धिः स्यात्सार्ववर्णिकी ॥ २,३४.६६ ॥

एकादशाहप्रभृति पुरतः प्रतिवत्सरम् ।
विश्वेदेवांस्तु सम्पूज्य पिण्डमेकञ्च निर्वपेत् ॥ २,३४.६७ ॥

यथा तारागणाः सर्वे च्छाद्यन्ते रविरश्मिभिः ।
एवं प्रच्छाद्यते सर्वं न प्रेतो भवति क्वचित् ॥ २,३४.६८ ॥

शय्यादानं प्रशंसन्ति सर्वदैव द्विजोत्तमाः ।
अनित्यं जीवनं य्समात्पश्चात्को नु प्रदास्यति ॥ २,३४.६९ ॥

तावद्वन्धुः पिता तावद्यावज्जीवति मानवः ।
मृते मृत इति ज्ञात्वा क्षणात्स्नेहो निवर्तते ॥ २,३४.७० ॥

आत्मैव ह्यात्मनो बन्धुरेवं ज्ञात्वा मुहुर्मुहुः ।
जीवन्नपीति सञ्चिन्त्य स्वीयं हितमनुस्तमरेत् ॥ २,३४.७१ ॥

मृतानां कः सुतो दद्याद्द्विजेशय्यां सतूलिकाम् ।
एवं जानन्निदं सर्वं स्वहस्तेनैव दापयेत् ॥ २,३४.७२ ॥

तस्माच्छय्यां समासाद्य सारदारुमयीं दृढाम् ।
दन्तादिरुचिरां रम्यां हेमपट्टै रलङ्कृताम् ।
तस्यां संस्थाप्य हैमञ्च हरिं लक्ष्म्या समन्वितम् ॥ २,३४.७३ ॥

घृतपूर्णञ्च कलशं परिकल्पयेत् ।
विज्ञेयो गरुड प्रीत्यै स निद्राकलशो बुधैः ॥ २,३४.७४ ॥

ताम्बूलकुङ्कुमक्षोदकर्पूरागुरुचन्दनम् ।
दीपिकोपानहच्छत्रचामरासनभाजनम् ॥ २,३४.७५ ॥

पार्श्वेषु स्थापयेच्छक्त्या सप्तधान्यानि चैवहि ।
शयनस्थस्य भवति यच्चान्यदुपकारकम् ॥ २,३४.७६ ॥

भृङ्गारकरकादर्शं पञ्चवर्णं वितानकम् ।
शय्यामेवंविधां कृत्वा ब्राह्मणाय निवेदयेत् ॥ २,३४.७७ ॥

सपत्नीकाय सम्पूज्य स्वर्लोकसुखदायिनीम् ।
वस्त्रैः सुशोभनैः पूज्य चैलकं परिधापयेत् ॥ २,३४.७८ ॥

कर्णकण्ठाङ्गुलीबाहुभूषणैश्चित्रभूषणैः ।
गृहोपकरणैर्युक्तं गृहं धेन्वा समन्वितम् ॥ २,३४.७९ ॥

ततोऽर्घः सम्प्रदातव्यः पञ्चरत्नफलाक्षतैः ॥ २,३४.८० ॥

यथा न कृष्णशयनं शून्यं सागरकन्यया ।
शय्या ममाप्यशून्यास्तु तथा जन्मनिजन्मनि ॥ २,३४.८१ ॥

दत्त्वैवं तल्पममलं क्षमाप्य च विसर्जयेत् ।
तथा चैकादशाहे तु विधिरेष प्रकीर्तितः ॥ २,३४.८२ ॥

ददाति यो हि धर्मार्थे बान्धवो बान्धवे मृते ।
विशेषमत्र पक्षे तु कथ्यमानं मया शृणु ॥ २,३४.८३ ॥

उपयुक्तञ्च तस्यासीत्यत्किञ्चित्स्वगृहे पुरा ।
तस्य यद्गात्रसं लग्नं वस्त्रं भाजनवाहनम् ।
यदभीष्टञ्च तस्यासीत्तत्सर्वं परिकल्पयेत् ॥ २,३४.८४ ॥

स्थापयेत्पुरुषं हैमं शय्योपरि शुभं बुधः ।
पूजयित्वा प्रदातव्या मृतशय्या यथोदिता ॥ २,३४.८५ ॥

पुरन्दरगृहे सर्वं सूर्यपुत्रालये तथा ।
उपतिष्ठेत्सुखं जन्तोः शय्यादानप्रभावतः ॥ २,३४.८६ ॥

पीडयन्ति न तं याम्याः पुरुषा भीषणाननाः ।
न घर्मेण न शीतेन बाध्यते स नरः क्वचित् ॥ २,३४.८७ ॥

शय्यादानप्रभावेण प्रेतो मुच्यते बन्धनात् ।
अपिः पापसमायुक्तः स्वर्गलोकं स गच्छति ॥ २,३४.८८ ॥

विमानवरमारूढः सेव्यमानोऽप्सरोगणैः ।
आभूतसंप्लवं यावत्तिष्ठेत्पातकवर्जितः ॥ २,३४.८९ ॥

नवकं षोडशश्राद्धं शय्या सांवत्सरं तथा ।
भर्तुर्या कुरुते नारी तस्याः श्रेयो ह्यनन्तकम् ॥ २,३४.९० ॥

उपकाराय सा भर्तुर्जीवन्ती न मृता तथा ।
उद्धरेज्जीवमाना सा सती सत्यवती प्रियम् ॥ २,३४.९१ ॥

स्त्रिया दध्यन्नशयने हेमकुङ्कुममञ्जनम् ।
वस्त्रभूषा तथा शय्या सर्वमेतद्धि दापयेत् ॥ २,३४.९२ ॥

उपकारकरं स्त्रीणां यद्भवोदिह किञ्चन ।
भूषणं गात्रलग्नञ्च वस्तु भोग्यादिकञ्च यत् ॥ २,३४.९३ ॥

तत्सर्वं मेलयित्वा तु स्वेस्वे स्थाने नियोजयेत् ।
पूजयेल्लोकपालांश्च ग्रहान् देवीं विनायकम् ॥ २,३४.९४ ॥

ततः शुक्लाम्बरधरो गृहीतकुसुमाञ्जलिः ।
इममुच्चारयेन्मन्त्रं विप्रस्य पुरतो बुधः ॥ २,३४.९५ ॥

प्रेतस्य प्रतिमा ह्येषा सर्वोपकरणैर्युता ।
सर्वरत्नसमायुक्ता तव विप्रनिवेदिता ॥ २,३४.९६ ॥

आत्मा शम्भुः शिवा गौरी शक्रः सुरगणैः सह ।
तस्माच्छय्याप्रदानेन सैष आत्मा प्रसीदतु ॥ २,३४.९७ ॥

आचार्याय प्रदातव्या ब्राह्मणाय कुटुम्बिने ।
गृहीते ब्राह्मणस्तत्र कोऽदादिति च कीर्तयेत् ॥ २,३४.९८ ॥

ततः प्रदक्षिणीकृत्य प्रणिपत्य विसर्जयेत् ।
विधिनानेन वै पक्षिन् दानमेकस्य दापयेत् ॥ २,३४.९९ ॥

बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः ।
विभक्तदक्षिणा ह्येते दातारं पातयन्ति हि ॥ २,३४.१०० ॥

एवं यो वितरेत्ताक्ष्र्य शृणु तस्य च यत्फलम् ।
साग्रं वर्षशतं दिव्यं स्वर्गलोके महीयते ॥ २,३४.१०१ ॥

यत्पुण्यन्तु व्यतीपाते कार्तिक्यामयनद्वये ।
द्वारकायान्तु यत्पुण्यं चन्द्रसूर्यग्रहे तथा ॥ २,३४.१०२ ॥

प्रयागे नैमिषे यच्च कुरुक्षेत्रे तर्थाबुदे ।
गङ्गायां यमुनायाञ्च सिन्धुसागरसंगमे ॥ २,३४.१०३ ॥

तेषु यद्दीयते दानं तस्मादप्यधिकन्त्विदम् ।
एतच्छय्याप्रदानस्य नाप्नोति षोडशीं कलाम् ॥ २,३४.१०४ ॥

यत्रासौ जायते प्राणी भुङ्क्ते तत्रैव तत्फलम् ।
कर्मक्षये क्षितौ याति मानुषः शुभदर्शनः ॥ २,३४.१०५ ॥

महाधनी च धर्मज्ञः सर्वशास्त्रविशारदः ।
पुनः स याति वैकुण्ठं मृतोऽसौ नरपुङ्गवः ॥ २,३४.१०६ ॥

दिव्यं विमानमारुह्य अप्सरोभिः समावृतः ।
अहोऽसौ हव्यकव्येषु पितृभिः सह मोदते ॥ २,३४.१०७ ॥

अष्टकासु कृतं श्राद्धममावास्यादिने तथा ।
मघासु पितृपर्वाणि यानियानि च तेषु च ॥ २,३४.१०८ ॥

शृणु ताक्ष्र्य यथान्यायं प्रेतत्वे पितरो यदि ।
नोपतिष्ठन्ति श्राद्धानि सपिण्डीकरणं विना ॥ २,३४.१०९ ॥

सपिण्डीकरणं कार्यं पूर्णे वर्षे न संशयः ।
आद्यन्तु शवशुद्ध्यर्थं कृत्वा चैवाक्ष षोडशीम् ॥ २,३४.११० ॥

पितृपाङ्क्तिविशुध्यर्थं शतार्धेन? तु योजयेत् ।
वृद्धिं प्राप्याग्रतः कुर्याच्छूद्रस्य स्वच्छयैव हि ॥ २,३४.१११ ॥

साम्प्रतं साग्निके कार्यं द्वादशाहे सपिण्डनम् ।
न चासौ कुरुते यावत्प्रेत एव स वह्निमान् ।
द्वादशाहे ततः कार्यं साग्निकेन सपिण्डनम् ॥ २,३४.११२ ॥

अस्थिपोक्षे गयाश्राद्धं श्राद्धञ्चापरपक्षिकम् ।
अब्दमध्ये न कुर्वीत सपिण्डीकरणं विना ॥ २,३४.११३ ॥

सपत्न्यो यदि बह्व्यः स्युरेका पुत्रवती भवेत् ।
सर्वास्ताः पुत्रवत्यः स्युस्तेनैकेनात्मजेन हि ॥ २,३४.११४ ॥

नासपिण्डोग्निमान् पुत्रः पितृयज्ञं समाचरेत् ।
समाचाराद्भवेत्पापी पितृहा चापि जायते ॥ २,३४.११५ ॥

मृते भर्तरि या नारी प्राणांश्चैव परित्यजेत् ।
भर्त्रैव हि समं तस्याः प्रकुर्वीत सपिण्डनम् ॥ २,३४.११६ ॥

अस्थानिकापि या व्यूढा वैश्या वा क्षत्त्रियापि वा ।
याः पत्न्यो वै पितुः कश्चित्कुर्यात्पुत्रः सपिण्डनम् ॥ २,३४.११७ ॥

विप्रेणैव यदा शूद्रा परिणीता प्रमादतः ।
एकोद्दिष्टन्तु तच्छ्राद्ध सा तु तेनैव युज्यते ॥ २,३४.११८ ॥

अन्ये तु दश ये पुत्रा जाता वर्ण चतुष्टये ।
ते तासुतासु योक्त्वयाः सपिण्डीकरणे सदा ॥ २,३४.११९ ॥

अन्वष्टकासु यच्छ्राद्ध यच्छ्राद्धं वृद्धिहेतुकम् ।
पितुः पृथक्प्रदाव्यं स्त्रियाः पिण्डं सपिण्डने ॥ २,३४.१२० ॥

पितामह्या समं मातुः पितुः सहपितामहैः ।
सपिण्डीकरणं कार्यमिति तार्क्ष्य मतं मम ॥ २,३४.१२१ ॥

अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डनम् ।
मात्रादितिसृभिः सार्धमेवं धर्मेण योजयेत् ॥ २,३४.१२२ ॥

पुत्रो नास्ति न भर्ता च स्त्रीणां तार्क्ष्य सपिण्डनम् ।
कारयेद्वृद्धिसमये भ्रातृदायाददेवरैः ॥ २,३४.१२३ ॥

पतिपुत्रविहीनानां गोत्री नास्ति न देवरः ।
एकोद्दिष्टेन दातव्यं परेण सह भ्रातृभिः ॥ २,३४.१२४ ॥

अज्ञानाद्विघ्नतो वापि न कृतञ्चेत्सपिण्डनम् ।
नवकं षोडशश्राद्धमाब्दिकं कारयेत्ततः ॥ २,३४.१२५ ॥

अदाहे न च कर्तव्यं सदाहे कारयेद्बुधः ।
दर्भपुत्तलकं कृत्वा वह्निना दाहयेच्छवम् ॥ २,३४.१२६ ॥

पितुः पुत्रेण कर्तव्यं न कुर्ब्बीत पिता सुते ।
अतिस्नेहान्न कर्तव्यं सपिण्डीकरणं सते ॥ २,३४.१२७ ॥

बहवोऽपि यदा पुत्रा विधिमेकः समाचरेत् ।
नवश्राद्धं सपिण्डत्वं श्राद्धान्यन्यानि षोडश ॥ २,३४.१२८ ॥

एकेनैव तु कार्याणि अविभक्तधनेष्वपि ।
अन्त्येष्टिं कुरुते ह्येको मुनिभिः समुदाहृतम् ॥ २,३४.१२९ ॥

विभक्तैश्च पृथक्कार्या क्रिया सांवत्सरादिका ।
एकैकेन च कर्तव्या पुत्रेण च स्वयंस्वयम् ॥ २,३४.१३० ॥

यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश ।
पिशाचत्वंस्थिरं तस्य कृतैः श्राद्धशतैरपि ॥ २,३४.१३१ ॥

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सपिण्डीकरणं कुर्यात्पुत्रहीने खगेश्वर ॥ २,३४.१३२ ॥

सर्वेषां पुत्रहीनानां पत्री कुर्यात्सपिण्डनम् ।
ऋत्विजं करायेद्वाथ पुरोहितमथापि वा ॥ २,३४.१३३ ॥

मृते पितर्यब्दमध्ये ह्युपरागो यदा भवेत् ।
पार्वणं न सुतैः कार्यं श्राद्धं नान्दीमुखं न च ॥ २,३४.१३४ ॥

तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम् ।
अब्दमध्ये न कुर्वीत महागुरुविपत्तिषु ॥ २,३४.१३५ ॥

यमके च गजच्छायामन्वादिषु युगादिषु ।
पितृपिण्डो न दातव्यः सपिण्डीकरणं विना ॥ २,३४.१३६ ॥

यज्ञपुरुषस्य यद्दानं देवादीनाञ्च यत्तथा ।
अपूर्णेऽप्यब्दमध्येपि कर्तव्यमिति के च न ॥ २,३४.१३७ ॥

पितृभ्योपि हि यद्दत्तमर्घपिण्डविवर्जितम् ।
कर्तव्यं तच्च वै सर्वमेष एव विधिः स्मृतः ॥ २,३४.१३८ ॥

देवानां पितरो देवा पितॄणामृषयस्तथा ।
ऋषीणां पितरो देवाः पिता जयति तेन वै ॥ २,३४.१३९ ॥

पितृदेवमनुष्याणां यज्ञनथो विभुर्भवेत् ।
यज्ञनाथस्य यद्दत्तं तद्दत्तं सर्वदेहिनाम् ॥ २,३४.१४० ॥

मृते पितर्यब्दमध्ये यः श्राद्धं कारयेत्सुतः ।
सप्तजन्मकृता धर्माथीयते नात्र संशयः ॥ २,३४.१४१ ॥

प्रेतीभूतास्तु पितरो लुप्तपिण्डोदकक्रियाः ।
भ्रमन्ति वायुना सर्वे क्षुत्तृड्भ्यां परिपीडिताः ॥ २,३४.१४२ ॥

पितरि प्रेततापन्ने लुप्यते पैतृकी क्रिया ।
अथ मातुर्विपत्तिः स्यात्पितृकार्यं न लुप्यते ॥ २,३४.१४३ ॥

मृता माता पिता तिष्ठेज्जीवन्ती च पितामही ।
सपिण्डनन्तु कर्तव्यं पितामह्या सहैव तु ॥ २,३४.१४४ ॥

सत्यंसत्यं पुनः सत्यं श्रूयतां वचनं मम ।
न पिण्डो मिलितो येषां मृतानान्तु नृणां भुवि ॥ २,३४.१४५ ॥

उपतिष्ठेन्न वे तेषां पुत्रैर्दत्तमनेकधा ।
हन्तकारस्तदुद्देशे श्राद्धं नैव जलाञ्जलिः ॥ २,३४.१४६ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे और्ध्वदेहिकादिनिरूपणं नाम चतुस्त्रिंशोऽध्यायः

श्रीगरुडमहापुराणम् ३५
तर्क्ष्य उवाच ।
अपरं मम सन्देहं कथयस्व जनार्दन ।
पुरुषस्य च कस्यापि मता पञ्चत्वमागता ॥ २,३५.१ ॥

पितामही जीवति च तथा च प्रपितामही ।
वृद्धप्रपितामही तद्वन्मातृसक्तः पिता तथा ॥ २,३५.२ ॥

प्रमातामहश्च तथा वृद्धप्रमातामहस्तथा ।
केन सा मेल्यते माता एतत्कथय मे प्रभो ॥ २,३५.३ ॥

श्रीकृष्ण उवाच ।
पुनरुक्तं प्रवक्ष्यामि सपिण्डीकरणं खग ।
उमा लक्ष्मीश्च सावित्रीत्यताभिर्मेलयेद्ध्रुवम् ॥ २,३५.४ ॥

त्रयः पिण्डभुजो ज्ञेयास्त्यजाकाश्च त्रयः स्मृताः ।
त्रयः पिण्डानुलेपाश्च दशमः पङ्क्तिसंन्निधः ॥ २,३५.५ ॥

इत्येते पुरुषाः ख्याताः पितृमातृकुलेषु च ।
तारयेद्यजमानस्तु दश पूर्वान् दशावरान् ॥ २,३५.६ ॥

सपिण्डः स भवेदादौ सपिण्डीकरणे कृते ।
अन्त्यस्तु त्याजको ज्ञेयो यो वृद्धप्रपितामहः ॥ २,३५.७ ॥

अन्तिमस्त्याजको ज्ञेयो लेपकः प्रथमो भवेत् ।
लेपकस्त्वन्तिमो यस्तु स भवेत्पङ्क्तिसन्निधः ॥ २,३५.८ ॥

यजमानो भवेदेको दश पूर्वे दशावरे ।
इत्येते पितरो ज्ञेया एकविंशति संख्यकाः ॥ २,३५.९ ॥

विधिना कुरुते यस्तु संसारे श्राद्धमुत्तमम् ।
जायतेऽत्र न सन्देहः शृणु तस्यापि यत्फलम् ॥ २,३५.१० ॥

पिता ददाति पुत्रान् वै विच्छिन्नसन्ततिः खग ।
होमदाता भवेत्सोपि यस्तस्य प्रपितामहः ॥ २,३५.११ ॥

कृते श्राद्धे गुणा ह्येते पितृणां तर्पणे स्मृताः ।
दद्याद्विपुलमन्नाद्यं वृद्धस्तु प्रपितामहः ॥ २,३५.१२ ॥

यस्य पुंसश्च मर्त्ये वै विच्छिन्ना सन्ततिः खग ।
स वसेन्नरके घोरे पङ्के मग्नः करी यथा ॥ २,३५.१३ ॥

योन्यन्तरेषु जायते यत्र वृक्षसरीसृपाः ।
न सन्ततिं विना सोऽत्र मुच्यते नरकाद्ध्रुवम् ॥ २,३५.१४ ॥

आचार्यस्तस्य शिष्यो वा यो दूरेऽपि हि गात्रेजः ।
नारायणबलिं कुर्यात्तस्याद्देशेन भक्तितः ॥ २,३५.१५ ॥

विशुद्धः सर्वपापेभ्यो मुक्तः स नरकाद्ध्रुवम् ।
निवसेन्नाकलोके च नात्र कार्या विचारणा ॥ २,३५.१६ ॥

आदौ कृत्वा धनिष्ठाञ्च एतन्नक्षत्रपञ्चकम् ।
रेवत्यन्तं सदा दूष्यमशुभं सर्वदा भवेत् ॥ २,३५.१७ ॥

दाह (बलि) स्तत्र न कर्तव्यो विप्रदिसर्वजातिषु ।
दीयते न जलं तत्र अशुभं जायते ध्रुवम् ।
लोकयात्रा न कर्तव्या दुः खार्तः स्वजनो यदि ॥ २,३५.१८ ॥

पञ्चकानन्तरं तस्य कर्तव्यं सर्वमन्यथा ।
पुत्राणां गोत्रिणां तस्य सन्तापोऽप्युपजायते ॥ २,३५.१९ ॥

गृहे हानिर्भवेत्तस्य ऋक्षेष्वेषु मृतश्च यः ।
अथवा ऋक्षमध्येऽपि दाहस्तस्य विधीयते ॥ २,३५.२० ॥

क्रियते मानुषाणान्तु सद्य आहुतिकारणात् ।
सद्याहुतिकरं पुण्यं तीर्थे तद्दाह उत्तमः ॥ २,३५.२१ ॥

विप्रैर्नियमतः कार्यः समन्त्रो विधिपूर्वकः ।
शवस्य च समीपे तु क्षिप्यन्ते पुत्तलास्ततः ॥ २,३५.२२ ॥

दर्भमयाश्च चत्वारो विप्रा मन्त्राभिमन्त्रिताः ।
ततो दाहः प्रकर्तव्यः तैश्च पुत्तलकैः सह ॥ २,३५.२३ ॥

सूतकान्ते ततः पुत्रः कुर्याच्छान्तिकमुत्तमम् ॥ २,३५.२४ ॥

पञ्चकेषु मृतो योऽसौ न गतिं लभते नरः ।
तिलान् गाश्च सुवर्णं च तमुद्दिश्य घृतं ददेत् ॥ २,३५.२५ ॥

विप्राणां दीयते दानं सर्वोपद्रवनाशनम् ।
सूतकान्ते च सत्पुत्रैः स प्रेतो लभते गतिम् ॥ २,३५.२६ ॥

भाजनोपानहौ च्छत्रं हेममुद्राच वाससी ।
दक्षिणा दीयते विप्र सर्वपातकमोचनी ॥ २,३५.२७ ॥

बालवृद्धातुराणाञ्च मृतानां पञ्चकेषु हि ।
विधानं यो न कुर्वीत विघ्नस्तस्य प्रजायते ॥ २,३५.२८ ॥

अष्टादशैव वस्तूनि प्रेतश्राद्धे विवर्जयेत् ।
आशिषो द्विगुणान् दर्भान् प्रणवान्नैकपिण्डताम् ॥ २,३५.२९ ॥

अग्नौकरणमुच्छिष्टं श्राद्धं वै वैश्वदैविकम् ।
विकिरं च स्वधाकारं पितृशब्दं न चोच्चरेत् ॥ २,३५.३० ॥

अनुशब्दं न कुर्वीत नावाहनमथोल्मुकम् ।
आसीमान्तं न कुर्वीत प्रदक्षिणविसर्जनम् ॥ २,३५.३१ ॥

न कुर्यात्तिलहोमञ्च द्विजः पूर्णाहुतिं तथा ।
न कुर्याद्वैश्वदेवं चेत्कर्ता गच्छत्यधोगतिम् ॥ २,३५.३२ ॥

मलिनश्राद्धसंज्ञानं पूर्वषोडशकं तथा ।
स्थाने द्वारे चार्धमार्गे चितायां शवहस्तके ॥ २,३५.३३ ॥

श्मशानवासिभूतेभ्यः पञ्चमं प्रतिवेश्यकम् ।
षष्ठं सञ्चयने प्रोक्तं दश पिण्डा दशाहिकाः ।
श्राद्धषोडषकञ्चैतत्प्रथमं परिकीर्तितम् ॥ २,३५.३४ ॥

अन्यच्च षोडशं मध्ये द्वितीयं ताक्ष्र्य मे शृणु ।
कर्तव्यानीह विधिना श्राद्धान्येकादशैव तु ॥ २,३५.३५ ॥

ब्रह्मविष्णुशिवाद्यञ्च तथान्यच्छ्राद्धपञ्चकम् ।
एवं षोडशकं प्राहुरेतत्तत्त्वविदो जनाः ॥ २,३५.३६ ॥

द्वादश प्रतिमास्यानि श्राद्धमेकादशे तथा ।
त्रिपक्षसम्भवञ्चैव द्वे रिक्ते खग षोडश ॥ २,३५.३७ ॥

आद्यं शवविशुद्ध्यर्थं कृत्वान्यच्च त्रिषोडशम् ।
पितृपाङ्क्तिविशुद्ध्यर्थं शतार्द्धेन तु योजयेत् ॥ २,३५.३८ ॥

शतार्धेन विहीनो यो मिलितः पङ्क्तिभाङ्न हि ।
चत्वारिंशत्तथैवाष्टश्राद्धं प्रेतत्वनाशनम् ॥ २,३५.३९ ॥

सकृदूनशतार्धेन सम्भवेत्पङ्क्तिसन्निधः ।
मेलनीयः शतार्धेन सन्धिः श्राद्धेन तत्त्वतः ॥ २,३५.४० ॥

(अथ शवाविधिः) ।
शवस्य शिबिकायां करचरणबन्धनं तत्र कर्तव्यम् ।

एवं चेन्न विधानं विधीयते तत्पिशाचपरिभवनम् ॥ २,३५.४१ ॥

संजायते रजन्याञ्च शवनिर्गमने राष्ट्रं भयशून्यम् ।
शवं न मुञ्चेत मुच्यते चेत्दुः स्पर्शाद्दुर्गतिर्भवेत् ॥ २,३५.४२ ॥

ग्राममध्ये स्थिते प्रेते श्रुते भुङ्क्ते यदृच्छया ।
तदन्नं मांसवज्ज्ञेयं तत्तोयं रुधिरोपमम् ॥ २,३५.४३ ॥

ताम्बूलं दन्तकाष्ठञ्च भोजनं ऋतुसेवनम् ।
ग्राममध्ये स्थिते प्रेते वर्जयेत्पिण्डपातनम् ॥ २,३५.४२ ॥
(३५.४४)
स्नानं दानं जपो होमस्तर्पणं सुरपूजनम् ।
ग्राममध्ये स्थिते प्रेते शुद्ध्यर्थं ज्ञातिधर्मतः ॥ २,३५.४३ ॥
(३५.४५)
ज्ञातिसम्बन्धिनामेवं व्यवहारः खगेश्वर ।
विलुप्य ज्ञातिधर्मञ्च प्रेतपापेन लिप्यते ॥ २,३५.४४ ॥
(३५.४६)
इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीद्द धद्दप्रेतकल्पे श्रीकृष्णगरुडसंवादे सपिण्डनशवविध्योर्निरूपणं नाम पञ्चत्रिंशोऽध्यायः

श्रीगरुडमहापुराणम् ३६
तार्क्ष्यौवाच ।
कस्मादनशनं पुण्यमक्षय्यगतिदायकम् ।
स्वगृहन्तु परित्यज्य तीर्थे वै म्रियते यदि ॥ २,३६.१ ॥

अप्राप्य तीर्थं म्रियते गृहे वा मृत्यु मागतः ।
बूत्वा कुटीचरो यस्तु स कां गतिमवाप्नुयात् ॥ २,३६.२ ॥

संन्यासं कुरुते यस्तु तीर्थे वापि गृहेऽपि वा ।
कथं तस्य प्रकर्तव्यमप्राप्तनिधनेऽपि वा ॥ २,३६.३ ॥

नियमे चेत्कृते देव चित्तभङ्गो हि जायते ।
केन तस्य भवेत्सिद्धिः कृतेनाप्यकृतेन वा ॥ २,३६.४ ॥

श्रीकृष्ण उवाच ।
कृत्वा निरशनं यो वै मृत्युमाप्नोति कोऽपि चेत् ।
मानुषीं तनुमुत्सृज्य मम तुल्यो विराजते ॥ २,३६.५ ॥

यावन्त्यहानि जीवेत्व्रते निरशने कृते ।
क्रतुभिस्तानि तुल्यानि समग्रवदक्षिणैः ॥ २,३६.६ ॥

तीर्थे गृहे वा संन्यासं नीत्वा चेन्म्रियते यदि ।
प्रत्यहं लभते सोऽपि पूर्वोक्तं द्विगुणं फलम् ॥ २,३६.७ ॥

महारोगोपपत्तौ च गृहीतेऽनशने कृते ।
पुनर्न जायते रोगो देववद्धि विराजते ॥ २,३६.८ ॥

य आतुरः सन् सन्न्यासं गृह्णाति यदि मानवः ।
पुनर्न जायते भूमौ संसारे दुः खसागरे ॥ २,३६.९ ॥

अहन्यहनि दातव्यं ब्राह्मणानाञ्च भोजनम् ।
तिलपात्रं यथाशक्ति दीपदानं सुरार्चनम् ॥ २,३६.१० ॥

एवं वृत्तस्य दह्यन्ते पापान्युच्चावचानि च ।
मृतो मुक्तिमवाप्नोति यथा सर्वे महर्षयः ॥ २,३६.११ ॥

तस्मादनशनं नृणां वैकुण्ठपददायकम् ।
तस्मात्स्वस्थे चोत्तरे वा साधयेन्मोक्षलक्षणम् ॥ २,३६.१२ ॥

पुत्रद्रव्यादि सन्त्यज्य तीर्थं व्रजति यो नरः ।
ब्रह्माद्या देवतास्तस्य भवेयुस्तुष्टिपुष्टिदाः ॥ २,३६.१३ ॥

यस्तीर्थसंमुखो भूत्वा व्रते ह्यनशने कृते ।
चेन्म्रियेतान्तरालेऽपि ऋषीणां मण्डले वसेत् ॥ २,३६.१४ ॥

व्रतं निरशन कृत्वा स्वगृहेऽपि मृतो यदि ।
स्वकुलानि परित्यज्य एकाकी विचरेद्दिवि ॥ २,३६.१५ ॥

अन्नञ्चैव तथा तोयं परित्यज्य नरो यदि ।
पीतमत्पादतोयश्च न पुनर्जायते क्षितौ ॥ २,३६.१६ ॥

कृत्त्यासीनन्तत्तीर्थगतं रक्षन्ति वनदेवताः ।
यमदूता विशेषेण न याम्यास्तस्य पार्श्वगाः ॥ २,३६.१७ ॥

तीर्थसेवी नरो यस्तु सर्वकिल्बिषवर्जितः ।
तत्र म्रियते दह्येत तत्तीर्थफलभाग्भवेत् ॥ २,३६.१८ ॥

सेवितेऽपि सदा तथि ह्यन्यत्र म्रियते यदि ।
शुभे देशे कुले धीमान् स भवेद्वेदविद्द्विजः ॥ २,३६.१९ ॥

कृत्वा निरशनं तार्क्ष्य पुनर्जीवति मानवः ।
ब्राह्मणान् स समाहूय सर्वस्वं यत्परित्यजेत् ॥ २,३६.२० ॥

चान्द्रायणं चरेत्कृत्स्नमनुज्ञातश्च तैर्द्विजैः ।
अनृतं न वदेत्पश्चाद्धर्ममेव समाचरेत् ॥ २,३६.२१ ॥

तीर्थे गत्वा च यः कोऽपि पुनरायाति वै गृहम् ।
अनुज्ञातः स वै विप्रैः प्रायश्चित्तमथाचरेत् ॥ २,३६.२२ ॥

दत्त्वा वा स्वर्णदानानि गोमहीगजवाजिनः ।
तीर्थं यदि लभेद्यस्तु मृत्युकाले स भाग्यवान् ॥ २,३६.२३ ॥

गृहात्प्रचलितस्तीर्थं मरणे समुपस्थिते ।
पदेपदे तु गोदानं यदि हिंसा न जायते ॥ २,३६.२४ ॥

गृहे तु यत्कृतं पापं तीर्थस्नानेन शुध्यति ।
कुरुते तत्र पापञ्चेद्वज्रलेपसमं हि तत् ॥ २,३६.२५ ॥

क्लिश्येत्स नात्र सन्देहो यावच्चन्द्रार्कतारकम् ।
तत्र दत्तानि दानानि जायन्ते चाक्षयाणि वै ॥ २,३६.२६ ॥

आतुरे सति दातव्यं निर्धनैरपि मानवैः ।
गावस्तिला हिरण्यञ्च सप्तधान्यं विशेषतः ॥ २,३६.२७ ॥

दानवन्तं नरं दृष्ट्वा हृष्टाः सर्वे दिवौकसः ।
ऋषिभिः सह धर्मण चित्रगुप्तेन सर्वदा ॥ २,३६.२८ ॥

आत्मायत्तं धनं यावत्तावद्विप्रे समर्पयेत् ।
पराधीनं मृते सर्वं कृपया कः प्रदास्यति ॥ २,३६.२९ ॥

पित्रुद्देशेन यः पुत्रैर्धनं विप्रकरेऽर्पितम् ।
आत्मानं सधनं तेन चक्रे पुत्रप्रपौत्रकैः ॥ २,३६.३० ॥

पितुः शतगुणं दत्तं सहस्रं मातुरुच्यते ।
भगिन्या शतसाहस्रं सोदर्ये दत्तमक्षयम् ॥ २,३६.३१ ॥

यदि लोभान्न यच्छन्ति प्रमादान्मोहतोऽपि वा ।
मृताः शोचन्ति ते सर्वे कदर्याः पापिनस्त्विति ॥ २,३६.३२ ॥

अतिक्लेशेन लब्धस्य प्रकृत्या चञ्चलस्य च ।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ २,३६.३३ ॥

मृत्युः शरीगोप्तारं वसुरक्षं वसुन्धरा ।
दुश्चारिणीव हसति स्वपतिं पुत्रवत्सलम् ॥ २,३६.३४ ॥

उदासे धार्मिकः सौम्यः प्राप्यापि विपुलं धनम् ।
तृणवन्मन्यते तार्क्ष्य आत्मानं वित्तमप्यथ ॥ २,३६.३५ ॥

न चैवोपद्रवास्तस्य मोहजालो न चैव हि ।

मृत्युकाले न च भयं यमदूतसमुद्भवम् ॥ २,३६.३६ ॥

समाः सहस्राणि च सप्त वै जले दशैकमग्नौ पवने च षोडश ।
महाहवे पष्टिरशीतिर्गोगृहे अनाशके काश्यप चाक्षया गतिः ॥ २,३६.३७ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादेऽनशनमृत गतिनिरूपणं नाम षट्त्रिंशोऽध्यायः

श्रीगरुडमहापुराणम् ३७
तार्क्ष्य उवाच ।
उदकुम्भप्रदानं मे कथयस्व यथातथम् ।
विधिना केन कर्तव्या कृतिरेषा जनार्दन ॥ २,३७.१ ॥

किंलक्षणाः केन पूर्णाः कस्य देया जनार्दन ।
कस्मिन् काले प्रदातव्या प्रेततृप्तिप्रसाधकाः ॥ २,३७.२ ॥

श्रीकृष्ण उवाच ।
सत्यं पुनः प्रवक्ष्यामि उदकुम्भप्रदानकम् ।
प्रेतोद्देशेन दातव्या अन्नपानीयसंयुताः ।
विशेषेण महापक्षिन् प्रेतमुक्तिप्रदायकाः ॥ २,३७.३ ॥

द्वादशाहे च पण्मासे त्रैपक्षे वापि वत्सरे ।
उदकुम्भाः प्रदातव्या मार्गे तस्य सुखाय वै ॥ २,३७.४ ॥

अहन्यहनि दातव्या उदकुम्भास्तिलैर्युताः ।
सुलिप्ते भूमिभागे तु पक्कान्नजलपूरिताः ॥ २,३७.५ ॥

प्रेतस्य तत्र दातव्यं भाजनञ्च यदृच्छया ।
सुप्रीतस्तेन दत्तेन प्रेतो याम्यैः स गच्छति ॥ २,३७.६ ॥

द्वादशाहे विशेषेण उदकम्भान् प्रदापयेत् ।
विधिना तत्र सङ्कल्पय घटान् द्वादशसंख्यकान् ॥ २,३७.७ ॥

एकाषि बर्धनी तत्र पक्वान्नफलपूरिता ।
विष्णुमुद्दिश्य दातव्या संकल्प्य ब्राह्मणे शुभे ॥ २,३७.८ ॥

एको वै धर्मराजाय तेन तुष्टेन मुक्तिभाक् ।
चित्रगुप्ताय चैकं तु गतस्तत्र सुखी भवेत् ॥ २,३७.९ ॥

षोडशाद्याः प्रदातव्या माषान्नजलपूरिताः ॥ २,३७.१० ॥

उक्त्रान्तिश्राद्धमारभ्य श्राद्धषोडषोडशकस्य तु ।
षोडशब्राह्मणानान्तु एकैकं विनिवदयेत् ॥ २,३७.११ ॥

एकादशाहात्प्रभृति देयो नित्यं दृढाह्वयः ।
पक्वान्नजलपूर्णो हि यावत्संवत्सरं दिनम् ॥ २,३७.१२ ॥

जलपात्राणि वृद्धानि दत्तानिघटकानि च ।
एका वै वर्धनी तत्र तस्यां पात्रन्तु वंशजम् ॥ २,३७.१३ ॥

वस्त्रेणाच्छादयेत्तान्तु पूजयित्वा सुगन्धिभिः ।
ब्राह्मणेभ्यो विशेषेण जलपूर्णानि दापयेत् ॥ २,३७.१४ ॥

अहन्यहनि सङ्कल्प्य विधिपूर्वं खगेश्वर ।
ब्राह्मणाय कुलीनाय वेदवृत्तयुताय च ॥ २,३७.१५ ॥

विद्यावृत्तवते देयं मूर्खे तन्न कदाचन ।
समर्थो वेदवृत्ताढ्यस्तारणे तरणेऽपि च ॥ २,३७.१६ ॥

इति श्रीगारुडे महापुराणे द्वितीयांशे प्रेतकल्पे धर्मकाण्डे सोदकुम्भश्राद्धनिरूपणं नाम सप्तत्रिंशोऽध्यायः

श्रीगरुडमहापुराणम् ३८
ताक्ष्र्य उवाच ।
दानतीर्थार्थितं मोक्षं स्वर्गञ्च वद मे प्रभो ।
केन मोक्षमवाप्नोति केन स्वर्गे वसेच्चिरम् ॥ २,३८.१ ॥

केन गच्छति तेजस्तु स्वर्लोकात्सत्यलोकतः ।
मानुष्यं केन लभते नरकेशु निमज्जति ॥ २,३८.२ ॥

एतन्मे वदनिश्चित्य भक्तानां मोक्षदायक ।
ब्रूहि कस्मिन्मृते स्वर्गे पुनर्जन्म न विद्यते ॥ २,३८.३ ॥

श्रीविष्णुरुवाच ।
मानुष्यं भारते वर्षे त्रयोदशसु जातिषु ॥ २,३८.४ ॥

तत्प्राप्य म्रियते क्षेत्रे पुनर्जन्म न विद्यते ।
अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ॥ २,३८.५ ॥

पुरी द्वारवती ज्ञेया सप्तैता मोक्षदायिकाः ।
सन्न्यस्तमिति यो ब्रुयात्प्राणैः कण्ठगतैरपि ॥ २,३८.६ ॥

मृतो विष्णुपुरं याति न पुनर्जायते क्षितौ ।
सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ॥ २,३८.७ ॥

बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ।
कृष्णकृष्णेति कृष्णेति यो मां स्मरति नित्यशः ॥ २,३८.८ ॥

जल भित्त्वा यथा पद्मं नरकादुद्धराम्यहम् ।
शालग्रामजिला यत्र यत्र द्वारवती शिला ॥ २,३८.९ ॥

उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ।
शालग्रामशिला यत्र पापदोषक्षयावहा ॥ २,३८.१० ॥

तत्सन्निधानमरणान्मुक्तिर्जन्तोः सुनिश्चता ।
रोपणात्पालनात्सेकाद्ध्यानस्पर्शनकीर्तनात् ।
तुलसी दहते पापं नृणां जन्मार्जितं खग ॥ २,३८.११ ॥

ज्ञानहृदे सत्यजले रागद्वेषमलापहे ।
यः स्नातो मानसे तीर्थे न स लिप्येत पातकैः ॥ २,३८.१२ ॥

न काष्ठे विद्यते देवो न शिलायां कदाचन ।
भावे हि विद्यते देवस्तस्माद्भावं समाचरेत् ॥ २,३८.१३ ॥

प्रातः प्रातः प्रपश्यन्ति नर्मदां मत्स्यघातिनः ।
न ते शिवपुरीं यान्ति चित्तवृत्तिर्गरीयसी ॥ २,३८.१४ ॥

यादृक्चित्तप्रतीतिः स्यात्तादृक्कर्मफलं नृणाम् ।
परलोकगतिस्तादृक सूचीसूत्रविचारवत् ॥ २,३८.१५ ॥

ब्राह्मणार्थे गवार्थे च स्त्रीणां बलवधेषु च ।
प्राणत्यागपरो यस्तु स वै मोक्षमवाप्नुयात् ॥ २,३८.१६ ॥

अनाशके मृतौ यस्तु स वै मोक्षमवाप्नुयात् ।
अनाशके मृतो यस्तु स मुक्तः सर्वबन्धनैः ॥ २,३८.१७ ॥

दत्त्वा दानानि विप्रेभ्यस्ततो मोक्षमवाप्नुयात् ।
एते वै मोक्षमार्गाश्च स्वर्गमार्गास्तथैव च ॥ २,३८.१८ ॥

गोग्रहे देशविध्वंसे मरणं रणतीर्थयोः ।
उत्तमाधममध्यस्य बाध्यमानस्य देहिनः ।
आत्मानं तत्र सन्त्यज्य स्वर्गवासं लभेच्चिरम् ॥ २,३८.१९ ॥

जीवितं मरणञ्चैव द्वयं शिक्षेत पण्डितः ।
जीवितं दानभोगाभ्यां मरणं रणतीर्थयोः ॥ २,३८.२० ॥

हरिक्षेत्रे कुरुक्षेत्रे भृगुक्षेत्रे तथैव च ।
प्रभासे श्रीस्थले चैव अर्बुदे च त्रिपुष्करे ॥ २,३८.२१ ॥

भूतेश्वरे मृतो यस्तु स्वर्गे वसति मानवः ।
ब्रह्मणो दिवसं यावत्ततः पतति भूतले ॥ २,३८.२२ ॥

वर्षवृत्तिन्तु यो दद्याद्ब्राह्मणे दोषवर्जिते ।
सर्वं कलं स मुद्धृत्य स्वर्गलोके महीयते ॥ २,३८.२३ ॥

कन्यां विवाहयेद्यस्तु ब्राह्मणं वेदपारगम् ।
इन्द्रलोके वसेत्सोऽपि स्वकुलैः परिवेष्टितः ॥ २,३८.२४ ॥

महादानानि दत्वा च नरस्तत्फलमामुयात् ॥ २,३८.२५ ॥

वापी कूपतडागानामारामसुरसद्मनाम् ।
जीर्णोद्धारं प्रकुर्वाणः पूर्वकर्तुः फलं लभेत् ।
जीर्णोद्धारेण वा तेषां तत्पुण्यं द्विगुणं भवेत् ॥ २,३८.२६ ॥

शीतवा तातपहरमपि पर्णकुटीरकम् ।
कृत्वा विप्राय विदुषे प्रददाति कुटुम्बिने ॥ २,३८.२७ ॥

तिस्रः कोट्योर्धकोटी च नरः स्वर्गे महीयते ॥ २,३८.२८ ॥

या स्त्री सवर्णा संशुबा मृतं पतिमनुव्रजेत् ।
सा मृता स्वर्गमाप्नोति वर्षाणां रोमसंख्यता ॥ २,३८.२९ ॥

पुत्रपौत्रादिकं त्यक्त्वा स्वपतिं यानुगच्छति ।
स्वर्गं लभेतां तौ चोभौ दिव्यस्त्रीभिरलङ्कृतौ ॥ २,३८.३० ॥

कृत्वा पापान्यनेकानि भर्तृद्रोहमतिः सदा ।
प्रक्षालयति सर्वाणि या स्वं पतिमनुव्रजेत् ॥ २,३८.३१ ॥

महापापसमाचारो भर्ता चेद्दुष्कृती भवेत् ।
तस्याप्यनुव्रता नारी नारायेत्सर्वकिल्बिषम् ॥ २,३८.३२ ॥

ग्रासमात्रं नियमतो नित्यदानं करोति यः ।
चतुश्चामरसंयुक्तविमानेनाधिगच्छति ॥ २,३८.३३ ॥

यत्कृतं हि मनुष्येण पापमामरणान्तिकम् ।
तत्सर्वं नाशमायाति वर्षवृत्तिप्रदानतः ॥ २,३८.३४ ॥

भूतं भव्यं बविष्यञ्च पापं जन्मत्रयार्जितम् ।
पक्षालयति तत्सर्वं विप्रकन्योपनायनात् ॥ २,३८.३५ ॥

दशकूपसमा वापि दशवापीसमं सरः ।
सरो भिर्दशभिस्तुल्या या प्रपा निर्जले वने ॥ २,३८.३६ ॥

या वापी निर्जले देशे यद्दानं निर्धने द्विजे ।
प्राणिनां यो दयां धत्ते स भवेन्नाकनायकः ॥ २,३८.३७ ॥

एवमादिभिरन्यैश्च सुकृतैः स्वर्गभाग्भवेत् ।
स तत्सर्वं फलं प्राप्य प्रतिष्ठां परमां लभेत् ॥ २,३८.३८ ॥

फल्गु कार्यं परित्यज्य सततं धर्मवान् भवेत् ।
दानं दमो दया चेति सारमेतत्त्रयं भुवि ॥ २,३८.३९ ॥

दानं साधोर्दरिद्रस्य शून्यलिङ्गस्य पूजनम् ।
अनाथप्रेतसंस्कारः कोटियज्ञफलप्रदः ॥ २,३८.४० ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे उत्तमलोकगत्यागतिमोक्षमानुष्यहेतुनिरूपणं नामाष्टात्रिंशत्तमोऽध्यायः

श्रीगरुडमहापुराणम् ३९
ताक्ष्र्य उवाच ।
सूतकानां विधिं ब्रूहि दयां कृत्वा मयिप्रभो ।
विवेकाय हि चित्तस्य मानवानां हिताय च ॥ २,३९.१ ॥

श्रीकृष्ण उवाच ।
मृते जन्मनी पक्षीन्द्र सूतकं स्याच्चतुर्विधम् ।
चतुर्णामपि वर्णानां सामान्यते विवर्जितम् ॥ २,३९.२ ॥

उभयत्र दशाहानि कुलस्यान्नं विवर्जियेत् ।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते ॥ २,३९.३ ॥

देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयाजनम् ।
उपपत्तिंव्मवस्थाञ्च ज्ञात्वां कर्म समाचरेत् ॥ २,३९.४ ॥

गुहावह्निप्रवेसे च देशान्तरमृतेषु च ।
स्नानं सचेलं कर्तव्यं सद्यः शौचं विधीयते ॥ २,३९.५ ॥

आमगर्भाश्च ये जीवा ये च गर्भाद्विनिः सृताः ।
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया ॥ २,३९.६ ॥

शिल्पिनः कारवो वैद्या दासीदासास्तथैव च ।
राजानः श्रोतियाश्चैव सद्यः शौचाः प्रकीर्तिताः ॥ २,३९.७ ॥

सत्री च (व्रती) मन्त्रपूतश्च आहिताग्निर्नृपस्तथा ।
एतेषां सूतकं नास्ति यस्य चेच्छन्ति पार्थिवाः ॥ २,३९.८ ॥

प्रसवे च सपिण्डानां न कुर्यात्सङ्करं द्विजः ।
दशाहाच्छुध्यते माता अवगाह्य पिता शुचिः ॥ २,३९.९ ॥

विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके ।
पूर्वसङ्कल्पितं वित्तं भोज्यं तन्मनुरब्रवीत् ॥ २,३९.१० ॥

सर्वेषामेवमाशौचं मातापित्रोस्तु सूतकम् ।
सूकतं मातुरेवस्यादुपस्पृश्य पिता शुचिः ॥ २,३९.११ ॥

अन्तर्दशाहे स्याताञ्चेत्पुनर्मरणजन्मनी ।
तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् ॥ २,३९.१२ ॥

उदिते नियमे दाने आर्ते विप्रे निवेदयेत् ।
तथैव ऋषिभिः प्रोक्तं यथाकालं न दुष्यति ॥ २,३९.१३ ॥

मृन्मयेन तु पात्रेण तिलैर्मिश्रजलैः सह ।
मृत्तिकया तथान्ते च नरः स्नात्वा शुचिर्भवेत् ॥ २,३९.१४ ॥

दानं परिषदे दद्यात्सुवर्णं गोवृषं द्विजे ।
क्षत्त्रियो द्विगुणं चैव वैश्यस्तु त्रिगुणं तथा ॥ २,३९.१५ ॥

चतुर्गुणन्तु शूद्रेण दातव्यं ब्राह्मणे धनम् ।
एव मनुक्रमेणैव चातुर्वर्ण्यं विशुध्यति ॥ २,३९.१६ ॥

सप्ताष्टमान्तरै शीर्णे गृह्यसंस्कारवर्जिते ।
अहस्तु सूतकं तस्य त्वब्दानां संख्यया स्मृतम् ॥ २,३९.१७ ॥

ब्राह्मणार्थे विपन्ना ये नारीणां गोग्रहेषु च ।
आहवेषु विपन्नानामेकरात्त्रमशौचकम् ॥ २,३९.१८ ॥

न तेषामशुभं किञ्चिद्विप्राणां शुभकर्मणि ।
अनाथप्रेतसंस्कारं ये कुर्वन्तु नरोत्तमः ॥ २,३९.१९ ॥

न तेषामशुभङ्किञ्चिद्विप्रेण सहकारिणा ।
जलावगाहनात्तेषां सद्यः शुद्धिरुदाहृता ॥ २,३९.२० ॥

विनिवृत्ता यदा शूद्रा उदकान्तमुपस्थिताः ।
तदाविप्रेणद्रष्टव्या इति वेदविदोविदुः ॥ २,३९.२१ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीद्द धद्दप्रेतकल्पे श्रीकृष्णगरुडसंवादे सूतककालादिनिरूपणं नामैकोनचत्वारिंशोऽध्यायः

ताक्ष्र्य उवाच ।
भगवन्ब्राह्मणाः केचिदपमृत्युवशं गताः ।
कथं तेषां भवेन्मार्गः किं स्थानं का गतिर्भवेत् ॥ १ ॥
किञ्च युक्तं भवेत्तेषां विधानं वापि कीदृशम् ।
तदहं श्रोतुमिच्छामि ब्रूहि मे मधुसूदन ॥ २ ॥
श्रीकृष्ण उवाच ।
प्रेतीभूताद्विजातीनां सम्भूते मृत्युवैकृते ।
तेषां मार्गगतिस्थानं विधानं कथयाम्यहम् ॥ ३ ॥
शृणु ताक्ष्र्य परं गोप्यं जाते दुर्मरणे सति ।
लङ्घनैर्ये मृता विप्रा दंष्ट्रिभिश्चाभिघातिताः ॥ ४ ॥
कण्ठग्राह विमग्नानां क्षीणानां तुण्डघातिनाम् ।
विषाग्निवृषविप्रेभ्यो विषूच्या चात्मघातकाः ॥ ५ ॥
पतनोद्वन्धनजलैर्मृतानां शृणु संस्थितिम् ।
यान्ति ते नरकेघोरे ये च म्लेच्छादिभिर्हताः ॥ ६ ॥
श्वशृगालादिसंस्पृष्टा अदग्धाः कृमिसंङ्कुलाः ।
उल्लङ्घिता मृता ये च महारोगैश्च पीडिताः ॥ ७ ॥
अभिसस्तास्तथाव्यङ्गा ये च पापान्नपोषिताः ।
चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युताग्नितः ॥ ८ ॥
दष्ट्रिभ्यश्च पशुभ्यश्च वृक्षादिपतनान्मृताः ।
उदक्यामूतकीशूद्रारजकीसङ्गदूषिताः ॥ ९ ॥
तेन पापेन नरकान्मुक्ताः प्रेतत्वभागिनः ।
न तेषां कारयेद्दाहं सूतकं नोदकक्रियाम् ॥ १० ॥
न विधानं मृताद्यं च न कुर्यादौर्ध्वदैहिकम् ।
तेषां ताक्ष्र्य प्रकुर्वीत नारायणबलिक्रियाम् ॥ ११ ॥
सर्वलोकहितार्थाय शृणु पापभयापहाम् ।
षण्मासं ब्राह्मणे दाहस्त्रिमासं क्षत्त्रिये मतः ॥ १२ ॥
सार्ध मासं तु वैश्यस्य सद्यः शूद्रे विधीयते ।
गङ्गायां यमुनायाञ्च नैमिषे पुष्करेऽथ च ॥ १३ ॥
तडागे जलपूर्णे वा ह्रदे वा विमलोदके ।
वाप्यां कूपे गवां गोष्ठे गृहे वा प्रतिमालये ॥ १४ ॥
कृष्णाग्रे कारयेद्विप्र बलिं नारायणाह्वयम् ।
प्रेताय तर्पणं कार्यं मन्त्रैः पौराणवैदिकैः ॥ १५ ॥

सर्वौषध्यक्षतैर्मिश्रैर्विष्णुमुद्दिश्य तर्पयेत् ।
कार्यं पुरुषसूक्तेन मन्त्रैर्वा वैष्णवैरपि ॥ १६ ॥
दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुरिति स्मरेत् ।
अनादिनिधनो देवः शङ्खचक्रगदाधरः ॥ १७ ॥
अव्ययः पुण्डरीकाक्षः प्रेतमोक्षप्रदो भवेत् ।
तर्पणस्यावसाने च वीतरागो विमत्सरः ॥ १८ ॥
जितेन्द्रियमना भूत्वा शुचिष्मान्धर्मतत्परः ।
दानधर्मरतः शान्तः प्रणम्य वाग्यतः शुचिः ॥ १९ ॥
यजमानो भबेत्तत्र शुचिर्वन्धुसमन्वितः ।
भक्त्या तत्र प्रकुर्वीत श्राद्धत्येकादशैव तु ॥ २० ॥
सर्वकर्मविपाकेन एकैकाग्रे समाहितः ।
तोयव्रीहियवान् षष्ट्या गोधूमांश्च प्रियङ्गुकान् ॥ २१ ॥
हविष्यान्नं शुभं मुद्रां छत्रोष्णीषे च चलेकम् ।
दापयेत्सर्वसस्यानि क्षीरक्षौद्रयुतानि च ॥ २२ ॥
वस्त्रोपानहसंयुक्तं दद्यादष्टविधं पदम् ।
दापयेत्सर्वविप्रेभ्यो न कुर्यात्पङ्क्तिबन्धनम् ॥ २३ ॥
भूमौ स्थितेषु पिण्डेषु गन्धपुष्पाक्षतान्वितम् ।
शङ्खपात्रे तथा ताम्रे तर्पणञ्च पृथक्पृथक् ॥ २४ ॥
ध्यानधारणसंयुक्तो जानुभ्यामवनिं गतः ।
दातव्यं सर्वविप्रेभ्यो वेदशास्त्रविधानतः ॥ २५ ॥
ऋचा वै दापयेदर्घ्यमेकोद्दिष्टे पृथक्पृथक् ।
आपोदेवीर्मधुमतीरादिपीठे प्रकल्पितम् ॥ २६ ॥
उपयामगृहीतोऽसि द्वितीयेर्ऽघं निवेदयेत् ।
येनापावकचक्षुषा तृतीये च कसल्पितम् ॥ २७ ॥
ये देवासश्चतुर्थे तु समुद्रं गच्छ पञ्चमे ।
अग्निर्ज्योति स्तथा षष्ठे हिरण्यगर्भः सप्तमे ॥ २८ ॥
यमाय त्वाष्टमे ज्ञेयं यज्जग्रन्नवमे तथा ।
तशमे याः फलिनीति पिण्डे चैकादशे ततः ॥ २९ ॥
भद्रं कर्णेभिरिति च कुर्यात्पिण्डविसर्जनम् ।
कृत्वैकादशदेवत्यं श्राद्धं कुर्यात्परेऽहनि ॥ ३० ॥
विप्रानावाहयेत्पञ्च चतुर्वेदविशारदान् ।
विद्याशीलगुणोपेतान्स्व कीयाञ्छीलसत्तमान् ।
अब्यङ्गान्सप्रशस्तांश्च न त्वर्ज्यान्कदाचन ॥ ३१ ॥

विष्णुः स्वर्णमयः कार्यो रुदस्ताम्रमयस्तथा ।
ब्रह्मा रूप्यमयस्तद्वद्यमो लोहमयो भवेत् ॥ ३२ ॥
सीसकं तु भवेत्प्रेतं त्वथ वा दर्भकं तथा ।
शन्नोदेवीति मन्त्रेण गोविन्दं पश्चिमे न्यसेत् ॥ ३३ ॥
अग्न आयाहीति रुद्रमुत्तरत्रैव विन्यसेत् ।
अग्निमीळेति मन्त्रेण पूर्वेणैव प्रजापतिम् ॥ ३४ ॥
इषेत्वोर्जोति मन्त्रेण दक्षिणे स्थापयेद्यमम् ।
मध्ये मण्डलकं कृत्वा स्थाप्यो दर्भमयो नरः ॥ ३५ ॥
ब्रह्मा विष्णुस्तथा रुद्रो यमः प्रेतश्च पञ्चमः ।
पृथक्कुम्भे ततः स्थाप्याः पञ्चरत्नसमन्विताः ॥ ३६ ॥
वस्त्रयज्ञोपवीतानि पृथङ्मुद्रापराणि च ।
जपं कर्यात्पृथक्तत्र ब्रह्मादौ देवतासु च ॥ ३७ ॥
पञ्च श्राद्धानि कुर्वीत देवतानां यथाविधि ।
जलधारां ततो दद्यत्पीठेपीठे पृथक्पृथक् ॥ ३८ ॥
शङ्खे वा ताम्रपात्रे वा अलाभे मृन्मयेऽपि वा ।
तिलोदकं समादाय सर्वौषधिसमन्वितम् ॥ ३९ ॥
आसनोपानहौ च्छत्रं मुद्रिका च कमण्डलुः ।
भाजनं भाजनाधारं वस्त्राण्यष्टविधं पदम् ॥ ४० ॥
ताम्रपात्रं तिलैः पूर्णं सहिरण्यं सदक्षिणम् ।
दद्याद्ब्राह्मणमुख्याय विधियुक्तं खगेश्वर ॥ ४१ ॥
ऋग्वेदपारगे दद्याज्जातसस्यां वसुन्धराम् ।
यजुर्वेदमये विप्रे गाञ्च दद्यात्पयस्विनीम् ॥ ४२ ॥
सामगाय शिवोद्देशात्प्रदद्यात्कलधौतकम् ।
यमोद्देशात्तिलांल्लोहं ततो दद्याच्च दक्षिणाम् ॥ ४३ ॥
पश्चात्पुत्तलकं कार्यं सर्वौषधिसमन्वितम् ।
पलाशस्य च वृन्तानां विभागं शृणु काश्यप ॥ ४४ ॥
कृष्णाजिनं समास्तीर्य कुशैश्च पुरुषाकृतिम् ।
शतत्रयेण षष्ट्या च वृन्तैः प्रोक्तोऽस्थिसञ्चयः ॥ ४५ ॥
विन्यस्य तानि वृन्तानि अङ्गेष्वेषु पृथक्पृथक् ।
चत्वारिंशच्छिरोदेशे ग्रीवायां दश विन्यसेत् ॥ ४६ ॥
विंशत्युरः स्थले दद्याद्विंशतिं जठरेऽपि च ।
बाहुयुग्मे शतं दद्यात्कटि देशे च विंशतिम् ॥ ४७ ॥
ऊरुद्वये शतञ्चापि त्रिंशज्जङ्घाद्वये न्यसेत् ।

दद्याच्चतुष्टयं शिश्रे षड्ददद्याद्वृषणद्वये ।
दश पादाङ्गुलीभागे एवमस्थीनि विन्यसेत् ॥ ४८ ॥
नारिकेलं शिरः स्थाने तुम्बं दद्याच्च तालुके ।
पञ्चरत्नं मुखे दद्याज्जिह्वायां कदलीफलम् ॥ ४९ ॥
अन्त्रेषु नालकं दद्याद्बालकं प्राण एव च ।
वसायीं मेदकं दद्याद्गोमूत्रेण तु मूत्रकम् ॥ ५० ॥
गन्धकं धातवो देयो हरितालं मनः शिला ।
रेतः स्थाने पारदञ्च पुरीषे पित्तलं तथा ॥ ५१ ॥
मनः शिलां तथा गात्रे तिलकल्कञ्च सन्धिषु ।
यवपिष्टं तथा मांसे मधु वै क्षौद्रमेव च ॥ ५२ ॥
केशेषु वै वटजटात्वचि दद्यान्मृगत्वचम् ।
कर्णयोस्तालपत्रञ्च स्तनयोश्चैव गुञ्जिकाः ॥ ५३ ॥
नासायां शतपत्रं च कमलं नाभिमण्डले ।
वृन्ताकं वृषणद्वन्द्वे लिङ्गे स्याद्गृञ्जनं शुभम् ॥ ५४ ॥
घृतं नाभ्यां प्रदेयं स्यात्कौपीने च त्रपु स्मृतम् ।
मौक्तिकं स्तनयोर्मूर्ध्नि कुङ्कुमेन विलेपनम् ॥ ५५ ॥
कर्पूरागुरुधूपैश्च शुभैर्माल्यैः सुगन्धिभिः ।
परिधानं पट्टसूत्रं हृदये रुक्मकं न्यसेत् ॥ ५६ ॥
ऋद्धिवृद्धी भुजौ द्वौ च चक्षुषोश्च कपर्दकौ ।
सिन्दूरं नेत्रकोणे च ताम्बूलाद्युपहारकैः ॥ ५७ ॥
सर्वौषधियुतं प्रेतं कृत्वा पूजा यथोदिता ।
साग्निके (कैश्चा) चापि विधिना यज्ञपात्रं न्यसेत्क्रमात् ॥ ५८ ॥
शिरोमे श्रीरिति ऋचा पुनन्तु वरुणेति च ।
प्रेतस्य पावनं कृत्वा शालिशालशिलोदकैः ॥ ५९ ॥
विष्णुमुद्दिश्य दातव्या सुशीलागौः पयस्विनी ॥ ६० ॥
(तिला लोहं हिरण्यं च कार्पासं लवणं तथा ।
सप्तधान्यं क्षितिर्गाव एकैकं पानं समृतम् ॥ ६१ ॥
तिलपात्रं ततो दत्त्वा पददानं तथैव च ॥ ६१*१ ॥
महादानानि देयानि तिलपात्रं तथेति च ।
ततो वैतरणी देया सर्वाभरणभूषिता ॥ ६२ ॥
कर्तव्यं वैष्णवं श्राद्धं प्रेतमुक्त्यर्थ मात्मवान् ।
प्रेतंमोक्षं ततः कुर्याद्धृदि विष्णुं प्रकल्प्य च ॥ ६३ ॥
ओं विष्णुरिति संस्मृत्य प्रेतं तन्मृत्युमेव च ।

अग्निदाहं ततः कुर्यात्सूतकन्तु दिनत्रयम् ॥ ६४ ॥
दशाहकर्त्रा पिण्डाश्च कर्तव्याः प्रेतभुक्तये ।
सर्वं वर्षविधिं कुर्यादेवं प्रेतश्च मुक्तिभाक् ॥ ६५ ॥
इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादेऽपमृत्यौ सुखदुः खलाभालाभनिरूपणं नाम चत्वारिंशत्तमोऽध्यायः

श्रीगरुडमहापुराणम् ४१
श्रीविष्णुरुवाच ।
वृषोत्सर्गं प्रकुर्वीत विधिपूर्वं खगेश्वर ।
कार्तिकादिषु मासेषु पौर्णमास्यां शुभे दिने ॥ २,४१.१ ॥

विवाहोत्सर्जनं श्राद्धं नान्दीमुखमुपक्रमेत् ।
कुर्याद्ध्रुवश्च संस्कारानग्निस्थापनमेव च ॥ २,४१.२ ॥

वाप्यां कूपे गवां गोष्ठे स्थाप्याग्निं विधिवत्ततः ।
विवाहविधिना सर्वं कुर्याद्ब्राह्मणवाचनम् ॥ २,४१.३ ॥

पात्रासादनं श्रपणमुपयमनकुशादिकम् ।
पुर्युक्षणान्ते होमं च कर्या द्वै ब्राह्मणेन तु ॥ २,४१.४ ॥

आघारावाज्यभागौ च चक्षुषी च प्रदा पयेत् ।
प्रथमेऽहरिति मन्त्रेण होतव्याश्च षडाहुतीः (तयः) ॥ २,४१.५ ॥

आघारावाज्यभागौ तु पायसेनाङ्गदेवताः ।
अग्नये रुद्राय शर्वाय पशुपतये उग्राय शिवाय ।
भवाय महादेवायेशानाय यमाय च ॥ २,४१.६ ॥

पिष्टकेन सकृद्धोमं पूषागा इति मन्त्रतः ।
उभयोः स्विष्टिकृद्धोमश्चरुणा पायसेन च ॥ २,४१.७ ॥

प्रथमं व्याहृतिहोमः प्रायश्चित्तं प्रजापतिः ।
संस्त्रवप्राशनं कुर्यात्प्रणीतापरिमोक्षणम् ॥ २,४१.८ ॥

पवित्रप्रतिपत्तिश्च ब्राह्मणे दक्षैणा ततः ।
षडङ्गरुद्रजाप्येन प्रोतो मोक्षमवाप्नुयात् ॥ २,४१.९ ॥

एकवर्णं वृषञ्चैव सकृद्वत्सतरीं खग ।
स्नापयित्वा ततः कुर्यात्सर्वालङ्कारभूषितम् ॥ २,४१.१० ॥

प्रतिष्ठाप्य च तद्युग्मं प्रेतो मोक्षमवाप्नुयात् ।
पुच्छेच तर्पणं कार्यमुच्छ्रिते मन्त्रपूर्वकम् ।
ब्राह्मणान् भोजयेत्पश्चाद्दक्षिणाभिश्च तोषयेत् ॥ २,४१.११ ॥

ततः श्राद्धं समुद्दिष्टमेकोद्दिष्टं यथाविधि ।
जलमन्नं तथा देयं प्रेतोद्धरणहेतवे ॥ २,४१.१२ ॥

द्वादशाहे ततः कुर्यान्मासेमासे पृथक्पथक् ।
एवं विधिः समायुक्तः प्रेतमोक्षे करोति हि ॥ २,४१.१३ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे वृषोत्सर्गनिरूपणं नामैकचत्वारिंशत्तमोऽध्यायः

श्रीगरुडमहापुराणम् ४२
श्रीविष्णुरुवाच ।
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ २,४२.१ ॥

आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः ।
शूलपाणिश्च भगवानभिनन्दति भूमिदम् ॥ २,४२.२ ॥

नास्ति भूमिसमं दानं नास्ति भूमिसमो निधिः ।
नास्ति सत्यसमो धर्मो नानृतात्पातकं परम् ॥ २,४२.३ ॥

अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकत्रयं तेन भवेत्प्रदत्तं यः काञ्चनं गां च महीं च दद्यात् ॥ २,४२.४ ॥

त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।
नरकादुद्धरन्त्येते जपपूजनहोमतः ॥ २,४२.५ ॥

कृत्वा बहूनि पापानि रौद्राणि विपुलानि च ।
अपि गोचर्ममात्रेण भूमिदानेन शुध्यति ॥ २,४२.६ ॥

हरन्तमपि लोभेन निरुध्यैनं निवारयेत् ।
स याति नरके घोरे यस्तं न परिरक्षति ॥ २,४२.७ ॥

अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ।
कर्तव्यमेव कर्तव्यमिति धर्मविदो विदुः ॥ २,४२.८ ॥

आकारप्रवर्तने पापं गोसहस्रवधैःसमम् ।
वृत्तिच्छेदे तथा वृत्तेः करणं लक्षधेनुकम् ॥ २,४२.९ ॥

वरमेकाप्यपहृता न तु दत्तं गवां शतम् ।
एकां हृत्वा शतं दत्त्वा न तेन समता भवेत् ॥ २,४२.१० ॥

स्वयमेव तु यो दत्त्वा स्वयमेव प्रबाधते ।
स पापी नरकं याति यावदाभूतसंप्लवम् ॥ २,४२.११ ॥

न चाश्वमेधेन तथा विधिवद्दक्षिणावता ।
अवृत्तिकर्शिते दीने ब्राह्मणे रक्षिते यथा ॥ २,४२.१२ ॥

न तद्भवति वेदेषु यज्ञे सुबहुदक्षिणे ।
यत्पुण्यं दुर्बले त्रस्ते ब्राह्मणे परिरक्षिते ॥ २,४२.१३ ॥

ब्रह्मस्वैश्च सुपुष्टानि वाहनानि बलानि च ।

युद्धकाले विशीर्यन्ते सैकताः सेतवो यथा ॥ २,४२.१४ ॥

स्वदत्तां परदत्तां वा यो हरेच्च वसुन्धराम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ २,४२.१५ ॥

ब्रह्मस्वं प्रणयाद्भुक्तं दहत्यासप्तमं कुलम् ।
तदेव चौर्यरूपेण दहत्याचन्द्रतारकम् ॥ २,४२.१६ ॥

लोहचूर्णाश्मचूर्णानि कदाचिज्जरयेत्पुमान् ।
ब्रह्मस्वन्त्रिषु लोकेषु कः पुमाञ्जरयिष्यति ॥ २,४२.१७ ॥

देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ २,४२.१८ ॥

ब्राह्मणाति क्रमो नास्ति विप्रे विद्याविवर्जिते ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ २,४२.१९ ॥

संक्रान्तौ यानि दानानि हव्यकव्यानि यानि च ।
सप्तकल्पक्षयं यावद्ददात्यर्कः पुनः पुनः ॥ २,४२.२० ॥

प्रतिग्रहाध्यापनयाजनेषु प्रतिग्रहं स्वेष्टतमं वदन्ति ।
प्रतिग्रहाच्छुध्यति जाप्यहोमं न याजनं कर्म पुनन्ति वेदाः ॥ २,४२.२१ ॥

सदा जापी सदा होमी परपाकविवर्जितः ।
रत्नपूर्णामपि महीं प्रतिगृह्णन्न लिप्यते ॥ २,४२.२२ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे भूदानादिनिरूपणं नाम द्विचत्वारिंशतमोऽध्यायः

श्रीगरुडमहापुराणम् ४३
श्रीविष्णुरुवाच ।
जलाग्निबन्धनभ्रष्टा प्रव्रज्यानाशकच्युताः ।
ऐन्दवाभ्यां विशुध्यन्ति दत्त्वा धेनुं तथा वृषम् ॥ २,४३.१ ॥

ऊनद्वादशवर्षस्य चतुर्वर्षाधिकस्य च ।
प्रायश्चित्तं चरेन्माता पिता वान्योऽपि बान्धवः ॥ २,४३.२ ॥

अतो बालनरस्यापि नापराधो न पातकम् ।
राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते ॥ २,४३.३ ॥

रक्तस्य दर्शने दष्टे आतुरा स्त्री भवेद्यदि ।
चतुर्थेऽह्नि पदादींश्च त्यक्त्वा स्नात्वा विशुध्यति ॥ २,४३.४ ॥

आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः ।
स्नात्वास्नात्वास्पृशेदेनं ततः शुध्येत्स आतुरः ॥ २,४३.५ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे शुद्धिनिरूपणं नाम त्रिचत्वारिंशोऽध्यायः

श्रीगरुडमहापुराणम् ४४
श्रीविष्णुरुवाच ।
स्वेच्छया ताक्ष्यर्य मरणं शृङ्गिदंष्ट्रिसरीसृपः ।
चाण्डालाद्यात्मघातैश्च विषाद्यैस्ताडनैस्तथा ॥ २,४४.१ ॥

जलाग्निपातवातैश्च निराहारादिभिस्तथा ।
येषामेव भवेन्मृत्युः प्रोक्तास्ते पापकर्मिणः ॥ २,४४.२ ॥

पाषड्यनाश्रमाश्चैव महापातकिनस्तथा ।
स्त्रियश्च व्यभिचारिण्य आरूढपतितास्तथा ॥ २,४४.३ ॥

न तेषां स्यान्नव श्राद्धं न संस्कारः सपिण्डनम् ।
श्राद्धानि षोडशोक्तानि न भवन्ति च तान्यपि ॥ २,४४.४ ॥

वेतनं यत्क्षिपेदप्सु गृह्याग्निश्च चतुष्पथे ।
पात्राणिनिर्दहेदग्नौ साग्निके पापकर्मणि ॥ २,४४.५ ॥

पूर्णे संवत्सरे तेषामित्थं कार्यं दयालुभिः ।
एकादशीं समासाद्य शुक्लपक्षे च काश्यप ॥ २,४४.६ ॥

विष्णुं यमं च सम्पूज्य गन्धपुष्पाक्षतादिभिः ।
दश पिण्डान् घृताक्तांश्च दर्भेषु मधुसंयुतान् ॥ २,४४.७ ॥

यज्ञोपवीति सतिलान् ध्यायन् विष्णुं यमं तथा ।
दक्षिणाभिमुखस्तूष्णीमेकैकं निर्वपेत्तुतान् ॥ २,४४.८ ॥

उद्धृत्य मिश्रितान् पश्चात्तीर्थेऽभ्मः सु विनिः क्षिपेत् ।
क्षिपन् संकीर्तयेन्नाम गोत्रं च मृतकस्य च ॥ २,४४.९ ॥

पुनरप्यर्चयेद्विष्णुं यमं कुसुमचन्दनैः ।
धूपदीपैः सनैवेद्यैर्भक्ष्यभोज्यसमन्वितैः ॥ २,४४.१० ॥

तस्मिन्नुपवसेदह्नि विप्रांश्चेव निमन्त्रयेत् ।
कुलविद्यातपोयुक्तान् साधुशीलसमन्वितान् ॥ २,४४.११ ॥

नव सप्ताथवा पञ्च स्वसामर्थ्यानुसारतः ।
अपरेऽहनि मध्याह्ने यमं विष्णुं तथार्चयेत् ॥ २,४४.१२ ॥

उदङ्मुखांस्तथा विप्रांस्तान् सम्यगुपवेशयेत् ।
आवाहनार्घदानादौ विष्णुं यमसमन्वितम् ॥ २,४४.१३ ॥

यज्ञोपवीती कुर्वीत प्रेतनाम प्रकीर्तयेत् ।

प्रेतं यमं च विष्णुं च स्मरन् श्राद्धं समापयेत् ॥ २,४४.१४ ॥

अन्येभ्यश्चापि सर्वेभ्यः पिण्डदानार्थमुद्धरेत् ।
पृथग्वा दश पिण्डांश्च पञ्च दद्यात्क्रमेण तु ॥ २,४४.१५ ॥

प्रथमं विष्णवे दद्याद्ब्रह्मणे च शिवाय च ।
सभृत्याय शिवायाथ प्रेतायापि च पञ्चमम् ॥ २,४४.१६ ॥

नाम गोत्रं स्मरेत्तस्य विष्णुशब्दं प्रकीर्तयेत् ।
नमस्कारशिरस्कन्तु पञ्चमं पिण्डमुद्धरेत् ॥ २,४४.१७ ॥

गोभूमिपिण्डदानाद्यैः शक्त्या प्रेतं स्मरंश्च तम् ।
तिलैस्तिलांस्तु विप्राणां दर्भयुक्तेषु पाणिषु ॥ २,४४.१८ ॥

दद्यादन्नं द्विजानां च ताम्बूलं दक्षिणां तथा ।
एवं शिष्टतमं विप्रं हरिण्येन प्रपूजयेत् ॥ २,४४.१९ ॥

नाम गोत्रं स्मरन् दद्याद्विष्णुप्रीतोस्त्विति ब्रुवन् ।
अनुव्रज्य द्विजान् पश्चात्त्यक्ताम्भो दक्षिणामुखः ॥ २,४४.२० ॥

कीर्तयन्नामगोत्रे तु भुवि प्रीतोस्त्विति क्षिपेत् ।
मित्रबन्धुजनैः सार्धं शेषं भुञ्जीत वाग्यतः ।
प्रतिसंवत्सरादि स्यादेकोद्दिष्टविधानतः ॥ २,४४.२१ ॥

एवं कृते गमिष्यन्ति स्वर्लोकं पापकर्मिणः ।
सपिण्डीकरणादौ तु कृते चैवाप्नुवन्तिते ॥ २,४४.२२ ॥

अथ कश्चित्प्रमादेन म्रियते ह्युदकादिभिः ।
संसारप्रमुखस्तस्य सर्वं कुर्याद्यथाविधि ॥ २,४४.२३ ॥

प्रमादादिच्छया मर्त्यो न गच्छेत्सर्पसंमुखः ।
पक्षयोरुभयोर्नागं पञ्चमीषु प्रपूजयेत् ॥ २,४४.२४ ॥

कुर्यात्पिष्टमयीं लेखां नागानामाकृतिं भुवि ।
अर्चयेत्तां सितैः पुष्पैः सुगन्धैश्चन्दनेनच ॥ २,४४.२५ ॥

प्रदद्याद्धूपदीपन्तु तण्डुलांश्च सितान् क्षिपेत् ।
आमपिष्टं तथैवान्नं क्षीरञ्च विनिवेदयेत् ॥ २,४४.२६ ॥

उपस्थाय वदेदेवं मुञ्चन्मुद्रांशुकानि च ।
मधुरं तद्दिनेऽश्नीयाद्देवश्राद्धं समापयेत् ॥ २,४४.२७ ॥

सौवर्णं शक्तितो नागं ततो दद्याद्द्विजोत्तमे ।
धेनुं दत्त्वा ततो ब्रूयात्प्रीयतां नागराडिति ॥ २,४४.२८ ॥

यथाविभव्यं कुर्वीत कर्माण्यन्यानि पूर्ववत् ।
स्वशाखोक्तविधानेन इत्थं कुर्याद्यथातथम् ।
प्रेतत्वान्मोचयेत्तांस्तु स्वर्गमार्गं नयेत्च ॥ २,४४.२९ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशाख्ये धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे दुर्मरणे कार्याकार्यक्रियादिनिरूपणं नाम चतुश्चत्वारिंशोऽध्यायः

श्रीगरुडमहापुराणम् ४५
श्रीविष्णुरुवाच ।
प्रत्यब्दं श्राद्धमेवं ते कथयामि खगेश्वर ।
प्रत्यब्दं पार्वणेनैव कुर्यातां क्षेत्रजोरसौ ॥ २,४५.१ ॥

विधिनाचेतरैरेवमेकोद्दिष्टं न पार्वणम् ॥ २,४५.२ ॥

अनग्नेश्च सुतौ स्यातामनग्नी क्षेत्रजोरसौ ।
एकोद्दिष्टं न कुर्यातां प्रत्यब्दं तौ तु पार्वणम् ॥ २,४५.३ ॥

यदा त्वन्यतरः साग्निः पुत्रो वाप्यथवा पिता ।
प्रत्यब्दं पार्वणं तत्र कुर्यातां क्षेत्रजौरसौ ॥ २,४५.४ ॥

अनग्नयः साग्नयो वा पुत्रा वा पितरोऽपि वा ।
एकोद्दिष्टं सुतैः कार्यं क्षयाह इति केचन ॥ २,४५.५ ॥

दर्शकाले क्षयो यस्य प्रेतपक्षेऽथ वा पुनः ।
प्रत्यब्दं पार्वणं कार्यं तस्य सर्वैः सुतैरपि ॥ २,४५.६ ॥

एकोद्दिष्टमपुत्राणां पुंसां स्याद्योपितामपि ।
एकोद्दिष्टे कुशा ग्राह्याः समूला यज्ञकर्मणि ।
बहिर्लूनाः सकृल्लनाः श्राद्धं वृद्धिमृते सदा ॥ २,४५.७ ॥

कर्तव्ये पार्वणे श्राद्धे आशौचं यदि जायते ।
आशौचावगमे कुर्याच्छ्राद्धं हि तदनन्तरम् ॥ २,४५.८ ॥

एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते ।
मासेन्यस्मिन् तिथौ तस्यां कुर्याच्छ्राद्धं तदैव हि ॥ २,४५.९ ॥

तूष्णीं श्राद्धान्तु शूद्रस्य भार्यायास्तत्सुतस्य च ।
कन्यायाश्च द्विजातीनामनुपेतद्विजस्य च ॥ २,४५.१० ॥

एककाले गता सूनां बहूनामथ वा द्वयोः ।
तन्त्रेण श्रपणं कुर्याच्छ्राद्धं कुर्यात्पृथक्पृथक् ॥ २,४५.११ ॥

दद्यात्पूर्वं मृतस्यादौ द्वितीयस्य ततः पुनः ।
तृतीयस्य ततः कुर्यात्संनिपाते त्वयं विधिः (क्रमः) ॥ २,४५.१२ ॥

प्रत्यब्दमेवं यः कुर्याद्यथातथमतन्द्रितः ।
तारयित्वा पितॄन् सर्वान् प्राप्नोति परमां गतिम् ॥ २,४५.१३ ॥

न ज्ञायते मृताहश्चेत्प्रस्थानदिनमेव च ।

मासश्चेत्स्यात्परिज्ञातस्तद्दर्शे स्यान्मृताहिकम् ॥ २,४५.१४ ॥

यदा मासो न विज्ञातो विज्ञातं दिनमेव च ।
तदा मार्गशिरे मासि माघे वा तद्दिनं भवेत् ॥ २,४५.१५ ॥

दिनमासावविज्ञातौ मरणस्य यदा पुनः ।
प्रस्थानदिनमासौ तु ग्राह्यौ श्राद्धे मयोदितौ ॥ २,४५.१६ ॥

प्रस्थानस्यापि न ज्ञातौ दिनमासौ यदा पुनः ।
मृतवार्ताश्रुतौ ग्राह्यौ पूर्वप्रोक्तक्रमेण तु ॥ २,४५.१७ ॥

प्रवासमन्तरेणापि स्यातां तौ विस्मृतौ यदा ।
तदानीमपि तौ ग्राह्यौ पूर्ववत्तु मृताहिके ॥ २,४५.१८ ॥

गृहस्थे प्रोषिते यच्च कश्चित्तु म्रियते गृहे ।
आसौचापगमे यत्र प्रारब्धे श्राद्धकर्मणि ॥ २,४५.१९ ॥

प्रत्यागतश्चेज्जानाति तत्र वृत्तं गृही तथा ।
आशौचं गृहिणस्तेषां न द्रव्यादेस्तदा भवेत् ॥ २,४५.२० ॥

पुत्रादिना यदारब्धं श्राद्धं तत्त्वेन वाखिलम् ।
समापनीयं तत्रापि श्राद्धं गृहीतु दूरतः ॥ २,४५.२१ ॥

दात्रा बोक्त्रा च न ज्ञातं सूतकं मृतकं तथा ।
उभयोरपि तद्दोषं नारोपयति कर्हिचित् ॥ २,४५.२२ ॥

यदा त्वन्यतरज्ञातं सूतकं मृतकं तथा ।
भोक्तुरेव तदा दोषो नान्यो दाता प्रदुष्यति ॥ २,४५.२३ ॥

इत्युक्तेन प्रकारेण यः कुर्यान्मृतवासरम् ।
अविज्ञातमृताहस्य सततं तारयत्यसौ ॥ २,४५.२४ ॥

नित्यश्राद्धेऽथ गन्धाद्यैर्द्विजानभ्यर्च्य भक्तितः ।
सर्वान् पितृगणान् सम्यक्सहैवोद्दिश्य योजयेत् ॥ २,४५.२५ ॥

आवाहनं स्वधाकारो पिण्डाग्नौकरणादिकम् ।
ब्रह्मचर्यादिनियमा विश्वदेवास्तथैव च ॥ २,४५.२६ ॥

नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत् ।
दत्त्वा तु दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत् ॥ २,४५.२७ ॥

देवानुद्दिश्य विश्वादीन् यद्दद्याद्द्विजभोजनम् ।

तन्नित्यश्राद्धवत्कार्यं देवश्राद्धं तदुच्यते ॥ २,४५.२८ ॥

मातृश्राद्धन्तु पूर्वेण कर्मादौ पैतृकं तथा ।
उत्तरेऽहनि वृद्धौ स्यान्मातामहगणस्य तु ॥ २,४५.२९ ॥

श्राद्धत्रयं प्रकुर्वीत वैश्वदेवन्तुतान्त्रिकम् ॥ २,४५.३० ॥

मातृभ्यः कल्पयेत्पूर्वं पितृभ्यस्तदनन्तरम् ।
मातामहेभ्यश्च तथा दद्यादित्थं क्रमेण तु ॥ २,४५.३१ ॥

मातृश्राद्धे तु विप्राणामभावे सुकुलोद्गताः ।
पतिपुत्रान्विताः साध्व्यो योषितोऽष्टौ च भावयेत् ॥ २,४५.३२ ॥

इष्टापूर्तादिके श्राद्धं कुर्यादाभ्युदयं तथा ।
उत्पातादिनिमित्तेषु नित्य श्राद्धवदेव तु ॥ २,४५.३३ ॥

नित्यं दैवञ्च वृद्धिञ्च काम्यं नैमित्तिकं तथा ।
श्राद्धान्युक्तप्रकारेण कुर्वन् सिद्धिमवाप्नुयात् ।
इति ते कथितं तार्क्ष्य किमन्यत्परिपृच्छसि ॥ २,४५.३४ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे प्रत्याब्दिकादिश्राद्धनिरूपणं नाम पञ्चचत्वारिंशोऽध्यायः

श्रीगरुडमहापुराणम् ४६

ताक्ष्र्य उवाच ।
सुकृतस्य प्रभावेण स्वर्गो नानाविधो नणाम् ।
भोगाः सौख्याति रूपञ्च बलं बुद्धेः पराक्रमः ॥ २,४६.१ ॥

सत्यं पुण्यवतां देव जायतेऽत्र परत्र च ।
सत्यंसत्यं पुनः सत्यं वेदवाक्यं न चान्यथा ॥ २,४६.२ ॥

धर्मो जयति नाधर्मः सत्यं जयाते नानृतम् ।
क्षमा जयति न क्रोधो विष्णुर्जयति नासुरः ॥ २,४६.३ ॥

तद्वत्सत्यं मया ज्ञातं सुकृताच्छोभनं भवेत् ।
यतोत्कृष्टतमं पुण्यं तथोत्कृष्टतरोनरः ॥ २,४६.४ ॥

एवन्तु श्रोतुमिच्छामि जायन्ते पापिनो यथा ।
येन कर्मविपाकेन यथा नियमभाग्भवेत् ॥ २,४६.५ ॥

यांयां योनिमवाप्नोति यथारूपश्च जायते ।
तन्मे वद सुरश्रेष्ठ समासेनापि काङ्क्षितम् ॥ २,४६.६ ॥

श्रीकृष्ण उवाच ।
शुभाशुभफलैस्ताक्ष्र्य भुक्तभोगा नरास्त्विह ।
जायन्ते लक्षणैर्यैस्तुतानि मे शृणु काश्यप ॥ २,४६.७ ॥

गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ।
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ २,४६.८ ॥

प्रायश्चित्तेष्वचीर्णेषु यमलोका ह्यनेकधा ।
यातनाभिर्विमुक्ता ये यान्ति ते जीवसन्ततीम् ॥ २,४६.९ ॥

गत्वा मानुषभावे तु पापचिह्ना भवन्ति ते ।
तान्यहं तव चिह्नानि कथयिष्ये खगोत्तम ॥ २,४६.१० ॥

सोढ्वा वै यातनाः सर्वा गत्वा वैवस्वतक्षयम् ।
निस्तीर्णयातनास्ते तु लोकमायान्ति चिह्निताः ॥ २,४६.११ ॥

गद्गदोऽनतवादी स्यान्मूकश्चैव गवानृते ।

ब्रह्महा जायते कुष्ठी श्यावदन्तश्च मद्यपः ॥ २,४६.१२ ॥

कुनखी स्वर्णहरणाद्दुश्चर्मा गुरुतल्पगः ।
संयोगी हीनयोनिः स्याद्दरिद्रोऽदत्तदानतः ॥ २,४६.१३ ॥

अयाज्ययाजको याति ग्राहमसूकरतां द्विजः ।
खरो वै बहुयाजी स्यात्काको निर्मन्त्रभोजनात् ॥ २,४६.१४ ॥

अपरीक्षितभोक्तारो व्याघ्राः स्युर्निर्जने वने ।
बहुतर्जको मार्जरः खद्योतः कक्षदाहकः ॥ २,४६.१५ ॥

पात्रे विद्याप्रदाता यो बलीवर्दो भवेत्तसः ।
अन्नं पर्युषितं विप्रे प्रददत्कुक्करो भवेत् ॥ २,४६.१६ ॥

मात्सर्यादपि जात्यन्धो जन्मान्धः पुस्तकं हरन् ।
फलान्याहरतोऽपत्यं म्रियते नात्र संशयः ॥ २,४६.१७ ॥

मृतो वानरतां याति तन्मुखो गण्डवान् भवेत् ।
अदत्त्वा भक्ष्यमश्नाति अनपत्यो भवेत्तु सः ॥ २,४६.१८ ॥

हरन्वस्त्रं भवेद्गोधा गरदः पवनाशनः ।
प्रवज्यागमनाद्राजन् भवेन्मरुपिशाचकः ॥ २,४६.१९ ॥

चातको जलहर्ता स्याद्धान्यहर्ता च मूषिकः ।
अप्राप्तयौवनां सेवन् भवेत्सर्प इति श्रुतिः ॥ २,४६.२० ॥

गुरुदाराभिलाषी च कृकलासो भवेद्ध्रुवम् ।
जलप्रस्त्रवणं यस्तु भिन्द्यान्मत्स्यो भवेन्नरः ॥ २,४६.२१ ॥

अविक्रेयक्रयाच्चैव बको गृध्रो भवेन्नरः ।
अयोनिगो वृको हि स्यादुलूकः क्रयवञ्चनात् ॥ २,४६.२२ ॥

मृतस्यैकादशाहे तु भुञ्जानश्चाभिजायते ।
प्रतिश्रुत्य द्विजेभ्योर्ऽथमददज्जम्बुको भवेत् ॥ २,४६.२३ ॥

राज्ञरिं गत्वा भवेद्दंष्ट्री तस्करो विड्वराहकः ।
शारिवा फलविक्रेता वृषश्च वृषलीपतिः ॥ २,४६.२४ ॥

मार्जरोऽग्निं पदा स्पृष्ट्वा रोगवान्परमांसभुक् ।
उदक्यागमनात्षण्डो दुर्गन्धश्च सुगन्धहृत् ॥ २,४६.२५ ॥

यद्वा तद्वापि पारक्यं स्वल्पं वा हरते बहु ।
हृत्वा वै योनिमाप्नोति तिरश्चां नात्र संशयः ॥ २,४६.२६ ॥

एवमादीनि चिह्नानि अन्यान्यपि खगेश्वर ।
स्वकर्मविततान्येव? दृश्यन्ते यैस्तु मानवैः ॥ २,४६.२७ ॥

एवं दुष्कृतकर्मा हि भुक्त्वा च नरकान्क्रमात् ।
जायते कर्मशेषेण उक्तास्वेतासु योनिषु ॥ २,४६.२८ ॥

ततो जन्मशतं मर्त्ये सर्वजन्तुषु काश्यप ।
जायते नात्र सन्देहः समीभूते शुभाशुभे ॥ २,४६.२९ ॥

स्त्रीपुंसयो प्रसङ्गेन निरुद्धे शुक्रसोणिते ।
समुपेतः पञ्चभूतैर्जायते पाञ्चभौतिकः ॥ २,४६.३० ॥

इन्द्रियाणि मनः प्राणा ज्ञानमायुः सुखं धृतिः ।
धारणा प्रेरणं दुः खं मिथ्याहङ्कार एव च ॥ २,४६.३१ ॥

प्रयताकृतिवर्णस्तु रागद्वेषौ भवाभवौ ।
तस्येदमात्मनः सर्वमनादेरादिमिच्छतः ॥ २,४६.३२ ॥

स्वकर्म बद्धस्य तदा गर्भवृद्धिर्भवेदिति ।
पुरा यथा मया प्रोक्तं तव जन्तोर्हि लक्षणम् ॥ २,४६.३३ ॥

एवं प्रवर्तितं चक्रं भूतग्रामे चतुर्विधे ।
समुत्पत्तिर्विनाशश्च जायते तार्क्ष्य देहिनाम् ॥ २,४६.३४ ॥

स्वधर्मेणैवोर्ध्वगतिरधर्मेणाप्यधोगतिः ।
जायते सर्ववर्णानां स्वधर्मचलनात्खग ॥ २,४६.३५ ॥

देवत्वे मानुषत्वे च दानभोगादिकाः क्रियाः ।
या दृश्यन्ते वैनतेय तत्सर्वं कर्मजं फलम् ॥ २,४६.३६ ॥

अकर्मविहिते घोरे कामक्रोधार्जितेऽशुभे ।
पतेद्वै नरके भूयो तस्योत्तारो न विद्यते ॥ २,४६.३७ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे जीवस्य शुभाशुभगतिनिरूपणं नाम षट्चत्वारिंशोध्यायः

श्रीगरुडमहापुराणम् ४७
गरुड उवाच ।
भगवन्देवदेवेश कृपया परया वद ।
दानं दानस्य माहात्म्यं वैतरण्याः प्रमाणकम् ॥ २,४७.१ ॥

श्रीकृष्ण उवाच ।
या सा वैतरणी नाम यममार्गे महासरित् ।
अगाधा दुस्तरा पापैर्दृष्टमात्रा भयावहा ॥ २,४७.२ ॥

पूयशोणिततोयाढ्या मांसकर्दमसकुंला ।
पापिनञ्चागतान्दृष्ट्वा नानाभयसमावृता ॥ २,४७.३ ॥

क्वाथ्यते सत्वरं तोयं पात्रमध्ये घृतं यथा ।
क्रिमिभिः सङ्कुलं पूयं वज्रतुण्डैः समावृतम् ॥ २,४७.४ ॥

शिशुमारैश्च मकरैर्वज्रकर्तरिकायुतैः ।
अन्यैश्च जलजीवैश्च हिंसकैर्मांसभेदिभिः ॥ २,४७.५ ॥

उद्यान्ति द्वादशादित्याः प्रलयान्ते तथा हि ते ।
तपन्ति तत्र वै मर्त्याः क्रन्द मानास्तु पापिनः ॥ २,४७.६ ॥

हा भ्रातः पुत्र तातेति प्रलपन्ति मुहुर्मुहुः ।
विचरन्ति निमज्जन्ति ग्लानिं गच्छन्ति जन्तवः ॥ २,४७.७ ॥

चतुर्विधैः प्राणिगणैर्दृष्टा व्याप्ता महानदी ।
तरन्ति गोप्रदानेन त्वन्यथा च पतन्ति ते ॥ २,४७.८ ॥

मां नरा येऽवमन्यन्ते चाचार्यं गुरुमेव च ।
वृद्धानन्यांश्चापि मूढास्तेषां वासस्तु तत्र वै ॥ २,४७.९ ॥

पतिव्रतां साधुशीलामूढां धर्मेषु निश्चलाम् ।
परित्यजन्ति ये मूढास्तेषां वासस्तु सन्ततम् ॥ २,४७.१० ॥

विश्वासप्रतिपन्नानां स्वामिमित्रतपस्विनाम् ।
स्त्रीबालविकलादीनां वधं कृत्वा पतन्ति हि ।
पच्यन्ते तत्र मध्ये तु क्रन्दमानास्तु पापिनः ॥ २,४७.११ ॥

शान्तं बुभुक्षितं विप्रंयो विघ्नायोपसर्पति ।
क्रिमिभिर्भक्ष्यते तत्र यावदाभूतसंप्लवम् ॥ २,४७.१२ ॥

ब्राह्मणाय प्रतीश्रुत्य यमार्थं न ददाति तम् ।
आहूय नास्ति यो ब्रूयात्तस्य वासस्तु तत्र वै ॥ २,४७.१३ ॥

अग्निदो गरदश्चैव कूटसाक्षी च मद्यपः ।
यज्ञविध्वंसकश्चैव राज्ञीगामी च पैशुनः ॥ २,४७.१४ ॥

कथाभङ्गकरश्चैव स्वयन्दत्ता पहारकः ।
क्षेत्रसेतुविभेदी च परदारप्रधर्षकः ॥ २,४७.१५ ॥

ब्राह्मणो रसविक्रेता तथा यो वृषलीपतिः ।
गोधनस्य तृषार्तस्य वाप्या भेदं करोति यः ॥ २,४७.१६ ॥

कन्याविदूषकश्चैव दानं दत्त्वानुतापकः ।
शूबद्रस्तु कपिलापायी ब्राह्मणो मांसभोजनः ॥ २,४७.१७ ॥

एते वसन्ति सततं मा विचारं कृथाः क्वचित् ।
कृपणो नास्तिकः क्षुद्रः स तस्यां निवसेत्खग ॥ २,४७.१८ ॥

सदामर्षो सदा क्रोधी निजवाक्यप्रमाणकृत् ।
परोक्त्युच्छेदको नित्यं वैतरण्या वसेच्चिरम् ॥ २,४७.१९ ॥

यस्त्वहङ्कारवान्पापी स्वविकत्थनकारकः ।
कृतघ्नो गर्भसन्तापी वैतरण्यां स मज्जति ॥ २,४७.२० ॥

कदापि भाग्ययोगेन तरणेच्छा भवेद्यदि ।
सानुकूला भवेद्येन तदाकर्णय काश्यप ॥ २,४७.२१ ॥

अयने विषुवे पुण्ये व्यतीपाते दिनोदये ।
चन्द्रसूर्योपरागे वा संक्रान्तौ दर्शवासरे ॥ २,४७.२२ ॥

अन्येषु पुण्यकालेषु दीयते दानमुत्तमम् ।
यदा तदा भवेद्वापि श्राद्धा दानं प्रति ध्रुवम् ॥ २,४७.२३ ॥

तदैब दानकालः स्याद्यतः सम्पत्तिरस्थिरा ।
अनित्यानि शरीराणि विभवो नैव शाश्वतः ॥ २,४७.२४ ॥

नित्यं सन्निहितो मृत्युः कर्तव्यो धर्मसंगहः ।
कृष्णां वा पाटलां वापि कुर्याद्वैतरणीं शुभाम् ॥ २,४७.२५ ॥

स्वर्णशृङ्गीं रौप्यखुरां कांस्यपात्रोपदोहनीम् ।
कृष्णवस्त्रयुगाच्छन्नां सप्तधान्यसमन्विताम् ॥ २,४७.२६ ॥

कार्पासद्रोणशिखरे आसीनं ताम्रभाजने ।
यमं हैमं प्रकुर्वीत लोहदण्डसमन्वितम् ।

इक्षुदण्डमयं बद्ध्वा प्लवं सुदृढबन्धनैः ॥ २,४७.२७ ॥

उडुपोपरि तां धेनुं सूर्यदेहसमुद्भवाम् ।
कृत्वा प्रकल्पयेद्विप्रश्छत्रोपानहसंयुतम् ॥ २,४७.२८ ॥

अङ्गुलीयकवासांसि ब्राह्मणाय निवेदयेत् ।
इममुच्चारयेन्मन्त्रं संगृह्य सजलान्कुशान् ॥ २,४७.२९ ॥

यमद्वारे महाघोरे श्रुत्वा वैतरणीं तदीम् ।
तर्तुकामो ददाम्येनां तुभ्यं वैतरणीं नमः ॥ २,४७.३० ॥

गावो मे अग्रतः सन्तु गावो मे सन्तु पार्श्वतः ।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥ २,४७.३१ ॥

विष्णुरूप द्विजश्रेष्ठ मामुद्धर महीसुर ।
सदक्षिणा मया दत्ता तुभ्यं वैतरणीनमः ॥ २,४७.३२ ॥

धर्मराजञ्च सर्वेशं वैतरण्याख्यधेनुकाम् ।
सर्वं प्रदक्षिणीकृत्य ब्राह्मणाय निवेदयेत् ॥ २,४७.३३ ॥

पुच्छं संगृह्य धेन्वाश्च अग्रे कृत्वा तु वै व्दिजम् ।
धेनुके त्वं प्रतीक्षस्व यमद्वारे महाभये ॥ २,४७.३४ ॥

उत्तारणाय देवेशि वैतरण्ये नमोऽस्तु ते ।
अनुव्रजेत्तु गच्छन्तं सर्वं तस्य गृहं नयेत् ॥ २,४७.३५ ॥

एवं कृते वैनतेय सा सरित्सुतरा भवेत् ।
सर्वान्कामानवाप्नोति यो दद्याद्भुवि मानवः ॥ २,४७.३६ ॥

सुकृतस्य प्रभावेण सुखञ्चेह परत्र च ।
स्वस्थे सहस्रगुणितमातुरे शतसंमितम् ॥ २,४७.३७ ॥

मृतस्यैव तु यद्दानं परोक्षे तत्समं स्मृतम् ।
स्वहस्तेन ततो देयं मृते कः कस्य दास्यती ॥ २,४७.३८ ॥

दानधर्मविहीनानां कृपणैर्जीवेतक्षितैः ।
अस्थिरेण शरीरेण स्थिरं कर्म समाचरेत् ॥ २,४७.३९ ॥

अवश्यमेव यास्यन्ति प्राणाः प्राघुणि (घूर्णि) का इव ॥ २,४७.४० ॥

इतीदमुक्तं तव पक्षिराज विडम्बनं जन्तुगणस्य सर्वम् ।
प्रेतस्य मोक्षाय तदौद्ध्वन्दैहिकं हिताय लोकस्य चरेच्छुभाय तु ॥ २,४७.४१ ॥

सूत उवाच ।
एवं विप्राः समाद्दिष्टो विष्णुना प्रभविष्णुना ।
गरुड प्रेतचरितं श्रुत्वा सन्तुष्टिमागतः ॥ २,४७.४२ ॥

व्रततीर्थादिकं सर्वं पुनः पप्रच्छ केशवम् ।
ध्यात्वा मनसि सर्वेशं सर्वकारणकारणम् ॥ २,४७.४३ ॥

ऋषयः सर्वमेवैतज्जन्तूनां प्रभवादिकम् ।
मरणं जन्म च तथा प्रेतत्वञ्चौर्ध्वदैहिकम् ॥ २,४७.४४ ॥

मया प्रोक्तं वै मुक्त्यै निदानं चैव सर्वशः ।
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ २,४७.४५ ॥

धर्मो जयति नाधर्मः सत्यं जयति नानृतम् ।
क्षमा जयति न क्रोधो विष्णुर्जयति नासुराः ॥ २,४७.४६ ॥

विष्णुर्माता पिता विष्णुर्विष्णुः स्वजनबान्धवाः ।
येषामेव स्थिरा बुद्धिर्न तेषां दुर्गतिर्भवेत् ॥ २,४७.४७ ॥

मङ्गलं भगवान्विष्णुर्मङ्गलं गरुडध्वजः ।
मङ्गलं पुण्डरीकाक्षो मङ्गलायतनं हरिः ॥ २,४७.४८ ॥

हरिर्भागीरथी विप्रा विप्रा भागीरथी हरिः ।
भागीरथी हरिर्विप्राः सारमेतज्जगत्त्रये ॥ २,४७.४९ ॥

इति सूतमुखोद्गीर्णां सर्वशास्त्रार्थमण्डिताम् ।
वैष्णविं वाक्सुधां पीत्वा ऋषयस्तुष्टिमाययुः ॥ २,४७.५० ॥

प्रशशंसुस्तथान्योन्यं सूतं सर्वार्थदर्शिनम् ।
प्रहर्षमतुलं प्रापुर्मुनयः शौनकादयः ॥ २,४७.५१ ॥

अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरं शुचिः ॥ २,४७.५२ ॥

इति श्रीगारुडे महापु उत्तरखण्डे द्वितीद्द धर्मकाद्दप्रेतद्दश्रीकृष्णगरुडसंवादे कर्मविपाकादिनिरूपणं नाम सप्तचत्वारिंशोऽध्यायः

ताक्ष्र्य उवाच ।
ये मर्त्यलोके निवसन्ति मानवास्ते सर्वजातौ निधनं प्रयान्ति ।
काले स्वकीये निजपुण्यसंख्ययया वदन्ति लाक कथस्व तन्मे ॥ २,४८.१ ॥

गच्छन्ति मार्गेण सुदुस्तरेण विधातृनिष्पादितवर्त्मनि स्थिताः ।
केनैव पुण्येन मुदं प्रयान्ति तिष्ठन्ति केनैव कुलं बलं वयः ॥ २,४८.२ ॥

सूत उवाच ।
श्रुत्वाथ देवो गरुडं त्ववोचत्स्मृत्वा वपुः कर्मभयञ्च रूपम् ।
सृष्टा धरा येन चराचरं जगत्स येन शस्ता विहितो यमो विभुः ॥ २,४८.३ ॥

श्रीभगवानुवाच ।
धर्मार्थकामं चिरमोक्षसञ्चयमन्यं द्वितीयं यममार्गगामिनाम् ।
प्रविश्यचाङ्गुष्ठसमे स तत्र वै तं प्राप्य देहं स्वमन्दिरम्? ॥ २,४८.४ ॥

गृहीतपाशो रुदते पुनः पुनर्देशे सुपुण्ये द्विज देहसंस्थितः ।
देवेन्द्रपूजा पितृदेवतृप्तिदं मोहान्न चेष्टं न च पुत्रसन्ततिः ॥ २,४८.५ ॥

न मेऽस्ति बन्धुर्यममार्गगामिनो मया न कृत्यं द्विजदेहलिप्सया ।
सम्प्राप्य विप्रत्वमतीव दुर्लभं नाधीतवान्वेदपुराणसंहिताः ।
प्राप्तं सुरत्नं करसंस्थितं गतं देहन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ २,४८.६ ॥

यः क्षत्त्रियो बाहुबलेन संयुगे ललाटदेशाद्रुधिरं मुखे पपौ ।
तत्सोमपानं हि कृतं महामखे जीवन्मृतः सोऽपि हि याति मुक्तिक् ॥ २,४८.७ ॥

स्थानान्यनेकानि कृतानि तानि पीतान्यनेकान्यपि गर्हितानि ।
शस्त्रं गृहीत्वा समरे रिपूणां यः संमुखं याति स मुक्तपापः ॥ २,४८.८ ॥

क्षत्त्रान्वयो वापि विशोन्वयो वा शूद्रान्वयो वापि हि नीचवर्णः ।
संग्रामदेवद्विजबालघाती स्त्रीवृद्धहा दीनतपस्विहन्ता ॥ २,४८.९ ॥

उपद्रुतेष्वेषु पराङ्मुखो यः स्युस्तस्य देवाः सकलाः पराङ्मुखाः ।
तिलोदकं नैव पिबन्ति पूर्वे हुतं न गृह्णाति हुताशनोपि तत् ॥ २,४८.१० ॥

द्वेषाद्भयाद्वा समरे समागते शस्त्रं गृहीत्वा परसैन्यसंमुखः ।
न याति पक्षीन्द्र मृश्च पश्चात्क्षात्त्रं बलं तस्य गतं तथैव ।
द्विजाय दत्त्वा कनकं महीमिमां भूयः स पश्चाद्भवतीह लोके ॥ २,४८.११ ॥

दानं प्रदत्तं ग्रहणे द्विजेन्द्रे स्नानं कृतं तेन सदा सुतीर्थे ।
गत्वा गयायां पितृपिण्डदानं कृतं सदा यो म्रियते तु युद्धे ॥ २,४८.१२ ॥

यः क्षात्त्रदेहन्तु विहाय शोचते रणाङ्गणे स्वामिवधे च गोग्रहे ।
स्त्रीबालघाते पथि सार्थहेतवे मया स्वकोशं न हतं न पातितम् ॥ २,४८.१३ ॥

वैश्यः स्वकर्माणि विशोचते तदा गृहीतपाशो न मयापि सञ्चितम् ।
सत्यं न चोक्तं क्रय विक्रयेण मोहाद्विमूढेन कुटुम्बहेतवे ॥ २,४८.१४ ॥

शूद्रं वपुः प्राप्य यशस्करं सदा दानं द्विजेभ्यो न कृतं द्विजार्चनम् ।
च्द्दद्यत्दद्वड्ढ ढद्घद्दथ्द्दध्ड्ढथ्डड्ढद्घ
जलाशयो नैव कृतो धरातले असंस्कृतो विप्रवरो न संस्कृतः ॥ २,४८.१५ ॥

त्यक्त्वा स्वकर्माणि मदेन सुस्थितं मया सुतीर्थे स्ववपुर्न चोज्झितम् ।
धर्मोर्जितो नैव न देवपूजनं कृतं मया चैव विमुक्तिहेतवे ॥ २,४८.१६ ॥

देहं समासाद्य तथैव पिण्डजं वर्णास्तथैवान्त्यजम्लेच्छसंज्ञितान् ।
मरुन्मयं देहमिमे विशन्ति नैवेहमानाः पथि धर्मसंकुले ॥ २,४८.१७ ॥

परस्परं धर्मकृन्तं स्वकीयं सम्पाद्य लक्ष्यं पथि सञ्चरन्त्स्वम् ।
पक्षीन्द्र वाक्यानि शृणुष्व तानि मनोरमाणि प्रवदन्ति यानि ॥ २,४८.१८ ॥

सारा हि लोकेषु भवेत्त्रिलोकी द्वीपेषु सर्वेषु च जम्बुकाख्यम् ।
देशेषु सर्वेष्वपि देवदेशः जीवेषु सर्वेषु मनुष्य एव ॥ २,४८.१९ ॥

वर्णाश्च चत्वार इह प्रशस्ताः वर्णेषु धर्मिष्ठनराः प्रशस्ताः ।
धर्मेण सौख्यं समुपैति सर्वं ज्ञानं समाप्नोति महापथे स्थितः ॥ २,४८.२० ॥

देहं परित्यज्य यदा गतायुः पक्षिन् स्थितोऽहं कृमिकीटसंस्थितः ।
सरीसृपोऽहं मशको विनिर्मितश्चतुष्पदोऽहं वनसूकरोऽहम् ॥ २,४८.२१ ॥

सर्वं विजानाति हि गर्भसंस्थितो जातश्च सद्यस्तदिदञ्च विस्मरेत् ।
यच्चिन्तितं गर्भसमागतेन वै बालो युवा वृद्धवया बभूव ॥ २,४८.२२ ॥

मोहाद्विनाष्टं यदि गर्भचिन्तितं स्मृतं पुनर्मृत्युगते चदेहे ।
तस्मिन्प्रनष्टे हृदि चिन्तितं गतं स्मृतं पुनर्गर्भगते च देहे ॥ २,४८.२३ ॥

तस्मिन्प्रनष्टे हृदि चिन्तितं पुनर्मया स्वकोशे परवञ्चनं कृतम् ।
द्यूतैश्छलेनापि च चौर्यवृत्त्या धर्मं व्यतिक्रम्य शरीररक्षणे ॥ २,४८.२४ ॥

कृच्छ्रेण लक्ष्मीः समुपार्जिता स्वयं मया न भुक्तं मनसेप्सितं धनम् ।
ताम्बूलमन्नं मधुरं सगोरसं दत्त्वाग्निदेवातिथिबन्धुवर्गे ॥ २,४८.२५ ॥

सोमग्रहे सूर्यसमागमेपि वा न सेवितं तीर्थवरिष्ठमुत्तमम् ।
कोशं स्वकीयं मलमूत्रपूरितं देहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ २,४८.२६ ॥

मया न दृष्टा न नता न पूजिता त्रैविक्रमी मूर्तिरिह स्थिता भुवि ।
प्रभासनाथो न च भक्तिसंस्तुतो देहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ २,४८.२७ ॥

गत्वा वरिष्ठे भुवि तीर्थसन्निधौ धनं न दत्तं विदुषां करे मया ।
आप्लुत्य देहं विधिना द्विजे गुरौ दिहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ २,४८.२८ ॥

न मातृपूजा न च विष्णुशङ्करौ गणेशचणड्यौ न च भास्करोऽपि वा ।
यञ्चोपचारैर्बलियुक्तचन्दनैर्देहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ २,४८.२९ ॥

लब्धा मया मानवदेवतोपमा मोहाद्गता सर्वमिदञ्च पार्थिव ।
गतिं न वीक्षेत स वै विमूढधीर्देहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ २,४८.३० ॥

एतानि पक्षिन्मनसा विचिन्त्य वाक्यानि धर्मार्थयशस्कराणि ।
मुक्तिं समायान्ति मनुष्यलोके वसन्ति ये धर्मरताः सुदेशे ॥ २,४८.३१ ॥

इति ब्रुवाणैर्यमधूतवर्गैर्विहन्यते कालमयैश्च मुद्गरैः ।
हा दैव हा दैव इति स्मरन् वै धनं न दत्तं स्वयमर्जितं यत् ॥ २,४८.३२ ॥

न भूमिदानं न च गोप्रदानं न वारिदानं न च वस्त्रदानम् ।
फलं सताम्बूलविलेपनं वा त्वया न दत्तं भुवि शोचसे कथम् ॥ २,४८.३३ ॥

पिता मृतस्ते च पितामहः सा यया धृतो वाप्युदरे स्वकीये ।
मृतोऽप्यसौ बन्धुजनः समस्तो दृष्टं त्वया सर्वमिदं गतायः ॥ २,४८.३४ ॥

कोशं त्वदीयं ज्वलितञ्च वह्निना पुत्रैर्गृहीतो धनधान्य सञ्चयः ।
सुभाषितं धर्मचयं कृतञ्च यत्तदेव गच्छेत्तव पृष्ठसंस्थम् ॥ २,४८.३५ ॥

न दृश्यते कोऽपि मृतः समागतो राजा यतिर्वा द्विजपुङ्गवोऽपि वा ।
यो वै मृतः साहसिकः स मर्त्यको नाशं योऽपि धरातले स्थितः ॥ २,४८.३६ ॥

एवं गणास्ते ब्रुवते सकिन्नरा धैर्यं समालम्ब्य विपादपूरितः ।
श्रुत्वा गणानां वचनं महाद्भुतं ब्रवीति पक्षीन्द्र मनुष्यतां गतः ॥ २,४८.३७ ॥

दानप्रभावेण विमानसंस्थितो धर्मः पिता मातृदयानुरूपिणी ।
वाणी कलत्रं मधुरार्थभाषिणी स्नानं सुतीर्थे च सुबन्धवर्गः ॥ २,४८.३८ ॥

करार्पितं यत्सुकृतं समस्तं स्वर्गस्तदा स्यात्तव किङ्करोपमः ।
यो धर्मवान् प्राप्स्यति सोऽतिसौख्यं पापी समस्तं विविधञ्च दुःखम् ॥ २,४८.३९ ॥

यो धर्मशीलो जितमानरोषो विद्याविनीतो न परोपतापी ।
स्वदारतुष्टः परदारदूरःस वै नरो नो भुवि वन्दनीयः ॥ २,४८.४० ॥

मिष्टान्नदाता चरिताग्निहोत्रो वेदान्तविच्चन्द्रसहस्रजीवी ।
मासोपवासी च पतिव्रता चषड्जीवलोके मम वन्दनीयाः ॥ २,४८.४१ ॥

एवं समाचारयुतो नरोऽपि वापीं सकूपां सजलं तडागम् ।
प्रपाशुभं हृद्गृहदेवमन्दिरं कृतं नरेणैव स धर्मौत्तमः ॥ २,४८.४२ ॥

वर्षाशनं वेदविदे च दत्तं कन्याविवाहस्त्वृणमोचनं द्विजे ।
भूमिः सुकृष्टापि तृषार्तिहेतोस्तदेवमेतं सुकृतत्समस्तम् ॥ २,४८.४३ ॥

अध्यायमेनं सुकृतस्य सारं शृणोति गायत्यपि भावशुद्ध्या ।
स वै कुलीनः स च धर्मयुक्तो विश्वालयं याति परं स नूनम् ॥ २,४८.४४ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे मनुष्यस्य सुखदुःखप्रापकधर्माधर्मनिरूपणं नामाष्टचत्वारिंशत्तमोऽध्यायः

<poem>

श्रीगरुडमहापुराणम् ४९ गरुड उवाच । श्रुता मया दयासिन्धो ह्यज्ञानाज्जीवसंसृतिः । अधुना श्रोतुमिच्छामि मोक्षोपायं सनातनम् ॥ २,४९.१ ॥
भगवन्देवदेवेश शरणागतवत्सल । असारे घोरसंसारे सर्वदुः खमलीमसे ॥ २,४९.२ ॥
नानाविधशरीरस्था अनन्ता जीवराशयः । जायन्ते च म्रियन्ते च तेषामन्तो न विद्यते ॥ २,४९.३ ॥
सदा दुः खातुरा एव न सखी विद्यते क्वचित् । केनोपायेन मोक्षेश मुच्यन्ते वद मे प्रभो ॥ २,४९.४ ॥
श्रीभगवानुवाच । शृणु तार्क्ष्य प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि । यस्य श्रवणमात्रेण संसारान्मुच्यते नरः ॥ २,४९.५ ॥
अस्ति देवः परब्रह्मस्वरूपो निष्कलः शिवः । सर्वज्ञः सर्वकर्ता च सर्वेशो निर्मलोऽद्वयः ॥ २,४९.६ ॥
स्वयञ्ज्योतिरनाद्यन्तो निर्विकारः परात्परः । निर्गुणः सच्चिदानन्दस्तदंशा जीवसंज्ञकाः ॥ २,४९.७ ॥
अनाद्यविद्योपहता यथाग्नौ विस्फुलिङ्गकाः । देहाद्युपाधिसम्भिन्नास्ते कर्मभिरनादिभिः ॥ २,४९.८ ॥
सुखदुः खप्रदैः पुण्यपापरूपैर्नियन्त्रिताः । तत्तज्जातियुतं देहमायुर्भोगञ्च कर्मजम् ॥ २,४९.९ ॥
प्रतिजन्म प्रपद्यन्ते तेषामपि परं पुनः । ससूक्ष्मलिङ्गशरीरमामोक्षादक्षरं खग ॥ २,४९.१० ॥
स्थावराः कृमयश्चाजाः पक्षिणः पशवो नगः । धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ॥ २,४९.११ ॥
चतुर्विधशरीराणि धृत्वा मुक्त्वा सहस्रशः । सुकृतान्मा नवो भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥ २,४९.१२ ॥
चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम् । न मानुषं विनान्यत्र तत्त्वज्ञानन्तु लभ्यते ॥ २,४९.१३ ॥
अत्र जन्मसहस्राणां सहस्रैरपि कोटिभिः । कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥ २,४९.१४ ॥
सोपानभूतं मोक्षस्य मानुष्यं प्राप्य दुर्लभम् । यस्तार यति नात्मानं तस्मात्पापतरोऽत्र कः ॥ २,४९.१५ ॥
नरः प्राप्येतरज्जन्म लब्ध्वा चेन्द्रियसौष्ठवम् । न वेत्त्यात्महितं यस्तु स भवेद्ब्रह्मघातकः ॥ २,४९.१६ ॥
विना देहेन कस्यापि पुरुषार्थो न विद्यते । तस्माद्देहं धनं रक्षेत्पुण्यकर्माणि साधयेत् ॥ २,४९.१७ ॥
रक्षेच्चसर्वदात्मानमात्मा सर्व्वस्य भाजनम् । रक्षणे यत्नमातिष्ठेज्जीवन् भद्राणि पश्यति ॥ २,४९.१८ ॥
पुनर्ग्रामः पुनः क्षेत्र पुनर्वित्तं पुनर्गृहम् । पुनः शुभाशुभं कर्म न शरीरं पुनः पुनः ॥ २,४९.१९ ॥
शरीररक्षणोपायाः क्रि यन्ते सर्वदा बुधैः । नेच्छन्ति च पुनस्त्यागमपि कुष्ठादिरोगिणः ॥ २,४९.२० ॥
तद्गोपितं स्याद्धर्मार्थं धर्मो ज्ञानार्थमेव च । ज्ञानं तु ध्यानयोगार्थमचिरात्प्रविमुच्यते ॥ २,४९.२१ ॥
आत्मैव यदि नात्मानमहीतेभ्यो निवारयेत् । कोऽन्यो हितकरस्तस्मादात्मानं सुखयिष्यति ॥ २,४९.२२ ॥
इहैव नरकव्याधेश्चिकित्सां न करोति यः । गत्वा निरौषधं देशं व्याधिम्थः किं करिष्यति ॥ २,४९.२३ ॥
व्याघ्रीवास्ते जरा चायुर्याति भिन्नघटाम्बुवत् । निघ्नन्ति रिपुवद्रोगास्तस्माच्छ्रेयः समभ्यसेत ॥ २,४९.२४ ॥
यावन्नाश्रयते दुः खं यावन्नायान्ति चापदः । यावन्नेन्द्रियवैकल्यं तावच्छ्रेयः समभ्यसेत् ॥ २,४९.२५ ॥
यावत्तिष्ठति देहोऽयं तावत्तत्त्वं समभ्यसेत् । सन्दीप्तकोशभवने कूपं खनति दुर्मतिः ॥ २,४९.२६ ॥
कालो न ज्ञायते नानाकार्यैः संसारसम्भवैः । सुखं दुःखं जनो हन्त न वेत्ति हितमात्मनः ॥ २,४९.२७ ॥
जातानार्तान्मृतानापद्भ्रष्टान्दृष्ट्वा च दुः खितान् । लोको मोहसुरां पीत्वा न बिभेति कदाचन ॥ २,४९.२८ ॥
सम्पदः स्वप्नसंकाशा यौवनं कुसुमोपमम् । तडिच्चपलमायुष्यं कस्य स्याज्जानतो धृतिः ॥ २,४९.२९ ॥
शतं जीवितमत्यल्पं निद्रालस्यैस्तदर्धकम् । बाल्यरोगजरादुः खैरल्पं तदपि निष्फलम् ॥ २,४९.३० ॥
प्रारब्धव्ये निरुद्योगी जागर्तव्ये प्रसुप्तकः । विश्वस्तश्च भयस्थाने हा नरः को न हन्यते ॥ २,४९.३१ ॥
तोयफेनसमे देहे जीवेनाक्रम्य संस्थिते । अनित्याप्रयसवासे कथ तिष्ठति निर्भयः ॥ २,४९.३२ ॥
अहिते हितसंज्ञः स्यादध्रुवे ध्रुवसंज्ञकः । अनर्थे चार्थविज्ञानः स्वमर्थं यो न वेत्ति सः ॥ २,४९.३३ ॥
पश्यन्नपि प्रस्खलति शृण्वन्नपि न बुध्यति । पठन्नपि न जानाति देवमायाविमोहितः ॥ २,४९.३४ ॥
तन्निमज्जज्जगदिदं गम्भीरे कालसागरे । मृत्युरोगजराग्राहैर्न कश्चिदपि बुध्यते ॥ २,४९.३५ ॥
प्रतिक्षणभयं कालः क्षीयमाणो न लक्ष्यते । आमकुंभ इवांभः स्थो विशीर्णो न विभाव्यते ॥ २,४९.३६ ॥
युज्यते वेष्टनं वायोराकाशस्य च खण्डनम् । ग्रथनञ्च तरङ्गाणामास्था नायुषि युज्यते ॥ २,४९.३७ ॥
पृथिवी दह्यते येन मेरुश्चापि विशीर्यते । शुष्यते सागरजलं शरीरस्य च का कथा ॥ २,४९.३८ ॥
अपत्यं मे कलत्रं मे धनं मे बान्धवाश्च मे । जल्पन्तमिति मर्त्याजं हन्ति कालवृको बलात् ॥ २,४९.३९ ॥
इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् । एवमीहासमायुक्तं कृतान्तः कुरुते वशम् ॥ २,४९.४० ॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् । न हि मृत्युः प्रतीक्षेत कृतं वाप्यथ वाकृतम् ॥ २,४९.४१ ॥
जरादर्शितपन्थानं प्रचण्डव्याधिसैनिकम् । अधिष्ठितो मृत्युशत्रुं त्रातारं किं न पश्यति ॥ २,४९.४२ ॥
तृष्णासूचीविनिर्भिन्नं सिक्तं विषयसर्पिषा । रागद्वेषानले पक्वं मृत्युरश्नाति मानवम् ॥ २,४९.४३ ॥
बालांश्च यौवनस्थांश्च वृद्धान गर्भगतानपि । सर्वानाविशते मृत्युरेवम्भूमिदं जगत् ॥ २,४९.४४ ॥
स्वदेहमपि जीवोऽयं मुक्त्वा याति यमालयम् । स्त्रीमातृपितृपुत्रादिसम्बन्धः केन हेतुना ॥ २,४९.४५ ॥
दुः खमूलं हि संसारः स यस्यास्ति स दुः खितः । तस्य त्यागः कृतो येन स सुखी नापरः क्वचित् ॥ २,४९.४६ ॥
प्रभवं सर्वदुः खानामालयं सकलापदाम् । आश्रयं सर्वपापानां संसारं वर्जयेत्क्षणात् ॥ २,४९.४७ ॥
लोहदारुमयैः पाशैः पुमान्बद्धो विमुच्यते । पुत्रदारमयैः पाशैर्मुच्यते न कदाचन ॥ २,४९.४८ ॥
यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ २,४९.४९ ॥
वञ्चिताशेषवित्तैस्तैर्नित्यं लोको विनाशितः । हा हन्त विषयाहारैर्देहस्थेन्द्रियतस्करैः ॥ २,४९.५० ॥

मांसलुब्धो यथा मत्स्यो लोहशङ्कुं न पश्यति । सुखलुब्धस्तथा देही यमवाधां न पश्यति ॥ २,४९.५१ ॥
हिताहितं न जानन्तो नित्यमुन्मार्गगामिनः । कुक्षिपूरणनिष्ठा ये ते नरा नारकाः खग ॥ २,४९.५२ ॥
निद्राभीमैथुनाहाराः सर्वेषां प्राणिनां समाः । ज्ञानवान्मानवः प्रोक्तो ज्ञानहीनः पशुः स्मृतः ॥ २,४९.५३ ॥
प्रभाते मलमूत्राभ्यां क्षुत्तृड्भ्यां मध्यगे रवौ । रात्रौ मदननिद्राभ्यां बाध्यन्ते मूढमानवाः ॥ २,४९.५४ ॥
स्वदेहधनदारादिनिरताः सर्वजन्तवः । जायन्ते च म्रियन्ते च हा हन्ताज्ञानमोहिताः ॥ २,४९.५५ ॥
तस्मात्सङ्गः सदा त्याज्यः सचेत्त्यक्तुं न शक्यते । महद्भिः सह कर्तव्यः सन्तः सङ्गस्य भेषजम् ॥ २,४९.५६ ॥
सत्सङ्गश्च विवेकश्च निर्मलं नयनद्वयम् । यस्य नास्ति नरः सोऽन्धः कथं न स्यादमार्गगः ॥ २,४९.५७ ॥
स्वस्ववर्णाश्रमाचारनिरताः सर्वमानवाः । न जानन्ति परं धर्मं वृथा नश्यन्ति दाम्भिकाः ॥ २,४९.५८ ॥
किमायासपराः केचिद्व्रतचर्यादिसंयुताः । अज्ञानसंवृतात्मानः सञ्चरन्ति प्रचारकाः ॥ २,४९.५९ ॥
नाममात्रेण सन्तुष्टाः कर्मकाण्डरता नराः । मन्त्रोच्चारणहोमाद्यैर्भ्रामिताः क्रतुविस्तरैः ॥ २,४९.६० ॥
एकभुक्तोपवासाद्यैर्नियमैः कायशोषणैः । मूढाः परोक्षमिच्छन्ति मम मायाविमोहिताः ॥ २,४९.६१ ॥
देहदण्डनमात्रेण का मुक्तिरविवेकिनाम् । वल्मीकताडनादेव मृतः किन्नु महोरगः ॥ २,४९.६२ ॥
जटाभाराजिनैर्युक्ता दाम्भिका वेषधारिणः । भ्रमन्ति ज्ञानिवल्लोके भ्रामयन्ति जनानपि ॥ २,४९.६३ ॥
संसारजसुखासक्तं ब्रह्मज्ञोऽस्मीतिवादिनम् । कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ॥ २,४९.६४ ॥
गृहारण्यसमा लोके गतव्रीडा दिगम्बराः । चरन्ति गर्दभाद्याश्च विरक्तास्ते भवन्ति किम् ॥ २,४९.६५ ॥
मृद्भस्मोद्धूलनादेव मुक्ताः स्युर्यदि मानवाः । मृद्भस्मवासी नित्यं श्वा स किं मुक्तो भविष्यति ॥ २,४९.६६ ॥
तृणपर्णोदकाहाराः सततं वनवासिनः । जम्बूकाखुमृगाद्याश्च तापसास्ते भवन्ति किम् ॥ २,४९.६७ ॥
आजन्ममरणान्तञ्च गङ्गादितटिनीस्थिताः । मण्डूकमत्स्यप्रमुखा योगिनस्ते भवन्ति किम् ॥ २,४९.६८ ॥
पारावताः शिलाहाराः कदाचिदपि चातकाः । न पिबन्ति महीतोयं व्रतिनस्ते भवन्ति किम् ॥ २,४९.६९ ॥
तस्मान्नित्यादिकं कर्म लोकरञ्जनकारकम् । मोक्षस्य कारणं साक्षातत्त्वज्ञान खगेश्वर ॥ २,४९.७० ॥
षड्दर्शनमहाकूपे पतिताः पशवः खग । परमार्थं न जानन्ति पशुपाशनियन्त्रिताः ॥ २,४९.७१ ॥
वेदशास्त्रार्णवैर्घोरैरुह्यमाना इतस्ततः । षडूर्मिनिग्रहग्रस्तास्तिष्ठन्ति हि कुतार्किकाः ॥ २,४९.७२ ॥
वेदागमपुराणज्ञः परमार्थं न वेत्ति यः । विडम्बकस्य तस्यैव तत्सर्वं काकभाषितम् ॥ २,४९.७३ ॥
इदं ज्ञानमिदं ज्ञेयमिति चिन्तासमाकुलाः । पठन्त्यहर्निशं शास्त्रं परतत्त्वपराङ्मुखाः ॥ २,४९.७४ ॥
वाक्यच्छन्दोनिबन्धेन काव्यालङ्कारशोभिताः । चिन्तया दुःखिता मूढास्तिष्ठन्ति व्याकुलेन्द्रियाः ॥ २,४९.७५ ॥
अन्यथा परमं तत्त्वं जनाः क्लिश्यन्ति चान्यथा । अन्यथा शास्त्रसद्भावो व्याख्यां कुर्वन्ति चान्यथा ॥ २,४९.७६ ॥
कथयन्त्युवन्मनीभावं स्वयं नानुभवन्ति च । अहङ्कारस्ताः केचिदुपदेशादिवर्जिताः ॥ २,४९.७७ ॥
पठन्ति वेदशास्त्राणि बोधयन्ति परस्परम् । न जानन्ति परं तत्त्वं दर्वी पाकरसं यथा ॥ २,४९.७८ ॥
शिरो वहति पुष्पाणि गन्धं जानाति नासिका । पठन्ति वेदशास्त्राणि दुर्लभो भावबोधकः ॥ २,४९.७९ ॥
तत्त्वमात्मस्थमज्ञात्वा मूढः शास्त्रेषु मुह्यति । गोपः कक्षागते च्छागे कूपं पश्यति दुर्मतिः ॥ २,४९.८० ॥
संसारमोहनाशाय शाब्दबोधो न हि क्षमः । न निवर्तेत तिमिरं कदाचिद्दीपवार्तया ॥ २,४९.८१ ॥
प्रज्ञाहीनस्य पठनं यथान्धस्य च दर्पणम् । अतः प्रज्ञावतां शास्त्रं तत्त्वज्ञानस्य लक्षणम् ॥ २,४९.८२ ॥
इदं ज्ञानमिदं ज्ञेयं सर्वन्तु श्रोतुमिच्छति । दिव्यवर्षसहस्राच्च शास्त्रान्तं नैव गच्छति ॥ २,४९.८३ ॥
अनेकानि च शास्त्राणि स्वल्पायुर्विघ्नकोटयः । तस्मात्सारं विजानीयात्क्षीरं हंस इवाम्भसि ॥ २,४९.८४ ॥
अभ्यस्य वेदशास्त्राणि तत्त्वं ज्ञात्वाथ बुद्धिमान् । पलालमिव धान्यार्थी सर्वशास्त्राणि सन्त्यजेत् ॥ २,४९.८५ ॥
यथामृतेन तृप्तस्य नाहारेण प्रयोजनम् । तत्त्वज्ञस्य तथा ताक्ष्र्य न शास्त्रेण प्रयोजनम् ॥ २,४९.८६ ॥
न वेदाध्ययनान्मुक्तिर्न शास्त्रपठनादपि । ज्ञानादेव हि कैवल्यं नान्यथा विनतात्मजः ॥ २,४९.८७ ॥
नाश्रमः कारणं मुक्तेर्दर्शनानि न कारणम् । तथैव सर्वकर्माणि ज्ञानमेव हि कारणम् ॥ २,४९.८८ ॥
मुक्तिदा गुरुवागेका विद्याः सर्वा विडम्बिकाः । शास्त्रभारसहस्रेषु ह्येकं सञ्जीवनं परम् ॥ २,४९.८९ ॥
अद्वैतं हि शिवं प्रोक्तं क्रिययापरिवर्जितम् । गुरुवक्त्रेण लभ्येत नाधीतागमकोटिभिः ॥ २,४९.९० ॥
आगमोक्तं विवेकोत्थं द्विधा ज्ञानं प्रचक्षते । शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ॥ २,४९.९१ ॥
अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे । समं तत्त्वं न जानन्ति द्वैताद्वैतविवर्जितम् ॥ २,४९.९२ ॥
द्वे पदे बन्धमोक्षाय नममेति ममेति च । ममेति बध्यते जन्तुर्नममेति प्रमुच्यते ॥ २,४९.९३ ॥
तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तिदा । आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् ॥ २,४९.९४ ॥
यावत्कर्माणि दीप्यन्ते यावत्संसारवासना । यावदिन्द्रियचापल्यं तावत्तत्त्वकथा कुतः ॥ २,४९.९५ ॥
यावद्देहाभिमानश्च ममता यावदेव हि । यावत्प्रयत्नवेगोऽस्ति यावत्संकल्पकल्पना ॥ २,४९.९६ ॥
यावन्नो मनसः स्थैर्यं न यावच्छास्त्रचिन्तनम् । यावन्न गुरुकारुण्यं तावत्तत्त्वकथा कुतः ॥ २,४९.९७ ॥
तावत्तपो व्रतं तीर्थं जपहोमार्चनादिकम् । वेदशास्त्रागमकथा यावत्तत्त्वं न विन्दति ॥ २,४९.९८ ॥
तस्मात्सर्वप्रयत्नेन सर्वावस्थासु सर्वदा । तत्त्वनिष्ठो भवेत्ताक्ष्र्य यदीच्छेन्मोक्षमात्मनः ॥ २,४९.९९ ॥
धर्मज्ञानप्रसूनस्य स्वर्गमोक्षफलस्य च । तापत्रयादिसन्तप्तश्छायां मोक्षतरोः श्रयेत् ॥ २,४९.१०० ॥
तस्माज्ज्ञानेनात्मतत्त्वं विज्ञेयं श्रीगुरोर्मुखात् । सुखेन मुच्यते जन्तुर्घोरसंसारबन्धनात् ॥ २,४९.१०१ ॥
तत्त्वज्ञस्यान्तिमं कृत्यं शृणु वक्ष्यामि तेऽधुना । येन मोक्षमवाप्नोति ब्रह्म निर्वाणसंज्ञकम् ॥ २,४९.१०२ ॥
अन्तकाले तु पुरुष आगते गतसाध्वसः । छिन्द्यादसंगशस्त्रेण स्पृहां देहेऽनु या च तम् ॥ २,४९.१०३ ॥
गृहात्प्रव्राजितो धीरः पुण्यतीर्थजलाप्लुतः । शुचौ विविक्त आसीनो विधिवत्कल्पितासने ॥ २,४९.१०४ ॥
अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम् । मनो यच्छेज्जितश्वासो ब्रह्म बीजमविस्मरन् ॥ २,४९.१०५ ॥

नियच्छेद्विषयेभ्योऽक्षान्मनसा बुद्धि सारथिः । मनः कर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया ॥ २,४९.१०६ ॥
अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् । एवं समीक्ष्य चात्मानमात्मन्याधाय निष्कले ॥ २,४९.१०७ ॥
ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ २,४९.१०८ ॥
न यत्र दाम्भिका यान्ति ज्ञानवैराग्यवर्जिताः । सुधियस्तां गतिं यान्ति तानहं कथयामि ते ॥ २,४९.१०९ ॥
निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्तकामाः । द्वन्द्वैर्विमुक्ताः सुखदुः खसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ २,४९.११० ॥
ज्ञानह्रदे सत्यजले रागद्वेषमलापहे । यः स्नाति मानसे तीर्थे स वै मोक्षमवाप्नुयात् ॥ २,४९.१११ ॥
प्रौढवैराग्यमास्थाय भजते मामनन्यभाक् । पूर्णदृष्टिः प्रसन्नात्मा स वै मोक्षमवाप्नुयात् ॥ २,४९.११२ ॥
त्यक्त्वा गृहं च यस्तीर्थे निवसेन्मरणोत्सुकः । मुक्तिक्षेत्रेषु म्रियते स वै मोक्षमवाप्नुयात् ॥ २,४९.११३ ॥
अयोध्या मथुरा माया काशी काञ्ची अवन्तिक । पुरी द्वारवती ज्ञेयाः सप्तैता मोक्षदायिकाः ॥ २,४९.११४ ॥
इति ते कथितं ताक्ष्र्य मोक्षधर्मं सनातनम् । ज्ञानवैराग्यसहितं श्रुत्वा मोक्षमवाप्नुयात् ॥ २,४९.११५ ॥
मोक्षं गच्छन्ति तत्त्वज्ञा धार्मिकाः स्वर्गतिं नराः । पापिनो दुर्गतिं यान्ति संसरन्ति खगादयः ॥ २,४९.११६ ॥
सूत उवाच । स्वप्रश्नोत्तरराद्धान्तमेवं भगवतो मुखात् । श्रुत्वा हृष्टतनुस्ताक्ष्र्यो ननाम जगदीश्वरम् ॥ २,४९.११७ ॥
सन्देहो मे महान्नष्टो भवद्वाक्यविरोचनात् । इत्युक्त्वा विष्णुमामन्त्र्य स गतः कश्यपाश्रमम् ॥ २,४९.११८ ॥
सद्यो देहान्तरं याति यथा याति विलम्बतः । अनयोरुभयोश्चैव न विरोधस्तथैव वः ॥ २,४९.११९ ॥
सर्वमाख्यातवांस्तात श्रुतो भगवतो यथा । मारीचोऽपि मुदं लेभे श्रुत्वा वाक्यं रमापतेः ॥ २,४९.१२० ॥
अपाकृतस्तु सन्देहो ब्राह्मणा भवतां मया । उक्तं सुपर्णसंज्ञन्तु पुराणं परमाद्भुतम् ॥ २,४९.१२१ ॥
इदमपि हरेस्ताक्ष्र्यस्ताक्ष्र्यादपि ततो भृगुः । भृगोर्वसिष्ठः संप्राप वामदेवस्ततः पुनः ॥ २,४९.१२२ ॥
पराशरमुनिः प्राप तस्माद्व्यासस्ततो ह्यहम् । मया तु भवतां प्रोक्तं परं गुह्यं हरेरिदम् ॥ २,४९.१२३ ॥
य इदं शृणुयान्मर्त्यो यो वाप्यभिदधाति च । इहामुत्र च लोके स सर्वत्र सुखमाप्नुयात् ॥ २,४९.१२४ ॥
व्रजतः संयमन्यां यद्दुः खमत्र निरूपितम् । अस्य श्रवणतः पुण्यं तन्मुक्तो जायते ततः ॥ २,४९.१२५ ॥
अत्रोक्तकर्मपाकादिश्रवणाच्च नृणामिह । वैराग्यमावहेद्यस्मात्तस्माच्छ्रोतव्यमेव च ॥ २,४९.१२६ ॥
भजत जितहृषीकाः कृष्णमेनं मुनीशं समजनि बत यस्माद्गीः सुधासारधारा । पृषतमपि यदीयं वर्णरूपं निपीय श्रुतिपुटचुलुकेन प्राप्नुयादात्मनैक्यम् ॥ २,४९.१२७ ॥
व्यास उवाच । इति सूतमुखोद्गीर्णांसर्वशास्त्रार्थमण्डिताम् । वैष्णवीं वाक्सुधां पीत्वा ऋषयस्तुष्टिमाययुः ॥ २,४९.१२८ ॥
प्रशशंसुस्तथान्योन्यं सूतं सर्वार्थदर्शिनम् । प्रहर्षमतुलं प्रापुर्मुनयः शौनकादयः ॥ २,४९.१२९ ॥
इति हरिवचनानि सूतवाचा खगपतिसंशयभेदकानि यानि । स मुनिरपि निशम्य शौनकेन्द्रो बहुतरमानयति स्म चात्मनि स्वम् ॥ २,४९.१३० ॥
अपूजयंस्ते मुनयस्तदानीमुदाखाग्भिर्मुहुरेव सूतम् । धन्योऽसि सूत त्वमिहेत्युदैरयन्व्यसर्जयंस्तं च निवर्तितेऽध्वरे ॥ २,४९.१३१ ॥
पुराणं गारुडं पुण्यं पवित्रं पापनाशनम् ॥ शृण्वतां कामनापूरं श्रोतव्यं सर्वदैव हि ॥ २,४९.१३२ ॥
श्रुत्वा दानानि देयानि वाचकायाखिलानि च । पूर्वोक्तशयनादीनि नान्यथा सफलं भवेत् ॥ २,४९.१३३ ॥
पुराणं पूजयेत्पूर्वं वाचकं तदनन्तरम् । वस्त्रालङ्कारगोदानैर्दक्षिणाभिश्च सादरम् ॥ २,४९.१३४ ॥
अन्नदानैर्हेमदानैर्भूमिदानैश्च भूरिभिः । पूजयेद्वाचकं भक्त्या बहुपुण्यफलाप्तये ॥ २,४९.१३५ ॥
यश्चेदं शृणुयान्मर्त्यो यथापि परिकीर्तयेत् । विहाय यातनां घोरां धूतपापो दिवं व्रजेत् ॥ २,४९.१३६ ॥
इति श्रीगारुडे महापुराणे उत्तरखण्डे श्रीकृष्णगरुडसंवादे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे मोक्षोपायनिरूपणं नामैकोनपञ्चाशत्तमोऽध्यायः इति श्रीगारुडे महापुराणे द्वितीयो धर्मकाण्डः समाप्तः

श्रीगरुडमहापुराणम्
श्रीगणेशायनमः ।
श्रीलक्ष्मीनृसिंहाय नमः ।
श्रीदत्तात्रेयाय नमः ।
श्रीवेदव्यासाय नमः ।
श्रीहयग्रीवाय नमः ।
अथ गारुडे ब्रह्मकाण्डस्तृतीय आरभ्यते ।
ओं मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान् गोपानां स्वजनोऽसतां क्षितिभृतां शास्ता स्वपित्रोः शिशुः ।
मृत्युर्भोजपतेर्विधातृविहित स्तत्त्वं परं योगिनां वृष्णीनां च पतिः सदैव शुशुभे रङ्गेऽच्युतः साग्रजः ॥ ३,१.१ ॥

नमो नारायणायेति तस्मै वै मूलरूपिणे ।
नमस्कृत्य प्रवक्ष्यामि नारायणकथामिमाम् ॥ ३,१.२ ॥

शौनकाद्या महात्मानो ह्यृषयो ब्रह्मवादिनः ।
नैमिषाख्ये महापुण्ये तपस्तेपुर्महत्तरम् ॥ ३,१.३ ॥

जितेन्द्रिया जिताहाराः संतः सत्यपरायणाः ।
यजन्तः परया भक्त्या विष्णुमाद्यं जगद्गुरुम् ॥ ३,१.४ ॥

गृणन्तः परमं ब्रह्म जगच्चक्षुर्महौजसः ।
सर्वशास्त्रार्थतत्त्वज्ञास्तेपुर्नैमिष कानने ॥ ३,१.५ ॥

यज्ञैर्यज्ञपतिं केचिज्ज्ञानैर्ज्ञानात्मकं परम् ।
केचित्परमया भक्त्या नारायणमपूजयन् ॥ ३,१.६ ॥

एकदा तु महात्मानः समाजं चक्रुरुत्तमाः ।
धर्मार्थकाममोक्षाणामुपायं ज्ञातुमिच्छवः ॥ ३,१.७ ॥

षद्विंशतिसहस्राणि मुनीनामूर्ध्वरेतसाम् ।
तेषां शिष्यप्रशिष्याणां संख्या वक्तुं न शङ्क्यते ॥ ३,१.८ ॥

मुनयो भावितात्मानो मिलितास्ते महोजसः ।
लोकानुग्रहकर्तारो वीतरागा विमत्सराः ॥ ३,१.९ ॥

कथं हरौ मनुष्याणां भक्तिरव्यभिचारिणी ।
केन सिध्येत्तु सकलं कर्म त्रिविधमात्मनः ॥ ३,१.१० ॥

इत्येवं प्रष्टुमात्मानमुद्यतान्प्रेक्ष्य शौनकः ।
सांज लिर्वाक्यमाह स्म विनयावनतः सुधीः ॥ ३,१.११ ॥

शौनक उवाच ।

आस्ते सिद्धाश्रमे पुण्ये सूतः पौराणिकोत्तमः ।
स एतदखिलं वेत्ति व्यासशिष्यो यतीश्वरः ॥ ३,१.१२ ॥

तस्मात्तमेव पृच्छाम इत्येवं शौनको मुनिः ।
अथ ते ऋषयो जग्मुः पुण्यं सिद्धाश्रमं ततः ॥ ३,१.१३ ॥

पप्रच्छुस्ते सुखासीनं नैमिषारण्यवासिनः ।
ऋषय ऊचुः ।
वयं त्वतिथयः प्राप्तास्त्वातिथेयोसि सुव्रत ॥ ३,१.१४ ॥

स्नानदानोपचारेण पूजयित्वा यथाविधि ।
केन विष्णुः प्रसन्नः स्यात्स कथं पूज्यते नरैः ॥ ३,१.१५ ॥

मुक्तिसाधनभूतं च ब्रूहि तत्त्वविनिर्णयम् ।
सूत उवाच ।
शृणुध्वमृष्यः सर्वे हरिं तत्त्वविनिर्णयम् ॥ ३,१.१६ ॥

नत्वा विष्णुं श्रियं वायुं भारतीं शेषसंज्ञकम् ।
द्वैपायनं गुरुं कृष्णं प्रवक्ष्यामि यथामति ॥ ३,१.१७ ॥

नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम् ॥ ३,१.१८ ॥

शौनक उवाच ।
किमर्थं नमनं विष्णोर्ग्रन्थादौ मुनिसत्तम ।
कर्तव्यं ब्रूहि मे ब्रह्मन्कृपया मम सुव्रत ॥ ३,१.१९ ॥

ततः श्रियं ततो वायुं भारतीं च ततः परम् ।
अन्ते व्यासं किमर्थं च त्वं नमस्कृतवानसि ।
सूतसूत महाभाग ब्रूहि कारणमत्र च ॥ ३,१.२० ॥

सूत उवाच ।
आदौ वन्द्यः सर्ववेदैकवेद्यो वेदे शास्त्रे सेतिहासे पुराणे ।
सत्तां प्रायो विष्णुरेवैक एव प्रकाशतेऽतो नम्य एको हरिर्हि ॥ ३,१.२१ ॥

सर्वत्र मुख्यस्त्वधिकोन्यतोपि स एव नम्यो न च शङ्करादयाः ।
नमन्ति येऽविनयाच्छङ्करं तु विनायकं चण्डिकां रेणुकां च ॥ ३,१.२२ ॥

तथा सूर्यं भैरवं मातारश्च तथा वाणीं गिरिजां वै श्रियं च ।
सर्वेपि ते वैष्णवा नैव लोके न तद्भक्ता वेति चार्या वदन्ति ॥ ३,१.२३ ॥

न पार्थिक्यान्नमनं कार्यमेव प्रीणन्ति नैता देवताः पूजनेन ।

पूजां गृहीत्वा देवताश्चैव सर्वाः किञ्चिद्दत्वा फलदानेन तांश्च ॥ ३,१.२४ ॥

संतर्प्य तुष्टैः स्वमनोनु सारात्तैः कारितां काम्यपूजां तथैव ।
निवेदयित्वा परदेवतायां विष्णौ हरौ श्रीपुरुषादिवन्द्ये ॥ ३,१.२५ ॥

इहापरत्रापि सुखेतराणि दास्यन्ति पश्चादधरं वै तमश्च ।
अतो ह्येते नैव पूज्या न नम्या मोक्षेच्छुभिर्ब्राह्मणाद्यैर्द्विजेन्द्र ॥ ३,१.२६ ॥

तथैव सर्वाश्रमिभिश्च नित्यं महाविपत्तावपि विप्रवर्याः ।
श्रीकाम्य या ये तु भजन्ति नित्यं श्रीब्रह्मरुद्रेद्रयमादिदेवान् ॥ ३,१.२७ ॥

इहेव भुञ्जन्ति महच्च दुः खं महापदः कुष्ठभगन्दरादीन् ।
नमन्ति येऽवैष्णवान्ब्रह्मरुद्रवायु प्रतीकान्नैव ते विष्णुभक्ताः ॥ ३,१.२८ ॥

अभिप्रायं त्वत्र वक्ष्ये मुनीन्द्राः परं गोप्यं हृदि धार्यं हि तद्धि ।
वायोः प्रतीकं पूज्यमेवेह विप्रा न ब्रह्मरुद्रादिप्रतीकमेव ॥ ३,१.२९ ॥

पूजाकाले देवदेवस्य विष्णोर्वायोः प्रतीकं योग्यभागे निधाय ।
अन्तर्गतं तस्य वायोर्हरिं च लक्ष्मीपतिं पूजयित्वा हि सम्यक् ॥ ३,१.३० ॥

पश्चाद्वायोः सुप्रतीकं च सम्यङ्निर्माल्यशेषेण हरेः समर्चयेत् ।
पृथक्च स्रग्धूपविलेपनादिपूजां प्रकुर्वन्ति च ये विमूढः ॥ ३,१.३१ ॥

तेषां दुः खमिह लोके परत्र भविष्यते नात्र विचार्यमस्ति ।
प्रायश्चित्तं स्वस्ति विप्राः कथञ्चित्तत्कुर्वन्तु स्मरणं नाम विष्णोः ॥ ३,१.३२ ॥

पाषण्डरुद्रादिकसं प्रतिष्ठितान्हरेर्वायोः शङ्करस्य प्रतीकान् ।
नमन्ति ये फलबुद्ध्या विभूढास्तेषां फलं शाश्वतं दुः खमेव ॥ ३,१.३३ ॥

वायोः प्रतीकं यदि विप्रवर्यैः प्रतिष्ठितं चेन्नमनं हि कार्यम् ।
नैवेद्यशेषेण हरेश्च विष्णोः पूजा कृता चेन्न हि दोषलेशः ॥ ३,१.३४ ॥

गुरुर्हि मुख्यो हनुमज्जनिर्महान्नामाङ्घ्रिभक्तो हनुमान्सदैव ।
एवं विदित्वा परमं हरिं च पुत्रं पुनर्मुख्यदेवस्य वायोः ॥ ३,१.३५ ॥

नमस्कारो नान्यथा विप्रवर्या आधीयतां हृदि सर्वै रहस्यमम् ।
ये वैष्णवा वैष्ण वदासभृत्याः सर्वेपि ते सर्वदा विष्णुमेव ॥ ३,१.३६ ।
नमन्ति ये वै प्रतिपादयन्ति तथैव पुण्यानि च सात्त्विकानि ।
नमन्ति ये वासुदेवं हरिं च सम्यक्स्वशक्त्या प्रतिपादयन्ति ॥ ३,१.३७ ॥

प्रवृत्तिमार्गेण न पूजयन्ति ह्यापत्काले परदैवं तदन्यम् ।
ते वैष्णवा वैष्णवदासभृत्या अन्ये च सर्वेऽवैष्णवमात्रकाः स्मृताः ॥ ३,१.३८ ॥

उपक्रमैरुपसंहारस्य लिङ्गैर्हरिं गुरुं ह्यन्तरेणैव यान्ति ।
तानेवाहुः सत्पुराणानि विप्राः कलौ युगे नाभ्यसूयन्ति सर्वे ॥ ३,१.३९ ॥

यतो हितान्ये प्रतिपादयन्ति प्रवृत्तिधर्मान्स्वस्ववर्णानुरूपान् ।
अतो ह्यसूयन्ति सदा विमूढाः कलौ हि विप्राः प्रचुरा हि तेपि ॥ ३,१.४० ॥

न चास्ति विष्णोः सदृशं च दैवतं न चास्ति वायोः सदृशो गुरुश्च ।
न चास्ति तीर्थं सदृशं विष्णुपद्याः न विष्णुभक्तेन समोस्ति भक्तः ॥ ३,१.४१ ॥

अन्यानि विष्णोः प्रतिपादकानि सर्वाणि ते सात्त्विकानीति चाहुः ।
श्राव्याणि तान्येव मनुष्यलोके श्राव्याणि नान्यानि च दुः खदानि ॥ ३,१.४२ ॥

कलौ युगे सर्व पुराणमध्ये त्रीण्येव मुख्यानि हरिप्रियाणि ।
मुख्यं पुराणं हि कलौ नृणां च श्रेयस्करं भागवतं पुराणम् ॥ ३,१.४३ ॥

पूर्वं हि सृष्टिः प्रतिपाद्यते त्र यतो ह्यतो भागवतं परं स्मृतम् ।
यस्मिन्पुराणे कथयन्ति सृष्टिं ह्यादौ विष्णोर्ब्रह्मरुद्रादिकानाम् ॥ ३,१.४४ ॥

नानार्थमेवं कथयन्ति विप्र नीचोच्चरूपं ज्ञानमाहुर्महान्तः ।
तेनैव सिद्धं प्रवदन्ति सर्वं ह्यतः परं भागवतं पुराणम् ॥ ३,१.४५ ॥

ततः परं विष्णुपुराणमाहुस्ततः परं गारुडसंज्ञकं च ।
त्रीण्येव मुख्या नि कलौ नृणां तु तथा विशेषो गारुडे किञ्चिदस्ति ॥ ३,१.४६ ॥

शृणुध्वं वै तं विशेषं च विप्रास्त्र्यंशैर्युक्तं गारुडाख्यं पुराणम् ।
आद्यांशं वै कर्मकाण्डं वदन्ति द्वितीयांशं धर्मकाण्डं तमाहुः ॥ ३,१.४७ ॥

तृतीयांशं ब्रह्मकाण्डं वदन्ति तेषां मध्ये त्वन्तिमोयं वरिष्ठः ।
तृतीयांशश्रवणात्पुण्यमाहुस्तुल्यं पुण्यं भागवतस्य विप्राः ॥ ३,१.४८ ॥

तृतीयांशे पठिते वेदतुल्यं फलं भवेन्नात्र विचार्यमस्ति ।
तृतीयांशश्रवणादेव विप्राः फलं प्रोक्तं पठतोप्यर्थमेवम् ॥ ३,१.४९ ॥

तृतीयांशश्रवणादर्थतश्च पुण्यं चाहुः पठतो वै दशांशम् ।
ततो वरं मत्स्यपुराणमाहुस्ततो वरं कूर्मपूराणमाहुः ॥ ३,१.५० ॥

तथैव वै वायुपुराणमाहुस्त्रीण्येव चाहुः सात्त्विकानीति लोके ।
तत्रापि किञ्चिद्वेदितव्यं भवेच्च पुराणषट्के सत्त्वरूपे मुनीन्द्राः ॥ ३,१.५१ ॥

सत्त्वाधमे मात्स्यकौर्मे तथाहुर्वायु चाहुः सात्त्विकं मध्यमं च ।
विष्णोः पुराणं भागवतं पुराणं सत्त्वोत्तमं गारुडं चाहुरार्याः ॥ ३,१.५२ ॥

स्कान्दं पाद्मं वामनं वै वराहं तथाग्नेयं भविष्यं पर्वसृष्टौ ।
एतान्याहू राजसानीति विप्रास्तत्रैकदेशः सात्त्विकस्तामसश्च ॥ ३,१.५३ ॥

रजः प्राचुर्याद्राजसानीति च हुः श्राव्याणि नैतानि मुमुक्षुभिः सदा ।
तेषां मध्ये सात्त्विकांशाश्च संति तेषां श्रुतेर्गारुडीयं फलं च ॥ ३,१.५४ ॥

ब्रह्माण्डलैङ्ग्ये ब्रह्मवैवर्तकं वै मार्कण्डेयं ब्राह्ममादित्यकं च ।
एतान्या हुस्तामसानीति विप्रास्तत्रैकदेशः सात्त्विको राजसश्च ॥ ३,१.५५ ॥

श्राव्याणि नैतानि मनुष्यलोके तत्त्वेच्छुभिस्तामसानीत्यतो हि ।
तेषु स्थिताः सात्त्विकांशा मुनीन्द्रास्तेषां श्रुतिर्गारुडैकाङ्घ्रितुल्या ॥ ३,१.५६ ॥

अल्पान्युपपुराणानि वदन्त्यष्टादशानि च ।
विष्णुधर्मोतरं चैव तन्त्रं भागवतं तथा ॥ ३,१.५७ ॥

तत्त्वसारं नारसिंहं वायुप्रोक्तं तथैव च ।
तथा हंसपुराणं च षडेतानि मुनीश्वराः ॥ ३,१.५८ ॥

सात्त्विकान्येव जानीध्वं प्रायशो नात्र संशयः ।
एतेषां श्रवणादेव गारुडार्धफलं श्रुतम् ॥ ३,१.५९ ॥

भविष्योत्तरनामानं बृहन्नारदमेव च ।
यमनारदसंवादं लघुनारदमेव च ॥ ३,१.६० ॥

विनायकपुराणं च बृहद्ब्रह्माण्डमेव च ।
एतानि राजसान्याहुः श्रवणाद्भुक्तरुत्तमा ॥ ३,१.६१ ॥

गारुडात्पादतुल्यं च फलं चाहुर्मनीषिणः ।
पुराणं भागवतं शैवं नन्दिप्रोक्तं तथैव च ॥ ३,१.६२ ॥

पाशुपत्यं रैणुकं च भैरवं च तथैव च ।
एतानि तामसान्याहुर्हरितत्त्वार्थवेदिनः ॥ ३,१.६३ ॥

एतेषां श्रवणाद्विप्रागारुडाङ्घ्ययर्ध्मेव च ।
सर्वेष्वपि पुराणेषु श्रेष्ठं भागवतं स्मृतम् ॥ ३,१.६४ ॥

वेदैस्तुल्य सम पाठे श्रवणे च तदर्धकम् ।
अर्थतः श्रवणे चास्य पुण्यं दशगुणं स्मृतम् ॥ ३,१.६५ ॥

वक्तुः स्याद्द्विगुणं पुण्यं व्याख्यातुश्च तथाधिकम् ।
अनन्तवेदैःसाम्यमाहुर्महान्तः भारान्महत्त्वाद्भारतस्यापि विप्राः ॥ ३,१.६६ ॥

वेदोभ्योस्य त्वर्थतश्चाधिकत्वं वदन्ति बै विष्णुरहस्यवेदिनः ॥ ३,१.६७ ॥

तत्र श्रेष्ठां गीतिकामाहुरार्यास्तथैव विष्णोर्नामसाहस्रक च ।
तयोस्तत्र श्रवणाद्धारतस्य दशाधिकं फलमाहुर्महान्तः ॥ ३,१.६८ ॥

दैत्याः सर्व विप्रकुलेषु भूत्वा कृते युगे भारते षट्सहस्र्याम् ।
निष्कास्य कांश्चिन्नवनिर्मितानां निवेशनं तत्र कुर्वन्ति नित्यम् ॥ ३,१.६९ ॥

मत्वा हरिं भगवान्व्यासरूपी चक्रे तदा भागवतं पुराणम् ।
तथा समाख्याय च वैष्णवं तत्ततः परं गारुडाख्यं स चक्रे ॥ ३,१.७० ॥

अतो हि गारुडं मुख्यं पुराणं शास्त्रसंमतम् ।
गारुडेन समं नास्ति विष्णुधर्मप्रदर्शने ॥ ३,१.७१ ॥

यथा सुराणां प्रवरो जनार्दनो यथायुधानां प्रवरः सुदर्शनम् ।
यथाश्वमेधः प्रवरः क्रतूनां छिन्नेषु भक्तेषु तथैव रुद्रः ॥ ३,१.७२ ॥

नदीषु गङ्गा जलजेषु पद्ममच्छिन्नभक्तेषु तथैव वायुः ।
तथा पुराणेषु च गारुडं च मुख्यं तदाहुर्हरितत्त्वदर्शने ॥ ३,१.७३ ॥

गारुडाख्यपुराणे तु प्रतिपाद्यो हरिः स्मृतः ।
अतो हरिर्नमस्कार्यो गम्यो योग्यो हरिः स्मृतः ॥ ३,१.७४ ॥

भाग्यात्मकत्वाच्छ्रीदेव्या नमनं नदनु स्मृतम् ।
परो नरोत्तमो वा स साधकेशोपि च स्मृतः ॥ ३,१.७५ ॥

अतो नम्यो वायुरपि पुराणादौ द्विजोत्तमाः ।
भारती वाक्यरूपत्वान्नम्या वायोरनन्तरम् ॥ ३,१.७६ ॥

उपसाधको नरः प्रोक्तो यतोतस्तदनन्तरम् ।
नम्य इत्यच्यते सद्भिस्तारतम्येन सर्वदा ॥ ३,१.७७ ॥

अतो व्यासं नमस्कुर्याद्ग्रन्थकर्तृत्वहेतुतः ।
शौनक उवाच ।
व्यासस्य नमनं ह्यन्ते कथं कार्यं महात्मनः ॥ ३,१.७८ ॥

अन्ते च वन्दने तस्य कारणं ब्रूहि सुव्रत ।
सूत उवाच ।
विष्णोरनन्तरं व्यासनमनं मुख्यमेव हि ॥ ३,१.७९ ॥

हरिरेव यतो व्यासो वाच्यचक्रस्वरूपकः ।
व्यासो नैव समत्वेन प्रोक्तो भगवतो हरेः ॥ ३,१.८० ॥

तत्रापि कारणं वक्ष्ये सादरेण मुनीश्वराः ।
व्यासस्तु कश्चन ऋषिः पुराणे तामसे स्मृतः ॥ ३,१.८१ ॥

इति ज्ञाना वलंबेन दैत्या दैत्यानुगैः समाः ।
प्रविशन्ति ह्यन्धतम इति त्वन्ते नमस्कृतः ॥ ३,१.८२ ॥

यदिदं परमं गोप्यं हृदि धार्यं न संशयः ।
पराणां नम्यमेवोक्तं प्रतिपाद्यं यतोत्र हि ॥ ३,१.८३ ॥

समासव्यासभावाद्धि पराणां तत्प्रतीयते ।
वास्तवं तं न जानीयुरुपजीव्यो यतो हरिः ॥ ३,१.८४ ॥

हरिर्व्यासस्त्वेक एव व्यासस्तु हरिवत्स्मृतः ।
उपजीव्यतदीशत्वे तयोरेव न संशयः ॥ ३,१.८५ ॥

ईशकोटिप्रविष्टत्वाच्छ्रियः स्वामित्वमीरितम् ।
त्रयाणामुपजीव्यत्वात्सेव्यत्वात्स्वामिता स्मृताः ॥ ३,१.८६ ॥

वाय्वादीनां त्रयाणां च सेव्यत्वात्सेव्यता स्मृता ।
भूभारहरणे विष्णोः प्रधानाङ्गं हि मारुतिः ॥ ३,१.८७ ॥

वाक्यरूपा भारती तु द्वितीयाङ्गं हि सा स्मृता ।
तृतीयाङ्ग हरेः शेषो न नम्याः साम्यतो हरेः ॥ ३,१.८८ ॥

प्रतिपाद्या मुख्यतया नम्या एव समीरिताः ।
अवान्तराश्च वाय्वाद्या न नम्यास्तेन ते स्मृताः ॥ ३,१.८९ ॥

भीष्मद्रोणादिनामानि भीमादिष्वेव मुख्यतः ।
वाचकानि यतो नित्यं तन्नम्यास्ते मुनीश्वराः ॥ ३,१.९० ॥

पराणामेव नम्यत्वं प्रतिपाद्यत्वमेव हि ।
एतत्सर्वं मयाख्यातं किमन्यच्छ्रोतुमिच्छथ ॥ ३,१.९१ ॥

इति श्रीगारुडे महापुराणे सूतशौनकसंवादे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे
सात्त्विकादिपुराणविभागनम्यानम्यदेवविभागादिविषयनिरूपणं नाम प्रथमोऽध्यायः

श्रीगरुडमहापुराणम् २
श्रीशौनक उवाच ।
कथं ससर्ज भगवांस्तत्तत्तत्त्वाभिमानिनः ।
सृष्टिक्रमं न जानामि देवानां ह्यन्तरं मुने ॥ ३,२.१ ॥

शौनकेनैव मुक्तस्तु सूतो वचनमब्रवीत् ।
शूत उवाच ।
सम्यग्व्यवसिता बुद्धिस्तव ब्रह्मर्षिसत्तम ॥ ३,२.२ ॥

एवमेव कृतः प्रश्नो हरौ तु गरुडेन वै ।
यदुक्तवान्हरिस्तस्मैतद्वक्ष्यामि तवानघ ।
गरुड उवाच ।
सृष्टिं व्रूहि महाभाग सच्चिदानन्दविग्रह ॥ ३,२.३ ॥

सृष्टौ ज्ञाते तवोत्कर्षो ज्ञातप्रायो भविष्यति ।
ब्रह्मादीनां तारतम्यज्ञानं मम भविष्यति ॥ ३,२.४ ॥

मोक्षोपायम्यः स वोक्त मिततरत्तस्य साधनम् ।
गरुडेनैव मुक्तस्तु कृष्णो वचनमब्रवीत् ॥ ३,२.५ ॥

शृकृष्ण उवाच मूलरूपे ह्यतो ज्ञेयो विष्णुत्वाद्विष्णुरव्ययः ॥ ३,२.६ ॥

अवतारमिदं प्रोक्तं पूर्णत्वादेव सुव्रत ।
अनेको ह्येकतां प्राप्य संशेते प्रलयाय वै ॥ ३,२.७ ॥

तत्रापि च विशेषोस्ति ज्ञातव्यं तत्वमेव सः ॥ ३,२.८ ॥

भेदेन दर्शनाद्वापि भेदाभेदेन दर्शनात् ।
विष्णोर्गुणानां रूपाणां तदङ्गानां सुखादिनाम् ।
तत्रैव दशनाद्वापि क्षिप्रमेव तमो व्रजेत् ॥ ३,२.९ ॥

पुरुषान्तरमारभ्य कल्पिता ये द्विजोत्तम ।
हरिरूपास्तु ते ज्ञेया एकीभूता हि तेन ते ॥ ३,२.१० ॥

प्रलये समनुप्राप्ते जीवाः स यान्ति मामकाः ।
विराड्रूपे हरेः संति तदा ते च ह्यनेकधा ॥ ३,२.११ ॥

एकीभावं प्राप्नुवन्ति मूलेन प्रलये द्विज ।
बिंबेन तु स्वयं विष्णुरेकीभावं व्रजेद्यदि ॥ ३,२.१२ ॥

प्रतिबिंबः कथं जीवो भवेन्नारायणस्य च ।
तदधीनस्तत्सदृशो हरेर्जीवो न संशयः ॥ ३,२.१३ ॥

प्रतिबिंबस्य शब्दार्थो ह्ययमेवमुदाहृतः ।
तस्माच्च बिंबरूपाणामेकीभावं न चिन्तयेत् ॥ ३,२.१४ ॥

कृष्णरामादिवच्चैव त्वेकीभावो विवक्षितः ।
बिंबानां मूलरूपस्य भेदो नात्र विवक्षितः ॥ ३,२.१५ ॥

तत्रापि च विशेषोस्ति ज्ञातव्यस्तत्त्वमिच्छुभिः ।
एकांशेन तु बिंबैस्तु चैकीभावं व्रजन्ति ते ॥ ३,२.१६ ॥

एकांशेन तु जीवत्वे संस्थिता नात्र संशयः ।
बिंबमूलं न जानन्ति ते जना ह्यसुराः स्मृताः ॥ ३,२.१७ ॥

एक एव हरिः पूर्वं ह्यविद्यावशतः स्वयम् ।
अनेको भवति ह्यारादादर्शप्रतिबिंबवत् ॥ ३,२.१८ ॥

एवं वदन्ति ये मूढास्तेपि यान्त्यधरं तमः ।
उपाधिर्द्विविधः प्रोक्तः स्वरूपो बाह्य एव च ॥ ३,२.१९ ॥

बाह्योपाधिर्लये याति मुक्तावन्यस्य संस्थितिः ।
सर्वोपाधिविनाशे हि प्रतिबिंबः कथं भवेत् ॥ ३,२.२० ॥

चिद्रूपाख्यो ह्युपाधिस्तु मोक्षे येप्यधिकारिणः ।
दुःखरूपो ह्युपाधिस्तु तमसो येधिकारिणः ॥ ३,२.२१ ॥

मिश्ररूपो ह्युपाधिस्तु नित्यसंसारिणां मतः ।
बाह्योपाधिर्लिङ्गदेहः सर्वेषां नात्र संशयः ॥ ३,२.२२ ॥

दैत्याः दुःखायते यस्मात्तस्मादुःखी हरिः स्वयम् ।
तत्तद्दुःखस्वरूपत्वाद्दैत्यानां बिंबरूपकः ॥ ३,२.२३ ॥

दैत्यस्थितानां बिंबानां मूलरूपस्य वै प्रभोः ।
परस्परं तथा भेदं ह्यन्तरं वा न चिन्तयेत् ॥ ३,२.२४ ॥

श्रीभूदुर्गादिरूपाणां तथा सीतादिरूपिणाम् ।
अन्योन्यं नाणुमात्रं च भेदो बाह्यान्तरेपि च ॥ ३,२.२५ ॥

चिन्तनीयः कथमपि ज्ञात्वा यान्त्यधरं तमः ।
प्रतिबिंबस्थितो बिंबः स्त्रीरूपो ह्यस्ति सर्वदा ॥ ३,२.२६ ॥

प्रलये समनुप्राप्ते लक्ष्म्या सह खगोत्तम ।
एकीभावं नाप्नुवन्ति बिंबेन सह संस्थिताः ॥ ३,२.२७ ॥

बिंबस्थितानां रूपाणां लक्ष्म्याश्च विनतासुत ।
भेदस्तु नाणुमात्रं च शङ्कनीयः कथञ्चन ॥ ३,२.२८ ॥

यदा हि शेते प्रलयार्णवे विभुर्जीवांश्च सर्वानुदरे निवेश्य ।
मुक्तांश्च ब्रह्मेन्द्रमरुद्गणादीन्प्रात्पव्यमुक्तींश्च सुतौ? च संस्थितान् ॥ ३,२.२९ ॥

प्राप्तान्धकूपादिसमस्तजीवांस्तथैव प्राप्तव्यकलीनथापरान् ।
तथैव नित्यं सृतिसंस्थिताञ्जनानचेतनानृक्षरूपादिजीवान् ॥ ३,२.३० ॥

एवं जनाञ्जठरे संनिधाय सम्यक्शेते ह्यंभसि वै स कल्पे ।
लक्ष्मीस्तु सा सर्ववेदात्मिका च भक्त्या हरौ नित्यसंवर्धितापि ॥ ३,२.३१ ॥

अत्यादरं दर्शयतीव सा तु ईडे विष्णुं भक्तिसंवर्धितापि ।
चेष्टादिरूपेण तदा न किञ्चिदासीद्विना विष्णुमथ श्रियं च ॥ ३,२.३२ ॥

पर्यङ्करूपेण बभूव देवी वासस्वरूपेण रमा विरेजे ।
सर्वं रमा सैव तदैव चासीत्सैका देवी बहुरूपा बभाषे ॥ ३,२.३३ ॥

त्वमुत्कृष्टः सर्वदेवोत्तमत्वान्न त्वत्समः कश्चिदेवाधिको वा ।
त्वं ब्रह्म एको न चतुर्मुखश्च नाहं रुद्रो न बृहस्पतिश्च ॥ ३,२.३४ ॥

विष्णावेव ब्रह्मशब्दो हि मुख्यो ह्यन्येष्वमुख्यो ब्रह्मरुद्रादिकेषु ।
अनन्तगुणपूर्णत्वाद्ब्रह्मेति हरिरुच्यते ॥ ३,२.३५ ॥

गुणादिपूर्णताभावान्नान्ये ब्रह्मेत्युदाहृताः ।
देशानन्त्यं गुणतः कालतो वा नास्त्यानन्त्यं क्वापि देशे च काले ॥ ३,२.३६ ॥

यदा नन्त्यं किमु वक्तव्यमत्र गुणानन्त्यं नास्ति ब्रह्मादिकेषु ।
यद्यप्यहं देशतः कालतश्च समस्तदा वासुदेवेन सार्धम् ॥ ३,२.३७ ॥

तथापि मे गुणतो नास्त्यनन्तं ततो धर्मा गुणतोनन्ततश्च ।
संति श्रुतावविरुद्धाश्च देवे चिन्त्या ह्यचिन्त्या बहुधा ते ह्यनन्ताः ॥ ३,२.३८ ॥

अतो गुणांस्तव देवस्य विष्णो स्तोतुं सदा स्मो न हरेः कदापि ।
नाहं न केशौ न च गीर्न रुद्रो न दक्षकन्या न च मेनकासुता ॥ ३,२.३९ ॥

न वै बिडौजा न च वा पुलोमजा न चेध्मवाहो न यमो न चान्यः ।
न नारदो नापि भृगुर्वसिष्ठो न विघ्नपो नापि बल्यादयश्च ॥ ३,२.४० ॥

न वै विराटो नापि भीमः शनिश्च न पुष्करो न कशेरुस्तथैव ।
न किन्नराः पितरो नैव देवा गन्धर्वमुख्या नापि वा तुष्यसंज्ञाः ॥ ३,२.४१ ॥

न वै क्षितीशा न च मानुषाश्च विष्णोर्न जानन्ति किमत्र चान्ये ।
मत्तोधमः कोचिगुणेन ब्रह्मा समो हि तस्य ब्रह्मणो मातरिश्व ॥ ३,२.४२ ॥

तौ वै विरागे हरिभक्तिभावे धृतिस्तितिप्राणबलेषुयोगे ।
बुद्धौ समानौ संसृतौ मोक्षकाले परस्पराधारसमन्वितौ च ॥ ३,२.४३ ॥

अन्नाभिमानं ब्रह्म चाहुर्मुरारिं जीवाभिमानं वायुमाहुर्महान्तः ।
न शक्तोसौ ब्रह्मदेवो विवस्तुं वायुं विना संसृतावेव नित्यम् ॥ ३,२.४४ ॥

न तं विना मातरिश्वा च वस्तुमन्योन्यमाप्तिः कालतो न्यूनता च ।
यदा महत्ततत्त्वनि यामकोभूद्ब्रह्माण्डान्तस्थूलसृष्टौ महात्मा ॥ ३,२.४५ ॥

तदा वायुर्नाशकद्वै महात्मा बाह्ये सृष्टौ कालभेदेन चास्ति ।
सरस्वती भारती ब्रह्मणस्तु संवत्सरानन्तरं संबभूव ॥ ३,२.४६ ॥

यदा दशाब्दाः समतीता महात्मा तदा वायुः समभूल्लोकपूज्यः ।
किञ्चिन्न्यूनत्वं स्थूलसृष्टौ महात्मन्नैतावता वानयोः सौम्यहानिः ॥ ३,२.४७ ॥

सरस्वती वत्सरात्संबभूव ह्यनन्तरं ब्रह्मणो जन्मकालात् ।
गिरः सकाशात्कालतो न्यूनतास्ति वायोस्तदा ह्यधमत्त्वे क्षतिः का ॥ ३,२.४८ ॥

वायोरनन्तरं वाणी ह्यभूत्संवत्सरात्परम् ।
यावत्पश्चाज्जनिस्तावत्पूर्वदेहक्षयो भवेत् ॥ ३,२.४९ ॥

शेषस्त्विन्द्रो रुद्र एते त्रयश्च समा ह्येते ज्ञानबलादिकेष्वपि तथापि तेषां कालतो न्यूनतास्ति कालोपि तेषां द्विव्येसहस्रवर्षम् ॥ ३,२.५० ॥

अनन्तरुद्रो ब्रह्मवायू यथा वा तथा ज्ञेयो नैव हानिः स्वरूपे ।
स्थूलस्य सृष्टौ बाह्यसृष्टौ महात्मन्कालान्न्यूनत्वं स मया नैव चिन्त्यः ॥ ३,२.५१ ॥

तेषां सकाशाद्वारुणी पार्वती च सौपर्णीनाम्नी तिस्त्र एता महात्मन् ।
दशाब्देभ्योनन्तरं संबभूवुः सरस्वती भारतीवच्च बोध्या ॥ ३,२.५२ ॥

इन्द्रो वरो रुद्रभार्यादिकेभ्य एवं ज्ञानं सर्वदा देह्यमन्दम् ।
एवं ज्ञानं यस्य भवेच्च लोके स वै ज्ञानी वेदवेद्यः स एव ॥ ३,२.५३ ॥

न वै ज्ञानीत्यन्तरं यो न वेद स वेदवादी न च वेदपाठकः ॥ ३,२.५४ ॥

वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि प्रियाणि च हरेः सदा ॥ ३,२.५५ ॥

मम स्वामी हरिर्नित्यं दासोहं सर्वदा हरेः ।

ब्रह्माद्या देवताः सर्वा गुरवो मे यथाक्रमम् ॥ ३,२.५६ ॥

एतेषां च हरिः स्वामी वेदे सर्वत्र गीयते ।
एवं जानंस्तु यो वेदान्संपठेत्स द्विजोत्तमः ॥ ३,२.५७ ॥

स वेदपाठको ज्ञेयस्तदन्ये वेदवादिनः ।
वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभः ॥ ३,२.५८ ॥

ज्ञानाभिमानी वेदमानी उभौ तु परस्परं ह्यूचतुः सर्वदैव ।
जलं वेदो यत्र वासो मुरारेराचार्याणां संगदोषाद्द्विजानाम् ॥ ३,२.५९ ॥

महापराधाः संति लोके महात्मन्सहस्रशः शतशः कोटिशश्च ।
हरिश्च तान्क्षमते सर्वदैव नामत्रयस्मरणाद्वै कृपालुः ॥ ३,२.६० ॥

सर्वापराधाद्रहितं दानमानैर्युक्तं सदा तारतम्याच्च हीनम् ।
दृष्ट्वापराधं तस्य विष्णुर्महात्मा हाहाकारं कुरुते क्रोधबुद्ध्या ॥ ३,२.६१ ॥

उत्तिष्ठ गोविन्द सुवेदवेद्य सोव्यात्कृताख्यो मयि सम्यक्प्रसीद ।
भो केशवोत्तिष्ठ सुखस्वरूप सृष्टौ व्यये वर्तयितुं समर्थः ॥ ३,२.६२ ॥

सृष्ट्वा ब्रह्माणं प्रेरयेत्पूज्यसृष्टौ सृष्ट्वा रुद्रं प्रेरयेत्संहृतौ च ।
प्राप्तव्ययोग्यान्ब्रह्मशेषादिदेवान्दृष्ट्वादृष्ट्वा देहि मोक्षं च सम्यक् ॥ ३,२.६३ ॥

हरे मुरारे स्वापहीनाद्य तिष्ठ कल्पा दिकानन्तरज्ञान (रं बुद्धि) (जान) हीनात् ।
सम्यग्दृष्ट्वा कर्मदृष्ट्या महात्मल्लंब्धं तमो दाहि दुः खस्वरूपम् ॥ ३,२.६४ ॥

दैत्यादिकान्दुः खमतीन्ह यस्मात्तमस्यन्धेसर्वदा चित्स्वरूपी ।
तस्मादाहुर्दुः स्वरूपी हरिस्त्वं दुः खस्वरूपात्त्वं च दुः खी हरे त्वम् ॥ ३,२.६५ ॥

उत्तिष्ठ नारायण वासुदेव ह्युत्तिष्ठ कृष्णाच्युत माधवेति ।
उत्तिष्ठ वैकुण्ठ दयार्द्रमूर्ते उत्तिष्ठ लक्ष्मीश नमोनमस्ते ॥ ३,२.६६ ॥

उत्तिष्ठ मध्वेश सरस्वतीश उत्तिष्ठ रुद्रेश तथांबिकेश ।
उत्तिष्ठ चन्द्रेश तथा शचीश विप्रेश भक्तेश गवेश नित्यम् ॥ ३,२.६७ ॥

शास्त्रप्रियोत्तिष्ठ ऋचि प्रियस्त्वं यजुः प्रियोत्तिष्ठ निदानमूर्ते ।
सामप्रियस्त्वं च तथा मुरारे अथर्ववेदप्रिय सर्वदा त्वम् ॥ ३,२.६८ ॥

गद्यप्रियस्त्वं च पुराणमूर्ते स्तुतिप्रियोत्तिष्ठ विचित्रमूर्ते ।
सुगायनप्रीतिकरस्त्वमेव ह्युतिष्ठ शीघ्रं कमला पतिस्त्वम् ॥ ३,२.६९ ॥

एवं स्तुतो विष्णुरजः पुराणो ह्यतित्वरावानुत्थितो नित्यबद्धः ॥ ३,२.७० ॥

इति श्रीगारुडे महापुराणे कृष्णगरुडसंवादे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे ब्रह्माविष्णुमहेश्वरादिदेवतातारम्यनिरूपणं नाम द्वितीयोऽध्यायः

श्रीकृष्ण उवाच ।
बभूवेच्छा मम देवस्य विष्णोः स्रष्टुं सृज्यान्मोक्षयोग्यांश्च मोक्तुम् ।
इच्छाशक्तिः सर्वदैवास्ति विष्णोस्तथापि तद्व्याहरणं च लौकिकम् ॥ ३,३.१ ॥

तदा हरिर्जगृहे लौकिकं च तमः पानं तेन रूपेण चक्रे ।
तद्रूपमाहुः प्राकृतं वै तदज्ञा ह्यन्धं तमः प्रविशन्त्येव सर्वे ॥ ३,३.२ ॥

अवतारा महाविष्णोः सर्वे पूर्णाः प्रकीर्तिताः ।
पूर्णं च तत्परं रूपं पूर्णात्पूर्णाः समुद्गताः ॥ ३,३.३ ॥

परावरत्वं तेषां तु व्यक्तिमात्रविशेषतः ।
न देशकालसामर्थ्यात्पारावर्यं कथञ्चन ॥ ३,३.४ ॥

पूर्वरूपं च पूर्णं च पूर्णं पदवितारगम्? ।
रूपं तदात्मन्यादाय पूर्णमेवावशिष्यते ॥ ३,३.५ ॥

लौकिकव्यवहारोयं भूभारक्षपणादिकः ।
तस्य दृर्ष्टिं विना नान्यो लयः कृष्णादिना क्वचित् ॥ ३,३.६ ॥

तत्त्वे पीडा न कर्तव्या तया दुः खानि विन्दति ।
अत्यन्तपीडनात्तस्य रोगस्तस्य न संशयः ॥ ३,३.७ ॥

ज्ञातव्यांशे तु पीडा तु कर्तव्या गुरुणा सह ।
तमन्तेवासिनं चाहुः स एव चु गुरुः स्मृतः ॥ ३,३.८ ॥

ये कुर्वन्ति हरेस्तत्त्वविचारं तु परस्परम् ।
तावेव गुरुशिष्यौ तु विनतानन्दसंयुत ॥ ३,३.९ ॥

गुरुणापि समं हास्यं कर्तव्यं कुटिलं विना ।
हर्षामर्षयुतः शिष्यो गुरुः कौटिल्यसंयुतः ॥ ३,३.१० ॥

उभौ तौ निरयं यातो यावदाचन्द्रतारकम् ।
साक्षाद्धरिः पुरुषः पिङ्गलाक्षः स्वमायायां गुणमय्यां महात्मा ।
स्वपौरुषेणैव सुमङ्गलेन अधात्तु वीर्यं भगवान्वीर्यवांश्च ॥ ३,३.११ ॥

गरुड उवाच ।
वीर्यस्वरूपं ब्रूहि मे वासुदेव वीर्ये त्वदीये संशयो मे विभाति ।
किं वीर्यमीशस्य स्वरूपभूतं किं वा विभिन्नं वद साधु वेत्सि ॥ ३,३.१२ ॥

श्रीकृष्ण उवाच ।
यद्वीर्यमाधत्त हरिः स्वयं प्रभुर्मायाभिधायां विनतातनूज ।

तद्वीर्यमाहुर्नृहरेः स्वरूपं विपश्चितो निश्चिततत्त्वदर्शिनः ॥ ३,३.१३ ॥

भिन्नं तदाहुः प्राकृतमेव चाहुः स्वनाभिपद्मादिकवच्च बोध्यम् ।
नैतावता ज्ञानरूपस्य विष्णोर्न वीर्यहानिरिति चिन्तनीयम् ॥ ३,३.१४ ॥

वीर्यस्वरूपी भगवान्वा सुदेवः सर्वत्र देशेपि च सर्वकाले ।
सर्वार्थवान्यदि न स्यात्खगेन्द्र तर्हीश्वरः पुरुषो नैव स स्यात् ॥ ३,३.१५ ॥

अचिन्त्यवीर्यैश्चिन्त्यवीर्यैर्द्विरूपः स्त्रीरूपमेकं पुरुषं तथा परम् ।
उभे रूपे वीर्यवती खगेन्द्र तयोरभेदश्चिन्तनीयो हि सम्यक् ॥ ३,३.१६ ॥

स्त्रीरूपवान्यदि न स्यात्खगेंद्रस्त्रीणां कथं प्रतिबिंबत्वमेव ॥ ३,३.१७ ॥

स्त्रीरूपमस्माद्ब्रह्मजं (द्वास्तवं) चिन्तनीयं स्वरूपमेतन्नान्यथा चिन्तनीयम् ।
स्त्रीरूपवन्नैव विचिन्तनीयं नपुंसकं त्वस्य जन्यं हि विद्धि ॥ ३,३.१८ ॥

नपुंसकं नवैव स्वरूपभूतमतो हरौ नास्ति विचिन्तनीयम् ।
स्त्रीबिंबभूते हरिरूपे खगेन्द्र श्रीरूपमस्तीति विचिन्तनीयम् ॥ ३,३.१९ ॥

गरुड उवाच ।
स्त्रिया स्त्रियश्च संयोगं व्यर्थमहुर्मनीषिणः ।
स्त्रीरूपभूते विंबे तु स्त्रीरूपाः सन्ति सर्वदा ॥ ३,३.२० ॥

स्थितौ तत्र निमित्तं च ब्रूहि कृष्ण मम प्रभो ॥ ३,३.२१ ॥

श्रीकृष्ण उवाच ।
स्त्रीबिंबभूतस्त्रीरूपे लक्ष्मीर्न स्यात्खगेश्वर ।
नित्यावियोगिनी देवी कथं स्यात्परमात्मनः ॥ ३,३.२२ ॥

हरेरनन्तरूपाणां स्त्रीरूपाणां खगेश्वर ।
अनन्तानन्तरूपेण नित्यं शुश्रूषणे रता ॥ ३,३.२३ ॥

अतो लक्ष्म्या वियोगस्तु शङ्कनीयः कथञ्चन ।
नारायणो नाम हरिः स्वतन्त्रः श्रिया विना नास्ति कदापि ताक्ष्र्य ।
हरेर्मुकुन्दस्य पदारविन्दे शुश्रूषमाणा परमादरेण ॥ ३,३.२४ ॥

हरिं विना श्रीरपि देशकाले नास्तीति मोक्षेच्छुभिरेव वेद्यम् ।
यस्यामधाद्वीर्यमनुक्षणं च सा मामिका चेन्द्रजाला त्मिकेति ॥ ३,३.२५ ॥

वदन्ति ये असुरा मूढरूपा अधंमतः प्रविशन्त्येव सर्वे ।
माया नाम प्रकृतिस्त्वेमाहुः सुसूक्ष्मरूपा न तु चेन्द्रजालिका ॥ ३,३.२६ ॥

तस्याभिमानः श्रीरिति वेदितव्यो वीर्याधानं तत्र तेषां च मेलः ।
कार्योन्मुखं मेलनं चाहुरार्या इतो रूपं नाहुराय्याश्च विष्णोः ॥ ३,३.२७ ॥

सानादि नित्या सत्यरूपा च विष्णोर्मिथ्या रूपा सा कथं स्यात्खगेन्द्र ।
सत्या तनुः प्रकृतेस्तन्निगूढा सत्यत्वमाहुर्व्यवहारार्थरूपम् ॥ ३,३.२८ ॥

व्यवहाररूपा सत्यता चेत्प्रकृत्यास्तदा कथं स्याद्यदनादिभूता ।
अनादिनित्या यदि न स्यात्खगेन्द्र सुशूक्ष्मरूपेण न कारणं स्यात् ॥ ३,३.२९ ॥

सूक्ष्मेण रूपेण च कारणं स्यात्तर्हि प्रपञ्चस्य च कारणं वद ।
अविद्याया वशतो विष्णुरेव नानारूपैर्दृश्यते विष्णुरेव ॥ ३,३.३० ॥

शास्त्रज्ञानान्नाशमेति ह्यविद्या न संशयो हरिणा चैक्यमेति ।
एवं ब्रूषे यदि वादत्खगेन्द्र वक्ष्येहं ते तत्र युक्तिं शृणु त्वम् ॥ ३,३.३१ ॥

सर्वज्ञरूपस्य हि मे मुरारेः कथं हरेर्घटते ह्यज्ञता च ।
सूर्ये यथा तमो नास्ति तथा नारायणे हरौ ।
अज्ञानं नास्ति पक्षीद्र कथं तत्वं ब्रवीष्यहो ॥ ३,३.३२ ॥

अतो नाहं ब्राह्मणस्त्वादिकालादुपाधिसंबन्धवशादज्ञताचेत् ।
सर्वज्ञोसौ कुत्र पक्षीन्द्र विष्णुरल्पज्ञजीवो ज्ञानशून्यश्च कुत्र ॥ ३,३.३३ ॥

विरुद्धयोश्चानयोः सर्वदैव कथं चैक्यं संवादिष्यन्ति वेदाः ।
देशे काले सर्वदा दुः खहीनो जगत्कर्ता पूर्णशक्तिः सदैव ॥ ३,३.३४ ॥

जीवः सदा स्वल्पकर्तास्ति पूर्णः संसाररूपे दुः खरूपे च नित्यम् ।
विरुद्धयोश्चानयोरैक्यमाहुरीशस्य मायावशतो मायिनश्च ॥ ३,३.३५ ॥

ये वैष्णवा वैष्णवदासवश्यास्तेषां द्रोहं सर्वदा संचरेद्यः ।
हरिप्रीतिस्तेन भवेन्न नित्यमानन्दवृद्धिस्तेन भवेन्न मुक्तौ ॥ ३,३.३६ ॥

मायी सदा मायिभृत्यस्तथापि भेदज्ञानान्निन्द्यते कार्यते च ।
तेनापि तेषां दुः खवृद्धिर्भवेच्च ह्यधं तमः पुनरावृत्तिहीनम् ॥ ३,३.३७ ॥

खगेन्द्रातः प्रकृतिः सूक्ष्मरूपा सा नित्या सा सत्यभूता सदैव ।
एवं स्वयं कालवाय्वादिकानां परा (रमा)णवः सत्यरूपाश्च सन्ति ॥ ३,३.३८ ॥

परा (माणू)नां लक्षणं वेदितव्यं ज्ञानेच्छुभिर्नान्यथा वेदितव्यम् ।
पदार्थानां पार्थिवानां खगेन्द्र विशेषाणां चरमाख्यो विशेषः ॥ ३,३.३९ ॥

स एवः स्यात्परमाणुर्द्विजेन्द्र योन्त्योवि (व) शेषोवयवश्च स स्मृतः ॥ ३,३.४० ॥

गरुड उवाच ।
हे कृष्ण हे माधव सात्त्वतां पते पदार्थानां चरमांशः पराणु ॥ ३,३.४१ ॥

इति प्रोक्तं तत्र मे संशयोस्ति योन्त्यो विशेषः स तु नांशयुक्तः ।
यो ह्यंशयुक्तो न तु सोंत्यो विशेष एवं ममाभाति वचस्तु तथ्यम् ॥ ३,३.४२ ॥

श्रीकृष्ण उवाच ।
य एव लोके संस्थिता मानुषास्तु विशेषाणां दर्शने शक्तियुक्ताः ।
तथापि ते यस्य चांशित्वमेव विशेषं वै नैव द्रष्टुं समर्थाः ॥ ३,३.४३ ॥

तमेवाहुश्चरमांशं विशेषं ये चैवमाहुर्मुनयस्तेन चान्ये ।
ये काणादा गौतमाद्याः खगेन्द्र निरंशकं परमाणुं वदन्ति ॥ ३,३.४४ ॥

अनन्तांशैः संयुतत्वेपि तांश्च निरंशिनो भ्रान्तिदृष्ट्या वदन्ति ।
तस्मात्परा (रमा) णोः परमाणुत्वमस्ति तदंशानां विनतागर्भजात ॥ ३,३.४५ ॥

परा (रमा) णूनामेकदेशे खगेन्द्र तन्नो संति प्राणिनां राशयश्च ।
प्रत्येकश संति रूपा हरेश्च ह्यतश्च तत्परमाणोरणीयः ॥ ३,३.४६ ॥

यो वा त्वणीयान्परमस्य विष्णोः स एव रूपो महतो महीयान् ।
तेषामन्योन्यं न विशेषोस्ति कश्चिदचिन्त्यरूपे च विचिन्तनीयः ॥ ३,३.४७ ॥

कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः ।
देशकोटिविहीनत्वं देशानन्त्यं विदुर्बुधाः ॥ ३,३.४८ ॥

गुणानामप्रमेयत्वे गुणानन्त्यं विदुर्बुधाः ।
आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित् ॥ ३,३.४९ ॥

तस्य सर्वस्वरूपेषु चानन्त्यं तु त्रिलक्षणम् ।
तथापि देशतस्तस्य परिच्छेदोपि युज्यते ॥ ३,३.५० ॥

परिच्छेदस्तथा व्याप्तेरेकरूपेपि युज्यते ।
तस्याचिन्त्याद्भुतैश्वर्यं व्यवहारार्थमेव च ॥ ३,३.५१ ॥

गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् ।
व्याप्तत्वं देशतो ह्यस्ति सर्वभूतेषु यद्यापि ॥ ३,३.५२ ॥

न च भेदः क्वचित्तस्य ह्यणुमात्रेपि युज्यते ।
तथापि विद्यतेणुत्वं तस्मादैश्वर्ययोगतः ॥ ३,३.५३ ॥

तस्माद्विद्ध्यवतारार्थं व्याप्तत्वं चापि भण्यते ।
यत्तस्य व्यापकं रूपं परं नारायणं विदुः ॥ ३,३.५४ ॥

अतश्च परमाणूनां पार्थिवाऽनन्त्यवादिनाम् ।
भेदः परस्परं ज्ञेयस्तथेशस्य महात्मनः ॥ ३,३.५५ ॥

जडेशयोर्जडानां च जीवानां च परस्परम् ।
तथैव जडजीवानां नित्यं भेदो जडेशयोः ॥ ३,३.५६ ॥

पञ्च भेदा इमे नित्यं सर्वावस्थासु सर्वशः ।
एतादृश्यां तु मायायां वीर्यमाधत्त वीर्यवान् ॥ ३,३.५७ ॥

पुरुषाख्यो हरिस्तस्मात्त्रिगुणानसृजत्प्रभुः ॥ ३,३.५८ ॥

इति श्रीगारुडे महापुराणे तृतीयांशे ब्रह्मकाण्डे भगवद्वीर्यस्वरूपतदाधानद्वारकगुणत्रय सृष्टिजडेशभेदादिनिरूपणं नाम तृतीयोऽध्यायः

श्रीगरुडमहापुराणम् ४
श्रीकृष्ण उवाच ।
यथा ससर्ज भगवांस्त्रीन् गुणान्प्रकृतेस्तदा ।
लक्ष्मीस्त्रिरूपा संभूता श्रीर्भूर्दुर्गेति संज्ञिता ॥ ३,४.१ ॥

सत्त्वाभिमानिनी श्रीस्तु भूर्देवी रजमानिनी ।
तमोभिमानिनी दुर्गा हयेवमाहुर्मनीषिणः ॥ ३,४.२ ॥

अन्तरं न विजानीयाद्रूपाणां च परस्परम् ।
गुणानां चैव संबन्धाद्दुर्गादीनां खगेश्वर ॥ ३,४.३ ॥

अन्तरं ये विजानन्ति ते यान्त्यन्धन्तमः परम् ।
पुरुषस्तु त्रिरूपोभूद्विष्णुर्ब्रह्मा भवेतिसः ॥ ३,४.४ ॥

सत्त्वेन लोकान्वर्धयितुं विष्णुः साक्षाद्धरिः स्वयम् ।
सृष्टिं कर्तुं च रजसा ब्रह्मणि प्राविशद्धरिः ॥ ३,४.५ ॥

आद्यो ब्रह्मा स विज्ञेयो न तु साक्षाद्धरिः स्वयम् ।
तमसापि समान्हन्तुं रुद्रे च प्राविशद्धरिः ॥ ३,४.६ ॥

रुद्रे स्थितो रुद्रसंज्ञो न रुद्रस्तु हरिः स्वयम् ।
विष्णुरेव हरिः साक्षात्तावुभौन हरी स्मृतौ ॥ ३,४.७ ॥

आविष्टरूपौ विज्ञेयौ ब्रह्मरुद्राभिधायकौ ।
एवं ज्ञात्वा मोक्षमेति नान्यथा तु कथञ्चन ॥ ३,४.८ ॥

विष्णुब्रह्मादिरूपाणामैक्यं जानन्ति ये द्विजाः ।
ते यान्ति नरकं घोरं पुनरावृत्तिवर्जितम् ॥ ३,४.९ ॥

गुणत्रयं प्रविष्टस्तु पुरुषो हरिरव्ययः ।
कार्योन्मुखं यथा भूयात्क्षोभयामास वै तथा ॥ ३,४.१० ॥

जातक्षोभाद्भगवतो महानासीद्गुणत्रयात् ।
गुणत्रये विद्यमानाद्भागादेव न संशयः ॥ ३,४.११ ॥

महतो ब्रह्मवायू च जज्ञाते खाभिमानिनौ ।
तस्य संवत्सरात्पश्चाद्यमलौ संबभूवतुः ॥ ३,४.१२ ॥

रजः प्रधानं यत्तत्वं महत्तत्तवमितीरितम् ।
सर्गं त्विमं विजानीयाद्गुणवैषम्यनामकम् ॥ ३,४.१३ ॥

गरुड उवाच ।

महत्ततत्तवस्वरूपस्य ज्ञानार्थं देवकीसुत ।
त्वयोक्ता गुणवैषम्यनामिका सृष्टिरुत्तमा ॥ ३,४.१४ ॥

गुणवैषम्यशब्दार्थं मम ब्रूहि महाप्रभो ।
श्रीकृष्ण उवाच ।
गुणवैषम्यशब्दार्थज्ञापनाय खगेश्वर ॥ ३,४.१५ ॥

अपिक्षितं च तत्रादौ गुणसाम्यं न संशयः ।
सम्यग्ज्ञापयितुं तत्र खादौ तावत्स्वगेश्वर ॥ ३,४.१६ ॥

राशिभूतं गुणानां तु दर्शयिष्ये स्थितिं च वै ।
राशीभूतस्य तसमः सकाशाद्विनतासुत ॥ ३,४.१७ ॥

राशीभूतं रजो ज्ञेयन्द्विगुणं तत्तु नान्यथा ।
राशीभूतस्य रजसः सकाशाद्विनतासुत ॥ ३,४.१८ ॥

राशीभूतं तथा सत्त्वं द्विगुणं समुदाहृतम् ।
मूलप्रकृतिजा ह्येते न मूला प्रकृतिः स्मृता ॥ ३,४.१९ ॥

यतः प्रकृतिरूपाणां परिच्छेदो न विद्यते ।
अतः प्रकृतिजा ज्ञेया न मूलास्ते खगेश्वर ॥ ३,४.२० ॥

एवं तव गुणानाञ्च परिमाणं खगेश्वर ।
उक्तं स्वरूपं तेषां तु तव सम्यक्खगेश्वर ॥ ३,४.२१ ॥

तत्र राशित्रये सत्त्वं केवलं समुदाहृतम् ।
रजस्तमोभ्यां गरुड ह्यविमिश्रं ह्यतस्तु तत् ॥ ३,४.२२ ॥

केवलं सत्त्वमित्युक्तं न तु श्रेष्ठत्वतः प्रभो ।
सृष्टिकाले केवलं स्यात्प्रलये मिश्रितं भवेत् ॥ ३,४.२३ ॥

सर्वदाप्यविमिश्रं च सत्त्वराशिं खगेश्वर ।
सर्वदापि विमिश्रं च सत्त्वराशिं द्विजोत्तम ॥ ३,४.२४ ॥

ये विजानन्ति ते सर्वे विशन्ति ह्यधरं तमः ।
रजस्तमोगुणौ वीन्द्र इतराभ्यां विमिश्रितौ ॥ ३,४.२५ ॥

सृष्टौ प्रलयकालेपि मिश्रावेव खगेश्वर ।
राशिभूतेपि रजसि रजोभागाच्छताधिकम् ॥ ३,४.२६ ॥

सत्त्वं च मिश्रितं ज्ञेयं नान्यथा पक्षिसत्तम ।
रजसः शतभागानां मध्ये तु विनतासुत ॥ ३,४.२७ ॥

य एको भाग उद्दिष्टस्तावत्परिमितं तमः ।
राशिभूतेपि रजसि मिश्रितं परिकीर्तितम् ॥ ३,४.२८ ॥

रजोराशिस्थितिस्त्वेवं तात व्याप्तं तमोगुणैः ।
राशिभूतेपि तमसि सत्त्वं च विनतासुत ॥ ३,४.२९ ॥

तमः सकाशाद्गरुड दशभागाधिकेन च ।
मिश्रितं भवतीत्येवं ज्ञातव्यं नात्र संशयः ॥ ३,४.३० ॥

तमसो दशभागानां मध्ये तु विनतासुत ।
य एको भाग उद्दिष्टस्तावत्परिमितं रजः ॥ ३,४.३१ ॥

राशिभूतेपि तमसि मिश्रितं भवति ध्रुवम् ।
तमोराशिस्थितिस्त्वेवं ज्ञातव्या पक्षिसत्तम ॥ ३,४.३२ ॥

गरुड उवाच ।
रशिभूतेपि रजसि राशिभूते तमस्यपि ।
सत्त्वांशा ह्यधिकाः संतीत्येवमुक्तं मयानघ ॥ ३,४.३३ ॥

तत्र मे संशयो ह्यस्ति शृणु त्वं सात्त्वतां पते ।
यद्राश्यां यद्रा शिभागा ह्यधिकाः संति यावता ॥ ३,४.३४ ॥

तावता व्यवहारः स्यात्क्षीरनीरमिव प्रभो ।
श्रुत्वा स गरुडेनोक्तं भगवान्पुरुषोत्तमः ॥ ३,४.३५ ॥

उवाच पर मप्रीत्या संस्तुवन् गरुडं हरिः ।
श्रीकृष्ण उवाच ।
रजोराश्या तमोराश्या सत्त्वराश्यधिका सदा ॥ ३,४.३६ ॥

मिश्रितं चापि पक्षीन्द्र न सत्तवमिति कीर्त्यते ।
रजोराशिस्तमोराशिरित्येवं विबुधा विदुः ॥ ३,४.३७ ॥

विषं तु चरुदुग्धस्थं विषमित्युच्यते यथा ।
एवं मयोक्ता गरुड गुणानां निजसंस्थितिः ॥ ३,४.३८ ॥

साम्यावस्थां गुणानां च शृण्विदानीं खगेश्वर ।
राशीकृताच्च रजसः जन्यं यच्च कगेश्वर ॥ ३,४.३९ ॥

महत्तत्त्वे प्रविष्टं च यद्रजः परिकीर्तितम् ।
प्रलये समनुप्राप्ते महत्तत्त्वे स्थितं रजः ॥ ३,४.४० ॥

द्वादशांशेन तु ह्यद्धा विभक्तं भवतिं प्रभो ।
राशीभूते हि सत्त्वे तु दशभागेन मिश्रितम् ॥ ३,४.४१ ॥

सम्यक्भवति पक्षीन्द्र तथैकांशेन चाण्डज ।
तमोराश्या मिश्रितं च भवत्येव न संशयः ॥ ३,४.४२ ॥

अन्येनैकेन भागेन रजोराश्या खगेश्वर ।
मिश्रितं भवतीत्येवं ज्ञातव्यं नान्यथा क्वचित् ॥ ३,४.४३ ॥

गुणत्रयेपि भगवान्महत्ततत्त्वस्य चाण्डज ।
एवं लयस्तु ज्ञातव्यो हृदि तत्त्वार्थवोदिभिः ॥ ३,४.४४ ॥

एवं गुणत्रयाणां च मिश्रितत्त्वात्खगेश्वर ।
गुणसाम्यमिति प्राहुरेवं जानीहि वै खग ॥ ३,४.४५ ॥

अन्यथा ये विजानन्ति ते यान्ति ह्यधरं तमः ।
गरुड उवाच ।
राशीकृतगुणानां च त्रयाणां परमेश्वर ॥ ३,४.४६ ॥

विशालानां परं ब्रह्मन्प्रलये गुणसाम्यता ।
कथं ब्रूहि महाभाग एतत्ततत्त्वं समासतः ॥ ३,४.४७ ॥

श्रीकृष्ण उवाच ।
राशीभूतगुणानां तु त्रयणामपि सत्तम ।
तदा विमिश्रितत्वेन ह्यवस्थानं विदुर्बुधाः ॥ ३,४.४८ ॥

इदानीं गुणवैषम्यं शृणु सम्यङ्मम प्रिय ।
सृष्टिकाले तु संप्राप्ते यत्पूर्वं प्रलये खग ॥ ३,४.४९ ॥

दशभागैश्च सत्त्वे तु मिश्रितं यद्र जस्तथा ।
तमस्यप्येकभागेन प्रविष्टं यत्तु तद्रजः ॥ ३,४.५० ॥

रजस्यप्येकभागेन प्रविष्टं यच्च तद्रजः ।
एवं द्वादशभागैश्च प्रविष्टं सर्वशो रजः ॥ ३,४.५१ ॥

सत्त्वस्तैर्दशभागैश्च तथैकेन रजोंशिना ।
एवमेकादशैर्भागैस्तमस्थांशेन वै व्दिज ॥ ३,४.५२ ॥

मिश्रितं भवति ह्यद्धा महत्ततत्त्वं तदा स्मृतम् ।
एतदन्यो विशेषश्च मन्तध्यो विनतासुत ॥ ३,४.५३ ॥

एकांशस्तामसो ज्ञेयो महत्ततत्त्वे न संशयः ।

एवं त्रयोदशैर्भागैर्मिश्रितं तच्च सत्तम ॥ ३,४.५४ ॥

एवमेतद्विजानीयान्नान्यथा तु कथञ्चन ।
गरुड उवाच ।
चतुर्मुखाच्छ्रुतं पूर्वं भगवन्सात्त्वतां पते ॥ ३,४.५५ ॥

चतुर्भागात्समुत्पन्नं महत्तत्त्वमिति प्रभो ।
तत्रैकांशस्तमः प्रोक्तः त्रिभागो रज एव च ॥ ३,४.५६ ॥

तदाहुर्ब्रह्मणो रूपं गुणवैषम्यनामकम् ।
चतुर्भागात्मकं प्रोक्तं महत्तत्त्वं श्रुतं मया ॥ ३,४.५७ ॥

त्रयोदशांशैः संभूतमिति प्रोक्तं त्वयानघ ।
तदेतत्संशयं छिन्धि कृपालो भक्तवत्सल ॥ ३,४.५८ ॥

श्रीकृष्ण उवाच ।
ब्रह्मोक्तम्य मयोक्तस्य विवादो नास्ति सर्वथा ।
मूलसत्त्वे मिश्रितं च दशभागेन यद्रजः ॥ ३,४.५९ ॥

तत्सर्वं च मिलित्वैव त्वेको भागस्तु कीर्तितः ।
मूले रजसि यच्चोक्तो रजोभागः खगेश्वर ॥ ३,४.६० ॥

भागे द्वितीये विज्ञेयस्तद्रजो नात्र संशयः ।
मूले तमसि यच्चोक्तो रजोभागस्तथैव च ॥ ३,४.६१ ॥

तृतीयभागो विज्ञेयो नात्र कार्या विचारणा ।
तथा मूले च तमसि ह्येको भागस्तमः स्मृतः ॥ ३,४.६२ ॥

एवं त्रिभागो रजसः एकांशस्तमसः स्मृतः ।
तदाहुर्ब्रह्मणो देहं गुणवैषम्यनामकम् ॥ ३,४.६३ ॥

गरुड उवाच ।
महत्तत्त्वस्य चत्वारो भागास्तेषु रजस्त्रयः ।
तमसस्त्वेक एवेति त्वयोक्तं गरुडध्वज ॥ ३,४.६४ ॥

रजोभागात्मको देहोः ब्रह्मणः परमेष्ठिनः ।
इति प्रतीयते ब्रह्मन्वचनात्तव माधव ॥ ३,४.६५ ॥

शुद्धसत्त्वात्मको देहो ब्रह्मणः परमेष्ठिनः ।
एवं हि श्रूयते कृष्ण संशयो मेत्र बाधते ॥ ३,४.६६ ॥

तमेवं संशयं छिन्धि यद्धि तच्छ्रोतुमर्हति ।

श्रीकृष्ण उवाच ।
त्रिभागभूते रजसि तथा द्वादशधापि च ॥ ३,४.६७ ॥

रजसोपेक्षया सत्त्वं दशांशाधिकमेव च ।
प्रविष्टमस्तीति खग ज्ञातव्यं तच्छ्रणु द्विज ॥ ३,४.६८ ॥

तमसोपेक्षया सत्त्वं दशांशाधिकमेव वै ।
प्रविष्टमस्तीति खग वक्तव्यं नात्र संशयः ॥ ३,४.६९ ॥

तमसोपेक्षया तत्र तम एकादशं स्मृतम् ।
एकांशस्तु रजो ज्ञेयमेवमाहुर्मनीषिणः ।
एवं च मिलितान्भागान्वक्ष्ये शृणु महामते ॥ ३,४.७० ॥

महत्ततत्त्वसमुत्पत्ता उपादानं खगेश्वर ।
त्रयोदशांशा विज्ञेया द्वादशाशं रजः स्मृतम् ॥ ३,४.७१ ॥

एकांशस्तमसो ज्ञेयस्तत्र भागाञ्छृणु द्विजा ।
आदौ तु द्वादशांशेषु भागान्वक्ष्यामि तच्छृणु ॥ ३,४.७२ ॥

एकांशस्तमसो ज्ञेयस्तद्दशां शाधिकं रजः ।
तच्छतांशाधिकं सत्त्वमेवमाहुर्मनीषिणः ॥ ३,४.७३ ॥

एकांशतमसि ह्येवं विभागाञ्छृणु सत्तम ।
एकांशस्तु रजो ज्ञेयस्तमो ह्येका दशाधिकम् ॥ ३,४.७४ ॥

तमोभागास्तु विज्ञेयास्तद्दशांशाधिकः स्मृतः ।
सत्त्वभाग इति ज्ञेयो महत्ततत्त्वे खगेश्वर ॥ ३,४.७५ ॥

सत्त्वांशो बहुलो यस्माच्छुद्धसत्त्वं चतुर्मुखः ।
उत्पत्तिर्महतश्चोक्ता एवं च विनतासुत ॥ ३,४.७६ ॥

तज्ज्ञानान्मोक्षमाप्नोति नान्यथा तु कथञ्चन ॥ ३,४.७७ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे कृष्ण गरुडसंवादे तृतीयांशे ब्रह्मकाण्डे गुणवैषम्यभेदब्रह्मदेहस्वरूपगुणसाम्यनिरूपणं नाम चतुर्थोऽध्यायः

एतादृशे महत्तत्त्वे लक्ष्म्या सह हरिः स्वयम् ।
प्रविवेश महाभाग क्षोभयामास वै हरिः ॥ ३,५.१ ॥

अहन्तत्त्वमभूत्तस्माज्ज्ञानद्रव्यक्रियात्मकम् ।
अहङ्कारसमुत्पत्तावेकांशस्तमसि स्मृतः ॥ ३,५.२ ॥

तद्दशांशाधिकरजस्तद्दशांशाधिकं प्रभो ।
सत्त्वमित्युच्यते सद्भिर्ह्येतदात्मा त्वहं स्मृतम् ॥ ३,५.३ ॥

अहन्तत्त्वाभिमानी तु आदौ शेषो बभूवह ।
सहस्राब्दाच्च पश्चात्तौ जातौ खगहरौ द्विज ॥ ३,५.४ ॥

अहन्तत्त्वे खग ह्येषु प्रविष्टो हरिरव्ययः ।
क्षोभयामास भगवाल्लङ्क्ष्म्या सह हरिः स्वयम् ॥ ३,५.५ ॥

वैकारिकस्तामसश्च तैजसश्चेत्यहं त्रिधा ।
त्रिधा बभूव रुद्रोपि यतस्तेषां नियामकः ॥ ३,५.६ ॥

वैकारिकस्थितो रुद्रो वैकारिक इति स्मृतः ।
तामसे तु स्थितो रुद्रस्तामसो ह्यभिधीयते ॥ ३,५.७ ॥

तैजसे तु स्थितो रुद्रो लोके वै तैजसः स्मृतः ।
तैजसे तु ह्यहन्तत्त्वे लक्ष्म्या सह हरिः स्वयम् ॥ ३,५.८ ॥

विशित्वा क्षोभयामास तदासौ दशधा त्वभूत् ।
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ॥ ३,५.९ ॥

वाक्पाणिपादं पायुश्च उपस्थेति दश स्मृताः ।
वैकारिके ह्यहन्तत्त्वे प्रविश्य क्षोभयद्धरिः ॥ ३,५.१० ॥

महत्तत्त्वादिमा अदाविन्द्रियाणां च देवताः ।
एकादशविधा आसन्क्रमेण तु खगेश्वर ॥ ३,५.११ ॥

मनोभिमानि नी ह्यादौ वारुणी त्वभवत्तदा ।
अनन्तरं च सौपर्णी गौरोजापि तथैव च ॥ ३,५.१२ ॥

शेषादनन्तरास्तासां दशवर्षादनंरम् ।
उत्पत्तिरिति विज्ञेयं क्रमेण तु खगेश्वर ॥ ३,५.१३ ॥

मनोभिमानिनावन्याविन्द्रकामौ प्रजज्ञतुः ।
ताक्ष्र्य ह्यनन्तरौ ज्ञेयौ मुक्तौ संसार एव च ॥ ३,५.१४ ॥

ततस्त्वगात्मा ह्यभवत्सोहं कारिक ईरितः ।
ततः पाण्यात्मकाश्चैव जज्ञिरे पक्षिसत्तम ॥ ३,५.१५ ॥

शची रतिश्चानिरुद्धस्तथा स्वायंभुवो मनुः ।
बृहस्पतिस्तथा दक्ष एते पाण्यात्मकाः स्मृताः ॥ ३,५.१६ ॥

दक्षस्यानन्तरं जज्ञे प्रवाहो नाम चाण्डज ।
स एवोक्तश्चातिंवाहो यापयत्यात्मचोदितः ॥ ३,५.१७ ॥

हस्तादनन्तरं ज्ञेयो न तु शच्यादिवत्स्मृतः ।
ततोभवन्महाभाग चक्षुरिद्रियमात्मनः ॥ ३,५.१८ ॥

स्वायंभुवमनोर्भार्या शतरूपा यमस्तथा ।
चन्द्रसूर्यौ तु चत्त्वारश्चक्षुरिन्द्रियमानिनः ॥ ३,५.१९ ॥

चन्द्रः श्रोत्राभिमानीति तथा ज्ञेयः खगेश्वर ।
जिह्वेन्द्रियात्मा वरुणः सूर्यस्यानन्तरोभवत् ॥ ३,५.२० ॥

वागिन्द्रियाभिमानिन्यो ह्यभवन्वरुणादनु ।
दक्षपत्नी प्रसूतिश्च भृगुरग्निस्तर्थैव च ॥ ३,५.२१ ॥

तत्र वैते महात्मानो वागिन्द्रियनियामकाः ।
ये क्रव्यादादयश्चोक्तास्तेनन्ततत्त्वनियामकाः ॥ ३,५.२२ ॥

साम्यत्वाच्च तथैवोक्तिर्न तु तत्त्वाभिमानितः ।
उपस्थमानिनो वीन्द्र बभूवुस्तदनन्तरम् ॥ ३,५.२३ ॥

विश्वामित्रो वसिष्टोत्रिर्मरीचिः पुलहः क्रतुः ।
पुलस्त्योङ्गिरसश्चैव तथा वैवस्वतो मनुः ॥ ३,५.२४ ॥

मन्वादयोनन्तसंख्या उपस्थात्मान ईरिताः ।
पायोश्च मानिनो वीन्द्र जज्ञिरे तदनन्तरम् ॥ ३,५.२५ ॥

सूर्येषु द्वादशस्वेको मित्रस्तारा गुरोः प्रिया ।
कोणाधिपो निरृतिश्च प्रवहप्रिया ॥ ३,५.२६ ॥

चत्त्वार एते पक्षीन्द्र वायुतत्त्वाभिमानिनः ।
घ्राणाभिमानिनः सर्वे जज्ञिरे द्विजसत्तम ॥ ३,५.२७ ॥

विष्ववसेनो वायुपुत्रौ ह्यश्विनौ गणपस्तथा ।
वित्तपः सप्त वसव उक्तो ह्याग्निस्तथाष्टमः ॥ ३,५.२८ ॥

सत्यानां शृणु नामानि द्रोणः प्राणो ध्रुवस्तथा ।
अर्के दोषस्तथा वस्कः सप्तमस्तु विभावसुः ॥ ३,५.२९ ॥

दशरुद्रास्तथा ज्ञेया मूलरुद्रो भवः स्मृतः ।
दश रुद्रस्य नामानि शृणुष्व द्विजसत्तम ॥ ३,५.३० ॥

रैवन्तेयस्तथा भीमो वामदेवो वृषाकपिः ।
अजैकपादहिर्वुध्न्यो बहुरूपो महानिति ॥ ३,५.३१ ॥

दश रुद्रा इति प्रोक्ताः षडादित्याञ्छृणु द्विज ।
उरुक्रमस्तथा शक्रो विवस्वान्वरुणस्तथा ॥ ३,५.३२ ॥

पर्जन्योतिबाहुरेत उक्ताः पूर्वं द्विजोत्तम ।
पर्जन्यव्यतिरिक्तास्तु पञ्चैवोक्ता न संशयः ॥ ३,५.३३ ॥

गङ्गासमस्तु पर्जन्य इति चोक्तः खगेश्वर ।
सविता ह्यर्यमा धाता पूषा त्वष्टा तथा भगः ॥ ३,५.३४ ॥

चत्वारिंशत्तथा सप्त महतः परिकीर्तिताः ।
द्वावुक्ताविति विज्ञेयो प्रवहोतिवहस्तथा ॥ ३,५.३५ ॥

तथा दशविधा ज्ञेया विश्वेदेवाः खगेश्वर ।
शृणु नामानि तेषां तु पुरूरवार्द्रवसंज्ञकौ ॥ ३,५.३६ ॥

धूरिलोचनसंज्ञौ द्वौ क्रतुदक्षेतिसंज्ञकौ ।
द्वौ सत्यवसुसंज्ञौ च कामकालकसंज्ञकौ ॥ ३,५.३७ ॥

एवं दशविधा ज्ञेया विश्वेदेवाः प्रकीर्तिताः ।
तथा ऋभुगणश्चोक्तस्तथा च पितरस्त्रयः ॥ ३,५.३८ ॥

द्यावा पृथिव्यौ विज्ञेयौ एते च षडशीतयः ।
देवाः प्रजज्ञिरे सर्वे नासिकद्रियमानिनः ॥ ३,५.३९ ॥

आकाशस्याभिमानी तु गणपः सुदाहृतः ।
उभयत्राभि मानीति ज्ञेयं तत्त्वार्थवेदिभिः ॥ ३,५.४० ॥

विष्वक्सेनं विना सर्वे जयाद्या विष्णुपार्षदाः ।
अभवन्समहीनाश्च विष्वक्सेनादनन्तरम् ॥ ३,५.४१ ॥

एतेपि नासिकायाश्च अवान्तरनियामकाः ।
अतस्ते तत्त्वमानिभ्यो ह्यवरास्ते प्रकीर्तिताः ॥ ३,५.४२ ॥

स्पर्शतत्त्वाभिमानी तु अपानश्चेत्युदाहृतः ।
रूपाभिमानी संजज्ञे व्यानो नाम महान्प्रभो ॥ ३,५.४३ ॥

रसात्मक उदानश्च समानो गन्धनामकः ।
अपां नाथाश्च चत्वारो मरुतः परिकीर्तिताः ॥ ३,५.४४ ॥

जयाद्यनन्तरान्वक्ष्ये समुत्पन्नान्खगेश्वर ।
प्रधानाग्रे प्रथमजः पावकः समुदाहृतः ॥ ३,५.४५ ॥

भृगोर्महर्षेः पुत्रश्च च्यवनः समुदाहृतः ।
बृहस्पतेश्च पुत्रस्तु उतथ्यः परिकीर्तितः ॥ ३,५.४६ ॥

रैवतश्चाक्षुषश्चैव तथा स्वारोचिषः स्मृतः ।
उत्तमो ब्रह्मसावर्णी रुद्रसावर्णिरेव च ॥ ३,५.४७ ॥

देवसावर्णिसावर्णिरिन्द्रसावर्णिरेवच ।
तथैव दक्षसावर्णिर्धर्मभावर्णिरेव च ॥ ३,५.४८ ॥

एकादशविधा ह्येवं मनवः परिकीर्तिताः ।
पितॄणां सप्तकं चैवेत्याद्याः संजज्ञिरे खग ॥ ३,५.४९ ॥

तदनन्तरमुत्पन्नास्तेभ्यो नीचाः शृणु द्विज ।
वरुणस्य पत्नी गङ्गा पर्जन्याख्यो विभावसुः ॥ ३,५.५० ॥

यमभार्या श्यामला तु ह्यनिरुद्धप्रिया विराट् ।
ब्रह्माण्डमानिनी सैव ह्युषानाम्ना सुशब्दिता ॥ ३,५.५१ ॥

रोहिणी चन्द्रभार्योक्ता सूर्यभार्या तु संज्ञका ।
एता गङ्गादिषट्संख्या जज्ञिरे विनतासुत ॥ ३,५.५२ ॥

गङ्गाद्यनन्तरं जज्ञे स्वाहा वै मन्त्रदेवता ।
स्वाहानामाग्निभार्योक्ता गङ्गादिभ्योधमा श्रुता ॥ ३,५.५३ ॥

स्वाहानन्तरजो ज्ञेयो ज्ञानात्मा बुधनामकः ।
बुधस्तु चन्द्रपुत्रो यः स्वाहाया अधमः स्मृतः ॥ ३,५.५४ ॥

उषा नाम तथा जज्ञे बुधस्यानन्तरं खग ।
उषानामा भिमानी तु ह्यश्विभार्या प्रकीर्तिता ॥ ३,५.५५ ॥

बुधाधमा सा विज्ञेया नात्र कार्या विचारणा ।
ततः शनैश्चरो जज्ञे पृथिव्यात्मेति विश्रुतः ॥ ३,५.५६ ॥

उषाधमस्तु विज्ञेयस्ततो जज्ञेथ पुष्करः ।
कर्माभिमानी विज्ञेयः शनैश्चर इतीरितः ॥ ३,५.५७ ॥

तत्त्वाभिमानिनो देवानेवं सृष्ट्वा हरिः स्वयम् ।
प्रविवेश स देवेशस्तत्त्वेषु रमया सहा ॥ ३,५.५८ ॥

इति श्रीगारुडे महापुराणे तृतीयांशे ब्रह्मकाण्डे तत्त्वाभिमानि देवतोत्पत्तितत्तारतम्यनिरूपणं नाम पञ्चमोऽध्यायः

श्रीगरुडमहापुराणम् ६

श्रीकृष्ण उवाच ।

तत्रतत्र स्थितास्तत्त्वे तत्तत्तत्त्वाभिमानिनः ।

स्वेस्वे ह्यायतने स्वाङ्गे तदर्थं च खगेश्वर ॥ ३,६.१ ॥

हरिं नारायणं सम्यक्स्तोतुं समुपचक्रिरे ।

चिन्त्याचिन्त्यगुणे विष्णौ विरुद्धाः संति सद्गुणाः ॥ ३,६.२ ॥

एकैकशोह्यनन्तास्ते तद्गुणानां स्तुतौ मम ।

क्व शक्तिरिति बुद्ध्या सा व्रीडयावनताब्रवीत् ॥ ३,६.३ ॥

**श्रीरुवाच ।**

नतास्मि ते नाथ पदारविन्दं न वेद चान्यच्चरणादृते तव ।
त्वयीश्वरे संति गुणाः श्रुतास्तु तथाश्रुताः संति च देवदेव ॥ ३,६.४ ॥
सम्यक्सृष्टं स्वायतनं च दत्वा गोविन्द दामोदर मां च पाहि ।
स्तुत्या मदीयश्च सुखकपूर्णः प्रियो जनो नास्ति तथा त्वदन्यः ॥ ३,६.५ ॥

**ब्रह्मोवाच ।**

लक्ष्मीपते सर्वजगन्निवास त्वं ज्ञानसिंधुः क्व च विश्वमूर्ते ।
अहं क्व चाज्ञस्तव वै शक्तिरस्ति ह्यज्ञोहं वै ह्यल्पशक्तिर्ममास्ति ॥ ३,६.६ ॥
लक्ष्म्याश्चैव ज्ञानवैराग्यभक्ति ह्यत्यल्पमद्धा मयि सर्वदैव ।
तव प्रसादादस्ति जगन्निवास तत्र स्वामित्वं नास्ति विष्णो सदैव ॥ ३,६.७ ॥
न देहि त्वं सर्वदा मे मुरारे अहंममत्वं प्राप्यमेतावदेव ।
गम्यज्ञानं योग्यगुणे रमेश प्रमादो वा नास्तिनास्त्यद्य नित्य ॥ ३,६.८ ॥
तन्मे हृषीकाणि पतन्त्यसत्पथे पदारविन्दे तु पतन्तु सर्वदा ।
लक्ष्म्या ह्यहं कोटिगुणेन हीनः स्तोतुं सामर्थ्यं नास्ति मे सुप्रसीद ॥ ३,६.९ ॥
इति स्तवं विष्णुगुणान्विधाता ताक्ष्यस्थितः प्राञ्जलिस्तस्य चाग्रे ।
तदा वायुर्देवदेवो महात्मा दृष्ट्वा विष्णु भक्तिसंवर्धितात्मा ॥ ३,६.१० ॥
स्नहोत्थरावः स्खलिताक्षरस्तं मुञ्चन्कणान्प्राञ्जलिराबभाषे ।

**वायुरुवाच ।**

एते हि देवास्तव भृत्यभूताः पदारविन्दं परमं सुदुर्लभम् ॥ ३,६.११ ॥
चतुर्विधान्पुरुषार्थान्नमेश संप्रार्थये तच्च सदापि देव ।
दृष्ट्वा हरेः सैव मायैव तावत्सुकारणं किञ्चिदन्यन्न चास्ति ॥ ३,६.१२ ॥
अतो नाहं प्रदयोपि भूमन् भवत्पदांभोजनिषवणोत्सुकः ।
लोकस्य कृष्णाद्विमुखस्य कर्मणा अपुण्यशीलस्य सुदुः खितस्य ॥ ३,६.१३ ॥
अनुग्रहार्थं च तवावतारो नान्यश्च किञ्चित्पुरुषार्थस्तवेश ।
गोभूसुराणां च महीरुहाणां तथा सुराणां प्रवरावतारैः ॥ ३,६.१४ ॥
क्षेमोपकाराणि च वासुदेव क्रीडन्विधत्ते न च किञ्चिदन्यत् ।
मनो न तृप्यत्यपि शंसतां नः सुकर्ममौलेश्चरितामृतानि ॥ ३,६.१५ ॥
अच्छिन्नभक्तस्य हि मे मुकुन्द सदा भक्तिं देहि पादारविन्दे ।
सदा तदेवास्तु न किञ्चिदन्यद्यत्र त्वमासीः पुरुषे देवदेव ॥ ३,६.१६ ॥
अहं च तत्रास्मि तव प्रसादाद्यत्रास्म्यहं तत्र भवान्महाप्रभो ।
व्यंसिर्ममेयं च शरीरमध्ये चतुर्मुखश्चैव न चैततदन्यैः ॥ ३,६.१७ ॥
मदीयनिद्रा तव वन्दनं प्रभो मदीययामाचरणं प्रदक्षिणम् ।

मदीयव्याख्याहरणं स्तुतिः स्यादेवं विदित्वा च समर्पयामि ॥ ३,६.१८ ॥
मद्वृद्धियोग्यं च पदार्थजातं दृष्ट्वा हरेः प्रतिमा एव तच्च ।
इत्थं मत्वाहं सर्वदा देवदेव तत्रस्थितान्हरिरूपान् भजिष्ये ॥ ३,६.१९ ॥
यच्चन्दनं यत्तु पुष्पं च धूपं वस्त्रं च यद्भक्ष्यभोज्यादिकं च ।
एतत्सर्वं विष्णुप्रीत्यर्थमेवेत्येतद्व्रतं सर्वदा वै करिष्ये ॥ ३,६.२० ॥
अवैष्णवान्दूषयिष्ये सदाहं सद्वैष्णवान्पा(ल्लां)लयिष्ये मुरारे ।
विष्णुद्रुहां छेदयिष्ये च जिह्वां तच्छृण्वतां पूरयिष्ये त्रपूल्काः ॥ ३,६.२१ ॥
एतादृशी शक्तिर्ममास्ति देव तव प्रसादाद्बलिनोपि विष्णो ।
अथापि नाहं स्तवने समर्थः लक्ष्म्या ह्यहं कोटिगुणैर्विहीनः ॥ ३,६.२२ ॥
एतत्स्तोत्रं ह्यर्थयेच्चैव या नः तत्र प्रीतिर्ह्यर्थयक्षया मे सदा स्यात् ।
स्तोत्रं ह्येतत्पाठयन्तीह लोके ते वैष्णवास्ते च हरिप्रियाश्च ॥ ३,६.२३ ॥
कुर्वन्ति ये पठनं नित्यमेव समर्पयिष्यति सदा हरौ च ।
तेषां हरिः प्रीयते केशवोलं हरौ प्रसन्ने किमलभ्यमस्ति ॥ ३,६.२४ ॥
एवं स्तुत्वा वलदेवो महात्मा तूष्णीं स्थितः प्राञ्जलिरग्रतो हरेः ।

**सरस्वत्युवाच ।**

को वा रसज्ञो भगवन्मुरारे हरे गुणस्तवनात्कीर्तनाद्वा ॥ ३,६.२५ ॥
अलंबुद्धिं प्राप्नुयाद्देवदेव ब्रह्मादिभिः सर्वदा स्तूयमान ।
यः कर्णनाडीं पुरुषस्य यातो भवप्रदां देहरतिं छिनत्ति ॥ ३,६.२६ ॥
न केवलं देहरतिं छिनत्त्यसद्गृहक्षेत्रभार्यासुतेषु नित्यम् ।
पश्वादिरूपेषु धनादिकेषु अनर्घ्यरत्नेषु प्रियं छिनत्ति ॥ ३,६.२७ ॥
अनंतवेदप्रतिपादितोपि लक्ष्मीर्न वै वेद तव स्वरूपम् ।
चतुर्मुखो नैव वेद न वायुरसौ न वेत्तीति किमत्र चित्रम् ॥ ३,६.२८ ॥
एतादृशस्य स्तवने क्वास्ति शक्तिर्मम प्रभो ब्रह्मवाय्वोः सकाशात् ।
शतैर्गुणैः सर्वदा न्यूनतास्ति अतो हरे दयया मां च पाहि ॥ ३,६.२९ ॥
एवं स्तुत्वा हरिं सा तु तूष्णीमास खगेश्वर ।
भारती तु तदा स्तोतुं हरिं समुपचक्रमे ॥ ३,६.३० ॥

**भारत्युवाच ।**

ब्रह्मेश लक्ष्मीश हरे मुरारे गुणांस्तव श्रद्दधानस्य नित्यम् ।
तथा स्तुवन्तोस्य विवर्धमानां मतिं च नित्यं विषयेष्वसत्सु ॥ ३,६.३१ ॥
कुर्वन्ति वैराग्यममुत्र लोके ततः परं भक्तिदृढां तथैव ।
ततः परं चैव हरेः प्रसन्नतां कुर्वन्ति नित्यं तव देवदेव ॥ ३,६.३२ ॥
तेनापरोक्षं च भवेच्च तस्य अतो गुणानां स्तवने च मे रतिः ।
सा तु प्रजाता पुरुषस्य नित्यं संसारदुःखं तु तदाच्छिनत्ति ॥ ३,६.३३ ॥
विच्छिन्नदुःखस्य तदाधिकारिण आनन्दरूपाख्यफलं ददाति ।
हरेर्गुणानस्तुवतां च पापं तेषां हि पुण्यं च तथा क्षिणोति ॥ ३,६.३४ ॥
एवं विदित्वा परमो गुरुर्मम वायुर्दयालुर्मम वल्लभश्च ।
हरेर्गुणान्सर्वगुणप्रसारान्ममैव योग्यान्सुखमुख्यभूतान् ॥ ३,६.३५ ॥
उद्धृत्य पुण्येभ्य इवार्तबन्धुः शिवश्च नो द्रुह्यति पुण्यकीर्तिम् ।
तव प्रसादाच्च श्रियः प्रसादाद्वायोः प्रसादाच्च ममास्ति नित्यम् ॥ ३,६.३६ ॥
यद्यत्करोत्येव सदैव वायुस्तत्तत्करोत्येव सदैव नित्यम् ।
वायोर्विरोधं न करोति देवः स तद्विरोधं च करोति नित्यम् ॥ ३,६.३७ ॥
हरेर्विरोधं न करोति वायुर्वायोर्विरोधं न करोति विष्णुः ।
वायोः प्रसादान्मम नास्ति किञ्चिदतानभावश्च तव प्रसादात् ॥ ३,६.३८ ॥
यथैव मूलं च तथावतारे दुःखादिकं नास्ति समीरणस्य ।
वायुस्तथान्ये च उभौ मुकुन्दस्तथावतारेषु न दुःखरूपौ ॥ ३,६.३९ ॥
अशक्तवद्दृश्यते वायुदेवः युगानुसाराल्लोकधर्मांस्तु रक्षन् ।
नरावतारे तत्र देवे मुरारे ह्यशक्तता नेति विचिंतनीयम् ॥ ३,६.४० ॥
अवताररूपे यमदुःखादिकं च न चिन्तनीयं ज्ञानिभिर्देवदेव ।
अहं कदाचित्सुखनाशप्रदेशे दैत्यांस्तथा मारयितुं गतोस्मि ॥ ३,६.४१ ॥
नैतावता मम वायोश्च नित्यं दुः खातनं नैव संचिंतनीयम् ।

एतादृशोहं स्तवनेनु कास्ति शक्तिर्गुणानां मधुसूदन प्रभो ।
वायोः सकाशाच्च गुणेन हीना संसाररूपे मुक्तरूपे च देव ॥ ३,६.४२ ॥
एवं स्तुत्वा भारती तु तूष्णीमास खगेश्वर ।
तदनन्तरजः शेषः प्राञ्जलिः प्राह केशवम् ॥ ३,६.४३ ॥

**शेष उवाच ।**

नाहं च जाने तव पादमूलं रुद्रो न वेत्ति गरुडो न वेद ।
अहं वाण्याः शतगुणांशहीनो दत्त्वा ह्यायतनं पाहि मां वासुदेव ॥ ३,६.४४ ॥
एवं स्तुत्वा सशेषस्तु तूष्णीमास खगेश्वर ।
तदनन्तरजो वीशः स्तोतुं समुपचक्रमे ॥ ३,६.४५ ॥

**गरुड उवाच ।**

तव पदोः स्तुतिं किं करोम्यहं मम पदांबुजे ह्यर्पितं मनः ।
कथमहं मुखे पक्षियोनिजः कथमेवङ्गुणानीडितुं क्षमः ॥ ३,६.४६ ॥
एवं स्तुत्वा तु गरुडस्तूष्णीमास नयान्वितः ।
तदनन्तरजो रुद्रस्तोतु समुपचक्रमे ॥ ३,६.४७ ॥

**रुद्र उवाच ।**

या वै तवेश भगवन्न विदाम भूमन् भक्तिर्ममास्तु शिवपादसरोजमूले ।
छन्नापि सा ननु सदा न ममास्ति देव तेनाद्रहं तव विरुद्धमतः करोमि ॥ ३,६.४८ ॥
सर्वान्न बुद्धिसहितस्य हरे मुरारे का शक्तिरस्ति वचने मम मूढबुद्धेः ।
वाण्या सदा शतगुणेन विहीनमेनं मां पाहि चेश मम चायतनं च दत्त्वा ॥ ३,६.४९ ॥
एवं स्तुत्वा स रुद्रस्तु तूष्णीमास द्विजोत्तमः ।
शेषानन्तरजा देवी वारुणी वाक्यमब्रवीत् ॥ ३,६.५० ॥

**वारुण्युवाच ।**

लक्ष्मीपते ब्रह्मपते मनोः पते गिरःपते रुद्रपते नृणां पते ।
गुणांस्तव स्तोतुमहं समर्था न पार्वती नापि सुपर्णपत्नी ॥ ३,६.५१ ॥
शेषादहं दशगुणैर्विहीना मां पाहि नित्यं जगतामधीश ॥ ३,६.५२ ॥
एवं स्तुत्वा वारुणी तु तूष्णीमास खगेश्वर ।
तदनन्तरजा ब्राह्मी सौपर्णी ह्युपचक्रमे ॥ ३,६.५३ ॥

**सौपर्ण्युवाच ।**

स्तोतुं गुणांस्तव हरे जगदीशवाचा श्रोतुं हरे तव कथां श्रवणे न शक्तिः ।
यस्तत्त्वनुं स्मरति देव तव स्वरूपं को वै नु वेद भुवि तं भगवत्पदार्थम् ॥ ३,६.५४ ॥
अतो गुणस्तवने नास्ति शक्तिर्वीन्द्रादहं दशगुणैरवरा च नित्यम् ॥ ३,६.५५ ॥
एवं स्तुत्वा तु सौपर्णी तूष्णीमास खगेश्वर ।
रुद्रानन्तरजा स्तोतुं गिरिजा तूपचक्रमे ॥ ३,६.५६ ॥

**पार्वत्युवाच**

गोविन्द नारायण वासुदेव त्वया हि मे किञ्चिदपि प्रयोजनम् ।
नास्त्येव स्वामिन्न च नाम वाचा सौभाग्यरूपः सर्वदा एक एव ॥ ३,६.५७ ॥
नारायणेति तव नाम च एकमेव वैराग्यभक्तिविभवे परमं समर्थाम् ।
असंख्यब्रह्मादिकहत्यनाशाने गुर्वङ्गनाकोटिविनाशने च ॥ ३,६.५८ ॥
नामाधिकारिणी चाहं गुणानां च महाप्रभो ।
स्तवने नास्ति मे शक्ती रुद्राद्दशगुणैरहम् ॥ ३,६.५९ ॥
अवरा च सदास्म्येव नात्र कार्या विचारणा ।

एवं स्तुत्वा सा गिरिजास्तूष्णीमास खगेश्वर ॥ ३,६.६० ॥
इति श्रीगारुडे महापुराणे श्रीकृष्णगरुडसंवादे उत्तर तृतीयांशे ब्रह्मकाण्डे तत्त्वाभिमानितत्तद्देवताकृतविष्णुस्तुतितत्तद्देवतातारतम्यनिरूपणं नाम षष्ठोऽध्यायः

श्रीगरुडमहापुराणम् ७
श्रीकृष्ण उवाच ।
पार्वत्यानन्तरोत्पन्न इन्द्रो वचनमब्रवीत् ।
इन्द्र उवाच ।
तव स्वरूपं हृदि संविजानन् समुत्सुकः स्यात्स्तवने यस्तु मूढः ।
अजानतः स्तवनं देवदेव तदेवाहुर्हेलनं चक्रपाणे ॥ ३,७.१ ॥

तथापि तद्वै तव नाम पूर्वं भवेत्तदा पुण्यकरं भवेदिति ।
रुद्रादिकानां स्तवने नास्ति शक्तिस्तदा वक्तव्यं मम नास्तीति किं वा ॥ ३,७.२ ॥

गुणांशतो दशभी रुद्रतो वै सदा न्यूनो मत्समः कामदेवः ।
ज्ञाने बले समता सर्वदास्ति तथाः कामः किं च दूतः सदैव ॥ ३,७.३ ॥

एवं स्तुत्वा देवदेवो हरिं च तूष्णीं स्थितः प्राञ्जलिर्नम्रभूर्धा ।
तदनन्तरजो ब्रह्मा अहङ्कारिक ऊचिवान् ॥ ३,७.४ ॥

अहङ्कारिक उवाच ।
नमस्ते गणपूर्णाय नमस्ते ज्ञानमूर्तये ।
नमोऽज्ञानविदूराय ब्रह्मणेनंतमूर्तये ॥ ३,७.५ ॥

इन्द्रादहं दशगुणैः सर्वदा न्यून उक्तो न जनि त्वां सर्वदा ह्यप्रमेय ।
तथापि मां पाहि जगद्गुरो त्वं दत्त्वा दिव्यं ह्यायतनं च विष्णो ॥ ३,७.६ ॥

आहङ्कारिक एवं तु स्तुत्वा तूष्णीं बभूव ह ।
तदनन्तरजा स्तोतुं शची वचनमब्रवीत् ॥ ३,७.७ ॥

शच्युवाच ।
संचिन्तयामि अनिशं तव पादपद्मं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् ।
वागीश्वरैरपि सदा मनसापि धर्तुं नो शक्यमीश तव पादरजः स्मरामि ॥ ३,७.८ ॥

आहङ्कारिकप्राणाच्च गुणैश्च दशभिः सदा ।
न्यूनभूतां च मां पाहि कृपालो भक्तवत्सल ॥ ३,७.९ ॥

एवं स्तुत्वा शची देवी तूष्णीं भगवती ह्यभूत् ।
तदनन्तरजा स्तोतुं रतिः समुपचक्रमे ॥ ३,७.१० ॥

रतिरुवाच ।
संचिन्तयामि नृहरेर्वदनारविन्दं भृत्यानुकंपितधिया हि गृहीतमूर्तिम् ।
यच्छ्रीनिकेतमजरुद्ररमादिकैश्च संलालितं कुटिलङ्कुन्तलवृन्दजुष्टम् ॥ ३,७.११ ॥

एतादृशं तव मुखं नुवितुं न शक्तिः शच्या समापि भगवन्परिपाहि नित्यम् ।

कृत्वा स्तुतिं रतिरियं परमादरेण तूष्णीं स्थिता भगवतश्च समीप एव ॥ ३,७.१२ ॥

रत्यनन्तरजो दक्षः स्तोतुं समुपचक्रमे ॥ ३,७.१३ ॥

दक्ष उवाच ।
संचिन्तये भगवतश्चरणोदतीर्थं भक्त्या ह्यजेन परिषिक्तमजादिवन्द्यम् ।
यच्छौचनिःसृतमजप्रवरावतारं गङ्गाख्यतीर्थमभवत्सरितां वरिष्ठम् ॥ ३,७.१४ ॥

रुद्रोपि तेन विधृतेन जटाकलापपूतेन पादरजसा ह्यशिवः शिवोभूत् ।
एतादृशं ते चरणं करुणेश विष्णो स्तोतुं शक्तिर्मम नास्ति कृपावतार ।
रत्या समः श्रुतिगतो न गतोस्मि मोक्षमेतादृशं च परिपाहि निदानमूर्ते ॥ ३,७.१५ ॥

एवं स्तुत्वा स दक्षस्तु तूष्णीमेव बभूव ह ।
तदनन्तरजः स्तोतुं बृहस्पतिरुपाक्रमीत् ॥ ३,७.१६ ॥

बृहस्पतिरुवाच ।
संचिन्तयामि सततं तव चाननाब्जं त्वं देहि दुष्टविषयेषु विरक्तिमीश ॥ ३,७.१७ ॥

एतेषु शक्तिर्यदि वै स जीवो कर्ता च भोक्ता च सदा च दाता ।
योषां च पुत्रसुहृदौ च पशूंश्च सर्वमेवं विनश्यति यतो हि तदाशु छिन्धि ॥ ३,७.१८ ॥

संसारचक्रभ्रमणेनैव देव संसारदुःखमनुभूयेहागतोस्मि ।
शक्तिर्न चास्ति नवने मम देवदेव सत्या समं च सततं परिपाहि नित्यम् ॥ ३,७.१९ ॥

एवं श्रुत्वा च परमं तूष्णीमेव स्थितो मुनिः ।
तदनन्तरजस्तोतुं ह्यनिरुद्धोपचक्रमे ॥ ३,७.२० ॥

अनिरुद्ध उवाच ।
एवं हरेस्तव कथां रसिकां विहाय स्त्रीणां भगे च वदने परिमुह्य नित्यम् ।
विष्ठान्त्रपूरितबिले रसिको हि नित्यं स्थायी च सूकरवदेव विमूढबुद्धिः ॥ ३,७.२१ ॥

मज्जास्थिपित्तकफरक्तमलादिपूर्णे चर्मान्त्रवेष्टितमुखे पतितं ह पीतम् ।
आस्वादने मम च पापगतेर्मुरारे मायाबलं तव विभो परमं निमित्तम् ॥ ३,७.२२ ॥

संसारचक्रे भ्रमतश्च नित्यं सुदुःखरूपे सुखलेशवर्जिते ।
मलं वमन्तं नवभिश्च द्वारैः शरीरमारुह्य सुमूढबुद्धिः ॥ ३,७.२३ ॥

नमामि नित्यं तव तत्कथामृतं विहाय देव श्रुतिमूलनाशनम् ।
कुटुंबपोषं च सदा च कुर्वन्दानाद्यकुर्वन्निवसन् गृहे च ॥ ३,७.२४ ॥

दूरे च संसारमलं त्विदं कुरु देहि ह्यदो दिव्यकथामृतं सदा ।
एतादृशोहं तव सद्गुणौघं स्तोतुं समर्थो नास्मि शचीसमश्च ॥ ३,७.२५ ॥

एवं स्तुत्वानिरुद्धस्तु तूष्णीमास खगेश्वर ।
तदनन्तरजः स्तोत्रं मनः स्वायंभुवोब्रवीत् ॥ ३,७.२६ ॥

स्वायंभुव उवाच ।
स्तोतुं ह्यनुप्रविशतोपि न गर्भदुःखं तस्मादहं परमपूज्यपदं गतस्ते ॥ ३,७.२७ ॥

मनोर्भार्या मानवी च यमः संयमिनीपतिः ।
दिशाभिमानी चन्द्रस्तु सूर्यश्चक्षुर्नियामकः ।
परस्परसमा ह्येते मुक्त्वा संसारमेव च ॥ ३,७.२८ ॥

प्रवाहाद्विगुणोनश्चेत्येवं जानीहि चाण्डज ।
सूर्यानन्तरजः स्तोतुं वरुणः संप्रचक्रमे ॥ ३,७.२९ ॥

वरुण उवाच ।
त्वद्विच्छया रचिते देहगेहे पुत्रे कलत्रेपि धने द्रव्यजातौ ।
ममाहमित्यल्पधिया च मूढा संसारदुःखे विनिमज्जन्ति सर्वे ॥ ३,७.३० ॥

अतो हरे तादृशीं मे कुबुद्धिं विनाश्य मे देहि ते पाददास्यम् ।
अहं मनोः पादपादार्धभूतगुणेन हीनः सर्वदा वै मुरारे ॥ ३,७.३१ ॥

एवं स्तुत्वा तु वरुणः प्राञ्जलिः समुपस्थितः ।
वरुणानन्तरोत्पन्नो नारदो ह्यस्तुवद्धरिम् ॥ ३,७.३२ ॥

नारद उवाच ।
यन्नामधेयश्रवणानुकीर्तनात्स्वाद्वन्यतत्त्वं मम नास्ति विष्णो ।
पुनीह्यतश्चैव परोवरायान्यज्जिह्वाग्रे वर्तते नाम तस्य ॥ ३,७.३३ ॥

यज्जिह्वाग्रे हरिनामैव नास्ति स ब्राह्मणो नैव स एव गोखरः ।
अहं न जाने च तव स्वरूपं न्यूनो ह्यहं वरुणात्सर्वदैव ॥ ३,७.३४ ॥

एवं स्तुत्वा नारदो वै खगेन्द्रस्तूष्णीमभूद्देवदेवस्य चाग्रे ।
यो नारदानन्तरं संबभूव भृगुर्महात्मा स्तोतुमुपप्रचक्रमे ॥ ३,७.३५ ॥

भृगुरुवाच ।
किमासनं ते गरुडासनाय किं भूषणं कौस्तुभभूषणाय ।
लक्ष्मीकलत्राय किमस्ति देयं वागीश किं ते वचनीयमस्ति ।
अतो न जाने तव सद्गुणांश्च ह्यहं सदा वरुणात्पादहीनः ॥ ३,७.३६ ॥

एवं स्तुत्वा हरिं देवं भृगुस्तूष्णीं बभूव ह ।
तदनन्तरजो ह्यग्निरस्तावीत्पुरुषोत्तमम् ॥ ३,७.३७ ॥

अग्निरुवाच ।
यत्तेजसाहं सुसमिद्धतेजा हव्यं वहाम्यध्वरे आज्यसिक्तम् ॥ ३,७.३८ ॥

यत्तेजसाहं जठरे संप्रविश्य पचन्नन्नं सर्वदा पूर्णशक्तिः ।
अतो न जाने तव सद्गुणांश्च भृगोरहं सर्वदैवं समोस्मि ॥ ३,७.३९ ॥

तदनन्तरजा स्तोतुं प्रसूतिरुपचक्रमे ॥ ३,७.४० ॥

प्रसूतिरुवाच ।
यन्नामार्थविचारणेपि मुनयो मुह्यंति वै सर्वदा त्वद्भीता अपि देवता ह्यविरतं स्त्रीभिः सहैव स्थिताः ।
मान्धातृध्रुवनारदाश्च भृगवो वैवस्वताद्याखिलाः प्रेम्णा वै प्रणमाम्यहं हितकृते तस्मै नमो विष्णवे ॥ ३,७.४१ ॥

अतो न जाने तव सद्गुणान्सदा एवं विधा का मम शक्तिरस्ति ।
स्तुत्वा ह्येवं प्रसूतिस्तु तूष्णीमासीत्खगेश्वर ॥ ३,७.४२ ॥

अग्निर्वागात्मको ब्रह्मपुत्रो भृगु ऋषिस्तथा ।
तद्भार्या वै प्रसूतिस्तु त्रय एते समाः स्मृताः ॥ ३,७.४३ ॥

वरुणात्पादहीनाश्च प्रवहाद्विगुणाधमाः ।
दक्षाच्छतावरा ज्ञेया मित्रात्तु द्विगुणाधिकाः ॥ ३,७.४४ ॥

प्रसूत्यनन्तरं जातो वसिष्ठो ब्रह्मनन्दनः ।
विनयावनतो भूत्वा स्तोतुं समुपचक्रमे ॥ ३,७.४५ ॥

वसिष्ठ उवाच ।
नमोस्तु तस्मै पुरुषाय वेधसे नमोनमोऽसद्वृजिनच्छिदे नमः ।
नमोनमो स्वाङ्गभवाय नित्यं नतोस्मि हे नाथ तवाङ्घ्रिपङ्कजम् ॥ ३,७.४६ ॥

मां पाहि नित्यं भगवन्वासुदेव ह्यग्नेरहं सर्वदा न्यून एव ।
मित्रादहं सर्वदा किञ्चिदूनः स्तुत्वा देव सोभवत्तत्र तूष्णीम् ॥ ३,७.४७ ॥

यो वसिष्ठानन्तरजो मरीचिर्ब्रह्मनन्दनः ।
हरिन्तुष्टाव परया भक्त्या नारायणं गुरुम् ॥ ३,७.४८ ॥

मरीचिरुवाच ।
देवेन चाहं हतधीर्भवनप्रसङ्गात्सर्वाशुभोपगमनाद्विमुखेंद्रियश्च ।
कुर्वे च नित्यं सुखलेशलवादिना त्वद्दूरं मनस्त्वशुभकर्म समाचरिष्ये ॥ ३,७.४९ ॥

एतादृशोहं भगवाननन्तः सदा वसिष्ठस्य समान एव ॥ ३,७.५० ॥

एवं स्तुत्वा मरीचिस्तु तूष्णीमास तदा खग ।
तदतन्तरजोह्यत्रिरस्तावीत्प्राञ्जलिर्हरिम् ॥ ३,७.५१ ॥

आविर्भवज्जगत्प्रभवायावतीर्णं तद्रक्षणार्थमनवद्यञ्च तथाव्ययाय ।
तत्त्वार्थमूलमविकारि तव स्वरूपं ह्यानन्दसारमत एव विकारशून्यम् ॥ ३,७.५२ ॥

त्रैगुण्यशून्यमखिलेषु च संविभक्तं तत्र प्रविश्य भगवन्न हि पश्यतीव ।
अतो मुरारेस्तव सद्गुणांश्च स्तोतुं न शक्नोमि मरीचितुल्यः ॥ ३,७.५३ ॥

एवं स्तुत्वा ह्यत्रिरपितूष्णीमास तदा खग ।
तदनन्तरजः स्तोतुमङ्गिरा वाक्यमब्रवीत् ॥ ३,७.५४ ॥

अङ्गिरा उवाच ।
द्रष्टुं न शक्नोमि तव स्वरूपं ह्यनन्तबाहूदरमस्तकं च ।
अनन्तसाहस्रकिरीटजुष्टं महार्हनानाभरणैश्च शोभितम् ।
एतादृशं रूपमनन्तपारं स्तोतुं ह्यशक्तस्तु समोस्मि चात्रेः ॥ ३,७.५५ ॥

एवं स्तुत्वा ह्यङ्गिराश्च तूष्णीमास खगेश्वर ।
तदनन्तरजः स्तोतुं पुलस्त्यो वाक्यमब्रवीत् ॥ ३,७.५६ ॥

पुलस्त्य उवाच ।
यो वा हरिस्तु भगवान्स (स्व) उपासकानां संदर्शयेद्भुवनमङ्गलमङ्गलं च ।
(लश्च) यस्मै नमो भगवते पुरुषाय तुभ्यं यो वाविता निरयभागगमप्रसङ्गे ॥ ३,७.५७ ॥

एतादृशांस्तव गुणान्नवितुं न शक्तं मां पाहि भगवन्सदृशो ह्यङ्गिरसा च ॥ ३,७.५८ ॥

एवं स्तुत्वा पुलस्त्योपि स्तूष्णीमेव बभूव ह ।
तदनन्तरजः स्तोतुं पुलहो वाक्यमब्रवीत् ॥ ३,७.५९ ॥

पुलह उवाच ।
निष्कामरूपरिहितस्य समर्पितं च स्नानावरोत्तमपयः फलपुष्पभोज्यम् ।
आराधनं भगवतस्तव सत्क्रियाश्च व्यर्थं भवेदिति वदन्ति महानुभावाः ॥ ३,७.६० ॥

तस्मै सदा भगवते प्रणमामि नित्यं निष्कामया तव समर्पणमात्रबुद्ध्या ।
वैकुण्ठनाथ भगवन्स्तवने न शक्तिः सोहं पुलस्त्यसदृशोस्मि न संशयोत्र ॥ ३,७.६१ ॥

एवं स्तुत्वा तु पुलहस्तूष्णीमास तदा खग ।
तदनन्तरजः स्तोतुं क्रतुः समुपचक्रमे ॥ ३,७.६२ ॥

क्रतुरुवाच ।
प्राणप्रयाणसमये भगवंस्तवैव नामानि संसृतिजदुःखविनाशकानि ।
येनैकजन्मशमलं सहसैव हित्वा संयाति मुक्तिममलां तमहं प्रपद्ये ॥ ३,७.६३ ॥

ये भक्त्या विवशा विष्णो नाममात्रैकजल्पकाः ।

तेपि मुक्तिं प्रयान्त्याशु किमुत ध्यायिनः सदा ॥ ३,७.६४ ॥

एवं स्तुत्वा क्रतुरपि तूष्णीमास खगेश्वर ।
तदनन्तरजः स्तोतुं मनुर्वैवस्वतोब्रवीत् ॥ ३,७.६५ ॥

वैवस्वत उवाच ।
सोहं हि कर्मकरणे निरतः सदैव स्त्रीणां भोगे च निरतश्च गुदे प्रमत्तः ।
जिह्वेन्द्रिये च निरतस्तव दर्शने च सम्यग्विरागसहितः परमोदरेण ॥ ३,७.६६ ॥

मांसास्थिमज्जरुधिरैः सहिते च देहे भक्तिं सदैव भगवन्नपि तस्करे च ।
गुर्वग्निबाडबगवादिषु सत्सु दुःखात्सम्यग्विरक्तिमुपयामि सहस्व नित्यम् ॥ ३,७.६७ ॥

लोकानुवादश्रवणे परमा च शक्तिर्नारायणस्य नमने न च मेस्ति शक्तिः ।
लोकानुयानकरणे परमा च शक्तिः क्षेत्रादिमार्गगमने परमा ह्यशक्तिः ॥ ३,७.६८ ॥

वैश्यादिकेषु धनिकेषु परा च शक्तिः सद्ब्राह्मणेष्वपि न शक्तिरहो मुरारे ॥ ३,७.६९ ॥

वैवस्वतमनुर्देवं स्तुत्वा तूष्णीं बभूव ह ।
तदनन्तरजः स्तोतुं विश्वामित्रोपचक्रमे ॥ ३,७.७० ॥

विश्वामित्र उवाच ।
न ध्याते चरणांबुजे भगवतो संध्यापि नानुष्ठिता ज्ञानद्वारकपाटपाटनपटुर्धर्मोपि नोपार्जितः ।
अन्तर्व्याप्तमलाभिघातकरणे पट्वी श्रुता ते कथा नो देव श्रवणेन पाहि भगवन्मामत्रितुल्यं सदा ॥ ३,७.७१ ॥

विश्वामित्रऋषिस्त्वेवं स्तुत्वा तूष्णीं बभूव ह ।
भृगुनारदक्षांश्च विहाय ब्रह्मपुत्रकाः ॥ ३,७.७२ ॥

सप्तसंख्या वसिष्ठाद्या विश्वामित्रस्तथैव च ।
वैवस्वतमनुस्त्वेते परस्परसमाः स्मृताः ॥ ३,७.७३ ॥

वह्नेरप्यवरा नित्यं किञ्चिन्मित्राद्गुणाधिकाः ।
तदनन्तजस्तोत्रं वक्ष्ये शृणु खगेश्वर ॥ ३,७.७४ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे कृष्णगरुडसंवादे देवादिस्तुतितत्तत्तारतम्यनिरूपणं नाम सप्तमोऽध्यायः

श्रीगरुडमहापुराणम् ८
क्रतोरनन्तरं जातो मित्रो (श्रो) नाम खगेश्वर ।
नारायणं जगद्योनिं स्तोतुं समुपचक्रमे ॥ ३,८.१ ॥

मित्र उवाच ।
नतोस्म्यज्ञस्त्वच्चरणारविन्दं भवच्छिदं स्वस्त्ययनं भवच्छिदे ।
वेद स्वयं भगवान्वासुदेवो नाहं नाग्निर्न त्रिदेवा मुनीन्द्राः ॥ ३,८.२ ॥

अथापरे भागवतप्रधाना यदा न जानीयुरथापरे कुतः ।
मां पाहि नित्यं परतोप्यधीश विश्वामित्रान्न्यून एवेति नित्यम् ।
अहं पर्जन्यार्द्विगुण एव नित्यमतो मम स्तवने नास्ति शक्तिः ॥ ३,८.३ ॥

एवं स्तुत्वा हरिं मित्रस्तूष्णीमास तदा खग ।
तदनन्तरजा तारा स्तोतुं समुपचक्रमे ॥ ३,८.४ ॥

तारोवाच
अनन्येन तु भावेन भक्तिं कुर्वन्ति ये दृढाम् ।
त्वत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ ३,८.५ ॥

त्वदाश्रयां कथां श्रुत्वा (दृष्ट्वा) शृण्वन्ति कथयन्ति च ।
तथैते साधवो विष्णो सर्वसंगविवर्जिताः ॥ ३,८.६ ॥

तन्मध्ये पतितां पाहि सदा मित्रसमां प्रभो ।
तारानन्तरजः प्राह निरृतिश्च खगेश्वर ॥ ३,८.७ ॥

निरृतिरुवाच ।
योगेन त्वय्यर्पितया च भक्त्या संयान्ति लोकाः परमां गतिं च ।
आसेवया सर्वगुणाधिकानां ज्ञानेन वैराग्ययुतेनदवे ॥ ३,८.८ ॥

चित्तस्य निग्रहेणैव विष्णोर्यान्ति परं पदम् ।
अतो मां पाहि दयया सदा तारासमं प्रभो ।
तदनन्तरजा स्तोतुं प्रावही तं प्रचक्रमे ॥ ३,८.९ ॥

प्रवाह्युवाच ।
सुताः प्रसंगेन भवन्ति वीर्यात्तव प्रसादात्परमाः सम्पदश्च ।
या ह्युत्तमश्लोकरसायनाः कथास्तत्सेवनादास्त्वपवर्गवर्त्मनि ॥ ३,८.१० ॥

भक्तिर्भवेत्सर्वदा देवदेव सदाप्यहं निरृतेः साम्यमेव ।
सहर्भाष्यकोमित्रः त्कयीतारः प्रकीर्तिताः ॥ ३,८.११ ॥

कोणाधिपो निरृतिश्च प्रावही प्रवहप्रिया ।

चत्वार एते पर्जन्यात्त्रिगुणाः परिकीर्तिताः ॥ ३,८.१२ ॥

तदनन्तरजान्वक्ष्ये ताञ्छृणु त्वं खगेश्वर ।
प्रवाहभार्यानन्तरजो विष्वक्सेनोथपार्षदः ।
वायुपुत्रो महाभागः हरिं स्तोतुं प्रचक्रमे ॥ ३,८.१३ ॥

विष्वक्सेन उवाच ।
भगवान्मोक्षदः कृष्णः पूर्णानन्दो सदायदि ।
यदि स्यात्परमा भक्तिहर्य परोक्षत्वसाधना ॥ ३,८.१४ ॥

तथा स्वगुरुमारभ्य ब्रह्मान्तेषु च साधुषु ।
तद्योग्यतानुसारेण भक्तिर्निष्कपटा यदि ॥ ३,८.१५ ॥

तुलस्यादिषु जीवेषु यदि स्यात्प्रीतिरण्डज ।
संस्मृतिश्च तदा नाशी भूयादेव न संशयः ॥ ३,८.१६ ॥

एवं स्तुत्त्वा महाभागो विष्वक्से नो महाप्रभो ।
तूष्णीं बभूव गरुड प्राञ्जलिर्नम्रकन्धरः ।
मित्रादहं न्यून एव नात्र कार्या विचारणा ॥ ३,८.१७ ॥

इति श्रीगा म उ तृ ध विष्णुस्तुतिर्देवतारम्यादि अष्टमोऽध्यायः

श्रीगरुडमहापुराणम् ९
श्रीगरुड उवाच ।
अजानजस्वरूपं च ब्रूहि कृष्ण महामते ।
तदन्यांश्च क्रमेणेव वक्तुं कृष्ण त्वमर्हसि ॥ ३,९.१ ॥

श्रीकृष्ण उवाच ।
अजानाख्या देवतास्तु तत्तद्देवकुले भवाः ।
अजानदेवतास्ता हि तेभ्योग्याः कर्मदेवताः ॥ ३,९.२ ॥

विराधश्चारुदेष्णश्च तथा चित्ररथस्तथा ।
धृतराष्ट्रः किशोरश्च हूहूर्हाहास्तथैव च ॥ ३,९.३ ॥

विद्याधरश्चोग्रसेनो विश्वावसुपरावसू ।
चित्रसेनश्च गोपालो बलः पञ्चदश स्मृताः ॥ ३,९.४ ॥

एवमादयश्च गन्धर्वाः शतसंख्याः खगेश्वर ।
अजानजसमा ज्ञेया मुक्तौ संसार एव च ॥ ३,९.५ ॥

अज्ञानजास्तु मे देवाः कर्मजेभ्यः शतावराः ।
घृताची मेनका रंभा उर्वशी च तिलोत्तमा ॥ ३,९.६ ॥

सुकेतुः शबरी चैव मञ्जुघोषा च पिङ्गला ।
इत्यादिकं यक्षरत्नं सह संपरिकीर्तितम् ॥ ३,९.७ ॥

अजानजसमा ह्येते कर्मजेभ्यः शतावराः ।
विश्वामित्रो वसिष्ठश्च नारदश्च्यवनस्तथा ॥ ३,९.८ ॥

उतथ्यश्च मुनिश्चैतान्द्राजपित्वा खगेश्वर ।
ऋषयश्च महात्मानो ह्यजानजसमाः स्मृताः ॥ ३,९.९ ॥

शतर्चिः कश्यपो ज्ञेयो मध्यमश्च पराशरः ।
पावमान्यः प्रगाथश्च क्षुद्रसूक्तश्च देवलः ॥ ३,९.१० ॥

गृत्समदो ह्यासुरिश्च भरद्वाजोथ मुद्गलः ।
उद्दालको ह्यृ शृङ्गः शङ्खः सत्यव्रतस्तथा ॥ ३,९.११ ॥

सुयज्ञश्चैव बाभ्रव्यो माण्डूकश्चैव बाष्कलः ।
धर्माचार्यस्तथागस्त्यो दाल्भ्यो दार्ढ्यच्युतस्तथा ॥ ३,९.१२ ॥

कवषो हरितः कण्वो विरूपो मुसलस्तथा ।
विष्णुवृद्धश्च आत्रेयः श्रीवत्सो वत्सलेत्यपि ॥ ३,९.१३ ॥

भार्गवश्चाप्नवानश्च माण्डूकेयस्तथैव ।
मण्ड्कश्चैव जाबचलिः वीतिहव्यस्तथैव च ॥ ३,९.१४ ॥

गृत्समदः शौनकश्च इत्याद्या ऋषयः स्मृताः ।
एतेषां श्रवणादेव हरिः प्रीणाति सर्वदा ॥ ३,९.१५ ॥

ब्रुवे द्व्यष्टसहस्रं च शृणु ताक्ष्र्य मम स्त्रियः ।
अग्निपुत्रास्तु यद्व्यष्टसहस्रञ्च मम स्त्रियः ।
अजानजसमा ह्येता (ते) नात्र कार्या विचारणा ॥ ३,९.१६ ॥

त्वष्टुः पुत्री कशेरूश्च तासां मध्ये गुणाधिका ।
तदनन्तरजान्वक्ष्ये शृणु सम्यक्खगेश्वर ॥ ३,९.१७ ॥

आजानेभ्यस्तु पितरः सप्तभ्योन्ये शतावराः ।
तथाधिका हि पितर इति वेदविदां मतम् ॥ ३,९.१८ ॥

तदनन्तराजान्वक्ष्ये शृणु त्वं द्विजसत्तम ।
अष्टाभ्यो देवगन्धर्वा अष्टोत्तरशतं विना ॥ ३,९.१९ ॥

तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः ।
स्वमुकेनेव देवैश्च आज्ञाप्याः सर्वदा गणाः ॥ ३,९.२० ॥

आख्याता देवगन्धर्वास्तेभ्यस्ते च शतावराः ।
तेभ्यस्तु क्षितिपा ज्ञेया अवराश्च शतैर्गुणैः ॥ ३,९.२१ ॥

तेभ्यः शतगुणाज्ञेया मानुषेषूत्तमा गणाः ।
एवं प्रासंगिकानुक्त्वा प्रकृतं ह्यनुसराम्यहम् ।
एवं ब्रह्मादयो देवा लक्ष्म्याद्या अपि सर्वशः ॥ ३,९.२२ ॥

स्तुत्वा तूष्णीं स्थिताः सर्वे प्राञ्जलीकृत्य भो द्विज ॥ ३,९.२३ ॥

इति स्तुतश्च देवेशो भगवान् हरिरव्ययः ।
तेषामायतनं दातुं मनसा समचिन्तयत् ॥ ३,९.२४ ॥

इदं पवित्रमारोग्यं पुण्यं पापप्रणाशनम् ।
हरिप्रसादजनकं स्वरूपसुखसाधनम् ॥ ३,९.२५ ॥

इदं तु स्तवनं विप्रा न पठन्तीह मानवाः ।
न शृण्वन्ति च ये नित्यं ते सर्वे चैव मायिनः ॥ ३,९.२६ ॥

नस्मरन्तोन्तरं नित्यं ये भुञ्जन्ति नराधमाः ।
तैर्भुक्ता सततं विष्ठा सदा क्रिमिशतैर्युता ॥ ३,९.२७ ॥

इति श्रीगारुडे महापुराणे तृती उत्त ब्रह्मकाण्डे देवकृतविष्णुस्तुतिदेवतातारतम्यनिरूपणं नाम नवमोऽध्यायः

श्रीगरुडमहापुराणम् १०
गरुड उवाच ।
देवैरेवं स्तुतो विष्णुर्भगवान्सात्त्वतां पतिः ।
कीदृशं ह्याश्रयं दत्त्वैषां विवेश महाप्रभुः ॥ ३,१०.१ ॥

एतद्वेदितुमिच्छामि कृष्णकृष्ण महाप्रभो ।
सम्यग्ब्रूहि दयालो त्वं यदि मच्छ्रोत्रमर्हति ॥ ३,१०.२ ॥

श्रीकृष्ण उवाच ।
तेषु तत्त्वेषु भगवान्स विवेश महाप्रभुः ।
क्षोभयामास भगवान् संबन्धविधुरो हरिः ॥ ३,१०.३ ॥

अदौ ससर्ज भगवान् ब्रह्माण्डं कन कात्मकम् ।
पञ्चाशत्कोटिविस्तीर्णं योजनानां समन्ततः ॥ ३,१०.४ ॥

तदूर्ध्वमण्ववयवस्तावान्कनकरूपकः ।
वर्तते तत ऊर्ध्वं तु पञ्चाशत्कोटिभूतलम् ॥ ३,१०.५ ॥

एवं कोटिशतं तस्यावयवः परिकीर्तितः ।
ततश्च सप्तावरणैः समतात्परिधीकृतम् ॥ ३,१०.६ ॥

कबन्धावरणं ह्याद्यं कोट्या दशसहस्रकम् ।
द्वितीया वरणं ज्ञेयं पावकस्य महात्मनः ॥ ३,१०.७ ॥

अपां दशगुणैर्युक्तं समन्तात्परिधी (खी) कृतम् ।
तृतीयावरणं ज्ञेयं हरस्यैव महात्मनः ॥ ३,१०.८ ॥

दशाधिकं पावकाच्च समन्तात्परिवारितम् ।
चतुर्थावरणं ज्ञेयं नभसोपि महाप्रभो ॥ ३,१०.९ ॥

हराद्दशगुणैरेवं समन्तात्परिवारितम् ।
पञ्चमावरणं ज्ञेयमहङ्काराख्यमेवच ॥ ३,१०.१० ॥

व्योम्नो दशगुणैरेवं समन्तात्परिवारि तम् ।
षष्ठमावरणं प्रोक्तं महत्तत्त्वं खगेश्वर ॥ ३,१०.११ ॥

अहङ्काराद्दशगुणं समन्तात्परिवारितम् ।
सप्तमावरणं प्रोक्तं त्रिगुणावरणं प्रभो ॥ ३,१०.१२ ॥

महत्तत्त्वाद्दशगुणैरधिकं परिकीर्तितम् ।
महत्तत्त्वानन्तरं च तमो ह्यावरणं स्मृतम् ॥ ३,१०.१३ ॥

महत्ततत्त्वात्पञ्चगुणैरधिकं परिकीर्तितम् ।
तस्माच्च द्विगुणं ज्ञेयंरजो ह्यावरणं स्मृतम् ॥ ३,१०.१४ ॥

ततश्च द्विगुणं ज्ञेयं सत्त्वावरणमुत्तमम् ।
त्रयश्चैवं मिलित्वा तु एकावरणमीरितम् ॥ ३,१०.१५ ॥

अव्याकृताख्यमाकाशं तदनन्तरमीरितम् ।
मर्यादारहितश्चैवं तत्रास्ते हरिरव्ययः ॥ ३,१०.१६ ॥

अष्टमावरणं व्योम्नोरं तरा विरजा नदी ।
पञ्चयोजनविस्तीर्णा समन्तात्परीधीकृता ॥ ३,१०.१७ ॥

अस्ति पुण्यतमा ज्ञेया लोकसंसारनाशिनी ।
एवं चतुर्मुखेनैव तदा ह्रष्यं ति चाण्डज ॥ ३,१०.१८ ॥

ते सर्वे विरजानद्यां सम्यक्स्नात्वा विसर्ज्य च ।
लिङ्गदेहं ततः पश्चान्मोक्षं विन्दन्ति ते हरेः ॥ ३,१०.१९ ॥

अपरोक्षदृशामेवं ब्रह्मणा सह गामिनाम् ।
विरजातरणं विद्धि नान्येषां विनतासुत ॥ ३,१०.२० ॥

अपरोक्षदृशां ब्रह्मन्व्यासादीनां खगेश्वर ।
विरजातरणं नास्ति भोक्तव्यत्वाच्च कर्मणः ॥ ३,१०.२१ ॥

विरिञ्चेनैव साकं तु कल्पेस्मिन्नधिकारिणाम् ।
तेषां तु नियमेनैव सर्वप्रारब्धसंक्षयः ॥ ३,१०.२२ ॥

भवत्येवं न संदेहो नान्येषां सर्वसंक्षयः ।
अतस्तु विरजातरणं तेषामेव भवेत्पटो ॥ ३,१०.२३ ॥

विरजातरणं नास्ति तेषां त (तयोस्त)त्संगिनां तथा ।
सर्वारब्धक्षयो नास्ति यतस्तेषां खगाधिप ॥ ३,१०.२४ ॥

अतश्च सर्वथा नास्ति विरजातरणं प्रभो ।
प्रलये विरजानद्या लयो नास्ति खगेश्वर ॥ ३,१०.२५ ॥

लक्ष्म्यात्मिका तु सा ज्ञेया लिङ्गदेहविदारिणी ।
ब्रह्मत्वयोग्या ऋजवो नाम देवाः प्रकीर्तिताः ॥ ३,१०.२६ ॥

तेपि प्रत्येकशः संति ह्यनन्ताश्च पृथग्गणाः ।
पृथक्पृथक्च तैः साकं मोक्षयोग्याः खगेश्वर ॥ ३,१०.२७ ॥

जीवाः संति ह्यनेके च प्रतिकल्पे सृजन्ति ते ।
द्वात्रिंशल्लक्षणैः सम्यग्युक्ता वायुत्वयोग्यकाः ॥ ३,१०.२९ ॥
(१०.२८)
अष्टाविंशल्लक्षणैश्च गिरीशपदयोगिनः ।
चतुर्विंशतिमारभ्याषोडशाच्च सुराः स्मृताः ॥ ३,१०.२९ ॥

अष्टका ऋषयः प्रोक्तास्तदूनाश्चक्रवर्तिनः ।
शतजन्म समारभ्य ब्रह्मणः परमेष्ठिनः ॥ ३,१०.३० ॥

अपरोक्षमिति प्रोक्तं तथा ह्यारब्धसंक्षयः ।
एकेन शतकल्पेन वायुत्वं याति भो द्विज ॥ ३,१०.३१ ॥

शतजन्मनि ब्रह्मत्वं याति पश्चाद्धरेः पदम् ।
चत्वारिंशद्ब्रह्मकल्पं समारभ्य खगेश्वर ॥ ३,१०.३२ ॥

रुद्रस्याप्यापरोक्ष्यं स्यात्तथा प्रारब्धसंक्षयः ।
एकचत्वारिंशकल्पे शेषत्वं याति सुव्रत ॥ ३,१०.३३ ॥

ब्रह्मणा सह मोक्षं च याति सम्यङ्न चान्यथा ।
कल्पविंशतिमारभ्य ब्रह्मणः परमेष्ठिनः ॥ ३,१०.३४ ॥

इन्द्रस्याप्यापरोक्ष्यं स्यात्तथा प्रारब्धसंक्षयः ।
ब्रह्मणैव सहायाति हरिं नारायणं परम् ॥ ३,१०.३५ ॥

गरुड उवाच ।
पञ्चाशीतिब्रह्मकल्पं समारभ्य महाप्रभो ।
रुद्रस्याप्यापरोक्ष्यं स्यात्तथा प्रारब्धसंक्षयः ॥ ३,१०.३६ ॥

इति श्रुतं मया ब्रह्मन्ब्रह्मणोक्तं हरेः प्रियात् ।
इत्थं त्वयोक्तं श्रीकृष्ण संशयोबाधते मम ॥ ३,१०.३७ ॥

अतो मे संशयं छिन्धि यथा न स्यात्तथा पुनः ।
इति तद्वचनं श्रुत्वा कृष्णो वचनमब्रवीत् ॥ ३,१०.३८ ॥

श्रीकृष्ण उवाच ।
ब्रह्मोक्तस्य मयोक्तस्य विवादो नास्ति सर्वथा ।
संदेहस्त्वज्ञदृष्टीनां ज्ञानिनां नास्ति सर्वथा ॥ ३,१०.३९ ॥

अशीतिह्यष्टका प्रोक्ता अष्टपञ्च खगेश्वर ।
चत्वारिंशद्ब्रह्मकल्प एवं प्राह चतुर्मुखः ॥ ३,१०.४० ॥

तत्त्वानां बहुगोप्यत्वात्तथोक्तं ब्रह्मणा पुरा ।

अभिप्रायस्त्वेवमेव ज्ञातव्यो नात्र संशयः ॥ ३,१०.४१ ॥

पञ्चा शीतिब्रह्मकल्पं ये विजानन्ति भो द्विज ।
तेन्धं तमः प्रविशन्ति सत्यंसत्यं मयोदितम् ॥ ३,१०.४२ ॥

विरजानन्तरं विप्रं तथा व्याकृतमंबरम् ।
अनन्तपारं तदपि लक्ष्मीस्तस्याभिमानिनी ॥ ३,१०.४३ ॥

संख्यानुगणनं नाम यस्य नास्ति महाप्रभो ।
न दानं जातिप्रोक्तं सर्वदा नास्ति संशयः ॥ ३,१०.४४ ॥

अण्डाभिमानी ब्रह्मा तु विराडाख्यो ह्यभूत्तदा ।
एवं मतं स निर्माय भगवान्हरिख्ययः ॥ ३,१०.४५ ॥

विशेषात्तत्र गरुड देवैस्तत्त्वाभिमानिभिः ।
अधश्चोर्ध्वं तदाक्रम्य हरिस्तिष्ठति सर्वदा ॥ ३,१०.४६ ॥

एवं प्राकृतसर्गोक्तिर्वैकृतं शृणु पक्षिराट् ॥ ३,१०.४७ ॥

गरुड उवाच ।
सृष्टिरुक्ता त्वया पूर्वं श्रुता सम्यङ्मया हरे ॥ ३,१०.४८ ॥

किं नाम प्राकृतं ज्ञेयं तथा किं वैकृतं प्रभो ।
एतद्विस्तीर्य मे ब्रूहि श्रोतुं कौतूहलं हि मे ॥ ३,१०.४९ ॥

श्रीकृष्ण उवाच ।
अव्यक्ताद्याः पृथिव्यन्ता अण्डाच्च बहिरुद्भवाः ।
ते सर्वे प्राकृताः प्रोक्तास्तेषां ज्ञानाद्विमच्यते ॥ ३,१०.५० ॥

ब्रह्माडं विकृतं ज्ञेयं ब्रह्माण्डान्तः खगेश्वर ।
या सृष्टिरुच्यते सद्भिः सैवोक्ता विकृतेति च ॥ ३,१०.५१ ॥

सृष्टिश्च प्रलयश्चैव संसारो भक्तिरेव च ।
देवता ऋषिमुख्याश्च लोका भूरादयस्तथा ॥ ३,१०.५२ ॥

अनाद्यनन्तकालीनाः सर्वदैकप्रकारकाः ।
जगत्प्रवाहः सत्योऽयं नैव मिथ्या कथञ्चन ॥ ३,१०.५३ ॥

यत्त्वेतदन्यथा ब्रूयुः सर्वहन्तार एव ते ।
जगत्प्रवाहः सत्योऽयं हरिसेवेतिसाथा ॥ ३,१०.५४ ॥

सत्यं सत्यं पुनः सत्यमुद्धत्य भुजमुत्यते ।

वेदाच्छास्त्रं परं नास्ति न देवः केशवात्परः ॥ ३,१०.५५ ॥

सर्वोत्कृष्टं केशवं च विहायान्यमुपासते ।
तेषामन्धं तमो ज्ञेयं पितॄणां गरुणामपि ॥ ३,१०.५६ ॥

इदानीं शृणु पक्षीन्द्र वैकृतं सर्गमुत्तमम् ।
सम्यग्जानाति यो लोके स याति परमं पदम् ॥ ३,१०.५७ ॥

इति श्रीगारुडे महापुराणे श्रीकृष्णगरुडसंवादे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे ब्रह्माण्डादिवैकृतैकदेशप्राकृतसृष्टिनिरूपणं नाम दशमोऽध्यायः

श्रीगरुडमहापुराणम् ११
श्रीकृष्ण उवाच ।
पुरुषाख्यो हरिः साक्षाद्भगवान्पुरुषोत्तमः ।
शिश्येत्वण्डोदक विष्णुर्नृणां साहस्रवत्सरम् ।
लक्ष्मीश्चोदकरूपेण शय्यारूपेण भोण्डजा ॥ ३,११.१ ॥

विद्या तरङ्गरूपेण वायुरूपेण भोण्डज ॥ ३,११.२ ॥

तमोरूपेण सैवासी न्नान्यदासीत्कथञ्चन ।
असीद्गर्भोदके चैव नान्यदासीत्कथञ्चन ॥ ३,११.३ ॥

लक्ष्मीस्तुष्टाव च हरिं गर्भोदे पक्षिसत्तम ।
लक्ष्मीधराभ्यां रूपाभ्यां प्रकृतिर्हरिणा तथा ॥ ३,११.४ ॥

शेत श्रुतिस्वरूपेण स्तौति गर्भोदके हरिम् ।
नारायण नमस्तेऽस्तु शृणु विज्ञापनं मम ॥ ३,११.५ ॥

अजां जहि महाभाग योग्यानां मुक्तिमावह ।
अजा तु प्रकृतिः प्रोक्ता चापरा प्रकृतिः परा ॥ ३,११.६ ॥

शततोवरा तु ब्रह्माणी ब्रह्मपत्नी वरानना ।
उमा शच्यवरा तस्या अवराः संप्रकीर्तिताः ॥ ३,११.७ ॥

एतासां हननं नैव प्रार्थयामः सदा हरे ।
अस्ति प्रतिनृषु ब्रह्म प्रकृती द्वे व्यवस्थिते ॥ ३,११.८ ॥

एका तु नित्यसंसारा त्वजशब्दाभिधायिका ।
द्वितीया तु तमोऽपोह्या अजशब्दाभिधायिका ॥ ३,११.९ ॥

अत एव त्वजे ज्येष्ठे इति लोके प्रकीर्तिते ।
सुखदुः खप्रदा चैव अपरा दुः खदैव तु ॥ ३,११.१० ॥

मोक्षाधिकारिणामेव ज्ञानैश्वर्यादयो गणाः ।
तेषामाच्छादिका होका तमोङ्गा सा प्रकीर्तिता ॥ ३,११.११ ॥

जीवं प्रति महाविष्णुं पाह्याच्छादयति प्रभो ।
सा परा प्रकृतिर्ज्ञेया परमाच्छादिका स्मृता ॥ ३,११.१२ ॥

एवं सा परमा दुष्टा होका तमोङ्गा तु प्रकीर्तिता ।
जीववर्गेष्वेव खग ब्रह्मादेर्नास्ति सा क्वचित् ॥ ३,११.१३ ॥

पिशाचवत्समुद्दिष्टा जीवस्येत्यधिकारिणः ।
प्रेरिका तु तयोर्देव्यो स्त्वहमाद्या सुखात्मिका ॥ ३,११.१४ ॥

तत्र विष्णो महाभाग सगुणाच्छादको हितः ।
परमाच्छादिकां दुष्टां व्यामुच्यैव महाप्रभो ॥ ३,११.१५ ॥

मोक्षं देहि महादेव त्वद्भक्तानां महाप्रभो ।
परमाच्छादिका ह्यस्मान्नित्य संसारिणो यतः ॥ ३,११.१६ ॥

अत एव च नित्यत्वात्तस्मात्तदपसारणम् ।
कुरु देव महाभाग इति विज्ञायतां मम ॥ ३,११.१७ ॥

एवं स्तुतो हरिः कृष्णो सुप्रबुद्धोऽपि सर्बदा ।
उद्वुद्धवन्महा विष्णुरभूदज्ञपरीक्षया ॥ ३,११.१८ ॥

तस्य नाभेरभूत्पद्मं सौवर्णं भुवनाश्रयम् ।
तत्प्राकृतं च विज्ञेयं भूदेवी त्वभिमानिनी ॥ ३,११.१९ ॥

अनन्तसूर्यवच्चैव प्रकाशकरमीरितम् ।
चिदानन्दमयो विष्णुस्तस्माद्भिन्नो न संशयः ॥ ३,११.२० ॥

विष्णोः स्वरूपभूतं च ये विजानन्ति ते नराः ।
ते यान्ति ह्यधरं लोकं तथा तत्संगिसंगिनः ॥ ३,११.२१ ॥

किरीटादिकवच्चैव ज्ञातव्यं च खगेश्वर ।
किरीटाद्या अपि हरेर्द्विधा संति न संशयः ॥ ३,११.२२ ॥

स्वरूपा ह्यस्वरूपाश्च स्वस्वरूपनि दर्शने ।
गृहीता इति विज्ञेया न स्वरूपाः खगेश्वर ॥ ३,११.२३ ॥

भ्माण्डं ह्यसृजत्तत्र सर्वलोकविधायकम् ।
प्रलये मुक्तिहीनश्च सुप्त इत्युच्यते बुधः ॥ ३,११.२४ ॥

तस्य समिवस्त्रिवं च न ज्ञातव्या खगेश्वर ।
प्रलयोपि महाभाग ब्रह्मवाय्वोर्न चास्ति हि ॥ ३,११.२५ ॥

वृत्तिरूपं परं ज्ञानं पाद्याघ्र्यं नात्र संशयः ।
इन्द्रियाणामुपरतिः सुप्तिरित्युच्यते बुधैः ॥ ३,११.२६ ॥

ब्रह्मवाय्वोश्च पासग्नि वास्तवं स्यात्खगेश्वर ।
कथं तर्हि तयोर्वर्ते ह्यविलत्यत्वमुच्यते ॥ ३,११.२७ ॥

तस्मात्तद्वास्तवं नास्ति ब्रह्मवाय्वोः खगेश्वर ।
स्वप्नावस्थायाः सदृशी ह्यवस्था सुप्तिसंज्ञिका ॥ ३,११.२८ ॥

ब्रह्मण्यमुख्यया वृत्त्या ह्यस्तीत्येवं निबोध मे ।
अतो न वास्तवमिदमङ्गीकार्यं खगेश्वर ॥ ३,११.२९ ॥

वास्तवं ये विजानन्ति तेषां नित्यं धनं तपः ।
श्रीगरुड उवाच ।
सुप्तिस्त्वज्ञानकार्यत्वात्सुप्तिर्नास्तीत्युदीरिता ॥ ३,११.३० ॥

यदा हि कारणं चास्ति तदा कार्यमिति प्रभो ।
इत्यभिप्रायगर्भेण त्वं समाधास्य ते यदि ॥ ३,११.३१ ॥

तर्हि तस्य महाभाग कथं ब्रूहि भयादिकम् ।
भयादिकं ह्यस्तु नाम का वास्माकं क्षतिर्भवेत् ॥ ३,११.३२ ॥

एवमुक्तस्तु गोविन्दोब्रवीत्तत्रापि कारणम् ।
भयं त्वज्ञानकार्यं स्यात्कार्याकारणमत्र हि ॥ ३,११.३३ ॥

प्रीयते मत्वा ब्रह्म तस्मात्सुप्तिश्च तत्र हि ।
अज्ञादिकं यदि ब्रह्म तस्य न स्यात्कथञ्चन ॥ ३,११.३४ ॥

कथं सुखी प्रदृश्येत न कथञ्चित्करिष्यति ।
कथं वा मुक्तिपर्यन्तं ज्ञानव्यक्तिर्वदस्व मे ॥ ३,११.३५ ॥

यद्यज्ञानं तस्य सत्यं न स्यात्तर्हि महाप्रभो ।
अत्यादरात्कथं ब्रह्मञ्छ्रवणं कुरुते वद ॥ ३,११.३६ ॥

इति तस्य वचः श्रुत्वा कृष्णो वचनमब्रवीत् ।
भयं च वास्तवं तस्य न जानीहि महामते ॥ ३,११.३७ ॥

दृश्यते मद्भयं तस्य हरिप्रीत्यर्थमेव च ।
भयाकामवतीवानमुवास्तवमीरितम् ॥ ३,११.३८ ॥

प्राप्तप्राब्धलेशस्त तस्य नास्ति खगेश्वर ।
दुः खाज्ञानादिकं किञ्चित्कथं तस्मिन् भविष्यति ॥ ३,११.३९ ॥

विष्णोराज्ञानुसारेण भयायानुकरोत्यसौ ।
तेन प्रीणाति च हरिस्तस्य नास्त्यत्र संशयः ॥ ३,११.४० ॥

शृणोति सततं ब्रह्मा न चिन्त्यात्तावताज्ञता ।
कदाचिद्दृश्यते ब्रह्मा दुः खी न च खगेश्वर ॥ ३,११.४१ ॥

यद्ब्रह्म च न जानीयाद्धरिप्रीत्यर्थमेव च ।
दुः खिवद्दृश्यते ब्रह्मा आज्ञानां मोहनाय च ॥ ३,११.४२ ॥

योग्यतामनतिक्रम्य यावज्ज्ञानं च तिष्ठति ।
ब्रह्मणस्तावदेवास्ति नात्र कार्या विचारणा ॥ ३,११.४३ ॥

ज्ञानस्य व्यक्तता नाम विद्यमानस्य चादरात् ।
ज्ञानस्यासादनं चैव ज्ञानव्यक्तिरिति स्मृता ॥ ३,११.४४ ॥

अतो ज्ञानादिकं नास्ति ब्रह्मणः परमेष्ठिनः ।
पद्माद्धिरण्म याज्जातो ब्रह्मा तु चतुराननः ॥ ३,११.४५ ॥

सर्वदाऽलोचनायुक्तस्तेन स्वालोचनं कृतम् ।
अज्ञानां मोहनार्थाय हरिप्रीत्यर्थमेव च ॥ ३,११.४६ ॥

संकल्पोपि तथैवास्ति न ह्यज्ञानात्कृतस्तथा ।
को वा मां सृष्टवानत्र इति ह्यालोच्य स प्रभुः ॥ ३,११.४७ ॥

तं विचारयितुं ब्रह्मा पद्मनाडीं विवेश ह ॥ ३,११.४८ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे श्रीकृष्णगरुडसंवादेऽज्ञानहेतुनिरूपणं नामैकादशोऽध्यायः

श्रीगरुडमहापुराणम् १२

श्रीकृष्ण उवाच ।

नाडीं समाविश्य महानुभावः श्रीविष्णुभक्तो त्वथ पुष्करस्थः ।
विचारयामास गुरुं स्वमूलं नारायणं निर्गुणमद्वितीयम् ॥ ३,१२.१ ॥

एतावता हरिभक्तस्य तस्याप्यच्छिन्नभक्तस्य चतुर्मुखस्य ।
विचारकाले च विचिन्तनीयो ह्यज्ञानलेशस्तु खगेश्वरेश्वर ॥ ३,१२.२ ॥

यथास्ति विष्णोर्मनः सङ्कल्प एव तथैव सोपि प्रकरोति नित्यम् ।
आलोचने तस्य सदास्ति भूमन्स्वयोग्यतामनतिक्रम्य चैव ॥ ३,१२.३ ॥

हरेः स्वरूपे च तथा प्रपञ्चः स्वस्मिन्स्वरूपे च खगस्ति ज्ञानम् ।
यथापि नित्यं परिचारवारि च अज्ञातवद्दृश्यते विष्णुना च ॥ ३,१२.४ ॥

हरेः प्रीत्यर्थं कुरुते सौ कदाच्चित्तत्रापि कश्चिद्विशेषोऽस्ति वीन्द्र ।
शृणुष्व सम्यङ्निगृहीतचित्तो यथा प्रोवाच स विजानाति देवः ॥ ३,१२.५ ॥

सदा त्वदोषं प्रविशेषेश्च मुक्तवेदास्तथा वा पविजानन्ति नित्यम् ।
तस्य स्वरूपं न तथा हरिं च स्वयोग्यतामनतिक्रम्य वेधाः ॥ ३,१२.६ ॥

हरेः स्वरूपं न विजानाति सर्वं स्वयो ग्यरूपं सर्वदा वेत्ति विष्णोः ।
तत्राज्ञानं नास्ति किञ्चिद्द्विजेन्द्र यावत्स्वरूपं च तथैव लक्ष्म्याः ॥ ३,१२.७ ॥

वेधा न जानाति कुतस्तदन्ये तयोः स्वरूपंन विजानाति सर्वम् ।
तथापि वेदानेकदेशेन वेद जानाति लक्ष्मीर्हरिरूपं च यावत् ॥ ३,१२.८ ॥

तावन्न जानाति विधिः खगेन्द्र ज्ञाने विधातुश्च स्वयोग्यभूते ।
अतो विरिञ्चस्य न चिन्तनीयो ह्यज्ञानलेशः क्वापि देशे च काले ॥ ३,१२.९ ॥

नाडीं समाविश्य तदा विरिञ्चो न वेद नारायणमेकवच्च ।
तदा शृणोत्तं कमलासनं प्रभुस्तपस्तप द्व्यक्षरं सादरेण ॥ ३,१२.१० ॥

अभिप्रायं तस्य सम्यग्विदित्वा तपः कुरु त्वं हरितुष्ट्यर्थमेव ।
तपोऽकरोद्धरिपादैक निष्ठो हरेः प्रीत्यर्थं दिव्यसहस्रवर्षम् ॥ ३,१२.११ ॥

ततो हरिः प्रादुरासीत्खगेन्द्र वरं दातुं भक्तवरस्य दिव्यम् ।
सदा विष्णुं देवदेवो ददर्श चतुर्भुजं तं जलजायताक्षम् ॥ ३,१२.१२ ॥

श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं संपश्यन्तं सुप्रसन्नार्द्रदृष्ट्या ।
दृष्ट्वा हरिं ब्रह्म नारायणं च पुरः स्थितं भक्तवश्यं दयालुम् ॥ ३,१२.१३ ॥

समर्चयामास महाविभूत्या भक्त्या हरेः पादतीर्थं दधार ।

अस्तौन्महाभागवतप्रधानो हरिं गुरुं भक्तिविवर्धितात्मा ॥ ३,१२.१४ ॥

ब्रह्मोवाच ।
रमेश लोकेश जगन्निवास तव स्वरूपं न विजानाति देवी ।
तव प्रसादात्सुविजानाति देवी गुणान्वेदोक्तान्सर्वदा वीन्द्र सर्वान् ॥ ३,१२.१५ ॥

तथापि सा न विजानाति देवी साकल्येनाशेषितः सद्गुणांश्च ।
यद्यप्यनुक्तं पञ्चभिर्नास्ति वेदैस्तथापि देवेऽत्र विशेष आस्ते ॥ ३,१२.१६ ॥

तत्त्वेच्छवः प्रविजानन्ति नित्यं वेदे सूक्तान्क्वाप्यनुक्तांश्च सर्वान् ।
आदौ जानन्त्यत्र वेदा मुरारे ऋगादयः सुष्ठु चत्वार एव ॥ ३,१२.१७ ॥

वेदा ह्येते वेदयन्तीति देव तथा पुराणं भारतं पञ्चरात्रम् ।
क्रमादितो विचिन्त्य सा विष्णुगुणान्स्वयोग्यान्सदा विजानाति रमापि देवी ॥ ३,१२.१८ ॥

विशेषतो ह्युक्तगुणा नृगादिषु स्वयोग्यभूतान्संविजानाति देवी ।
सामान्यतः प्रविजानाति देवी हरेर्गुणान्न विशेषाच्च नित्यम् ॥ ३,१२.१९ ॥

अहं विजानामि रमाप्र सादात्तव प्रसादाच्च गुणान्सदैव ।
स्वयोग्यभूताञ्छ्रुतिपूक्तान् गुणांश्च कांश्चिद्विजानाति हरेर्न कश्चित् ॥ ३,१२.२० ॥

तव प्रसादाच्च मम प्रसादात्कालान्तरे तांश्च जानाति शेषः ।
दुष्कर्मलेशान्न तिरोहितान् गुणान्यानेव पूर्वं विदितान् स्वयोग्यान् ॥ ३,१२.२१ ॥

तानेव ज्ञात्वा पुनरेव शेषस्तिरो हितांल्लब्धगुणस्ततः स्मृतः ।
सदा स्वयोग्यांश्च हरेर्गुणांश्च उमापतिश्चापि तव प्रसादात् ॥ ३,१२.२२ ॥

यदा विजानाति हरे मुरारे अप्राप्तलब्धेति तदोच्यते हरः ।
ममापि लोकं च यदा मुरारे तदा विजानाति तव स्वरूपम् ॥ ३,१२.२३ ॥

गोविन्द नित्याव्यय चित्सुपूर्ण तव प्रसादान्नास्ति शतेषु तन्ममयेये हि देवाश्च शरीरधारिणस्ते ज्ञानहीना विषयेषु निष्ठाः ॥ ३,१२.२४ ॥

येये देवा विषयेषु निष्ठास्तेते देवा बहिरर्थभावाः ।
येये देवा बहिरर्थभावा मोक्षा दन्ये प्रलपन्तः सदैव ॥ ३,१२.२५ ॥

तव स्वरूपे च जगत्स्वरूपे तवासमानं नास्ति विष्णो सदैव ।
यतस्तव प्राकृतो नास्ति देहो यतो ज्ञानं नास्ति नास्त्ये व नित्यम् ॥ ३,१२.२६ ॥

पूर्णानन्दज्ञानदेहोऽपि नित्यं सदा शरीरी भाष्यते भक्तिमद्भिः ।
यतस्तव प्राकृतो नास्ति देहो ह्यतोपि नित्यमशरीरीति च स्मृतः ॥ ३,१२.२७ ॥

नतोऽहं सर्वदास्मिन्शरीरेऽहंममेत्यभिमानेन शून्यः ।
अत्तोऽप्यहं त्वशरीरी सदैव तथैव नित्यं बहिरर्थैश्च शून्यः ॥ ३,१२.२८ ॥

स्वभोगभार्यासत्यलोकादिभोगः स्वयोग्यभोगो वस्त्रमाल्यादिभोगः ।
एते हि सर्वे बहिरर्थसंज्ञकाः नैसर्गकामाः सर्वदा मे हि विष्णो ॥ ३,१२.२९ ॥

तथाप्यहं कामहीनो हि नित्यं रुद्रादयः कामवन्तो यतोतः ।
शरीरिणस्ते बहिरर्थभावा अज्ञानवन्तोऽपि च संस्मृताः खग ॥ ३,१२.३० ॥

स्वदारभोगे केवलां प्रीतिमेवं हरेरेवं सर्वदाहं करोति ।
स्तम्बास्त्रादीन्धारियिष्ये सदैव विष्णोः प्रीत्यर्थं नैव गात्रार्थमेव ॥ ३,१२.३१ ॥

नित्यानन्दादन्यकामो न मेस्ति अतः सदा बहिरर्थैश्च शून्यः ।
ममापि भार्या बहिरर्थशून्या अमूढभावा मूढवतीव दृश्यते ॥ ३,१२.३२ ॥

अमूढभूता ज्ञानिनां सर्वदैव तथाज्ञानां ज्ञानहीनेति भाति ।
यावज्ज्ञानं चास्ति मे वास्तुदेव तावज्ज्ञानं वासुदेवस्य चास्ति ॥ ३,१२.३३ ॥

यावज्ज्ञानं वासुदेवस्य चास्ति तावज्ज्ञानं ज्ञानवतामृजूनाम् ।
क्रमेणैवाज्ञानिनां वानृजूनामस्पष्टरूपो ज्ञानगतो विशेषः ॥ ३,१२.३४ ॥

सौरिप्रकाशे च यथैव दर्शनं तथा मम ज्ञानगतो विशेषः ।
दीपप्रकाशे च यथैव दर्शनं तथा ज्ञानं वासुदेवस्य चास्ति ॥ ३,१२.३५ ॥

अस्पष्टपरूपा न्यूनता ह्यस्ति वायौ तथा ज्ञानं नैव संचिन्तनीयम् ।
एतादृशी ज्ञानशक्तिर्मुरारेर्वाय्वादीनां मोक्षपर्यन्तमस्ति ॥ ३,१२.३६ ॥

ज्ञानं त्वृजूनां मोक्षकाले पिपञ्चवाय्वादीनां प्रलयेनाद्रादीर्न ।
वायोर्मम प्रलये सृष्टिकाले तथा गायत्र्या नास्तिनास्त्येव मोहः ॥ ३,१२.३७ ॥

गायत्रीवद्भारत्या देवदेव ज्ञातव्यमेवं हरितत्त्ववेदिभिः ।
ममाज्ञानं दृश्यते यत्र कुत्र दैत्यादीनां मोहनार्थ सदैव ॥ ३,१२.३८ ॥

तेन प्रीतिर्देवदेवस्य विष्णर्भविष्यतीत्येव विनिश्चितात्मा ।
प्रश्नादिकं त्वज्ञवत्सर्वदैवं करिष्येहं मोहनायाधमानाम् ॥ ३,१२.३९ ॥

सूर्योदये नास्ति यथा तमश्च तथाज्ञानं नास्तिनास्त्येव देव ।
करोम्यहं श्रवणं सर्वदैव हरिप्रीत्यर्थं निश्चतार्थं सतां हि ॥ ३,१२.४० ॥

शतजन्मगतानां त्वनृजूनां पूर्वमेव तु ।
अपरोक्षाभाव एव ह्यज्ञानं समुदीरितम् ॥ ३,१२.४१ ॥

अपरोक्षानन्तरं तु नास्त्यज्ञानं न संशयः ।
शतजन्मसु देवेश अपरोक्षेण सर्वदा ॥ ३,१२.४२ ॥

पूर्णज्ञानं ममास्त्येव नात्र कार्या विचारणा ।
शतजन्मसु पूर्वं तु परोक्षेण मम प्रभो ॥ ३,१२.४३ ॥

पूर्णं ज्ञानं सदाप्यस्तीत्येवमाहुर्महर्षयः ।
संज्ञाजन्मगतायाश्च सरस्वत्या महाप्रभो ॥ ३,१२.४४ ॥

नाज्ञानं चिन्तनीयं हि ब्रह्मय्वोश्च देव हि ।
अत्र कश्चिद्विशेषोस्ति ज्ञातव्यस्तत्वमिच्छुभिः ॥ ३,१२.४५ ॥

अवतारेषु भारत्याः कदाचिज्ज्ञानपूर्वकम् ।
सर्वदा ज्ञानरूपा सा सर्वदुः खविवर्जिता ॥ ३,१२.४६ ॥

दैत्यानां मोहनार्थाय अंशे दुः खीव दृश्यते ।
तस्या दुः खादिकं किञ्चिन्नास्तिनास्त्येव सर्वथा ॥ ३,१२.४७ ॥

अपरोक्षतिरोभाव ईषत्काले प्रदृश्यते ।
तावन्मात्रेण वाज्ञानं तस्यां नैवाहितं च यत् ॥ ३,१२.४८ ॥

मूलरूपे तु नास्त्येव भारत्या ज्ञानविस्मृतिः ।
भारत्यास्तु यथा नास्ति सरस्वत्यास्तु किं पुनः ॥ ३,१२.४९ ॥

अंशावतरणं नास्ति सरस्वत्याः कदाचन ।
अंशावतरणं नास्ति ममापि मधुसूदन ॥ ३,१२.५० ॥

तथैव ज्ञानमस्त्येव हरेर्नारायणस्य च ।
वायोरंशावतारोस्ति यथा मूले तथैव च ॥ ३,१२.५१ ॥

बलज्ञाना दिकं सर्वं चिन्तनीयं न संशयः ।
तथापि वायौ दृश्यन्ते बलज्ञानादिव्यक्तयः ॥ ३,१२.५२ ॥

अवतारेषु वायोस्तु सम्यक्शक्त्यात्मनास्ति हि ।
अपरोक्षतिरोभावौ नांशावतरणेष्वपि ॥ ३,१२.५३ ॥

बलज्ञानादिकं यावन्मूलरूपे प्रदृश्यते ।
त्रेतायुगस्वरूपे च न दर्शयति तादृशम् ॥ ३,१२.५४ ॥

त्रेतायुगस्वरूपे च यादृक्चादर्शयत्प्रभो ।
द्वापरस्थे स्वरूपे तत्तद्दर्शयति तादृशम् ।
त्रेतायुगस्वरूपे च यादृक्चादर्शयत्प्रभो ॥ ३,१२.५५ ॥

द्वापरस्थे वायुरूपे याद्दग्वा दर्शयत्प्रभुः ।
वायुः कलियुगे रूपे तद्दर्शयति तादृशम् ॥ ३,१२.५६ ॥

तथा दर्शयते वायुर्दैत्यानां मोहनाय च ।
अवतारेषु वायोश्च अन्तरं ये विदुः प्रभो ॥ ३,१२.५७ ॥

तेऽधं तमः प्रविशन्ते ते दैत्या न च ते सुराः ।
वायावप्यन्तरं नास्ति हरितत्त्वविनिर्णये ॥ ३,१२.५८ ॥

निन्दां कुर्वन्ति ये विष्णोर्जिह्वाछेदं करोम्यहम् ।
तदर्थमेव वायोश्च अवतारः सदा भुवि ॥ ३,१२.५९ ॥

गुणपूर्णस्य विष्णोस्तु निर्गुणत्वविचिन्तनम् ।
जातानन्दादिपूर्णाङ्ख्यं सोहमित्यादिचिन्तनम् ॥ ३,१२.६० ॥

चिदानन्दात्मके देहे उत्पत्त्यादिविचिन्तनम् ।
अच्छेद्याभेद्यगात्रेषु च्छेदभेदादिचिन्तनम् ॥ ३,१२.६१ ॥

देव्या नित्यावियोगिन्या वियोगादिविचिन्तनम् ।
क्लेशशोकादिशून्यस्य हरेः क्लेशादिचिन्तनम् ॥ ३,१२.६२ ॥

व्यासरामादिरूपेष्वनृषिविप्रत्वचिन्तनम् ।
कृष्णरामादिरूपेषु अन्तरस्य विचिन्तनम् ॥ ३,१२.६३ ॥

रामकृष्णादिरूपेषु अन्तरस्य विचिन्तनम् ।
रामकृष्णादिरूपेषु पराजयविचिन्तनम् ॥ ३,१२.६४ ॥

सन्तानार्थं तु कृष्णे न शिवपूजादिचिन्तनम् ।
रामेण दुः खयुक्तेन लिङ्गस्य स्थापनं कृतम् ॥ ३,१२.६५ ॥

पञ्चधातुमये कृष्णे हरिरूपविचिन्तनम् ।
स्वयं व्यक्तस्थले चापि चिदा नन्दत्वकल्पनम् ॥ ३,१२.६६ ॥

पितृमातृद्विजातीनां हरिरूपत्वचिन्तनम् ।
अस्वतन्त्रेण रुद्रेण हरेरैक्यदिचिन्तनम् ॥ ३,१२.६७ ॥

विष्णोः सूर्येण साकं च अभेदा दिविचिन्तनम् ।
सर्वोत्तमः सूर्य एव विष्ण्वाद्यास्तस्य किङ्कराः ॥ ३,१२.६८ ॥

इत्यादिचिन्तनं दोषो हरिनिन्देति चोच्यते ।
अस्वयं व्यक्तिलिङ्गेषु अश्वत्थतुलसीषु च ॥ ३,१२.६९ ॥

शालग्रामं विहायैव नमनं ये प्रकुर्वते ।
ते सर्वे हरिनिन्दायामविकारिण एव हि ॥ ३,१२.७० ॥

मोक्षाधिकारिणो ये तु अज्ञानात्परमेश्वरम् ।
पार्थक्यनयनं येषु कुर्वन्ति यर्हि वा प्रभो ॥ ३,१२.७१ ॥

तर्हि तेषां हि कालेषु दुः खं याति न संशयः ।
अतः प्रार्थक्यनयनं ये कुर्वन्त्येषु सर्वदा ॥ ३,१२.७२ ॥

ते सर्वे त्वबुधा ज्ञेया नात्र कार्या विचारणा ।
अस्वयंव्यक्तलिङ्गेषु नमनं ये प्रकुर्वते ॥ ३,१२.७३ ॥

ते सर्वे ह्यसुरा ज्ञेया नान्यथा तु कथञ्चन ।
विहाय शून्यमश्वत्थं नमनं ये प्रकुर्वते ॥ ३,१२.७४ ॥

द्विमासहीनां तुलसीमप्रसूतां च गां नवाम् ।
ते सर्वे ह्यसुरा ज्ञेया नात्र कार्या विचारणा ॥ ३,१२.७५ ॥

गुल्माद्याश्च मनुष्यान्तास्ते ज्ञेया ब्रह्मबाहवः ।
अस्मच्छतायुः पर्यन्तमेक एव कलिः स्मृतः ॥ ३,१२.७६ ॥

कलौ संति कल्पमानं कलेरन्ते संति च ।
तस्मिन्दिने ब्रह्मरूपे गच्छन्ति च तमोन्तिकम् ॥ ३,१२.७७ ॥

तत्र स्थित्वा लोकमार्गं प्रतीक्षन्ते न संशयः ।
साधकैर्विष्णुकार्याणां वायुदासैः प्रपीडिताः ॥ ३,१२.७८ ॥

शतवर्षानन्तरं च सर्वेषां कलिना सह ।
वायोर्गदाप्रहारेण लिङ्गभङ्गो भविष्यति ॥ ३,१२.७९ ॥

तमोन्धं प्रविशन्त्येते तारतम्येन सर्वशः ।
तमस्यन्धेपि संसारे नात्र कार्या विचारणा ॥ ३,१२.८० ॥

सर्वेषामुत्तमोन्ते यः कलिरेव न संशयः ।
दूषको विष्णुभक्तानां तत्समो नास्ति सर्वदा ॥ ३,१२.८१ ॥

संसारे वान्धतमसि सर्वत्र हरिदूषकः ।
मिथ्यादाने ज्ञानबुद्धिर्दुः खे च सुखबुद्धिमान् ॥ ३,१२.८२ ॥

तस्मात्कलिसमो लोके शिवभक्तो न कुत्रचित् ।
दुर्योधनः स एवोक्तो दुः खानन्त्यस्वरूपवान् ॥ ३,१२.८३ ॥

तस्माच्छतगुणांशेन कलिभार्या तु सर्वदा ।
अलक्ष्मीरिति विख्याता सा लोके मन्थरा स्मृता ॥ ३,१२.८४ ॥

तस्माद्दशगुणांशोनो विप्रचित्तिस्तु सर्वदा ।
जरासंधः स एवोक्तः कालनेमिस्ततः परम् ॥ ३,१२.८५ ॥

तस्माच्छतगुणांशोनः स तु कंसेति विश्रुतः ।
तस्मात्पञ्चगुणैर्हीनौ मधुकैटभसंज्ञकौ ॥ ३,१२.८६ ॥

तावेव हंसहिडंबकौ ज्ञेयौ तौ च जनार्दन ।
विप्रचित्तिसमो ज्ञेयो भौमो वै भूतले स्मृतः ॥ ३,१२.८७ ॥

तस्मादष्ट गुणैरुच्यो हरिण्यकशिषुः स्मृतः ।
तस्माच्च त्रिगुणैर्हीनो हिरण्याक्षो महासुरः ॥ ३,१२.८८ ॥

मणिमांस्तत्समो ज्ञेयः किञ्चिदूनो बकः स्मृतः ।
तस्माद्विंशद्गुणैर्हीनस्तारकाख्यो महासुरः ॥ ३,१२.८९ ॥

तस्मात्षड्गुणतो हीनः शंबरो लोककण्टकः ।
शंबरस्य समो ज्ञेयः शाल्वो दैत्येषु चाधमः ॥ ३,१२.९० ॥

शंबरात्तु द्विगुणतो हिडिंबो न्यून उच्यते ।
बाणस्ततोऽधमो ज्ञेयः स तु कीचकनामतः ॥ ३,१२.९१ ॥

द्वापारख्यो महाहासोबाणासुरसमः स्मृतः ।
तस्माद्दशगुणैर्हीनो नमुचिदैत्यसत्तमः ॥ ३,१२.९२ ॥

नमुचेस्तुसमौ ज्ञेयौ पाक इल्वल इत्युभौ ।
तस्माच्चतुर्गुणैर्हीनो वातापिर्दानवाधमः ॥ ३,१२.९३ ॥

तस्मात्सार्धगुणैर्हीनो धेनुको नाम दैत्यराट् ।
धेनुकादर्धगुणतः केशी दैत्यस्तु चावरः ॥ ३,१२.९४ ॥

केशीदैत्यसमो ज्ञेयस्तृणावर्तो महासुरः ।
तस्माद्दशगुणैर्हीनो हंसो नामरमापते ॥ ३,१२.९५ ॥

त्रिरिकस्तु समो ज्ञेयस्तत्समः पौरुकस्मृतः ।
वेतः स एव विज्ञेयः पूर्वजन्मनि सत्तम ॥ ३,१२.९६ ॥

तस्मादेकगुणैर्हीनौ कुंभाण्डककुपर्णकौ ।
दुः शासनस्तु विज्ञेयो जरासंधसमः प्रभो ॥ ३,१२.९७ ॥

कंसेन तुल्यो विज्ञेयो विकर्णो दैत्यसत्तमः ।
कुंभकर्णाच्छतगुणैर्हीनौ क्रध्येति विश्रुतः ॥ ३,१२.९८ ॥

तस्माच्छतगुणैर्हीनः शतधन्वा महासुरः ।
समानस्तस्य विज्ञेयः कर्मारिर्दैत्यसत्तमः ॥ ३,१२.९९ ॥

कालकेयस्तु विज्ञेयः सदा वेनसमो मतः ।
अधमानां तु दैत्यानामुत्तमैः साम्यमुच्यते ॥ ३,१२.१०० ॥

तत्रावेशाच्च विज्ञेयं देवानां नात्र संशयः ।
तस्माच्छतगुर्णैहीनश्चित्तमानसुरो महान् ॥ ३,१२.१०१ ॥

तच्छरीराभिमानी तु तस्माच्छतगुणैर्वरः ।
तस्माच्छतगुणैहींनो हस्तमानसुरो महान् ॥ ३,१२.१०२ ॥

तस्माच्छतगुणैर्हीनः पादमानसुरो महान् ।
नेत्रेन्द्रियाभिमानी तु तस्माच्छतगुणो वरः ॥ ३,१२.१०३ ॥

चक्षुरिन्द्रियमानी तु तस्माच्छतगुणो वरः ।
तस्माच्छगुणैर्हीनः स्पर्शमानसुरो महान् ॥ ३,१२.१०४ ॥

तस्माच्छतगुर्णैहीनश्चण्डमानसुरो महान् ।
तस्माच्छतगुर्णैर्हीनः शिश्नमानसुरो महान् ॥ ३,१२.१०५ ॥

तस्माच्छतगुणैर्हीनः कर्ममानसुरः स्मृतः ।
कल्पाद्यैः प्रेरिताः सर्वे रुद्राद्या अधिकारिणः ॥ ३,१२.१०६ ॥

कदाचित्सुविरुद्धं च कुर्वन्ति तव सत्तम ।
कदाप्यहं च वायुश्च विरुद्धं नाचरेव भोः ॥ ३,१२.१०७ ॥

मूलेष्वंशावतारेषु रुद्रादीना महाप्रभो ।
बुद्धिर्विनश्यते यस्मात्तस्माच्छिन्ना हि तेऽखिलाः ॥ ३,१२.१०८ ॥

महीपते च मद्बुद्धिस्तस्मादच्छिन्नसंज्ञिकः ।
एतादृशोप्यहं देव न च शक्तिस्तु नस्तवे ॥ ३,१२.१०९ ॥

मह्यमच्छिन्नभक्ताय दयां कुरु महाप्रभो ।
इति स्तुत्वा हरिं ब्रह्मा स्थितः प्राञ्ज लिरग्रतः ॥ ३,१२.११० ॥

इति श्रीगारुडे महापुराणे द्वितीयांशे धर्मकाण्डे श्रीकृष्णगरुडसंवादे ब्रह्मस्तुतिवर्णनं नाम द्वादशोऽद्यायः

श्रीगरुडमहापुराणम् १३
श्रीकृष्ण उवाच ।
इति स्तुतः स भगवान् स्वपूत्रेण दयानिधिः ।
मेधगंभीरया वाचा प्रोवाच मधुसूदनः ॥ ३,१३.१ ॥

सृज ब्रह्मन्निमान्देवान्मत्प्रसादात्क्रमेण च ।
यथा वै प्राक्क्षणेतद्वत्सृज सर्वं महाप्रभो ॥ ३,१३.२ ॥

नास्ति प्रयोजनं तेन तव मत्प्रीतये सृज ।
एवमुक्तस्तु हारिणा ब्रह्मा स्तुत्वा हरिं परम् ॥ ३,१३.३ ॥

सृष्टिं कर्तुं मनो दध्रे प्रीणयन्नेव माधवम् ।
महत्तत्वात्मको ब्रह्मा वायुं जीवभिमानिनम् ॥ ३,१३.४ ॥

आदौ ससर्ज गरुड पुरुषात्मा स एव च ।
ततो दक्षिणहस्तात्तु ब्रह्माणीं भारन्ती तथा ॥ ३,१३.६ ॥
(१३.५)
असृजत्ते महाभागे अव्यक्तस्य नियामिके ।
वामहस्तात्सत्यपुत्रो महत्तत्वात्मकोऽनलः ॥ ३,१३.६ ॥

ब्रह्मणो दक्षिणाद्धस्तादहङ्कारात्मको हरः ।
आदौ शेषस्ततो जज्ञे गरुडतदनन्तरम् ॥ ३,१३.७ ॥

तदनन्तरजो रुद्रः स एवं सृष्टवान्प्रभुः ।
स्वोत्पत्त्यनन्तरं ब्रह्मा दशवर्षान्महाप्रभुः ॥ ३,१३.८ ॥

वायुमुत्त्पाद्रयामास वत्सरानन्तरे प्रभुः ।
गायत्रीं जनयामास वायोरुत्पत्त्यनन्तरम् ॥ ३,१३.९ ॥

संवत्सरानन्तरे तु भारतीमसृजत्प्रभुः ।
भारत्यनन्तरं शें दिव्यसाहस्रवत्सरात् ॥ ३,१३.१० ॥

अनन्तरं संबभूव गरुडस्तु ततः परम् ।
दिव्यसाहस्रवर्षात्तु तथा रुद्रञ्च सृष्टवान् ॥ ३,१३.११ ॥

शेषस्यानन्तरं देवीं वारुणीं च महाप्रभुः ।
दशवर्षानन्तरं तु ह्यसृजत्कमलासनः ॥ ३,१३.१२ ॥

गरुडानन्तरं देवीं सौपर्णीमसृजत्प्रभुः ।
दशवर्षानन्तरं च पार्वतीं च तथैव सः ॥ ३,१३.१३ ॥

पार्वत्यनन्तरं चन्द्रं मनस्तत्त्वनियामकम् ।

दशवर्षानन्तरं तु वासवं ह्यसृजत्ततः ॥ ३,१३.१४ ॥

अभिमानी दक्षिणस्य बाहोश्च परमेष्ठिनः ।
दशवर्षानन्तरं तु शची तामसृजत्प्रभुः ॥ ३,१३.१५ ॥

इन्द्रस्यानन्तरं कामं त्रिंशद्वर्षादनन्तरम् ।
असृजद्वामबाहोश्चमनस्तत्वाभिमानिनम् ॥ ३,१३.१६ ॥

तदनन्तरजां देवीं दशवर्षादनन्तरम् ।
रतिं स जनयामास कामभार्यां महाप्रभुः ॥ ३,१३.१७ ॥

कामस्याप्यभिमानी तु स एव परिकीर्तितः ।
ब्रह्माहङ्कारिकं प्राणं कार्योत्पत्तेरनन्तरम् ॥ ३,१३.१८ ॥

दशवर्षानन्तरं तु निर्ममे नासिक ततः ।
तस्य भार्यां नासिकस्यः पञ्चवर्षादनन्तरम् ॥ ३,१३.१९ ॥

निर्ममे नासिकां वामां ब्रह्मा लोकपितामहः ।
अहङ्कारादनु ब्रह्मा सज्ञानं च बृहस्पतिम् ॥ ३,१३.२० ॥

निर्ममे च वर्षयुग्मपञ्चवर्षादनन्तरम् ।
पञ्चवर्षानन्तरं तु तारां भार्यां विनिर्ममे ॥ ३,१३.२१ ॥

गुरोरनन्तरं ब्रह्मा पञ्चविंशादनन्तरम् ।
स्वायंभुवं मनुं चैव निर्ममे मनसा विभुः ॥ ३,१३.२२ ॥

पञ्चवर्षानन्तरं तु शतरूपां विनिर्ममे ।
शतरूपानन्तरं तु विंशद्वर्षदिनान्तरम् ॥ ३,१३.२३ ॥

दक्षः शिष्यात्मको जज्ञे दक्षिणाङ्गुष्ठतः प्रभोः ।
पञ्चवर्षानन्तरं तु वामाङ्गुष्ठाच्चतुर्मुखः ॥ ३,१३.२४ ॥

प्रसूतिमसृजद्ब्रह्मा सृष्ट्यर्थं परमादरात् ।
दक्षस्यानन्तरं ब्रह्मा पञ्चविंशादनन्तरम् ॥ ३,१३.२५ ॥

निर्ममे ह्यनिरुद्धं च मध्यमाङ्गुलिपर्वतः ।
पञ्चवर्षानन्तरं तु ससर्ज भगवानजः ॥ ३,१३.२६ ॥

विराजसंज्ञकां भार्यां मध्यमाङ्गुलिपर्वतः ।
अनिरुद्धानन्तर तु शतवर्षादनन्तरम् ॥ ३,१३.२७ ॥

निर्ममे प्रवहं वायुं कनिष्ठाङ्गुलिपर्वतः ।

दशवर्षानन्तरं तु प्रवाहीं निर्ममे प्रभुः ॥ ३,१३.२८ ॥

कनिष्ठाङ्गुलिपर्वाच्च वामदेवं न संशयः ।
प्रवहानन्तरं तब्रह्मा शतवर्षादनन्तरम् ॥ ३,१३.२९ ॥

यमं विनिर्ममे पृष्ठादष्टवर्षादनन्तरम् ।
तद्भार्यां शामलां देवीं तस्मादेव महाप्रभुः ॥ ३,१३.३० ॥

यमस्यानन्तरं चन्द्रं त्रिंशद्वर्षादनन्तरम् ।
असृजद्दक्षिणाच्छ्रोत्राच्छ्रोत्रतत्त्वनियामकम् ॥ ३,१३.३१ ॥

नववर्षानन्तरं तु रोहिणीसमृजत्प्रभुः ।
वामश्रोत्राच्च गरुडं वामश्रोत्राभिमानिनम् ॥ ३,१३.३२ ॥

चन्द्रस्यानन्तरं सूर्यं विंशद्वर्षादनन्तरम् ।
सम्यग्विनिर्ममे ब्रह्मा दक्षिणाक्ष्णश्च देवताम् ॥ ३,१३.३३ ॥

वामाक्ष्णो निर्ममे संज्ञां षड्वर्षानन्तरं प्रभुः ।
सूर्यस्यानन्तरं ब्रह्मा शतवर्षादनन्तरम् ॥ ३,१३.३४ ॥

रसनेन्द्रियाच्च वरुणं निर्ममे तस्य मानिनम् ।
विंशद्वर्षानन्तरं तु तस्मादेवेद्रियात्प्रभुः ॥ ३,१३.३५ ॥

गङ्गां विनिर्ममे ब्रह्मा रसनेन्द्रियदेवताम् ।
वरुणस्यानन्तरं तु दशवर्षादनन्तरम् ॥ ३,१३.३६ ॥

उत्संगान्निर्ममे ब्रह्मा नारदं भगवत्प्रियम् ।
नारदस्यानन्तरं तु षष्टिवर्षादनन्तरम् ॥ ३,१३.३७ ॥

अग्निं विनिर्ममे ब्रह्मात्वगिन्द्रियतः प्रभुः ।
अतो वागभिमानी सं पञ्चवर्षादनन्तरम् ॥ ३,१३.३८ ॥

स्वाहां विनिर्ममे ब्रह्मा तामाहुर्मन्त्रदेवताम् ।
अग्नेरनन्तरं वीन्द्र भृगुं ब्रह्मर्षिसत्तमम् ॥ ३,१३.३९ ॥

दशवर्षानन्तरं तु भ्रुवोर्मध्याद्विनिर्ममे ।
संवत्सरानन्तरं तु भृगुभार्यां विनिर्ममे ॥ ३,१३.४० ॥

भृगोरनन्तरं ब्रह्मा शतवर्षादनन्तरम् ।
कश्यपञ्जनयामास मनसा च स्वयं प्रभुः ॥ ३,१३.४१ ॥

संवत्सरानन्तरं तु अदितिं निर्ममे प्रभुः ।

कश्यपानन्तरं चात्रिं दशवर्षादनन्तरम् ॥ ३,१३.४२ ॥

अत्रेरनन्तरं ब्रह्मा दशवर्षादनन्तरम् ।
अजीजनद्भरद्वाजं वसिष्ठ तदनतरम् ॥ ३,१३.४३ ॥

दशवर्षानन्तरं तु तेषां भार्याः क्रमेण तु ।
संवत्सरानन्तरेण असृजत्कमलासनः ॥ ३,१३.४४ ॥

वसिष्ठस्यानन्तरं तु गौतमं ह्यसृजत्प्रभुः ।
दशवर्षानन्तरेण जमदग्निं ततोऽसृजत् ॥ ३,१३.४५ ॥

दशवर्षानन्तरेण मनुर्वैवस्वतोऽभवत् ।
मनोरनन्तरं जज्ञे शतवर्षादनन्तरम् ॥ ३,१३.४६ ॥

विष्वक्सेनो महाभागो वायुपुत्रो महाबलः ।
तस्माच्चतुर्दशे वर्षे गणपो ह्यभवद्विभोः ॥ ३,१३.४७ ॥

तदनन्तरजो वीन्द्र अष्टवर्षादनन्तरम् ।
धनपो ह्यभवत्तत्र तद्भार्या वत्सरे परे ॥ ३,१३.४८ ॥

विष्वक्सेनानन्तरं तु दशवर्षादनन्तरम् ।
जयादीन्भ गवद्भक्तान्सृष्टवान् कमलासनः ॥ ३,१३.४९ ॥

जयाद्यानन्तरं ब्रह्मा वल्लाद्याः कर्मदेवताः ।
शतवर्षानन्तरं तु सृष्टवाञ्छिववाहनम् ॥ ३,१३.५० ॥

कर्मदेवानन्तरं तु त्रिंशद्वर्षादनन्तरम् ।
पर्जन्यमसृजद्ब्रह्मा मन्त्रयन्त्राभिमानिनम् ॥ ३,१३.५१ ॥

पर्जन्यानन्तरं ब्रह्मा दशवर्षादनन्तरम् ।
पुष्करं जनयामास कर्मतत्त्वाभिमानिनम् ॥ ३,१३.५२ ॥

एवं विनिर्ममे ब्रह्मा मत्प्रसादात्खगेश्वर ।
एवं ज्ञात्वा मोक्षमेति नान्यथा तु कथञ्चन ॥ ३,१३.५३ ॥

इति श्रीगारुडे महापुराणे श्रीकृष्णगरुडसंवादे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे देवोत्पत्तिनिरूपणं नाम त्रयोदशोऽध्यायः

श्रीगरुडमहापुराणम् १४
श्रीगरुड उवाच ।
अवतारान्हरे ब्रूहि तथा लक्ष्म्या दिवौकसाम् ।
गुणानामन्तर ब्रूहि शिष्यस्य मम सव्रत ॥ ३,१४.१ ॥

श्रीकृष्ण उवाच ।
यो मूलरूपी भगवाननन्तो ब्रह्मादिभिः पुर्णगुणः स्वतन्त्रः ।
पुरातनः पूर्णतनुर्मदात्मा न तादृशाः संति कदापि वीद्र ॥ ३,१४.२ ॥

पादश्च पूर्णः पादतलं च पूर्णं नखाश्च पूर्णाः कटिकण्ठौ च पूर्णौ ।
ऊरू च पूर्णे उदरं च पूर्णं लब्ध्वापि पूर्णाञ्जगृहे तथाप्युरः ॥ ३,१४.३ ॥

स्कन्धः सुपूर्णाः सकलाश्च बाहवः पूर्णाः केशाः श्मश्रुदन्ताश्च पूर्णाः ।
लोमानि पूर्णानि तथैव रोमकूपाश्च पूर्णास्तु तथैव शिश्रः ॥ ३,१४.४ ॥

अण्डश्च पूर्णो ह्यण्डरोमाणि कक्षाश्चक्षुश्च श्रोत्रे सर्व एते च पूर्णाः ।
किं वर्णये मूलरूपं हरेश्च यावद्वलं पूर्णं समग्रदेहे ॥ ३,१४.५ ॥

तावद्ब्रलं ह्येकरोमादिकेषु संतित्विमे हि यतः स एव पूर्णः ।
स एव तु सर्वस्य कर्ता स एव हर्था स तु सारांशभोक्ता ॥ ३,१४.६ ॥

असारांशं नैव भोक्ता हरिस्तु सारान्वक्ष्ये शृणु पक्षीन्द्र सम्यक् ।
द्राक्षेक्षुसारं नारिकेलस्य सारं चूतस्य सारं पनसस्यापि सारम् ॥ ३,१४.७ ॥

नारङ्गसारं क्रमुकस्यापि सारं खर्जूरसारं कदलीफलस्य ।
नारायणो बीजरूपस्य सारं गृह्णाति नित्यं भक्तवर्यो दयालुः ॥ ३,१४.८ ॥

ताम्बूलसारं खदिरस्य सारं पुष्पस्य सारं चन्दनस्यापि सारम् ।
गोधूमसारं यवानां च सारं माषस्य सारं हरेणोश्च सारम् ॥ ३,१४.९ ॥

शुद्धं तथा व्रीहिनीवारसारं श्यामाकसारं शुद्धधान्यस्य सारम् ॥ ३,१४.१० ॥

निषिद्धान्सर्वशाकस्य सारांस्तथा निपिद्धाल्लांवणस्वापि सारान् ।
गृह्णाति विष्णुः परमादरेण अन्नस्य सारं भक्ष्यभोज्यस्य सारम् ॥ ३,१४.११ ॥

सूपस्य सारं परमान्नस्य सारं दुग्धस्य सारं दधितक्रस्य सारम् ।
घृतस्य सारं रामठस्यापि सारं गृह्णाति विष्णुः सर्षपस्यापि सारम् ॥ ३,१४.१२ ॥

मरीचसारं जीरकस्यापि सारं तथा हविर्घृतपक्वस्य सारम् ।
तैलेषु पक्वस्य च भर्जितस्य गुडस्य सारं नवनीतस्य सारम् ॥ ३,१४.१३ ॥

लवङ्गसारं शर्करायाश्च सारमित्यादिसारान् वासुदेवस्तु भुक्ते ।

लक्ष्मीपतिः सर्वजगन्निवा सस्तस्याज्ञया वासुदेवोपि नित्यम् ॥ ३,१४.१४ ॥

तच्छेषसारानपि चावनीशो महात्मनोंशाञ्छृणु शिष्यवर्य ।
एवं विमूढा वासुदेवस्य भक्ताः किं वक्तव्यं विष्णुभक्ता हि लोके ॥ ३,१४.१५ ॥

कल्याणास्ते सारभोक्तार एव नैषां भवेत्तेन दुः खाभिवृद्धिः ।
भुञ्जन्ति ये वैश्वदेवं विहाय दुष्टांस्तान्वै भुक्तिचिन्त्तांश्च विद्धि ॥ ३,१४.१६ ॥

वक्ष्ये विशेषं वैश्वदेवे खगेन्द्र गोप्यं नो वदान्यत्र विद्वान् ।
सूर्यादीनां ये च दाने च दद्युर्विना वायोरन्तरस्थं हरिं च ॥ ३,१४.१७ ॥

ते वै सदा सारभोक्तार एव ज्ञेयास्त्वतो विष्णुरेको महात्मा ।
सारांशभोक्ता न तु सर्वस्य भोक्ता भुनक्ति सर्वं त्वविरुद्धशक्तिः ॥ ३,१४.१८ ॥

वक्ष्ये ह सारान्पुनरन्यान्खगेन्द्र शृणुष्व गुह्यं परमादरेण ।
द्राक्षादयः सर्व एव त्वसाराः कालादिदुष्टा भावदुष्टाः पदार्थाः ॥ ३,१४.१९ ॥

अतिपक्वानन्तरं तु तथा दिनचतुष्टये ।
असाराः कलुषा ज्ञेयास्तथा जंबूफलं स्मृतम् ॥ ३,१४.२० ॥

मासस्यानन्तरं वीन्द्र त्वसारं पनसं स्मृतम् ।
षण्मासानन्तरं वीन्द्र खर्जूरं तिक्तवत्स्मृतम् ॥ ३,१४.२१ ॥

आर्द्रं पूतं नारिकेलं स्फोटनानन्तरं प्रभो ।
अहोरात्रानन्तरं तु असारं परिकीर्तितम् ॥ ३,१४.२२ ॥

शुष्कभूतं नारिकेलं खजूरं तु यथा तथा ।
पक्षस्यानन्तरं चूतमसारं परिकीर्तितम् ॥ ३,१४.२३ ॥

वर्षस्यानन्तरं वीन्द्र पूगीफलमुदाहृतम् ।
घटिकानन्तरं वीन्द्र तांबूलं परिकीर्तितम् ॥ ३,१४.२४ ॥

यामस्यानन्तरं चान्नं सूपान्नं पायसं तथा ।
भक्ष्यं च क्वथितं वीन्द्र असारं परिकीर्तितम् ॥ ३,१४.२५ ॥

त्रिपक्षानन्तरं वीन्द्र तैलपक्वं तथा स्मृतम् ।
चतुर्यामानन्तरं च त्वसारं घृतपक्वकम् ॥ ३,१४.२६ ॥

त्रियामानन्तरं शाका निः साराः परिकीर्तिताः ।
जंबीरं शृङ्गबेरे धात्री कर्पूरं च चूतकम् ॥ ३,१४.२७ ॥

वत्सरानन्तरं वीन्द्र निः सारं परिकीर्तितम् ।

पर्पटः पक्षमात्रेण निः सारः परिकीर्तितः ॥ ३,१४.२८ ॥

तुलसी सर्वदा सारा एकादश्यामपि द्विज ।
आर्द्रा वाप्यथवा शुष्का सार्द्रा सारवती स्मृता ॥ ३,१४.२९ ॥

एकादश्यां तु तुलसी सारा ग्राह्या मनीषिभिः ।
त्वचा नासेंद्रियेणापि न तु जिह्वेन्द्रियेण च ॥ ३,१४.३० ॥

एकादश्यां हरेरन्नं निः सारं परिकीर्तितम् ।
एकादश्यां हरेस्तीर्थं मनुष्याणां खगेश्वर ॥ ३,१४.३१ ॥

एकवारे च सारं स्याद्द्विवारे च ततोधिकम् ।
एकादश्यां महाभाग तीर्थं गन्धादिमिश्रितम् ॥ ३,१४.३२ ॥

असारमिति संप्रोक्तं तथा स्वादूदमिश्रितम् ।
एकादश्यां हरेः सारं क्षीरं सर्पिर्मधूदकम् ॥ ३,१४.३३ ॥

निः सारं मनुजेन्द्राणामिति वेदविदां मतम् ।
आषाढमासे गरुड शाको निः सार उच्यते ॥ ३,१४.३४ ॥

मासि भाद्रपदे वीन्द्र ह्यसारं दधि चोच्यते ।
क्षीरं तु ह्याश्विने मासे निः सारं परिकीर्तितम् ॥ ३,१४.३५ ॥

ऊर्ध्वपुण्ड्रगदाहीना नार्यसारेति गीयते ।
हरिभक्तिविहीना ये ह्यसुराः परिकीर्तिताः ॥ ३,१४.३६ ॥

हरिनामविहीनं तु मुखं निः सारमुच्यते ।
हरिनैवेद्यहीनस्तु पाको निः सार उच्यते ॥ ३,१४.३७ ॥

त्रिदिनैश्चातसीपुष्पं निः सारं परिकीर्तितम् ।
प्रहरं मल्लिका सारं जाती तु प्रहरार्धकम् ॥ ३,१४.३८ ॥

त्रियामं शतपत्रं स्यात्करवीरमहर्निशम् ।
घटिकावधि सारं स्यात्पारिजातं खगेश्वर ॥ ३,१४.३९ ॥

त्रिवर्षं केसरं फल्ग सारमित्युच्यते बुधैः ।
कस्तूरी दशवर्षं तु कर्पूरं वर्षमात्रकम् ॥ ३,१४.४० ॥

ससारमिति संप्रोक्तं चन्दनं सर्वदा स्मृतम् ।
शुद्धन्निः सारभूतांश्च वक्ष्ये शृणु खगेश्वर ॥ ३,१४.४१ ॥

तुषा मेध्या आरनालं पुण्यकं भिः सटा तथा ।

उपोद्व्रजी अलाबूश्च बृहत्कोशातकी तथा ॥ ३,१४.४२ ॥

वृन्ताकं चुक्रशाकश्च बिल्वमौदुंवरं तथा ।
पलाञ्जुर्लशुनं वृन्तं कलञ्जं च तथा द्विजा ॥ ३,१४.४३ ॥

एतत्सर्वत्र काले च निः सारमिति कीर्तितम् ।
एकादश्यां वैश्वदेवं श्राद्धं तर्पणमेव च ॥ ३,१४.४४ ॥

मन्त्रेण प्रेतदहनमसारं परिकीर्तितम् ।
हविर्नारायणो देवो एतांश्च ह्यशुभान्न सान् ॥ ३,१४.४५ ॥

न गृह्णाति न गृह्णाति न गृह्णाति हरिः स्वयम् ।
तथापि सर्वं जानाति जीवानां पापकर्मणाम् ॥ ३,१४.४६ ॥

आस्वादनं कारयति स्वयं नास्वादते हरिः ।
असारभोजनं चैव जीवानां कर्मजं फलम् ॥ ३,१४.४७ ॥

अमुख्यभोजिनो जीवाः कुन्त्याद्या मुख्यभोजिनः ।
शुभानि च पिबेद्विष्णुरशुभं नो पिबेद्विभुः ॥ ३,१४.४८ ॥

को वदेत्तस्य चेष्टां तु पूर्णानन्दो हरिः स्वयम् ।
न तेन सदृशः कोपि देशे काले च विद्यते ।
तस्यावतारान्वक्ष्यहं शृणु पक्षीन्द्रसत्तम ॥ ३,१४.४९ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे वैश्वदेवार्थकसारासारवस्तुविवेको नाम चतुर्दशोध्यायः

श्रीगरुडमहापुराणम् १५

श्रीकृष्ण उवाच ।

अथावता रान्पुरुषाख्यो हरिश्च गतो ध्यानं कर्तुमीशो महात्मा ।
प्रादुर्बभूवाखिलसद्गुणार्णवः स एव विष्णुः स च बीजभूतः ॥ ३,१५.१ ॥

यो बीजभूतः पुरुषाख्य विष्णुः स एवाभूद्वासुदेवो महात्मा ।
सृष्टिं कर्तुं पुरुषाख्यस्य वायोर्मायाख्यायां मूलरूपो यथाऽस ॥ ३,१५.२ ॥

यो वासुदेवस्तु स एव जातः संकर्षणाख्यो खिलसद्गुणात्मा ।
सृष्टिं कर्तुं सूत्रभूतस्य वायोर्जयाख्यायं पूर्णसंवित्परात्मा ॥ ३,१५.३ ॥

स एवं संकर्षणनामधेयः प्रद्युम्ननामा च स एव विश्रुतः ।
सरस्वतीभारतीसर्जनार्थं स एव देव्या मूलरूपो बभूव ॥ ३,१५.४ ॥

सृष्ट्वा युक्तं षोडशभिः कलाभिर्महत्ततत्त्वं सूक्ष्मरूपं स एव ।
साहङ्कारं क्रीडयामास देवः शृणु त्वं वै षोडशाख्याः कलाश्च ॥ ३,१५.५ ॥

भूतानि कर्मेन्द्रियपञ्चकानि ज्ञानेन्द्रियाणीह तथा मनश्च ।
ततो बभूव ह्यनिरुद्धसंज्ञको जीवांश्च संगृह्य सुपूर्णशक्तिः ॥ ३,१५.६ ॥

सोयं विरिञ्च्यादिसमस्तदेवान् स्थूलेन देहेन ससर्ज नाथः ।
तथा स विष्णुः पुरुषाभिधस्तु सनत्कुमारत्वमवाप वीन्द्र ॥ ३,१५.७ ॥

अनन्यसाध्यं ब्रह्मचर्यं च कर्तुं दशेन्द्रियाणां शोषणार्थं सदैव ।
सनन्दनादौ पठितः कुमारस्तस्मान्नान्यो नात्र विचार्यमस्ति ॥ ३,१५.८ ॥

स एव विष्णुः सूकरत्वं ह्यवाप क्षोपणीमुद्धर्तुं दैत्यवपुर्निहन्तुम् ।
हिरण्याक्षं सज्जनानां खगेन्द्र तथा भूमेः स्थापनार्थं च देवः ॥ ३,१५.९ ॥

ततो हरिर्मद्विदासत्वमापानृषेर्भार्यायां यामिन्यां यो महात्मा ।
तत्रावतारे पञ्चरात्रं समग्रमुपादेष्टुं नाप दानं स्वतन्त्रः ॥ ३,१५.१० ॥

स एव विष्णुः समभूद्ब्रदर्यां नारायणाख्यः शमलापहश्च ।
तपस्तप्तुं शिक्षयितुं त्वृषीणां तिरस्कर्तुं ह्यप्सरसां सहस्रम् ॥ ३,१५.११ ॥

ततो हरिः कपिलत्वं ह्यवाप्य तिरोहितान्कालबलेन तत्त्वान् ।
चतुर्विंशतिं संशयं चोद्धरिष्यन्नुपादिशच्चासुरये महात्मा ॥ ३,१५.१२ ॥

स एव दतः समभूद्रमेशोनसूयायामत्रिरूपः परात्मा ।
आन्वीक्षिकिं नाम सुतर्कविद्यामलर्कनाम्ने प्रददात्तां महात्मा ॥ ३,१५.१३ ॥

स एव वंशेप्यभवद्रवेश्च आकूत्यां यः सच्चिदानन्दरूपः ।

स्वायंभुवं यत्तु मन्वन्तरं च देवैः साकं पालयामास वीन्द्र ॥ ३,१५.१४ ॥

स एव विष्णुः स उरुक्रमोभूदाग्नीध्रपुत्र्यां मेरुदेव्यां च नाभेः ।
विद्यारतानां मानिनां सर्वदैवमत्याश्चर्यं दर्शयितुं च वीन्द्र ॥ ३,१५.१५ ॥

ततो हरिर्जगृहे कूर्मरूपं सुरासुराणामुदधिं विमथ्नताम् ।
पृष्ठे धर्तुं मन्दरं पर्वतं च ब्रह्माण्डं वा धर्तुमीशो महात्मा ॥ ३,१५.१६ ॥

ततो हरिः प्रादुरभून्महात्मा धन्वन्तरिर्नाम हरिन्मणिद्युतिः ।
अपथ्यदोषान्परिहर्तुमेव हस्ते गृहीत्वा पूर्णकुभं सुधाभिः ॥ ३,१५.१७ ॥

ततो हरिर्जगृहे श्रीवपुश्च यन्मोहिनीति प्रवदन्ति लोके ।
उद्वृत्तानां दितिजानां महात्मा सम्यक्तेषां वञ्चयितुं हरिर्बलम् ॥ ३,१५.१८ ॥

ततो हरिः प्रादुरभून्महात्मा नृसिंहनामा भगवाननन्तः ।
दैत्यो हिरण्यकशिपुश्च तथोरुदेशे संस्थापितः करजैर्दारितश्च ॥ ३,१५.१९ ॥

ततो हरिर्भगवान्वामनोभूददित्यां वै कश्यपाद्ववदेवः ।
इन्द्रायेदं दातुकामः खगेन्द्र तदर्थं वै पावितुं सोवितुं च ॥ ३,१५.२० ॥

ततो हरिर्जमदग्नेः सुतोभूल्लोके सर्वे पर्शुरामं वदन्ति ।
ब्रह्मद्विषां क्षत्रियाणां च वीन्द्र भूमिं निः क्षत्रां कर्तुकामो महेशः ॥ ३,१५.२१ ॥

ततोभवद्व्यासरूपी स विष्णुश्चतुर्वारं राघवास्यापि पूर्णः ।
पराशरात्सत्यवत्यां बभूव पैलादिभिर्वेदभागांश्च कर्तुम् ॥ ३,१५.२२ ॥

ततो हरी रघुवंशेवतीर्णः कौसल्यायां राघवः सूर्यवंशे ।
समुद्रादोर्विग्रहं कर्तुमीशो हं तुं भूम्यां रावणादींश्च वीन्द्र ॥ ३,१५.२३ ॥

ततो हरिर्व्यासरूपी बभूव अष्टाविंशे द्वपरे ज्ञानरूपी ।
पराशरात्सत्यवत्यां महात्मा स्वयं वेदान् संविभक्तुं च देवः ॥ ३,१५.२४ ॥

ततो हरिः कृष्णरूपी बभूव देवक्यां वै वसुदेवात्स विष्णुः ।
कंसादीन्वै नितरां हन्तुकामः सम्यक्पातुं पाण्डवांश्चापि वीन्द्र ॥ ३,१५.२५ ॥

ततः कलौ संप्रवृत्ते हरिस्तु संमोहनार्थं चासुराणां खगेन्द्र ।
नाम्ना बुद्धो कीकटेषु प्रजातो वेदप्रमाणं निराकर्तुमेव ॥ ३,१५.२६ ॥

ततो हरिः कल्किसंज्ञश्च वीन्द्र उत्पत्स्यते युगयोर्मध्यसंधौ ।
दस्युप्रायान्भूमिपान्वै निहन्तुं नाम्ना हरिर्विष्णुगुप्तस्य गेहे ॥ ३,१५.२७ ॥

केशवाद्याश्चतुर्विंशतिर्वै संकर्षणादयः ।

विश्वादय सहस्रं च पराद्या अमिताः स्मृताः ॥ ३,१५.२८ ॥

अवतारा ह्यसंख्याता विष्णोर्नारायणस्य च ।
स्वयं नारायणास्ते ते नाणुमात्रं विभिद्यते ॥ ३,१५.२९ ॥

बलतोरूपतश्चापि गुणतश्च कथञ्चन ।
अनन्तोनन्तगुणतः पूर्णो विष्णुर्न चान्यथा ॥ ३,१५.३० ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे विष्णोरवतारनिरूपणं नाम पञ्चदशोऽध्यायः

श्रीकृष्ण उवाच ।

महालक्ष्म्याः स्वरूपं च अवतारान्खगेश्वर ।

शृणु सम्यङ्महाभाग तज्ज्ञानस्य विनिर्णयम् ॥ ३,१६.१ ॥

ईशादन्यस्य जगतो ह्यात्मो लोचन एव तु ।

विषयीकुरुते तत्स्याज्ज्ञानं लक्ष्म्याः प्रकीर्तितम् ॥ ३,१६.२ ॥

नित्यावियोगिनी देवी हरिपादैकसंश्रया ।

नित्यमुक्ता नित्यबुद्धा महालक्ष्मीः प्रकीर्तिता ॥ ३,१६.३ ॥

मूलस्य च हरेर्भार्या लक्ष्मीः संप्रकीर्तिता ।

पुंसो हिभार्या प्रकृतिः प्रकृतेश्चा भिमानिनी ॥ ३,१६.४ ॥

सृष्टिं कर्तुं गुणान्वीन्द्र पुरुषेण सह प्रभो ।

तमः पानं तथा कर्तुं प्रकृत्याख्या तदाभवत् ॥ ३,१६.५ ॥

वासुदेवस्य भार्या तु माया नाम्नी प्रकीर्तिता ।

संकर्षणस्य भार्या तु जयेति परिकीर्तिता ॥ ३,१६.६ ॥

अनिरुद्धस्य भार्या तु शान्ता नाम्नीति कीर्तिता ।

कृतिः प्रद्युम्नभार्यापिं सृष्टिं कर्तुं बभूवह ॥ ३,१६.७ ॥

विष्णुपत्नी कीर्तिता च श्रीदेवी सत्त्वमानिनी ।

तमोभिमानिनी दुर्गा कन्यकेति प्रकीर्तिता ॥ ३,१६.८ ॥

कृष्णावतारे कन्येव नन्दपुत्रानुजा हि सा ।

रजोभिमानिभूदेवी भार्या सा सूकरस्य च ॥ ३,१६.९ ॥

वेदाभिमानिनी वीन्द्र अन्नपूर्णा प्रकीर्तिता ।

नारायणस्य भार्या तु लक्ष्मीरूपा त्वजा स्मृता ॥ ३,१६.१० ॥

यज्ञाख्यस्य हरेर्भार्या दक्षिणा संप्रकीर्तिता ॥ ३,१६.११ ॥

जयन्ती वृषभस्यैव पत्नी संपरिकीर्तिता ।

विदेहपुत्री सीता तु रामभार्या प्रकीर्तिता ॥ ३,१६.१२ ॥

रुक्मिणीसत्यभामा च भार्ये कृष्णस्य कीर्तिते ।

इत्यादिका ह्यनन्ताश्चाप्यावताराः पृथग्विधाः ॥ ३,१६.१३ ॥

रमायाः संति विप्रेन्द्र भेदहीनाः परस्परम् ।
अनन्तानन्तगुणकाद्विष्णोर्न्यूनाः प्रकीर्तिताः ॥ ३,१६.१४ ॥
अथ ब्रह्मा च वायुश्च श्रियः कोटिगुणाधमौ ।
वक्ष्ये च ब्रह्मणो रूपं शृणु पक्षीन्द्रसत्तम ॥ ३,१६.१५ ॥
वासुदेवात्समुत्पन्नो मायायां च खगेश्वर ।
स एव पुरुषोनाम विरिञ्च इति कीर्तितः ॥ ३,१६.१६ ॥
अनिरुद्धात्तु शान्तायां महत्तत्त्वतनुस्त्वभूत् ।
तदा महान्विरिञ्चेति संज्ञामाप खगेश्वर ॥ ३,१६.१७ ॥
रजसात्र समुत्पन्नो मायायां वासुदेवतः ।
विधिसंज्ञो विरिञ्चः स ज्ञातव्यः पक्षिसत्तम ॥ ३,१६.१८ ॥
ब्रह्माण्डान्तः पद्मनाभो यो जातः कमलासनः ।
स चर्तुमुखसंज्ञां चाप्यवाप खगसत्तम ॥ ३,१६.१९ ॥
एवं चत्वारिरूपाणि ब्रह्मणः कीर्तितानि च ।
वायोर्नामानि वक्ष्येहं शृणु पक्षीन्द्रसत्तम ॥ ३,१६.२० ॥
संकर्षणाच्च गरुड जयायां यो वभूव ह ।
स वायुः प्रथमो ज्ञेयो प्रधान इति कीर्तितः ॥ ३,१६.२१ ॥
लोकचेष्टाप्रदत्वात्स सूत्रनाम्नापि कीर्तितः ।
बदरीस्थस्य विष्णोश्च धैर्येण स्तवनाय सः ॥ ३,१६.२२ ॥
धृतिरूपं ययौ वायुस्तस्माद्धृतिरिति स्मृतः ।
योग्यानां हरिभक्तानां धृतिरूपेण संस्थितः ॥ ३,१६.२३ ॥
यतो हृदि स्थितो वायुस्ततो वै धृतिसंज्ञकः ।
सर्वेषां च दृदि स्थित्वा स्मरते सर्वदा हरिम् ॥ ३,१६.२४ ॥
अतो वायुःस्थितिर्नाम बभूव खगसत्तम ।
अथवा वायुरेवैकः श्वेतद्वीपगतं हरिम् ॥ ३,१६.२५ ॥
सदा स्मरति वै वीन्द्र अतोसौ स्मृतिसंज्ञकः ।
सर्वेषां च हृदिस्थित्वा ज्ञातो विष्णोरुदीरणात् ॥ ३,१६.२६ ॥
अतो मे मुक्तिनामाभूद्वायुरेव न संशयः ।
ज्ञानद्वारेण भक्तानां मुक्तिदो मदनुज्ञया ॥ ३,१६.२७ ॥

यतो सौ वायुरेवैको मुक्तिनामा भूवह ।
विष्णौ भक्तिं वर्ध्यति भक्तानां हृदि संस्थितः ॥ ३,१६.२८ ॥
अतोसौ विष्णुभक्तश्च कीर्तितो नात्र संशयः ।
एषोसौ सर्वजीवानां चित्तसंज्ञानमेव च ॥ ३,१६.२९ ॥
चित्तरूपो यतो वायुरतश्चित्तमिति स्मृतः ।
प्रभुः प्रभूणां गरुड सोदराणां च सर्वशः ॥ ३,१६.३० ॥
अतस्तु वायुरेवैको महाप्रभुरिति स्मृतः ।
सर्वेषां च हृहि स्थित्वा बलं पश्यति सत्तम ॥ ३,१६.३१ ॥
अतो बलमिति ह्याख्यामवाप विनतासुत ।
सर्वेषां च हृदि स्थित्वा पुत्रपौत्रादिकैर्जनैः ॥ ३,१६.३२ ॥
याजनं कुरुते नित्यमतोसौ यष्टृसंज्ञकः ।
अनन्तकल्पमारभ्य वायुपर्यन्तमेव च ॥ ३,१६.३३ ॥
वक्रत्वं नास्ति योगस्य ऋजुर्योग्य इति स्मृतः ।
योगस्य वक्रता नाम काम्यता हरिपूजने ।
ईशरुद्रादिकानां च काम्येन हरिपूजनम् ॥ ३,१६.३४ ॥
कस्यचित्त्वथ पक्षीन्द्र ह्यतस्त्वनृजवः स्मृताः ॥ ३,१६.३५ ॥
ऋष्यादीनां च मध्येपि काम्येन हरिपूजनम् ।
अतो न ऋजवो ज्ञेया मनुष्याणां च का कथा ॥ ३,१६.३६ ॥
यावत्काम्यसपर्यां वै न जहाति नरोत्तमः ।
तथा ऋष्यादयश्चैव मोक्षस्य परिपन्थिनीम् ॥ ३,१६.३७ ॥
अनादिकालमारभ्य कर्मजन्या च वासना ।
मोक्षाधिकारिणः सर्वे कुर्वते कस्य पूजनम् ॥ ३,१६.३८ ॥
नष्टप्रायं च तत्सर्वं गुरोः संज्ञानबोधकात् ।
प्राप्ययोगं समाचर्य अन्ते मोक्षमवाप्नुयात् ॥ ३,१६.३९ ॥
काम्येन पूजनं विष्णोरैश्वर्यं प्रददाति च ।
ज्ञानं च विपरीतं स्यात्तेन यात्यधरं तमः ॥ ३,१६.४० ॥
तदेव विपरीतं चेज्ज्ञानाय परिकीर्तितम् ।
शिलायां विष्णुबुद्धिस्तु विष्णुबुद्धिर्द्विजे तथा ॥ ३,१६.४१ ॥

सलिले तीर्थबुद्धिस्तु रोणुकायां तथैव च ।
शिवे सूर्ये षण्मुखे च विष्णुबुद्धिः खगेश्वर ॥ ३,१६.४२ ॥
इत्याद्यमखिलं ज्ञानं विपरीतमिति स्मृतम् ।
शिलाद्येषु च सर्वेषु ऐक्येनैव विचिन्तनम् ॥ ३,१६.४३ ॥
विष्णुबुद्धिरिति प्रोक्तं न तु तत्रस्थवेदनम् ।
अनाद्यनन्तकालेपि काम्येन हरिपूजनम् ॥ ३,१६.४४ ॥
यतो नास्ति ततो वायुर्ऋजुर्योग्यः प्रकीर्तितः ।
अन्येषां सर्वदा नास्ति अतो न ऋजवः स्मृताः ॥ ३,१६.४५ ॥
हरिं दर्शयते वापि अपरोक्षेण सर्वदा ।
मोक्षाधिकारिणां काले अतः प्रज्ञेति कथ्यते ॥ ३,१६.४६ ॥
परोक्षेणापि सर्वेषां हरिं दर्शयते सदा ।
अतो वायुः सदा वीन्द्र ज्ञानमित्येव कीर्तितः ॥ ३,१६.४७ ॥
हिताहितोपदेष्टृत्वाद्भक्तानां हृदये स्थितः ।
ततश्च गुरुसंज्ञां चाप्यवाप स च मारुतः ॥ ३,१६.४८ ॥
योगिनां हृदये स्थित्वा सध्यायति हरिं परम् ।
पार्थक्येनापि तं ध्यायन्महाध्यातेति स स्मृतः ॥ ३,१६.४९ ॥
यद्योग्यतानुसारेण विजानाति परं हरिम् ।
रुद्रादौ विद्यमानांश्च गुणाञ्जानाति सर्वदा ॥ ३,१६.५० ॥
अतो वै विज्ञनामासौ प्रोक्तो हि खगसत्तम ।
काम्यानां कर्मणां त्यागाद्विराग इति स स्मृतः ॥ ३,१६.५१ ॥
अथवायोगिनां नित्यं हृदि स्थित्वा स मारुतः ।
वैराग्यं संजनयति विराग इति स स्मृतः ॥ ३,१६.५२ ॥
देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरम् ।
तत्सुखं तूत्तरेषां च वायुपर्यन्तमेव च ॥ ३,१६.५३ ॥
देवानां च ऋषीणां च उत्तमानां नृणां तथा ।
सुखांशं जनयेद्वायुर्यतोतः सुखसंज्ञकः ॥ ३,१६.५४ ॥
भुनक्ति सर्वदा वीद्रं तत्र मुख्यस्तु मारुतः ।
दुः खशोकादिकं किञ्चिद्देवानां भवति प्रभो ॥ ३,१६.५५ ॥

तच्चासुरावेशवशादित्यवेहि न संशयः ।
तज्जीवस्य भवेत्किञ्चिद्दैत्यानां क्रमशो भवेत् ॥ ३,१६.५६ ॥
यतः कलिश्चाधिकः स्यादतो दुः खीति स स्मृतः ।
दैत्यानां पुण्यपापाभ्यां दुःखमेवोत्तरोत्तरम् ॥ ३,१६.५७ ॥
तद्दुःखमुत्तरेषां च कलिपर्यन्तमेव च ।
भुनक्ति सर्वदा वीन्द्र ततः कलिरिति स्मृतः ॥ ३,१६.५८ ॥
सुखहर्षादिकं किंचिद्दैत्यानां भवति प्रभो ।
देवावेशो भवेत्तस्य नात्र कार्या विचारणा ॥ ३,१६.५९ ॥
देवानां निरयो नास्ति दैत्यानां विनतासुत ।
सुखस्वरूपं तन्नास्ति विषयोत्थमपि द्विज ॥ ३,१६.६० ॥
विषयोत्थं किञ्चिदपि देवावेशादुदीरितम् ।
तमो नास्त्येव देवानां दुःखं नास्ति स्वरूपतः ॥ ३,१६.६१ ॥
विषयोत्थं महादुःखं देवानां नास्ति सर्वदा ।
दुःखशोकादिकं किं चिदसुरावेशतो भवेत् ॥ ३,१६.६२ ॥
अतः कलिः सदा दुःखी सुखी वायुस्तु सर्वदा ।
मनुष्याणामृषीणां च सुखं दुःखं खगेश्वर ॥ ३,१६.६३ ॥
भवेत्तत्पुण्यपापाभ्यां पुण्यभोगी च मारुतः ।
कष्टभङ्गः कलिलयो नात्र कार्या विचारणा ॥ ३,१६.६४ ॥
प्राणादिसुखपर्यन्ता अंशा एकोनविंशतिः ।
प्रविष्टाः संति लोकेषु पृथक्संति खगेश्वर ॥ ३,१६.६५ ॥
मारुतरेवतारांश्च शृणु पक्षीन्द्रसत्तम ।
चतुर्दशसु चन्द्रेषु द्वितीयौ यो विरोचनः ॥ ३,१६.६६ ॥
स वायुरिति संप्रोक्त इन्द्रादीनां खगेश्वर ।
हरितत्त्वेषु सर्वेषु स विष्वग्याव्यतेक्षणः ॥ ३,१६.६७ ॥
अतो रोचननामासौ मरुदंशः प्रकीर्तितः।
रामावतारे हनुमान्रामकार्यार्थसाधकः ।
स एव भीमसेनस्तु जातो भूम्यां महाबलः ॥ ३,१६.६८ ॥
कृष्णावतारे विज्ञेयो मरुदंशः प्रकीर्तितः ॥ ३,१६.६९ ॥

मणिमान्नाम दैत्यस्तु संकराख्यो भविष्यति ।
सर्वेषां संकरं यस्तु करिष्यति न संशयः ॥ ३,१६.७० ॥
तेन संकरनामासौ भविष्यति खगेश्वर ।
धर्मान्भागवतान्सर्वान्विनाशयति सर्वथा ॥ ३,१६.७१ ॥
तदा भूमौ वासुदेवो भविष्यति न संशयः ।
यज्ञार्थैः सदृशो यस्य नास्ति लोके चतुर्दशे ॥ ३,१६.७२ ॥
अतः स प्रज्ञया पूर्णो भविष्यति न संशयः ।
अवतारास्त्रयो वायोर्मतं भागवताभिधम् ॥ ३,१६.७३ ॥
स्थापनं दुष्टदमनं द्वयमेव प्रयोजनम् ।
नान्यत्प्रयोजनं वायोस्तथा वैरोचनात्मके ॥ ३,१६.७४ ॥
अवतारत्रये वीन्द्र दुःखं गर्भादिसंभवम् ।
नास्ति नास्त्येव वायोस्तु तथा वैरोचनादिके ॥ ३,१६.७५ ॥
शुक्रशोणितसंबन्धो ह्यवतारचतुष्टये ।
नास्ति नास्त्येव पक्षीन्द्र यतो नास्त्यशुभं ततः ॥ ३,१६.७६ ॥
पूर्वं गर्भं समाशोष्य समये प्रभवस्य च ।
प्रादुर्भवति देवेशी ह्यवतारचतुष्टये ॥ ३,१६.७७ ॥
त्रयोविंशतिरूपाणां वायोश्चैव खगेश्वर ।
रूपैर्ऋजुस्वरूपैश्च ब्रह्मणः परमेष्ठिनः ॥ ३,१६.७८ ॥
सत्यमेव न संदेहो नित्यानन्दसुखादिषु ।
एवमेव विजानीयान्नान्यथा तु कथञ्चन ॥ ३,१६.७९ ॥
एतस्य श्रवणादेव मोक्षं यान्ति न संशयः ।
तदनन्तरजान्वक्ष्ये शृणु पक्षीन्द्रसत्तम ॥ ३,१६.८० ॥
कृतौ प्रद्युम्नतश्चैव समुत्पन्ने खगेश्वर ।
स्त्रियौ द्वे यमले चैव तयोर्मध्ये तु यद्यिका ॥ ३,१६.८१ ॥
वाणीतिसंज्ञकां वीन्द्र ब्रह्माणीसंज्ञकां विदुः ।
पुरुषाख्यविरिञ्चस्य भार्या सावित्रिका मता ।
चतुर्मुखस्य भार्या तु कीर्तिता सा सरस्वती ॥ ३,१६.८२ ॥
एवं त्रिरूपं विज्ञेयं वाण्याश्च खगसत्तम ।

वक्ष्येऽवतारान् भारत्याः समाहितमनाः शृणु ॥ ३,१६.८३ ॥
सर्ववेदाभिमानित्वात्सर्ववेदात्मिका स्मृता ।
महाध्यातुश्च वायोस्तु भार्या सा परिकीर्तिता ॥ ३,१६.८४ ॥
ज्ञानरूपस्य वायोस्तु भार्या सा परिकीर्तिता ।
सदा सुखस्वरूपत्वाद्भारती तु सुखात्मिका ॥ ३,१६.८५ ॥
सुखस्वरूप वायोस्तु भार्या सा परिकीर्तिता ।
गुरुस्तु वायुरेवोक्तस्तस्मिन् भक्तियुता सती ॥ ३,१६.८६ ॥
ततस्तु भारती नित्या गुरुभक्तिरिति स्मृता ।
महागुरोर्हि वायोश्च भार्या वै परिकीर्तिता ॥ ३,१६.८७ ॥
हरौ स्नेहयुतत्वाच्च हरिप्रीतिरिति स्मृता ।
धृतिरूपस्य वायोश्च भार्या सा परिकीर्तिता ॥ ३,१६.८८ ॥
सर्वमन्त्राभिमानित्वात्सर्वमन्त्रात्मिका स्मृता ।
महाप्रभोश्च वायोश्च भार्या वै सा प्रकीर्तिता ॥ ३,१६.८९ ॥
भुज्यन्ते सर्वभोगास्तु विष्णुप्रीत्यर्थमेव च ।
अतस्तु भारती ज्ञेया भुजिनाम्ना प्रकीर्तिता ॥ ३,१६.९० ॥
चित्ररूपस्य वायोस्तु भार्या सा परिकीर्तिता ।
रोचनेन्द्रस्य भार्या च श्रद्धाख्या परिकीर्तिता ॥ ३,१६.९१ ॥
हनुमांश्च तदा जज्ञे त्रेतायां पक्षिसत्तम ।
तदा शिवाख्यविप्राच्च जज्ञे सा भारती स्मृता ॥ ३,१६.९२ ॥
न केवलं भारती सा शच्याद्यैश्चैव संयुता ।
तस्मिन्संजनिताः सर्वाः प्रापुर्योगं स्वभर्तृभिः ॥ ३,१६.९३ ॥
अन्यगेति च विज्ञेया कन्या तन्मतिसंज्ञिका ।
त्रेतान्ते सैव पक्षीन्द्र शच्याद्यैश्चैव संयुता ॥ ३,१६.९४ ॥
दमयन्त्यनलाज्जाता इन्द्रसेनेति चोच्यते ।
नलं नन्दयते यस्मात्तस्माच्च नलनन्दिनी ॥ ३,१६.९५ ॥
तत्र स्वभर्तृसंयोगं नैव चाप खगेश्वर ।
तत्रान्यगात्वं विज्ञेयं पुरुषस्थेन वायुना ॥ ३,१६.९६ ॥
किञ्चित्कालं तथा स्थित्वा कन्यैव मृतिमाप सा ।

शच्यादिसंयुता सैव द्रुपदस्य महात्मनः ॥ ३,१६.९७ ॥
वेदिमध्यात्समुद्भूता भीमसेनार्थमेव च ।
तत्रान्यगात्वं नास्त्येव योगश्च सह भर्तृभिः ॥ ३,१६.९८ ॥
केवला भारती ज्ञेया काशिराजस्य कन्यका ।
काली नाम्ना तु सा ज्ञेया भीमसेनप्रिया सदा ॥ ३,१६.९९ ॥
वाच्यादिभिः संयुतैव द्रौपदी द्रुपदात्मजा ।
देहं त्यक्त्वाविशिष्टैव कारटीग्रामसंज्ञके ॥ ३,१६.१०० ॥
संकरस्य गृहे वीन्द्र भविष्यति कलौ युगे ।
वायोस्तृतीयरूपार्थं सा कन्यैव मृतिं गता ॥ ३,१६.१०१ ॥
इत्याद्या वायुभार्याश्च ब्रह्मभार्याश्च सत्तम ।
स्वभर्तृभ्यां च पक्षीन्द्र गुणैश्चैव शताधमाः ॥ ३,१६.१०२ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे महालक्ष्म्यवतारादिनिरूपणं नाम षोडशोऽध्यायः

श्रीगरुडमहापुराणम् १७

गरुड उवाच ।
चतुर्जन्मसु वै कृष्ण शच्याद्यैः सह भारती ।
एकदेह विशिष्टैव भुवि जातेति चोक्तवान् ॥ ३,१७.१ ॥

कारणं ब्रूहि मे ब्रह्मन् शिष्याय तव सुव्रत ।
गरुडेनैवमुक्तस्तमुवाच मधुसूदनः ॥ ३,१७.२ ॥

श्रीकृष्ण उवाच ।
विशिष्टदेहसं प्राप्तौ भारत्याः पक्षिसत्तम ।
वक्ष्यामि कारणं वीन्द्र सावधानमनाः शृणु ॥ ३,१७.३ ॥

पुरा कृतयुगे वीन्द्र रुद्रभार्या च पार्वती ।
इन्द्रभार्या शची देवी यम भार्याच शामला ॥ ३,१७.४ ॥

अश्विभार्या उषा देवी भर्तृभिः सहिता खग ।
ब्रह्मलोकं ययुस्तत्र ब्रह्माणं ददृशुस्तदा ॥ ३,१७.५ ॥

हावं भावं विलासं च दर्शयामासुरञ्जसा ।
दृष्ट्वा ता उद्धता ब्रह्मा शशाप खगसत्तम ॥ ३,१७.६ ॥

उद्धताश्च यतो यूयं मानुषीं योनिमाप्स्यथ ।
तत्र स्वभर्तृसंयोगमवाप्स्यथ खगेश्वर ॥ ३,१७.७ ॥

एवं शप्तास्तु ताः सर्वा आजग्मुर्मेरुपर्वतम् ।
तत्रोपविष्टं ब्रह्माणं वञ्चयामासुरञ्जसा ॥ ३,१७.८ ॥

तूष्णीमेव स्थिते वीन्द्र वञ्चयन्त्यः स्थिताः पुनः ।
ततस्तूष्णीं स्थितं वीन्द्र वञ्चयामासुरञ्जसा ॥ ३,१७.९ ॥

त्रिवारानन्तरं ब्रह्मा शप्तवांस्ता महाप्रभुः ।
त्रिवारं वञ्चनं यस्मादेकवारं च दर्शनम् ॥ ३,१७.१० ॥

किं चाश्रुत्वातः पश्चाच्चतुर्जन्मसु भूतले ।
एकदेहान्मानुषत्वं भविष्यति न संशयः ॥ ३,१७.११ ॥

द्वितीये जन्मनि तथा अन्यगात्वमवाप्स्यथ ।
तृतीये जन्मनि तथा भर्तृसंयोग माप्स्यथ ॥ ३,१७.१२ ॥

जन्मन्याद्ये चतुर्थे च नान्यगात्वमवाप्स्यथ ।
तथा स्वभर्तृसंयोगं नावाप्स्यथ च सर्वशः ॥ ३,१७.१३ ॥

एवं शप्तास्तु ताः सर्वा ब्रह्मणा पक्षिसत्तम ।
तदा विचारयामासुर्मिलित्वा मेरुमूर्धनि ॥ ३,१७.१४ ॥

ब्रह्मशापस्त्वनिर्वाय उपायैः शतशोपि च ।
नीचैः समागमो निन्द्यस्तथैव च विपत्तिदः ॥ ३,१७.१५ ॥

उत्तमेन च संगेन दैवेनाप्यर्थदो भवेत् ।
देवानामुत्तमो वायुस्तदर्थं संगमाचरेत् ॥ ३,१७.१६ ॥

विचार्यैवमुमाद्या भारत्याः सेवां तु चक्रिरे ।
सहस्रवत्सरान्ते सा भारती तोषिताब्रवीत् ॥ ३,१७.१७ ॥

मत्सेवां च किमर्थं वै ह्याचरिष्यन्ति सुव्रताः ।
तस्यां रक्ताश्च ता देव्यस्त्वब्रुवन्स्वचिकीर्षितम् ॥ ३,१७.१८ ॥

पुरा वयं तु शप्ताः स्म ब्रह्मणा क्रोधरूपिणा ।
एकदेहान्मानुषत्वमवाप्स्यथ वराङ्गनाः ॥ ३,१७.१९ ॥

चतुर्थजन्मन्यप्येवं द्वितीये जन्मनि प्रभो ।
समाप्स्यथान्यगात्वं चेत्येवं शप्ता ह भामिनि ॥ ३,१७.२० ॥

अस्माकं वायुना देवेनान्यगात्वं न दोषभाक् ।
अतस्त्वयैकदेहत्वमिच्छामो देवि जन्मसु ॥ ३,१७.२१ ॥

हत्युक्ता ताभिरथ च तथैत्युक्त्वा द्विजोत्तम ।
सा पार्वत्यादिभिर्युक्ता भारतीत्यभवद्भुवि ॥ ३,१७.२२ ॥

शिवनाम्नो द्विजस्यैव गृहे सा तु कुमारिका ।
कर्मैक्यार्थं तपश्चक्रेः विष्णोश्च शिवसंज्ञिनः ॥ ३,१७.२३ ॥

तपसा तोषिता विष्णुः शिव संज्ञो महाप्रभुः ।
वरं प्रादात्तृतीयेस्मिन्कृष्णजन्मनि भो स्त्रियः ॥ ३,१७.२४ ॥

सम्यक्त्वभर्तृसंयोगो भविष्यति विना भवम् ।
यतोनया च पार्वत्या प्रेरिता एव सर्वशः ॥ ३,१७.२५ ॥

विलासं दर्शयामास ब्रह्मणः परमेष्ठिनः ।
अतः सा पार्वाती श्रेष्ठा ब्रह्मदेहे न संशयः ॥ ३,१७.२६ ॥

कृष्णदेहेपि तस्यास्तु न भविष्यति संगमः ।
अन्यगात्वं द्वितीयेस्मिन्भविष्यति न संशयः ॥ ३,१७.२७ ॥

रुद्रान्तः स्थो हरिश्चैव वहं दत्त्वा स्त्रियां प्रभुः ।
अन्तर्धानं ययौ श्रीमान्स्वलोकं गतवानभूत् ॥ ३,१७.२८ ॥

विसृज्य ताश्च तं देहं बभूवुर्नलकन्यकाः ।
इन्द्रसेनेति संज्ञां च लब्ध्वा ताश्च तपोवनम् ॥ ३,१७.२९ ॥

ययुस्तत्र चरन्त्यस्ता ददृशुर्मुद्गलं त्वृषिम् ।
तस्य दर्शनमात्रेण बभूवुः काममोहिताः ॥ ३,१७.३० ॥

मुद्गलस्याभिमानं हि नाशयित्वा च मारुतः ।
रमयामास तत्रस्था भारत्यादिवराङ्गनाः ॥ ३,१७.३१ ॥

तद्देहेन विसृष्टा सा बभूव द्रौपदीति च ।
यस्मात्सा द्रुपदाज्जाता तस्मात्सा द्रौपदी स्मृता ॥ ३,१७.३२ ॥

वेदिमध्यात्समुद्भूता तस्मात्सायोनिजा स्मृता ।
कृष्णवर्णा यतस्तस्मात्सा कृष्णा भूतले स्मृता ॥ ३,१७.३३ ॥

कृष्णादेहपि भारत्या अभिमानः सदा स्मृतः ।
शच्यादेरभिमानस्तु तस्मिन्देहे कदाचन ॥ ३,१७.३४ ॥

यस्याः स्वभर्तृसंयोगकाले च खगसत्तम ।
अभिमानस्तदैव स्यात्तस्या एव न चान्यथा ॥ ३,१७.३५ ॥

एतासां रमणे काले उमायाः पक्षिसत्तम ।
अभिमानश्च नास्त्येव स्वाप एव रताः सदा ॥ ३,१७.३६ ॥

पार्थस्य रमणे काले द्रौपद्याश्च कलेवरे ।
भारत्याश्च तथा शच्या अभिमानद्वयं स्मृतम् ॥ ३,१७.३७ ॥

उमादेः श्याम लादेश्च अभिमानक्षतिस्तदा ।
सर्वासां स्वाप एव स्यान्नात्र कार्या विचारणा ॥ ३,१७.३८ ॥

अर्जुनं वीररूपेण प्रविष्टो वायुरेव च ।
भारतीं रमते नित्यं शामलां च युधिष्ठिरः ॥ ३,१७.३९ ॥

सुंदरेण च रूपेण प्रविष्टो नकुले मरुत् ।
रमते भारतीं नित्यं नकुलश्चाप्युषां खग ॥ ३,१७.४० ॥

नीतिरूपेण चाविष्टो सहदेवे च मारुतः ।
द्रौपदीं रमते नित्यं सहदेवोत्पयुषां खग ॥ ३,१७.४१ ॥

शच्याद्या द्रौपदीदेहे नापुः संगं च मारुतः ।
तासामतोन्यगामित्वं कृष्णादेहे न चिन्तयेत् ॥ ३,१७.४२ ॥

धर्मादिदेहसंगं च भारत्या नैव चिन्तयेत् ।
मनुजस्य च देहस्य तासां संगं चिन्तयेत् ॥ ३,१७.४३ ॥

अपरोक्षवतीनां तु तासां लेपो न सर्वथा ।
अथवा मुद्गलस्येव रतिकाले खगेश्वर ॥ ३,१७.४४ ॥

रमणं चक्रुरेवं ता अतो दोषो न विद्यते ।
एकस्मिन्दिवसे वीन्द्र धर्मो वायुश्च तावुभौ ॥ ३,१७.४५ ॥

रमणं चक्रतुः सम्यक्कृष्णादेहेऽपि मानद ।
तथाप्यनन्यागामित्वं चिन्तनीयं न संशयः ॥ ३,१७.४६ ॥

सुराणां सुरभोग्याश्च भोगं जानन्ति देवताः ।
न जानन्त्येव मर्त्यास्तु तेषु देहेषु ते पुनः ॥ ३,१७.४७ ॥

नीरक्षीरविविकं च हंसो वेत्ति न चापरः ।
अतः स्वभर्तृसंयोगं कृष्णादेहेन चिन्तयेत्कृष्णादेहेन्यगामित्वं नैव चिन्त्यं खगेश्वर ॥ ३,१७.४८ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे भारत्या विशिष्टदेह संप्राप्त्यै कारणनिरूपणं नाम सप्तदशोऽध्यायः

श्रीकृष्ण उवाच ।

अथानन्तरजान्वक्ष्ये शृणु पक्षीन्द्रसत्तम ।

शृणु तान्सावधानेन श्रुत्वा तानवधारय ॥ ३,१८.१ ॥

पुरुषाख्यविरिञ्चानुजातः शेषो महाबलः ।

हरे रमायाश्च यस्य स्वस्मिन्निद्रां प्रकुर्वतः ॥ ३,१८.२ ॥

शयनार्थमभूदेष तेन कृत्यं हरेर्न तु ।

सर्वदा हरिदासोहं सर्वदा हरिपूजकः ॥ ३,१८.३ ॥

हरे सदा नमामि त्वां बहु जन्मनि जन्मनि ।

एवं बुद्धा तु गरुडो ह्यभूच्च शयनं हरेः ॥ ३,१८.४ ॥

सूत्रनाम्नस्तथा वायोः सदायं विनतासुत ।

कालनामा च गरुडो वाहनार्थं हरेरभूत् ॥ ३,१८.५ ॥

ततो महत्तत्त्वतनोर्विरिञ्चात्तु खगेश्वर ।

अहं कारात्मको रुद्रः समभूत्सोवितुं हरिम् ॥ ३,१८.६ ॥

त्रय एते महाभाग परस्परसमाः स्मृताः ।

गायत्रीभारतीभ्यां ते त्रयः शतगुणा वराः ॥ ३,१८.७ ॥

शेषः स एव विज्ञेयो भक्तो नारायणस्य च ।

विष्णोर्वायोरनन्तस्य त्रिभिरंशैर्युतः सदा ॥ ३,१८.८ ॥

सुमित्रांशो दशरथाज्जातो यो लक्ष्मणः खग ।

सोपि शेषस्तु विज्ञेयो वाय्वनन्तांशसंयुतः ॥ ३,१८.९ ॥

रामस्य सेवां कर्तुं सा सीता भूम्यां खगाधिप ।

बलभद्रस्तु रोहिण्यां वसुदेवादभूत्खग ॥ ३,१८.१० ॥

सोयमेप तु विज्ञेयस्त्वंशद्वयसमन्वितः ।

आविष्टः शुक्लकृष्णे हरिणा रोहिणीसुतः ॥ ३,१८.११ ॥

त्रय एते माहाभागावताराः फणिनः स्मृताः ।

न वीन्द्रास्यावतारोस्ति भूम्यां चाज्ञा तथा हरेः ॥ ३,१८.१२ ॥

रुद्रावतारान्वक्ष्येहं ताञ्छृणु त्वं समाहितः ।

योहङ्कारात्मको रुद्रः स एवाभूत्खगेश्वर ॥ ३,१८.१३ ॥

सदाशिव इति त्वाख्यामवाप स विनाशकः ।

तमोभिमानी स ज्ञेयस्त्वशिवत्वात्सदाशिवः ॥ ३,१८.१४ ॥

कपालमालामशिवां सदा धारयते यतः ।

अतः सदाऽशिवो ज्ञेयो न च भागवतः शिवः ॥ ३,१८.१५ ॥

गजाजिनं चापवित्रं यतो धारयते हरः ।

लोकानमङ्गलान्सर्वान्हरते च सदा हरः ॥ ३,१८.१६ ॥

हर्याज्ञया सदा लोकान्विषयासक्तचेतसः ।

विमुखान्कुरुते यस्माद्विष्णोस्तस्मात्सदाशिवः ॥ ३,१८.१७ ॥

कदाचिदसुरावेशाद्विरुद्धं कुरुते हरः ।

अतः सदाशिवो ज्ञेयो न च भागवतः शिवः ॥ ३,१८.१८ ॥

सोयं श्मशानवसतिं कर्तुमैच्छद्यतो हरः ।

अतः सदाशिवो ज्ञेयो न च भागवतः शिवः ॥ ३,१८.१९ ॥

दशवर्षं तपः कर्तुं विवेश लवणांभसि ।

अतो रुद्रस्तपः संज्ञामवाप च खगोत्तम ॥ ३,१८.२० ॥

व्यासपुत्रः शुकः प्रोक्तो वायोरावेशसंयुतः ।

रुद्रावतारो विज्ञेयो ज्ञानार्थमभवद्भुवि ॥ ३,१८.२१ ॥

अत्रिपत्न्यनुसूयायां जज्ञे रुद्रो महातपाः ।

दुर्वासास्तु स विज्ञेयो मानभङ्गाय भूभृताम् ॥ ३,१८.२२ ॥

द्रोणाज्जातो द्रौणिसंज्ञो रुद्र एव प्रकीर्तितः ।

प्रारब्धं भोक्तुकामोसौ परपक्षप्रकाशकः ॥ ३,१८.२३ ॥

ईशानकोणे संस्थितो यस्तु रुद्रो ह्यवाप वै वामदेवेति संज्ञाम् ।

स्ववामभागे संस्थितं चैव वायुस्तं योग्यभक्तं सेवते सर्वदैव ॥ ३,१८.२४ ॥

अतो रुद्रो वामदेवेति संज्ञा मवाप शिष्टत्वमथोत्तमत्वम् ।

कालात्मकत्वं च बलात्मकत्वमवाप रुद्रो न तु सुंदरत्वतः ॥ ३,१८.२५ ॥

सदा रुद्रो त्रिपुरस्थांश्च दैत्यान्विष्णुदुहो हन्तु कामो महात्मा ।

अघोररूपं धृपवान्रुद्र एव ततस्त्वघोरेति स आप संज्ञाम् ॥ ३,१८.२६ ॥

सेवां कर्तुं त्विच्छतो दैत्यसंघान्किञ्चित्कालं तपसा क्लिश्यमानान् ।

वरान्दातुं सद्य एवाभिजातः सद्योजातेत्येव संज्ञामवाप ॥ ३,१८.२७ ॥
उरोः पुत्रस्तु और्वश्च रुद्र एव प्रकीर्तितः ।
इत्यकृष्टवाचित्वाद्रुस्तुरोदनवाचकः ॥ ३,१८.२८ ॥
उरू रुद्रो ह्यतः प्रोक्तस्तत्पुत्रश्चौर्वसंज्ञकः ।
रुद्रमुर्वरितं कर्तुमौर्वोभूद्रुद्र एव सः ॥ ३,१८.२९ ॥
गरुड उवाच ।
रोदनं कुरुते कस्मादुरुसंज्ञो हरे हरः ।
रुदमुर्वरितं कस्मात्कुरुते और्वाकारकः ॥ ३,१८.३० ॥
एतद्विस्तार्य मेब्रूहि पौत्राय तव सुव्रत ।
इत्युक्तस्तेन स हरिरुवाच करुणानिधिः ॥ ३,१८.३१ ॥
श्रीकृष्ण उवाच ।
दृष्ट्वा स्वबिंबं सुगुणैस्तु पूर्णं संकर्षणाख्यं नतपादपद्मम् ।
श्रीब्रह्मशेषैर्जिष्णुकामैस्तथान्यैर्भारत्या वै स्वस्ति पैश्चापि नित्यम् ॥ ३,१८.३२ ॥
दृष्ट्वा हरिं पुलकाङ्गस्तु रुद्रः सभाष्पचक्षू रुद्धकण्ठश्च हृष्टः ।
अनाद्यनन्तब्रह्मकल्पेषु नैव कृतं यया स्मरणं सर्वदैव ॥ ३,१८.३३ ॥
पादारविन्दे सुनखैर्विभूषिते दृष्टे मया केन पुण्येन देव ।
दृष्ट्वादृष्ट्वा पादपद्मं मुरारेः पुनः पुना रुद्धकण्ठो बभूव ॥ ३,१८.३४ ॥
रुरोद रुद्रो भयकंपिताङ्गः कथं पुनर्दर्शनं मे प्रभोः स्यात् ।
मुकुन्द नारायण विश्वमूर्ते वागिन्द्रियेण स्तवनं मे कथं स्यात् ॥ ३,१८.३५ ॥
मद्दर्शनं सर्वदा पापुयुक्तं तथा मद्वाक्सर्वदा पापयुक्ता ।
मद्दर्शनं सर्वदा स्त्रीषु सक्तमभूच्च ते दर्शनं मे ह्यसक्तम् ॥ ३,१८.३६ ॥
आसक्तता पुत्रदारादिकानां सम्यक्शक्तिस्तवने नास्ति विष्णोः ।
विष्णुस्तुतौ नावकाशोस्ति वाचो दृष्टोहं त्वं केन पुण्येन देव ॥ ३,१८.३७ ॥
अनन्तकर्णेश सुचन्द्रसंज्ञ श्रोत्रेण नित्यं न कथा श्रुता ते ।
श्रुता मया बहुधा लोकवार्ता दृष्टो मया त्वं केन पुण्येन देव ॥ ३,१८.३८ ॥
दृष्ट्वादृष्ट्वा पादपीठं हरेश्च पुनः पुना रुद्धङ्कठो बभूव ।
रुरोद रुद्रो भयकंपिताङ्गः कथं पुनः श्रवणं स्यात्कथायाः ॥ ३,१८.३९ ॥
त्वमीश वैकुण्ठ सुवायुसंज्ञस्त्वदर्पितं गन्धपुष्पादिकं च ।

सदा न लिप्तं च भुजैर्विलिप्तं तन्मूत्रविष्ठादिमकर्दमाम्बुभिः ॥ ३,१८.४० ॥
स्त्रीणां कुचोदैश्च कचोदकैश्चकक्षोदकैर्गात्रजलैर्मुकुन्द ।
अनर्पितैर्वस्त्रगन्धादिकैश्च दृष्टो मया केन पुण्येन देव ॥ ३,१८.४१ ॥
स्पृष्ट्वास्पृष्ट्वा हरिनिर्माल्यगन्धं पुनः पुना रुद्धकण्ठो बभूव ।
रुरोद रुद्रो भयकंपिताङ्गः कथं पुनः स्पर्शनं स्यात्सदा मे ॥ ३,१८.४२ ॥
नृसिंह नासास्थित नासिकेश मन्नासया क्वापि सुपद्मसौरभम् ।
नाघ्रातमित्थं पुनराघ्रातमेव ह्यनर्पितं गन्धपुष्पादिकं च ॥ ३,१८.४३ ॥
सुनासिकं सुष्ठुदन्तं मुरारे दृष्टं मुखं केन पुण्येन देव ।
घ्रात्वा घ्रात्वा विष्णुनिर्माल्यगन्धं पुनः पुना रुद्धकण्ठो बभूव ॥ ३,१८.४४ ॥
रुरोद रुद्रो भयकंपिताङ्गो जिघ्रामि निर्माल्यमिदं कथं ते ।
जिह्वास्थितो जिह्व संज्ञो मुरारे जिह्वेन्द्रियेणापि तथार्पितं च ॥ ३,१८.४५ ॥
नैवेद्यशेषं तुलसीविमिश्रितं विशेषतः पादजलेन सिक्तम् ।
यो स्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥ ३,१८.४६ ॥
एतादृशं तव नैवेद्यशेषं न भुक्तं वै सर्वदादित्यरूपम् ।
अनर्पितं तव देवस्य विष्णोर्भुक्तं मया बहुवारं मुकुन्द ॥ ३,१८.४७ ॥
पादारविन्दे नार्पितं भक्ष्यभोज्यं दृष्टो मया केन पुण्येन देव ।
भुक्त्वाभुक्त्वा हरिनैरवेद्यजातं सुखं त्वदीयं रमया लालितं च ॥ ३,१८.४८ ॥
द्युभ्वाश्रयं तव मूर्धानमाहुः किरीटयुक्तं कुटिलैः कुन्तलैश्च ।
अनेकजन्मार्जितपुण्यसंचयैर्दृष्टं मया सज्जनसंगमाच्च ॥ ३,१८.४९ ॥
अनेकजन्मार्जितपापसंचयैरदर्शनं यास्यति देवदेव ।
एवं सुभक्त्या च रुरोद रुद्रो दृष्ट्वा हरिं सुर्वगुणैः संपूर्णम् ॥ ३,१८.५० ॥
पादारविन्दं तव विश्वमूर्ते योगीश्वरैर्हृदये संगृहीतम् ।
दृष्टं मया दयया वासुदेव द्रक्ष्ये कथं पुनरित्थं रुरोद ॥ ३,१८.५१ ॥
दृष्टं मया त्वरिवले भविनाशिशङ्खचक्रादिकैस्त्रिजगतापि च देव पूर्णम् ।
एतादृशं त्वदुदरं च कथं रमेश द्रक्ष्ये पुनः पुनरहं त्विति संरुरोद ॥ ३,१८.५२ ॥
आनन्दपूर्ण नखपूर्ण सुकेशपूर्ण लोमादिपूर्ण गुणपूर्ण सुघोणपूर्ण ।
वक्षः स्थलं तव विभोस्तु विशालभूतं सद्भूषणं विमलकौस्तुभशोभि लक्ष्म्या ॥ ३,१८.५३ ॥
सुकोमलं श्रीतुलस्यास्तथैव सुपुष्पितं चन्द नैश्चर्चितं च ।

एतादृशं तव वक्षः स्थलं च दृष्टं मया तव कारुण्यदृष्ट्या ॥ ३,१८.५४ ॥
पुनः पुनर्दर्शनं मे कथं स्यादेवं रुद्रः स च भक्त्या रुरोद ।
अतस्तूरुर्नाम संप्राप्य रुद्रस्तत्पुत्रोभूद्दौर्वसंज्ञः स एव ॥ ३,१८.५५ ॥
यस्माद्रुदं चोर्वरितं वै चकार तस्मात्स रुद्रस्त्वौर्वसंज्ञो बभूव ।
और्वस्तु लोकान्मोक्षयोग्यांश्च दृष्ट्वा ह्यत्यन्तं वै विषयेष्वेव निष्ठान् ॥ ३,१८.५६ ॥
स्तूद्दैव चौर्वो विष्णुपादारविदं स्मृत्वास्मृत्वा रुद्धकण्ठो बभूव ।
ते पापिष्ठाः पापरूपान्भजन्तो दिनेदिने दुर्विषयान्कदिन्द्रियैः ॥ ३,१८.५७ ॥
कदा चैतान्हेयबुद्ध्या विमुञ्चे न जानेहं चेति सम्यग्रुरोद ।
एते हि मूर्खा विषयानर्थलब्ध्यै कुर्वन्ति यत्नं परमादरेण ॥ ३,१८.५८ ॥
कदिन्द्रियार्थं हि धनादिकं च त्यजन्ति च सर्वे विषयेषु निष्ठाः ।
त्वन्मायया मोहितान्नष्टबुद्धीन्कदा चैतान्मुञ्चसे विश्वमूर्ते ॥ ३,१८.५९ ॥
स्मृत्वास्मृत्वा वासुदेवस्य मायां रुरोद चौर्वो भयकंपिताङ्गः ।
अतीव कष्टेन च लोकवृत्त्या श्रिता दैन्यं स्वीयकार्यं विहाय ॥ ३,१८.६० ॥
अतीव दैन्येन धनादिकं च संपाद्य सर्वेऽपि सुपापशीलाः ।
कष्टार्जितं द्रव्यधनादिकं च त्यजन्ति सर्वे पशवो व्यर्थमेव ॥ ३,१८.६१ ॥
सत्पात्रभूते विष्णुबुद्ध्या कदापि त्यजन्ति नैते मायया वै मुरारेः ।
एषामायुर्व्यर्थमाहुर्महान्तः कथं नष्टा इति सम्यग्रुरोद ॥ ३,१८.६२ ॥
एषामायुर्व्यर्थमेवं गतं च एषां दृष्ट्वा यौवनं तु ध्रुवं च ।
स्कन्धस्थमृत्युर्हसते कृष्ण विष्णो तं वै न जानन्ति विमूढचेतसः ॥ ३,१८.६३ ॥
गृहं मदीयं शतवर्षं च जीवेत्पुत्रा मदीया शवतवर्षं तथैव ।
अहं च जीवे शतवर्षं सुखेन मदीयभार्यापि सुलक्षणाऽस्ते ॥ ३,१८.६४ ॥
गावश्च मे संति सदुग्धपूर्णा मित्राणि मे संति मुदा हि युक्ताः ।
दास्ये सुतं वारणार्थं तु वध्वै पुत्रीं विवाहार्थमहं ददामि ॥ ३,१८.६५ ॥
दास्ये चाहं सत्सु पुत्रीं धनं वा दास्ये चाहं धनिकेष्वेव नित्यम् ।
अदृष्टशून्यान् भगवान्वासुदेवो दृष्ट्वादृष्ट्वा हसते सर्वदैव ॥ ३,१८.६६ ॥
नाहं करिष्ये श्रवणं कथाया मद्भाग्यना शश्च भविष्यतीति ।
नाहं हरिं पूजयिष्ये सदैव पुत्रादिनाशश्च भविष्यतीति ॥ ३,१८.६७ ॥
कालेकाले दिष्टनामा हरिस्तु फलप्रदो वासुदेवोऽखिलस्य ।

एतादृशान्मूर्खजनांश्च दृष्ट्वा रुरोद चौर्वो वासुदेवैकनिष्ठः ॥ ३,१८.६८ ॥

अतस्त्वौर्वो रुद्ररूपी खगेन्द्र जानीहि नित्यं कृष्णसुशिक्षितार्थः ।

यदा सती दक्षपुत्री खगेन्द्र दक्षाध्वरे स्वशरीरं विसृज्य ॥ ३,१८.६९ ॥

जज्ञे पुनर्मेनकायां हिमाद्रेस्तदा रुद्रस्त्वौर्वसंज्ञा मवाप ।

ऊर्ध्वरेता भवेत्युक्त्वा ऊर्ध्वरेता बभूव ह ॥ ३,१८.७० ॥

पाणिग्राहं रुद्रदेवो महात्मा यदा हिमाद्रेः कन्यकायाश्चकार ।

तस्यां परं लंपटः संबभूव अतो रुद्रः परसंज्ञामवाप ॥ ३,१८.७१ ॥

सदाशिवाद्या दश रुद्रभ्रातरः सौमित्रेयो हौहिणेयस्त्रयश्च ।

समा एते मोक्षकाले सृतौ च शतैर्गुणैर्न्यूनभूताश्च ताभ्याम् ॥ ३,१८.७२ ॥

गरुड उवाच ।

आनन्दनिर्णयं ब्रूहि कृष्ण पूर्णदयानिधे ।

निर्णेतुं ज्ञानिनां यद्वज्ज्ञापनार्थं तथा मम ॥ ३,१८.७३ ॥

ब्रूहि शिष्याय दयया उद्धर्तुं मां च सर्वदा ।

पूर्णकामस्य ते कृष्ण का स्पृहा विद्यते प्रभो ॥ ३,१८.७४ ॥

एवमुक्तो हृषीकेशः पक्षीशेन महात्मना ।

उवाच कृपया कृष्णः प्रसन्नः कमलेक्षणः ॥ ३,१८.७५ ॥

श्रीकृष्ण उवाच ।

गायत्र्याश्च शतानन्द एकानन्दस्तु वेधसः एतादृशः शतानन्दो ब्रह्मणः परिकीर्तितः ॥ ३,१८.७६ ॥

शेषादेश्च शतानन्दः सरस्वत्याः खगोत्तम ।

एकानन्दस्तु विज्ञेयो भारत्या विनतासुत ॥ ३,१८.७७ ॥

एवं तु निर्णयो ज्ञेय आनन्दस्य सदा खग ।

एवमुक्तं मया सर्वं किमन्यच्छ्रोतुमिच्छसि ॥ ३,१८.७८ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे रुद्ररोदनहेत्वाननन्तानन्दतारतम्यनिरूपणं नामाष्टादशोध्यायः

श्रीगरुडमहापुराणम् १९

गरुड उवाच ।
त्वयोक्तं कृष्ण गोविन्द रुद्राच्छतगुणादपि ।
ब्रह्माणी भारती चोभे अधिके देवसत्तम ॥ ३,१९.१ ॥

मया श्रुतं विरिञ्चेन उमापर्यन्तमेव च ।
अनन्तांशैर्विहीनत्वं विरिञ्चोक्तं सुराधिप ॥ ३,१९.२ ॥

सहस्रांशैर्विहीनत्वं त्वयोक्तं कृष्ण माधव ।
सर्वेषां चैव पूर्वेषामवेक्ष्यैव हरे विभो ॥ ३,१९.३ ॥

ज्ञानानन्दबलादीनां वायुपर्यन्तमेव च ।
सहस्रांशैर्विहीनत्वं ज्ञानादीनां महेश्वर ॥ ३,१९.४ ॥

निर्णयं ब्रूहि गोविन्द सर्वज्ञोसि न संशयः ।
गरुडेनैवमुक्तस्तु वासुदेवोब्रवीद्ध्रुवम् ॥ ३,१९.५ ॥

श्रीकृष्ण उवाच ।
आनन्दांशैर्विहीनत्वमपेक्ष्यैव खगाधिप ।
उत्तरेषामुत्तरेषां योगादेवमिति स्फुटम् ॥ ३,१९.६ ॥

परिमाणे शतगुणे आनन्दे स्फुटतावशात् ।
अनन्तगुणवत्त्वं च ब्रह्मणा समुदीरितम् ॥ ३,१९.७ ॥

सहस्रगुणितत्वं च वायुना समुदीरितम् ।
यथानन्दे तथा ज्ञाने विष्णौ भक्तौ बलाधिके ॥ ३,१९.८ ॥

सर्वे गुणैः शतगुणाः क्रमेणोक्ता नु तेऽखिलाः ।
भारत्याश्च शतं ज्ञानं सुखं भक्तिबलाधिके ॥ ३,१९.९ ॥

एवं ज्ञानं सुविज्ञेयं मारुतेस्तु बलादिकम् ।
एवं ज्ञानं शतं ज्ञेयं मारुते नात्र संशयः ॥ ३,१९.१० ॥

भारत्याश्च शतं ज्ञानं बलं च समुदाहृतम् ।
एवमेव च वायोश्च ज्ञानं चैवमिति स्फुटम् ॥ ३,१९.११ ॥

यथा दीपाच्छतगुणा अग्निज्वाला न दीपवत् ।
स्फुटीभवेद्यथैवाग्निर्बहुलोपि न सूर्यवत् ॥ ३,१९.१२ ॥

यथैव सूर्याद्द्विगुणश्चन्द्रो नैव स्फुटीभवेत् ।
आनन्दतारतम्यं च यथोक्तं तु मया तव ॥ ३,१९.१३ ॥

तथैव जानीहि खग नान्यथा तु कथञ्चन ।
अहं विजानामि मयि स्थितान् गुणान्सर्वैर्विशेषैश्च खगेन्द्र संयुतान् ॥ ३,१९.१४ ॥

सुसूक्ष्मरूपांश्च सदा खगेन्द्र मयाप्यदृष्टो नास्ति नास्त्येव कश्चित् ॥ ३,१९.१५ ॥

सर्वावतारेष्वपि विद्यमानं हरिं विजानाति रमापि देवी ॥ ३,१९.१६ ॥

हरेर्गुणान्सर्वविशेषसंयुतानखण्डरूपान्सा विजानाति देवी ।
सुसूक्ष्मरूपान्सा विजानाति देवी ब्रह्मादिभ्यो मत्प्रसादाधिकं च ॥ ३,१९.१७ ॥

स्वात्मस्वरूपं प्रविजानाति देवी सुसूक्ष्मरूपं सुविशेषैश्च युक्तम् ।
स्वान्यं प्रपञ्चं प्रविजानाति लक्ष्मीस्तथाप्यशेषैः सुविशेषैश्च युक्तम् ॥ ३,१९.१८ ॥

ब्रह्मापि पश्येत्सर्वगं वासुदेवं वाय्वादिभ्यो ह्यधिकान्सद्गुणांश्च ।
श्रोत्रं न जानाति हरेर्गुणांश्च सुसूक्ष्मरूपांश्च विशेषसंयुतान् ॥ ३,१९.१९ ॥

स्पष्टस्वरूपेण यथा विदुः सुरा मुक्त्वा ब्रह्माणं न तथा तेप्यमुक्ताः ।
स्वात्मानमन्यच्च सदा विशेषर्युक्तं विजानाति विधिश्च मारुतः ॥ ३,१९.२० ॥

वाणी विजानाति हरेर्गुणांश्च स्वयंभुवो नैव तावद्विशेषान् ।
त्रैगुण्यरूपात्परतः सदैव पश्येद्विष्णुं कृष्णरूपं खगेन्द्र ॥ ३,१९.२१ ॥

शेषो रुद्रो वीन्द्र एतैश्च सर्वे तमो मात्रे प्रविजानन्ति संस्थम् ।
वाणीदृष्टान्सविशेषान् गुणांस्ते जानन्ति नो सत्यमेवोक्तमङ्ग ॥ ३,१९.२२ ॥

उमा सुपर्णा वारुणी चेति तिस्रः सहैव तः प्रविजानन्ति सुस्थम् ।
हरेर्विशेषानरुद्र दृष्टान्खगेन्द्र जानन्ति नैताः क्वापि देशे च काले ॥ ३,१९.२३ ॥

इन्द्रादयः प्रविजानन्ति वीन्द्र अहङ्कारे व्याप्तरूपं हरिं च ।
दक्षाद्या वै बुद्धितत्त्वे स्थितं तं जानन्ति ते सोमसूर्यादयश्च ॥ ३,१९.२४ ॥

विष्णुं हरिं भूततत्त्वे स्थितं च ये चान्ये च प्रविजानन्ति नित्यम् ।
अन्ये च पश्यन्ति यथा स्वयोग्यमण्डान्तरस्थं हरिरूपं खगेन्द्र ॥ ३,१९.२५ ॥

केचित्प्रपश्यन्ति हरेश्च रूपं त्वदीयहृत्स्थं हृदि केचित्सदैव ।
एवंप्रकारं प्रविजानीहि वीन्द्र ह्यथो शृणु त्वंमम भार्याः षडेताः ॥ ३,१९.२६ ॥

रुक्मिण्याद्याः षण्महिष्यो ममश्रीर्नीला च या मम भार्या खगेन्द्र ।
सर्गे पूर्वस्मिन्हव्यवाहस्य पुत्री तास्ता भजे सद्य एवा विशेषात् ॥ ३,१९.२७ ॥

कन्यैव सा कृष्णपत्नी च कामांस्तांस्तान् भजेन्मनसा चिन्तितांश्च ।
अतीव यत्नं कव्यवाहं खगेन्द्र पितृष्वेकः सर्वदा वै चकार ॥ ३,१९.२८ ॥

तथैव सा नैव भर्तारमाप यतस्तु सा कृष्णनिष्ठैकचित्ता ॥ ३,१९.२९ ॥

तदाब्रवीत्कव्यवाहश्च पुत्रिं पतिं किमर्थं नेच्छसि मूढबुद्धे ।
तदाब्रवीत्कव्यवाहं च पुत्री हरिं विना सर्वगुणोपपन्ने ।
जन्मन्यस्मिन् भर्तृता नास्ति देव यतो भर्ता हरिरवैक एव ॥ ३,१९.३० ॥

यतो लोके सुस्त्रियः सर्व एव संदा ज्ञेया विधवास्ते हि नित्यम् ।
अनादि नित्यं भुवनैकसारं सुसुंदरं मोक्षदं कामदं च ॥ ३,१९.३१ ॥

एतादृशं न विजानन्ति यास्तु सर्वास्ता वै विधवाः सर्वदैव ।
निमित्तभूतं भर्तृरूपं च जीवं दैवोपेतं हरिभक्त्या विहीनम् ॥ ३,१९.३२ ॥

सुकश्मलं नवरन्ध्रैः स्त्रवन्तं दुर्गन्धयुक्तं सर्वदा कुत्सितं च ।
एताः दृशे भर्तृजीवे नु तात प्रयोजनं नास्ति कृष्णं विहाय ॥ ३,१९.३३ ॥

देवस्त्रियो निजभर्तृन्विहायु तत्र स्थितं प्रीणयन्त्येव नित्यम् ।
अतश्च ताः सधवाः सर्वदैव लोकैर्वन्द्या नात्र विचार्यमस्ति ॥ ३,१९.३४ ॥

भर्तास्ते हरिभक्ता यदि स्युरासां स्त्रीणां जन्मसाफल्यमेव ।
अनेकजन्मार्जितपुण्यसंचयैस्तद्भर्तारो हरिभक्ता भवेयुः ॥ ३,१९.३५ ॥

यद्भर्तारो हरिभक्ता न संति ताभिस्त्याज्यं स्वीयगात्रं भृशं हि ।
स्वभर्तृतं कृष्णरूपं हरिं च स्मृत्वा सम्यग्यदि गात्रं त्यजेयुः ॥ ३,१९.३६ ॥

तदा नैव ह्यात्महत्यादिदोषाः स्त्रीणामेवं निर्णयोयं हि शास्त्रे ।
यद्भर्तारो न विजानन्ति विष्णुं तासां संगो नैव कार्यः कदापि ॥ ३,१९.३७ ॥

अनेक जन्मार्जितपुण्यसंचयात्तद्भर्तारो विष्णुभक्ता भवेयुः ।
कलौ युगे दुर्लभा विष्णुभक्ता हरेभक्तिर्दुर्लभा सर्वदैव ॥ ३,१९.३८ ॥

हरेः कथा दुर्लभा मर्त्यलोके हरेर्दीक्षा दुर्लभा दुर्लभा च ।
हरेस्तत्त्वे निर्णयो दुर्लभो हि हरेर्दासैः संगमो दुर्लभश्च ॥ ३,१९.३९ ॥

प्रदक्षिणं दुर्लभं वै मुरारेर्नमस्कारो दुर्लभो वै कलौ च ।
तद्भक्तानां पालनं दुर्लभं च सद्वैष्णवानां दुर्लभं ह्यन्नदानम् ॥ ३,१९.४० ॥

तन्त्रोक्तपूजा दुर्लभा वै मुरारेर्नामग्रहो दुर्लभश्चव विष्णोः ।
सुवैष्णवानां पुजनं दुर्लभं हि सद्वैष्णवानां भाषणं दुर्लभं च ॥ ३,१९.४१ ॥

शालग्रामस्पर्शनं दुर्लभं च सद्वैष्णवानां दर्शनं दुर्लभं हि ।
गोस्पर्शनं दुर्लभं मर्त्यलोके सद्गायनं दुर्लभं सद्गुरुञ्च ॥ ३,१९.४२ ॥

सद्भार्याः सत्पुत्रका दुर्लभा हि शेषाचलस्थस्य हरेश्च दर्शनम् ।
सुदुर्लभं रङ्गनाथस्य तीरे कावेर्या वै दर्शनं विष्णुपद्याः ॥ ३,१९.४३ ॥

काञ्चीक्षेत्रे वरदराजस्य सेवा सुदुर्लभा दर्शनं चैव लोके ।
सुदुर्लभं दर्शनं रामसेतोः सुदुर्लभा मध्वशास्त्रे च शक्तिः ॥ ३,१९.४४ ॥

भीमातीरे संस्थितस्यापि विष्णोः सुदुर्लभं दर्शनं चाहुरार्याः ।
रेवातीरे संस्थितस्यापि विष्णोर्गयाक्षेत्रे विष्णुपादस्य चैव ॥ ३,१९.४५ ॥

तथा बद्रौ संस्थित स्यापि विष्णोः सुदुर्लभं मर्त्यलोके स्थितानाम् ।
शेषाचले श्रीनिवासाश्रमे च तपस्विनो दुर्लभा मर्त्यलोके ॥ ३,१९.४६ ॥

प्रयागाख्ये माधवस्यापि नित्यं सुदर्शनं दुर्लभं वै नृणां हि ॥ ३,१९.४७ ॥

अतो नेच्छामि भर्तारं कृष्णादन्यं कदाचन ।
एवमुक्त्वा सा पितरं ययौ शेषाचलं प्रति ॥ ३,१९.४८ ॥

कपिलाख्यमहातीर्थे आरुरोह महागिरिम् ।
तत्रस्थं श्रीनिवासं च दृष्ट्वा नत्वा महासती ॥ ३,१९.४९ ॥

त्रिदिनं समुपोष्याथ गत्वा पापविनाशनम् ।
तत्रस्नात्वा विवाहार्थमेकान्तं प्रययावथ ॥ ३,१९.५० ॥

तस्या उत्तरदिग्भागे क्रोशयुग्मे महातले ।
गर्तभूते च एकान्ते चचार तप उत्तमम् ॥ ३,१९.५१ ॥

ध्यात्वा नारायणं देवं तत्रासीच्च कुमारिका ।
दिव्यवर्षसहस्रान्ते स्तोतुं समुपचक्रमे ॥ ३,१९.५२ ॥

कुमार्युवाच ।
त्वमेव माता च पिता त्वमेव भर्ता च सखात्वमेव ।
त्वमेव पुत्रश्च गुरुर्गरीयान्मित्रं स्वसा त्वं मम वल्लभश्च ॥ ३,१९.५३ ॥

अनाद्यनन्तेष्वपि जन्मसु प्रभो विचार्यमाणा न विजानेप्यहं च ।
एतै हि सर्वे च निमित्तमात्रतः पित्रादयस्त्वं ह्यनिमित्तमात्रतः ॥ ३,१९.५४ ॥

अतो मुरारेश्च तवैव भार्या भूयासमित्येव तदा व्रतं मे ।
दुः संगमात्रादिसमागमं न संसिद्धिरित्येव वदान्यमूर्ते ॥ ३,१९.५५ ॥

त्वद्दूषकाणां तव दासवर्य विदूषकाणां दर्शनं छिन्धि देव ।
गुरुद्रुहां दर्शनं छिन्धि विष्णो भक्तद्रुहां मित्रतां छिन्धि कृष्ण ॥ ३,१९.५६ ॥

तव ध्रुग्भिर्भाषणं छिन्धि देव त्वं संगमं देहि पदारविन्दे ।
श्रीशैलवासाय नमोनमस्ते नमोनमः श्रीनिवासाय तुभ्यम् ॥ ३,१९.५७ ॥

स्वामिन् परावर रमेश निदानमूर्ते कालो महानपि गतश्च निदर्शनन्ते ।
अनन्तजन्मार्जितसाधनैश्च त्वद्दर्शनं स्याच्च चतुर्भुजस्य ॥ ३,१९.५८ ॥

कथं मम स्यात्तव दर्शनं प्रभो सर्वैश्च दोषैश्च सुसंगतायाः ।
दास्यास्पदायास्तव दासदास्याः प्रसीद देवेश जगन्निवास ॥ ३,१९.५९ ॥

एवं स्तुतस्तथा विष्णुः श्रीनिवासो दयानिधिः ।
प्रादुरासीद्वरदराट्भक्त्या तस्या जनार्दनः ॥ ३,१९.६० ॥

वरं वरय भद्रं ते वरदोहमिहागतः ।
हरिणोदीरितं वाक्यं श्रुत्वा प्राह स्मितानना ॥ ३,१९.६१ ॥

उवाच परया भक्त्या श्रीनिवासं जगत्प्रभुम् ।
अहं हि भार्या भूयासं तव माधव सुंदर ॥ ३,१९.६२ ॥

इति तस्या वचः श्रुत्वा श्रीनिवासोऽब्रवीद्वचः ।
श्रीभगवानुवाच ।
अहं कुमारि सुभगे कृष्णजन्मनि भूतले ॥ ३,१९.६३ ॥

भवामि तव भर्ताहं नात्र कार्या विचारणा ।
एवमुक्ता सुता कन्या पुरण्यराशिं हरिं परम् ॥ ३,१९.६४ ॥

उवाच परमप्रीता हर्षगद्गदया गिरा ।
कन्योवाच ।
कृष्णजन्मन्यहं पत्नी भूयासं प्रथमेहनि ॥ ३,१९.६५ ॥

संस्कारात्प्रथमं चाहमं गनाभ्यः समावृणे ।
ओमित्युक्तः पुनर्वाक्यमुवाच मधुसूदनः ॥ ३,१९.६६ ॥

श्रीभगवानुवाच ।
कुमार्या विधृतत्वाच्च मत्प्रदानाच्च भामिनि ।
तेषां मनोभीष्टसिद्धिर्भविष्यति न संशयः ॥ ३,१९.६७ ॥

इति तस्यै वरं दत्त्वा तत्रैवान्तरधीयत ।
देहं तत्रैव संत्यज्य कुमारी चैव पुत्रिका ॥ ३,१९.६८ ॥

कुम्भ कस्य गृहे जाता नीला नाम्ना तु सा स्मृता ।
कुंभकस्तु महाभाग नन्दशोभस्य शालकः ॥ ३,१९.६९ ॥

कल्पवाहः स विज्ञेयः पितॄणां प्रथमः स्मृतः ।
तस्य गत्वा गृहमहं वृषभाचलवासिनः ।
शिवस्य वरतश्चैव त्वजेयः खगसत्तम ॥ ३,१९.७० ॥

दितिजान्विनिहत्यैव नीला प्राप्ता खगेश्वर ।
ततो नाग्निजितो राज्ञो गृहे जाता कुमारिका ॥ ३,१९.७१ ॥

नाग्निजित्कव्यवाहोभूत्कन्या नीलाह्वयाभवत् ।
तस्याः स्वयंवरे चाहं गोवृषान्सप्तसंख्यकान् ॥ ३,१९.७२ ॥

शिवस्य वरतश्चैवाप्यवध्यान्देवमानुषैः ।
बद्ध्वा वृषान्नृपाञ्जित्वा प्राप्ता नीला महाखग ॥ ३,१९.७३ ॥

कुंभकस्य सुता नीला देहस्थाः प्राविशन् भृशम् ।
एकावयवतो यस्मात्तस्मात्तत्रैव साविशत् ॥ ३,१९.७४ ॥

भूमौ द्विधा संप्रजाता कुमार्येव न संशयः ।
भद्राजन्म प्रवक्ष्यामि शृणु पक्षीन्द्रसत्तम ॥ ३,१९.७५ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे नीलाविवाहनिर्णयो नामैकोनविंशोऽध्यायः

श्रीगरुडमहापुराणम् २०
श्रीकृष्ण उवाच ।
या पूर्वसर्गे नलसंज्ञस्य वीन्द्र पुत्री भूत्वा विष्णुपत्नी सकामा ।
प्रदक्षिणं भ्रमणं वै चकार गुणेन भद्रा भद्रसंज्ञा बभूव ॥ ३,२०.१ ॥

कन्याभावे संस्थितां भद्रसंज्ञां पिता नलस्त्वब्रवीत्तां स पश्यन् ।
भद्रे किमर्थं गात्रपीडां करोषि फलं हि तन्नन्दिनि मे वदस्व ॥ ३,२०.२ ॥

भद्रोवाच ।
शृणुत्वं मे तात नमस्क्रियादेः फलं वक्तुं का समर्था भवेच्च ॥ ३,२०.३ ॥

तथाप्यहं तव वक्ष्यामि तात यथाशक्त्या शृणु सम्यग्घिताय ।
सदा हरिमर्म नाथो दयालुरहं हरेस्तव दासानुदासी ।
मां पाहि विष्णोस्तव वन्दे पदे इत्युक्त्वा प्रणामं चाकरोद्दण्डरूपम् ॥ ३,२०.४ ॥

हरेः प्रणामं त्विति कर्तव्यशून्यं व्यर्थं तमाहुर्ज्ञानिनस्तच्छृणु त्वम् ।
रमेश मध्वेश सरस्वतीशेत्येवं वदन्प्रणमेद्विष्णुदेवम् ॥ ३,२०.५ ॥

यथा प्रसन्नो वन्दनाद्देवद्देव स्तथा न तुष्टः पूजनात्कर्मतश्च ।
यथा नामस्मरणाद्वन्दनाद्वा पापान्नियच्छेतु तथा न चान्यैः ॥ ३,२०.६ ॥

देहं तु ये पोषयन्त्येव तात हरेः प्रणामैः शून्यभूतं च पुष्टम् ।
तदेवमाहुर्व्यर्थमेवेति तात तत्पोषकाणां नरके दुः खमाहुः ॥ ३,२०.७ ॥

यमोऽपि तं तत्र उलूखले तु निधाय पिष्टं सुखलैः करोति ।
यो वा परं न करोत्येव तात प्रदक्षिणं देवदेवस्य विष्णोः ॥ ३,२०.८ ॥

तस्यैव पादौ तलयन्त्रे निधाय यमश्च नित्यं प्रकरोति पिष्टम् ।
एषां जिह्वा हरिकृष्णेति नाम न वक्ति नित्यं व्यर्थभूतां वदन्ति ॥ ३,२०.९ ॥

तेषां जिह्वा यमलोके यमस्तु निष्कास्य पिष्टं प्रकरोति नित्यम् ।
काशीनिवासेन च किं प्रयोजनं किं वा प्रयागे मरणेन तात ॥ ३,२०.१० ॥

किं वारणाग्रे मरणेन सौख्यं किं वा मखादेः समनुष्ठितेन ।
समस्ततीर्थेष्वटनेन किं किमधीतशास्त्रेण सुतीक्ष्णबुद्ध्या ॥ ३,२०.११ ॥

येषां जिह्वाग्रे हरिनामैव नास्ति येषां गात्रैर्नमनं नापि विष्णोः ।
येषां पद्भ्यां नास्ति हरेः प्रदक्षिणं तेषां सर्वं व्यर्थमाहुर्महान्तः ॥ ३,२०.१२ ॥

हर्यर्पणाद्रिहितं नाम कस्मात्प्रदक्षिणं नमनं चाहुरर्घ्यम् ।
अतो विष्णोर्नमनं कार्यमेव हरेर्नामस्मरणं तात कार्यम् ॥ ३,२०.१३ ॥

जन्म ह्येतद्दुर्लभं नश्वरं तु यथा जलस्थं तत्तथैव ।
नो विस्वासं कुरु गात्रे त्वदीये जीवेष्वपि स्वः परश्चेति तात ॥ ३,२०.१४ ॥

सद्यः कृतं नमनं न त्वदीयं सद्यः कृतं स्मरणं न त्वदीयम् ।
कदा प्राप्स्ये मरणं तन्न जाने न विश्वासं कुरु गात्रे महात्मन् ॥ ३,२०.१५ ॥

एतच्छ्रुत्वा नलो वीन्द्र पुत्रीवाक्यं सुनिर्मलम् ।
नमस्कारं च कृतवान्यथाशक्त्या प्रदक्षिणम् ॥ ३,२०.१६ ॥

सापि प्रदक्षिणं चक्रे नमस्कारं सदा हरेः ।
एवं बहुदिनं कृत्वा ध्यात्वा नारायणं परम् ॥ ३,२०.१७ ॥

कलेवरं च तत्याज मरणे हरिचिन्तया ।
मत्पितुर्वसुदेवस्य भगिन्या उदरे खग ॥ ३,२०.१८ ॥

कैकेयीति च नाम्ना सा त्वभवद्भद्रसंज्ञका ।
यस्माद्भद्रगुणैर्युक्ता भद्रा सा भद्रनामिका ॥ ३,२०.१९ ॥

तस्यात्मजैश्च कैकेयैः पञ्चभिः खगसत्तम ।
प्रत्याहृतामिमां भद्रां प्राप्तवान् खगसत्तम ॥ ३,२०.२० ॥

वक्ष्येहं मित्रविन्दायाः पाणिग्रहणकारणम् ।
सावधानमना भूत्वा शृणु पक्षीन्द्र सत्तम ॥ ३,२०.२१ ॥

मित्रविन्दोवाच ।
यान्पूर्वसर्गेप्यवृणोन्निकामतो ह्यग्नीषोमान्नामिका मित्रविन्दा ।
मित्रं हरिं प्राप्तुकामा सदैक तत्रोपायं चिन्तयामासदेवी ॥ ३,२०.२२ ॥

हरिप्राप्तौ साधनाः संति तेषु मुख्यं कचिच्चिन्तयामास देवी ।
तेषां मध्ये श्रवणं श्रेष्ठमाहुः पुराणानां सात्त्विकानां सदापि ॥ ३,२०.२३ ॥

विष्णोरुत्कर्षो वर्तते यत्र वायोस्तथोत्कर्षः सज्जनानां पुराणे ।
श्राद्धं सदा विष्णुबुद्ध्या सदैव नान्यच्छ्राव्यं साधनं तत्र चैव ॥ ३,२०.२४ ॥

यस्मिन्दिने श्रवणं नास्ति विष्णोस्तेषां जन्म व्यर्थमाहुः कथायाम् ।
स्नान जपः पञ्चयज्ञं व्रतं च इष्टापूर्ते कृच्छ्रचान्द्रो च दत्तम् ॥ ३,२०.२५ ॥

सर्वं व्यर्थं वैष्णवानां च दीक्षा कथां विना सम्यगनुष्ठितां वै ।
यैर्न श्रुतं भागवतं पुराणं ससंप्रदायैर्गुरुभिः संयुतैश्च ॥ ३,२०.२६ ॥

यैर्न श्रुतं भागवतं पुराणं यैर्न श्रुतं ब्रह्मकाण्डं पुराणम् ।
तेषां जन्म व्यर्थमाहुर्महान्तस्तस्माच्छ्राव्या हरिवार्ता सदैव ॥ ३,२०.२७ ॥

न यत्र गोविन्दकथामहानदी न यत्र नारायणपादसंश्रयः ।
न यत्र विष्णोः सततं वचोस्ति न संवसेत्तत्क्षणमात्रं कथञ्चित् ॥ ३,२०.२८ ॥

यस्मिन् ग्रामे भागवतं न शास्त्रं न वर्तते भागवता रसज्ञाः ।
यस्मिन् गृहे नास्ति गीतार्थसारः यस्मिन् ग्रामे नाम सहस्रकं वा ॥ ३,२०.२९ ॥

तयो रसज्ञा यत्र न सन्ति तत्र न संवसेत्क्षणमात्रं कथञ्चित् ।
यस्मिन् दिने दिव्यकथा च विष्णोर्न वास्ति जन्तोस्तस्य चायुर्वृथैव ॥ ३,२०.३० ॥

गर्भे गते नात्र विचार्यमस्ति तन्मन्यते दुर्लभं मर्त्यलोके ।
कर्णं कल्पैर्भूषितं सुंदरं च न सुंदरं चाहुरार्या रसज्ञाः ॥ ३,२०.३१ ॥

विष्णोः कथाख्याभरणैश्च युक्तं तदेव कर्णं सुंदरं चाहुरार्याः ।
तस्मात्सदा भागवतार्थसारं शृण्वन्ति ये सततं वाचयन्ति ॥ ३,२०.३२ ॥

तेषां जन्म स्वस्थमाहुर्महान्तो महत्फलं चास्ति तथैव तेषाम् ।
सोष्णीषकञ्चुकयुताश्च हरेः कथां वै शृण्वन्ति येपि च पठन्ति सदैव मर्त्याः ॥ ३,२०.३३ ॥

सर्वेपि ते पूजनीया हि लोके न वै शिश्रे चोदरे चैव सक्ताः ।
ये दाक्षिण्यादर्थलोभाद्वदन्ति सदा पुराणं भगवत्तत्त्वसारम् ॥ ३,२०.३४ ॥

प्रच्छादयन्ते तत्त्वगोप्यानि ये तु तेषां गतिः सूर्यसूनुः सदैव ।
ये धर्मकाण्डे कर्मकाण्डे सदैव उत्पादयन्ते सुरुचिं तत्र नित्यम् ॥ ३,२०.३५ ॥

मौल्येन ये कथयेयुः पुराणं तेषां गतिः सूर्य सुनः सदैव ।
मौल्येन ये भागवतं पुराणं शृण्वन्ति वै हरिशास्त्रार्थतत्त्वम् ॥ ३,२०.३६ ॥

मौल्येन वेदाध्ययनं प्रकुर्वते तेषां गतिः सूर्यसूनुः सदैव ।
यदृच्छया प्राप्तधनेन ये तु संतुष्टास्ते हयत्र योग्याः सदैव ॥ ३,२०.३७ ॥

धनार्जने ये त्वतितृष्णाभियुक्तास्तेषां न वै भागवतेधिकारः ।
मत्वा लोके हरिरेवति नित्यमन्तर्यामी नास्ति तदन्य ईशः ॥ ३,२०.३८ ॥

एवं सदा ये प्रविचिन्तयन्ति योगक्षेमं बिभृयाद्विष्णुरेषाम् ।
सद्वैष्णवानामशुभं नास्ति नास्ति प्रदृश्यते संशयज्ञानरूपात् ॥ ३,२०.३९ ॥

कर्मानुसारेण हरिर्ददाति फलं शुभानामशुभस्य चैव ।
अतस्तदर्थं नैव यत्नं च कुर्याद्धनार्थं वै हरितत्त्वे च कुर्यात् ॥ ३,२०.४० ॥

अतः स्नात्वा दिव्यमन्त्रं जपित्वा विसर्जयित्वा विष्णुनिर्माल्यगन्धम् ।
शुचिर्भूत्वा भागवतं पुराणं संश्रावयेत्सर्ववेत्तापि नित्यम् ॥ ३,२०.४१ ॥

कर्मानुसारेण धनार्जनं च वेदार्जनं शास्त्रसमार्जनं च ।
भविष्यति श्रवणं चापि विष्णोरत्यादराच्छ्रवणं दुर्घटं च ॥ ३,२०.४२ ॥

अत्यादराद्भागवतस्य सारमास्वादयेद्दुर्घटं मर्त्यलोके ।
आस्वाद्य तद्भागवतं पुराणमानन्दबाष्पैर्युक्तता दुर्घटा च ॥ ३,२०.४३ ॥

श्रुत्वा तत्त्वा नां निर्णयं धारणं च सुदुर्घटं चाहुरार्याः समस्तम् ।
श्रुत्वा तत्त्वानां धारणानन्तरं च कामक्रुधोर्जारणं दुर्घटं च ॥ ३,२०.४४ ॥

श्रुत्वा तत्त्वानां धारणानं तरं त तथा योगे दुर्घटं संगतं च ॥ ३,२०.४५ ॥

श्रुत्वा तत्त्वानां धारणानन्तरं च कामक्रुधोर्जारणं दुर्घटं च ।
एते दोषा ज्ञानपूतानपीह कुर्वन्ति संदेहयुतान्सदैव ॥ ३,२०.४६ ॥

अतो ह्यहं श्रवणं सत्कथायाः सदा करिष्ये नात्र विचार्यमस्ति ।
तेनाप्यहं हरिनामाभिवाञ्छा निश्चित्य चित्तं श्रवणे वै चकार ।
आदेहमेवं श्रवणं च कृत्वा त्यक्त्वा देहं भूतले संप्रजाता ॥ ३,२०.४७ ॥

निवस्तुं वसुदेवस्य भगिन्या उदरे खग ।
सुमित्रा संज्ञकायां च जाता वै मित्रविन्दिका ॥ ३,२०.४८ ॥

श्रवणेन हरिं मित्रं प्राप्ता सा मित्रविन्दिका ।
अतः सा मित्रविन्देति संज्ञया संबभूव ह ॥ ३,२०.४९ ॥

स्वयंवरे मित्रविन्दा राज्ञां मध्ये तु भामिनी ।
ममांसे व्यसृजन्मालां तां गृहीत्वा खगेश्वर ।
विधूय नृपतीन्सर्वान्पुरीं प्राप्ताः खगेश्वर ॥ ३,२०.५० ॥
॥ ५१ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे भद्राकृतभगवत्पतित्वप्रापकतपश्चर्यादिनिरूपणं नाम विंशोध्यायः

श्रीगरुडमहापुराणम् २१
श्रीकृष्ण उवाच ।
कालिन्द्या अपि चोत्पत्तिं प्रवक्ष्यामि खगेश्वर ।
विवस्वान्नाम सूर्योभत्तस्य पुत्री व्यजायत ॥ ३,२१.१ ॥

कालिन्दीसंज्ञका वीन्द्र यमुना यानुजा स्मृता ।
कृष्णपत्नीत्वकामेन चचार तप उत्तमम् ॥ ३,२१.२ ॥

तप आलोचनं प्रोक्तं तत्त्वानां च विनिर्णयः ।
पूर्वार्जितानां पापानामनुतापस्तपः स्मृतम् ॥ ३,२१.३ ॥

प्रायो नाम तपः प्रोक्तं चित्तनिग्रह उच्यते ।
प्रायश्चित्तमिति प्रोक्तं न तु क्षौरं खगेश्वर ॥ ३,२१.४ ॥

अनुतापयुतं भूतं तच्छृणु त्वं खगेश्वर ।
पूर्वं न जप्तं दिव्यमन्त्रं मुकुन्द तप्तं सदा क्लेशदावानलेन ॥ ३,२१.५ ॥

न वै स्मृतं हरिनामामृतं च सदा स्मृतं हरिदोषादिकं च ।
न तु स्मृतं हरितत्त्वामृतं च सम्यक्श्रुतं लोलवार्तादिकं च ॥ ३,२१.६ ॥

न पूजितं हरिपादारविन्दं सुपूजिताः पुत्रमित्रादिकाश्च ।
न वन्दितं हरिपादारविन्दं सुवन्दितो मित्रपादः सुघोरः ॥ ३,२१.७ ॥

न दृष्टं वै धूपधूम्रैरुपेतं हरेर्वक्रं कुन्तलैः संवृतं च ।
पुत्रादिकं लालितं वै मुकुन्द न लालितं तव वक्रं मुरारे ॥ ३,२१.८ ॥

सुलालितं भूषणैः पुत्रमित्रं न लालितं सर्वपापापहारि ।
न भुक्तं वै हरिनैरवेद्यशेषं मित्रालये षड्रसान्नं च भुक्तम् ॥ ३,२१.९ ॥

सुपुष्पगन्धा नार्पिता ते मुरारे समर्पिताः पुत्रमित्रादिकेभ्यः ।
सन्तप्तोहं पुत्रमित्रादिकेषु कदा द्रक्ष्ये तव वक्त्रं मुकुन्द ॥ ३,२१.१० ॥

अवैष्णवान्नैः शिग्रुशाकादिकैश्च ह्यनर्पितान्नैश्च तथाप्यसंस्कृतैः ।
तथाप्यभक्ष्यै रसना च दग्धा कदा द्रक्ष्ये तव वक्त्रं मुकुन्द ॥ ३,२१.११ ॥

अष्टाक्षरीपूजया दिव्यतीर्थैर्विष्णोः पुरा भ्रामितैः शङ्खतीर्थैः ।
न पावितं मच्छरीरं मुरारे कदा द्रक्ष्ये तव व क्त्रं मुकुन्द ॥ ३,२१.१२ ॥

अनर्पितैर्गन्धपुष्पादिकैश्च अनर्पितैर्भूषणैर्वस्त्रजातैः ।
अवैष्णवानां दिग्धगन्धादिदोषैर्गात्रं दग्धं कदा ह्युद्धरिष्ये मुकुन्द ॥ ३,२१.१३ ॥

दग्धौ च पादौ मम वासुदेव न गच्छन्तौ क्षेत्रपथं हरेश्च ।

नेत्रे च दग्धे मम सर्वदापि नालोकितं तव देव प्रतीकम् ॥ ३,२१.१४ ॥

दग्धौ च हस्तौ मम वासुदेव न पूजितं तव विष्णोः प्रतीकम् ।
मया कृतं पापजातं मुरारे कदा द्रक्ष्ये तव वक्रं मुकुन्द ॥ ३,२१.१५ ॥

मदीयदोषान्गणयन्न पूर्ण दयां कुरु त्वं सुह्रदास्यान्मुकुन्द ।
यावन्ति लोमानि मदीयगात्रे संति प्रभो सर्वदोर्षर्विदूर ॥ ३,२१.१६ ॥

तावन्ति पापानि मदीयगात्रे कदा द्रक्ष्ये तव वक्त्रं मुकुन्द ।
अनन्तदेहे पतिपुत्रैर्गृहैश्च मित्रैर्धनैः पशुभृत्यादिकैश्च ॥ ३,२१.१७ ॥

सुखं नाप्तं ह्यपुमात्रं मुकुन्द सेवा मुक्ता तव देवस्य विष्णोः ।
इतः परं पुत्रमित्रादिकं च यास्ये नाहं तव दासी भवामि ॥ ३,२१.१८ ॥

येये ब्रूयुः पुत्रमित्रादिकैश्च सम्यक्सुखं जायते मर्त्यलोके ।
तेषामास्ये मूत्रविष्ठादिकं च सम्यक्सदा पतितं चेति जाने ॥ ३,२१.१९ ॥

मित्रादीनां यत्कृतं द्रव्यजातं वृथा गतं मलरूपं च जातम् ।
सद्वैष्णवानां यत्कृतं द्रव्यजातं हरिप्राप्तेः कारणं स्यात्सदैव ॥ ३,२१.२० ॥

एतादृशं तत्तु जातं मुकुन्द अलं ह्यलं तेन दुःखं च भुक्तम् ।
संगं दत्तात्सज्जनानां सदा त्वं विना च त्वं दुर्जनानां च संगात् ॥ ३,२१.२१ ॥

संगैः सदा दुर्जनानां मुरारे गात्रं दग्धं न विरागेण युक्तम् ।
एतादृशाहं कां गातिं वा मुकुन्द यास्ये न जाने दयया मां च पाहि ॥ ३,२१.२२ ॥

एतादृशो ह्यनुतापः खगेन्द्र प्रायश्चित्तं न च क्षौरादिकं च ।
भानोः कन्या ह्यनुतापं च कृत्वा विचारयामास हरेः सुतत्त्वम् ॥ ३,२१.२३ ॥

सर्वोत्तमो हरिरेकः सदैव यतः पूर्णः सर्वगुणैस्ततश्च ।
सृष्टौ यस्माज्जयते विश्वजातमतो हरिः सर्वगुणैश्च पूर्णः ॥ ३,२१.२४ ॥

यो देवानामाद्य अकार एव यतो ब्रह्माद्या नैव पूर्णाः समस्ताः ।
लक्ष्मीप्रसादाच्चिरपुण्येन जातो यथायोग्यं पूर्णगुणो विरिञ्चः ॥ ३,२१.२५ ॥

न लक्ष्मीवद्गुणपूर्णो विरिञ्चो न विष्णुवद्गुणपूर्णा रमापि ।
न वायुवद्भारती चापि पूर्णा न शेषवद्वारुणी चापि पूर्णा ॥ ३,२१.२६ ॥

न वै रुद्रवत्पार्वती पूर्णरूपा ह्यन्येप्येवं नैव पूर्णाः सदैव ।
आलोचनामेवमेषा हि कृत्वा तपश्चक्रे यमुनायाश्च तीरे ॥ ३,२१.२७ ॥

तदाचाहं यमुनायाश्च तीरं पार्थेन साकं मृगयां गतः खग ।

दृष्ट्वा च तां तत्र तपश्चरन्तीं तदाब्रुवं मत्सखायं च पार्थम् ॥ ३,२१.२८ ॥

हे पार्थ शीघ्रं व्रज कन्यासमीपं त्वं पृच्छ कस्मादत्र तपः करोषि ।
एवं प्रोक्तस्तत्समीपं स गत्वा पृष्ट्वा चैतत्कारणं शीघ्रमेव ॥ ३,२१.२९ ॥

आगत्य मामवदत्फाल्गुनोयं सर्वं वृत्तांन्तं त्वसौ मत्समीपे ।
ततस्त्वहं सुमुहूर्ते च तस्याः पाणिग्रहं कृतवांस्तत्र सम्यक् ॥ ३,२१.३० ॥

तस्याश्च तापात्संततं मद्विचारात्प्रसन्नोहं सततं सुप्रसन्नः ।
पूर्णानन्दे रममाणास्य नित्यं तया च मे किं सुखंस्यात्खगेन्द्र ॥ ३,२१.३१ ॥

मया विवाहोनुग्रहार्थं हि तस्या अङ्गीकृतो न तु सौख्याय वीन्द्र ।
तथा वक्ष्ये लक्ष्मणायाश्च रूपं पाणिग्राहे कारणं चापि वीन्द्रा ॥ ३,२१.३२ ॥

शृणुष्व तत्तव वक्ष्यामि गोप्यं सच्छिष्यके नास्ति गोप्यं गुरोश्च ॥ ३,२१.३३ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे भगवतः कालिन्द्या विवाहे हेतुनिरूपणं नामैकविंशोऽध्यायः

श्रीकृष्ण उवाच ।

या लक्ष्मणा पूर्वसर्गे खगेन्द्र पुत्री ह्यभूद्वह्निवेदस्य वेत्तुः ।

सुलक्षणैः संयुतत्वाद्यतः सा सुलक्ष्मणेति प्रथिता खगेन्द्र ॥ १ ॥

यथा लक्ष्मीर्लक्षणैः सा सुपूर्णा यथा हरिर्लक्षणैर्वै सुपूर्णः ।

यथा वायुर्लक्षणैः पूर्ण एव यथा गायत्री लक्षणैः सा सुपूर्णा ॥ २ ॥

यथा रुद्राद्या लक्षणैर्वै प्रपूर्णा रुद्रादिल्लक्ष्मणा चैव पूर्णा ।

गुणेनैवं धर्मतः किञ्चिदेव तथानुसंधानाद्व्रियते नाम चापि ॥ ३ ॥

तस्मादाहुर्लक्ष्मणेत्येव सर्वे तल्लक्षणं शृणु चादौ खगेन्द्र ।

नारायणे पूर्णगुणे रमेशे द्वात्रिंशत्संख्यानि सुलक्षणानि ॥ ४ ॥

संत्येव पक्षीन्द्र वदाम्यनुक्रमान्मत्तः श्रुत्वा मोक्षमाप्नोति नित्यम् ।

यः सप्तपादः षण्णवत्यङ्गुलोङ्गश्चतुर्हस्तः पुरुषस्तीक्ष्णदन्तः ॥ ५ ॥

य एतत्सर्वं मिलितं चैकमेव हरेर्विष्णोर्लक्षणं चाहुरार्याः ।

मुखं स्त्रिग्धं वर्तुलं पुष्टिरूपं द्वितीयं तल्लक्षणं चाहुरार्याः ॥ ६ ॥

हनुर्यस्यानुन्नतं चास्ति वीन्द्र तल्लक्षणं प्राहुरार्यास्तृतीयम् ।

यद्दन्ता वै तीक्ष्णसूक्ष्माश्च संति तल्लक्षणं चाहुरार्याश्चतुर्थम् ॥ ७ ॥

यस्याधरे रक्तिमा त्वस्ति वीन्द्र तल्लक्षणं पञ्चमं चाहुरार्याः ।

यस्य हस्ता अतिरक्ताः खगेन्द्र तल्लक्षणं प्राहुरार्याश्च पष्ठम् ॥ ८ ॥

यस्मिन्नखाः संति रक्ताः सुशोभास्तल्लक्षणं सप्तमं चाहुरार्याः ।

यस्मिन्कपोले रक्तिमा त्वस्ति वीन्द्र तल्लक्षणं ह्यष्टमं प्राहुरार्या ॥ ९ ॥

यस्मिन्करे शङ्खचक्रादिरेखा वर्तन्ते तन्नवमं प्राहुरार्याः ।

यस्योदरं तन्तुरूपं सुपुष्टं वलित्रयैरङ्कितं सुंदरं च ॥ १० ॥

तल्लक्षणं दशमं प्राहुरार्या एकादशं निम्ननाभिं तदाहुः ।

ऊरुद्वयं यस्य च मांसलं वै तल्लक्षणं द्वादशं प्राहुरार्याः ॥ ११ ॥

कटिर्हि दीर्घा पृथुलास्ति यस्य त्रयोदशं लक्ष्म तदाहुरार्याः ।

यस्यास्ति मुष्को सुपरिष्ठितो वै चतुर्दशं लक्ष्म तदाहुरार्याः ॥ १२ ॥

समुन्नतं शिश्नमथो हि लक्ष्म यस्यास्ति तत्पञ्चदशं वदन्ति ।

सुताम्रकं पादतलं खगेन्द्र तल्लक्षणं षोडशं प्राहुरार्याः ॥ १३ ॥
निम्नौ च गुल्फौ सप्तदशं तदाहुर्ग्रीवारूपं प्राहुरष्टादशं च ।
एकोनविंशं त्वक्षिपद्मं सुरक्तं प्राहुर्बाहुं जानु विंशं तथैव ॥ १४ ॥
विस्तीर्णोरश्चैकविंशं तदाहुः सिंहास्कन्धं द्व्युत्तरं विंशमाहुः ।
त्रयोविंशं सूक्ष्ममास्यं तदाहुश्चतुर्विंशं सुप्रसन्ने च दृष्टी ॥ १५ ॥
ह्रस्वं लिङ्गं मार्दवं चापि वीन्द्र तल्लक्षणं पञ्चविंशं वदन्ति ।
समौ च पादौ कटिजानु चोरू षड्विंशमाहुश्च समे च जङ्घे ॥ १६ ॥
समानहस्तौ समकर्णौ मिलित्वा द्वात्रिंशत्कं लक्षणं प्राहुरार्याः ।
द्वात्रिंशत्कं लक्षणं वै मुकुन्दे द्वात्रिंशत्कं लक्षणं वै रमायाम् ॥ १७ ॥
द्वात्रिंशत्कं लक्षणं ब्रह्मणोपि तद्भारत्याः प्रवदन्त्येव सत्यम् ।
तथा च शङ्का सममेव चक्रिणेत्येवं सदामा कुरु निर्णयं ब्रुवे ॥ १८ ॥
एकस्य वै लक्षणस्यापि विष्णोर्लक्ष्मीरन्तं नैव सम्यक्प्रपेदे ।
अतोनन्तैर्लक्षणैः संयुतं च हरिं चाहुर्लक्षणज्ञाः सदैव ॥ १९ ॥
जानाति लक्ष्मीर्लक्षणं वायुरूपे स्वापेक्षया ह्यतिरिक्तं खगेन्द्र ।
स्वलक्षणापेक्षया भारती तु शतैर्गुणैरधिका वेधसोपि ॥ २० ॥
खगेन्द्र तस्माल्लक्षणे साम्यचित्तं विश्वादीनां सर्वदा मा कुरुष्व ।
अष्टाविंशतिं प्राहू रुद्रादिकानां भ्रूनेत्रयोर्लक्षणेनैव हीनाः ॥ २१ ॥
अलक्षणं मन्यते यद्धि तस्य दुर्लक्षणं नैव तच्चिन्तनीयम् ।
अष्टाविंशतिं लक्षणं वै हरस्य न भारतीवच्चिन्तनीयं खगेन्द्र ॥ २२ ॥
अतो हरः क्रोधरूपी सदैव तयोरभावात्सत्यमुक्तं तथैतत् ।
अतो द्वयं नास्ति रुद्रे खगेन्द्र शिश्नोदरे किञ्चिदाधिक्यमस्ति ॥ २३ ॥
सप्ताधिकैर्विंशतिलक्षणैस्तु समायुताः स्वस्त्रियो लक्ष्मणाद्याः ।
षड्विंशत्या लक्षणैश्चापि युक्ता वारुण्याद्या पञ्चविंशैश्च चन्द्रः ॥ २४ ॥
अर्थश्चतुर्विंशतिभिश्चैव युक्तो नासावायोर्द्व्यधिका विंशतिश्च लक्षणैश्चैकविंशत्या शची युक्ता न संशयः ॥ २५ ॥
प्रवाहा विंशकैर्युक्ता यम एकोनविंशकैः ।
पाश्यष्टादशभिर्युक्तो दशसप्तयुतोऽनलः ॥ २६ ॥
वैवस्वतः षोडशभिर्मित्रः पञ्चदशैर्युतः ।

चतुर्दशैस्तु(चतुर्विंशैस्तु?) धनपः पावकस्तु त्रयोदशैः ॥ २७ ॥
गङ्गा द्वादशभिर्युक्ता बुध एकादशैर्युतः ।
शनिस्तु दशसंख्याकैः पुष्करो नवभिर्युतः ॥ २८ ॥
अथ षोडशसाहस्रं भार्यास्तु मम वल्लभाः ।
अष्टभिश्चैव संयुक्ताः सप्तभिः पितरस्तथा ॥ २९ ॥
षड्भिश्च देवगन्धर्वाः पञ्चभिस्तदनन्तराः ।
चतुर्भिः क्षितिपाः प्रोक्तास्त्रिभिरन्ये च संयुताः ॥ ३० ॥
उदरे किञ्चिदाधिक्ये ह्रस्वे पादे च कर्णयोः ।
शिखाधिक्यं विना विप्र भार्यायां च शिवस्य च ॥ ३१ ॥
लक्ष्मणायां पञ्च दोषाः शिरोगुल्फादिकं विना ।
नाभ्याधिक्ये सहैवाष्टौ दोषाः संत्यतिवाहिके ॥ ३२ ॥
जङ्घाधिक्ये सहैवाष्टौ दोषाः शच्याः सदा स्मृताः ।
एवमेव हि दोषाश्चाप्यूहनीयाः खगेश्वर ॥ ३३ ॥
दुर्लक्षणैः सदा वीन्द्र संश्रुतैस्तत्त्वविद्भवेत् ।
महोदरो लंबनाभिरीषामात्रोग्रदंष्ट्रकः ॥ ३४ ॥
अन्धकूपगभीराक्षो लंबकर्णौष्ठनासिकः ।
लंबगुल्फो वक्रपादः कुनखी श्यावदन्तकः ॥ ३५ ॥
दीर्घजङ्घो दीर्घशिश्नस्त्वेकाण्डश्चैकनासिकः ।
रक्तश्मश्रू रक्तरोमा वक्रास्यः संप्रकीर्तितः ॥ ३६ ॥
दग्धपर्वतसंकाशो रक्तपृष्ठः कलिः स्मृतः ।
अलोमांसोऽलोमशिरा रक्तगण्डकपोलकः ॥ ३७ ॥
ललाटे पाण्डुता नित्यं वामस्कन्धे करे खग ।
क्रूरदृष्टिर्दृष्टिपादस्तथा वै घर्घरस्वरः ॥ ३८ ॥
अत्याशी चातिपानश्च स्तनौ शुष्कफलोपमौ ।
ऊरौ नवाञ्जिकारोमः तथा पृष्ठे च मस्तके ॥ ३९ ॥
ललाटे त्रीणि दीर्घे तु समे द्वौ संप्रकीर्तितौ ।
सर्पाकारस्तु यो मत्स्यस्तस्य शिश्ने प्रकीर्तितः ॥ ४० ॥
पादत्राणोपमो मत्स्यो रसनाग्रे प्रकीर्तितः ।

शिश्नाकारश्च यो मत्स्यो गुदे तस्य प्रशस्यते ॥ ४१ ॥
वृश्चिकाकारमत्स्यस्तु पदोस्तस्य प्रशस्यते ।
श्वाकारश्चापि मत्स्यो वै मुखे तस्य प्रकीर्तितः ॥ ४२ ॥
हस्ते तु बहुरेखाः स्युर्लोम नासापुटे स्मृतम् ।
अतिदीर्घं तु चाङ्गुष्ठं कनिष्ठं चातिदीर्घकम् ॥ ४३ ॥
दुर्लक्षणं त्वेवमादि कलावस्ति ह्यनेकशः ।
सुलक्षणान्यनेकानि मयि संति खगेश्वर ॥ ४४ ॥
द्वात्रिंशल्लक्षणं विष्णोर्ब्रह्माद्यापेक्षयैव तत् ।
सहाभिप्राय गर्भेण ब्रह्मणोक्तं तव प्रभो ॥ ४५ ॥
ब्रह्मोक्तस्य मयोक्तस्य विरोधो नास्ति सत्तम ।
मयोक्तस्यैव स व्यासः कंबुग्रीवः प्रदर्श्यते ॥ ४६ ॥
रक्ताधरं रक्त तालु चैकीकृत्य मयोदितम् ।
अतो विरोधो नास्त्येव तथा ज्ञानात्प्रतीयते ॥ ४७ ॥
सप्ताधिकैर्विंशतिलक्षणैस्तु समायुता याः स्त्रियो लक्ष्मणाद्याः ॥ ४८ ॥
भगे नेत्रे च हस्ते च स्तने कुक्षौ तथैव च ।
भारत्यपेक्षया पञ्चभिर्न्यूना त्वस्ति लक्षणैः ॥ ४९ ॥
न रुद्रवन्न चान्यानि लक्षणानि खगेश्वर ।
षड्विंशत्या लक्षणैश्चापि युक्ता वारुण्याः षड्लक्षणैश्चैव हीना ॥ ५० ॥
कर्णे कुक्षौ नासिकाकेशपाशे गुल्फे भगे किञ्चिदाधिक्यमस्ति ।
इन्द्रो युक्तः पञ्चविंशत्या खगेन्द्र सदा हीनो लक्षणैः सप्तसंख्यैः ॥ ५१ ॥
हस्ते पादे उदरे कर्णयोश्च शिश्ने गुल्फे त्वधरोष्ठेधिकं च ।
चतुर्विंशत्या लक्षणैश्चापि युक्तो नास्तिक्यवायुस्तद्वदेवाष्टभिश्च ॥ ५२ ॥
नाभ्यां गुल्फे हनुरङ्घ्योश्च स्कन्धे द्विजे नेत्रे त्वधरोष्ठेधिकं च ।
त्रयोविंशत्या लक्षणैश्चापि युक्ता शची तथा नवदोषैश्च युक्ता ॥ ५३ ॥
भगे केशे ह्यधरोष्ठे च कर्णे जङ्घे गण्डे वक्षसि गुल्फयोश्च ।
तथोत्तरोष्ठे किञ्चिदाधिक्यमस्ति एवं विजानीहि खगेन्द्रसत्तम ॥ ५४ ॥
द्वाविंशत्या लक्षणैः संयुतस्तु दशभिर्देषैः प्रवहो नाम वायुः ।
तथाङ्गुष्ठे किञ्चिदाधिक्यमस्ति विंशत्येकादशभिर्देषतोर्कः ॥ ५५ ॥

तद्विंशत्या लक्षणैः संयुतस्तु तदा दोषेर्द्वादशभिश्च युक्तः ।

एकोनविंशत्या लक्षणैश्चापि युक्तस्त्रयोदशभिस्तदभावैर्युतोग्निः ॥ ५६ ॥

अष्टादशभिर्लक्षणैः संयुतस्तु वैवस्वतस्तदभावैश्चतुर्दशभिः ।

मित्रस्तु सप्तदशभिर्लक्षणैः संयुतः खग ॥ ५७ ॥

सदोषैः पञ्चदशभिः संयुक्तो नात्र संशयः ।

तैश्च षोडशभिर्युक्तो धनपो नात्र संशयः ॥ ५८ ॥

तदभावैः षोडशभिः संयुक्तः संप्रकीर्तितः ।

तैः पञ्चदशभिश्चैव युक्तोग्रेज्येष्ठपुत्रकः ॥ ५९ ॥

तैः सप्तदशभिर्दोषैः संयुक्तो नात्र संशयः ।

तैश्चतुर्दशभिश्चैव गङ्गा संपरिकीर्तिता ॥ ६० ॥

तथाष्टादशभिर्दोषैः संयुता नात्र संशयः ।

तैस्त्रयोदशभिश्चैव संयुतो बुध एव तु ॥ ६१ ॥

दोषैरेकोनविंशत्या संयुतो नात्र संशयः ।

शनिर्विंशतिदोषेण युतो द्वादशलक्षणैः ॥ ६२ ॥

लक्षणैश्चैकादशभिः पुष्करः परिकीर्तितः ।

एकविंशतिसंख्याकैरसद्भावैः प्रकीर्तितः ॥ ६३ ॥

दशभिर्लक्षणैर्युक्ताः पितरो ये चिराः खग ।

त्रयोविंशतिदोषैश्च संयुता नात्र संशयः ॥ ६४ ॥

अष्टभिर्लक्षणैर्युक्ता देवगन्धर्वसत्तमाः ।

दोषैश्चतुर्विंशतिभिः संयुक्ताः परिकीर्तिताः ॥ ६५ ॥

सप्तलक्षणसंयुक्ता गन्धर्वा मानुषात्मकाः ।

यैस्तु पञ्चविंशतिभिर्दोषैः संयुक्ताः प्रकीर्तिताः ॥ ६६ ॥

षद्गुणैः क्षितिपा युक्ता षड्विंशत्या च दोषतः ।

तदन्ये पञ्चभिर्युक्ताश्चतुर्भिः केचिदेव च ॥ ६७ ॥

त्रिभिः केच्चित्ततो हीना न संति खगसत्तम ।

यस्मिन्नरे क्षितिपे वा खगेन्द्र आधिक्यं यद्दृश्यते लक्षणस्य ॥ ६८ ॥

न ते नरा नैव ते वै क्षितीशाः सर्वे नैव हयुत्तमाः सर्वदैव ।

ये देवा ये च दैत्याश्च सर्वेप्येवं खगाधिप ॥ ६९ ॥

लक्षणालक्षणैश्चैव क्रमेणोक्ता न संशयः ।
लक्षणैः सप्तविंशत्यालक्षणैः संयुताः खग ॥ ७० ॥
अतः सलक्षणा ज्ञेया द्वात्रिंशल्लक्षणैर्न हि ।
पितुर्गृहे वर्धमाना सदापि स्वकुटुंबं श्रेष्ठयितुं खगेन्द्र ॥ ७१ ॥
उवाच सा पितरं दीयमानमन्नादिकं त्रमित्रादिकेषु ।
सदापि ये त्वनुसंधानेन युक्ता अन्तर्गते तत्रतत्र स्थिते च ॥ ७२ ॥
अज्ञातत्वे चान्नपानादिकं च दत्तं संतो व्यर्थमेवं वदन्ति ।
हरिं वक्ष्ये तत्रतत्र स्थितं चं तं वै शृणु त्वादरेणाद्य नित्यम् ॥ ७३ ॥
बालो हरिर्बालरूपेण कृष्णः क्षीरादिकं नवनीतं घृतं च ।
गृह्णाति नित्यं भूषणं वस्त्रजातमेवं दद्यात्सर्वदा विष्णुतुष्ट्यै ॥ ७४ ॥
मित्रैर्हरिः केशवाख्यो मुकुन्दो भुङ्क्ते दत्तं त्वन्नप्रानादिकं च ।
पूर्वं दद्यात्सर्वदा वै गृहस्थो धन्यो भवेदन्यथा व्यर्थमेव ॥ ७५ ॥
गृह्णाति नित्यं माधवाख्यो हरिश्चेत्येवं ज्ञात्वा देयमन्नादिकं च ।
एवं ज्ञात्वा दीयमानेन नित्यं प्रीणाति विष्णुर्नान्यथा व्यर्थमेव ॥ ७६ ॥
गृहे नित्यं वासुदेवो हरिस्तु प्रीणाति नित्यं तत्र तिष्ठन्सुपर्ण ।
एवं ज्ञात्वा स्वगृहं सर्वदैव अलङ्कुर्याद्धातुरूपैः सदैव ॥ ७७ ॥
गोविन्दाख्यस्तिष्ठति वैष्णवानां पुत्रैर्युतस्तिष्ठति वासुदेवः ।
मित्रे मुकुन्दः शालके चानिरूद्धो नारायणो द्विजवर्ये सदास्ति ॥ ७८ ॥
गोष्ठे च नित्यं विष्णुरूपी हरिस्तु अश्वे सदा तिष्ठति वामनाख्यः ।
संकर्षणः शूद्रवर्णे सदास्ति वैश्ये प्रद्युम्नस्तिष्ठति सर्वदैव ॥ ७९ ॥
जनार्दनः क्षत्त्रजातौ सदास्ति दाशेषु नित्यं महिदासो हरिस्तु ।
मह्यां नित्यं तिष्ठति सर्वदैव हयुपेन्द्राख्यो हरिरेकः सुपर्ण ॥ ८० ॥
गजे सदा तिष्ठति चक्रपाणिः सदान्तरे तिष्ठति विश्वरूपः ।
नित्यं शुनि तिष्ठति भूतभावनः पिपीलकायामपि सर्वदैव ॥ ८१ ॥
त्रिविक्रमो हरिरूप्यन्तरिक्षे सर्वजातावनन्तरूपी हरिश्च ।
हरेर्न वर्णोस्ति न गोत्रमस्ति न जातिरीशे सर्वरूपे विचित्रे ॥ ८२ ॥
एवं ज्ञात्वा सर्वदा लक्ष्मणा तु हरिं सदा प्रीणयामास देवी ।
सपर्यया वै क्रियमाणया हरिः पतिर्मम स्यादिति चिन्तयाना ॥ ८३ ॥

तत्याज देहं विष्णुपतित्वकामा मद्रेषु वै वीन्द्र पुत्री प्रजाता ।
स्वयंवरे लक्ष्मणाया अहं च भित्त्वा लक्ष्यं भूपतीन्द्रावयित्वा ॥ ८४ ॥
पाणिग्रहं लक्ष्मणायाश्च कृत्वा गत्वा पुरीं रमयामास देवी ।
तथैवाहं जांबवत्या विवाहं मत्पत्नीत्वे कारणं त्वां ब्रवीमि ॥ ८५ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे लक्ष्मणाविवाहहेतुनिरूपणं नाम द्वाविंशोध्यायः

श्रीगरुडमहापुराणम् २३
श्रीकृष्ण उवाच ।
सोमस्य पुत्री पूर्वसर्गे बभूव भार्या मदीया जाम्बवती मम प्रिया ।
तासां मध्ये ह्यधिका वीन्द्र किञ्चिद्रुद्रादिभ्यः पञ्चगुणैर्विहीना ॥ ३,२३.१ ॥

यदावेशो बलवान्स्याद्रमायां तदानामस प्रियते केशवोलम् ।
यदावेशाद्ध्रासमुपैति काले तदा तासां साम्यमाहुर्महान्तः ॥ ३,२३.२ ॥

लक्ष्म्यावेशः किञ्चिदस्त्येव नित्यमतस्ताभ्यः किञ्चिदाधिक्यमस्ति ॥ ३,२३.३ ॥

गरुड उवाच ।
तासां मध्ये जाम्बवन्ती तु कृष्ण आराधनं कीदृशं सा चकार ।
तन्मे ब्रूहि कृपया विश्वमूर्ते आधिक्ये वै कारणं ताभ्य एव ॥ ३,२३.४ ॥

गरुडेनैवमुक्तस्तु भगवान् देवकीसुतः ।
मेघगंभीरया वाचा उवाच विनतासुतम् ॥ ३,२३.५ ॥

श्रीकृष्ण उवाच ।
या पूर्वसर्गे सोमपुत्री बभूव पितुर्गृहे वर्तमानापि साध्वी ।
जन्म स्वकीयं सार्थकं वै चकार पित्रा साकं विष्णुशुश्रूषणे न च ॥ ३,२३.६ ॥

शुश्राव नित्यं सत्पुराणानि चैवं चक्रे सदा विष्णुपादप्रणामम् ।
चक्रे सदा तारकस्यापि विष्णोः प्रदक्षिणं स्मरणं कुर्वती सा ॥ ३,२३.७ ॥

पित्रा साकं सा तु कन्या खगेन्द्र वैराग्ययुक्ता श्रवणात्संबभूव ।
केशं च मित्रं द्विरदादिकं च अनर्घ्यरत्नानि गृहादिकं च ॥ ३,२३.८ ॥

सर्वं ह्येतन्नश्वरं चैव मेने ममाधीनं हरिणा वै कृतं च ।
येनैव दत्तं पुत्रमित्रादिकं च तेना हृतं वेदनां नैव चक्रे ॥ ३,२३.९ ॥

अद्यैव विष्णुः परमो दयालुः दयां मयि कृतवांस्ते न सुष्ठु ।
पित्रा साकं कन्यका सा तु वीन्द्र सदात्मनि ह्यमले वासुदेवे ॥ ३,२३.१० ॥

एकान्तत्वं सुष्ठु भक्त्या गता सा यदृच्छया सोपपन्नेन देवी ।
अकल्पयन्त्यात्मनो वीन्द्र वृत्तिं चकार यत्सावधिराधं प्रथैव ॥ ३,२३.११ ॥

सा वै वित्तं विष्णुपादारविन्दे दुः खार्णवात्तराके संचकार ।
वागीन्द्रिद्रियं खग सम्यक्चकार हरेर्गुणानां वर्णने वा सदैव ॥ ३,२३.१२ ॥

हस्तौ च विष्णोर्गृहसंमार्जनादौ चकार देवी गात्रमलापहारम् ।
श्रोत्रं च चक्रे हरिसत्कथोदये मोक्षादिमार्गे ह्यमृतोपमे च ॥ ३,२३.१३ ॥

नेत्रं च चक्रे प्रतिमादिदर्शने अनादिकालीनमलापहरिणी ।
सद्वैष्णवानां स्पर्शने चैव संगे निर्माल्यगन्धानुविलेपने त्वक् ॥ ३,२३.१४ ॥

घ्राणेंद्रियं सा हरिपादसारे चकार संसारविमुक्तिदे च ।
जिह्वेन्द्रियं हरिनैवेद्यशेषे श्रीमत्तुलस्यादिविमिश्रिते च ॥ ३,२३.१५ ॥

पादौ हरेः क्षेत्रपथानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ।
कामं ह्रदास्ये तु हरिदास्यकाम्या तथोत्तमश्लोकजनाश्चरन्ति ॥ ३,२३.१६ ॥

निष्कामरूपे च मतिं चकार वागिन्द्रियं स्तवनं स्वीचकार ।
एवं सदा कार्यसमूहमात्मना समर्पयित्वा परमेशपादयोः ॥ ३,२३.१७ ॥

तीर्थाटनार्थं तु जगाम पित्रा साकं हरेः प्रीणनाद्यर्थमेव ।
आराधयित्वा ब्राह्मणान्विष्णुभक्तानादौ गृहे वस्त्रसंभूषणाद्यैः ॥ ३,२३.१८ ॥

पश्चात्कल्पं कारयामास देवी विष्णोरग्रे तीर्थयात्रार्थमेव ।
यावत्कालं तीर्थयात्रा मुकुन्द तावत्कालं तूर्ध्वरेता भवामि ॥ ३,२३.१९ ॥

यावत्कालं तीर्थयात्रां करिष्ये तावद्दत्ताद्वैष्णवानां च संगम् ।
हरेः कथाश्रवणं स्यान्मुकुन्द नावैष्णवानां संगिनामङ्गसंगम् ॥ ३,२३.२० ॥

सुहृज्जनैः पुत्रमित्रादिकैश्च दीर्थाटनं नैव कुर्यां मुकुन्द ।
कुर्वन्ति ये काम्यया तीर्थयात्रां तेषां संगं कुरु दूरे मुकुन्द ॥ ३,२३.२१ ॥

शालग्रामं ये विहायैव यात्रां कुर्वन्ति तेषां किं फलं प्राहुरार्याः ।
यदा तीर्थानां दर्शनं स्यात्तदैव शालग्रामं पुरतः स्थापयित्वा ॥ ३,२३.२२ ॥

तीर्थाटनं पादचैरैः कृतं चेत्पूर्णं फलं प्राहुरार्याः खगेन्द्र ।
पादत्राणं पादरक्षां च कृत्वा तीर्थाटनं पादहीनं तदाहुः ॥ ३,२३.२३ ॥

यो वाहने तुरगे चोपविष्टस्तीर्थाटनं कुरुते चार्धहीनम् ।
वृषादीनां वाहने पादमाहुः परान्नानां भोजने व्यर्थमाहुः ॥ ३,२३.२४ ॥

महात्मनां वेदविदां यतीनां परान्नानां भोजने नैव दोषः ।
संकल्पयित्वा परमादरेण जगाम सा तीर्थयात्रार्थमेव ॥ ३,२३.२५ ॥

आदौ स्नात्वा हरिनिर्मात्यगन्धं विसर्जयित्वा श्रवणं वै चकार ।
पित्रा साकं भोजनं चापि कृत्वा अग्रे दिने क्रोशमेकं जगाम ॥ ३,२३.२६ ॥

तत्र द्विजान्पूजयित्वान्नपान रात्रौ तत्त्वं श्रावयामास देवी ।
एवं यात्रां ये प्रकुर्वन्ति नित्यं तेषां यात्रां सफलां प्राहुरार्याः ॥ ३,२३.२७ ॥

विना दयां तीर्थयात्रा खगेन्द्रव्यर्थेत्येवं वीन्द्र चाहुर्महान्तः ।
दिवा रात्रौ ये न शृण्वन्ति दिव्यां हरेः कथां तीर्थमार्गे खगेन्द्र ॥ ३,२३.२८ ॥

व्यर्थंव्यर्थं तस्य चाहुर्गतं वै अश्वादीनां वाहनानां च विद्धि ।
अश्वादीनामपराधं वदस्व गङ्गादीनां दर्शनात्पापनाशः ॥ ३,२३.२९ ॥

क्षेत्रस्थविष्णोर्दर्शनात्पापनाशो मार्जारस्याप्यपराधं वदस्व ।
क्षेत्रस्थविष्णोः पूजनात्पापनाशः पूजावतामपराधं वदस्व ॥ ३,२३.३० ॥

जपादीनां कुर्वतां पापनाशो विष्णोर्ध्यानात्सद्य एवाधनाशः ।
अनुसंधानाद्रहितं सर्वमेव कृतं व्यर्थमेवेति चाहुः ॥ ३,२३.३१ ॥

अतो हरेः पापविनाशिनीं कथां श्रुत्वा विष्णोर्भक्तिमान्स्यात्वगन्द्र ।
दृष्ट्वादृष्ट्वा हरिपादाङ्कितं च स्मृत्वास्मृत्वा भक्तिमान्स्यात्खगेन्द्र ॥ ३,२३.३२ ॥

पित्रा साकं कन्यका सापि वीन्द्र शेषाचलस्थं श्रीनिवासं च द्रष्टुम् ।
जगाम सा मार्गमध्ये हरिं च सा चिन्तयामास रमापतिं च ॥ ३,२३.३३ ॥

कदा द्रक्ष्ये श्रीनिवासस्य वक्षः श्रीवत्सरत्नैर्भूषितं विस्तृतं च ।
कदा द्रक्ष्ये श्रीनिवासस्य तुन्दं वलित्रयेणाङ्कितं सुंदरं च ॥ ३,२३.३४ ॥

कदा द्रक्ष्ये श्रीनिवासस्य कण्ठं महर्लोकस्याश्रयं कंबुतुल्यम् ।
कदा द्रक्ष्ये श्रीनिवासस्य नाभिं सदान्तरिक्षस्याश्रयं वै सुपूर्णम् ॥ ३,२३.३५ ॥

कदा द्रक्ष्ये वदनं वै मुरारेर्जनलोकस्याश्रयं सर्वदैव ॥ ३,२३.३६ ॥

शिरः कदा श्रीनिवासस्य द्रक्ष्ये सत्यस्य लोकस्याश्रयं सर्वदैव ।
कटिं कदा श्रीनिवासस्य द्रक्ष्ये भूर्लोकस्याश्रयं सर्वदैव ॥ ३,२३.३७ ॥

कदा द्रक्ष्ये श्रीनिवासस्य चोरु तलातलस्याश्रयं सर्वदैव ।
कदा द्रक्ष्ये श्रीनिवासस्य जानु सुकोमलं सुतलस्याश्रयं च ॥ ३,२३.३८ ॥

कदा द्रक्ष्ये श्रीनिवासस्य जङ्घे रसातलस्याश्रयेः सर्वदैव ।
कदा द्रक्ष्ये पादतलं हरेश्च पाताललोकस्याश्रयं सर्वदैव ॥ ३,२३.३९ ॥

इत्थं मार्गे चिन्तयन्ती च देवी शेषाचले शेषदेवं ददर्श ।
फणैः सहस्रैः सुविराजमानं नानाद्रुमैर्वानरैर्वानरीभिः ॥ ३,२३.४० ॥

अनन्त जन्मार्जितपुण्यसंचयान्मयाद्य दृष्टः परमाचलो हि ।
तद्दर्शनाद्वाष्पकलाकुलेक्षणा सद्यः समुत्थाय ननाम मूर्ध्ना ॥ ३,२३.४१ ॥

मुखं च दृष्ट्वा नमनं च कार्यं पृष्ठादिभागे नमनं न कार्यम् ।

सापि द्विषट्कं नमनं च चक्रे शालग्रामं स्थापयित्वा पुरोऽस्य ॥ ३,२३.४२ ॥

इत्थं कार्यं वैष्णवैः पर्वतस्य त्वं वैष्णवैर्विपरीतं च कार्यम् ।
मध्वान्तःस्थः पर्वताग्रेस्ति नित्यं रमाब्रह्माद्यैः पूजितः श्रीनिवासः ॥ ३,२३.४३ ॥

सुसत्तमं परमं श्रीनिवासं द्रक्ष्येऽथाहं ह्यारुरुक्षेऽचलञ्च ।
इत्येवमुक्त्वा कपिलाख्यतीर्थे स्थानं चक्रे सा स्वपित्रा सहैव ॥ ३,२३.४४ ॥

अत्रैवास्ते श्रीनिवासो हरिस्तु द्रव्येण रूपेण न चान्यथेति ।
आदौस्नात्वा मुण्डनं तत्र कृत्वा तीर्थश्राद्धं कारयित्वा सुतीर्थे ॥ ३,२३.४५ ॥

गोभूहिरण्यादिसमस्तदानं दत्त्वा शैलं चारुरोहाथ साध्वी ।
शालग्रामं स्थापयित्वा स चाग्रे पुनः प्रणामं सापि चक्रे सुभक्त्या ॥ ३,२३.४६ ॥

सोपानानां शतपर्यन्तमेवमारुह्य सा ह्युपविष्टा तु तत्र ।
शुश्राव सा भागवतं पुराणं शुश्राव वैवेङ्कटाद्रेः प्रशंसाम् ॥ ३,२३.४७ ॥

जैगीषव्याद्गुरुपादात्सुभक्त्या सुश्राव तत्त्वं वेङ्कटाद्रेश्च सर्वम् ॥ ३,२३.४८ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे वेङ्कटेशगिरियात्राक्रमनिरूपणं नाम त्रयोविंशोध्यायः

श्रीगरुडमहापुराणम् २४
जैगीषव्य उवाच ।
कन्ये शृणु त्वं वेङ्कटाख्याचलस्य स्मेराननां पुण्यमांरोहणेऽस्य ।
श्रीगीतायाः पठनं चैव कुर्वन्नारोहणं कुरुते सर्वलोकः ॥ ३,२४.१ ॥
पदेपदे श्रीनिवासश्च देवस्त्वलं ह्यलं प्रीयते भक्तवर्गः ।
तं प्रीणयन्मोक्षमायान्ति सर्वे हरौ तुष्टे किमलभ्यं च कन्ये ॥ ३,२४.२ ॥
सोपानदेशे यः पुराणं शृणोति तदा कृता सर्वतीर्थादियात्रा ।
तदा दिवा प्रस्तुवन्तीह मार्गे सदा हरिं श्रीनिवासं गुरुं च ॥ ३,२४.३ ॥
सोपानानां महिमानं च श्रुत्वा शालग्रामं स्थापयित्वा च तत्र ।
नमस्कृत्वा पुनरेवापि सा तु सोपानानि त्वारुरोहाथ साध्वी ॥ ३,२४.४ ॥
सोपानानां वीन्द्र चारोहणेन त्ववैष्णवानां हरितोषो न चैव ।
तेनैव तेषां साधनं भूय एव तमस्यन्धे पातयितुं खगेन्द्र ॥ ३,२४.५ ॥
स्थलेस्थले एवमेवापि कार्यं जैगीषव्यं पुनरेवाह देवी ।
कन्योवाच ।
जैगीषव्यः श्रीनिवासो हरिस्तु ब्रह्मादीनां दृश्यते श्रीनिवासः ॥ ३,२४.६ ॥
जैगीषव्य कृपया त्वं वदस्व जैगीषव्यो ह्येवमुक्तो हरिं तु ।
उवाच कन्यां सोमपुत्रीं सतीं च ब्रह्मादीनां दृश्यते श्रीनिवासः ॥ ३,२४.७ ॥
अनन्तरूपोधिककान्तकान्तिमान्रुद्रादीनां दृश्यते वेङ्कटेशः ।
ससूर्यलक्षाधिककान्तकान्तितो रुद्रादीनां दृश्यते श्रीनिवासः ॥ ३,२४.८ ॥
सहस्रसूर्याधिककान्तिकान्तः सविद्युत्त्वान्मानुषाणां रमेशः ।
ऋष्यादीनां दृश्यते चन्द्रवच्च सन्मानुषाणामपरोक्षो हरिस्तु ॥ ३,२४.९ ॥
नक्षत्रवद्दृश्यते श्रीनिवासः सदा ऋषीणामपरोक्षो हरिस्तु ।
स सूर्यवद्दृश्यते श्रीनिवासः संसारिणां वेङ्कटेशः खगेन्द्र ॥ ३,२४.१० ॥
संदोहवद्दृश्यते वै प्रकाशो मिथ्यावतां दृश्यते श्रीनिवासः ।
पाषाणवन्नैल्यरूपप्रकाशः शिलामात्रे दृष्यते वै कलौ च ॥ ३,२४.११ ॥
नृणां सर्वेषां श्रीनिवासो हरिस्तु कलौ स्वरूपं श्रीनिवासस्य देवी ।
न मानुषाः प्रविजानन्ति सर्वे यतः कलौ तामसा राजसास्तु ॥ ३,२४.१२ ॥
तत्संगिनः सात्त्विकाः केचिदेव ह्यतो भक्ता दुर्लभा वै कलौ च ।
ये दृश्यन्ते भक्तवत्ते न भक्ताः शिश्नोदरयोर्भरणे चैव सक्ताः ॥ ३,२४.१३ ॥
कुर्वन्ति यात्रां च तदर्थमेव भक्तिज्ञानं दुर्लभं वै कलौ च ।
भक्ता ये वै न विरक्ताः सदैव तेषां हरेर्दर्शनं दुर्लभं च ॥ ३,२४.१४ ॥
भक्तस्वरूपं तव वक्ष्ये खगेन्द्र यो ज्ञानपूर्णः परमे स्निग्ध एव ।
न च द्वेषैर्बन्धुरो भक्तियुक्तस्तव द्वेषाञ्छृणु वक्ष्ये च सम्यक् ॥ ३,२४.१५ ॥

जीवाभिदा हरिणाप्राकृतेन स्वतन्त्रेण ह्यस्वतन्त्रस्य नित्यम् ।
ज्ञानानन्दैः परिपूर्णे हरौ च गुणैरपूर्णो हरिरित्येव चिन्ता ॥ ३,२४.१६ ॥
श्रीब्रह्मरुद्रादिदिवौकसां सदा तथा द्विजानां संमानायाश्च चिन्ता ।
विष्णोः सकाशाद्ब्रह्मरुद्रादिकानां सदाधिक्यालोचनं द्वेष एव ॥ ३,२४.१७ ॥
विष्णोर्भद्रे हस्तपादादिकानां भेदज्ञानं द्वेषमाहुर्महान्तः ।
अवताराणा छेदभेदादिकं च तथोच्यते मरणस्यापि चिन्ता ॥ ३,२४.१८ ॥
तद्भक्तानां द्वेषणं चाहुरार्यास्तद्वाक्यानां दूषणं द्वेष एव ।
नच द्वेषैः संयुता ये च लोके कन्ये दृश्यन्ते न तु भक्ताः कदाचित् ॥ ३,२४.१९ ॥
कन्योवाच ।
जैगीषव्य ब्रूहि मे के च भक्ता भक्तिं कथं दर्शयामासुरेते ।
तेषां हरिः श्रीनिवासो महात्मा त्राता सदा भक्तवर्गे दयालुः ॥ ३,२४.२० ॥
जैगीषव्यस्त्वेवमुक्तो महात्मा उवाच कन्यां संस्मरन् भक्तवर्यः ।
जैगीषव्य उवाच ।
प्रह्लादाद्या श्रीनिवासस्य भक्ताः कृत्वा नृसिंहे चोत्तमां भक्तिमेव ॥ ३,२४.२१ ॥
अवाप साम्राज्यमनुत्तमं च ज्ञानं नृसिंहात्समवाप पश्चात् ।
पराशरः श्रीनिबासस्य भक्तो भक्तिं कृत्वा व्यासरूपं हरिं च ॥ ३,२४.२२ ॥
स्तुत्वा तेन ज्ञानतत्त्वं ह्यवाप्य जगाम मोक्षं भक्तिसंवर्धितात्मा ।
यो नारदः श्रीनिवासस्य भक्तो भक्तिं कृत्वा गर्भवासे हरौ च ॥ ३,२४.२३ ॥
तया भक्त्या ब्रह्मपुत्रत्वमाप ज्ञानप्राप्त्या तेन मुक्तिं जगाम ।
यो ह्यंबरीषः श्रीनिवासस्य भक्तः कृत्वा भक्तिं परदेव हरौ च ॥ ३,२४.२४ ॥
जप्त्वा ज्ञानं प्राप्य दुर्वासकश्चाप्यवाप मोक्षं तेन संवर्धितात्मा ।
मुचुकुन्दो वै श्रीनिवासस्य भक्तो वैराग्यतो भक्तिदार्ढ्यं च कृत्वा ॥ ३,२४.२५ ॥
तत्त्वज्ञानं प्राप्य विष्णोर्महात्मा ह्यवाप मोक्षं तेन संवर्धितात्मा ।
स पुण्डरीकः श्रीनिवासस्य भक्तः पित्रादिष्टो विष्णुभक्तिं च कृत्वा ॥ ३,२४.२६ ॥
हरिप्रासादाज्ज्ञानमनुत्तमं चाप्यवाप मोक्षं भक्तिसंवर्धितात्मा ।
ब्रह्मा च वायुश्च सरस्वती च ज्ञातव्याः सर्वे ॠजुयोगिनश्च ॥ ३,२४.२७ ॥
अच्छिन्नभक्ताश्च सदा मुरारेर्न काम्यरक्ताः शुद्धरूपा हि ते च ।
गिरीशनागेशखगेशसंज्ञा देवाः शुक्रारौ गुरुचन्द्रेन्दुसूर्याः ॥ ३,२४.२८ ॥
जलेशोग्निर्मनुधर्मौ कुबेरः विघ्नेशनासत्यमरुद्गणाश्च ।
पर्जन्यमित्रादय एव सर्वे सदा ह्येते श्रीनिवासस्य भक्ताः ॥ ३,२४.२९ ॥
विश्वामित्रो भृगुरौर्वश्च कुत्सो मरीचिरत्रिः पुलहः क्रतुश्च ।
शक्तिर्वसिष्ठो सौतमीयो पुलस्त्यो भारद्वाजः श्रीनिवासस्य भक्ताः ॥ ३,२४.३० ॥
मान्धाता नहुषोंबरीषसगरौ राजा पृथुर्हैहयो इक्ष्वाकुर्भरतो ययातिसुतलौ धर्मो विकुक्षिस्तथा ।

उत्तानश्च बिभीषणो दशरथो ह्येते महाज्ञानिनः श्रीमद्वेङ्कटनायकस्य च गुरोर्भक्ताः सदा संस्मृताः ॥ ३,२४.३१ ॥
भागीरथी समुद्रश्च यमुना च सरस्वती ।
गोदावरी नर्मदा च कृष्णा भीमरथी तथा ॥ ३,२४.३२ ॥
सरयूफल्गुकावेरीगण्डकी कपिला स्तथा ।
इत्येताश्च हरेर्भक्ताः संति चात्रैव भामिनि ॥ ३,२४.३३ ॥
अभिप्रायं तत्र वक्ष्ये शृणु कन्ये मया सति ।
यत्र प्रवर्तते मार्गे कथा विष्णोर्महात्मनः ॥ ३,२४.३४ ॥
वर्तन्ते वैष्णवा यत्र हरितत्त्वार्थबोधकाः ।
तत्रैव भक्ताः सर्वेपि संति विष्णोस्तथैव च ॥ ३,२४.३५ ॥
ये देवयात्रां परमात्मचिन्तया कुर्वन्ति ते हरिभक्ताश्च नान्ये ।
यतो हरौ परमे वैष्णवानां सर्वं निष्ठामेति कृत्यं खगेन्द्र ॥ ३,२४.३६ ॥
शेषाचलं समासाद्य ह्यन्नवस्त्रादिभूषणम् ।
यो न दद्यादभक्तः स ततः को नु परः पशुः ॥ ३,२४.३७ ॥
भक्ता हरेः श्रीनिवासाचले च गङ्गादिरूपेण च तत्रतत्र ।
तिष्ठन्ति सेवार्थमुरुक्रमस्य तेषां पूजा नैव कार्या च देवि ॥ ३,२४.३८ ॥
अभिप्रायं तत्र वक्ष्ये शृणु त्वं तत्र स्थले वस्त्रगन्धादिधूपैः ।
पुराणोक्ता अपि भेदेन पूज्या दृष्ट्वा च तान्वन्दयेत्प्राज्ञ एव ॥ ३,२४.३९ ॥
सद्ब्राह्मणान्वन्दयेत्पादमूले हस्तौ च द्वौ संपुटीकृत्य देवि ।
साष्टाङ्गरुपं वन्दनं चैव विष्णोः कुर्यात्तथा गुरवे विष्णुबुद्ध्या ॥ ३,२४.४० ॥
गङ्गादीनां वन्दनं कार्यमेव साष्टाङ्गं वै तुलसीनां तथैव ।
अश्वत्थानां नमनं कार्यमेव गवादीनां नमनं मानसेन ॥ ३,२४.४१ ॥
पूजा सदा देवदेवस्य विष्णोः कार्या भक्त्या वैष्णवैरेव नान्यैः ।
ये नामका ज्ञानवन्तः सुभक्ताः सदैव कार्या विष्णुपूजा च कन्ये ॥ ३,२४.४२ ॥
ये नामका ज्ञानवन्तः सुभक्ताः सदैवं कार्या विष्णुपूजा च कन्ये ।
येनामका विष्णुभक्ताः सदैव पूजा विष्णोर्नैव कार्यात्र देवि ॥ ३,२४.४३ ॥
मोहाद्यो वै पूजयेद्देवदेवं महाधर्माद्याति चान्धं तमो वै ।
ब्रह्मादिनामानि हरेर्हि देवीं विष्णोः स्वनामानि ददौ दिवौकसाम् ॥ ३,२४.४४ ॥
नादाद्धीरः केशवादीनि कन्ये स्वकं पुरं प्रविहायैव राजा ।
एवं मयोक्तं कन्यके सर्वमेतदेतत्परं सम्यगारोहणीयम् ॥ ३,२४.४५ ॥
गोविन्द नारायण माधवेति यूयं मया सर्वमाराधितव्यम् ।
सर्वे मिलित्वा पुनरेवं खगेन्द्र समारुहन्वैङ्कटाद्रिं गृणन्तः ॥ ३,२४.४६ ॥
हरेर्नामान्यत्र पूर्वं गृणन्तस्त्वास्वादयन्तः श्रीनिवासस्य नाम ।

द्रष्टुं सर्वे श्रीनिवासं तथैव कुर्वन्तस्ते तलशब्दं नदन्तः ॥ ३,२४.४७ ॥
इति कृष्णवचः श्रुत्वा ताक्ष्र्यः कृष्णमुवाचह कथमास्वादनं चक्रुरेतद्विस्तीर्यमे वद ।
श्रीकृष्ण उवाच ।
भो श्रीनिवास तव नामैव चैतन्नाम स्वामी ननु नामैव स्वामी ।
यां ब्रह्माद्या आश्रयन्तीत्ति यस्मात्तस्माद्रमा श्रीरिति नाम चाप ॥ ३,२४.४८ ॥
रमाश्रयत्वान्नितरां सर्वदा चेत्यतो हरिः श्रीनिवासाभिधानः ।
भो श्रीनिवासेति तु नर्तयन्तो रोमाञ्चमात्रास्तलशब्दकारिणः ॥ ३,२४.४९ ॥
अद्यैव पश्याम हरेस्तवास्यं कदा वयं कृत कृत्या भवामः ।
भोः केशवाद्यैव पदारविन्दं संदर्शयित्वा सुदयां कुरुष्व ॥ ३,२४.५० ॥
ब्रह्माणमाहुश्च पुराणमाहुः कशब्दवाच्यं सर्वलोकेशमाहुः ।
ईशं चार्हं रुद्रमित्येव चाहुस्तत्प्रेरकं सृष्टिसंहारकार्ये ॥ ३,२४.५१ ॥
अतो हरिः केशवनामधेयो भोः केशवेति च नर्तयन्तः ।
आनन्दवापीं संस्त्रवन्तोभि जग्मुर्नारायणेति प्रवदन्तो हि जग्मुः ॥ ३,२४.५२ ॥
अतो दोषास्तद्विरुद्धा गुणाश्च नाराश्च तेषामाश्रयत्वान्मुरारिः ।
नारायणेति प्रवदन्तीह लोके नारानुबन्धात्सर्वमुक्ताः खगेन्द्र ॥ ३,२४.५३ ॥
नाराः प्रोक्ता आश्रयत्वाच्च तेषामतोपि नारायण एव वीन्द्र ।
मुक्ताश्च ये तु प्रपदंनु जग्मुरण्डोदकं यस्य कटाक्षमात्रात् ॥ ३,२४.५४ ॥
यदुत्पन्नं तेन नाराः खगेन्द्र तेषां सदाप्याश्रयत्वाच्च वीन्द्र ।
नारायणेति प्रवदन्तीह लोके ह्यनन्तब्रह्माण्डविसर्जकत्वात् ॥ ३,२४.५५ ॥
एवं ननृतुः परिशंसयन्तो गोविन्द नान्यो हि न चैव दर्शनम् ।
गोशब्दवाच्यास्तु समस्तवाचो गोभिश्च सर्वैः प्रतिपाद्यते यतः ॥ ३,२४.५६ ॥
अतो हि गोविन्द इति स्मृतः सदा भो वेदवेद्येति तथा न ननृतुः ।
आनन्दबाष्पैश्च समन्विता हि हरे मुरारे तव दर्शनं हि ॥ ३,२४.५७ ॥
देहि प्रभो वै तवदासदासाश्चतुर्दशे भुवने सर्वदापि ।
यतस्त्वमेवं वसतीति वासुश्चात्रैव नित्यं क्रीडते सर्वदैव ॥ ३,२४.५८ ॥
यतो देवेत्येवमाहुर्महान्तस्त्वतो हरिं वासुदेवेति चाहुः ।
भो वासुदेवेति ननृतुः सर्वदैव भो माधवेति ननृतुश्चैव सर्वे ॥ ३,२४.५९ ॥
लक्ष्मीपते चेति वदन्ति सर्वे धनीति शब्दः स्वाभिवाची यतो हि ।
अतोप्यार्या माधवेति ब्रुवन्ति लक्ष्मीपते पाहि तथैव भक्तान् ॥ ३,२४.६० ॥
ते वै ब्रुवन्तो ननृतुश्च जग्मुर्विष्णो सदास्मान्परिपाहि नित्यम् ।
सर्वत्र यस्माद्विततोसि तस्मादित्यादिनामानि गृणन्त एव ।
जग्मुश्च सर्वे ददृशुश्च तीर्थं भक्त्योपेताः श्रीनिवासं स्मरन्तः ॥ ३,२४.६१ ॥
कन्योवाच ।

किं नामकं तीर्थमिदं मुनीन्द्र किं कार्यमत्र प्रवदास्मान्कृतीश ।
कस्मै प्रसन्नो भगवाञ्छ्रीनिवासस्त्वस्मिन्सुतीर्थं वद विस्तरेण ॥ ३,२४.६२ ॥
जैगीषव्य उवाच ।
कन्ये शृणु त्वं ह्यभवत्सुबुद्धिमान्प्रह्लादसंज्ञो हरिभक्तवर्यः ।
निष्कामबुद्ध्या तु यदा जगाम शेषाचलस्थं श्रीनिवासं च द्रष्टुम् ॥ ३,२४.६३ ॥
अस्मिंस्थले दैत्यकुमारकान्प्रति हरेश्च तत्त्वं परिपृष्टवान्प्रभुः ।
नृसिंहरूपं श्रीनिवासं भजस्व सुदुर्लभं मानुषं जन्म कन्ये ॥ ३,२४.६४ ॥
तत्रापि विष्णोर्नृहरे सुतत्त्वं सुदुर्लभं सुष्ठु यात्रा तथैव ।
यस्यां यात्रायां यत्र कुत्रापि देशे हरेः कथा वर्तते दैत्यवर्याः ॥ ३,२४.६५ ॥
तत्र स्थले हरिरास्ते सदैव यतो व्याप्तः सर्वतो वै नृसिंहः ।
एतच्छ्रुत्वा दैत्यकुमारकास्ते प्रह्लादमूचुर्भक्तवर्यं हरेश्च ॥ ३,२४.६६ ॥
व्याप्तो हरिश्चेत्कथमत्र वै सखे न दृश्यते जलरूपी नृसिंहः ।
स एवमुक्तो दानवानां सुतैश्च तुष्टाव विष्णुं परमादरेण ॥ ३,२४.६७ ॥
तव स्वरूपं मम दर्शयस्व स्वयोग्यरूपं दानवानां सुतानाम् ।
इति स्तुतः श्रीनिवासो हरिस्तु तस्मिन्ननन्तर्जलरूपं समायात् ॥ ३,२४.६८ ॥
अस्मिन्स्नानं ये प्रकुर्वन्ति तीर्थे तेषां ज्ञानं परमं दृढं स्यात् ।
अत्र स्नाने मानुषाणां च तात बुद्धिर्न हि स्यात्कलिकाले विशेषात् ॥ ३,२४.६९ ॥
दत्त्वां वरं दैत्यवराय विष्णुरन्तर्दधे जलपूर्णे सुकुण्डे ।
अद्याप्यास्ते जलमध्ये नृसिंहः प्रहलादोपि दैत्यकुमारकैः सह ॥ ३,२४.७० ॥
तस्मिन् सुतीर्थे परितस्तत्रतत्र जयेति शब्दः श्रूयते चापराह्ने ।
इदं तीर्थं नारसिंहाभिधं च कन्येस्नानं ह्यत्र कार्यं मनुष्यैः ॥ ३,२४.७१ ॥
स्नानं कृत्वा तत्र तीर्थे च सम्यग्दीपं दत्त्वा द्विजवर्याय मुख्यम् ।
द्रष्टुं पुनः श्रीनिवासं प्रजग्मुर्गोविन्दगोविन्द इति ब्रुवन्तः ॥ ३,२४.७२ ॥
मुख्यप्राणाधिष्ठितं स्थानमाप्य अपाविशत्तत्र देवी ह्युवाच ।
जैगीषव्यः श्रीनिवासस्य विष्णोः कथं कार्यं दर्शनं तद्वदस्व ॥ ३,२४.७३ ॥
जैगीषव्यः प्राह संहृष्टचित्तो ब्रवीमि तन्त्रं शृणु कन्यके त्वम् ।
श्रुत्वा मत्तः कुरु सर्वं मयोक्तमाद्यं द्वारं श्रीनिवासस्य दृष्ट्वा ॥ ३,२४.७४ ॥
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
तानि सर्वाणि मे देव क्षमस्व पुरुषोत्तम ॥ ३,२४.७५ ॥
मानसान्वाचिकान्दोषान्कायि कानपि सर्वशः ।
वैष्णवद्वेषहेतून्मे भस्मसात्कुरु माधव ॥ ३,२४.७६ ॥
आद्यद्वारं श्रीनिवासस्य देवि सम्यक्स्मरेद्विजयं वै जयं च ।
दक्षाध्वरे श्रीनिवासस्य देवि चण्डं प्रचण्डं संस्मरेत्सम्यगेव ॥ ३,२४.७७ ॥

पाश्चात्यभागे श्रीनिवासस्य देवि नन्दं सुनन्दं संस्मरेदेव भक्त्या ।
सव्यद्वारे श्रीनिवासस्य कन्ये स्मरेत्कुमुदाक्षं कुमुदन्तमेव ॥ ३,२४.७८ ॥
यश्चैव देहं प्रविशेद्भक्तिपूर्वं कदा द्रक्ष्ये सादरेणैव देवि ।
प्रदक्षिणद्वादशकं च कृत्वा पदे पदे संस्मरेच्छ्रीनिवासम् ॥ ३,२४.७९ ॥
श्रीस्वामितीर्थे सम्यगाचम्य नत्वा स्नात्वा नत्वा भूवराहं च देवि ।
अयुद्वारं प्रिवशेद्भक्तिपृर्वं गोविन्दगोविन्द इतिब्रुवन्वै ॥ ३,२४.८० ॥
पश्चाद्धरेर्नमनं कार्यमेव साष्टाङ्गरूपं प्रविशेद्देवगेहम् ।
पुनर्विशेद्वारतः संस्थितः स पीठस्थदेवान्मानसा चिन्तयीत ॥ ३,२४.८१ ॥
मध्ये पीठं श्रीनिवासं च देवी नारायणं प्रणमेत्पूर्णमेव ।
देवस्य सव्ये पीठभागाद्वहिश्च नमस्कार्यं गुरुदेवाय चैव ॥ ३,२४.८२ ॥
पीठस्याग्राच्चाप्यधस्तात्प्रदेशे आग्नेयकोणे प्रणमेद्वै खगेन्द्र ।
नैरृत्यभागे व्यासदेवाय देवि नमस्कार्यो वैष्णवः सर्वदापि ॥ ३,२४.८३ ॥
वायव्यकोणे भक्तिपूर्वं सुदुर्गां नमस्कुर्याद्भक्तिसंवर्धितात्मा ।
पीठस्योर्ध्वं ह्यग्निकोणेषु देवी धर्माधिभूताय नमो यमाय ॥ ३,२४.८४ ॥
पीठस्योर्ध्वं नैरृतस्योर्ध्वकोणे ज्ञानाधिपं प्रणमेद्वायुदेवम् ।
पीठस्योर्ध्वं वायुकोणे च सुभ्रूर्वैराग्यानामधिपं चैव रुद्रम् ॥ ३,२४.८५ ॥
पीठस्योर्ध्वं त्वीशकोणे च देवि ऐश्वर्याणामधिपं चेन्द्रदेवम् ।
पीठस्य पूर्वे प्रणमेन्नैरृतिं च अर्याम्णानामधिपं चात्र देवि ॥ ३,२४.८६ ॥
देवस्य पीठस्य च दक्षिणे च दुर्गां नमेदुग्ररूपाभिधां च ।
पीठस्य कन्ये प्रणमेत्पश्चिमे वै आरोग्याणा मधिपं कामदेवम् ॥ ३,२४.८७ ॥
देवस्य पीठस्योत्तरे रुद्रदेवमनैश्वर्याणामधिपं संस्मरेच्च ।
पीठस्य मध्ये प्रणमेद्वै वराहं सदा कन्ये परमं पूरुषाख्यम् ॥ ३,२४.८८ ॥
तस्योपरिष्टाच्छक्तिसंज्ञां च लक्ष्मीमाधाररूपां प्रणमेच्चैव नित्यम् ।
तस्योपरिष्टाद्वायुकूर्मौ नमेच्च तस्योपरिष्टाच्छेषकूर्मौ नमेच्च ॥ ३,२४.८९ ॥
तस्योपरिष्टादभिमानिनीं भुवो भूदेवतां प्रणमेच्चैव सुभ्रूः ।
तस्योपरिष्टाद्वरुणं संस्मरेच्च क्षीरोदधेरधिपं चैव देवम् ॥ ३,२४.९० ॥
तस्योपरिष्टात्प्रणमेच्चैव लक्ष्मीं श्वेतद्वीपाख्यं कन्यके पूजयेच्च ।
तस्योपरिष्टात्प्रणमेच्चैव लक्ष्मीं महादिव्यां मण्डपसंज्ञकां च ॥ ३,२४.९१ ॥
पीठस्य मध्ये यमसंज्ञां च लक्ष्मीं समर्चयेद्यममध्ये च देवीम् ।
यमस्य देवस्य च दक्षिणे च सूर्यं नमेद्दीपरूपं च भद्रे ॥ ३,२४.९२ ॥
यमस्य देवस्य च वामभागे श्रियं नमेद्दीपरूपां च देवीम् ।
यमस्य देवस्य तु चाग्रभागे हुताशनं दीपरूपं नमेच्च ॥ ३,२४.९३ ॥
देवस्याग्रे भूमिनाम्नीं नमेच्च तत्त्वाभिमानां संस्मरेच्चैव नित्यम् ।

पर्यङ्करूपं श्रीनिवासस्य विष्णोस्तमोभिमानां सन्नमेच्चैव दुर्गाम् ॥ ३,२४.९४ ॥
पूर्वादिगं पीठसोपानरूपमात्मानमेकं प्रणमेच्च देवि ।
दक्षस्थदिक्पीठसोपानरूपं ज्ञानात्मकं प्रणमेच्चैव कन्ये ॥ ३,२४.९५ ॥
पद्मस्य पूर्वस्थदले च देवि स्त्रीरूपाख्यं विमलाख्यामिमां च ।
ब्रह्मादिदेवान्प्रणमेच्च देवि आग्नेयकोणस्थदले शृणुत्वम् ॥ ३,२४.९६ ॥
उत्कर्षनाम्नीं परमां च देवीं नमेद्रमां ब्रह्मवायू च शेषम् ।
दक्षस्थपद्मस्य दलाष्टके च नारायणाकारशेषादिकानाम् ॥ ३,२४.९७ ॥
स्त्रीरूपेभ्यो नमनं कार्यमेव कन्ये मया पश्चिमस्थे दले च ।
गोपाख्यनारायणब्रह्मवायुविप्रादिकानां शेषरूद्रादिकानाम् ॥ ३,२४.९८ ॥
स्त्रीरूपेभ्यो नमनं कार्यमेव ईशान कोणस्थदलेषु चैव ।
ईशाननारायणमाविरिञ्चवायुर्वियच्छेषसुरादिकानाम् ॥ ३,२४.९९ ॥
स्त्रीरूपेभ्यो नमनं कार्यमेव तथैव पद्मस्य च मध्यभागे ।
अनुग्रहाख्या विष्णुलक्ष्मीश्च देवी वायुर्वियच्छेषरुद्रादिकानाम् ॥ ३,२४.१०० ॥
स्त्रीरूपाणां नमनं कार्यमेव सुयोगपीठस्य स्वरूप भूतम् ।
सदा नमेच्छ्रीमदनन्तसंज्ञमेवं न मेच्छ्रीनिवासं च देवम् ॥ ३,२४.१०१ ॥
श्रीनिवासस्य वामे तु लक्ष्मीं च प्रणमेद्वुधः ।
श्रीनिवासस्य सव्ये तु धरायै प्रणमेच्छुभे ॥ ३,२४.१०२ ॥
पीठाद्वहिः पूर्वभागे कृपोल्कं प्रणमेच्छुभम् ।
महोल्कं दक्षिणे चैव वीरोल्कं पश्चिमे नमेत् ॥ ३,२४.१०३ ॥
उत्तरे च नमः कुर्याद्युल्काय च महात्मने ।
चतुर्ष्वपि च कोणेषु सहस्रोल्कं नमेत्सुधीः ॥ ३,२४.१०४ ॥
पूर्वे तु वासुदेवाय नमस्कुर्याच्च दक्षिणे ।
संकर्षणाय देवाय प्रद्युम्नाय च पश्चिमे ॥ ३,२४.१०५ ॥
उत्तरे ह्यनिरुद्ध्या नमस्कुर्यादतन्द्रितः ।
आग्नेये च नमस्कुर्यात्कन्ये मायां सदा शुभे ॥ ३,२४.१०६ ॥
जयायै च नमस्कुर्यान्नैरृत्ये चापि वायवे ।
कृत्ये चैव नमस्कुर्यादीशान्ये शान्तिसंज्ञकाम् ॥ ३,२४.१०७ ॥
केशवाय नमः पूर्वे तथा नारायणाय च ।
माधवाय नमस्कुर्यान्नैरृत्ये चापि वायवे ॥ ३,२४.१०८ ॥
आग्नेये कन्यके नित्यं भक्त्या तु प्रयतः शुभे ।
गोविन्दाय नमस्कुर्याद्दक्षिणे विष्णवे तथा ॥ ३,२४.१०९ ॥
मधुसूदनाय भोः कन्ये नमस्कुर्यात्तु नैरृतौ ।
पश्चिमे त्रिविक्रमाय वामनाय तथैव च ॥ ३,२४.११० ॥

विष्णवे श्रीधरायाथ नमस्कुर्याच्च भामिति ।
उत्तरे तु महाकन्ये हृषीकेशाय वै नमः ॥ ३,२४.१११ ॥
तथा वै पद्मनाभाय नमस्कुर्यादतन्द्रितः ।
दामोदराय चैशान्ये नमस्कुर्याच्च भामिनि ॥ ३,२४.११२ ॥
चतुर्थावरणे पूर्वे महाकूर्माय वै नमः ।
वराहाय नमस्कुर्यादाग्नेये कन्यके शुभे ॥ ३,२४.११३ ॥
दक्षिणे नारसिंहाय वामनाय नमोनमः ।
भार्गवाय नमस्कुर्यान्नैरृत्ये शुद्धचेतसा ॥ ३,२४.११४ ॥
पश्चिमे माधवायाथ तथा कृष्णाय वै नमः ।
बुद्धाय च नमस्कुर्याद्वायव्ये कन्यके शुभे ॥ ३,२४.११५ ॥
उत्तरे ह्युल्करूपाय अनन्ताय नमोस्तु ते ।
ईशान्ये विश्वरूपाय नमस्कुर्यादतन्द्रितः ॥ ३,२४.११६ ॥
आग्नेये वारुणीं चैव गायत्रीं चैव नैरृते ।
वायव्ये भारतीं चैव ईशान्ये गिरिजां नमेत् ॥ ३,२४.११७ ॥
गिरिजां वामभागे तु सौपर्णीं चैव संनमेत् ।
प्रागिन्द्राय नमस्कुर्यात्सायुधाय तथैव च ॥ ३,२४.११८ ॥
स परिग्रहाय श्रीविष्णोः पार्षदाय नमोनमः ।
आग्नेयेत्यग्नये तुभ्यं सायुधायेति पूर्ववत् ॥ ३,२४.११९ ॥
दक्षिणे तु यमायैव नैरृत्यां निरृतिं यजेत् ।
पश्चिमे वरुणायैव वायव्ये वायवे नमः ॥ ३,२४.१२० ॥
उत्तरे च कुबेराय ईशान्ये च शिवाय च ।
ईशानशक्रयोर्मध्ये ब्रह्मणे सायुधाय च ॥ ३,२४.१२१ ॥
निरृत्यप्यतिमध्ये तु शेषाय च नमोनमः ।
एवं कृत्वा नमस्कारं प्रणमेच्च पुनः पुनः ॥ ३,२४.१२२ ॥
इत्येतत्सर्वमाख्यातं विधिपूर्वं तु दर्शनम् ।
इतः परन्तु गन्तव्यं दर्शनार्थं रमापते ॥ ३,२४.१२३ ॥
एवमुक्त्वा तु सा देवी तैः सार्धं तु ययौ मुदा ।
यदुक्तः श्रीनिवासस्य दर्शनस्य विधिः खग ।
कस्यचिन्नैव वक्तव्यो गोप्यत्वाच्च कदाचन ॥ ३,२४.१२४ ॥
समागमो दुर्घट एव वीन्द्र सतां च सत्तत्त्वविबोधकानाम् ।
अनेकजन्मार्जितपुण्यसंचयादभूद्गुरोः संगम एव तस्य ॥ ३,२४.१२५ ॥
पयो विकारं च निजं जहाति शेषस्य शेषं नलिनस्य षङ्कजम् ।
भावं चलं पङ्कजनाभयोगात्सत्संगयोगादशुभानि न स्युः ॥ ३,२४.१२६ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे
श्रीवेङ्कटेशगिर्यारोहणक्रमतद्भक्ततत्पर्वतनामादिनिरूपणं नाम चतुर्विंशोऽध्यायः

श्रीगरुडमहापुराणम् २५
सा द्वारदेशे श्रीनिवासस्य देवी स्वामिपुष्करिणीं ददृशे कैश्च सार्धम् ।
स्वामिन्हरे श्रीनिवासेति सा तं ब्रह्मादीनां तारकं सम्प्रदध्यौ ॥ ३,२५.१ ॥

देवैः सार्धं पालनार्थं च विष्णुरस्त्येव नित्यं पुष्करिण्यां जलेषु ।
अतः स्वामिपुष्करिणीति चाहुस्तत्र स्नानं कन्यकान्याश्च चक्रुः ॥ ३,२५.२ ॥

शुचिर्भूत्वा श्रीनिवासं च देवास्तुप्तुं विविशुः शुद्धभक्त्या खगेन्द्र ।
यथोपदिष्टं गुरुणा तथैव चक्रे कन्याश्च सर्वं खगेन्द्र ॥ ३,२५.३ ॥

तदा हरिं दर्शयामास तस्यै स्वकं रूपं सुप्रतीके सुपूर्णम् ।
सा कन्यका श्रीनिवासस्य रूपं ददर्श भक्त्या स्वमनोभिरामम् ॥ ३,२५.४ ॥

सुवर्णचित्रं वसनं वसानं सोष्णीषकं कञ्चुकं संदधानम् ॥ ३,२५.५ ॥

मृगोत्थमदगन्धेन सुरभीकृतदिङ्मुखम् ।
पुण्डरीकविशालाक्षं कंबुग्रीवं महाभुजम् ॥ ३,२५.६ ॥

हेमयज्ञोपवीताङ्गं साक्षात्कन्दर्पसन्निभम् ।
जगन्मोहनसैन्दर्यं कोमलाङ्गं मनोहरम् ॥ ३,२५.७ ॥

दृष्ट्वा च कन्या मुमुदे रोमाञ्चितसुगात्रका ॥ ३,२५.८ ॥

तद्दर्शनाह्लादपरिप्लुताशया प्रेम्णाथ रोमाश्रुकुलाकुलेक्षणा ।
ननर्त देवी पुरतस्तस्य विष्णोः सा ध्वस्तदोषा परमादरेण ।
आनन्द मां पाहि सुखं च दत्त्वा मुकुन्दा मां पाहि विमुक्तिदानात् ॥ ३,२५.९ ॥

मां पाहि नित्यं ह्यरविन्दनेत्र प्रसन्नदृष्ट्या करुणासुधार्द्र ।
गोविन्द गोविन्द सुदुः खितां मां ज्ञानादिदानेन हि पाहि नित्यम् ॥ ३,२५.१० ॥

जनार्दन त्वं हि सुदुष्टसंगान्कामादिरूपान्सततं वर्जयित्वा ।
हरे हरे मां सततं पाहि दैत्यान्समाहृत्य प्रबलान्विघ्नरूपान् ॥ ३,२५.११ ॥

रमेश मां पाहि चतुर्मुखेश विश्वेश मां पाहि सरस्वतीश ।
रमेश मां पाहि निदानमूर्ते वृन्दारवृन्दैर्वन्दितपादपद्म ॥ ३,२५.१२ ॥

एवं तु नत्वा परमादरेण तुष्टाव विष्णुं परमं पुराणम् ।
लक्ष्म्या सदा येऽविदिता गुणाश्च असंख्याताः संति विष्णौ च वीश ॥ ३,२५.१३ ॥

तेषां सकाशादतिबाहुल्यसंख्या गुणा हरौ तेऽविदिता वै रमायाः ।
अतो हरे स्तवने क्वास्ति शक्तिस्तथापि यत्नं स्तवने ते करिष्ये ॥ ३,२५.१४ ॥

तव प्रसादाच्च रमाप्रसादाद्विधिप्रसादात्भारतीशप्रसादात् ।
रुद्रप्रसादात्स्तवनं ते करिष्ये तथापि विष्णो मयि शान्तिं कुरुष्व ॥ ३,२५.१५ ॥

यदि प्रसन्नोसि मयि त्वमीश त्वत्पादमूले देहि भक्तिं सदैव ।
त्वद्दर्शनाद्देव शुभाशुभं च नष्टं मदीयं ह्यशुभं च नित्यम् ॥ ३,२५.१६ ॥

त्वन्मायया नष्टमिमं च लोकं मदेन मत्तं बधिरं चान्धभूतम् ।
ऐश्वर्ययोगेन च यो हि मूको जातः सदा दीनागुर्वादिकेषु ॥ ३,२५.१७ ॥

मा देहि ऐश्वर्यमनुत्तमं त्वत्पादारविन्दस्य विरुद्धभूतम् ।
त्वं देव मे देहि सतां च संगं तव स्वरूपप्रतिपादकानाम् ॥ ३,२५.१८ ॥

पुत्रादीनामैहिकं वासुदेव दग्ध्वा च मे देहि पादारविन्दे ।
सद्वष्णवे क्रियमाणं च कोपं दग्ध्वा च मे देहि पादरविन्दे ॥ ३,२५.१९ ॥

द्रव्यादिके क्रियमाणं च लोभं दग्ध्वा वै मे देहि पादाब्जमूले ।
पुत्रादिके क्रियमाणं च मोहं दग्ध्वा च मे देहि पादाब्जमूले ॥ ३,२५.२० ॥

विद्यां पुत्रं द्रव्यजातं मदं च दग्ध्वा च मे देहि पादाब्जमूले ।
सद्वैष्णवासहमानस्वरूपं दग्ध्वा मात्सर्यं पाहि मां वेङ्कटेश ॥ ३,२५.२१ ॥

मन्त्रं च मे देहि निदानमूर्ते येनैव मे स्यात्तव संगश्च भूयः ।
नान्यं वृणे तव पादाब्जसंगात्तदेव मे देहि मम प्रसन्नः ॥ ३,२५.२२ ॥

इतीरितः श्रीनिवासः प्रसन्न उवाच देवो ह्यमृतस्त्रवं च ।
अत्रैव कन्ये प्रजपस्व मन्त्रं सुगोप्यरूपं परमादरेण ॥ ३,२५.२३ ॥

वक्ष्यामि मन्त्रं परमादरेण शृण्वद्य भक्त्या परमादरेण ।
अन्तः स्थमन्त्यं ह्याद्यसंयुक्तमेव सबिन्दु तद्वत्स्पर्शकाद्येन युक्तम् ॥ ३,२५.२४ ॥

एकारयुक्तं प्रथमान्तः स्थयुक्तं समत्रिकोणे चोष्मणा संयुतं च ।
तकारसक्तं स्वर्शमन्तः स्थयुक्तमाद्यन्त औंकारसमन्वितं च ॥ ३,२५.२५ ॥

अनेन मन्त्रेण तवेप्सितं च भवेद्धि कन्ये नान्त्र विचार्यमस्ति ।
एवं स उक्त्वा श्रीनिवासो हरिस्तु प्रतीकवद्दर्शयामास रूपम् ॥ ३,२५.२६ ॥

नत्वा तु सा श्रीनिवासं च देवी उवास ह स्वामिसरः समीपे ।
तस्मिन्दिने ब्राह्मणादींश्च सर्वान्संतर्पयामास च षड्रसान्नैः ॥ ३,२५.२७ ॥

सायङ्काले श्रीनिवासस्य दृष्ट्वा उत्साहरूपैः श्रीनिवासप्रतीकैः ।
साकं भक्त्या संप्रणम्याथ देवी प्रदक्षिणं श्रीनिवासस्य सुष्ठु ॥ ३,२५.२८ ॥

ननर्त देवी सुप्रतीकस्य चाग्रे लज्जां त्यक्त्वा जय देवेति चोक्त्वा ।
आनृत्तकाले च हरेश्च वक्त्रं दृष्ट्वा च दृष्ट्या तु परं ननर्त ॥ ३,२५.२९ ॥

ममाद्य गात्रं पावितं श्रीनिवास ममाद्य नेत्रं सफलं संबभूव ।
ममाद्य पादौ सार्थकौ चैव जातौ प्रदक्षिणं श्रीनिवासेश कृत्वा ॥ ३,२५.३० ॥

हस्तौ च मे सार्थकावद्य जातौ अग्रे कृत्वा हस्तशब्दं मुरारेः ।
एवं वदन्ती प्रीणयन्ती च देवं जगामसा स्तोत्रवचः कदम्बैः ॥ ३,२५.३१ ॥

देवास्तदा दुन्दुंभयो विनेदिरे तन्मस्तके पुष्पवृष्टिं च चक्रुः ।
तस्मिन्काले उभयोः पार्श्वयोश्च नृत्यं चक्रुर्देवतावारनार्यः ॥ ३,२५.३२ ॥

तथैव तास्तलशब्दं च कृत्वा तदा सर्वा नमनं चापि चक्रुः ।
आनन्दशैले सर्वदा त्वित्थमेव सा सर्वदा नर्तयन्ती च वीन्द्र ॥ ३,२५.३३ ॥

आनन्दमग्ना सापि देवी जगाम स्वमाश्रमं जैगिषव्येण सार्धम् ।
यात्रामेवं ये न कुर्वन्ति वीन्द्र तेषां च सर्वं निष्फलं चाहुरार्याः ॥ ३,२५.३४ ॥

गत्वाश्रमं जैगिषव्येण सार्धं गुरुं त्वपृच्छद्वेङ्कटेशस्य मन्त्रम् ।
मन्त्रस्यार्थं ब्रूहि मे जैगिषव्य मन्त्रावृत्तिं कुर्वतां वै फलाय ॥ ३,२५.३५ ॥

जैगीष्व्य उवाच ।
शृणुष्व भद्रे वेङ्कटे शस्य नाम्नस्त्वर्थं श्रुत्वा हृदये संनिधत्स्व ॥ ३,२५.३६ ॥

विति ह्युत्तमवाची स्याद्येति ज्ञानमुदाहृतम् ।
ककारः सुखवाची स्याट्टेति चित्तमुदाहृतम् ॥ ३,२५.३७ ॥

ईशत्वमात्मवाचि स्यादेवं ज्ञेयं तु कन्यके ।
पूर्णज्ञानं सुखं वित्तं व्याप्तत्वाद्व्यङ्कटाभिधः ॥ ३,२५.३८ ॥

व्य (वे) मिन्द्रियादिकं प्रोक्तं व्यङ्गभूतं हरौ यतः ।
कटश्च समुदायार्थो व्यं (वें) कटश्चेन्द्रियौघकः ॥ ३,२५.३९ ॥

स्वस्मिन्प्रेरयते यस्मात्तस्माद्व्यङ्कटनामकः ।
विषये प्रेषयेन्नित्यमतो व्यङ्कटनामकः ॥ ३,२५.४० ॥

विशिष्टज्ञानरूपत्वाद्व्येति मुक्ताः सदा स्मृताः ।
मुक्तानां च समूहस्तु व्यङ्कटेति प्रकीर्तितः ॥ ३,२५.४१ ॥

सदा मुक्तसमूहानामीशत्वाद्व्यङ्कटाभिधः ।
लिङ्गदेहमतो जीवो व्यङ्कटेति समाहृतः ॥ ३,२५.४२ ॥

लिङ्गानां चैव स्वामित्वाद्व्यङ्कटेशेति संज्ञितः ।
दैत्यानां च समूहास्तु ज्ञानादिविधुरा यतः ।
अतो दैत्यसमूहस्तु व्यङ्कटेति प्रकीर्तितः ॥ ३,२५.४३ ॥

तेषां संहरणे ईशस्त्वतो व्यङ्कटनामकः ।
आनन्दस्य विरुद्धत्वात्कामक्रोधादयो गुणाः ॥ ३,२५.४४ ॥

व्यङ्कटा इति संप्रोक्तास्तेषां नाशयिता प्रभुः ।
अतस्तु व्यङ्कटेशाख्य एवं ज्ञात्वा जपं कुरु ॥ ३,२५.४५ ॥

एवं व्यङ्कटामाहात्म्यं श्रुत्वा देवी खगेश्वर ।
निद्रां चकार तत्रैव रात्रौ पित्रा सहैव च ।
ब्राह्मे मुहूर्ते चोत्थयि हृदि सस्मार कन्यका ॥ ३,२५.४६ ॥

(व्यङ्कटेशस्य प्रातः स्तुतिः) ।
श्रीव्यङ्कटेशश्च नृसिंहमूर्तिः श्रीवरदराजश्च वराहमूर्तिः ।
श्रीरङ्गशायी च अनन्तशायी कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ३,२५.४७ ॥

श्रीकृष्णमूर्तिश्च गदाधरश्च श्रीविष्णुपादस्तु प्रयागवासः ।
नारायणः श्रीबदरीनिवासः कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ३,२५.४८ ॥

दामोदरो वै त्रिजगन्निवासः श्रीपाण्डुरङ्गश्च नृसिंहदेवः ।
श्रीरामदेवश्च अमोघवासः कुद्द ॥ ३,२५.४९ ॥

श्रीधर्मपुत्रश्च नृसिंहमूर्तिः श्रीपिप्पलस्थश्च मुहल्लवासः ।
कोलानृसिंहः शूर्पकारस्थ सिंहः कुर्वन्तुद्द ॥ ३,२५.५० ॥

चतुर्मुखश्चारुसरस्वती च स्वभारती शर्वसुपर्णशेषाः ।
अमामहेद्रश्च शचीमुखास्ताः कुर्वन्तु द्द ॥ ३,२५.५१ ॥

द्वारावती काशिकावन्तिका च प्रयागकाञ्च्यौ मथुरापुरी च ।
मायावती हस्तिमती पुरी च कुर्वन्तु स द्द ॥ ३,२५.५२ ॥

भागीरथी चैव सरस्वती च गोदावरी सिंधुकृष्ण च वेणी ।
कलिन्दकन्या यमुना च नर्मदा कुर्व द्द ॥ ३,२५.५३ ॥

वितस्तिकावेरिसतुङ्गभद्राः सुवञ्जरा भीमरथी विपाशा ।
सुताम्रपर्णी च पिनाकिनी च कु द्द ॥ ३,२५.५४ ॥

स्वामिपुष्करिणी चैव सुवर्णमुखरी तथा ।
श्रीपाण्डवी तौबरुश्च कपिला पापनाशनी ॥ ३,२५.५५ ॥

गुरुर्वसिष्ठः क्रतुरङ्गिराश्च मनुः पुलस्त्यः पुलहश्च गौतमः ।
रैभ्यो मरीचिश्च्यवनश्च दक्षः कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ३,२५.५६ ॥

सप्तार्णवाः सप्त कुलाचलाश्च द्वीपाश्च सप्तोपवनानि सप्त ।
भूरादिकानि भुवनानि सप्त कुर्वन्तु स द ॥ ३,२५.५७ ॥

मान्धात्रा नहुषोंबरीषसगरौ राजा नलो धर्मराट्प्रह्लादः क्रतुराड्विभीषणगयौ व्यासो हनूमानपि ।
अश्वत्थाम कृपावुमा द्रुपदजा श्रीजानकी तारका मन्दोदर्यखिलाः प्रभातसुमहं कुर्वन्तु नित्यं हरे ॥ ३,२५.५८ ॥

अश्वत्थस्य वनानि किं च तुलसीधात्रीवनानि प्रभो पुन्नागस्य वनानि चंपकवनान्यन्यानि पुष्पाणि च ।
मन्दारस्य वनानि यानि च हरेः सौगन्धिकान्यप्यहो नित्यं तानि दिशन्तु मत्प्रमुदितं श्रीवेङ्कटेश प्रभो ॥ ३,२५.५९ ॥

एवं स्मृत्वा श्रीनिवासस्य देवी कृत्वा शौचं जैगिषव्येण साकम् ।
स्नातुं ययौ पुष्करिणीं हरेश्च स्नानं सम्यक्तत्र चकार देशे ।
सम्यग्जप्त्वा व्यङ्कटेशस्य मन्त्रमुवाच सा जैगिषव्यं गुरुं च ॥ ३,२५.६० ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे देवी कृतवेङ्कटेशदर्शनतत्स्तुत्यादिवर्णनं नाम पञ्चविंशोध्यायः

श्रीगरुडमहापुराणम् २६
कन्योवाच ।
श्रीनिवासः किमर्थं वै आगतोत्र वदस्व मे ।
शेषाचलोपि कुत्रा भूत्कदायातश्च पापहा ।
स्वामिपुष्करिणी चात्र किमर्थं ह्यगता वद ॥ ३,२६.१ ॥

जैगीषव्य उवाच शृणु भद्रे महाभागे व्यङ्कटेशस्य चागमम् ।
आवयोर्देवि पापानि विषमं यान्ति भामिनि ॥ ३,२६.२ ॥

आसीत्पुरा हिरण्याक्षः काश्यपो दितिनन्दनः ।
सनकादेश्च वाग्दण्डाद्द्वितीयद्वारपालकः ॥ ३,२६.३ ॥

बभूव दैत्ययोनौ च देवानां कण्टको बली ।
संजीवो विजयः प्रोक्तो हरिभक्तो महाप्रभुः ॥ ३,२६.४ ॥

हरिण्याक्षः स्वयं दैत्यो हरिभक्तविदूषकः ।
एतादृशो हिरण्याक्षस्तपस्तप्तुं समुद्यतः ॥ ३,२६.५ ॥

तदा माता दितिर्देवी हिरण्याक्षमुवाच सा ।
दितिरुवाच ।
वत्सलस्त्वं महाभागमा तपस्वाष्टहायनः ॥ ३,२६.६ ॥

त्वं मा ददस्व दुः खं मे पालयिष्यति कोविदः ।
क्षणमात्रं न जीवामि त्वां विना जीवनं न हि ॥ ३,२६.७ ॥

मा तप त्वं महाभाग मम जीवनहेतवे ।
एवमुक्तस्तु मात्रा स विजयोवशतोब्रवीत् ॥ ३,२६.८ ॥

हिरण्याक्षो मातरं प्राह जालं हित्वा विष्णोर्भजनेऽलं कुरुष्व ।
मयिस्नेहं पुत्रहेतोर्विरूढं सुखदुः खे चेह लोके परत्र ॥ ३,२६.९ ॥

यावत्स्नेहं मयि मातः करोषि तावत्क्लेशं शाश्वतं यास्यसि त्वम् ।
मातश्च ते मयि पुत्रत्वबुद्धिस्त्वय्यप्येषा मातृबुद्धिर्ममापि ॥ ३,२६.१० ॥

ताते पूज्ये पितृबुद्धिर्ममास्ति तस्मिंस्तुते भर्तृबुद्धिर्हि मिथ्या ।
निर्माति यस्माद्धरिरेव सर्वं सम्यक्पाता नियतोऽसौ मुरारिः ॥ ३,२६.११ ॥

अतो हि माता हरिरेव सर्वदा त्वन्यासां वै मातृता चोपचारात् ।
निर्मातृत्वं यदि मुख्यं त्वयि स्याद्द्रोणादीनां जननी का वदस्व ॥ ३,२६.१२ ॥

मातृत्वं वै यदि मुख्यं त्वयि स्याद्धात्रादीनां जननी का वदस्व ।
यतः सदा याति जगत्ततत्तो हरिः सदा पिता विष्णुरजः पुराणः ॥ ३,२६.१३ ॥

सदा पिता मुख्यपिता यदि स्याद्गर्भस्थबाले पालकः को वदस्व ।
मातापित्रोः पालकत्वं यदि स्यात्कूर्मादीनां पालकौ कौ वदस्व ॥ ३,२६.१४ ॥

मातापित्रोः पालकत्वं यदि स्यात्कृपादीनां रक्षकौ कौ वदस्व ।
पुन्नामकान्नारकाद्देह भजान्तस्मात्त्रातापुत्रविष्णुः पुराणः ॥ ३,२६.१५ ॥

न तारकोहं नरकाच्च सुभ्रूर्न वै भर्ता नापि पित्रादयश्च ।
न वै माता नानुजादिश्च सर्वः सर्वत्राता विष्णुरतो न चान्यः ॥ ३,२६.१६ ॥

मायां मदीयां ज्ञानशस्त्रेण च्छित्वा भक्त्या हरेः स्मरणं त्वं कुरुष्व ।
यद्भक्तिरूपूर्वं स्मरणं नाम विष्णोस्तत्सर्वथा पापहरं च मातः ॥ ३,२६.१७ ॥

यो वा भक्त्या स्मरणं नाम विष्णोः करोत्यसौ पापहरो भविष्यति ।
अयं देहो दुर्ल्लभः कर्मभूमौ तत्रापि मध्ये भजनं विष्णुमूर्तेः ॥ ३,२६.१८ ॥

आयुर्गतं व्यर्थमेव त्वदीयं शीघ्रं भजेः श्रीनिवासस्य पादम् ।
उपदिश्यैवं मातरं पुत्रवर्यो दैत्यावेशात्सोभवद्वै तपस्वी ॥ ३,२६.१९ ॥

चतुर्मुखं प्रीणयित्वैव भक्त्या ह्यवध्यत्वं प्राप तस्मान्महात्मा ।
ततो भूमिं करवद्वेष्टयित्वा निन्ये तदा दैत्यवर्यो महात्मा ॥ ३,२६.२० ॥

श्रीमुष्टदेशे प्रादुरासीद्धरिस्तु वाराहविष्णुस्त्वजनः पुराणः ।
भित्त्वाचाब्धिं विविशे तं महात्मा रसातले संस्थितं भूतलं च ॥ ३,२६.२१ ॥

स्वदंष्ट्राग्रे स्थापयित्वाऽजगाम तदागमादागतो दैत्यवर्यः ।
तं कर्णमूले ताडयित्वा जघान प्रसादयामास च पूर्ववद्भुवम् ॥ ३,२६.२२ ॥

सुदिग्गजान्स्थापयित्वा च विष्णुः श्रीमुष्टे वै संस्थितः श्रीवराहः ।
तदा हरिश्चिन्तयामास विष्णुर्भक्त्या मदीयं मानुषं देहमद्य ॥ ३,२६.२३ ॥

आराधयिष्यन्ति च मां क्व एते तेषां दयां कुत्र वाहं करिष्ये ।
एवं हरिश्चिन्तयित्वा सुकन्ये वैकुण्ठलोकादचलं शेष संज्ञम् ।
वीन्द्रस्कन्धे स्थापयित्वा स्वयं च समागतोभूद्भूतलं भूतलेशः ॥ ३,२६.२४ ॥

सुवर्णमुखरीतीरमारभ्य गरुडध्वजः ।
श्रीकृष्णवेणीपर्यन्तं स्थापया मास तं गिरिम् ॥ ३,२६.२५ ॥

गिरेः पुच्छे तु श्रीशैलं मध्यमेऽहोबलं स्मृतम् ।
मुखं च श्रीनिवासस्य क्षेत्रं च समुदाहृतम् ॥ ३,२६.२६ ॥

अल्पेन तपसाभीष्टं सिध्यत्यस्मिन्नहोबले ।

गङ्गादिसर्वतीर्थानि पुण्यानि ह्यत्र संति वै ॥ ३,२६.२७ ॥

य एनं सेवते नित्यं श्रद्धाभक्तिसमन्वितः ।
ज्ञानार्थी ज्ञानमाप्नोति द्रव्यार्थी द्रव्यमाप्नुयात् ॥ ३,२६.२८ ॥

पुत्रार्थी पुत्रमाप्नोति नृपो राज्यं च विन्दति ।
यंयं कामयते मर्त्यस्तन्तमाप्नोति सर्वथा ॥ ३,२६.२९ ॥

चिन्तितं साध्यते यस्मात्तस्माच्चिन्तामणिं विदुः ।
पुष्करिण्याश्च बाहुल्याद्गिरावस्मिन्सरः सु च ।
पुष्कराद्रिरिति प्राहुरेवं तत्त्वार्थवेदिनः ॥ ३,२६.३० ॥

शातकुंभस्वरूपत्वात्कनकाद्रिं च तं विदुः ।
वैकुण्ठादागतेनैव वैकुण्ठाद्रिरिति स्मृतः ॥ ३,२६.३१ ॥

अमृतैश्वर्यसंयुक्तो व्यङ्कटाद्रिरिति स्मृतः ।
व्यङ्कटेशस्य शैलस्य माहात्म्यं यावदस्ति हि ॥ ३,२६.३२ ॥

तावद्वक्तुं समग्रेण न समर्थश्चतुर्मुखः ।
व्यङ्कटाद्रौ परां भक्तिं ये कुर्वन्ति दिनेदिने ।
पङ्गर्जङ्घाल एव स्यादचक्षुः पद्मलोचनः ॥ ३,२६.३३ ॥

मूको वाग्मी भवेदेव बधिरः श्रावको भवेत् ।
वन्ध्या स्याद्बहुपुत्रा च निर्धनः सधनो भवेत् ॥ ३,२६.३४ ॥

एतत्सर्वं गिरौ भक्तिमात्रेणैव भवेद्ध्रुवम् ।
तत्त्वतो व्यङ्कटाद्रेस्तु स्वरूपं वेत्ति को भुवि ॥ ३,२६.३५ ॥

यस्मादस्य गिरेः पुण्यं माहात्म्यं वेत्ति यः पुमान् ।
मायावी परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम् ।
स्वामिपुष्करिणीतीरे रमया सहमोदते ॥ ३,२६.३६ ॥

कल्याणाद्भुतगात्राय कामितार्थप्दायिने ।
श्रीमद्व्यङ्कटनाथाय श्रीनिवासाय ते नमः ॥ ३,२६.३७ ॥

श्रीस्वामिपुष्करिण्याश्च माहात्म्यं शृणु कन्यके ।
स्वामिपुष्करिणीमध्ये श्रीनिवासोस्ति सर्वदा ॥ ३,२६.३८ ॥

स्नानं कुर्वन्ति ये तत्र तेषां मुक्तिः करे स्थिता ।
तिस्रः कोट्योर्धकोटिश्च तीर्थानि भुवनत्रये ।
तानि सर्वाणि तत्रैव संति तीर्थे हरेः सदा ॥ ३,२६.३९ ॥

तत्तीर्थं श्रीनिवासाख्यं सर्वदेवनमस्कृतम् ।
तदेव श्रीनिवासस्य मन्दिरं परिकीर्तितम् ॥ ३,२६.४० ॥

तद्दर्शनादेव कन्ये यान्ति पापानि भस्मसात् ।
एकैकस्नानमात्रेण सत्संगो भवति ध्रुवम् ॥ ३,२६.४१ ॥

सत्संगाज्ज्ञानमासाद्य ज्ञानान्मोक्षं च विन्दति ।
अधिकारिणां भवेदेवं विपरीतमयोगिनाम् ॥ ३,२६.४२ ॥

तीर्थानां स्नानमात्रेण मोक्षं यान्तीति ये विदुः ।
ते सर्वे असुरा ज्ञेयास्ते यान्ति ह्यधमां गतिम् ॥ ३,२६.४३ ॥

श्रीनिवासस्य तीर्थेस्मिन्वायुकोणे च कन्यके ।
आस्ते वायुः सदा विष्णोः पूजां कर्तुमनुत्तमाम् ॥ ३,२६.४४ ॥

वायुतीर्थं च तत्प्रोक्तं हस्तद्वादशकान्तरम् ।
हस्तषट्कप्रमाणं च पश्चिमे समुदाहृतम् ।
उत्तरे हस्तषट्कं तु वायुतीर्थमुदाहृतम् ॥ ३,२६.४५ ॥

ये वेष्णवा वैष्णवदासवर्याः स्नानं सुर्युस्तत्र पूर्वं सुकन्ये ।
मध्वान्तस्थाः श्रीनिवासस्तु नित्यमत्र स्नानात्प्रीयतां मे दयालुः ॥ ३,२६.४६ ॥

ये मध्वतीर्थे स्नातुमिच्छन्ति देवि रुद्रादयो वायुभक्ता महान्तः ।
सदा स्नानं तत्र कुर्वन्ति देवि प्रातः काले चोदयात्पूर्वमेव ॥ ३,२६.४७ ॥

ये वायुतीर्थे विसृजन्ति देहजं मलं मूत्रं वमनं श्लेष्मकं च ।
येऽपानशुद्धिं लिङ्गशुद्धिं च कन्ये कुर्वन्ति ते ह्यसुरा राक्षसाश्च ॥ ३,२६.४८ ॥

शृण्वन्ति ये भागवतं पुराणं किं वर्णये तस्य पुण्यं तु देवि ।
ये कृष्णमन्त्रं तु जपन्ति देवि ह्यष्टा क्षरं मन्त्रवरं सुगोप्यम् ॥ ३,२६.४९ ॥

तेषां हरिः प्रीयते केशवोलं मध्वान्तस्थो नात्र विचार्यमस्ति ।
एवं दानं तत्र कुर्वन्ति ये वै द्विजाग्र्याणां वैष्णवानां विदां च ॥ ३,२६.५० ॥

तेषां पुण्यं नैव जानन्ति देवा जानात्येवं श्रीनिवासो हरिस्तु ।
शालग्रामं वायुतीर्थे ददन्ते तेषां पुण्यं वेत्ति स व्यङ्कटेशः ॥ ३,२६.५१ ॥

सुदुर्लभो वायुतीर्थेऽभिषेको निष्कामबुद्ध्या वैष्णवानां च देवि ।
तत्रापि तीर्थे लभ्यते भाग्ययोगाद्भागवतस्य श्रवणं विष्णुदासैः ॥ ३,२६.५२ ॥

तथैव तीर्थे दुर्लभं तत्र देवि शालग्रामस्य द्विजवर्ये च दानम् ।
जंबूफलाकारसुनीलवर्णं मुखद्वयं चक्रचतुष्टयान्वितम् ॥ ३,२६.५३ ॥

सुकेसरैः संयुतं स्वर्णचिह्नध्वजां कुशैर्वज्रचिहनैर्यवैश्च ।
जानार्दनीं मूर्तिमाहुर्महान्तो दानं तस्या दुर्लभं तत्र तीर्थे ॥ ३,२६.५४ ॥

अत्युत्तमं मूर्तिदानं तु भद्रे सुदुर्ल्लभं परमं नात्र लोभः ।
सुदुर्लभं बहुदोग्ध्याश्च गृष्टेर्दानं तथा वस्त्ररत्नादिकानाम् ॥ ३,२६.५५ ॥

अत्युत्तमं द्रव्यदानं च देवि स्वापेक्षितं दानमाहुर्महान्तः ।
स्वस्यानपेक्षं फलदानं च वस्त्रादानं तस्य व्यर्थमाहुर्महान्तः ॥ ३,२६.५६ ॥

अत्युत्तमं गृष्टिदानं च पुण्यं नैवाप्यते दुग्धदोहाश्च गावः ।
अत्युत्तमे वस्त्रदाने सुबुद्धिः सुदुर्घटा परमा वै जनानाम् ॥ ३,२६.५७ ॥

अत्युत्तमं भागवतस्य पुस्तकं सुदुर्घटं वायुतीर्थं च कन्ये ।
अत्युत्तमं द्रव्यदानं च देवि सुदुर्घटं वायुतीर्थं नृणां हि ।
सुदुर्लभो वैष्णवैस्तत्त्वविद्भिर्हरेर्विचारो वायुतीर्थे च कन्ये ॥ ३,२६.५८ ॥

श्रीनिवासस्य तीर्थस्य उत्तरस्यां दिशि स्थितम् ।
चन्द्रतीर्थ मिति प्रोक्तं तत्रास्ते चन्द्रमाः सदा ॥ ३,२६.५९ ॥

श्रीनिवासस्य पूजां च तत्र स्थित्वा करोत्ययम् ।
तत्र स्नानं प्रकुर्वन्ति पुण्यदेशे च कन्यके ॥ ३,२६.६० ॥

गुरुतल्पादिपापेभ्यो मुच्यन्ते नात्र संशयः ।
तत्र स्नात्वा पूर्वभागे शालग्रामं ददाति यः ॥ ३,२६.६१ ॥

ज्ञानद्वारा मोक्षमेति नात्र कार्या विचारणा ।
दधिवामनमूर्तेश्च दानं तत्र सुदुर्लभम् ॥ ३,२६.६२ ॥

बदरीफलमात्रं तु वतुलं नीलवर्णकम् ।
प्रसन्नवदनं सूक्ष्मं सुस्निग्धं कन्यके शुभे ॥ ३,२६.६३ ॥

चक्रद्वयसमायुक्तं गौपूरैः पञ्चभिर्युतम् ।
चापबाणसमायुक्तमनतं कुण्डलाकृतिम् ॥ ३,२६.६४ ॥

वनमाल सुखयुतं मूर्ध्नसाहस्रसंयुतम् ।
रौप्यबिन्दुसमायुक्तं सव्ये भद्रार्धमात्रकम् ॥ ३,२६.६५ ॥

चन्द्रेण सहितं देवि दधिवामनमुच्यते ।
एतादृशं कलौ नृणां दुर्लभं बहुभाग्यदम् ।
लक्ष्मीनारायणसमां तां मूर्तिं विद्धि भामिनि ॥ ३,२६.६६ ॥

सुदुर्लभं तस्य मूर्तेश्च दानं तच्चन्द्रतीर्थे श्रवणं दुर्घटं च ।
सम्यक्स्वरूपं दधिवामनस्य सुदुर्घटं श्रवणं वैष्णवाच्च ॥ ३,२६.६७ ॥

तत्र स्नात्वा वामनस्य स्वरूपश्रवणाद्विदुर्दानफलं समं च ।
दशहस्तप्रमाणं तु चन्द्रतीर्थमुदाहृतम् ॥ ३,२६.६८ ॥

मध्याह्ने दुर्लभं स्नानं नृणां तत्र सुमङ्गले ।
तत्र स्थित्वा धन्यनरः सदा भजति वै हरिम् ॥ ३,२६.६९ ॥

वराहमूर्तिदानं तु शालग्रामस्य दुर्लभम् ।
जंबूफलप्रमाणं तु एतद्वै कुक्कुटाण्डवत् ॥ ३,२६.७० ॥

वदनं वलयाकारं प्रमाणं चणकादिवत् ।
देवस्य वामभागे च मध्यदेशं विहाय च ॥ ३,२६.७१ ॥

चक्रद्वयसमायुक्तंमूर्धदेशे च भामिनि ।
सुवर्णबिन्दुना युक्तं भूवराहाख्यमुच्यते ॥ ३,२६.७२ ॥

पूजां कृत्वा भूवराहस्य मर्तेर्दानं दत्त्वा श्रवणं चापि कृत्वा ।
तत्र स्थितं भूवराहं च दृष्ट्वा स वै नरः कृतकृत्यो हि लोके ॥ ३,२६.७३ ॥

तत्र स्नात्वा भूवराहस्य मर्तेः शृणोति यो लक्षणं सम्यगेव ।
स तेन पुण्यं समुपैति देवि स मुक्तिभाङ्नात्र विचार्यमस्ति ॥ ३,२६.७४ ॥

ईशानकोणे श्रीनिवासस्य देवि रौद्रं तीर्थं परमं पावनं च ।
तत्र स्थित्वा रुद्रदेवो महात्मा पूजां करोति श्रीनिवासस्य नित्यम् ॥ ३,२६.७५ ॥

हस्ताष्टकं तत्प्रमाणं वदन्ति तत्र स्नानं वैष्णवैः कार्यमेव ।
तत्र स्नात्वा प्रयतो वै मुरारेः कथां दिव्यां शृणुयादादरेण ।
स्नानं पानं तत्र दानं च कुर्याल्लक्ष्मीनृसिंहप्रीयते देवि नित्यम्३,२६.७६ ॥

बदरीफलमात्रं च वर्तुलं बिन्दुसंयुतम् ॥ ३,२६.७७ ॥

देवस्य वामभागे तु चक्रद्वयसमन्वितम् ।
सुवर्णरेखासंयुक्तं किञ्चिद्रक्तसमन्वितम् ॥ ३,२६.७८ ॥

वैश्यवर्णं सवदनं पद्मरेखादिचिह्नितम् ।
लक्ष्मीनृसिंहं तं विद्धि भुक्तिमुक्तिप्रदायकम् ॥ ३,२६.७९ ॥

एता दृशं गण्डिकायाः शिलाया मूर्तेर्दानं दुर्घटं विद्धि वीन्द्र ।
तत्र स्नात्वा श्रीनृसिंहस्वरूपं लक्ष्मीपतेः शृणुयाद्भक्तियुक्तः ॥ ३,२६.८० ॥

मूर्तेर्दानात्फलमाप्नोति देवि सत्यंसत्यं नात्र विचार्यमस्ति ॥ ३,२६.८१ ॥

ईशानशक्रयोर्मध्ये ब्रह्मतीर्थमुदाहृतम् ।
दुर्लभं मानुषाणां तु स्नानं सर्वार्थसाधकम् ॥ ३,२६.८२ ॥

शालग्रामस्य दानं तु दुर्लभं तत्र वै नृणाम् ।
लक्ष्मीनारायणस्यैव मूर्तेर्दानं सुदुर्लभम् ॥ ३,२६.८३ ॥

स्थलमौदुंबरसमं तत्प्रमाणमुदाहृतम् ।
छत्राकारं वर्तुलं च प्रसन्नवदनं शुभम् ॥ ३,२६.८४ ॥

चणकप्रदेशमात्रं च वदनं समुदाहृतम् ।
सव्ये दक्षिणपार्श्वे च समयोः पुष्कलान्वितम् ॥ ३,२६.८५ ॥

गोयूथवत्सवर्णं च चतुश्चक्रसमन्वितम् ।
गोखुरैश्च समायुक्तं सुवर्णकिणसंयुतम् ॥ ३,२६.८६ ॥

वनमालाभिसंयुक्तं वज्रपुङ्खैश्च संयुतम् ।
एतादृशीं दरेर्मूर्तिं लक्ष्मीनारायणं विदुः ॥ ३,२६.८७ ॥

कलौ नृणां तस्य लाभो दुर्लभः संस्मृतो भुवि ।
दानं च सुतरां देवि दर्लभं किं वदामि ते ॥ ३,२६.८८ ॥

ब्रह्मतीर्थे च संस्नाय श्रोतव्या वै हरेः कथा ।
गण्डिकायाः शिलायाश्च लक्ष्मीनारायणस्य तु ॥ ३,२६.८९ ॥

लक्षणं यो विजानाति तदा तत्सदृशं फलम् ।
प्राप्नोत्येव न संदेहो नात्र कार्या विचारणा ॥ ३,२६.९० ॥

श्रीनिवासस्य तीर्थस्य पूर्वे स्यादिन्द्रतीर्थकम् ।
श्रीनिवासस्य पूजां तु कर्तुमास्ते शचीपतिः ॥ ३,२६.९१ ॥

शालग्रामशिलादानं कर्तव्यं श्रोत्रियायवै ।
शालग्रामशिलादानं हत्याकोटिविनाशनम् ॥ ३,२६.९२ ॥

तस्मिंस्तीर्थे तु यो देवि सीतारामशिलाभिधाम् ।
ददाति भूतले भद्रे भूपतेः सदृशो भवेत् ॥ ३,२६.९३ ॥

सीतारामशिला देवि द्विविधा संप्रकीर्तिता ।
पञ्चचक्रयुता काचित्षट्चक्रेण च संयुता ॥ ३,२६.९४ ॥

तत्रापि षट्चक्रयुता ह्युत्तमा संप्रकीर्तिता ।

पञ्चचक्रयुतायाश्च फलं द्विगुणमीरितम् ॥ ३,२६.९५ ॥

कुक्कुटाण्डप्रमाणं च सुसिग्धं नीलवर्णकम् ।
वदनत्रयसंयुक्तं सट्चक्रैः केसरैर्युतम् ॥ ३,२६.९६ ॥

स्वर्णरेखासमायुक्तं ध्वजवज्राङ्कुशैर्युतम् ।
एतादृशं तु वै भद्रे सीतारामाभिधं स्मृतम् ॥ ३,२६.९७ ॥

वदनेवन्दने देवि सीतारामस्य कोशकम् ।
दुर्लभं तु कलौ नृणां स्वसाम्राज्यप्रदं शुभम् ॥ ३,२६.९८ ॥

इन्द्रतीर्थे महादेवि सीताराम भिधाशिला ।
या तद्दानं दुर्लभं तन्नाल्पस्य तपसः फलम् ॥ ३,२६.९९ ॥

दानस्य शक्त्यभावे तु श्रोतव्यं लक्षणं हरेः ।
शालग्राम शिलादानाद्यत्फलं तत्फलं लभेत् ॥ ३,२६.१०० ॥

आग्नेयकोणे श्रीनिवासस्य देवि तीर्थं त्वास्ते वह्निसंज्ञं सुशस्तम् ।
स वह्निदेवः श्रीनिवासस्य पूजां कर्तुं ह्यास्ते सर्वदा तीर्थमध्ये ॥ ३,२६.१०१ ॥

यो वा तीर्थे वह्निसंज्ञे च देवि भक्त्या स्नानं कुरुतेऽजं स्मरन्हि ।
ज्ञानद्वारा मोक्षमाप्नोति देवि तत्र स्नानं दुर्ल्लभं वै नृणां च ॥ ३,२६.१०२ ॥

ज्ञात्वा स्नानं दुष्करं तीर्थराजे भक्तिस्तस्मिन्दुर्ल्लभा चैव देवि ।
शालग्रामे तच्छिलायाश्च दानं सुदुर्लभं वासुदेवाभिधायाः ॥ ३,२६.१०३ ॥

ह्रस्वं तथा वर्तुलं नीलवर्णं सूक्ष्मं मुखं मुखचक्रं सुशुद्धम् ।
सुवेणुयुक्तं वासुदेवाभिधेयं दानं कलौ दुर्लभं तस्य भद्रे ॥ ३,२६.१०४ ॥

दाने तस्याः शक्त्य भावे च देवि स्नात्वा तीर्थे वासुदेवाभिधस्य ।
सम्यक्श्राव्यं लक्षणं वै शिलायास्तयोस्तुल्यं फलमाहुर्महान्तः ॥ ३,२६.१०५ ॥

दक्षिणे श्रीनिवासस्य यमतीर्थं च संस्मृतम् ।
तत्रास्ते यमराजस्तु पूजां कर्तुं हरेः सदा ॥ ३,२६.१०६ ॥

तत्र स्नानं च दानं चाप्यक्षयं परमं स्मृतम् ।
शालग्रामशिलादानं कार्यं तत्र महामुने ॥ ३,२६.१०७ ॥

पट्टाभिरामसंज्ञायाः शिलाया दानमिष्यते ।
तच्चूतफलवत्स्थूलं वदनत्रयसंयुतम् ॥ ३,२६.१०८ ॥

शिरश्चक्रेण रहितं सप्तचक्रैः समन्वितम् ।

नीलवर्णं स्वर्णरेखं गोशुराद्यैः समन्वितम् ॥ ३,२६.१०९ ॥

पट्टवर्धनरामं तु दुर्लभं बहुभाग्यदम् ।
पट्टवर्धनरामं तु यो ददाति च तत्र वै ।
पट्टाभिषिक्तो भवति नात्र कार्या विचारणा ॥ ३,२६.११० ॥

श्रीनिवासस्य नैरृत्ये नैरृतं तीर्थमुत्तमम् ।
आस्ते हि निरृतिस्तत्र पूजां कुर्तुं च सर्वदा ॥ ३,२६.१११ ॥

तत्र स्नानं प्रकर्तव्यं पुनर्जन्म न विद्यते ।
शालग्रामशिलायाश्चः पुरुषोत्तमसंज्ञिकाम् ॥ ३,२६.११२ ॥

मूर्तिं ददाति यो मर्त्यः स याति परमां गतिम् ।
औदुंबरफलाकारं प्रसन्नवदनं शुभम् ॥ ३,२६.११३ ॥

चक्रद्व्यसमायुक्तं शिरश्चक्रसमन्वितम् ।
सुवर्णबिन्दुसंयुक्तं वज्राङ्कुशसमान्वतम् ॥ ३,२६.११४ ॥

तन्मूर्तिदानं दुर्लभं तत्र देवः प्रीणाति यस्माच्छ्रीनिवासो महात्मा ।
यदा दानं दुर्घटं स्याच्च देवि तदा श्रोतव्यं लक्षणं तस्य मूर्तेः ॥ ३,२६.११५ ॥

पाशिनैरृतयोर्मध्ये शेषतीर्थं परं स्मृतम् ।
तत्र स्नात्वा शेषमूर्तिं प्रददाति द्विजातये ॥ ३,२६.११६ ॥

स याति परमं लोकं पुनरावृत्तिवर्जितम् ।
औदुंबरफलाकारं कुण्डलाकृतिमेव च ॥ ३,२६.११७ ॥

शेषवद्वदनं तस्य तस्मिंश्चक्रद्वयं स्मृतम् ।
फलं तमेकचक्रेण संयुतं वल्मिकान्वितम् ॥ ३,२६.११८ ॥

किञ्चिद्वर्णसमायुक्तं शेषमूर्ति मतिस्फुटम् ।
सुप्ता प्रबुद्धा द्विविधा शेषमूर्तिरुदाहृता ॥ ३,२६.११९ ॥

फणोन्नता प्रबुद्धा स्यात्सप्तलक्षफणान्विता ।
तत्रापि दुर्लभा सुप्ता महाभाग्यकरीस्मृता ॥ ३,२६.१२० ॥

इह लोके परत्रापि मोक्षदा नात्र संशयः ।
नवचक्रादुपक्रम्य विंशत्यन्तं च यत्र सः ॥ ३,२६.१२१ ॥

अनन्त इति विज्ञेयो ह्यनन्तफलदायकः ।
विश्वंभरः स विज्ञेयो विंशत्यूर्ध्वं वरानने ॥ ३,२६.१२२ ॥

तत्रापि केसरैश्चैक्रर्लक्षणैश्च समन्वितम् ।
कलौ तु दुर्लभं नणां तद्दानं चातिदुर्लभम् ॥ ३,२६.१२३ ॥

स्नानं कृत्वा शेषतीर्थे विशुद्धेनैव चेतसा ।
एतेषां लक्षणं श्रुत्वा प्रयाति परमां गतिम् ॥ ३,२६.१२४ ॥

ततः परं महाभागे वारुणं तीर्थमुत्तमम् ।
तत्रास्ते वरुणो देवः पूजां कर्तुं हरेः सदा ॥ ३,२६.१२५ ॥

तत्र स्नानं प्रकर्तव्यं दातव्यं दानमुत्तमम् ।
शिशुमारं च मत्स्यं च त्रिविक्रममथापि वा ।
दातव्यं भूतिकामेन तीर्थेस्मिन्विरवर्णिनि ॥ ३,२६.१२६ ॥

जंबूफलसमाकारा पुच्छे सूक्ष्मा सबिन्दुका ।
चक्रत्रया च वदने पुच्छोपरि सचक्रका ॥ ३,२६.१२७ ॥

श्रीवत्सबिन्दुमालाढ्या मत्स्यमूर्तिरुदाहृता ।
पुच्छादधश्चक्रयुतं शिशुमारमुदाहृतम् ॥ ३,२६.१२८ ॥

वक्रचक्रयुतश्चेत्स्यात्त्रिविक्रम उदाहृतः ।
एतेषां लक्षणं श्रुत्वा वारुणे तीर्थ उत्तमे ॥ ३,२६.१२९ ॥

एतद्दानफलं प्राप्य मोदते विष्णुमन्दिरे ।
पूर्वौक्ता मूर्तयो यस्मिन् गृहे तिष्ठन्ति भामिनि ।
भागीरथी तीर्थवरा संनिधत्ते न संशयः ॥ ३,२६.१३० ॥

स्वामि पुष्करिणीस्नानं दुर्घटं तु कलौ नृणाम् ।
तत्र स्थितानां तीर्थानां स्नानं चाप्यतिदुर्घटम् ॥ ३,२६.१३१ ॥

शालग्रामशिलादानं दुर्घटं च तथा स्मृताम् ।
स्वामिपुष्करिणीतीरे कन्यादानं सुदुर्घटम् ॥ ३,२६.१३२ ॥

दुर्घटं कपिलादानं भक्ष्यदानं सुदुर्घटम् ।
स्वामिपुष्करिणीतीर्थे तीर्थेष्वन्येषु भामिनि ॥ ३,२६.१३३ ॥

स्नानं कुरु यथान्या यं शय्यादानं तथा कुरु ।
जैगीषव्येन मुनिना त्वेवमुक्ता च कन्यका ॥ ३,२६.१३४ ॥

स्वामिपुष्करिणीस्नानं सा चकार धृतव्रता ।
तीर्थेष्वेतेषु सुस्नाता दानं चक्रे सुभामिनी ॥ ३,२६.१३५ ॥

उवास तत्र सा दवी त्रिः सप्तकन्दिनानि च ।

स्वामिपुष्करणीतीरमहिमानं शृणोति यः ।
स याति परमां भक्तिं श्रीनिवासे जगन्मये ॥ ३,२६.१३६ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे व्यङ्कटगिरिमाहात्म्ये स्वामिपुष्करिण्यादितीर्थतत्रत्यदेवतदीयशालग्रामलक्षण तद्दानादिवर्णनं नाम षड्विंशोध्यायः

श्रीकृष्ण उवाच ।
सा गता स्नातुकामाथ नन्दां पापनिवारिणीम् ।
पप्रच्छ तं गुरुं विप्रं विनयावनता सुधीः ॥ ३,२७.१ ॥

किन्नामेयं नदी विप्र किं कार्यं चात्र मे वद ।
जैगीषव्यस्त्वेवमुक्तो वाक्यमेतदुवाच ह ॥ ३,२७.२ ॥

जैगीषव्य उवाच ।
शृणु भद्रे प्रवक्ष्यामि माहात्म्यं पापनाशनम् ।
इयं नदी महाभागे सदा पापविनाशिनी ॥ ३,२७.३ ॥

ब्रह्महत्यादिपापौघो यत्र स्नानेन नश्यति ।
प्रत्यक्षं दृश्यते ह्यत्र स्नानं कर्तुं समुद्यतैः ॥ ३,२७.४ ॥

जलं चाशुभ्ररूपेण पापैश्च परिदृश्यते ।
यावच्छुभ्रोदकं देवि तावत्सनानं च कारयेत् ॥ ३,२७.५ ॥

यावच्छुभ्रोदकं नैव तावत्पापं न नश्यति ।
शुद्धोदके समायाते पापं नष्टमिति ध्रुवम् ॥ ३,२७.६ ॥

कलावित्थं विशालाक्षि महिमा दृश्यते भुवि ।
अत्र स्नानं प्रकर्तव्यं दातव्यं दान मुत्तमम् ।
ततश्च ज्ञानमासाद्य विविष्णुलोकं स गच्छति ॥ ३,२७.७ ॥

गुरुस्त्रीगमनाच्चन्द्र अहल्यायां गतो हरिः ।
सुरापानाच्च शुक्रस्तु सुवर्णहरणाद्बलिः ॥ ३,२७.८ ॥

ब्रह्महत्यायाश्च रुद्रो नागो दत्तापहारकः ।
सूतस्य हननाद्रामो निर्मुक्तो ह्यत्र भामिनि ॥ ३,२७.९ ॥

नानेन सदृशं तीर्थं न भूतं न भविष्यति ।
स्नानं कुरु महाभागे तेन सिद्धिं ह्यवाप्स्यसि ॥ ३,२७.१० ॥

जैगीषव्येण मुनिना पित्रा सह च कन्यका ।
स्नानं चकार विधिवदुदतिष्ठच्च भामिनि ॥ ३,२७.११ ॥

यावच्च पौरुषं सूक्तं तावत्कालं हि तिष्ठति ।
पश्चाज्जप्त्वा महामन्त्रं वेङ्कटेशाभिधं परम् ॥ ३,२७.१२ ॥

द्विजातीन्प्रीणयित्वा सा वस्त्रद्रव्यादिभूषणैः ।
तस्माच्च प्रययौ देवी कमारीतीर्थमुत्तमम् ॥ ३,२७.१३ ॥

कुमारीमहिमानं च श्रुत्वा स्नानं चकार सा ।
पुनरावृत्य सा देवी ह्यन्तरा विरजानदीम् ॥ ३,२७.१४ ॥

दृष्ट्वा पप्रच्छ सा देवी जैगीषव्यं गुरुं प्रभुम् ।
किं संज्ञिकेयं विप्रेन्द्र किं कार्यं ह्यत्र मे वद ॥ ३,२७.१५ ॥

जैगीषव्यः पृष्ट एव मुवाच करुणानिधिः ।
इयं भागीरथी कन्ये आयाति ह्यन्तरेण तु ॥ ३,२७.१६ ॥

अतः सा प्रोच्यते ह्यन्तर्गङ्गेति परमर्षिभिः ।
कन्ये त्वस्यास्तु सलिलं श्रीनिनिवासप्रियं सदा ॥ ३,२७.१७ ॥

अत्र स्नानं यः करोति स याति परमां गतिम् ।
स्नानं चकार सा कन्या जले परमपावने ॥ ३,२७.१८ ॥

दानादिकं तथा ज्ञात्वा जजाप परमं मनुम् ।
श्रीनिवाससमीपं तु पुनरागत्य भामिनी ॥ ३,२७.१९ ॥

अङ्गप्रदक्षिणं चक्रे भक्त्या वेङ्कटनायकम् ।
ब्राह्मणादीन्प्रीणयित्वा वस्त्रगन्धादिभूषणैः ॥ ३,२७.२० ॥

पुनः परदिने प्रातः स्वामिपुष्करिणीजले ।
स्नानं कृत्वा महाभागा ययौ तुंबुरुसंज्ञिकाम् ॥ ३,२७.२१ ॥

पप्रच्छ तं गुरुं देवी नाथं किन्नामिका त्वयम् ।
जैगीषव्य उवाच ।
इयं तुंबरुकाभिज्ञा नारी वै वरवर्णिनी ॥ ३,२७.२२ ॥

पुरा तुं बुरुणा साकं नारदस्तपसि स्थितः ।
अत्र प्रादुरभूद्विष्णुर्नारदस्य हिताय च ॥ ३,२७.२३ ॥

स्नानं यः कुरुते ह्यत्र स याति परमां गतिम् ।
अत्र स्नानं मनुष्याणां सर्वेषां दुर्लभं कलौ ॥ ३,२७.२४ ॥

अत्र स्नानं मनुष्याणां नाल्पस्य तपसः फलम् ।
तत्र स्नात्वा च पीत्वा च दत्त्वा दानान्यकेशः ॥ ३,२७.२५ ॥

पुनरागत्य सा देवी श्रीनिवासं ननाम ह ।
तस्मिमन्दिने ब्राह्मणांश्च तर्पयामास भमिनि ॥ ३,२७.२६ ॥

स्वामिपुष्करिणीं प्राप्य दीपान्प्राज्वालयत्सती ।

सोपानेषु महाभागा दीपावलिभिरञ्जसा ।
प्रीणयामास देवेशं श्रीनिवासं जगद्गुरुम् ॥ ३,२७.२७ ॥

पुनः परदिने प्राप्ते शक्रतीर्थमनुत्तमम् ।
कपिलाख्योर्ध्वदेशे तु तत्तीर्थं पावनं स्मृतम् ॥ ३,२७.२८ ॥

तत्र स्नात्वा महाभागा तदूर्ध्वं स्नापयेत्स्वयम् ।
विष्वसेनसरस्तत्र सर्वपापविनाशनम् ॥ ३,२७.२९ ॥

तत ऊर्ध्वं महाभागा ययौ तत्र ददर्श सा ।
पञ्चायुधानां तीर्थानि तेषु स्नानं चकार सा ॥ ३,२७.३० ॥

तदूर्ध्वं चाग्निकुण्डं स्याद्दुरारोहं ततोग्रतः ।
तस्योपरि ब्रह्मतीर्थं ब्रह्महत्याविमोचनम् ॥ ३,२७.३१ ॥

सप्तर्षीणां तदूर्ध्वं तु पुण्यतीर्थं च सत्फलम् ।
दशाधिकफलं तेषा तीर्थानामुत्तरोत्तरम् ॥ ३,२७.३२ ॥

एतेषां चैव माहात्म्यं को वा वक्तुमिहार्हति ।
ऋषितीर्थेषु सा कन्या चचार तप उत्तमम् ॥ ३,२७.३३ ॥

ममावतारपर्यन्तं चरित्वा तप उत्तमम् ।
योगधारण या देहं त्यक्त्वा जांबवतो गृहे ॥ ३,२७.३४ ॥

जाता जांबवती नाम ववृधे तस्य वेश्मनि ।
तस्याः पिता जांबवान्स समादात्कन्यकां तदा ।
रुक्म्या अनं तरा सैषा मम भार्या खगेश्वर ॥ ३,२७.३५ ॥

इदं हि परमाख्यानं वेङ्कटाद्रेर्महागिरेः ।
को वा वर्णयितुं शक्तो मदन्यः पुरुषो भुवि ॥ ३,२७.३६ ॥

वेङ्कटेशस्य नैवेद्यं सदा लक्ष्मीः करोति वै ।
ब्रह्मा पूजयते नित्यमेवं शास्त्रस्य निर्णयः ॥ ३,२७.३७ ॥

नैवेद्यभक्षिणां पुंसामुपहासं न कारयेत् ।
स्वस्य प्राशस्त्यभावे तु नैवेद्यादि गुडादिकम् ।
ग्राह्यमेव न संदेहो अन्यथा नारकी भवेत् ॥ ३,२७.३८ ॥

श्रीनिवासात्परो देवो न भूतो न भविष्यति ।
स्वयं च पाचयित्वात्वं घृतपक्वादिकं तथा ।
श्रीनिवासस्य नैवेद्यं दत्त्वा भोजनमाचरेत् ॥ ३,२७.३९ ॥

इदं तु परमं गोप्यं तवोक्तं च खगेश्वर ।
न कस्यापि च वक्तव्यं गोप्यत्वात्खगसत्तम ।
इतः परं प्रवक्ष्यामि तारतम्यं शृणु प्रभो ॥ ३,२७.४० ॥

इति श्रीगारुडे महापुराणे उत्त ३ तृ ३ ब्रह्म ३ कन्याकृतनानातीर्थयात्रादिनिरूपणं नाम सप्तविंशोऽध्यायः

या पूर्वसर्गे दक्षपुत्री सती तु रुद्रस्य पत्नी दक्षयज्ञे स्वदेहम् ।
विसृज्य सा मेनकायां च जज्ञे धराधराद्धेमवतो वै सकाशात् ॥ ३,२८.१ ॥

सा पार्वता रुद्रपत्नी खगेन्द्र या शेषपत्नी वारुणी नाम पूर्वा ।
सैवागता बलभद्रेण रन्तुं द्विरूपमास्थाय महापतिव्रता ॥ ३,२८.२ ॥

श्रीरित्याख्या इन्दिरावेशयुक्ता तस्या द्वितीया प्रतिमा मेघरूपा ।
शेषण रूपेण यदा हि वीन्द्र तपश्चचार विष्णुना सार्धमेव ॥ ३,२८.३ ॥

तदैव देवी वारुणी शेषपत्नी तपश्च क्रे इन्दिराप्रीतये च ।
तदा प्रीता इन्दिरा सुप्रसन्ना उवाच तां वारुणीं शेषपत्नीम् ॥ ३,२८.४ ॥

यदा रामो वैष्णवांशेन युक्तः संपत्स्यते भूतले रौहिणेयः ।
मय्यावेशात्संयुता त्वं तु भद्रे श्रीरित्याख्या वलभद्रस्य रन्तुम् ॥ ३,२८.५ ॥

संपत्स्यसे नात्र विचार्यमस्तीत्युक्त्वा सा वै प्रययौ विष्णुलोके ।
श्रीलक्ष्म्यंशाच्छ्रीरितीड्यां समाख्यां लब्ध्वा लोके शेषपत्नी बभूव ॥ ३,२८.६ ॥

यदाहीशो विपुलामुद्धरेच्च तदा रामः श्रीभिदासंगमे च ।
करोति तोषत्सर्वदा वै रमायास्तस्याप्यावेशो व्यंस्रितमोनसंगम् ॥ ३,२८.७ ॥

या रेवती रैवतस्यैव पुत्री सा वारुणी बलभद्रस्य पत्नी ।
सौपर्णनाम्नी बलपत्नी खगेन्द्र यास्तास्तिस्रः षड्विष्णोश्च स्त्रीभ्यः ।
द्विगुणाधमा रुद्रशेषादिकेभ्यो दशाधमा त्वं विजानीहि पौत्र ॥ ३,२८.८ ॥

गरुड उवाच ।
रामेण रन्तुं सर्वदा वारुणी तु पुत्रीत्वमापे रेवतस्यैव सुभ्रूः ।
एवं त्रिरूपा वारुणी शेषपत्नी द्विरूपभूता पार्वती रुद्रपत्नी ॥ ३,२८.९ ॥

नीचाया जांबवत्याश्च शेषसाम्यं च कुत्रचित् ।
श्रूयते च मया कृष्ण निमित्तं ब्रूहि मे प्रभो ॥ ३,२८.१० ॥

उमायाश्च तथा रुद्रः सदा बहुगुणाधिकः ।
एवं त्वयोक्तं भगवन्निश्चयार्थं मम प्रभो ॥ ३,२८.११ ॥

रेवती श्रीयुता श्रीश्च शेषरूपा च वारुणी ।

सौपर्णि पार्वती चैव तिस्रः शेषाशंतो वराः ॥ ३,२८.१२ ॥

इत्यपि श्रूयते कृष्ण कुत्रचिन्मधुसूदन ।
निमित्तं ब्रूहि मे कृष्ण तव शिष्याय सुव्रत ॥ ३,२८.१३ ॥

श्रीकृष्ण उवाच ।
विज्ञाय जांबवत्याश्च तदन्येषां खगाधिप ।
उत्तमानां च साम्यं तु उत्तमावेशतो भवेत् ॥ ३,२८.१४ ॥

अवराणां गुणस्यापि ह्युत्तमानामधीनता ।
अस्तीति द्योतनायैव शतांशाधिकमुच्यते ॥ ३,२८.१५ ॥

यथा मयोच्यते वीन्द्र तथा जानीहि नान्यथा ।
तदनन्तरजान्वक्ष्ये शृणु काश्यपजोत्तम ॥ ३,२८.१६ ॥

चतुर्दशसु चेन्द्रेषु सप्तमो यः पुरन्दरः ।
वृत्रादीनां शरीरं तु पुरमित्युच्यते बुधैः ॥ ३,२८.१७ ॥

तं दारयति वज्रेण यस्मात्तस्मात्पुरन्दरः ।
चतुर्दशसु चेन्द्रेषु मन्त्रद्युम्नस्तु षष्ठकः ॥ ३,२८.१८ ॥

मन्त्रानष्ट महावीन्द्र देवो द्योतयते यतः ।
मन्त्रद्युम्नस्ततो लोके उभावप्येक एव तु ॥ ३,२८.१९ ॥

मन्त्रद्युम्नावतारोभूत्कुन्तीपुत्रोर्जुनो भुवि ।
विष्णोर्वायोरनन्तस्य चेन्द्रस्य खगसत्तम ॥ ३,२८.२० ॥

पार्थश्चतुर्भिः संयुक्त इन्द्र एव प्रकीर्तितः ।
चतुर्थेपि च वायोश्च विशेषोस्ति सदार्जुन ॥ ३,२८.२१ ॥

वालिर्नामा वानरस्तु पुरन्दर इति स्मृतः ।
चन्द्रवंशे समुत्पन्नो गाधिराजो विचक्षणः ॥ ३,२८.२२ ॥

मन्त्रद्युम्नावतारः स विश्वामित्रपिता स्मृतः ।
वेदोक्तमन्त्रा गाः प्रोक्ता धिया संधारयेद्यतः ॥ ३,२८.२३ ॥

अतो गाधिरिति प्रोक्तस्तदर्थं भूतले ह्यभूत् ।

इक्ष्वाकुपुत्रो वीन्द्र विकुक्षिरिति विश्रुतः ॥ ३,२८.२४ ॥

स एवेन्द्रावतारोभूद्धरिसेवार्थमेव च ।
विशेषेण हरिं कुक्षौ विज्ञानाच्च हरिः सदा ॥ ३,२८.२५ ॥

अतो विकुक्षिनामासौ भूलोके विश्रुतः सदा ।
रामपुत्रः कुशः प्रोक्त इन्द्र एव प्रकीर्तितः ॥ ३,२८.२६ ॥

वाल्मीकिऋषिणा यस्मात्कुशेनैव विनिर्मितः ।
अतः कुश इति प्रोक्तो जानकीनन्दनः प्रभुः ॥ ३,२८.२७ ॥

इन्द्रद्युम्नः पुरंद्रस्तु गाधी वाली तथार्जुनः ।
विकुक्षिः कुश एवैते सप्त चेन्द्राः प्रकीर्तिताः ॥ ३,२८.२८ ॥

यः कृष्णपुत्रः प्रद्युम्नः काम एव प्रकीर्तितः ।
प्रकृष्टप्रकाशरूपत्वात्प्रद्युम्न इति नामवान् ॥ ३,२८.२९ ॥

यो रामभ्राता भरतः काम एवाभवद्भुवि ।
रामाज्ञां भरते यस्मात्तस्माद्भरतनामकः ॥ ३,२८.३० ॥

चक्राभिमानि कामस्तु सुदर्शन इति स्मृतः ।
ब्रह्मैव कृष्णपुत्रस्तु सांबो जाम्बवतीसुतः ॥ ३,२८.३१ ॥

कामावतारो विज्ञेयः संदेहो नात्र विद्यते ।
यो रुद्रपुत्रः स्कन्दस्तु काम एव प्रकीर्तितः ॥ ३,२८.३२ ॥

रिपूनास्कंदते नित्यमतः स्कन्द इति स्मृतः ।
यो वा सनत्कुमारस्तु ब्रह्मपुत्रः खगाधिप ।
कामावतारो विज्ञेयो नात्र कार्या विचारणा ॥ ३,२८.३३ ॥

सुदर्शनश्च परमः प्रद्युम्नः सांब एव च ।
सनत्कुमारः सांबश्च षडेते कामरूपकाः ॥ ३,२८.३४ ॥

ततश्च इन्द्रकामावप्युमादिभ्यो दशावरौ ।
तयोर्मध्ये तु गरुड काम इन्द्राधमः स्मृतः ॥ ३,२८.३५ ॥

प्राणस्त्वहङ्कार एव अहङ्कारकसंज्ञकः ।

गरुत्मदंशो विज्ञेयः कामेन्द्राभ्यां दशाधमः ॥ ३,२८.३६ ॥

तदनन्तरजान्वक्ष्ये शृणु वीन्द्र समाहितः ।
श्रवणान्मोक्षमाप्नोति महापापाद्विमुच्यते ॥ ३,२८.३७ ॥

कामपुत्रोनिरुद्धोऽपि हरेरन्यः प्रकीर्तितः ।
स एवाभूद्धरेः सेवां कर्तुं रामानुजो भुवि ॥ ३,२८.३८ ॥

शत्रुघ्न इति विख्यातः शत्रून्सूदयते यतः ।
अनिरुद्धः कृष्णपुत्रो प्रद्युम्नाद्योऽजनिष्ट ह ॥ ३,२८.३९ ॥

संकर्षणादिरूपैस्तु त्रिभिराविष्ट एव सः ।
एवं द्विरूपो विज्ञेयो ह्यनिरुद्धो महामतिः ॥ ३,२८.४० ॥

कामभार्या रतिर्या तु द्विरूपा संप्रकीर्तिता ।
रुग्मपुत्री रुग्मवती कामभार्या प्रकीर्तिता ॥ ३,२८.४१ ॥

अतिप्रकाशयुक्तत्वात्तस्माद्रुग्मवती स्मृता ।
दुर्योधनस्य या पुत्री लक्षणा सा रतिः स्मृता ॥ ३,२८.४२ ॥

काष्ठा सांबस्य भार्या सा लक्षणं संयुनक्त्यतः ।
लक्षणाभिधया भूमौ दुष्ट वीर्योद्भवा ह्यपि ॥ ३,२८.४३ ॥

एवं द्विरूपा विज्ञेया कामभार्या रतिः स्मृता ।
स्वायंभुवो ब्रह्मपुत्रो मनुस्त्वाद्यो गुरौ समः ।
राजधर्मेण विष्णोश्च जातः प्रीणयितुं हरेः ॥ ३,२८.४४ ॥

बृहस्पतिर्देवगुरुर्महात्मा तस्यावतारास्त्रय आसन् खगेन्द्र ।
रामावतारे भरताख्यो बभूव ह्यंभोजजावेशयुतो बृहस्पतिः ॥ ३,२८.४५ ॥

देवावतारान्वानरांस्तारयित्वा श्रीरामदिव्याऽचरितान्यवादीत् ।
अतो ह्यसौ नारनामा बभूव ह्यङ्गत्वमाप्तुं रामदेवस्य भूम्याम् ॥ ३,२८.४६ ॥

कृष्णावतारे द्रोणनामा बभूव अंभोजजावेशयुतो बृहस्पतिः ।
यस्माद्दोणात्संबभूव गुरुश्च तस्मादसौ द्रोणसंज्ञो बभूव ॥ ३,२८.४७ ॥

भूभारभूताद्युद्धतौ ह्यङ्गभूतो विष्णोः सेवां कर्तुमेवास भूमौ ।

बृहस्पतिः पवनावेशयुक्ता स उद्धवश्चेत्यमिधानमाप ॥ ३,२८.४८ ॥

यस्मादुत्कृष्टो हरिरत्र सम्यगतो ह्यसौ बुधवन्नाम चाप ।
सखा ह्यभूत्कृष्णदेवस्य नित्यं महामतिः सर्वलोकेषु पूज्यः ॥ ३,२८.४९ ॥

दक्षिणाङ्गुष्ठजो दक्षो ब्रह्मपुत्रो महामतिः ।
कन्यां सृष्ट्वा हरेः प्रीणन्नास भूमा प्रजापतिः ।
पुत्रानुदपादयद्दक्षस्त्वतो दक्ष इति स्मृतः ॥ ३,२८.५० ॥

शचीं भार्यां देवराजस्य विद्धि तस्या ह्यवतारं शृणु सम्यक् खगेन्द्र ।
रामावतारे नाम तारा बभूव सा वालिपत्नी शचीसंज्ञका च ॥ ३,२८.५१ ॥

रामान्मृते वालिसंज्ञे पतौ हि सुग्रीवसंगं सा चकाराथ तारा ।
अतो नागात्स्वर्गलोकं च तारा क्व वा यायादन्तरिक्षे च पापा ॥ ३,२८.५२ ॥

कृष्णावतारे सैव तारा च वीन्द्र बभूव भूमौ विजयस्य पत्नी ।
पिशङ्गदेति ह्यभिधा स्याच्च तस्याः सामीप्यमस्यास्त्वर्जुनेनैव चासीत् ॥ ३,२८.५३ ॥

उत्पादयित्वा बभ्रुवाहं च पुत्रं तस्यां त्यक्त्वा ह्यर्जुनो वै महात्मा ।
अतश्चोभे वारचित्राङ्गदे च शचीरूपे नात्र विवार्यमस्ति ॥ ३,२८.५४ ॥

पुलोमजा मन्त्रद्युम्नस्य भार्या या काशिका गाधिराजस्य भार्या ।
विकुक्षिभार्या सुमतिश्चेति संज्ञा कुशस्य पत्नी कान्तिमतीति संज्ञा ॥ ३,२८.५५ ॥

एता हि सप्त ह्यवराश्च शच्या जानीहि वै नास्ति विचारणात्र ।
शची रतिश्चानिरुद्धो मनुर्दक्षो बृहस्पतिः ।
षडन्योन्यसमाः प्रोक्ता अहङ्काराद्दशाधमाः ॥ ३,२८.५६ ॥

अथ यः प्रवहो वायुर्मुख्यवायोः सुतो बली ।
स वायुषु महानद्य स वै कोणाधिपस्तथा ॥ ३,२८.५७ ॥

नासिकासु स एवोक्तो भौतिकस्तुल्य एव च ।
अतिवाहः स एवोक्तः यतो गम्यो मुमुक्षुभिः ॥ ३,२८.५८ ॥

दक्षादिभ्यः पञ्चगुणादधमः संप्रकीर्तितः ।
गरुड उवाच ।
प्रवहश्चेति संज्ञां स किमर्थं प्राप तद्वद ॥ ३,२८.५९ ॥

अर्थः कश्चास्ति तन्नाम्नः प्रतीतस्तं वदस्व मे ।
गरुडेनैवमुक्तस्तु भगवान्देवकीसुतः ।
उवाच परमप्रीतः संस्तूय गरुडं हरिः ॥ ३,२८.६० ॥

कृष्ण उवाच ।
प्रहर्षेण हरेस्तुल्यान्सर्वदा वहते यतः ।
अतः प्रवहनामासौ कीर्तितः पक्षिसत्तम ॥ ३,२८.६१ ॥

सर्वोत्तमो विष्णुरेवास्ति नाम्ना ब्रह्मादयस्तदधीनाः सदापि ।
मयोक्तमेतत्तु सत्यं न मिथ्या गृह्णामि हस्तेनोरगं कोपयुक्तम् ॥ ३,२८.६२ ॥

सर्वं नु सत्यं यदि मिथ्या भवेत्तु तदा त्वसौ मां दशतुह्यहीन्द्रः ।
एवं ब्रुवन्नुरगं कोपयुक्तं समग्रहीन्नादशत्सोप्युरङ्गः ॥ ३,२८.६३ ॥

एतस्य संधारणादेव वीन्द्र स वायुपुत्रः प्रवहेत्याप संज्ञाम् ।
यो वा लोके विष्णुमूर्तिं विहाय दैत्यस्वरूपा रेणुकाद्याः कुदेवाः ॥ ३,२८.६४ ॥

तेषां तथा मत्पितॄणां च पूजा व्यर्था सत्यं सत्यमेतद्ब्रवीमि ।
एतत्सर्वं यदि मिथ्या भवेत्तु तदा त्वसौ मां दशतु ह्यहीन्द्रः ॥ ३,२८.६५ ॥

पित्र्यं नयामि प्रविहायैव ये तु पित्रुद्देशात्केवलं यः करोति ।
स पापात्मा नरकान्वै प्रयातीत्येतद्वाक्यं सत्यमेतद्ब्रवीमि ॥ ३,२८.६६ ॥

न श्रीः स्वतन्त्रा नापि विधिः स्वतन्त्रो न वायुदेवो नापि शिवः स्वतन्त्रः ।
तदन्ये नो गौरिपुलोमजाद्याः किं वक्तव्यं नात्र लोके स्वतन्त्रः ॥ ३,२८.६७ ॥

ब्रवीमि सत्यं पुरुषो विष्णुरेव सत्यं सत्यं भुजमुद्धृत्य सत्यम् ।
एतत्सर्वं यदि मिथ्या भवेत्तु तदा त्वसौ मां दशतु ह्यहीन्द्र ॥ ३,२८.६८ ॥

जीवश्च सत्यः परमात्मा च सत्यस्तयोर्भेदः सत्ये एतत्सदापि ।
जडश्चसत्यो जीवजडयोश्च भेदो भेदः सत्यः किं च जडैशयोर्भिदा ॥ ३,२८.६९ ॥

भेदः सत्यः सर्वजीवेषु नित्यं सत्या जडानां च भेदा सदापि ।
एतत्सर्वं यदि मिथ्या भवेत्तु तदा त्वसौ दशतु मां ह्यहीन्द्रः ॥ ३,२८.७० ॥

एवं ब्रुवन्नुरगं कोपयुक्तं समग्रहीन्नादशत्सोप्युरङ्गः ।

एतस्य संधारणादेववीद्रे सा वायुपुत्रः प्रवहेत्याप संज्ञाम् ॥ ३,२८.७१ ॥

द्वयं स्वरूपं प्रविदित्वैव पूर्वं त्वं स्वीकुरुष्व द्वयमेव नित्यम् ।
स्नानादिकं च प्रकरोति नित्यं पापी स आत्मा नैव मोक्षं प्रयाति ॥ ३,२८.७२ ॥

तस्माद्द्वयं प्रविचार्यैव नित्यं सुखी भवेन्नात्र विचार्यमस्ति ।
एतत्सर्वं यदि मिथ्या भवेत्तु तदा त्वसौ मां दशतु हयहीन्द्रः ॥ ३,२८.७३ ॥

गरुड उवाच ।
किं तद्द्वयं देवदेवेश किं वा तत्कारणं कीदृशं मे वदस्व ।
द्वयोस्त्यागं कीदृशं मे वदस्व त्यागात्सुखं कीदृशं मे वदस्व ॥ ३,२८.७४ ॥

श्रीकृष्ण उवाच ।
द्वयं चाहुस्त्विन्द्रिये द्वे बलिष्ठे देहे ह्यस्मिञ्श्रोत्रनेत्रे सुसृष्टे ।
अवान्तरे श्रोत्रनेत्रे खगेन्द्र द्वयं चाहुस्तत्स्वरूपं च वक्ष्ये ॥ ३,२८.७५ ॥

श्रोत्रस्वभावो लोक वार्ताश्रुतौ च ह्यतीव मोदस्त्वादरास्वादनेन ।
हरेर्वार्ताश्रवणे दुःखजालं श्रोत्रस्वभावो जडता दमश्च ॥ ३,२८.७६ ॥

नेत्रस्वभावो दर्शने स्त्रीनराणां ह्यत्यादरान्नास्ति निद्रादिकं च ।
हरेर्भक्तानां दर्शने दुःखरूपो विष्णोः पूजादर्शने दुःखजालम् ॥ ३,२८.७७ ॥

तयोः स्वरूपं प्रविदित्वैव पूर्वं पुनः पुनः स्वीकरोत्येव मूढः ।
शिश्नं मौर्ख्याच्चैव कुत्रापि योनौ प्रवेशयेत्सर्वदा ह्यादरेण ॥ ३,२८.७८ ॥

भयं च लज्जा नैव चास्ते वधूनां तथा नृणां वनितानां यतीनाम् ।
स्वसारं ते ह्यविदित्वा दिनेपि सुवाम यज्ञेन स्वाभावश्च वीन्द्र ॥ ३,२८.७९ ॥

रसास्वभावो भक्षणे सर्वदापि ह्यनर्पितस्यान्नभक्ष्यस्य विष्णोः ।
तथोपहारस्य च तत्स्वभावः अभक्ष्याणां भक्षणे तत्स्वभावः ॥ ३,२८.८० ॥

अलेह्यलेहस्य च तत्स्वभावः पातुं त्वपेयस्य च तत्स्वभावः ।
द्वयोः स्वरूपं च विहाय मूढः पुनः पुनः स्वीकरोत्येव नित्यम् ॥ ३,२८.८१ ॥

तस्य स्नानं व्यर्थमाहुश्च यस्मात्तस्मात्त्याज्यं न द्वयोः कार्यमेव ।
अभिप्रायं ह्येतमेवं खगेन्द्र जानीहि त्वं प्रहस्यैव नित्यम् ॥ ३,२८.८२ ॥

भार्याद्वयं ह्यविदित्वा स्वरूपं स्वीकृत्य चैकां प्रविहायैव चैकाम् ।
स्नानादिकं कुरुते मूढबूद्धिः व्यर्थं चाहुर्मोक्षभोगौ च नैव ।
एतत्सर्वं यदि मिथ्या भवेत्तु तदा त्वसौ मां दशतु ह्यहीन्द्रः ॥ ३,२८.८३ ॥

गरुड उवाच ।
भार्याद्वयं किं वद त्वं ममापि तयोः स्वरूपं किं वद त्वं मुरारे ।
तयोर्मध्ये ग्राह्यभार्यां वद त्वमग्राह्यभार्यां चापि सम्यग्वद त्वम् ॥ ३,२८.८४ ॥

श्रीकृष्ण उवाच ।
बुद्धिः पत्नी सा द्विरूपा खगेन्द्र दुष्टा चैका त्वपरा सुष्ठुरूपा ।
तयोर्मध्ये दुष्टरूपा कनिष्ठा ज्येष्ठा तु या सुष्ठुबुद्धिस्वरूपा ॥ ३,२८.८५ ॥

कनिष्ठया नष्टतां याति जीवः सुतिष्ठन्त्या याति योग्यां प्रतिष्ठाम् ।
कनिष्ठायाः शृणु वक्ष्ये स्वरूपं श्रुत्वा तस्यास्त्यागबुद्धिं कुरुष्व ॥ ३,२८.८६ ॥

जीवं यं वै प्रेरयन्ती कनिष्ठा काम्यं धर्मं कुरुते सर्वदापि ।
क्व ब्राह्मणाः क्व च विष्णुर्महात्मा क्व वै कथा क्व च यज्ञाः क्व गावः ॥ ३,२८.८७ ॥

क्व चाश्वत्थः क्व च स्नानं क्व शौचमेतत्सर्वं नाम नाशं करोति ।
मूढं पतिं रेणुकां पूजयस्व मायादेव्या दीपदानं कुरुष्व ॥ ३,२८.८८ ॥

सुभैरवादीन् भज मूढ त्वमन्ध हारिद्रचूर्णन्धारयेः सर्वदापि ।
ज्येष्ठाष्टम्यां ज्येष्ठदेवीं भजस्व भक्त्या सूत्रं गलबन्धं कुरुष्व ॥ ३,२८.८९ ॥

मरिगन्धाष्टम्यां मरिगन्धं भजस्व तथा सूत्रं स्वगले धारयस्व ।
दीपस्तंभं सुदिने पूजयस्व तत्सूत्रमेव स्वगले धारयस्व ॥ ३,२८.९० ॥

महालक्ष्मीं चाद्यलक्ष्मीं च सम्यक्पूजां कुरु त्वं हि भक्त्याथ जीव ।
लक्ष्मीसूत्रं स्वागले धारयस्व महालक्ष्मीवान् भवसीत्युत्तरत्र ॥ ३,२८.९१ ॥

विहाय मौञ्जीदिवसे भाग्यकामः सुगुग्गुलान्धारयस्वातिभक्त्या ।
सुवासिनीः पूजयस्वाशु भक्त्या गन्धैः पुष्पैर्धूपदीपैः प्रतोष्य ॥ ३,२८.९२ ॥

वरार्तिक्यं कांस्यपात्रे निधाय कुर्वार्तिक्यं देवतादेवतानाम् ।
पिचुमन्दपत्राणि वितत्य भूमौ नमस्व त्वं क्षम्यतां चेति चोक्त्वा ॥ ३,२८.९३ ॥

महादेवीं पूजयस्वाद्य भक्त्या सद्वैष्णवानां मा ददस्वाप्यथान्नम् ।

सद्वैष्णवानां यदि वान्नं ददासि भाग्यं च ते पश्यतो नाशमेति ॥ ३,२८.९४ ॥

स्ववामहस्ते वेणुपात्रे निधाय दीपं धृत्वा सव्यहस्ते पते त्वम् ।
उत्तिष्ठ भोः पञ्चगृहेषु भिक्षां कुरुष्व सम्यक्प्रविहायैव लज्जाम् ॥ ३,२८.९५ ॥

आदौ गृहे षड्रसान्नं च कुत्वा जगद्गोप्यं भोजनं त्वं कुरुष्व ।
तच्छेषान्नं भोजयित्वा पते त्वं तासां च रे शरणं त्वं कुरुष्व ॥ ३,२८.९६ ॥

तासां हस्तं पुस्तके स्तापयित्वा त्राहीत्येवं तन्मुखैर्वाचयस्व ।
त्वं खड्गदेवं पूजयस्वाद्यभर्तस्तत्सेवकान्पूजयस्वाद्य सम्यक् ॥ ३,२८.९७ ॥

तैः सार्धं त्वं श्वानशब्दं कुरुष्व हरिद्राचूर्णं सर्वदा त्वं दधस्व ।
कुरुष्व त्वं भीमसेनस्य पूजां पञ्चामृतैः षोडशभिश्चोपचारैः ॥ ३,२८.९८ ॥

तत्कौपीनं रौप्यजं कारयित्वा समर्पयित्वा दीपमालां कुरुष्व ।
तद्दासवर्यान् भोजयस्वाद्य भक्त्या गर्जस्व त्वं भीमभीमेति सुष्ठु ॥ ३,२८.९९ ॥

तद्दासवर्यान्मोदयस्व स्ववस्त्रैर्मद्यैर्मांसद्रव्यजालेन नित्यम् ।
महादेवं पूजयस्वाद्य सम्यग्महारुद्रैरतिरुद्रैश्च सम्यक् ॥ ३,२८.१०० ॥

हरेत्युक्त्वा जङ्गमान्पूजयस्व शैवागमे निपुणाञ्छूद्रजातान् ।
शाकंभरीं विवशः सर्वशाकान्सुपाचयित्वा च गृहे गृहे च ॥ ३,२८.१०१ ॥

ददस्व भक्त्या परमादरेण स्वलङ्कृत्य प्रास्तुवंस्तद्गुणांश्च ।
कुलादेवं पूजयस्वाद्य भक्त्या त्वं दृग्भ्यां वै तद्दिने शंभुबुद्ध्या ॥ ३,२८.१०२ ॥

तद्भक्तवर्यान्पूजयस्वाद्य सम्यक्तत्पादमूले वन्दनं त्वं कुरुष्व ।
सुपञ्चम्यां मृन्मयीं शेषमूर्तिं पूजां कुरुष्व क्षीरलाजादिकैश्च ॥ ३,२८.१०३ ॥

सुनागपाशं हि गले च बद्ध्वा तच्छेषान्नं भोजयेर्भोः पुनस्त्वम् ।
दिने चतुर्थे भोजयस्वाद्य भक्त्या नैवेद्यान्नं भोजयस्वाद्य सुष्ठु ॥ ३,२८.१०४ ॥

इत्यादिकं प्रेरयित्वा पतिं सा जीवेन नष्टं प्रकरोत्येव नित्यम् ।
तस्याः संगाज्जीवरूपः पतिस्त्वां सम्यग्दष्टामिहलोके परत्र ॥ ३,२८.१०५ ॥

तस्याः संगं सुविदूरं विसृज्य चेष्ट्वा समग्रं कुरु सर्वदा त्वम् ।
सुबुद्धिरूपा त्वीरयन्ती जगाद भजस्व विष्णुं परमादरेण ॥ ३,२८.१०६ ॥

हरिं विनान्यं न भजस्व नित्यं सा रेणुका त्वां तु न पालयिष्यति ।
अदृष्टनामा हरिरेवं हि नित्यं फलप्रदो यदि न स्यात्खगेन्द्र ॥ ३,२८.१०७ ॥

जुगुप्सितां श्रुत्यनुक्तां च देवीं पतिद्रुहां सर्वदा सेवयित्वा ।
तस्याः प्रसादात्कुष्ठभगन्दराद्यैर्भुक्त्वा दुःखं संयमिनीं प्रयाहि ॥ ३,२८.१०८ ॥

तदा कुदेवी कुत्र गता वदस्व मे ह्यतः पते त्वं न भजस्व देवीम् ।
पते भज त्वं ब्राह्मणान्वैष्णवांश्च संसारदुःखात्तारन्सुष्ठुरूपान् ॥ ३,२८.१०९ ॥

सेवादिकं प्रविहायैव स्वच्छं मायादेव्या भजनात्किं वदस्व ।
ज्येष्ठाष्टम्यां ज्येष्ठदेवीं ह्यलक्ष्मीं लक्ष्मीति बुद्ध्या पूजयित्वा च सम्यक् ॥ ३,२८.११० ॥

तस्याः सूत्रं गलबद्धं च कृत्वा नानादुःखं ह्यनुभूयाः पते त्वम् ।
यदा पते यमदूतैश्च पाशैर्बद्ध्वा च सम्यक् ताड्यमानैः कशाभिः ॥ ३,२८.१११ ॥

तदा ह्यलक्ष्मीः कुत्र पलायतेऽसावतो मूलं विष्णुपादं भजस्व ।
पते भज त्वं सर्वदा वायुतत्त्वं न चाश्रयेस्त्वं सूक्ष्मस्कन्दं च मूढ ॥ ३,२८.११२ ॥

तद्वत्तं त्वं नवनीतं च भक्त्या तदुच्छिष्टं भक्षयित्वा पते हि ।
तस्याश्च सूत्रं गलबद्धं च कृत्वा इहैव दुःखान्यनुभूयाः पते त्वम् ॥ ३,२८.११३ ॥

यदा पते यमदूतैश्च पाशैर्बद्ध्वा च सम्यक् ताड्यमानः कशाभिः ।
तदा स्कन्दः कुत्र पलायतेऽसावतो मूलं विष्णुपादं भजस्व ॥ ३,२८.११४ ॥

दीपस्तंभं दापयित्वा पते त्वं सूत्रं च बद्ध्वा स्वगले च भक्त्या ।
तदा बद्ध्वा यमदूतैश्च पाशैर्दीपस्तंभैस्ताड्यमानस्तु सम्यक् ॥ ३,२८.११५ ॥

दीपस्तंभः कुत्र पलायितोभूदतो मूलं विष्णुपादं भजस्व ।
लक्ष्मीदिने पूजयित्वा च लक्ष्मीं सूत्रं तस्याः स्वगले धारय त्वम् ॥ ३,२८.११६ ॥

यदा पते यमदूतैश्च पाशैर्बध्वा सम्यक् ताड्यमानः कशाभिः ।
तदा लक्ष्मीः कुत्र पलायतेऽसावतो मूलं विष्णुपादं भजस्व ॥ ३,२८.११७ ॥

विवाहमौञ्जीदिवसे मूढबुद्धे जुगुप्सितान्धारयित्वा सुभक्त्या ।
वरारार्तिकं कांस्यपात्रे निधाय कृत्वार्तिक्यं उदउदैति शब्दम् ॥ ३,२८.११८ ॥

तथैव दष्ट्वा पिचुमन्दस्य पत्रं सुनर्तयित्वा परमादरेण ।
यदा तदा यमदूतैश्च पाशैर्बद्ध्वा बद्ध्वा ताड्यमानश्च सम्यक् ॥ ३,२८.११९ ॥

तव स्वामिन्कुलदेवो महात्मन्पलायितः कुत्र मे तद्वदस्व ।
स्वदेहानां पूजयित्वा च सम्यक्कण्ठाभरणैर्विधुराणां च केशैः ॥ ३,२८.१२० ॥

संतिष्ठमाने यमदूता बलिष्ठा संताड्यमाने मुसलैर्भिन्दिपालैः ।
यदा तदा कुत्र पलायिता सा केशैर्विहीना लंबकर्णं च कृत्वा ॥ ३,२८.१२१ ॥

स्ववामहस्ते वेणुपात्रं निधाय दीपं धृत्वा सव्यहस्ते च मूढः ।
गृहेगृहे भैक्षचर्यां च कृत्वा संतिष्ठमाने स्वगृहं चैव देवी ॥ ३,२८.१२२ ॥

यदा तदा यमदूतैश्च मूढ दीपैः सहस्रैर्दह्यमानश्च सम्यक् ।
निर्नासिका रेणुका मूढबुद्धे पलायिता कुत्र सा मे वदस्व ॥ ३,२८.१२३ ॥

सदा मूढं खड्गदेवं च भक्त्या तं भक्तवत्पूजयित्वा च सम्यक् ।
तैः सार्धं त्वं श्वानवद्गर्जयित्वा संतिष्ठमाने स्वगृहे चैव नित्यम् ॥ ३,२८.१२४ ॥

यदा तदा यमदूतैश्च सम्यक्संताड्यमानस्तत्र शब्दं प्रकुर्वन् ।
संतिष्ठमाने भक्तवर्यं विहाय तदा देवः कुत्र पलायितोभूत् ॥ ३,२८.१२५ ॥

स पार्थक्याद्भीमसेनप्रतीकं पञ्चामृतैः पूजयित्वा च सम्यक् ।
सुव्यञ्जने चान्नकौपीनमेव दत्त्वा मूढस्तिष्ठमाने स्वगेहे ॥ ३,२८.१२६ ॥

यदा तदा यमदूतैश्च सम्यक्संताड्यमाने यममार्गे च मूढः ।
भीमः स वै कुत्र पलायितोभूदतो मूलं विष्णुपादं भजस्व ॥ ३,२८.१२७ ॥

महादेवं पूजयित्वा च सम्यक् हरेत्युक्त्वा स्वगृहे विद्यमाने ।
यदा गृहं दह्यते वह्निना तु तदा हरः कुत्र पलायितोभूत् ॥ ३,२८.१२८ ॥

शाकंभरीदिवसे सर्वमेव शाकंभरी सा च देवी महात्मन् ।
पलायिता कुत्र मे त्वं वदस्व कुलालदेवं पूजयित्वा च भक्त्या ॥ ३,२८.१२९ ॥

कार्पासं वै तेन दत्तं गृहीत्वा संतिष्ठमाने यमदूतैश्च सम्यक् ।
संहन्यमानस्तीक्षणधारैः कुठारैः कुलालदेवं च सुदंष्ट्रनेत्रम् ।
विहाय वै कुत्र पलायितोभून्न ज्ञायतेऽन्वेषणाच्चापि केन ॥ ३,२८.११३० ॥

यदा पञ्चम्यां मृन्मयीं शेषमूर्तिं संपूज्य भक्त्या विद्यमाने स्वगेहे ।
तदा बद्ध्वा यमदूताश्च सम्यक्संनह्यमाने नागपाशैश्च बद्ध्वा ॥ ३,२८.१३१ ॥

स्वभक्तवर्यं प्रविहाय नागः पलायितः कुत्र वै संवद त्वम् ।
दूर्वाङ्कुरैर्मोदकैः पूजयित्वा विनायकं पञ्चखाद्यैस्तथैव ॥ ३,२८.१३२ ॥

संतिष्ठंमाने यमदूतैश्च सम्यक्संताड्यमाने तप्तदण्डैश्च मूढ ।
दन्तं विहायैव च विघ्नराजः पलायितः कुत्र मे तं वदत्वम् ॥ ३,२८.१३३ ॥

विवाहकाले पिष्टदेवीं सुभक्त्या संपूजयित्वा विद्यमानो गृहे स्वे ।
यदा तदा यमदूतैश्च बद्ध्वा संपीड्यमानो यममार्गे स मूढः ॥ ३,२८.१३४ ॥

विष्ठादेवी पीड्यमानं च भक्तं विहाय सा कुत्र पलायिताभूत् ।
विवाहकाले रजकस्य गेहं गत्वा सम्यक्प्रार्थयित्वा च मूढः ॥ ३,२८.१३५ ॥

यस्तंभसूत्रं कलशे परीत्य पूजां कृत्वा विद्यमानो गृहे स्वे ।
यदा तदा यमदूतश्च सम्यक्तं स्तंभसूत्रं तस्य मुखे निधाय ॥ ३,२८.१३६ ॥

संताड्यमाने स्तंभसूत्रस्थदेवी पलायिता कुत्र मे संवदस्व ।
विवाहकाले पूजयित्वा च सम्यक्चण्डालदेवीं भक्तवश्यां च तस्याः ॥ ३,२८.१३७ ॥

तद्भक्तवर्यैः शूर्पमध्ये च तीरे संसेवयित्वा विद्यमानो गृहे स्वे ।
यदा तदा यमदूतैश्च बद्ध्वा संताड्यमानो यममार्गे महद्भिः ॥ ३,२८.१३८ ॥

चऊलदेवी क्व पलायिताभूत्सुमूढबुद्धे विष्णुपादं भजस्व ।
ज्वरादिभिः पीड्यमाने स्वपुत्रे गृहे स्थितं ब्रह्मदेवं च सम्यक् ॥ ३,२८.१३९ ॥

धूपैर्दीपैर्भक्ष्यभोज्यैश्च पुष्पैः पूजां कृत्वा विद्यमानश्च गेहे ।
यदा तदा यमदूतैश्च बद्ध्वा संताड्यमाने वेणुपाशादिभिश्च ॥ ३,२८.१४० ॥

स ब्रह्मदेवः क्व पलायितोभूत्सुमूढबुद्धे विष्णुपादं भजस्व ।
सन्तानार्थं बृहतीं पूजयित्वा गलेन बद्ध्वा बृहतीं वै फलं च ॥ ३,२८.१४१ ॥

संतिष्ठमाने यमदूतैश्च बद्ध्वा संताड्यमाने बृहतीकण्टकैश्च ।
तदा देवी बृहती मूढबुद्धे पलायिता कुत्र मे तद्वद त्वम् ॥ ३,२८.१४२ ॥

भजस्व मूढ परदैवतं च नारायणं तारकं सर्वदुःखात् ।

सुक्षुद्रदेवेषु मतिं च मा कुरु न च शृणु त्वं फल्गुवाक्यं तथैव ॥ ३,२८.१४३ ॥

सुक्षुद्रदेवान् भिन्दिपाले निधाय विसर्जयित्वा दूरदेशे महात्मन् ।
संधार्य त्वं स्वकुलाचारधर्मं संपातने नरकं हेतुभूतम् ॥ ३,२८.१४४ ॥

पुनीहि गात्रं सर्वदा मूढबुद्धे मन्त्राष्टकैर्जन्मतीर्थे पवित्रे ।
हृदि स्थितां मौर्ख्यमुद्रां विहाय कृत्वा भूषां विष्णुमुद्राभिरग्र्याम् ॥ ३,२८.१४५ ॥

सदा मूढो हरिवार्तां भजस्व ह्यायुर्गतं व्यर्थमेवं कुबुद्ध्या ।
सद्वैष्णवानां संगमो दुर्लभश्च क्षुब्धं ज्ञानं तारतम्यस्वरूपम् ॥ ३,२८.१४६ ॥

हरिं गुरुं ह्यनुसृत्यैव सत्यं गतिं स्वकीयां तेन जानीहि मूढ ।
दग्ध्वा दुष्टां बुद्धिमेवं च मूढ सुबुद्धिरूपं मा भजस्वैव नित्यम् ॥ ३,२८.१४७ ॥

मया सार्धं सद्गुरुं प्राप्य सम्यग्वैराग्यपूर्वं तत्त्वमात्रं विदित्वा ।
तेनैव मोक्षं प्राप्नुमो नार्जवैर्यत्तार्या विष्णोः संप्रसादाच्च लक्ष्म्याः ॥ ३,२८.१४८ ॥

इत्याशयं मनसा सन्निधाय तथा चोक्तं भक्तवर्यो मदीयः ।
अतो भक्तः प्रवहेत्येव संज्ञामवाप वीन्द्र प्रकृतं तं शृणु त्वम् ॥ ३,२८.१४९ ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे तारतम्यनिरूपणद्वारा
विष्णोरेवोपास्यत्वमित्यर्थनिरूपणं नामाष्टाविंशतमोध्यायः

प्रवहानन्तरान्वक्ष्ये शृणु पक्षीन्द्रसत्तम ।

यो धर्मो ब्रह्मणः पुत्रो ह्यादिसृष्टौ त्वगुद्भवः ॥१ ॥

सज्जनान्सौम्यरूपेण धारणाद्धर्मनामकः ।

स एव सूर्यपुत्रोभूद्यमसंज्ञामवाप सः ।

पापिनां शिक्षकत्त्वात्स यम इत्युच्यते बुधैः ॥२ ॥

श्रीकृष्ण उवाच ।

प्रह्लादानन्तरं गङ्गा भार्या वै वरुणस्य च ।

प्रह्लाददधमा ज्ञेया महिम्ना वरुणाधिका ॥३ ॥

स्वरूपादधमा ज्ञेया नात्र कार्या विचारणा ।

ज्ञानस्वरूपदं विष्णुं यमो जानाति सर्वदा ॥४ ॥

अतो गङ्गेति सा ज्ञेया सर्वदा लोकपावनी ।

भक्त्या विष्णुपदीत्येव कीर्तिता नात्र संशयः ॥५ ॥

या पूर्वकाले यज्ञलिङ्गस्य विष्णोः साक्षाद्धरेर्विक्रमतः खगेन्द्र ।

वामस्य पादस्य नखाग्रतश्च निर्भिद्य चोर्ध्वाण्डकटाहखण्डम् ॥६ ॥

तदुदरमतिवेगात्सम्प्रविश्यावहन्तीं जगदघततिहन्तुः पादकिञ्जल्कशुद्धाम् ।

निखिलमलनिहन्त्रीं दर्शनात्स्पर्शनाच्च सकृदवगहनाद्वा भक्तिदां विष्णुपादे ।

शशिकरवरगौरां मीननेत्रां सुपूज्यां स्मरति हरिपदोत्थां मोक्षमेति क्रमेण ॥७ ॥

इन्द्रोपि वायुकरमर्दितवायुकूटबिन्दुं च प्राश्य शिरसि ह्यसहिष्णुमानः ।

भागीरथी हरिपदाङ्कमिति स्म नित्यं जानन्महापरमभागवतप्रधानः ।

भक्त्या च खिन्नहृदयः परमादरेण धृत्वा स्वमूर्ध्नि परमो ह्यशिवः शिवोऽभूत् ॥८ ॥

भागीरथ्याश्च चत्वारि रूपाण्यासन्खगेश्वर ।

महाभिषग्जनेन्द्रस्य भार्या तु ह्यभिषेचनी ॥९ ॥

द्वितीयेनैव रूपेण गङ्गा भार्या च शन्तनोः ।

सुषेणा वै सुषेणस्य भार्या सा वानरी स्मृता ॥१० ॥

मण्डूकभार्या गङ्गा तु सैव मण्डूकिनी स्मृता ।

एवं चत्वारि रूपाणि गङ्गाया इति कीर्तितम् ॥११ ॥

आदित्याच्चैव गङ्गातः पर्जन्यः समुदाहृतः ।
प्रवर्षति सुवैराग्यं ह्यतः पर्जन्यनामकम् ॥१२ ॥
शरंवराय पञ्चजन्याच्च पञ्च हित्वा जग्ध्वा गर्वकं षट्क्रमेण ।
स्वबाणस्य स्वहृदि संस्थितस्य भजेत्सदा नैव भक्तिं विषं च ॥१३ ॥
लिङ्गं पुष्टं नैव कार्यं सदैव लिङ्गं पुष्टं कार्यमेवं सदापि ।
योनौ सक्तिर्नैव कार्या सदापि योनौ मुक्तेऽसंगतो याति मुक्तिम् ॥१४ ॥
वैराग्यमेवं प्रकारोत्येव नित्यमतः पर्जन्यस्त्वन्तकः पक्षिवर्य ।
एतावता शरभाख्यो महात्मा स चान्तरो स तु पर्जन्य एव ॥१५ ॥
शश्वत्केशा यस्य गात्रे खगेन्द्र प्रभास्यन्ते शरभाख्यो पयोतः ।
यमस्य भार्या श्यामला या खगेन्द्र यस्मात्सदा कलिभार्यापिया च ॥१६ ॥
मत्वा सम्यक्मानसं या करोति ह्यतश्च सा श्यामलासंज्ञकाभूत् ।
मलं वक्ष्ये हरिभक्तेर्विरोधी सुलोहपात्रे सन्निधानं च तस्य ॥१७ ॥
तद्वैष्णवैस्त्याज्यमेवं सदैव वस्त्रं दग्धं सन्धिजं चैव जन्यम् ॥१८ ॥
चिकित्सितं परदुःखं खगेन्द्र हरेर्भक्तैस्त्याज्यमेवं सदैव ॥१८ ॥
नोच्चाश्च ते हरिभक्तेर्विहीनास्तेषां संगो नैव कार्यः सदापि ।
पुराणसंपर्कविसर्जिनं च पुराणतालं च पुराणवस्त्रम् ॥१९ ॥
सुजीर्णकन्थाजिनमेखलं च यज्ञोपवीतं च कलिप्रियं च ।
प्रियं गृहं चोर्णवितानकं च समित्कुशैः पूरितं कुत्सितं च ॥२० ॥
सर्वं चेत्कलिभार्याप्रियं च नैव प्रियं शार्ङ्गपाणेः कदाचित् ।
कांस्ये सुपक्वं यावनालस्य चान्नं तुषः पिण्याकं तुम्बबिल्वे पलाण्डुः ॥२१ ॥
दीर्घं तक्रं स्वादुहीनं कटूष्णमेते सर्वे कलिभार्याप्रियाश्च ।
सुदुर्मुखं निन्दनं चार्यजानां सतोवमत्यात्मजानां प्रसह्य ॥२२ ॥
सुपीडनं सर्वदा भर्तृवर्गे गृहस्थितव्रीहिवस्त्रादिचौर्यात् ।
प्रकीर्णभूतान्मूर्धजान्संदधानं करैर्युतं देवकलिप्रियं च ॥२३ ॥
इत्यादि सर्वं कलिभार्याप्रियञ्च सुनिर्मलं प्रकरोत्येव सर्वम् ।
अतश्च सा श्यामलेति स्वसंज्ञामवाप सा देवकी संबभूव ॥२४ ॥
युधिष्ठिरस्यैव बभूव पत्नीसंभाविता तत्र च देवकी सा ।
चन्द्रस्य भार्या रोहिणी वै तदेयमश्विन्यादिभ्योऽह्यधिका सर्वदैव ॥२५ ॥

रोणीं धृत्वा रोहति योग्यस्थानं तस्माच्च सा रोहिणीति प्रसिद्धा ।

आदित्यभार्या नाम संज्ञा खगेन्द्र ज्ञेया सा नारायणस्य स्वरूपा ॥२६ ॥

संजानातीत्येव संज्ञामवाप संज्ञेति लोके सूर्य भार्या खगेन्द्र ।

ब्रह्माण्डस्य ह्यभिमानी तु देवो विराडिति ह्यभिधामाप तेन ॥२७ ॥

गङ्गादिषट्कं सममेव नित्यं परस्परं नोत्तमं नाधमं च ।

प्रधानाग्नेः पाविकान्यैव गङ्गा सदा शुभा नात्र विचार्यमस्ति ॥२८ ॥

आसां ज्ञानत्पुण्यमाप्नोति नित्यं सदा हरिः प्रीयते केशवोलम् ।

गङ्गादिभ्यो ह्यवराह्यग्निजाया स्वाहासंज्ञाधिगुणा नैव हीना ॥२९ ॥

स्वाहाकारो मन्त्ररूपाभिमानी स्वाहेति संज्ञामाप सदैव वीन्द्र ।

अग्नेर्भार्यातो बुद्धिमान् संबभूव ब्रह्माभिमानी चन्द्रपुत्रो बुधश्च ॥३० ॥

बुद्ध्याहरद्वै राष्ट्रजातं च सर्वं धृतं त्वतो बुधसंज्ञामवाप ।

एवं चाभूदभिमन्युर्महात्मा सुभद्राया जठरे ह्यर्जुनाच्च ॥३१ ॥

कृष्णस्य चन्द्रस्य यमस्य चांशैः स संयुतस्त्वश्विनोर्वै हरस्य ।

स्वाहाधमश्चन्द्रपुत्रो बुधस्तु पादारविन्दे विष्णुदेवस्य भक्तः ॥३२ ॥

नामात्मिका त्वश्विभार्या उषा नाम प्रकीर्तिता ।

बुधाधमा सा विज्ञेया स्वाहा दशगुणाधमा ॥३३ ॥

नकुलस्य भार्या मागधस्यैव पुत्री शल्यात्मजा सहदेवस्य भार्या ।

उभे ह्येते अश्विभार्या ह्युषापि उपासते षड्गुणं विष्णुमाद्यम् ।

अतोऽप्युषासंज्ञका सा खगेन्द्र अनन्तराञ्छृणु वक्ष्ये महात्मन् ॥३४ ॥

ततः शक्तिः पृथिव्यात्मा शनैश्चरति सर्वदा ।

अतः शनैश्चरो नाम उषायाश्च दशाधमाः ॥३५ ॥

कर्मात्मा पुष्करो ज्ञेयः शनेरथ यमो मतः ।

नयाभिमानी पुरुषः किञ्चिन्नम्रो दशावरः ॥३६ ॥

हरिप्रीतिकरो नित्यं पुष्करे क्रीडते यतः ।

अतस्तु पुष्कलो नाम लोके स परिकीर्तितः ॥३७ ॥

हरि प्रीतिकरान्धर्मान्वक्ष्ये शृणु खगाधिप ।

प्रातः काले समुत्थाय स्मरेन्नारायणं हरिम् ॥३८ ॥

तुलसीवन्दनं कुर्याच्छ्रीविष्णुं संस्मरेत्खग ।

विण्मूत्रोत्सर्गकाले च ह्यपानात्मककेशवम् ॥३९ ॥
त्रिविक्रमं शौचकाले गङ्गापानकरं हरिम् ।
दन्तधावनकाले तु चन्द्रान्तर्यामिणं हरिम् ॥४० ॥
मुखप्रक्षालने काले माधवं संस्मरेत्खग ।
गवां कण्डूयने चैव स्मरेद्गोवर्धनं हरिम् ॥४१ ॥
सदा गोदोहने काले स्मरेद्गोपालवल्लभम् ।
अनन्तपुण्यार्जितजन्मकर्मणां सुपक्वकाले च खगेन्द्रसत्तम ॥४२ ॥
स्पर्शे गवां चैव सदा नृणां वै भवत्यतो नात्र विचार्यमस्ति ।
यस्मिन् गृहे नास्ति सदोत्तमा च गौर्यङ्गणे श्रीतुलसी च नास्ति ॥४३ ॥
यस्मिन् गृहे देवमहोत्सवश्च यस्मिन् गृहे श्रवणं नास्ति विष्णोः ।
तत्संसर्गाद्याति दुःखादिकं च तस्य स्पर्शो नैव कार्यः कदापि ॥४४ ॥
गोस्पर्शनविहीनस्य गोदोहनमजानतः ।
गोपोषणविहीनस्य प्राहुर्जन्म निरर्थकम् ॥४५ ॥
गोग्रासमप्रदातुश्च गोपुष्टिं चाप्यकुर्वतः ।
गतिर्नास्त्येव नास्त्येव ग्रामचाण्डालवत्स्मृतः ॥४६ ॥
वत्स्यस्य स्तनपाने च बालकृष्णं तु संस्मरेत् ।
दधिनिर्मन्थने चैव मन्थाधारं स्मरेद्धरिम् ॥४७ ॥
मृत्तिकास्नान काले तु वराहं संस्मरेद्धरिम् ।
पुण्ड्राणां धारणे चैव केशवादींश्च द्वादश ॥४८ ॥
मुद्राणां धारणे चैव शङ्खचक्रगदाधरम् ।
पद्मं नारायणीं मुद्रां क्रुद्धोल्कादींश्च संस्मरेत् ॥४९ ॥
श्रीरामसंस्मृतिं चैव संध्याकाले खगोत्तम ।
अच्युतानन्तगोविन्दाञ्छ्राद्धकाले च संस्मरेत् ॥५० ॥
प्राणादिकपञ्चहोमेचानिरूद्धादींश्च संस्मरेत् ।
अन्नाद्यर्पणकाले तु वासुदेवं च संस्मरेत् ॥५१ ॥
अपोशनस्य काले तु वायोरन्तर्गतं हरिम् ।
बस्त्रधारणकाकाले तु उपेन्द्रं संस्मरेद्धरिम् ॥५२ ॥
यज्ञोपवीतस्य च धारणे तु नारायणं वामनाख्यं स्मरेत्तु ।

आर्तिक्यकाले च तथैव विष्णोः सम्यक्स्मरेत्पर्शुरामाख्यविष्णुम् ॥५३ ॥
अपोशनेवैश्वदेवस्य काले तदन्यहोमादिषु भस्मधारणे ।
स्मरेत्तु भक्त्या परमादरेण नारायणं जामदग्न्याख्यरामम् ॥५४ ॥
त्रिवारतीर्थग्रहणस्य काले कृष्णं रामं व्यासदेवं क्रमेण ।
शङ्खोदकस्योद्धरणे चैव काले मुकुन्दरूपं संस्मरेत्सर्वदैव ॥५५ ॥
ग्रासेग्रासे स्मरणं चैव कार्यं गोविन्दसंज्ञस्य विशुद्धमन्नम् ।
एकैकभक्ष्यग्रहणस्य काले सम्यक्स्मरेदच्युतं वै खगेन्द्र ॥५६ ॥
शाकादीनां भक्षणे चैव काले धन्वन्तरिं स्मरेच्चैव नित्यम् ।
तथा परान्नस्य च भोगकाले स्मरेच्च सम्यक्पाण्डुरङ्गं च विष्णुम् ॥५७ ॥
हैयङ्गवीनस्य च भक्षणे वै सम्यक्स्मरेत्ताण्डवाख्यं च कृष्णम् ।
दध्यन्नभक्षे परमं पुराणं गोपालकृष्णं संस्मरेच्चैव नित्यम् ॥५८ ॥
दुग्धान्नभोगे च तथैव काले सम्यक्स्मरेच्छ्रीनिवासं हरिं च ।
सुतैलसर्पिः षु विपक्वभक्षसंभोजने संस्मरेद्व्यङ्कटेशम् ॥५९ ॥
द्राक्षासुजम्बूकदलीरसालनारिङ्गदाडिम्बफलानि चारु ।
स्मरेत्तु रम्भोत्तमनारिकेलधात्रीसुभोगे खलु बालकृष्णम् ॥६० ॥
सुपानकस्यैव च पानकाले सम्यक्स्मरेन्नारसिंहाख्यविष्णुम् ।
गङ्गामृतस्यैव च पानकाले गङ्गातातं संस्मरेद्विष्णुमेव ॥६१ ॥
प्रयाणकाले संस्मरेत्ताक्ष्र्यवाहं नारायणं निर्गुणं विश्वमूर्तिम् ।
पुत्रादीनां चुंबने चैव काले सुवेणुहस्तं संस्मरेत्कृष्णमेव ॥६२ ॥
सुखङ्गकाले स्वस्त्रियश्चैव नित्यं गोपि कुचद्वन्द्वविलासिनं हरिम् ।
तांबूलकाले संस्मरैच्चैव नित्यं प्रद्युम्नाख्यं वासुदेवं हरिं च ॥६३ ॥
शय्याकाले संस्मरेच्चैव नित्यं संकर्षणाख्यं विष्णुरूपं हरिं च ।
निद्राकाले संस्मरेत्पद्मनामं कथाकाले व्यासरूपं हरिं च ॥६४ ॥
सुगानकाले संस्मरेद्वेणुगीतं हरिं हरिं प्रवदेत्सर्वदैव ।
श्रीमत्तुलस्याश्छेदने चैव काले श्रीरामरामेति च संस्मरेत्तु ॥६५ ॥
पुष्पादीनां छेदने चैव काले सम्यक् स्मरेदेत्कपिलाख्यं हरिं च ।
प्रदक्षिणे गारुडान्तर्गतं च हरिं स्मरेत्सर्वदा वै खगेन्द्र ॥६६ ॥
प्रणामकाले देवदेवस्य विष्णोः शेषान्तस्थं संस्मरेच्चैव विष्णुम् ।

सुनीतिकाले संस्मरेन्नारसिंहं नारायणं संस्मरेत्सर्वदापि ॥६७ ॥

पूर्तिर्यदा क्रियते कर्मणां च सम्यक्स्मरेद्वासुदेवं हरिं च ।

एवं कृतानि कर्माणि हरिप्रीतिकराणि च ॥६८ ॥

सम्यक्प्रकुर्वन्नेतानि पुष्करो हरिवल्लभः ॥६९ ॥

एतस्मादेव पक्षीश कर्म यत्समुदाहृतं पुष्कराख्यानमतुलं शृणोति श्रद्धयान्वितः ।

हरिप्रीतिकरे धर्मे प्रीतियुक्तो भवेत्सदा ॥७० ॥

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे कृष्णगरुडसंवादे तत्त्वरहस्यं नामैकोनत्रिंशोध्यायः

समाप्तमिदं गरुडमहापुराणम् ।

इति श्रीगरुडमहापुराणं समाप्तम् ।